श्रीः

वेदान्तग्रन्थरत्नमाला. ३.

सकलपुराणाभ्यर्हित

# श्रीभागवत दशमस्कन्ध

## उत्तरार्धम्.

इदञ्च

श्रीमदित्यादि वात्स्य श्रीवीरराघवाचार्यप्रणीतया श्री-
भागवतचन्द्रचन्द्रिकाख्यया व्याख्यया, श्रीम-
दित्यादि भारद्वाज श्रीकृष्णगुरुविरचितया
मुनिभावप्रकाशिकासमाख्यया व्या-
ख्यया च परिष्कृतम्

---

श्रीशैलाद्दङ्कि लक्ष्मीनरसिंहकुमार कुमारतातार्य
कविभूषणस्वामिभिः प्रत्यवेक्षितम्

श्री. अ. वी. नरसिंहाचार्य, ति. चे. नरसिंहाचार्याभ्यां
परिशोधितम्.

---

आर्. वेङ्कटेश्वरसभाध्यक्षैः स्विकायाम्
आनन्दमुद्राशालायां मुद्रितं
विजयताम्.

1912

ANANDA PRESS, MADRAS.

PART II.

# श्रीभागवते दशमस्कन्धे उत्तरार्धम्.

श्रीमते रामानुजाय नमः.

( जरासन्धयवनागमनादिकथा )

श्रीशुक उवाच—

अस्तिः प्राप्तिश्च कंसस्य महिष्यौ भरतर्षभ। हते भर्तरि दुःखार्ते ईयतुःस्म पितुर्गृहान्॥
पित्रे मगधराजाय जरासन्धाय दुःखिते। वेदयाञ्चक्रतुस्सर्वमात्मवैधव्यकारणम्॥

---

( अथ श्रीभागवते दशमस्कन्धे उत्तरार्धम्. )

श्रीमते रामानुजाय नमः.

वी ॥ प ॥ व्याख्यातं दशमस्कन्धपूर्वार्धे मे यथाश्रुतम्।
यथामतीतस्तुष्यन्तु क्षाम्यन्तु गुणवत्तमाः ॥

अथ जरासन्धजयात्मकं भगवच्चेष्टितं वर्णयितुकामः तावज्जरासन्धस्य भगवता सह युयुत्साकारणं प्रस्तौति—अस्तिः प्राप्तिश्चेति सार्धद्वयेन॥ हे भरतर्षभ भरतसत्तम अस्तिः प्राप्तिश्चेति द्वे कंसस्य भार्ये भर्तरि कंसे हते सति भगवतेति शेषः, दुःखार्ते दुःखपीडिते भूत्वा पितुर्जरासन्धस्य गृहानीयतुः जग्मतुः ॥ १ ॥

मु ॥ प ॥ *लक्ष्मीनारायणौ वन्दे वन्दारुजनकल्पकौ।
यत्कटाक्षसुधासेकाज्जीवन्ति भवमूर्च्छिताः ॥

मुनिव्रातावीतं मुकुलितदृगम्भोजरुचिरद्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम्।
परं जानौ कृत्वा सुदृढतरकक्षैकविवरं समासीनं व्यासं स्मरत निरतं पुण्यचरितम्॥
'व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्। पराशरात्मजं वन्दे शुकतातं तपोनिधिम्॥'

उपनयतु मङ्गलन्नः सकलजगन्मङ्गलालयश्श्रीमान्।
दिनकरकिरणनिबोधितनवनलिननिभेक्षणो व्यासः ॥

श्रीमानादिमदेशिकापरतनुर्वात्सल्यवाराकरःसंसारानलतप्तचेतनसुधाह्लादैकदीक्षेक्षणः। अन्यालभ्यपुमर्थसाधनमहासत्सम्प्रदायस्थलीदद्यादव्ययमात्मनोहितमपिश्रीभाष्यकारश्शुभम्॥

श्रीकलायोषितां भर्त्रे हर्त्रे भूभारभूभृताम्। कृपास्वीकृतकृष्णाय कृष्णाय ब्रह्मणे नमः॥

अस्तिरित्यादि॥ अस्तिप्राप्तिसंज्ञे कंसस्य महिष्यौ दुःखार्ते सत्यौ ईयतुः जग्मतुः॥१॥

वी ॥ ततो मगधदेशाधिपतये जरासन्धाय स्वपित्रे दुःखिते अस्तिप्राप्ती सर्वमात्मनोर्वैधव्यकारणं निवेदयाञ्चक्रतुः ज्ञापितवत्यौ ॥ २ ॥

मु ॥ आत्मवैधव्यकारणं स्वभर्तृवधेन स्वामङ्गल्यहेतुभूतं श्रीकृष्णमित्यर्थः, वेदयाञ्चक्रतुः ज्ञापयामासतुः ॥ २ ॥

---

*अमी श्लोकाः कोशान्तरेषु न दृश्यन्ते ॥

स तदप्रियमाकर्ण्य शोकामर्षयुतो नृपः। अयादवां महीं कर्तुं चक्रे परममुद्यमम् ॥३
अक्षौहिणीभिर्विंशत्या तिसृभिश्चापिसंवृतः।यदुराजधानीं मधुरांन्यरुणत्सर्वतोदिशम्
निरीक्ष्य तद्बलं कृष्ण उद्वेलमिव सागरम्। स्वपुरं तेन संरुद्धं स्वजनं च भयाकुलम्॥
चिन्तयामास भगवान् हरिः कारणमानुषः।तद्देशकालानुगुणं स्वावतारप्रयोजनम्॥६
हनिष्यामि बलं ह्येतद्भुवि भारं समाहितम्।मागधेन समानीतं वंश्यानां सर्वभूभुजाम्॥

---

वी ॥ स जरासन्धः तद्दुहितृभ्यामावेदितम् अप्रियमाकर्ण्य शोकामर्षाभ्यां युतः महीं यादवाङ्कुररहितां कर्तुं परममुद्यमं प्रयत्नं चक्रे ॥ ३ ॥

मु ॥ शोकामर्षाभ्यां कंसकृष्णविषयदुःखक्रोधाभ्यां युतः महीम् अयादवां यादवशून्यां कर्तुं परममुद्यमम् अप्रतिहतोद्योगश्चक्रे ॥ ३ ॥

वी ॥ तदेवाह—अक्षौहिणीति ॥ त्रयोविंशत्यक्षौहिणीबलपरिवेष्टित इत्यर्थः, यदुराजानामाश्रयभूतां मधुरां चतुर्दिक्षु निरुद्धवान् ॥ ४ ॥

मु॥ विंशत्या विंशतिसङ्ख्याकाभिः तिसृभिश्चाक्षौहिणीभिः संवृतः परिवारितः सर्वतोदिशं सर्वदिक्षु मधुरामरुणत् रुरोध ॥ ४ ॥

वी॥तदा श्रीकृष्णः उद्वेलं लङ्घितमर्यादं सागरमिव स्थितं तस्य जरासन्धस्य बलं तेन बलेन संरुद्धं स्वपुरं भयेन व्याकुलं स्वजनं च निरीक्ष्य चिन्तयामासेति सम्बन्धः ॥ ५ ॥

मु ॥ उद्वेलमतिक्रान्तमर्यादं सागरमिव स्थितं तस्य बलञ्च तेन तद्बलेन संरुद्धं स्वपुरञ्च भयाकुलं तत्पुरसंरोधनभयविह्वलं स्वजनं च निरीक्ष्येति योजना ॥ ५ ॥

वी ॥ हरिः कारणमानुष इति हेतुगर्भम्, यद्यपि न तस्योपद्रवः, सर्वकारणत्वेन न तद्बलसंहारे प्रयासश्च, तथाऽप्याश्रितार्तिहरत्वात्सर्वकारणत्वेऽपि मानुषत्वात् गृहीतमनुष्यरूपतत्सजातीयचेष्टितत्वान्मनुष्यवच्चिन्तयामास चिन्तयित्वा निश्चितवानित्यर्थः; किं कथमित्यत्राह—तद्देशेति। तद्देशकालानुगुणं यथा भवति तथा स्वावतारप्रयोजनं विचार्य अध्यवास्यत् ॥ ६ ॥

मु॥ अथ भगवान् भूभारनिवर्तनरूपं स्वावतारकृत्यं तत्तद्देशकालानुगुण्येनाचरितम् आलोच्य सद्योमागधवधोपेक्षया बहुवारं तत्समाहृतबलसंहार एव अवश्यकर्तव्य इति निरचैर्षीदित्याह पञ्चभिः—चिन्तयामासेत्यादिभिः॥ कारणेन भूभारनिवारणादिनिमित्तेन मानुषः नतु तत्त्वतः 'स हरिः कार्यमानुषः' इतिपाठे भूभारावतरणरूपकार्येण निमित्तेनेत्यर्थः,अत्र भगवानित्यादिपदत्रयं श्रीकृष्णस्य प्राप्तसमये यथाकारणं मागधवधनिश्चयं हेलयैव सर्वसंहारसामर्थ्यं कथमेनमयं जेष्यतीति शङ्कानिवृत्तिं च द्योतयति ॥ ६ ॥

वी ॥ विचार्य निश्चितमेव दर्शयति—हनिष्यामीति चतुर्भिः ॥ वंशे भवाः वंश्याः तेषां सर्वेषां भूभृतां राज्ञामेतत् भूमेर्भाररूपं समाहितं समुदितं मागधेन जरासन्धेनानीतम् अत्र प्रापितं पदातिभिरश्वैः रथैश्च सङ्कुलं व्याप्तम् अक्षौहिणीभिस्त्रयोविंशतिसङ्ख्याकाभिरिति शेषः, सङ्घातं बलं हनिष्यामि;मागधस्तु मया न हन्तव्यः हन्तुमनर्हः,तत्र कारणमाविष्करोति—भूयः पुनः बलायोद्यमं कर्ता करिष्यति, यद्यधुनैव मागधो हतः,

अक्षौहिणीभिस्सङ्ख्यातं भटाश्वरथसंकुलम्।मागधस्तु न हन्तव्यो भूयःकर्ताबलोद्यमम्
एतदर्थोऽवतारोऽयं भूभारहरणाय मे। संरक्षणाय साधूनां कृतोऽन्येषां वधाय च॥
अन्योऽपि धर्मरक्षायै देहस्संभ्रियतेमया।विरामायाप्यधर्मस्यकालेप्रभवतःक्वचित्॥
एवन्ध्यायतिगोविन्दआकाशात्सूर्यवर्चसौ।रथावुपस्थितौसद्यस्ससूतौसपरिच्छदौ॥
आयुधानिचदिव्यानिपुराणानियदृच्छया। दृष्ट्वातानिहृषीकेशस्सङ्कर्षणमथाब्रवीत्॥

---

भूयो बलस्यानेता न स्यात्, यदि न हतः, तदा पुनर्बलं समानयन्नवतिष्ठेतैव, एवं चेत्कृत्स्नं बलं हतं स्यात्, अतस्सोऽधुना न हन्तव्य इति ॥ ७ ॥ ८ ॥

मु ॥ मागधेन समाहितं सम्मेलितं सत् आनीतं भूमेर्भारभूतम् अक्षौहिणीभिः अक्षौहिणीसंज्ञकसङ्ख्याभिरित्यर्थः, सङ्ख्यातं गणितं भटाश्वादिभिरुपलक्षितं वंश्यानां तद्वंशवर्तिनां सर्वभूभुजां बलं हनिष्यामि मागधापेक्षया प्रथमतस्संहरिष्यामि, मागधस्तु न हन्तव्यः सद्यो न संहर्तव्यः, तत् कुतइत्यत्र स्वयमेव समाधत्ते—भूयइति । बलोद्यमं बलसमाहरणोद्योगं भूयः कर्ता करिष्यति ॥ ७ ॥ ८ ॥

वी ॥ ननु किं वृथा बलहननेन ममार्थः, यो द्वेष्टि स एव हन्तव्य इत्याशङ्क्य तर्ह्यवतरणं नार्थवत्स्यादित्यभिप्रयन्नाह—एतदर्थइति ॥ मे ममावतार एतदर्थः एषः अर्थः प्रयोजनं यस्य तथाभूतः, कोऽसावर्थ इत्यपेक्षायां भूभारेत्यादिभिश्चतुर्थ्यन्तैः प्रयोजनविशेषान्निर्दिशति—भूभारहरणाद्यर्थमयमवतारः कृत इत्यन्वयः, अन्येषाम् असाधूनां वधाय च ॥ ९ ॥

मु॥एवं संहारे भूभारनिवृत्तिस्स्यादिति स्वस्यैव कोऽयं भारइत्याशङ्क्याह—एतदर्थ इति ॥ भूभारहरणाय भूभारनिवर्तनाय मे अवतारः कृतः, एवं दुष्टवधस्य साफल्यंचानुसन्धत्ते—संरक्षणायेति । साधूनां संरक्षणाय अन्येषामसाधूनां वधाय अतएव भूभारहरणाय चेत्येतदर्थोऽयम्मेऽवतारः कृत इत्यन्वयः॥ ९ ॥

वी ॥ नेदं प्रयोजनविशेषपरिगणनम्, अपितु प्रदर्शनमात्रमित्यभिप्रेत्याह—अन्योऽपीति ॥ अन्योऽप्यवतारस्यार्थः प्रयोजनम्, कोऽसावतस्तं दर्शयति—धर्मरक्षाया- इति । अन्योऽपीत्येकवचनं सामान्याभिप्रायकम्, काले कदाचित्क्वचित्प्रभवतः प्रकर्षेण भवतो वर्धमानस्याधर्मस्य विरामाय विध्वंसनाय च मया देहः संभ्रियते परिगृह्यते ॥

मु॥ अयमवतारइत्यवतारान्तरस्याप्युपलक्षणमित्याह—अन्य इति ॥ क्वचित् काले प्रभवतः प्रकर्षेण भवतः वर्तमानस्येत्यर्थः,अधर्मस्य विरामाय निवर्तनाय च धर्मरक्षायैच्च मया अन्योऽपि मत्स्याद्यनेकरूपोऽपि देहस्संभ्रियते सन्ध्रियते ॥ १० ॥

वी ॥ एवमिति ॥ ध्यायति विचार्य निश्चितवति सति तथैव द्वौ रथौ आकाशादवतीर्योपस्थितौ स्तः, कथंभूतौ सूर्यस्येव वर्चो ययोस्तौ सारथिसहितौ परिच्छदः परिकरः ध्वजकवचादिः तत्सहितौ ॥ ११ ॥

वी ॥ अथ हृषीकेशः पुराणानि पुरातनानि दिव्यान्यमानुषाण्यायुधानि चकारात् तैस्सहितौ रथौ च दृष्ट्वा सङ्कर्षणं प्रत्युवाच ॥ १२ ॥

*एवंध्यायतिगोविन्देमगधातिपतिर्बली। मधुरांसवनोद्यानांरुरोध बहुसैनिकः॥
कलिङ्गश्चेकितानश्च दन्तवक्रविदूरथौ। उल्मुको वेणुदारीच साल्वश्चैद्यश्च दुर्मतिः॥
पूर्वद्वारं समासाद्य रुरुधुर्मागधाज्ञया। विन्दानुविन्दावावन्त्यौ विराटो दरदस्तथा॥
एकलव्यो बाह्लिकश्च तथा पञ्चनदेश्वरः। रुरुधुर्दक्षिणद्वारं पौण्ड्रकश्च महाबलः॥
युधामन्युर्बृहत्क्षत्रः साल्वो भूरिश्रवास्तथा।उत्तमौजाश्च रुक्मीच द्रुमश्चैव सुदक्षिणः॥
एते नियुक्ता राजानो जरासन्धेन भारत। पश्चिमद्वारमासाद्य रुरुधुर्मधुरां पुरीम्॥
द्रुपदश्शिशुपालश्च त्रिगर्तोऽथ जयद्रथः। शकुनिस्सौमदत्तश्च कुणिन्दश्च महाबलः॥
जरासन्धेन सहिताः सर्वे मदबलान्विताः। उत्तरद्वारमासाद्य रुरुधुर्भरतर्षभ॥
तेनिरुध्यचतुर्द्वाराण्युद्वेलाम्भोधिसन्निभाः। सिंहनादंचकुर्वन्तोदध्मुश्शङ्खाननेकशः॥

क्ष्वेलन्तो युद्धसंनद्धा जघ्नुर्भेरीस्सहस्रशः॥ २१

तद्वीरभूपालकदम्बजृम्भितं सुगाढफेनार्णवघूर्णितोपमम्।
निशम्य कृष्णो न चचाल चेतसा सृगालघोषं मृगराडिवोद्धतः॥ २२

एतस्मिन्नेव काले तु गगनात्सूर्यवर्चसौ। रथावुपस्थितौ सद्यस्ससूतौ सपरिच्छदौ॥
चक्रं सुदर्शनं घोरं सहस्रारं मनोरमम्।गदा कालायसीगुर्वी नाम्ना कौमोदकी शुभा॥
त्रिणतं कार्मुकश्रेष्ठं शार्ङ्गसंज्ञं गुणान्वितम्।तीक्ष्णधारश्शितमुखः खड्गोनन्दकसंज्ञितः॥

---

मु॥ एवं ध्यायति चिन्तयति सत्येव मागधाधिपतिः मधुरां रुरोध॥ १३॥
मु॥ तत्र के के राजानः किंकिं रुरुधुः? इत्यत्र विविच्याह—कलिङ्ग इत्यादि॥१४-२०॥
मु॥ २१॥

मु॥ सुगाढफेनस्य कल्लोलविघट्टनेन प्रभूतडिण्डीरस्य अर्णवस्य घूर्णितोपमं घोषसदृशं तेषां वीरभूपालानां कदम्बस्य सेनासमूहस्य जृम्भितम् अट्टहासादिविजृम्भणकलकलं श्रुत्वा कृष्णः चेतसा न चचाल निश्चलचित्तोऽभूदित्यर्थः, तत्रानुगुणं दृष्टान्तमाह—सृगालेति॥ २२॥

मु॥ अथैकान्तिनोरपि शत्रुविजयार्थं गतयोरामकृष्णयोः शत्रुविजयसाधनपूर्तिस्सर्वाऽपि सद्यएव लोकाद्भुतावहा सम्पन्नेत्याह—एतस्मिन्निति॥ ससूतौ सारथिसहितौ सपरिच्छदौ ध्वजकवचादियुद्धपरिकरसहितौ रथावुपस्थितौ प्राप्तौ॥ २३॥

मु॥ घोरं शत्रुभयङ्करं मनोरमं तत्प्रवणानां परमपुरुषार्थसाधनत्वेन आनन्दकरं सहस्राण्यराणि यस्य तत् सुदर्शनन्नाम चक्रं कालं कृष्णंच तत् अयश्च कालायः तस्य विकारः कालायसी शुभा भक्तानां श्रेयस्करी नाम्ना कौमोदकी कौमोदकीति प्रसिद्धसंज्ञेत्यर्थः, गदा च त्रिषु स्थलेषु नतं त्रिणतं गुणान्वितम् अधिज्यं शार्ङ्गसंज्ञकं कार्मुकश्रेष्ठञ्च,शितमुखो निशिताग्रः, लघू उद्धर्तुः हरेः अभारतया वर्तमानौ रम्यौ भूषणवदेव दर्शनीयौ शत्रुषु

---

*'एवं ध्यायति गोविन्दे' इत्यारभ्य, 'इत्येतान्यायुधानि' इत्यन्ताः. मु. भा. प्रकाशिकानुसारिणः श्लोकाः वीरराघवाचार्यैर्न व्याख्याताः, कोशेषु च बहुषु नोपलभ्यन्ते॥

राजतारकुटैःकोष्ठैर्हेमकुम्भैस्स्वलङ्कृतैः। रत्नकूटैर्गृहैर्हैमैर्महामरकतस्थलैः ॥ १३३
वास्तोष्पतीनांचगृहैर्वलभीभिश्चनिर्मितम्। चातुर्वर्ण्यजनाकीर्णयदुदेवगृहोल्लसत् ॥
सुधर्मांपारिजातंचमहेन्द्रःप्राहिणोद्धरेः।यत्रचावस्थितोमर्त्योमर्त्यधर्मैर्वियुज्यते॥१३५
श्यामैककर्णान्वरुणोहयाञ्छुक्लान्मनोजवान् ।

---

ण्युपवनानि कृत्रिमवनविशेषाः तत्तद्गृहान्तरावकाशकल्पिता इत्यर्थः, तैः अन्वितं हेम्नः शृङ्गाणि येषां तैः दिविस्पृग्भिः अभ्रङ्कषैः यद्वा हेम्नश्शृङ्गैरेव करणैरभ्रङ्कषैरित्यर्थः, स्फाटिकैरट्टालकैः उपरिभूमिकाभिः गोपुरैः ॥ १३२ ॥

वी ॥ राजतारकुटैः रजतंचारकुटं च पीतलोहं पित्तलमितियावत्, ताभ्यां निर्मितैः कोष्ठैः अश्वशालान्नशालादिभिः, कथम्भूतैः? हैमैः कुम्भैः स्वलङ्कृतैः तथा रत्नकूटैः पद्मरागादिशिखरैः सौवर्णैः महान्ति मरकतस्थलानि येषु तैः गृहैश्च जुष्टं सेवितम् ॥

मु ॥ हैमैरेव द्वारैश्च हैमैर्हेममयकुम्भैरित्यर्थः, स्वलङ्कृतैः सुष्ठुभूषितैः; यद्वा हैमैः हेमविकारैः स्वलङ्कृतैश्चित्रवितानकेतनादिभिः सुष्ठु अलङ्कृतैः राजतैः रजतमयैः आरकूटैः पित्तलाख्यपीतलोहमयैः कोष्ठैरश्वशालान्नशालादिभिः जुष्टं व्याप्तं तथा रत्नानां पद्मरागादीनां कूटाः शिखराणि येषान्ते महान्ति मरतकस्थलानि विश्रमभूमयो येषु तैः हैमैः सौवर्णैः गृहैर्जुष्टम् ॥ १३३ ॥

वी ॥ किंच नगरगृहादौ वास्तोष्पतीनां देवानां च गृहैः वलभीभिश्चन्द्रशालिकाभिश्च निर्मितं यदुदेवगृहैरुल्लसत् शोभमानम् ॥ १३४ ॥

मु ॥ किञ्च वास्तोष्पतीनां धनपतीनां गृहैः वलभीभिश्चन्द्रशालाभिश्च निर्मितं निर्मितवास्तोष्पतिगृहवलभीकमित्यर्थः, चातुर्वर्ण्यगृहैश्चतुर्वर्णकुटुम्बस्थित्युचितगृहैराकीर्णं यदुदेवगृहैर्यदु राजगृहैरुल्लसत् शोभमानं नगरमचीकरदिति सम्बन्धः ॥ १३४ ॥

वी ॥ सुधर्मां नाम सभां पारिजातं च महेन्द्रो हरये प्राहिणोत् प्रस्थापयामासेति शुकपरीक्षित्संवादात् पूर्वभावित्वाद्भूतनिर्देशः, सुधर्मां विशिनष्टि—यत्रेति। मर्त्योऽपि यत्र सुधर्मायां स्थितो मर्त्यधर्मैः अशनायापिपासाशोकमोहजरामरणादिभिर्वियुज्यते ॥

मु ॥ एवं निर्मिताया द्वारकाया दिक्पालप्रेषिताद्भुतवस्तुसामग्रीमाह—सुधर्मामित्यादिना ॥ सुधर्मां देवसभां पारिजातश्च प्राहिणोत् प्रेषयामासेति द्वारवतीनिर्माणस्य शुकपरीक्षित्संवादात् पूर्वभावित्वात् भूतनिर्देशः, ननु दिक्पालाः कथं भौमं नगरं प्रत्यभौमवस्तूनि प्रेषयामासुरित्यत्राह—यत्रेति मर्त्यधर्मैः क्षुत्पिपासादिषड्र्मिभिः वियुज्यते विमुक्तो भवति, कर्तुमन्यथाकर्तुञ्च शक्तेन भगवताधिष्ठेये तत्र किं किं न सम्भाव्यत इत्यर्थः ॥ १३५ ॥

वी ॥ वरुणस्तु श्यामः एककर्णः येषां तान् सर्वतः शुक्लान् मनोजवान् अश्वान्प्राहिणोदित्यनुषङ्गः, निधिपतिः कुबेरस्तु अष्टौ कोशान् निधीन्, "पद्मश्चैव महापद्मो मत्स्यः कूर्मस्तथा वरः। नीलो मुकुन्दश्शङ्खश्च निधयोऽष्टौप्रकीर्तिताः" इत्युक्तान् प्राहिणोत्, तथा अन्ये च लोकपालाः, निजोदयान् निजविभूतीः ॥ १३६ ॥

अष्टौनिधिपतिःकोशान्लोकपालानिजोदयान् ॥ १३६

यद्यद्भगवतादत्तमाधिपत्यं स्वसिद्धये। सर्वंप्रत्यर्पयामासुर्हरौभूमिगतेनृप ॥ १३७

तत्रयोगप्रभावेननीत्वा सर्वं जनं हरिः। प्रत्यागत्याथरामेणकृष्णस्समनुमन्त्रितः ॥

निर्जगामपुरद्वारात्पद्ममालीनिरायुधः ॥ १३८

इति श्रीभागवते महापुराणे दशमस्कन्धे पञ्चाशोऽध्यायः ॥ ५० ॥

---

श्रीशुक उवाच—

तंविलोक्यविनिष्क्रान्तमुज्जिहानमिवोडुपम्।दर्शनीयतमंश्यामंपीतकौशेयवाससम्॥

---

मु ॥ निधिपतिः कुबेरः अष्टौ कोशान् निधीन् , अत्र यद्यपि नैघण्टुकैर्महापद्मेत्यादिना नवैव निधयः प्रतिपादिताः, तथापि "पद्मश्चैव महापद्मो मत्स्यकूर्मौ तथोदकः। नीलो मुकुन्दश्शङ्खश्च निधयोऽष्टौ प्रकीर्तिताः" इत्यागमान्तरे प्रसिद्धिरस्ति, लोकपाला इन्द्रादयः निजोदयान् स्वविभूतीर्ददुः ॥ १३६ ॥

वी॥तथा अन्ये च सिद्धादयो यद्यत्स्वाधिकारसिद्धये भगवता दत्तमाधिपत्यं,तत्सर्वं भगवति भूमिगते भूमाववतीर्णे सति तस्मै प्रत्यर्पयामासुः ॥ १३७ ॥

मु ॥ अन्ये सिद्धादयः भगवता स्वसिद्धये स्वाधिकारसिद्धये यद्यदाधिपत्यन्दत्तमासीत् तत्र तत्र स्वाधिकारसम्पादितं सर्वं धनं प्रत्यर्पयामासुरिति ॥ १३७ ॥

वी ॥ तत्रेति ॥ यथा कालयवनो माथुराश्च जना न जानीयुः, तथा योगप्रभावेन योगमायात्मकाश्चर्यशक्तिप्रभावेन माथुरं सर्वं जनं तत्र दुर्गे नीत्वा प्रापय्य पुनरागत्य अथ रामेणामन्त्रितः आलोचितो भगवान् पद्ममालाधरो निरायुधश्च भूत्वा पुरद्वारात् निष्क्रान्तवान् ॥ १३८ ॥

मु ॥ एवं द्वारकानिर्माणानन्तरं भगवान् किमकरोत्तदाह—योगप्रभावेनेति ॥ स्वसङ्कल्पमहिम्नेत्यर्थः,यथा पुरनिरोद्धा यवनो न वेत्ति नत्वसौ पुरनिवासिजनश्च,तथा नीत्वेत्यर्थः, अथ हरिः प्रत्यागत्य पुनरेत्य अत्र हरिशब्देन यत्रकुत्रापि योगमहिम्ना सर्वजनाहरणसामर्थ्यमुच्यते ; रामेण समनुमन्त्रितः मदागमनपर्यन्तं त्वमत्र स्थित्वा प्रजाः पालय ततोऽहं पालयिष्ये इति कृतमन्त्र इत्यर्थः, पद्ममाली पद्ममालाधरः निरायुधस्सन्नेव पुरद्वारान्निर्जगाम, निरायुधइत्यनेन चक्राद्यायुधानि तच्चिह्नान्येव, शत्रुसंहारस्तु तच्छक्तिलेशेनैवेति भावः स्फोर्यते, तथा रामायणे चोक्तम्—' अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर' इति, तत्रापि सेतुनिर्माणराक्षसयुद्धकरणादिकन्तु नित्यं तत्तद्वर्णनाकथनेन पापनिवर्तनद्वारा लोकोज्जीवनार्थमेवेति रहस्यम् ॥ १३८ ॥

इतिश्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे पञ्चाशोऽध्यायः ॥ ५० ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

वी ॥ दुष्टनिग्रहसाध्वनुग्रहावेकेन भगवच्चेष्टितेन दर्शयन् कथाशेषमाह— तमित्यादिना। पुरद्वारान्निष्क्रान्तं तं कृष्णमवलोक्य नारदोक्तैरेतैर्लक्षणैः अयं पुमान्वासुदेवो नान्यो भवितुमर्हति, अयं च निरायुधः अनेन पद्भ्यामेव चलन् निरायुधश्चाहं योत्स्या-

लघू शराश्रितौ रम्यौ तूणौ चाक्षयसायकौ। तुरगाश्शैब्यसुग्रीवमेघपुष्पबलाहकाः॥
हलं च बलभद्रस्य मुसलं च दृढं गुरु। इत्येनान्यायुधान्याजौ गगनादागतानि सः॥
दृष्ट्वा तानि हृषीकेशः संकर्षणमथाब्रवीत् ॥ २७

श्रीकृष्ण उवाच—

पश्यार्य व्यसनं प्राप्तंयदूनां [१]सात्त्वतां प्रभो।एष ते रथ अयातोदयितान्यायुधानिच॥
[२]एनमास्थाय[३]जह्येतद्व्यसनात्स्वान्समुद्धर।एतदर्थंहिनौजन्म[४]साधूनामिहशर्मकृत्॥
त्रयोविंशत्यनीकाख्यं भूमेर्भारमपाकुरु ॥ २९
एवं सम्मन्त्र्य दाशार्हौ दंशितौ रथिनौ पुरात् ।

सन्धानकुशलेन धारायमाणतया प्रयुज्यमानेष्वपि शरेषु पुनरक्षया एव सायकाः ययोस्तै तूणौच दृढम् अभङ्गुरं गुरु सारवत् हलं सीरायुधं मुसलं चेत्येतान्यायुधानि गगनादागतानि दृष्ट्वा अथ हृषीकेशः सङ्कर्षणमब्रवीदिति ॥ २४-२७ ॥

वी॥ उक्तिमेवाह— सार्धद्वयेन॥हे आर्य हे प्रभो यदूनां व्यसनं प्राप्तम्,एतत्पश्य,नैते यदव उपेक्ष्या इत्यभिप्रायेण तान्विशिनष्टि—सात्त्वतामिति ॥ सात्त्वतां भक्तानां भृत्यानामिति यावत् , नहि स्वामी भृत्यानुपेक्षितुमर्हतीति भावः,तर्हि किं विधेयमित्यत्राह— एष इति । दयितानि प्रियाण्यायुधानि चकारात्कवचादीनि चायातानीति लिङ्गवचनविपरिणामः ॥ २८ ॥

मु ॥ हे आर्य त्वं नाथो विद्यते येषान्ते त्वावन्तः तेषां त्वावतां, 'त्वद्वताम्' इति पाठे त्वया नाथवन्तः त्वद्वन्तः तेषां त्वद्वतां यदूनां प्राप्तं शत्रुभ्यस्समागतं व्यसनं पश्य, दयितानि तवेष्टानि आयुधानि आयातानीति शेषः ॥ २८॥

वी ॥ एनं रथमास्थायाधिष्ठाय एतत्परबलं जहि नाशय, स्वान् स्वकीयान् व्यसनादापदः उद्धर, एतदर्थं प्रतिपक्षनिरसनार्थं हि इह लोके नौ आवयोः जन्म अवतारः, यद्वा नौ जन्म एतत्प्रतिपक्षनिरसनमर्थः प्रयोजनं यस्य तत्तथा साधूनां शर्मकृत्सुखकारि च, अतस्त्रयोविंशत्यनीकाख्यां त्रयोविंशत्यक्षौहिणीसैन्यव्यपदेशं केवलं भूमेर्भारमपाकुरु अपनय ॥ २९ ॥

मु॥ एतान् शत्रून् जहि संहर, स्वीयान् व्यसनादेतद्विपदः समुद्धर, कुतस्तदित्यत्राह —एतदर्थं हीति। हि यस्मात् कारणात् साधूनां शर्मकृत् सुखावहं नौ जन्म एतदर्थं शत्रुसंहारार्थम्, ततः त्रयोविंशत्यनीकाख्यं त्रयोविंशत्यनीकनामाभिलप्यं भूमेर्भारमपाकुरु निवर्तयेत्यब्रवीदिति पूर्वेणान्वयः ॥ २९. ॥

वी ॥ एवमिति ॥ इत्थं मिथः सम्मन्त्र्यालोच्य दाशार्हौ रामकृष्णौ दंशितौ कवचितौ रथिनौ रथारूढौ स्वासाधारणैरायुधैराढ्यौ युक्तौ चाल्पीयसा कतिपयेन बलेन चावृतौ भूत्वा पुरात् मथुरायाः निष्क्रान्तौ ॥ ३० ॥

१. त्वावताम्. मु. भा. प्र. पा ॥
२. यानमास्थाय. पा ॥
३. जह्यतान्. मु. भा. प्र. पा ॥
४. साधूनामीश शर्मकृत्. पा ॥

निर्जग्मतुस्स्वायुधाढ्यौ [1]बलेनाल्पीयसा वृतौ ॥ ३०

शङ्खं दध्मौ विनिर्गत्य हरिर्दारुकसारथिः।ततोऽभूत्परसैन्यानां हृदि वित्रासवेपथुः॥

*निर्गत्य सदनात्कृष्णो वृष्णीनाहूय सर्वशः।आज्ञापयामास तूर्णं चतुर्द्वारस्यपालने॥

वसुदेवं च निशठं कृतवर्माणमुद्धवम् । कृष्णो निर्यातयामास पूर्वद्वारेण भारत ॥

उग्रसेनं सुदामानं पृथुं विपृथुमेव च । हरिर्निर्यातयामास द्वारेणानुत्तरेण वै ॥

सात्यकिं च गदं चैव प्रसेनं गान्दिनीसुतम्।हरिः प्रतीचीद्वारेण प्रेषयामास दुर्मदान्॥

गोविन्दस्तु महातेजाः स्वयं दारुकसारथिः। आत्ताभीष्टप्रहरणः संकर्षणसहायवान्॥

उत्तरेण विनिर्गम्य द्वारेण जगदीश्वरः ! शङ्खं दध्मौ महाप्राणं दैत्यदानवभीषणम् ॥

आह दारुकमासीनं रथाग्रे माधवस्स्मयन् ।

श्रीभगवानुवाच—

रथं वाहय धर्मज्ञ यत्र तौ चैद्यमागधौ। तर्पयामि नृपान् सर्वान् सायकैर्युद्धदुर्मदान्॥

श्रीशुक उवाच—

इत्युक्तो दारुकस्तेन हयांस्तूर्णमचोदयत्। व्यनदत्सिंहनादं च गोविन्दः परवीरहा॥

---

मु॥ दाशार्हौ रामकृष्णौ एवमुक्तरीत्या सम्मन्त्रय सम्यग्विचार्य दंशितौ आमुक्तकवचौ स्वायुधाढ्यौ शोभनायुधसम्पन्नौ स्वकीयायुधयुक्ताविति वा, अन्वीयता अनुगच्छतां बलेन सैन्येन वृतौ परिवेष्टितौ निर्जग्मतुः ॥ ३० ॥

वी ॥ ततो हरिः दारुकाख्यस्सारथिर्यस्य तथाभूतः शङ्खं पाञ्चजन्यं दध्मौ ध्वनयामास, ततश्शङ्खध्वानात् परसैन्यानां हृदि वित्रासो भयं तेन वेपथुर्गात्रकम्पो बभूव॥३१

मु ॥ एवं शत्रुसंहारार्थं गच्छता तेन लौकिकराजधर्मानुगुण्येन स्वपुररक्षणं विधायैव निर्गतमित्याह—निर्गत्येत्यादिना॥चतुर्द्वारस्य पालने चतुर्णां द्वाराणां गोपुराणां रक्षण इत्यर्थः, यद्वा चत्वारि द्वाराणि यस्य तस्य पुरस्य रक्षण इत्यर्थः ॥३२॥

मु ॥ अथ भगवान् केनकेन द्वारेण कंकं योधं निरगमयदित्यत्राह—वसुदेवञ्चेत्यादिना ॥ निर्यातयामास निरगमयत् ॥ ३३-३५ ॥

मु॥ हरिः स्वयं केन द्वारेण निर्गत इत्यत्राह—गोविन्दस्त्विति ॥ महान् प्राणः भगवतः फूत्कारवायुविशेषः यस्मिन् सः तं सर्वशक्तेस्तस्य तादृशपूत्करणेनैव ध्वनति पाञ्चजन्यो नान्यैरित्यर्थः ॥ ३६-३७ ॥

मु ॥ आहेत्यादि॥ धर्मज्ञ युद्धकोविद रथं वाहय प्रवर्तय, सायकैर्बाणैः युद्धदुर्मदान् दुर्मदेन युद्धार्थं त्वरमाणानित्यर्थः, नृपान् तर्पयामि मद्युद्धकौशलेन तृप्तिं नयामीत्यर्थः॥

मु ॥ अचोदयत् प्रेरयामास, सिंहनादं व्यनददित्यत्र वाचमुवाचेतिवदुपपत्तिः॥

---

१. बलेनान्वीयता वृतौ. मु. भा. प्र. पा ॥

*'निर्गत्य सदनात्' इत्यारभ्य 'यत्र तौ चैद्यमागधौ' इत्यन्ताः. मु. भा. प्रकाशिकानुसारिणः श्लोकाः वीरराघवाचार्यैर्न व्याख्याताः; कोशेषु च बहुषु नोपलभ्यन्ते ॥

शङ्खमाध्मायरामोऽपिसिंहनादंव्यनीनदत्।ततोऽभूत्परसैन्यानां हृदिवित्रासवेपथुः॥
पूर्वद्वारि नृपैस्सार्धं यदूनां कदनं महत् । आसीच्चतुर्भिरष्टानां तदद्भुतमिवाभवत्॥
दक्षिणद्वार्यपि तथा गोविन्दाध्मातचेतसाम् । आसीद्यदूनां कदनं राजन्यकटकेन वै॥
अपरद्वार्यपि तथा यदूनां दृढधन्विनाम्। आसीद्राजसमाजेन संग्रामो रोमहर्षणः॥
ते हन्यमाना यदवो राजभिश्शक्रविक्रमैः।न चेलुस्संगराद्राजन् लोकद्वयजिगीषवः॥
तत्र यादवशार्दूलो विष्णुस्त्रैलोक्यवल्लभः।आससाद महाघोरौ यत्र तौ चैद्यमागधौ॥
[१] तावाहमागधोवीक्ष्य हेकृष्णपुरुषाधम। गुप्तेनहित्वयामन्दनयोत्स्येयाहि बन्धुहन्॥
न त्वया योद्धुमिच्छामि बालकेनेव लज्जया ॥

मु ॥ वित्रासवेपथुः भयकम्पः ॥ ४० ॥

मु ॥ अष्टानां यदूनां चतुर्भिर्नृपैस्सार्धं महत् कदनमासीत्, तत् कदनमद्भुतम् आश्चर्यावहमिवाभवत् ॥ ४१ ॥

मु ॥ गोविन्दाध्मातचेतसां श्रीकृष्णपराक्रमावष्टम्भेन दृढीकृतचित्तानामित्यर्थः, राजन्यकटकेन शत्रुसैन्येन सह यदूनां कदनं युद्धमासीत् ॥ ४२ ॥

मु ॥ अपरद्वार्यपि रोमहर्षणः अतिघोरतया द्रष्टॄणां पुलकाङ्कुरजनकः ॥ ४३ ॥

मु ॥ तइति यादवाः, हन्यमाना अपि सङ्गराद्युद्धान्न चेलुः, तत्रहेतुः—लोकद्वयेति॥

मु ॥ तत्र यदूनां मध्ये युद्धे वा, यादवशार्दूल इत्यनेन शत्रवो मृगप्राया इति द्योत्यते,विष्णुरित्यनेन व्याप्नोतीति विष्णुरितिव्युत्पत्त्या स्वयमेकोऽपि प्रतियोधं तावन्त एव प्रकाशतइति स्फोर्यते, त्रैलोक्यवल्लभ इत्यनेन सर्वलोककण्टकनिरसनेन सर्वलोकप्रियत्वमुच्यत इति बोद्धम् , चैद्यमागधौ यत्र स्थितौ तं देशामाससादेत्यर्थः ॥ ४५ ॥

वी ॥ ताविति ॥ तौ रामकृष्णौ अवलोक्याह, उक्तमेवाह—कृष्णेत्यादिना ॥ गुप्तेन कर्तरिक्तः, गोपयता आत्मानमिति शेषः, स्वजनेनेतिवा त्वया सह न योत्स्ये न युद्धं करोमि, याहि गच्छ, तत्र कारणं वदन् सम्बोधयति—हेमन्द मूढ तत्र हेतुः, हेबन्धुहन् अत एव पुरुषाधम बन्धुर्मातुलस्तस्य हन्तः न केवलं न योत्स्याम्येव, अपि तु त्वया योद्धुं नेच्छाम्यपि, यथा बालकेन सह लज्जया न युयुत्से तद्वत् ॥ ४६ ॥

मु ॥ तमाहेत्यादि ॥ बन्धुहन्तृत्वादियमुक्तिः, गुप्तेन कवचाच्छादितदेहेनेति भीरुत्वं स्फोर्यते, हेमन्द शत्रुबलानभिज्ञेत्यर्थः, एवं पुरुषाधमेत्यादिभिः शत्रोः प्रतियोधं प्रति वक्तव्यार्थसरणिः स्फुटा,किञ्च पुरुषा अधमा यस्मादिति बहुव्रीह्याश्रयणेन पुरुषोत्तमेत्यर्थश्च लभ्यते, अमन्देति च्छेदेन हेसर्वज्ञेत्यर्थश्च,बन्धुशब्देन बध्नाति जीवानिति व्युत्पत्त्या प्रकृतिरुच्यते, तां हन्तीतिबन्धुहन् भजतां प्रकृतिबन्धनिवर्तकेत्यर्थः, गुप्तेन सर्वान्तर्यामितया बहिर्दर्शनानर्हेण त्वया न योत्स्ये त्वम्म इत्युक्ते अहम्म इत्यादिविवादं न करिष्यामीत्यर्थः, तर्हि वात्सल्यपरिपूर्णतया त्वमेव मां प्राप्नुहीति वास्तवोऽर्थश्च, गर्वौद्धत्यादाह—नत्वयेति । तत्र रामकटाक्षेण कृष्णं प्रति बालकेनेवेत्युक्तम् ॥ ४६ ॥

१. तमाह. मु. भा. प्र. पा ॥

त्वं तु राम यदि श्रद्धा युध्यस्व धैर्यमुद्वह। हित्वा वा मच्छरैर्भिन्नं देहं स्वर्याहि मां जहि॥

श्रीभगवानुवाच—

नहि शूरा विकत्थन्ते दर्शयन्त्येव पौरुषम्। न गृह्णीमो वचो राजन्नातुरस्य [१] मुमूर्षतः॥

श्रीशुक उवाच—

जरासुतस्तावभिगम्य माधवौ महाबलौघेन बलीयसाऽऽवृणोत् ।
ससैन्ययानध्वजवाजिसारथी सूर्यानलौ वायुरिवाभ्ररेणुभिः ॥
सुपर्णतालध्वजचिह्नितौ रथावलक्षयन्त्यो हरिरामयोर्मृधे ।

---

वी ॥ अथ राममाह—त्वमिति ॥ यदि श्रद्धा युद्धार्थमस्तीति शेषः, तर्हि युध्यस्व, स्थैर्यमावह, न तु प्रारभ्य पलायस्वेति भावः, एवं चेन्मच्छरैः भिन्नं देहं त्यक्त्वा स्वः स्वर्गं याहि यास्यसीत्यर्थः, यद्वा समर्थश्चेत्त्वं मामेव जहि ॥ ४७ ॥

मु ॥ रामं प्रत्याह—त्वन्त्विति ॥ श्रद्धा यदि तव युद्धकौतूहलं यदि युद्ध्यस्व, यद्वा मच्छरैः छिन्नं देहं हित्वा स्वः स्वर्गं याहीत्युक्त्वा ततः स्वयमेव अच्छेद्यदेहोऽयमिति मत्वा स्वमतमाह—मांजहीति ॥ ४७ ॥

वी ॥ एवमुक्तः प्राह भगवान्—नहीति ॥ विकत्थन्ते विविधमात्मानं न श्लाघन्ते शूराः, किन्तु पौरुषमेव दर्शयन्ति, अतस्तवाशूरस्य मर्तुमाशंसमानस्यात एव आतुरस्य वचो वयं न गृह्णीमः न बहुमन्यामहे ॥ ४८ ॥

मु॥ अथ पुरुषाधमेत्यादेः यथाश्रुतार्थ इत्येव भगवतोक्तमुत्तरं—न वै शूरा इत्यादि॥ शूराः शौर्यसम्पन्नाः न विकत्थन्ते आत्मानं वृथा न श्लाघन्ते,किन्तु पौरुषमेव दर्शयन्ति, प्रकटयन्ति,मुमूर्षया आसन्नमरणावस्थयेत्यर्थः,आतुरस्य पीडितचित्तस्येत्यर्थः,तवेति शेषः, 'मुमूर्षतः' इतिपाठे अनुपदमेव मरिष्यत इत्यर्थः, तव वचो न गृह्णीमइति ॥ ४८ ॥

वी ॥ जरासुत इति ॥ तौ सैन्यादिभिस्सहितौ मधुवंशजत्वाद्द्वयोरपि माधवाविति निर्देशः, रामस्य माधवांशत्वाद्वा माधवव्यपदेशः, अभिगम्य अभिमुखमागत्य बलीयसा महता सैन्यसमूहेन आवृणोत् आवृतवान्, ससैन्येत्यस्य प्रथमैकवचनान्तपाठे जरासुतविशेषणत्वम्, यथा वायुरभ्रैस्सूर्यं रेणुभिश्चाग्निम् आवृणोति तथेति दृष्टान्तार्थः, अनेनादर्शनमात्रमेव नावरणमिति सूचितम् ॥ ४९ ॥

मु ॥ ततः किमित्यत्राह—जरासुतइति॥ सैन्येन यानाभ्यां यानरथाभ्यां ध्वजैर्वाजिभिः सारथिभ्यां सहितौ माधवौ मधुवंशप्रभवौ रामकृष्णौ वायुरभ्रैरेणुभिश्च क्रमेण सूर्यानिलाविव आवृणोदित्यनेन तद्बलं द्रष्टॄणां तयोर्दर्शनमात्रनिरोधकमेवाभून्न तत्प्रभावावरकमितिसूचितम्, महाबलौघेन महता सैन्यसमूहेन आवृणोत् ॥ ४९ ॥

वी ॥ सुपर्णेति ॥ तथा पुरस्त्रियः पुरस्याट्टालकादीनां च समाहारः, तत्समाश्रिता अधिरूढाः अट्टालका उपरि भूमिकाः मृधे युद्धे सुपर्णध्वजतालध्वजाभ्यां चिह्नितौ सञ्जातचिह्नौ हरिरामयोः रथावपश्यन्त्यः अत एव शुचा अर्पिताः व्याप्ताः सम्मुमुहुः विचित्ता बभूवुः ॥ ५० ॥

---

१. मुमूर्षया. मु. भा. प्र. पा॥

स्त्रियः पुराट्टालकहर्म्यगोपुरं समाश्रितास्सम्मुमुहुश्शुचार्पिताः ॥ ५०
हरिः परानीकपयोमुचां मुहुश्शिलीमुखात्युल्बणवर्षपीडितम् ।
स्वसैन्यमालोक्य सुरासुरार्चितं व्यस्फूर्जयच्छार्ङ्गशरासनोत्तमम् ॥ ५१
गृह्णन्निषङ्गादथ सन्दधच्छरान्विकृष्य मुञ्चन् शितबाणपूगान् ।
निघ्नन्रथान्कुञ्जरवाजिपत्तीन्निरन्तरं यद्वदलातचक्रम् ॥ ५२
*ततश्शशाङ्काकृति पाञ्चजन्यं महारवं दैत्यकुलापचारकम् ।

---

मु ॥ स्त्रियः मधुराङ्गनाः पुरस्याट्टालकहर्म्यगोपुरमिति द्वन्द्वैकवद्भावः, समाश्रिता आरूढास्सत्यः मृधे युद्धे हरिरामयोः रथावलक्षयन्त्यः सुपर्णतालध्वजचिह्निताविति विशेषणमहिम्ना ताभ्यां दूरदर्शनीयावपि प्रबलसेनारेणुच्छन्नतया अपश्यन्त्य इत्यर्थः, शुचा अर्पिताः अर्पितशोकास्सत्यः मुमुहुः मूर्च्छामापुः ॥ ५० ॥

वी॥ हरिरिति॥ परस्यानीकानि सैन्यानि तान्येव पयोमुचो मेघाः तेषां शिलीमुखाः बाणास्तेषाम् अत्युल्बणं दुस्सहं वर्षं तेन पीडितं स्वसैन्यमालोक्य सुरैरसुरैश्च बहुमतं शार्ङ्गाख्यं शरासनोत्तमं धनुश्श्रेष्ठं व्यस्फूर्जयदुज्जृम्भितवान्, सघोषज्यायुक्तमकरोदिति वा ॥ ५१ ॥

मु ॥ ततः किमत आह—हरिरिति ॥ परस्य शत्रोरनीकानां सेनानामेव पयोमुचां मेघानां शिलीमुखानां बाणानामिति उल्बणवर्षम् अविच्छिन्नप्रसरणमेव वर्षं वृष्टिरिति क्लिष्टरूपकम्, तेन पीडितं स्वसैन्यं हरिरालोक्य सुरासुरार्चितं सर्वत्राप्यमोघशक्तितया शत्रुमित्रपूजितमित्यर्थः, शार्ङ्गशरासनोत्तमं व्यस्फूर्जयत् उज्जृम्भितवान् ॥ ५१ ॥

वी ॥ गृह्णन्निति ॥ निषङ्गात्तूणाच्छरान् गृह्णन् धनुषीति शेषः, विकृष्य सन्निहितत्वाच्छरानाकृष्य निशितबाणसमूहान्मुञ्चन् रथादीन्निघ्नन् ध्वंसयन् अवतस्थ इति शेषः, पत्तयः पदातयः न विद्यते अन्तरं विच्छेदो यस्यां ग्रहणादिक्रियायां तद्यथा भवति तथा अवतस्थ इत्यर्थः, तदात्विकभगवच्छार्ङ्गस्य दृष्टान्तमाह—यद्वदलातचक्रमिति ॥ यद्वद्यथा ज्वलत्काष्ठभ्रमणं चक्रवद्भाति, तद्वद्धनुरासीदित्यर्थः, निरन्तरमित्यलातचक्रस्यैव वा विशेषणम्, विच्छेदरहितमलातचक्रं यथा तद्वत् तद्धनुर्व्यस्फूर्जयदिति पूर्वेण सम्बन्धो वा ॥ ५२ ॥

मु॥ तदेवाह—गृह्णन्निति ॥ निषङ्गात् शरान् गृह्णन् उद्धरन् अथ सन्दधन् धनुर्गुणे तान् घटयन् विकृष्य गुणमाकर्णान्तमाकृष्य शितान् निशितान् बाणसञ्चयान् शरपरम्पराः मुञ्चन् प्रयुञ्जानः तैः रथादीन् निघ्नन् प्रहरन् पत्तयः पदातयः निरन्तरमिति ग्रहणादिक्रियाविशेषणम्, एवं कुर्वन् अलातचक्रं यद्वत् ज्वलत्काष्ठमतिवेगभ्रमणवशाद्यथा चक्रमिव स्फुरति, तद्वत् व्यस्फूर्जयदिति पूर्वेणान्वयः ॥ ५२ ॥

मु॥ ततइति ॥ महारवं वज्रनिर्घोषं तुमुलनिजभाङ्कारैरेव शत्रुनिर्भेदसमर्थमित्यर्थः, अत एव दैत्यकुलस्यापचारकं मारकं शशाङ्काकृतिः चन्द्रधवलश्चासौ पाञ्चजन्यश्च तं

---

*'ततश्शशाङ्काकृति' इत्यारभ्य 'शरान्विमुञ्चन्' इत्यन्तं. मु. भा. प्रकाशिकानुसारी पाठः ॥

मुखे निधायाशु पुपूर यादवानाश्वासयन् क्षत्रियकूटघट्टितान् ॥ ५३
नृपास्तदाकर्ण्य तु कर्णनिष्ठुरं क्रमेण निर्भिन्नहृदो बभूविरे ।
यदुप्रवीराश्च समुद्यतायुधा रणे नृपञ्जघ्नुरनीकसंगतान् ॥ ५४
ततश्चतुर्द्वारगतान्महीपतीन्यदुप्रवीराः परिभूय सर्वशः ।
आप्यायिताश्शार्ङ्गरवेणशौरिणा चक्रुश्शरौघैस्सहसैकवाहिना ॥ ५५
ततो हरिं चैद्यपतिर्मण्डलीकृतकार्मुकः ।
भर्त्सयन् कृष्णकृष्णेति तिष्ठतिष्ठेति चाब्रवीत्॥ ५६
तमभ्यधावद्गोविन्दो विमुञ्चन् सायकान् बहून् ।
मण्डलीकृतकोदण्डस्तैलधौताञ्छिलाशितान् ॥ ५७

ततः पञ्च शरान्घोरानादाय दमघोषजः।चतुर्भिस्तुरगानाशु विव्याधैकेनसारथिम्॥
भूयो दशाशु सन्धाय विव्याध मधुसूदनम्। व्यनदत्सिंहनादं च तदद्भुतमिवाभवत्॥
ततस्तमाहगोविन्दःसाधुसाध्विातिपूजयन्। भोभोचैद्यमहेष्वासवीरोऽसिबलवानसि

---

पुपूर पूरयामास, पाञ्चजन्यपूरणस्य साफल्यमाह—यादवानिति ॥ क्षत्रियैः कूटेन कपटयुद्धेन घट्टितान् यादवान् आश्वासयन् सन्तोषयन् ॥ ५३ ॥

मु ॥ नृपाइति ॥ कर्णनिष्ठुरं श्रोतॄणां कर्णपरुषं तत् पाञ्चजन्यस्य गर्जितमाकर्ण्य नृपाः क्रमेण युद्धार्थं योधानां निर्गमनपर्यायेण निर्भिन्नहृदः विदीर्णहृदयाः बभूविरे, यदुप्रवीराश्चेति । अनीकसङ्गतान् सेनासहितान् नृपान् जघ्नुः ॥ ५४ ॥

मु ॥ ततः शौरिणा कर्त्रा एकवाहिना अविच्छिन्नं प्रसरता शार्ङ्गरवेण करणेन शत्रुषु शौरेरविच्छिन्नशरसन्धानाभावे शार्ङ्गरवस्य श्रूयमाणत्वासम्भवादियमुक्तिः, आप्यायिताः धैर्यं प्रापिताः यदुप्रवीराः चतुर्द्वारगतान् महीपतीन् शत्रून् नृपान् शरौघैः सहसा परिभूय निपीड्य सर्वशश्चक्रुः सर्वशः प्रपलायितांश्चक्रुरित्यर्थः ॥ ५५ ॥

मु ॥ अथ श्रीकृष्णचैद्ययोर्युद्धमाह—तत इति ॥ चैद्यपतिः शिशुपालः रे रे कृष्ण कृष्ण इति हरिं भर्त्सयन् धिक्कुर्वन् अब्रवीदित्यन्वयः, संबुद्धिद्वयस्यतिष्ठतिष्ठेतिक्रियाद्वयेन क्रमेण अन्वयः ॥ ५६ ॥

मु ॥ तमिति ॥ तैलेन धौतान् सम्मार्जितान् शिलया शाणोपलेन शितान् तीक्ष्णीकृतान् सायकान् विमुञ्चन् गोविन्दस्तम् अभ्यधावदित्यन्वयः ॥ ५७ ॥

मु॥ततइति॥ दमघोषजश्चैद्यः तुरगान् सारथिं च विव्याध, गृहीतशरपञ्चके चतुर्भिस्तुरगानेकेन सारथिं च जघानेत्यर्थः, दश बाणानाशु सन्धाय मधुसूदनं विव्याध जघानेत्यर्थः,सिंहनादं व्यनददित्यत्र वाचमुवाचेतिवदुपपत्तिः,तद्युद्धमद्भुतमिवाश्चर्यकरमिवाभवदिति, इवशब्दो वाक्यालङ्कारे ॥ ५८ ॥ ५९ ॥

मु ॥ ततइति ॥ साधुसाध्विति पूजयन्नित्यस्य उत्तमपुरुषाः क्षुद्रे विद्यमानमपि कञ्चित् सद्गुणमवलम्ब्य सम्भावयन्तीतिभावः, महेष्वास धनुर्विद्याकुशलेत्यर्थः, अतः मे

अतोमेपश्यदुर्बुद्धेधानुष्कत्वंस्वयंरणे। इतिब्रुवतिगोविन्देराजानस्सर्वएवते ॥ ६१
विव्यधुर्निशितैर्बाणैर्यौगपद्येन माधवम् ॥
तांस्तान्प्रत्येकशःकृष्णोविद्ध्वापञ्चभिराशुगैः।सारथिं चतुरोवाहाननयद्यमसादनम्॥
त्रिभिस्त्रिभिश्शरैर्भूयोऽप्येकैकंनृपतीन्रणे। वक्षस्यास्येललाटेचविव्याधयदुनन्दनः॥
ततश्च त्रिंशतं राज्ञां त्रिंशत्कार्मुकमाहवे। त्रिभिस्त्रिभिस्सायकैश्चचिच्छिदेयदुपुङ्गवः
दमघोषसुतस्यापि धनुश्छित्त्वा त्रिभिश्शरैः।ध्वजंच मुकुटच्छत्ते चिच्छिदे प्रहसन्निव॥
ततोदशहरिर्भल्लान्शार्ङ्गेसंधायमाधवः।आकर्णान्तमिवाकृष्यचैद्यंविव्याधसंगरे॥ ६६
तेनराजन्यकटकंविभ्रान्तंशरताडितम्। कालान्तमारुतोद्धतशैलद्रुमलतोपमम्॥ ६७
त्रातारं नाध्यगच्छद्वै हताश्वरथसारथि ॥
शरान्विमुञ्चञ्जलजं च पूरयन्विष्फारयन्कार्मुकमुग्रपौरुषः।
व्यलोडयन्मागधसैन्यमाहवे निरन्तरं यद्वदलातचक्रम् ॥ ६८

---

धानुष्कत्वं धनुर्विद्याकौशलं स्वयं पश्य इदानीं वाऽस्मन्महिमानं जानीहीत्यर्थः, दुर्बुद्धे इति सम्बुद्ध्या ईदृशी विपरीता ते बुद्धिस्त्वां मां शरणं प्रापय्य जीवयितुं न प्रवर्तते, त्वया किं कर्तव्यमिति भावः, यौगपद्येन युगपत्प्रयोगविधया विव्यधुः जघ्नुः॥ ६०॥६१॥

मु ॥ कृष्णः तांस्तान् राज्ञः प्रत्येकशः पञ्चभिराशुगैः एकैकं पञ्चभिर्बाणैरित्यर्थः, विद्ध्वा छित्वा यमसादनं यमालयम् अनयत् ॥ ६२ ॥

मु ॥ पुनः शरलक्षीकृतस्थलकथनपूर्वकमाह—त्रिभिरिति ॥ ६३ ॥

मु ॥ ततश्चेति ॥ राज्ञां त्रिंशतं त्रिंशत्सङ्ख्यावतो राज्ञ इत्यर्थः, त्रिंशत्कार्मुकं तेषां त्रिंशत्सङ्ख्यावन्ति कार्मुकानिचेत्यर्थः, त्रिभिस्त्रिभिस्सायकैः त्रिभिस्त्रिभिर्बाणैश्चिच्छिदे चिच्छेद ॥ ६४ ॥

मु ॥ दमघोषसुतस्य चैद्यस्यापि मुकुटं छत्रञ्च मुकुटच्छत्रे प्रहसन्निव चिच्छिदे, प्रहसन्निवेत्यनेन सर्वशक्तस्य तस्येदं विलासकृत्यमात्रमेवेति स्फोर्यते ॥ ६५ ॥

मु ॥ ततइति ॥ माधवो हरिरित्याभ्यां भक्तरक्षणपुरुषकारभूतलक्ष्मीनाथोऽपि हरतीति हरिरिति व्युत्पत्त्या तद्विरोधिसंहारीति प्रकाश्यते, आकर्णान्तमिवेति इवशब्देन तद्वेधनं लीलामात्रमेवेति प्रकाश्यते, चैद्यं विव्याध अपीडयत् ॥ ६६ ॥

मु॥ राजन्यकटकं राजसैन्यं कल्पान्तमारुतेनोद्धूता उत्सादिताः शैला द्रुमाः लताश्च उपमा यस्य तत्तादृशञ्च, अत्र योधबलतारतम्येनोपमानवस्तुतारतम्यं द्रष्टव्यम्,एवंविधं राजन्यकटकं हताश्वरथसारथि सत् त्रातारं नाध्यगच्छत् ॥ ६७ ॥

मु ॥ अथ हरेर्निरर्गलयुद्धक्रियाविजृम्भणमाह—शरानित्यादि ॥ जलजं शङ्खं पूरयन् निरन्तरं पुरुषप्रयत्नकृतभ्रमणवेगेनाविच्छिन्नस्वरूपतया प्रतीयमानमलातचक्रमुल्कावलयं यद्वत्, तद्वत् शरसन्धानवेगवशात् निरन्तरमण्डलाकारेणैव प्रतीयमानमित्यर्थः, कार्मुकं विष्फारयन् ध्वनयन् मागधसैन्यं व्यलोडयत् गजो ह्रदमिव विलोडयामासेत्यर्थः ॥ ६८ ॥

निर्भिन्नकुम्भाः करिणो निपेतुरनेकशोऽश्वाश्शरवृक्णकन्धराः ।
रथाहताश्वध्वजसूतनायकाः पदातयश्छिन्नभुजोरुकन्धराः ॥ ६९

सञ्छिद्यमानद्विपदेभवाजिनामङ्गप्रसूताश्शतशोऽसृगापगाः ।
भुजाहयः पूरुषशीर्षकच्छपाः हतद्विपद्वीपहयग्रहाकुलाः ॥ ७०

करोरुमीना नरकेशशैवला धनुस्तरङ्गायुधगुल्मसङ्कुलाः ।
आस्थूरिकावर्तभयानका महामणिप्रवेकाभरणाश्मशर्कराः ॥ ७१
प्रवर्तिता भीरुभयावहा मृधे मनस्विनां हर्षकरीः परस्परम् ॥

---

वी ॥ तादात्विकं भगवच्छरपीडितं परसैन्यमनुवर्णयति—निर्भिन्नेति ॥ निर्भिन्नाः कुम्भाः कुम्भस्थलानि येषां ते करिणो गजाः निपेतुः तथा अश्वाश्चानेकशः शरैर्भग्नाः कन्धराः ग्रीवाः येषां तथाभूताः निपेतुरित्यनुषज्यते, हताः अश्वाः ध्वजाः सूता नायका रथिनश्च येषु ते रथास्तथा पदातयश्च छिन्ना भुजा ऊरवः कन्धराश्च येषां तथाभूताः निपेतुः ॥ ६९ ॥

मु ॥ एवं विलोडितस्य मागधसैन्यस्य दुरवस्थां वर्णयति—निर्भिन्नेत्यादि ॥ सर्वत्र निपेतुरित्यन्वयः, शरैः वृक्णाः छिन्नाः कन्धरा येषान्ते हता अश्वादयो येषान्ते तत्र सूताः सारथयः नायका रथिनः छिन्नाः भुजाः ऊरवः कन्धराश्च येषान्ते ॥ ६९ ॥

वी ॥ अथ भगवच्छरनिर्भिन्नपरसैन्यतनुभवरुधिरनदीः प्रसिद्धनदीत्वेन निरूपयति—सञ्छिद्येति ॥ सञ्छिद्यमानेभ्यः पदातिगजाश्वानामङ्गेभ्यः प्रसूता असृगापगाः रुधिरनद्यः शतशः प्रवर्तिताः, इति तृतीयश्लोकेनान्वयः, कथम्भूताः?भुजा एव अहयः सर्पाः यासु पूरुषाणां शीर्षाण्येव कच्छपाः यासु तथाभूताः हताः द्विपा गजा एव द्वीपाः अन्तरीपभूमयः हया अश्वा एव ग्रहाः तैश्चाकुलाः व्याप्ताः ॥ ७० ॥

मु ॥ संछिद्यमानेति ॥ द्विपदाः नराः, इभाः, वाजिनः, सञ्छिन्द्यमानानामेतेषाम् अङ्गेभ्यः प्रसूताः असृगापगाः रुधिरनद्यः परस्परं शतशः प्रवर्तिता इत्युत्तरत्रान्वयः, 'असृगापगाः'इति रूपकं सावयवं निरूपयति—भुजेति । भुजा एवाहयः सर्पा यासु ताः पुरुषाणां शीर्षाण्येव कच्छपाः कमठा यासु ताः हतैर्द्विपैरेव द्वीपैरन्तरीपैः हयैरेव ग्रहैः ग्राहैश्चाकुलाः व्याप्ताः ॥ ७० ॥

वी ॥ करा ऊरवश्चैव मीना यासु नराणां केशा एव शैवलं यासु ताः धनूंष्येव तरङ्गा आयुधान्येव गुल्मानि च तैश्च सङ्कुलाः आस्थूरिकाश्चक्राणि ता एवावर्ताः तैर्भयानकाः महामणीनां प्रवेकाः श्रेष्ठा उत्तमाभरणानि च यथायथं शिलाश्शर्कराश्च यासु ताः भीरूणां हर्षकारिण्यः मिथो धीराणां मनस्विनां भयावहाः ॥ ७१ ॥

मु ॥ करा ऊरवश्च मीनाः करा एव उरुमीनाः प्रबलमत्स्या इति वा यासु ताः नराणां केशा एव शैवला यासु ताः धनुर्भिरेव तरङ्गैरायुधैः कुन्ताद्यायुधवृन्दैरेव गुल्मैः अन्तर्द्वीपरुहनिकुञ्जैश्चाकुलाः आस्थूरिकाश्चक्राणि ताभिरेवावर्तैः जलभ्रमैः भयानकाः महामणीनां श्रेष्ठहारादिमणीनां प्रवेकाः श्रेष्ठाः आभरणानि च यथार्हमश्मानः शर्कराश्च यासु ताः, भीरूणां भयावहाः भयङ्कराः मनस्विनां धीराणां हर्षावहाश्चेति॥ ७१ ॥

विनिघ्नताऽरीन्मुसलेन दुर्मदान्तसङ्कर्षणेनापरिमेयतेजसा ।
बलं तदङ्गार्णवदुर्गभैरवं दुरन्तपारं मगधेन्द्रपालितम् ॥ ७२
क्षयं प्रणीतं वसुदेवपुत्रयोर्विक्रीडितं तज्जगदीशयोः परम् ॥
स्थित्युद्भवान्तं भुवनत्रयस्य यस्समीहतेऽनन्तगुणस्स्वलीलया ।
न तस्य चित्रं परपक्षनिग्रहस्तथाऽपि मर्त्यानुविधस्य वर्ण्यते ॥ ७३
*हतेषुसर्वसैन्येषु जरासन्धोमहाबलः । विद्रुतेष्ववशिष्टेषु रथैनैकेनसीरिणम्॥ ७४

वी ॥ विनिघ्नतेति ॥ किञ्च अङ्ग हे राजन् अपरिमेयमपरिच्छेद्यं तेजः पराभिभवसामर्थ्यं यस्य तेनारीन् शत्रून्मुसलेनायुधेन विनिघ्नता ताडयता सङ्कर्षणेन कर्त्रा तन्निहतावशिष्टं मगधेन्द्रेण पालितम् अर्णववद्दुर्गमं भैरवं च बलं क्षयं प्रणीतं नाशितमित्यर्थः, अद्भुतमेतद्द्वाभ्यामेव त्रयोविंशत्यनीकात्मकं बलं हतमिति विस्मयमानं राजानं प्रत्याह—वसुदेवपुत्रयोरिति । यदुक्तं रामकृष्णयोः कर्म केवलं जगदीश्वरयोः तयोः क्रीडितं क्रीडामात्रमेव, न तु पराक्रम इति भावः ॥ ७२॥

मु ॥ अथ रामविक्रममाह—विनिघ्नतेत्यादि॥ अङ्गेति परीक्षितस्सम्बुद्धिः, अर्णववद्दुर्गमं भैरवं भयङ्करञ्च, यद्वा तदङ्गानि बलाङ्गानि सेनाङ्गानीत्यर्थः, तान्येवार्णवः स एव दुर्गं तेन भैरवं दारुणं दुर्निश्चयः परोऽवधिर्यस्य तत्, यद्वा अन्तः तलं पारो अवधिः दुरिति निषेधे,तथाच विक्रमेणागाधं देशतो निरवधिकञ्चेत्यर्थः, एवंविधं बलं संकर्षणेनापि क्षयं प्रणीतमिति नैतच्चित्रमित्याह—वसुदेवपुत्रयोरिति । जगदीश्वरयोः वस्तुतो जगदुत्पत्त्यादिकर्त्रोः परमपुरुषयोरेवेत्यर्थः, किन्तु वसुदेवपुत्रयोः ब्रह्मादिभिः प्रार्थनया भूभारनिवर्तनार्थं वसुदेवपुत्रत्वेनावतीर्णयोस्तयोः तच्छत्रुसंहाररूपं कर्म विक्रीडितं क्रीडामात्रं न तु तत्पराक्रमप्रकटनं प्रयासावहमिति भावः, यद्वा तद्विक्रीडितं युद्धरूपक्रीडा परं लोकाद्भुतावहतया सर्वोत्कृष्टमभवदिति ॥ ७२ ॥

वी ॥ न चात्र विस्मयः कार्य इत्याह—स्थितीति ॥ स्थित्यादीनां समाहारद्वन्द्वः, यो भगवानसंख्येयकल्याणगुणः स्वलीलयैव त्रिलोक्याः स्थित्यादिकमेवेहते करोति, तस्य शत्रुपक्षनिग्रहो न चित्रं नाश्चर्यविषयः, तर्हि किमिति वैचित्र्येणोपवर्ण्यत इत्यत आह—तथाऽपीति । चित्रत्वाभावेऽपि मर्त्याननुविधत्ते अनुकरोतीति तथा तस्य वर्ण्यते, कर्मेति शेषः, मर्त्यानुविधस्यामानुषं कर्म चित्रमेवेत्यभिप्रायेण वर्ण्यत इति भावः ॥ ७३ ॥

मु ॥ साक्षात् परब्रह्मणः सर्वशक्तेस्तस्य नैतच्चित्रमित्याह—स्थितीति ॥ भुवनत्रयस्य स्थित्युद्भवान्तम् उत्पत्तिस्थितिलयान् स्वस्य लीलयैव समीहते सङ्कल्पते सङ्कल्पमात्रेणैव विधत्त इत्यर्थः, तर्हि कथं दुष्करमिवाश्चर्येण वर्ण्यतइत्यत्राह—तथापीति । मर्त्याननुविधत्ते अनुकरोतीति मर्त्यानुविधः मर्त्यानुविधायीत्यर्थः, तस्य तद्विक्रीडितं वर्ण्यतइति, तथाच नटस्य वेषानुगुणव्यापारकीर्तनमिव मर्त्यावतारानुगुणं तत्कर्म वर्ण्यत इति भावः॥

मु ॥ एवम्मध्ये मुनिस्तद्वैभवमाश्चर्येणोक्त्वा पुनः प्रकृतमाह—हतेष्विति ॥ सर्वसै-

*'हतेषु सर्वसैन्येषु' इत्यारभ्य 'व्यर्थीकृत्य' इत्यन्ताः पञ्च श्लोकाः मुनिभावप्रकाशिकानुसारिणः ॥

तावुभौगिरिसंकाशौमत्तावित्रमहागजौ।परस्परमयुध्येतांसामर्षौबलशालिनौ ॥ ७५
मागधस्तुगदांगुर्वीमादायामर्षविह्वलः।भ्रामयित्वाशतगुणं चिक्षेपबलवक्षसि ॥ ७६
तामापतन्तींतरसागदांशृङ्गोपमांगिरेः।व्यंसयित्वाहलधरो मुधाचक्रेस्मयन्निव॥ ७७
व्यर्थीकृत्यगदांतस्यमुसलेनहलायुधः।पोथयित्वारथेक्षुण्णे निहत्यरथसारथी॥ ७८
जग्राहविरथं रामोजरासन्धं महाबलम्। हतानीकावशिष्टासुं[1] सिंहःक्षुद्रमृगं यथा॥७९
बध्यमानंहतारातिंपाशैर्वारुणमानुषैः।वारयामासगोविन्दस्तेनकार्यचिकीर्षया॥ ८०

न्येषु हतेषु मध्ये अवशिष्टेषु भटेषुच विद्रुतेषु पलायितेषु सत्सु जरासन्धः एकेन रथेनैव सीरिणमभिययाविति शेषः ॥ ७४ ॥

मु ॥ तद्युद्धमाह—तावुभावित्यादिना ॥ गिरिसङ्काशावित्यनेन परैरभेद्यत्वं महागजावित्यनेन युद्धदुर्लेलितत्वं चोच्यते, सामर्षौ सक्रोधौ ॥ ७५ ॥

मु ॥ मागधस्त्विति॥ अमर्षविह्वलः क्रोधाकुलः गदां शतगुणं शतवारान् भ्रामयित्वा बलवक्षसि चिक्षेप ॥ ७६ ॥

मु॥ हलधरः तां गदां व्यंसयित्वा वञ्चयित्वा तदागमनमार्गादपसरणं कृत्वेत्यर्थः, मुधा चक्रे विफलीचकार ॥ ७७ ॥

वी॥ जग्राहेति॥ हतान्यनीकानि सैन्यानि यस्य अवशिष्टा असवः प्राणा एव यस्य स चासौ सच तं विरथं जरासन्धं जग्राह गृहीतवान्, यथा सिंहः क्षुद्रमृगं गृह्णाति तद्वत् ॥

मु ॥ हलायुधः मुसलेन तस्य गदां पोथयित्वा ताडयित्वा व्यर्थीकृत्य अथ रथे तस्य रथे क्षुण्णे मुसलेनैव भग्ने सति उभौच रथसारथी निहत्य संहृत्य विरथं जरासन्धं जग्राहेत्यन्वयः;अत्र हलधर इत्यनेन तस्य किरीटीत्यादिवत्तद्साधारणचिह्नकत्वमुच्यते, हलायुधइत्यनेन तदेकयुद्धसाधनकत्वमुच्यते, रामइत्यनेन रमयतीति व्युत्पत्त्या तदितरदुर्जयमहावीरजयेन सकलसज्जनाभिरञ्जकत्वं चोच्यत इति बोद्ध्यम्, हतान्यनीकानि सेना यस्य स चासौ अवशिष्टा असवः प्राणा एव यस्य सः तम् ,सिंहइति। ओजसा स्वेतरेभ्योऽतिशयितबलेनेत्यर्थः ॥ ७८ ॥ ७९ ॥

वी॥बध्यमानमिति॥ हता अरातयो येन तं वारुणैः मानुषैश्च पाशैस्साधनैः बध्यमानं जरासन्धं रामेणेति शेषः, गोविन्दः दृष्ट्वेति शेषः, वारयामास, रामभिति शेषः, तत्र हेतुः तेन जरासन्धेन सह यत्कार्यं पुनर्युद्धात्मकं तत्कर्तुमिच्छया हेतुभूतया न्यवारयदिति सम्बन्धः ॥ ८० ॥

मु ॥ ततः किमासीदित्याह—बध्यमानमिति॥ हताः संहृताः अरातयः शत्रवो येन तं सर्वशत्रुसंहारकमपीत्यर्थः, तमिति शेषः, वारुणैर्मानुषैश्च पाशैर्बध्यमानं रामेणेत्यर्थः, गोविन्दो वारयामास, तत्र हेतुमाह—तेन कार्यचिकीर्षयेति । अयं भगवतो भावः—प्रतिवारं तद्बलमेव संहृत्य जरासन्धो मया विमुक्तश्चेत् मत्सर्यसौ पुनः बलं मेलयित्वा आगमिष्यति,तत्तदाप्येवमेव संहृत्य अन्ततस्तद्वधे कृते मम भूभारनिवृत्तिनिमित्तकोऽवतारस्सफलस्स्यात् —इति ॥ ८० ॥

1. सिंहस्सिंहमिवौजसा. मु. भा. प्र. पा ॥

समुक्तोलोकनाथाभ्यांव्रीडितो[१]वीरसम्मतः।वनंविविक्षुस्तपसेवारितःपथिराजभिः॥
[२]वाक्यैर्विचित्रार्थपदैःनयैश्चप्राकृतैरपि। स्वकर्मबन्धप्राप्तोऽयंयदुभिस्तेपराभवः॥ ८२

श्रीशुक उवाच—

हतेषुसर्वानीकेषुनृपोबार्हद्रथस्तदा । उपेक्षितोभगवतामगधान्दुर्मनाययौ ॥ ८३
मुकुन्दोऽप्यक्षतबलो निस्तीर्णारिबलार्णवः। विकीर्यमाणःकुसुमैस्त्रिदशैरनुमोदितः॥
माधुरैरुपसङ्गम्यविज्वरैर्मुदितात्मभिः।उपगीयमानविजयस्सूतमागधवन्दिभिः॥८५

वी ॥ सइति ॥ लोकनाथाभ्यां रामकृष्णाभ्यां विमुक्तस्स वीरश्रेष्ठो जरासन्धः तावत्तपसे तपश्चरितुं वनं प्रवेष्टुमिच्छुः पथि राजभिः शिशुपालादिभिः कर्तृभिः विचित्राः अर्थाः पदानि शब्दाश्च येषु तैर्वाक्यैः प्राकृतैर्नयैः न्यायैश्च साधनैर्वारितः, अत्र लौकिकन्यायमाहुः—स्वकर्मेति । यदुभिरल्पकैर्महतः ते पराभवः केवलं स्वकर्मबन्धप्राप्त इत्येवंविधैर्नयैरिति सम्बन्धः ॥ ८१ ॥ ८२ ॥

मु ॥ अथायं किमासीदित्याह—स इति ॥ लोकनाथाभ्यां रामकृष्णाभ्यां मुक्तस्त्यक्तः सः वीरसत्कृतः एतावत्पर्यन्तं महावीरैरेव कृतसत्कारः कुत्रचिदप्यक्षतप्रताप इति भावः, अत एव व्रीडितः लज्जितस्सन् तपसे वनं विविक्षुः प्रवेष्टुमिच्छुः वीरधर्मजिहासया मुनिवृत्तिमाचरितुमिच्छुरित्यर्थः, सः पथि राजभिः कर्तृभिः वाक्यैः नयैश्च वारित इत्यन्वयः, कीदृशैर्वाक्यैरित्यत्राह—पवित्रेति ॥ पवित्रार्थानि धर्मोपदेशपरतया ग्राह्यार्थकानीत्यर्थः, पदानि येषु तैः वाक्यैः नयैः नीतिभिश्च यदुभिरल्पकैस्ते महतः पराभवस्तु केवलं स्वकर्मबन्धेनैव प्राप्तः , यदवो व्याजमात्रम्, अतस्त्वया न लज्जितव्यमित्येवंरूपैरित्यर्थः ॥ ८१ ॥ ८२ ॥

वी ॥ हतेष्विति ॥ सर्वेष्वनीकेषु हतेषु सत्सु बार्हद्रथो जरासन्धः राजा भगवतोपेक्षितो दुःखितचित्तो मगधान् जनपदान् ययौ ॥ ८३ ॥

मु ॥ बार्हद्रथो जरासन्धः दुर्मनाः विकलचित्तो ययौ ॥ ८३ ॥

वी ॥ मुकुन्दइति ॥ अक्षतमविहतं बलं स्वीयं यस्य निस्तीर्णः अरीणां बलमेवार्णवो येन तथाभूतः मुकुन्दः अपिः त्वर्थः, मुकुन्दस्त्वित्यर्थः, साधुसाध्विति देवैरनुमोदितः कुसुमैर्विकीर्यमाणश्च विगतः ज्वरः शत्रुपीडात्मको येभ्यस्तैरत एव मुदितचित्तैर्माधुरैर्जनैरुपसङ्गम्य मिलित्वा सूतादिभिः उपगीयमानो विजयो यस्य तथाभूतो ययाविति सम्बन्धः, तत्र सूताः पौरुषप्रकाशकाः, मागधाः गायकाः, वन्दिनः स्तुतिपाठकाः इति विवेकः ॥ ८४ ॥ ८५ ॥

मु ॥ मुकुन्दोऽपि ययावित्यनुषङ्गः, कीदृशो ययावित्यत्राह—अक्षतबल इत्यादिना । अक्षतं तत्प्रभावादविद्यमानश्शत्रुकृतभङ्गो यस्येति वा शत्रुप्रहरणक्षतेषु सत्स्वपि तस्यैव कटाक्षामृतेन तत्प्रतिसन्धानादक्षतं वा बलं यस्य सः,यद्वा सर्वशक्तितया अक्षतम् अप्रतिहतं बलं शक्तिर्यस्य सः निस्तीर्णोऽनायासेनैव तीर्णोऽरिबलमेवार्णवो येनसः त्रिदशैः कर्तृभिः कुसुमैर्विकीर्यमाणः अनुमोदितः अहो अस्य विक्रमः साधुसाध्वित्यभिनन्दितश्च॥

१. वीरसत्कृतः. मु. भा. प्र. पा. २. वाक्यैः पवित्रार्थपदैः. मु. भा. प्र. पा ॥

शङ्खदुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः। वीणावेणुमृदङ्गानिपुरंप्रविशतिप्रभौ ॥ ८६
सिक्तमार्गां हृष्टजनांपताकाभिरलङ्कृताम्। निर्घुष्टांब्रह्मघोषेण[१]कौतुकाबद्धतोरणाम्॥
निचीयमानोनारीभिर्माल्यदध्यक्षताङ्कुरैः।निरीक्ष्यमाणस्सस्नेहंप्रीत्युत्कण्ठितलोचनैः
आयोधनागतं वित्तमाहृतं वीरभूषणम्। यदुराजायतत्सर्वमाहृतंप्रादिशत्प्रभुः॥ ८९

श्रीशुकउवाच—

*तृतीयेमासिभूयश्चराजाबार्हद्रथोबली। दिवानिशंतप्यमानः स्मरनपूर्वपराभवम्।
आहूयसर्वभूपालांश्चकारकदनोद्यमम् ॥ ९०

मु ॥ माधुरैर्मधुरावासिजनैः उपसङ्गम्य मिलित्वा सूतादिभिः उपगीयमानविजयस्सन् ययाविति, अत्राक्षराधिक्यमार्षं तेषां निरङ्कुशत्वात् ॥ ८५ ॥

वी ॥ शङ्खेति ॥ प्रभौ भगवति पुरं प्रविशति सति शङ्खादयो विनेदुः दध्वनुः, भेर्यश्च तूर्याणि च तानि परवल्लिङ्गता, तथा वीणावेणुमृदङ्गानीति च ॥ ८६ ॥

मु ॥ शङ्खेत्यादि॥प्रभौ श्रीकृष्णे पुरं प्रविशति सति शङ्खादयो नेदुः, अत्र पुरमिति रेफान्तस्त्रीलिङ्गं तद्विशेषणानां स्त्रीलिङ्गत्वात् ॥ ८६ ॥

वी ॥ पुरं विशिनष्टि—सिक्तमार्गामिति ॥ सिक्ताश्चन्दनाम्बुभिः मार्गाः यस्यां हृष्टा जना यस्यां ब्रह्मघोषेण निर्घुष्टां नादितां कौतुकेनोत्सवेन आ सर्वतो बद्धानि तोरणानि यस्याम् ॥ ८७ ॥

मु ॥ कथंभूतां पुरमिति चेत्तदाह—सिक्तेत्यादिना ॥ सिक्तमार्गां चन्दनादिवासितजलैस्संसिक्तराजमार्गां ब्रह्मघोषेण वेदघोषेण निर्घुष्टां निनादितां कौतुकेन उत्सवेन उन्नद्धानि उच्चैर्निबद्धानि तोरणानि यस्यान्तामिति ॥ ८७ ॥

वी ॥ निचीयमानइति ॥ मालामर्हन्तीति माल्यानि कुसुमानि तत्प्रभृतिभिः निचीयमानः कीर्यमाणः प्रीत्या उत्कण्ठितानि भरितानि लोचनानि येषां तैः जनैरिति शेषः, स्नेहेन सहितं यथा तथा निरीक्ष्यमाणो मुकुन्दः प्रविवेशेति विपरिणतेनान्वयः ॥ ८८ ॥

मु॥ नारीभिः कर्त्रीभिः मालाभिः निचीयमानः विकीर्यमाणः प्रविवेशेति पूर्वं प्रविशति सतीत्युक्तत्वात् प्रभौ पुरं प्रविशति सति प्रवेशोन्मुखे सतीत्यर्थः, तदा एवमलङ्कृतां तां प्रविवेशेति विपरिणतानुषङ्गः ॥ ८८ ॥

वी ॥ आयोधनेति ॥ आयोधनं रणभूमिः तत्र आ समन्ताद्गतं यत्सर्वमाहृतम् आनीतं वीराणां भूषणं यदुराजायोग्रसेनाय प्रादिशत्समर्पितवान् ॥ ८९ ॥

मु ॥ प्रभुः कृष्णः आयोधनं रणस्थलं तत आगतं प्राप्तं लब्धमित्यर्थः, आहृतमानीतञ्च यद्वित्तं वीरभूषणं वीराणामाभरणानि च तत्सर्वं यदुराजायोग्रसेनाय प्रादिशदित्यन्वयः ॥ ८९ ॥

मु ॥ तृतीये मासीत्यादि ॥ इतस्ततश्च पुनर्बलमेलनार्थं मासद्वयं गमयित्वा तृतीये मासि प्राप्ते सतीत्यर्थः,बार्हद्रथो जरासन्धः पूर्वपराभवं पूर्वं कृष्णेन कृतमवमानं स्मरन्

१. कौतुकान्नद्धतोरणम्, मु. भा. प्र. पा ॥

*'तृतीये मासि' इत्यारभ्य 'हलायुधो मागधकांशवाहन' इत्यन्तास्त्रयस्त्रिंशच्छ्लोकाः, मु. भा. प्रकाशिकानुसारिणः ; कोशान्तरे च नोपलभ्यन्ते, तत्रैवाध्यायसमाप्तिश्च, अतः पुनरध्यायसङ्ख्याभेदोऽवगन्तव्यः॥

समत्स्यान्मालवांश्चेदीन्कुरुपाञ्चालकेरलान् ।
कुलिन्दकुन्तलावन्तिकाशीगान्धारसृञ्जयान् ॥ ९१
कलिङ्गकेकयानान्ध्रान्दशार्णान्वङ्गसैन्धवान् ।
माद्रांस्त्रिगर्तान्सौवीरान्पार्वतेयांश्च सर्वशः ॥ ९२
आहूयाक्षौहिणिगणैस्त्रयोविंशतिभिर्युतः। समागधानतिक्रम्यपश्चिमाभिमुखोययौ ॥
आकर्षन्निवभूपालान्गजाश्वरथवल्लभान्।आगत्यमधुरांरोद्धुं प्राविशद्यमुनातटे ॥ ९४
स्कन्धावारेणमहताराजभिर्बहुभिर्वृतः। उपगीयमानोन्यरमत्सूतमागधवन्दिभिः॥९५
तदाकर्ण्यरणोद्योगं मागधस्यबलीयसः । मन्त्रयामासशर्वर्यांकृष्णःसङ्कर्षणादिभिः॥
वसुदेवोद्धवाक्रूरशैनेयाहुकसारणैः ॥
एभिरालोच्यशर्वर्यांसम्यङ्निर्धारितक्रियः।उषस्यनुदितेसूर्येसमाहूयभटोत्तमान्॥ ९७
त्रिधाविभज्यगोविन्दःस्वसेनाश्चतुरङ्गिणीम्।न्ययोजयदमेयात्मामागधेन्द्रबलम्प्रति॥
संकर्षणश्चहार्दिक्यंगदंसारणमेवच । वामेन प्रेषयामास मार्गेण मधुसूदनः ॥ ९९
सात्यकिंविपृथुंचैवपृथुमुद्धवमेवच ! दक्षिणेनैवमार्गेण प्राहिणोत्सेनयासह॥ १००

---

अत एव सन्तप्यमानः कदनोद्यमं पुनर्युद्धोद्योगं चकार ॥ ९० ॥

मु ॥ सर्वान् भूपालानाहूयेति सामान्यत उक्त्वा तान् विविच्याह—सइत्यादिना ॥ पार्वतेयान् तत्तत्पर्वतवासिनः पुलिन्दादीनित्यर्थः,एवं सर्वश आहूय जरासन्धः मागधान् स्वदेशानतिक्रम्य पश्चिमाभिमुखः मधुरायाः स्वराष्ट्रात् पश्चिमत्वात् तदभिमुखो ययौ, आगत्य एवमेत्य यमुनातटे प्राविशदिति प्रवेशाधिकरणत्वविवक्षायां सप्तमी, यद्वा तटे इति द्वितीयाद्विवचनम् , उभयतटे प्राविशदित्यर्थः ॥ ९१ ॥ ९४ ॥

मु ॥ ९५ ॥

मु ॥ तदा प्रवेशकाल एव कृष्णः शर्वर्यां रात्र्यामेव सङ्कर्षणादिभिर्वसुदेवादिभिश्च मन्त्रयामास शत्रुविजयोपायप्रकारमालोचितवान् ॥ ९६ ॥

मु ॥ शर्वर्यामालोच्य परस्परमालोड्य सम्यगसन्दिग्धं निर्धारितक्रियः निश्चितकर्तव्यार्थः, प्रथमं बलनियोगकालमाह—उषसीति । अर्धोदयसूर्योऽपि कालः उषश्शब्दवाच्यो भवतीति तद्व्यवच्छेदार्थम् अनुदिते सूर्यइत्युक्तम् , भटोत्तमान् समानीय प्रथमं प्रसिद्धान् भटश्रेष्ठानानीय ततश्चतुरङ्गिणीं सेनां त्रिधा विभज्य त्रिस्कन्धतया विभागं कृत्वा मागधेन्द्रबलं प्रति न्ययोजयत् नियुक्तवान् , अमेयात्मा इयत्तया मातुं परिच्छेत्तुम् अशक्यस्वरूपः अत एव स्वयमेकत्र स्थितोऽपि सर्वत्र स्वशक्त्यवष्टम्भेन निर्भीकां सेनां युक्तवानिति ॥ ९७ ॥ ९८ ॥

मु ॥ अथ तत्तन्मार्गेण योधनियोगक्रममाह—सङ्कर्षणमित्यादिना ॥ वामेन मार्गेण मगधराजस्य वामभागमार्गेण सङ्कर्षणादीन् प्रेषयामास, दक्षिणेन मार्गेण सात्यक्यादीन् प्राहिणोत् प्रयुक्तवान् , सेनया सहेत्युभयत्रान्वयः ॥ ९९ ॥ १०० ॥

स्वयंकतिपयैर्युक्तोरथैःकमललोचनः। अग्रेमगधराजस्यप्रविवेशमहद्बलम्॥ १०१
सासेनाबहुनागाश्वरथपादातसङ्कुला। प्रसुप्तायमुनातीरेविस्रब्धारमतेसुखम्॥ १०२
उदयाद्रिंसमारोहत्यर्केतमसिनश्यति। नीडस्थेष्वेवकूजत्सुविहगेषुततस्ततः॥ १०३
विकसत्सुसरोजेषुगायत्स्वलिकुलेषुच। प्रविवेशबलंभीमंमागधेन्द्रस्यदुर्जयम्॥ १०४
हयाश्चाबद्धपल्याणाःश्रेणीबद्धाःसमन्ततः। कुञ्जराश्चतदाराजन्ननारोपितपञ्जराः॥
अनादत्तप्रहरणाभटाश्चाबद्धमूर्धजाः। अप्रविष्टात्तवर्माणस्तदानारूढवाहनाः॥ १०६
रथाश्चाबद्धतुरगास्सर्वतोनुद्धतध्वजाः। सेनायांमागधेन्द्रस्यप्रवेशेपीतवाससः॥ १०७
त्रिदिक्ष्वापतितंसैन्यंदृष्ट्वातद्राजमण्डलम्। इतिकर्तव्यतामूढंविभ्रान्तंसमपद्यत॥ १०८
केचिद्भीतास्समापेतुर्भयात्केचिच्चदुद्रुवुः। केचिदात्तप्रहरणास्त्वभिसस्थुररीन्रणे १०९
केचिद्विभिन्नवर्माणश्छिन्नपादोरुबाहवः।रिपूनेवाभ्यवर्तन्तक्रोधोद्वृत्तारुणेक्षणाः ११०
केचिद्धयानपल्याणानारुह्यारूढविक्रमाः।मर्दयन्तोरिपून्युद्धेविमलंलेभिरेयशः १११

मु ॥ स्वयमिति ॥ कमललोचनः पुण्डरीकाक्षः कतिपयैर्योधैः युक्तः मगधराजस्याग्रे महद्बलं पुरोवर्ति महासैन्यं प्रविवेश ॥ १०१ ॥

मु ॥ तदानीं तत्सेनावृत्तिप्रकारमाह – सेति ॥ पादातं पदातिसमूहः बहुभिर्नागैरश्वैः रथैः पादातैश्च सङ्कुला सा सेना यमुनातीरे प्रयुक्ता तत्रतत्र विश्रम्य स्थिता विस्रब्धा पराभेद्यताभिमानजनितविश्वासयुक्तेत्यर्थः, अतएव सुखं रमतइति ॥ १०२ ॥

मु ॥ अथ हरेः मागधबलप्रवेशकालं तात्कालिकतत्तद्धर्मैर्विशिंषन्नाह —उदयाद्रिमित्यादिना ॥ विहङ्गेषु नीडस्थेषु कुलायस्थितेष्वेव ततस्ततः तत्रतत्र वृक्षेष्वित्यर्थः, कूजत्सु सत्सु मगधेन्द्रस्य बलं कमललोचनः प्रविवेशेति तत्कालोचिततत्तद्धर्मवर्णनापूर्वकमत्र प्रवेशकथनान्न पौनरुक्त्यप्रसङ्गः ॥ १०३ ॥ १०४ ॥

मु ॥ तदानीं तत्सेनावृत्तिप्रकारमाह—हया इत्यादिना ॥ अबद्धपल्याणाः अनारोपितपल्याणाः हयाः श्रेणीबद्धाः श्रेण्याकारेण बद्धा एव स्थिता इति सर्वत्र शेषः, कुञ्जराश्च अनारोपितपञ्जराः अत्र पञ्जरशब्देन गजारूढयन्त्राणामावारकतया काष्ठनिर्मिताश्चित्रवस्त्रालङ्कृताः पताकाङ्किता यन्त्रविशेषा उच्यन्ते,अनारोपिताः येषु ते भटाश्च अनादत्तप्रहरणाः अगृहीतायुधाः अबद्धमूर्धजाः असंयमितकेशाः अप्रविष्टात्तवर्माणः वर्माणि गृहीतकवचानि तान्यप्रविष्टानि यैस्ते तेषां देहपिधायकतया देहानां तदन्तःप्रविष्टतया चैव मुक्तिः, तथाच कवचधारणरहिता इत्यर्थः, मगधेन्द्रस्य सेनायां पीतवाससः प्रवेशे सति तस्मिन् कालइत्यर्थः, हयादयः उक्तरीत्या स्थिता इति सन्दर्भार्थः॥ १०५ ॥ १०७ ॥

मु ॥ त्रिदिक्ष्विति ॥ आपतितम् आगतं सैन्यम् इतिकर्तव्यतामूढम् इतःपरमस्माभिरेवमेवं कर्तव्यमिति कार्यानिश्चयमूढं समपद्यत अभूत् ॥ १०८ ॥

मु ॥ ततः किमासीदित्यत्राह—केचिदिति ॥ भीताः समापेतुः भूमावपतन् ; किञ्च दुद्रुवुः दिशः प्रत्यधावन् , केचिन्मानधना इत्यर्थः,आत्तप्रहरणाः गृहीतायुधाः अरीनभितस्थुः अभिमुखमधावन् , केषाञ्चिद्रणोन्मत्तवृत्तिमाह—केचित् भिन्नवर्माण इति ।

राजानस्सहसोद्धुध्यदृष्ट्वासैकतसंचयम्।विनारणोपस्करणंचक्रुःकेचनसंयुगम्॥११२
केचिद्विसृज्यशिबिरंविविशुर्गहनंवनम्। केचिन्मागधमासाद्यविजयस्वेतिचाब्रुवन्॥
रथेनैकेनगोविन्दःप्रविश्यरिपुवाहिनीम्। जघानसुबहून्वीरान्सायुधान्सरणोद्यमान्
संकर्षणोऽपिबलवान्महत्यासेनयावृतः। बलंप्रविश्यवामेनमर्दयामासमागधम्॥११५
शैनेयोऽपिमहाबाहुर्दक्षिणेनैववर्त्मना। प्रविश्यचतुरङ्गेणसैन्येनमहताऽऽर्दयत्॥११६
एवंसाव्यथितासेनामागधेन्द्राभिरक्षिता।दुद्रावद्राव्यमाणावैक्षणमात्रेदिशोदश ११७
ततोऽनुद्रुत्यवार्ष्णेयस्सात्यकिःपञ्चयोजनम्।निहत्यमागधंसैन्यंजयीव्यावर्तताहवात्

मतङ्गजान्पर्वतसन्निभान्बहून् निगृह्यसोपस्करतोमराङ्कुशान्।
रथांश्चशस्त्रध्वजवाजिसंयुतान् निनायकृष्णोमधुरांमनोरमाम्॥ ११९
छत्राणिहेमाम्बररत्नमिश्रितान्यनेकवालव्यजनानिमाधवः।

---

एवंविधा अपि रिपूनेवाभ्यधावन्तेति साहसविक्रमातिशयोक्तिः, केचिद्धयानिति। आरूढविक्रमाः यशएव वीरैर्लभ्यमित्यवलम्बितपराक्रमाइत्यर्थः, अपल्याणान् सादिनां दृढस्थितिहेतुभूतपल्याणरहितानित्यर्थः, हयानारुह्य विमलं यशो लेभिरे॥ १०९॥ १११॥

मु॥ राजानइति॥ रणोपस्करणं विना रणसाधनं विनापि सैकतसञ्चयं दृष्ट्वा बुध्वा एतद्विकिरणेन प्रतिहतदृष्टयः शत्रवो योद्धुं न प्रभवेयुरिति ज्ञात्वेत्यर्थः, संयुगं चक्रुः सिकतोत्क्षेपणैरित्यर्थः॥ ११२॥

मु॥ केचिदिति शिबिरं विसृज्य सेनानिवेशं त्यक्त्वा गहनम् इतरदुष्प्रवेशं वनं विविशुः॥ ११३॥

मु॥ अथ श्रीकृष्णबलभद्रसात्यकीनां क्रमेण शत्रुविजयप्रकारमाह—रथेनेत्यादिना॥ रथेन सरणोद्यमान् रणोद्योगयुक्तान्॥ ११४॥

मु॥ वामेन वामभागेन बलं प्रविश्य मागधं मर्दयामास॥ ११५॥

मु॥ शैनेयोऽपि सात्यकिश्च प्रविश्य शत्रुमण्डलम् आर्दयत् अपीडयत्॥ ११६॥

मु॥ ततः किमत आह—एवमिति॥ क्षणमात्रे क्षणमात्रेण एवं व्यथिता पीडिता सा सेना द्राव्यमाणा शत्रुभिरनुसृत्य धावनेन प्रेर्यमाणेत्यर्थः, दश दिशः प्रति दुद्राव सव्यथमधावत्॥ ११७॥

मु॥ ततइति॥ वार्ष्णेयः वृष्णिकुलप्रसूतः सात्यकिः मागधं मगधसंबन्धि मगधदेशादागतं वा सैन्यं पञ्चयोजनं योजनपञ्चकम् अनुद्रुत्य अनुद्राव्य निहत्य संहृत्य आहवात् व्यावर्तत न्यवर्तत॥ ११८॥

मु॥ अथ बलकेशवाभ्यां शत्रुजयेन सङ्गृहीतानि वस्तून्याह—मतङ्गजानित्यादि॥ उपस्करैः पल्याणकवचादिभिः तोमरैः आयुधविशेषैः अङ्कुशैश्च सहितान् मतङ्गजांश्च शस्त्रादिसंयुतान् रथांश्च निगृह्य गृहीत्वा मधुरां निनाय॥ ११९॥

किरीटपट्टाङ्गदकुण्डलांशुकान्यवापकृष्णोऽगणितानिसंयुगे ॥ १२०

*हलायुधोमागधकोशवाहनव्रजावरोधायुधभूषणादिकम् ।

नियोजितःकंसभिदारणार्जितंयदुप्रवीरायधनंन्यवेदयत् ॥ १२१

---

एवं सप्तदशकृत्वस्तावत्यक्षौहिणीबलः।युयुधे मागधो राजा यदुभिः कृष्णपालितैः॥
अक्षिण्वंस्तद्बलं सर्वं वृष्णयःकृष्णतेजसा।हतेषु स्वेष्वनीकेषु त्यक्तोऽयादरिभिर्नृपः॥
[1]अथाष्टादशमेयुद्धआगामिनितदन्तरा।नारदप्रेषितोवीरोयवनः[2]प्रत्यदृश्यत॥ १२४

---

मु ॥ छत्राणीति ॥ कृष्णः वालव्यजनानि चामराणि पट्टानि वस्त्रविशेषाः कौशेयादयः अंशुकानि कार्पासतूलमयतन्तुनिर्मितानि एतान्यगणितानि असङ्ख्येयानि संयुगे अवाप अलभत ॥ १२० ॥

मु॥ हलायुधइति॥मगधस्य कोशो धनं वाहनव्रजाः रथाश्वादयः अवरोधा अन्तःपुरस्त्रियः रणे आर्जितं कंसभिदा कृष्णेन नियोजितं समर्पयेत्याज्ञापितं धनं पूर्वोक्तप्रकारं वस्तुजातं यदुप्रवीरायोग्रसेनाय न्यवेदयत् समर्पितवानिति ॥ १२१ ॥

*इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम्
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

वी ॥ एवमिति ॥ इत्थं पुनःपुनः तावत्यस्त्रयोविंशतिसङ्ख्याका अक्षोहिण्यो बलं यस्य तथाभूतः सप्तदशवारं कृष्णपालितैर्यदुभिस्सह युयुधे ॥ १२२ ॥

मु ॥ प ॥ क्रियासमभिहारेण ये विराध्यन्ति शार्ङ्गिणम् ।
स तान्नसहते पापानित्यत्राभाणि मौनिना॥

हेलयाविश्वनिर्माणचतुरस्यमहेशितुः । किञ्चित्रमितरत्कृत्यमिति चासूचिमौनिना ॥

एवमित्यादि ॥ तावत्यक्षौहिणीबलः तावत्यपजये वर्तमानेऽपीत्यर्थः, अक्षौहिणीबलं यस्य सः'तावदक्षौहिणीयुतः'इति पाठे प्रथमं यावदक्षौहिणीभिस्सहागतः एवं सप्तदशकृत्वोऽपि तावदक्षौहिणीयुत एव समागत इत्यर्थः, एवं सप्तदशकृत्वः सप्तदशवारान् यदुभिर्युयुधे, एवमपि यदूनां शत्रुविजयं तावच्छक्तिनिर्भीकताहेतुगर्भविशेषणमाह—कृष्णपालितैरिति ॥ १२२ ॥

वी ॥ अक्षिण्वन्निति ॥ कृष्णतेजसा हेतुभूतेन वृष्णयो यदवस्तस्य जरासन्धस्य बलं सर्वमक्षिण्वन् नाशितवन्तः, इत्थं सर्वेष्वनीकेषु हतेषु सत्सु नृपो जरासुतः अरिभिः रामादिभिस्त्यक्तो जगाम ॥ १२३ ॥

मु ॥ तदेव स्फुटयति—अक्षिण्वन्निति ॥ तद्बलं क्षयं निन्युरित्यर्थः, ततोऽसौ किमासीत्तदाह—हतेष्विति । अरिभिः त्यक्तः अयात् गतः ॥ १२३ ॥

वी ॥ अथाष्टादशमे युद्धे आगामिनि भाविनि सति तदन्तरा तन्मध्ये अष्टादशस-

*६०८. पुटे, द्रष्टव्यम् ॥ १. अष्टादशमसंग्राम. मु. भा. प्र. पा ॥ २. प्रत्यपद्यत. मु. भा. प्र. पा.

रुरोध मधुरामेत्य तिसृभिर्म्लेच्छकोटिभिः ।
नृलोके चाप्रतिद्वन्द्वो वृष्णीञ्श्रुत्वाऽऽत्मसम्मितान् ॥ १२५
तं दृष्ट्वाऽचिन्तयत्कृष्णस्सङ्कर्षणसहायवान्।अहोयदूनांवृजिनंप्राप्तंह्युभयतोमहत् १२६
यवनोऽयं निरुन्धेऽस्मानद्य तावन्महाबलः ।
मागधोऽप्यद्य वा श्वो वा परश्वो वाऽऽगमिष्यति ॥ १२७
आवयोर्युद्ध्यतोरस्ययद्यागन्ताजरासुतः।बन्धून्हनिष्यत्यथवानेष्यतेस्वपुरंबली १२८

ङ्ग्रामात्पूर्वमित्यर्थः, नारदेन प्रेषितः कालयवनाख्यो वीरः प्रत्यदृश्यत, माधुरैर्जनैरिति शेषः ॥ १२४ ॥

मु॥ अष्टादशमे सङ्ग्रामे आगामिनि भाविनि सति तदन्तरा तन्मध्ये कालयवनः प्रत्यपद्यत प्राप्तः, तदागमने हेतुमाह—नारदप्रेषित इति। भूभारनिवर्तनार्थमवतीर्णेन भगवता सह तद्भारभूतदुष्टलोकस्य केनचिद्व्याजेन वैरमुत्पाद्य तेन तत्संहरणकारणस्य तदन्तरङ्गभक्तनारदप्रयोजनत्वात् नारदप्रेषित इत्युक्तिः ॥ १२४ ॥

वी ॥ रुरोधेति ॥ मनुष्यलोके न विद्यते प्रतिद्वन्द्वः तुल्यबलो यस्य तथाभूतः कालयवनः यदूंस्त्वात्मना तुल्यबलान् श्रुत्वा नारदमुखादिति शेषः, तिसृभिः म्लेच्छानां कोटिभिस्सहागत्य मधुरां सर्वतो निरुद्धवान् ॥ १२५ ॥

मु ॥ तिसृभिः म्लेच्छकोटिभिस्सह एत्यागत्य मधुरां रुरोध, एवमागमने तस्याशयमाह—नृलोकइति । अप्रतिद्वन्द्वः एतावत्पर्यन्तं स्वतुल्यप्रतियोधरहितः वृष्णीनात्मसम्मितान् तुल्यान् श्रुत्वा एत्य मधुरां रुरोधेत्यन्वयः ॥ १२५ ॥

वी ॥ तमिति॥ तं कालयवनं दृष्ट्वा चिन्तयामास, चिन्तामेवाह—अहो इति सार्धद्वयेन । उभयतो यवनाज्जरासन्धाच्च वृजिनं दुःखं महद्यदूनां प्राप्तम् ॥ १२६ ॥

मु ॥ ततः हरिः किमकरोत्तदाह—तमिति ॥ चिन्ताप्रकारमाह—अहो इति । उभयतः कालयवनाज्जरासन्धाच्च यदूनां महद्वृजिनं दुःखं प्राप्तं हीति ॥ १२६ ॥

वी॥ तदेवाह—यवन इति॥ महद्बलं यस्य स यवनोऽधुना अस्मान्निरुन्धे निरुणद्धि, अद्यास्मिन्नहनि वा श्वः परस्मिन्नहनि वा परश्वः तदनन्तरेऽहनि वा मागधोऽप्यागमिष्यति ॥ १२७ ॥

मु ॥ तदाह द्वयेन—यवन इत्यादिना॥ अस्मान्निरुन्धे रुणद्धि, किञ्च मागधो जरासन्धोऽपि आगमिष्यति ॥ १२७ ॥

वी ॥ आवयोर्यवनस्य च मम च मिथो युध्यतोस्सतोः जरासुतो यद्यागमिष्यति, स तर्ह्यस्मद्बन्धून् यदून् हनिष्यति, अथवा तान् स्वपुरं प्रति नेष्यति प्रापयिष्यति, यतः स बली ॥ १२८ ॥

मु ॥ तत्संहारकयोरावयोर्जागरूकत्वात् कुतस्तेषां भयमित्यत्राह—आवयोरिति ॥ क्रोधाभिनिवेशेन सर्वं विस्मृत्य शत्रुसंहारलम्पटयोस्सतोरित्यर्थः, जरासुतः अस्य पुरस्य यद्यागन्ता पुरं प्रति यद्यागमिष्यतीत्यर्थः, यद्वा अस्येति तृतीयार्थे षष्ठी, अस्य अनेनावयोर्युध्यतोस्सतोरिति, बन्धून् हनिष्यति, मारयिष्यति, अथवा स्वपुरं नेष्यते प्राप-

तस्माद्द्य विधास्यामो दुर्गं द्विपददुर्गमम्। तत्र ज्ञातीन्समाधाय यवनं मारयामहे॥ १२९
इति सम्मन्त्र्य भगवान्दुर्गं द्वादशयोजनम्। अन्तस्समुद्रं नगरं कृत्स्नाद्भुतमचीकरत्॥१३०
दृश्यते यत्र हि त्वाष्ट्रं विज्ञानं शिल्पनैपुणम्। रथ्याचत्वरवीथीभिर्यथावास्तु विनिर्मितम्
सुरद्रुमलतोद्यानविचित्रोपवनान्वितम्। हेमशृङ्गैर्दिविस्पृग्भिः स्फाटिकाट्टालगोपुरैः॥

---

यिष्यति, उभयथाप्यभिमानहानिरेवेति ॥ १२८ ॥

वी ॥ अथ विचार्य निश्चितमाह—द्विपदैर्मनुष्यैः दुःखेनापि गन्तुमशक्यं दुर्गं जलदुर्गं विधास्यामः करिष्यामः, तत्र दुर्गे ज्ञातीन् यदून् समाधाय निधाय यवनं मारयामहे घातयामहे ॥ १२९ ॥

मु ॥ तर्ह्यद्य किं विधेयमित्यत्राह—तस्मादिति ॥ द्विपदैः मनुष्यैः दुर्गमं गन्तुमशक्यं दुर्गं विधास्यामः करिष्यामः, ततः कर्तव्यमाह—तत्रेति ॥ १२९ ॥

वी ॥ इत्थं सम्मन्त्र्य विचार्य निश्चित्य भगवान् समुद्रमध्ये दुर्गं तत्र नगरं च अचीकरत्कारयामास, विश्वकर्मणेति शेषः, नगरं विशिनष्टि—द्वादशयोजनविस्तीर्णं कृत्स्नाद्भुतं सर्वाश्चर्यमयम् ॥ १३० ॥

मु ॥ इति सम्मन्त्र्य सम्यगालोच्य कृष्णः अन्तस्समुद्रं समुद्रमध्ये अद्भुतमाश्चर्यावहं नगरमचीकरत्, विश्वकर्मणेति शेषः, कृत्स्नाद्भुतमिति पाठे लोके यान्यद्भुतवस्तूनि तत्प्रचुरमित्यर्थः, अतएव तत्र पारिजातादिसम्पत्तिश्च ॥ १३० ॥

वी ॥ यत्र नगरे त्वाष्ट्रं विश्वकर्मणस्सम्बन्धि विज्ञानसूचकं क्रियाकौशलं दृश्यते, तदाह सार्धैस्त्रिभिः—रथ्येति ॥ रथ्या राजमार्गाः पुरतः वीथ्यः उपमार्गाः पुरतः पश्चिमतः उभयतोऽपि चत्वराणि अङ्गणानि तन्मध्ये कोष्ठाः ततोऽप्यन्तस्स्वर्णभवनानि तदुपरि स्फटिकाट्टालकाः तदुपरि हेमकुम्भा इतिबहुभूमिकम्, यथावास्तु गृहादिनिर्माणस्थानम् अनतिक्रम्य निर्मितम् ॥ १३१ ॥

मु ॥ यत्र पुरे शिल्पस्य निर्माणक्रियायां नैपुणं कौशल्यं यस्मात्तत् त्वाष्ट्रं त्वष्टुर्विश्वकर्मणः सम्बन्धः ज्ञायते, अनेन शिल्पे तत्तद्रचनाविशेषा इति विज्ञानं शिल्पविद्या दृश्यते, तदेव प्रपञ्चयति चतुर्भिः—रथ्येत्यादि ॥ रथ्याः राजमार्गाः पुरतः पश्चिमतो वीथ्यः उपमार्गाः उभयतोऽपि चत्वराण्यङ्गणानीति क्रमोऽपि व्युत्क्रमेणोक्तः,एताभिः यथावास्तु विनिर्मितमिति, वास्तु नाम शिल्पशास्त्रोक्तं पूर्वपश्चिमादितत्तद्गृहनिर्माणानुकूलस्थानं तदनतिक्रम्य निर्मितमित्यर्थः,अत्र पुरतो रथ्याः, पश्चिमतो वीथ्यः, उभयतोऽपि चत्वराणि, तन्मध्ये कोष्ठाः, तदन्तस्स्वर्णगृहाः,तदुपर्यट्टालकाः,तदुपरि हेमकुम्भाइति बहुभूमिको भवनक्रमः ॥ १३१ ॥

वी ॥ सुराणां द्रुमाः लताश्च येषु तानि उद्यानानि विचित्राणि उपवनानि च तैरन्वितं हेममयानि शृङ्गाणि येषां तैः दिविस्पृग्भिरत्युच्चैः स्फाटिकाट्टालका उपरिभूमिकाः गोपुराणि चत्वराणि तैः ॥ १३२ ॥

मु॥ सुरद्रुमाः देवद्रुमाः लताश्च येषु तानि उद्यानानि राज्ञां प्रमदावनानि विचित्रा-

श्रीवत्सवक्षसम्भ्राजत्कौस्तुभामुक्तकन्धरम्।पृथुदीर्घचतुर्बाहुं नवकञ्जारुणेक्षणम्॥२
नित्यप्रमुदितंश्रीमत्सुकपोलंशुचिस्मितम्।मुखारविन्दंबिभ्राणंस्फुरन्मकरकुण्डलम् ३

वासुदेवोह्ययमितिपुमाञ्श्रीवत्सलाञ्छनः।
चतुर्भुजोऽरविन्दाक्षोवनमाल्यतिसुन्दरः॥ ४

लक्षणैर्नारदप्रोक्तैर्नान्योभवितुमर्हति।निरायुधश्चलन्पद्भ्यांयोत्स्येऽनेननिरायुधः॥५
इतिनिश्चित्ययवनःप्राद्रवन्तंपराङ्मुखम्।अन्वधावज्जिघृक्षुस्तंदुरापमपियोगिनाम्॥६

---

मीति निश्चित्य पराङ्मुखं प्राद्रवन्तम् अन्वधावदित्यन्वयः, तं कथम्भूतम्? उज्जिहान-मुद्गच्छन्तम् उडुपं चन्द्रमिव स्थितम् अतीव दर्शनीयं पीते कौशेये वाससी यस्य श्री-वत्सो वक्षसि यस्य भ्राजता कौस्तुभेनामुक्ता बद्धा अलङ्कृतेति यावत्, सा ग्रीवा यस्य पृथवः पीनाः दीर्घाश्चत्वारो बाहवो यस्य नवकञ्जे इवारुणे ईक्षणे यस्य तं नित्यप्रमुदि-तमित्यादिमुखारविन्दबिशेषणम्, श्रीमत् सौन्दर्यसंपद्वत् शोभनौ कपोलौ यस्मिन् शुचि विशुद्धं स्मितं यस्मिन् स्फुरन्ती मकराकारे कुण्डले यस्मिन् तथाभूतं मुखारविन्दं बि-भ्राणं श्रीवत्सो लाञ्छनं चिह्नं यस्य चत्वारो भुजा यस्य अरविन्दे इवाक्षिणी यस्य वन-मालाऽस्यास्तीति तथा व्रीह्यादित्वान्मत्वर्थीय इनिः, एवंविधैर्नारदप्रोक्तैः लिङ्गैर्वासुदेव एवायमित्यन्वयः॥ १॥ २॥ ३॥ ४॥ ५॥

मु॥ प्र॥ भक्तप्रभावं लोकेभ्यः स्फुटीकुर्वञ्जनार्दनः।
तञ्चात्मदर्शनाद्धन्यं कुर्यादित्यत्र कथ्यते॥
अनन्यसाधारणदिव्यचिह्नाच्चित्रात्मभोग्याकृतिदर्शनेन।
हरिर्द्विषामप्यनुरञ्जकस्स्यादित्यप्यसूच्यत्र तपोधनेन॥

तमित्यादि॥ यदा गार्ग्यः स्यालेन षण्ड इत्युक्तः, तदा यादवैश्चोपहसिते सति क्रुद्धस्सन् श्रीकण्ठं तपसा प्रसाद्य यदुभयङ्करं सुतं मे देहीति वरं लब्धवान्,ततश्च यवनेन्द्रेण स्वक्षेत्रे पुत्रोत्पादनाय प्रार्थितो गार्ग्यः कालयवनमजीजनत्, तथाच भगवानेवंविधप्रयत्नेन निह-तवानिति पौराणिकी प्रसिद्धिरवगन्तव्या, विनिष्क्रान्तं पुरद्वारान्निर्गतम् उज्जिहानं उ-द्यन्तमुडुपं चन्द्रमिव स्थितम्॥ १॥

मु॥ भ्राजता जाज्वल्यमानेन कौस्तुभेन आमुक्ता अलङ्कृता कन्धरा यस्य तम्॥

मु॥ नित्यप्रमुदितमित्यादि मुखारविन्दविशेषणं स्फुटार्थकम्, एवंविधं मुखारवि-न्दं बिभ्राणं तं विलोक्य॥ ३॥

मु॥ श्रीवत्सलाञ्छनत्वादिविशेषणविशिष्टोऽयं पुमान् नारदप्रोक्तैः लक्षणैः परि-दृश्यमानैरित्यर्थः, अयं वासुदेव एव नान्यो भवितुमर्हति, अयं निरायुधस्सन्नेव पद्भ्यां चलन् पादचारी वर्तत इति शेषः, अनेन अहमपीति शेषः, निरायुधः पद्भ्यां चलन्नेव योत्स्ये इत्यन्वयः, युद्धं करिष्यामीत्यर्थः॥ ४॥ ५॥

वी॥ इतीति॥ इत्थं निश्चित्य यवनः पलायमानं पराङ्मुखं च भगवन्तं ग्रहीतुमि-च्छुः अन्वधावत्, तस्य दुष्प्रापतां वक्तुं विशिनष्टि—योगिनामपि दुरापं योगविशुद्ध-मनसामपि दुर्ग्रहम्॥ ६॥

हस्तप्राप्तमिवात्मानंहरिणासपदेपदे । नीतोदर्शयतादूरंयवनेशोऽद्रिकन्दरम् ॥ ७
पलायनंयदुकुलेजातस्यतवनोचितम् । इतिक्षिपन्ननुगतोनैनंप्रापाहताशुभः ॥ ८
एवंक्षिप्तोऽपिभगवान्प्राविशद्गिरिकन्दरम्।सोऽपिप्रविष्टस्तत्रान्यंशयानंददृशेनरम् ॥
नन्वसौदूरमानीयशेतेमामिहसाधुवत्।इतिमत्वाऽच्युतंमूढस्तम्पदासमताडयत् ॥१०
सउत्थायचिरंसुप्तश्शनैरुन्मील्यलोचने । दिशोविलोकयन्पार्श्वेतमद्राक्षीदवस्थितम्॥
सतावत्तस्यरुष्टस्यदृष्टिपातेनभारत । देहजेनाग्निनादग्धोभस्मसादभवत्क्षणात्॥१२

---

मु॥ इति निश्चित्य पराङ्मुखं सन्तमेव प्राद्रवन्तं धावन्तं योगिनामपि दुरापम्, लोके वेगवत्सु मनोधिकं वेगवन्नास्ति, तथाच योगिमनसामपि दुष्प्रापमित्यर्थः, तं जिघृक्षुस्सन् ग्रहीतुमिच्छन् अन्वधावत् अनुसृत्य प्राद्रवत् ॥ ६ ॥

वी ॥ हस्तेति ॥ प्रतिपदम् आत्मानं हस्तप्राप्तमिव दर्शयता भगवता दूरं नीतस्स यवनाधीशोऽन्ततोऽद्रिकन्दरं प्रापितः ॥ ७ ॥

मु ॥ ततः किमत आह—हस्तेति ॥ आत्मानं हस्तप्राप्तमिव पदेपदे दर्शयता स्वग्रहणाशां जनयतेत्यर्थः, हरिणा यवनेशः अद्रिकन्दरं प्रति दूरं नीत इत्यन्वयः ॥ ७ ॥

वी ॥ यदुकुले जातस्य तव पलायनमनुचितमित्येवं क्षिपन्नभिभवन्नाशु गतोऽपि यवन एनं भगवन्तं न प्राप, तत्र हेतुं वदन्विशिनष्टि—अहताशुभः अक्षीणदुष्कृतः॥ ८॥

मु ॥ ततः किमत आह—पलायनमिति ॥ इति क्षिपन् आक्षिपन् अनुसृतोऽपि अनुसृत्य गच्छन्नपि एनं भगवन्तं न प्राप, तत्र हेतुगर्भविशेषणम्—अहताशुभ इति ॥ अशुभं तत्प्राप्तिप्रतिबन्धकपापं तत् अहतम् अनष्टं यस्य सः ॥ ८ ॥

वी ॥ भगवांस्त्वित्थं क्षिप्तोऽपि तूष्णीं गिरिकन्दरं प्राविशत् , स तु यवनस्तत्र गिरिकन्दरे प्रविष्टस्तत्रान्यं शयानं कञ्चित्पुरुषमद्राक्षीत् ॥ ९ ॥

मु ॥ एवं क्षिप्तोऽपि तेनानुद्रुतोऽपि गिरिकन्दरं न्यविशत्, स यवनोऽपि प्रविष्टस्सन् तत्र गुहायाम् अन्यं नरं ददृशे नतु हरिमित्यर्थः ॥ ९ ॥

वी ॥ शयानं पुरुषमसौ वासुदेवो मामित्थं दूरमानीय साधुवदधुना तूष्णीं शेते, नूनमसौ कृष्ण एवेति मूढस्सन्नच्युतमेव मत्वा तं पदा पादेनाताडयत् ॥ १० ॥

मु ॥ असौ हरिः मां दूरमानीय इह गुहायां साधुवददुष्ट इव शेते इति मूढोऽसौ तं शयानं पुरुषमच्युतमेव मत्वा पदा समताडयत् ॥ १० ॥

वी॥ ताडितः पुरुषः उत्थाय चिरं सुप्तः हेतुगर्भमिदम् , तस्माच्छनैर्लोचने उन्मील्य दिशोऽवलोकयन् पार्श्वे स्थितं तं यवनं ददर्श ॥ ११ ॥

मु ॥ चिरं सुप्तः पुरुषः तमद्राक्षीत् अपश्यत् ॥ ११ ॥

वी ॥ हे भारत स यवनः रुष्टस्य क्रुद्धस्य तस्य पुंसः दृष्टिपातेन सन्दीप्तो यस्स्वदेहजोऽग्निः, तेन तावत्तदैव क्षणाद्भस्मीबभूव ॥ १२ ॥

मु ॥ स यवनस्तावत् सद्यएव रुष्टस्य क्रुद्धस्य तस्य दृष्टिपातेन द्वारभूतेन हेतुना देहजेन अग्निना करणेन दग्धस्सन् भस्मसात् भस्ममयोऽभवत् , यद्वा तस्य दृष्टिपातेन दुष्टे तस्मिन् प्रसृतदृष्ट्या योऽग्निरान्तरः संदीप्तः, तेन स्वदेहजेनैवाग्निना दग्ध इति॥१२॥

राजोवाच—

कोनामसपुमान्ब्रह्मन्कस्यकिंवीर्यएवच। कस्माद्गुहांगतश्शिश्ये[1] किंतेजायवनार्दनः॥

श्रीशुक उवाच—

स इक्ष्वाकुकुलेजातोमान्धातृतनयोमहान्।मुचुकुन्दइतिख्यातोब्रह्मण्यस्सत्यसङ्गरः॥
सयाचितस्सुरगणैरिन्द्राद्यैरात्मरक्षणे। असुरेभ्यःपरित्रस्तैस्तद्रक्षांसोऽकरोच्चिरम्॥
लब्ध्वागुहंतेस्वःपालंमुचुकुन्दमथाब्रुवन्। राजन्विरमतांकृच्छ्राद्भवान्नःपरिपालनात्॥
नरलोकंपरित्यज्यराज्यंचहतकण्टकम्। अस्मान्पालयतोवीरकामास्तेसर्वउज्झिताः॥

वी ॥ तत्र शयानस्य पुरुषस्य कुलनामवीर्यशयनकारणादिबुभुत्सया पृच्छति राजा—को नामेति ॥ हे ब्रह्मन् स यवनार्दनो यवनस्य हन्ता शयानः को वा को नाम किं तस्य नामधेयमित्यर्थः, कस्य सम्बन्धी कस्य कुले जातः, किं कीदृशं वीर्यं यस्य सः, कस्मात्कारणाद्गुहां प्राप्तश्शेते स्म, किं कीदृशं तेजो यस्य तथाभूतः ॥ १३ ॥

मु ॥ अत्र सविस्तरमेतद्वृत्तान्तज्ञानार्थं परीक्षित् पृच्छति—राजोवाचेति ॥ यवनमर्दयति हिनस्तीति यवनार्दनः स पुमान् कोनाम कोवा, कस्य कस्य पुंसः वश्य इति शेषः, सम्बन्धसामान्ये षष्ठी, किंवीर्यः कीदृक् प्रभाववान् ,किंतेजः कस्य बीजं पुत्र इत्यर्थः, कस्मात् हेतोः शिश्ये अशयिष्ट ॥ १३ ॥

वी॥ तत्रोत्तरमाह मुनिः—सइति नवभिः॥ ब्रह्मणि ब्रह्मकुले साधुः ब्रह्मण्यः सत्यो धर्म्यः सङ्गरो युद्धं यस्य सः ॥ १४ ॥

मु॥ उत्तरमाह—सइति ॥ ब्रह्मण्यः ब्राह्मणेभ्यः साधुः सत्यः कुत्रापि पराजयरहिततया अविसंवादी सङ्गरो युद्धं यस्य सः सङ्गरशब्दस्य प्रतिज्ञार्थकत्वाच्च अमोघप्रतिज्ञ इत्यर्थः ॥ १४ ॥

वी ॥ सइति ॥ स च मुचुकुन्दः असुरेभ्यः भीतैरिन्द्राद्यैः देवैरात्मनः रक्षणे निमित्ते सहायत्वेन याचितश्चिरं तेषां रक्षामकरोत् ॥ १५ ॥

मु ॥ आत्मरक्षणाद्धेतोः इन्द्राद्यैः याचितः प्रार्थितः तद्रक्षामिन्द्रादिरक्षणमकरोत् ॥

वी ॥ तदा ते देवाः गुहं कार्तिकेयं स्वःपालं स्वर्गपालकं सेनान्यं लब्ध्वा अथ मुचुकुन्दमब्रुवन् ,उक्तिमेवाह—राजन्निति सार्धैश्चतुर्भिः। हे राजन् नोऽस्माकं परिपालनात्मकात्कृच्छ्राच्छ्रमाद्भवान्विरमतां विरामं प्राप्नोतु ॥ १६ ॥

मु ॥ ते देवाः गुहं सेनान्यं स्वःपालं स्वर्गपालकं लब्ध्वा मुचुकुन्दमब्रुवन्, तद्वचनप्रकारमाह—राजन्नित्यारभ्य भगवान्विष्णुरव्ययइत्यन्तेन। कृच्छ्रात् कष्टरूपात् नः परिपालनात् भवान् विरमतां निवर्तस्वेत्यर्थः ॥ १६ ॥

वी॥ हे वीर शत्रुरहितं राज्यं नरलोकं च त्यक्त्वा केवलमस्मान्पालयतस्ते कर्तरि शेषे षष्ठी, त्वया सर्वे कामा भोगाः उज्झितास्त्यक्ताः ॥ १७ ॥

मु ॥ तत्र हेतुमाह—नरलोकमिति ॥ सर्वभोगानुकूलं नरलोकश्च तत्रापि हतक-

१. किंतेजायवनार्दनः. मु. भा. प्र. पा ॥

सुतामहिष्योभवतो ज्ञातयोऽमात्यमन्त्रिणः।
प्रजाश्चतुल्यकालीयाः नाधुनासन्तिकालिताः॥ १८
कालोबलीयान्बलिनांभगवानीश्वरोऽव्ययः।प्रजाःकालयतेक्रीडन्पशुपालोयथापशून्॥
वरंवृणीष्वभद्रंते ऋतेकैवल्यमद्यनः। एकएवेश्वरस्तस्य भगवान्विष्णुरव्ययः॥ २०
एवमुक्तस्सवैदेवानभिवाद्यमहायशाः। अशयिष्टगुहाविष्टो निद्रयादेवदत्तया॥ २१

ण्टकं राज्यं च परित्यज्य अस्मान् पालयतः सर्वदा प्रयोजनान्तरवैमुख्येन शत्रुसंहारैकनिष्ठतयात्र वीरेति सम्बुद्धिः, ते त्वया सर्वे कामाः नरलोकराज्यप्रभृतमनोरथाः उज्झितास्त्यक्ताः गता इत्यर्थः॥ १७॥

वी॥ किंच तव सुतादयः त्वत्तुल्यकालीयाः प्रजाश्च कालिताः कालवशीकृताः अधुना न सन्ति, किन्तु कालवशं गताः मृता इति यावत्॥ १८॥

मु॥ सुता इति॥ किञ्च तुल्यकालीयाः सुतादयः कालिता विचारितास्सन्तः अधुना न सन्ति॥ १८॥

वी॥ कोऽसौ मत्तो बलीयान् कालो नामेति शङ्कायामाब्रह्मस्तम्बपर्यन्तकृत्स्नजगतः कालवश्यतां कालस्य बलीयस्त्वं च वक्तुं कालो नाम नेश्वरात्पृथग्भूतः, किन्तु कालशरीरक ईश्वर एव कालयतीत्याहुः—कालइति॥ कालः कालशरीरकः अव्ययः कालकृतनाशादिविकाररहितः ईश्वरस्सर्वनियन्ता भगवान्स्वयं क्रीडन्प्रजाः कालयते वशीकरोति, यथा पशुपालः पशून्वशीकरोति, तद्वत्॥ १९॥

मु॥ तदसम्भवे हेतुमाह—काल इति॥ ईश्वरः तस्यापि नियन्ता अतएवाव्ययः कालकृतपरिणामरहितो भगवान् प्रजाः कालयते तत्तत्कर्मानुगुणं देहान्तरलोकान्तरप्रापणेन इतस्ततश्चालयतीत्यर्थः, ईश्वरोवा किमर्थमेवं करोतीत्यत्राह—क्रीडन्निति। अस्या विभूतेस्तल्लीलार्थत्वादिति भावः, अत्रानुगुणदृष्टान्तमाह—पश्विति॥ १९॥

वी॥वरमिति॥ अतस्त्वमद्य नोऽस्मान् प्रति वरमभिमतं वरय, तर्हि मुक्तिं प्रयच्छतेत्यत्राहुः—ऋते कैवल्यमिति। कैवल्यं प्रकृतिसम्बन्धराहित्यं मुक्तिमिति यावत्, ततोऽन्यं वरं वरयेत्यर्थः, कैवल्यस्यावरणीयत्वे हेतुमाहुः—एकएवेति। तस्य कैवल्यस्य ईश्वरः अधिपतिः दातेति यावत्, भगवान्विष्णुरेक एव, अतो न वयं कैवल्यं दातुं प्रभव इति भावः॥ २०॥

मु॥ कैवल्यमृते मुक्तिं विना अद्य नोऽस्माकं सकाशात् त्वमन्यं वरं वृणीष्व, ततः किं तदाह—भद्रं त इति। ते श्रेयो भविष्यतीत्यर्थः, मुक्तिरेव युष्माभिः किं न दीयते इत्यत्राहुः—एकएवेति। अव्ययः कालकृतपरिणामरहितः भगवान् ज्ञानशक्त्यादिपूर्णः विष्णुरेकएव तस्य कैवल्यस्येश्वरः स्वामी तत्प्रदानकर्ताचेत्यर्थः॥ २०॥

वी॥ एवमिति॥ देवैस्तर्हि बहुकालमनिद्रस्य मम शयनार्थं निर्जनं प्रदेशं प्रदर्शयतेत्युक्तैरित्यर्थसामर्थ्यादत्र शेषो बोद्धव्यः, एवं स्वपन्तं यस्त्वितिवक्ष्यमाणप्रकारेणोक्तो महायशाः स च मुचुकुन्दो देवैः प्रदर्शितायां तस्यां गुहायां प्रविष्टः, देवैः दत्तया विघ्नानुपहतीकृतया निद्रया अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया, अशयिष्ट शयितवान्, निमित्तभूतया वा॥ २१॥

प्रतिबोधयतित्वांवै स्वपन्तंयस्त्वचेतनः।सत्वयादृष्टिमात्रेण भस्मीभवतुतत्क्षणात् २२
यवनेभस्मतांनीते भगवान्सात्वतर्षभः। आत्मानंदर्शयामास मुचुकुन्दायधीमते ॥
तमालोक्यघनश्यामंपीतकौशेयवाससम्।श्रीवत्सवक्षसंभ्राजत्कौस्तुभेनविराजितम्॥
चतुर्भुजंरोचमानं वैजयन्त्याचमालया। चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्॥ २५
प्रेक्षणीयंत्रिलोकस्यसानुरागस्मितेक्षणम्। अपीच्यवयसंमत्तमृगेन्द्रोदारविक्रमम्२६
पर्यपृच्छन्महाबुद्धिस्तेजसातस्यधर्षितः। शङ्कितश्शनकैराजादुर्धर्षमिवतेजसा॥ २७

मु ॥ एवमिति ॥ अभिवाद्य नमस्कृत्य गुहाविष्टः गुहां प्रविष्टः अशयिष्ट शेते स्म निद्रयेति हेतौ तृतीया देवदत्तयेति देवास्तस्य चिरं स्वपालनप्राप्तगाढश्रमनिवृत्त्यर्थं कञ्चित्कालं निद्रामेव वरं ददुः अतस्तद्दत्तयेत्यर्थः ॥ २१ ॥

वी ॥ एवंशब्दविवक्षितं प्रकारमाह—स्वपन्तमिति ॥ अचेतनोऽजानन्यः कश्चित्स्वपन्तं शयानं प्रतिबोधयति जाग्रदवस्थां प्रापयिष्यति, स पुमान् त्वया कर्त्रा दृष्टिमात्रेण करणेन त्वद्दृष्टिप्रसरमात्रेणेति पदद्वयफलितोऽर्थः, तत्क्षणाद्भस्मी भवतु ॥ २२ ॥

मु ॥ २२ ॥

वी ॥ इति प्रश्नस्योत्तरमुक्त्वा प्रकृतां कथामाह—यवनइत्यादिना। भस्मतां प्रापिते सति सात्वतर्षभः भगवान्कृष्णः धीमते मुचुकुन्दायात्मानं दर्शयामास ॥ २३ ॥

मु ॥ धीमते ज्ञानसम्पन्नाय आत्मानं स्वस्वरूपं दर्शयामास ॥ २३ ॥

वी ॥ तमिति ॥ तस्य भगवतस्तेजसा धर्षितः अभिभूतोऽत एव शङ्कितः कस्येदं तेज इत्यादि शङ्कमानस्तेजसा दुर्धर्षम् अधृष्यमिव स्थितं तं भगवन्तं शनकैरवलोक्य महती विपुला बुद्धिर्यस्य स राजा मुचुकुन्दः पर्यपृच्छदिति सम्बन्धः, तं कथंभूतं? घनमिव श्यामं पीतकौशेये वाससी यस्य श्रीवत्सो वक्षसि यस्य तथाभूतं भ्राजता कौस्तुभेन विराजितं वैजयन्त्या वनमालया शोभमानं च विराजितमित्युक्तसमुच्चयार्थश्चशब्दः, अनुक्ताभरणान्तरसमुच्चयार्थो वा, सुन्दरं प्रसन्नं च वदनं यस्य तं त्रिलोकस्य प्रेक्षणीयं दर्शनीयं सुन्दरतममिति यावत्, अपीच्यं सुन्दरं वयो यस्य तं प्रादुर्भूतवयसमिति भावः, मत्तस्य सिंहस्येव उदारो विक्रमः पराक्रमः पादविक्षेपो वा यस्य तम् ॥ २४ - २७ ॥

मु ॥ त्रिभिस्तमेववर्णयति—तमालोक्येति ॥ पीतं कौशेय वासः क्रमिकोशोत्थतन्तुनिर्मितवस्त्रं यस्य तम् ॥ २४ ॥

मु ॥ वैजयन्त्या वैजयन्त्याख्यमालया पुष्पदाम्ना रोचमानं विराजमानम् ॥ २५ ॥

मु ॥ सानुरागं भक्तेष्वनुरागसहितं ईक्षणं विलोकनं यस्य तं अपीच्यं स्पृहणीयतया सर्वविमोहकं वयो यस्य एवंविधं तमालोक्य साक्षात्कृत्य॥ २६ ॥

मु ॥ तस्य तेजसा दुर्निरीक्ष्यमहसा धर्षितः अभिभूतस्सन् पर्यपृच्छत तेजसा सर्वतः प्रसर्पद्दिव्यप्रभया दुर्धर्षं केनापि धर्षयितुमशक्यमिव स्थितं तं शङ्कितः सञ्जातभयस्सन् शनकैः भयविवशतया गद्गदकण्ठस्सन्नित्यर्थः ॥ २७ ॥

मुचुकुन्द उवाच—

कोभवानिहसंप्राप्तो विपिनेगिरिगह्वरे । पद्भ्यांपद्मपलाशाभ्यां विचरस्युरुकण्टके ॥
किंस्वित्तेजस्विनांतेजोभगवांस्त्वंविभावसुः । सूर्यस्सोमोमहेन्द्रोवालोकपालोपरोपिवा ॥
मन्येत्वांदेवदेवानां त्रयाणांपुरुषर्षभम् । यद्बाधसेगुहाध्वान्तं प्रदीपःप्रभयायथा ॥
शुश्रूषतामव्यलीकमस्माकंनरपुङ्गव । स्वजन्मकर्मगोत्रंवा कथ्यतांयदिरोचते ॥ ३१

वी ॥ तं प्रश्नमेवाह को भवानित्यादिना वयं त्वित्यतःप्राक्तनेन ॥ इह संप्राप्तो भवान्कः किं देवः, उत मानुषः, इहेति विवक्षितमाह—विपिने अरण्ये तत्रापि गिरिगह्वरे दुष्प्रवेशस्थाने तत्राप्युरूणि कण्टकानि यस्मिन् तस्मिन्पद्मपलाशसदृशाभ्यां पद्भ्यां विचरसि ॥ २८ ॥

मु ॥ तदाह—कोभवानित्यादिना ॥ विपिने कानने तत्रापि गिरिगह्वरे केनाप्यदृश्ये दुर्गमस्थल इत्यर्थः तत्राप्युरुकण्टके बहुलकण्टकव्याप्ते स्थलइत्यर्थः इदं गह्वरविशेषणं वा पद्भ्यामेव पद्मपलाशाभ्यां पद्मदलकोमलाभ्यां पद्भ्यामेव विचरसीति महच्चित्रमित्यर्थः ॥ २८ ॥

वी॥ किं स्वित् किं वा त्वं तेजस्विनां यत्तेजः, तदेव मूर्तीभूतम्, किं वा भगवान्विभावसुरग्निः, अथवा सूर्यः, यद्वा सोमेन्द्रयोरन्यतमः, उत वरुणाद्यन्यतमो लोकपालः ॥

मु॥ प्रथममयमित्थमिति निर्धारणाशक्त आह—किंस्विदिति ॥ तेजस्विनां सामान्यतो जगत्प्रकाशकतेजोमयानां देवानामित्यर्थः, त्वं तेजः किंस्वित् ? तत्संबन्धि तेजो वेत्यर्थः, अथ विविच्याह—भगवानित्यादिना । विभावसुरग्निः ॥ २९ ॥

वी ॥ सर्वत्रापरितोषादाह—मन्येइति ॥ देवानामिन्द्रादीनामपि देवा ये ब्रह्मविष्णुरुद्रास्तेषां मध्ये यः पुरुषोत्तमो भगवांस्तं त्वामहं मन्ये, कुतः ? यत् यस्मात् गुहाध्वान्तं हृदयगुहास्थमपि ध्वान्तमज्ञानं च बाधसे विधुनोषि, यथा दीपस्स्वप्रभया अन्धं तमस्तद्वत् ॥ ३० ॥

मु ॥ एवं विभाव्यापि तत्तेजोदर्शनाश्चर्यरसाविष्टस्वदृष्टेरुक्तानामतिनीचतया प्रतिभानादपरितुष्टस्सन्नाह—मन्यइति ॥ त्रयाणां देवानां त्वत्सृज्ययोरेव ब्रह्मरुद्रयोर्मध्ये अंशैस्तवाप्यन्यतमत्वपरिगणनात्त्वया सह त्रयाणामित्यर्थः मध्ये त्वां पुरुषर्षभं पुरुषोत्तमं मन्य इति तत् कथं निश्चितमित्यत्राह— यदिति ॥ गुहाध्वान्तं एतद्गुहान्तर्वर्ति तिमिरं सूर्यादिभिरनिवर्त्यमिति भावः यद्यतो बाधसे निवर्तयसि अतः पूर्वोक्तेष्वन्यतमो वा स एववेत्येवमुक्तिरुपपन्नैवेति भावः, यद्वा गुहाध्वान्तं हृदयान्तर्वर्त्यज्ञानमयं तम इत्यर्थः, तत्र लौकिकदृष्टान्तमाह— प्रदीप इति ॥ ३० ॥

वी ॥ शुश्रूषतामिति ॥ यद्यपि चतुर्भुजत्वादिलिङ्गैः परमात्मासाधारणैः पुरुषर्षभं मन्य इतिपुरुषोत्तमत्वं निश्चित्य नरपुङ्गवेति संबोधनानुपपत्तिः, तथाऽपि पुनस्तथैव द्विभुजत्वादिविशिष्टरूपेणावस्थितं तमवलोक्य तथा संबोधितम् , नरशब्दस्य पुरुषमात्रपरत्वंवा, स्वस्य जन्म कर्म गोत्रं वाशब्दश्चार्थकः,श्रोतुमिच्छतामस्माकम् अव्यलीकं निष्कण्टकं यथा तथा कथ्यतां यदि रोचते न वयं विधातुं प्रभव इति भावः ॥ ३१ ॥

वयंतुपुरुषव्याघ्र ऐक्ष्वाकाःक्षत्रबन्धवः।मुचुकुन्दइति[१]ख्यातो यौवनाश्वात्मजःप्रभो॥
चिरप्रजागरश्रान्तोनिद्रयोपहतेन्द्रियः। शयेऽस्मिन्विजनेकामंकेनाप्युत्थापितोऽधुना॥
सोऽपिभस्मीकृतोनूनमात्मीयेनैवपाप्मना।अनन्तरंभवाञ्श्रीमाँल्लक्षितोऽमित्रशासनः
तेजसातेऽविषह्येण भूरिद्रष्टुंनशक्नुमः। हतौजसोमहाभाग माननीयोऽसिदेहिनाम्॥
एवंसंभाषितोराज्ञाभगवान्भूतभावनः। प्रत्याहप्रहसन्वाण्या मेघनादगभीरया॥३६

मु॥ शुश्रूषतां श्रोतुमिच्छतामस्माकम् अव्यलीकम् अनृतं यथातथा कथ्यतां यदि रोचते वक्तुं तव रुचिर्जायते चेदित्यर्थः ॥ ३१ ॥

वी ॥ तर्हि तव जन्मादिकं कथयेत्यत आह—वयंत्विति ॥ वयमिति वंश्याभिप्रायकं बहुवचनम् , हे पुरुषव्याघ्र तावद्वयं क्षत्रबन्धवः क्षत्रेण वर्णेन बध्यन्त इति क्षत्रबन्धवः क्षत्रिया इत्यर्थः, तत्राप्यैक्ष्वाकाः इक्ष्वाकुवंश्याः, दाण्डिनायनसूत्रे निपातनात्साधुः, बहुषु लुगभाव आर्षः, तत्राप्यहं यौवनाश्वात्मजः युवनाश्वस्यापत्यं यौवनाश्वो मान्धाता, तस्यात्मजः पुत्रः मुचुकुन्द इति ख्यातः ॥ ३२ ॥

मु॥ इत्युक्त्वा तत्र स्वस्यैव प्रश्नप्रतिवचनयोग्यत्वप्रकटनाय स्वाभिजनादिकं तावदाह—वयन्त्वित्यादिना॥ वयमिति वंश्याभिप्रायेण बहुवचनम्, क्षत्रबन्धवः क्षत्रियाः, तेष्वहं मुचुकुन्द इति प्रोक्तः तन्नाम्ना व्यवहृत इत्यर्थः, यौवनाश्वः युवनाश्वपुत्रो मान्धाता, तस्य आत्मजः ॥ ३२ ॥

वी ॥ चिरं बहुकालं प्रजागरेण श्रान्तः अत एव निद्रयोपहतान्यभिभूतानीन्द्रियाणि यस्य सोऽहमस्मिन् निर्जने देशे कामं यथेच्छं शये शयितवानस्मि, अधुना केनापि केनचिदुत्थापितश्च ॥ ३३ ॥

मु ॥ ३३ ॥

वी ॥ यो मामुत्थापितवान् सोऽपि स्वीयेनैव पापेन हेतुना नूनं भस्मीकृतः, अस्मद्दृष्टिप्रसारस्तु निमित्तमात्रमिति भावः, अनन्तरं भस्मीभवनानन्तरम् अमित्रशासनश्शत्रूणां शास्ता श्रीमान् भवान् लक्षितः दृष्टः, मयेति शेषः, सोढुमशक्येन त्वत्तेजसा अभिभूतदृष्टयो वयं त्वां भूरि चिरं द्रष्टुं न शक्नुमः, महाभाग हे भगवन् हतमोजस्सामर्थ्यं येषां तेषां कर्मसङ्कुचितज्ञानात्मकसामर्थ्यानाम् अज्ञानां मादृशां देहिनां माननीयोऽसि पूज्योऽसि भजनीयोऽसीति यावत् ॥ ३४ ॥ ३५ ॥

मु॥ अमित्रशासनः शत्रुमर्दनः श्रीमान् लक्ष्मीपतिर्भवान् अनन्तरं तद्भस्मीकरणानन्तरं लक्षितः दृष्टः ॥ ३४ ॥

मु॥ तर्हि मत्स्वरूपं सम्यगालोक्यतामित्यत्राह—तेजसेति ॥ अविषह्येण सोढुमशक्येन ते तव तेजसा हतौजसः हतशक्तयो वयं भूरि भूयिष्ठं त्वत्स्वरूपमित्यर्थः,द्रष्टुं न शक्नुमः, एवमपि ते मद्दर्शने कोऽयं निर्बन्ध इत्यत आह—माननीय इति। सकलफलप्रदत्वेन सर्वदेहिमाननीयस्य मद्भाग्यमहिम्ना यदृच्छया सन्निहितस्य तवेदानीमपि दर्शनालाभे मज्जन्मैव वृथेति भावः ॥ ३५ ॥

वी ॥ एवमिति ॥ राज्ञा मुचुकुन्देनेत्थम् उक्तो भगवान् प्रहसन्मेघगर्जितवद्गम्भीर-

१. प्रोक्तः. मु. भा. प्र. पा ॥

श्रीभगवानुवाच—

जन्मकर्माभिधानानिसन्तिमेऽङ्गसहस्रशः।नशक्यन्तेनुसङ्ख्यातुमनन्तत्वान्मयापिहि॥
क्वचिद्रजांसिविममेपार्थिवान्युरुजन्मभिः।गुणकर्माभिधानानिनमेजन्मानिकर्हिचित्॥
कालत्रयोपपन्नानि जन्मकर्माणिमेनृप।अनुक्रमन्तोनैवान्तंगच्छन्तिपरमर्षयः ॥ ३९

या गिरा प्रत्युवाच ॥ ३६ ॥

मु ॥ एवमित्यादि ॥ ३६॥

वी ॥ उक्तिमेवाह—जन्मकर्मेत्यादिना इत्युक्त इत्यतः प्राक्तनेन, यत्तावत्पृष्टं स्वजन्मकर्मेत्यादि तस्योत्तरमाह—जन्मेति ॥ अङ्ग हे मुचुकुन्द मम जन्मादीनि सहस्रशः बहुशस्सन्ति, अतस्तान्यत्राधुना मयाऽपि सङ्ख्यातुम् एतावन्तीति परिच्छिद्य वक्तुं न शक्यन्ते, ननु किमनादिसंसरणशीलैरस्मदादिभिरिव विस्मृतत्वान्न शक्यन्त इत्याशङ्कावारणायानन्तत्वान्ममापीत्युक्तम्, अयं भावः—यद्यपि भवज्जन्मादीनि कर्मसङ्कुचितज्ञानैर्भवद्भिर्विस्मृतत्वाद्बहुत्वाच्च न सङ्ख्यातुं शक्यन्ते, तथाऽपि सर्वज्ञेन मया तु शक्यन्त एव, अस्मज्जन्मादीनि त्वनन्तत्वान्नैव शक्यन्ते, नचैवं सर्वज्ञत्वहानिः, अनन्तानामानन्त्यज्ञानमेव हि सर्वज्ञत्वावहम्, न तु तेषां परिच्छिन्नत्वज्ञानं तस्यायथार्थत्वेनाज्ञत्वावहत्वात् ॥ ३७ ॥

मु॥ अत्रास्मिन् मुचुकुन्दभावबन्धस्यानुगुणं भगवान् स्वस्वभावमहिमादिकं स्वयमेव प्रकटयन्नाहेति बोद्ध्यम्, जन्मान्यवताराः कर्माणि शत्रुविजयसाधुत्राणादिव्यापाराः अभिधानानि नामानि अनन्तत्वात् स्वरूपतो गुणतश्च इयत्तारहितत्वात् मयापि "स्वाभाविकी" "ज्ञानबलक्रियाच" "यस्सर्वज्ञस्सर्ववित्" इत्यादिश्रुतिघुष्टस्वाभाविकसार्वज्ञ्यनिधिनापीत्यर्थः, तथाच तद्गुणानन्त्यं श्रुतिरेव जुघोष "सो अङ्ग वेद यदि वा न वेद" इति सङ्ख्यातुं गणयितुं नशक्यन्ते ॥ ३७ ॥

वी ॥ असङ्ख्येयत्वमेवोपपादयति—क्वचिदिति॥ यद्यपि क्वचित्कदाचित्कश्चित्सूक्ष्मबुद्धिमान् बहुभिः जन्मभिः पृथिव्यास्सम्बन्धीनि रजांसि विममे गणयेत्, तथाऽपि मम गुणकर्माभिधानानि न विममे गणयितुं न शक्नुयादित्यर्थः, "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाँसि"इतिश्रुत्यर्थोऽत्रानुसंहितः ॥ ३८ ॥

मु ॥ ननु त्वद्गुणाएव असङ्ख्येया इति किमुच्यते भूरेणवोऽपि तथा सन्तीत्यत्राह—कश्चिद्रजांसि उरुजन्मभिर्विमम इति कस्मिंश्चित् जन्मनि अगणेयान्यपि कश्चित् बहुजन्मभिः भूरजांस्यपि गणितवानित्यर्थः, तद्गुणादिकन्तु न तथेत्याह—गुणेति ॥ ३८ ॥

वी ॥ तथाहि परमर्षयः पराशरवैशंपायनशौनकादयः कालत्रयोपपन्नानि कालत्रयोपयुक्तानि कालत्रयगोचराणीति यावत्, जन्मानि कर्माणि च अनुक्रमन्तोऽनुवर्णयन्तोऽप्यन्तं पारं नैव गच्छन्ति ॥ ३९ ॥

मु ॥ अनुक्रमन्तः सङ्ख्यातुमुपक्रमन्तः परमर्षयः योगमहिमसाक्षात्कृतत्रैकालिकवस्तुस्वाभाव्यादयोऽपीत्यर्थः, अन्तं मद्गुणादिपारं न गच्छन्त्येव ॥ ३९ ॥

वी ॥ यद्यप्येवं तथाप्यङ्ग हे मुचुकुन्द अद्यतनान्याधुनिकानि मम जन्मानि गदतो

तथाऽप्यद्यतनान्यङ्गशृणुष्वगदतोमम । विज्ञापितोविरिञ्चेनपुराऽहन्धर्मगुप्तये ॥ ४०
भूमेर्भारायमाणानामासुराणांक्षयायच। अवतीर्णोयदुकुलेगृह आनकदुन्दुभेः॥ ४१
वदन्तिवासुदेवेतिवसुदेवसुतंहिमाम्।कालनेमिर्हतःकंसःप्रलम्बाद्याश्च[1] विद्विषः ॥४२
अयंचयवनोदग्धोराजंस्तेतिग्मचक्षुषा । सोऽहन्तवानुग्रहार्थंगुहामेतामुपागतः ॥४३
प्रार्थितःप्रचुरंपूर्वंत्वयाऽहंभक्तवत्सलः । वरान्वृणीष्वराजर्षेसर्वान्कामान्ददामिते ॥
मांप्रपन्नोजनःकश्चिद्भूयोनार्हतिशोचितुम् ॥　　　　　　　　　　　　४४

---

मत्तः शृणु, धर्मपरित्राणार्थं भूमेर्भारभूतानाम् आसुराणाम् असुरसम्पत्त्याऽभिजातानां क्षयाय च ब्रह्मणा प्रार्थितोऽहं यदुकुले तत्राप्यानकदुन्दुभेः वसुदेवस्य गृहे गृहिण्यामिति भावः, अवतीर्णवानस्मि, ज्ञानशक्त्यादिस्वस्वभावमजहदेव जात इत्यवतीर्णशब्दप्रयोगाभिप्रायः ॥ ४० ॥ ४१ ॥

मु ॥ तर्हि भवोच्छित्तिहेतुभूतत्वद्गुणादिश्रवणाभावे कथमस्मादृशां भवोत्तरणयोग्यतेत्यत्राह—तथापीति ॥ अद्यतनानि एतत्कालसम्बन्धीनि अवतारतदनुगुणकर्मनामादीनीत्यर्थः, गदतः वदतः मम शृणुष्व मत्त एव शृण्वित्यर्थः, मां विना अपारमद्गुणादिकथने नान्यश्शक्तइति भावः, अथाकर्मवश्यस्य हेयप्रतिभटस्य सर्वशक्तेः स्वस्यात्र कर्मभूमाववतरणं सप्रयोजनं वदन् मुचुकुन्दस्य विषये अनुजिघृक्षां सहेतुकं प्रकटयन्नाह—विज्ञापित इत्यादिना॥ धर्मगुप्तये नश्यद्धर्मरक्षणार्थंच आसुराणां क्षयायचेति स्वावतारप्रयोजनद्वयमुक्तम् ॥ ४० ॥ ४१ ॥

वी ॥ एवमाधुनिकं जन्मोक्तम्, अथ नामधेयमाह—वदन्तीति ॥ वसुदेवसुत इत्यस्य हेतुत्वद्योतको हिशब्दः, वसुदेवसुतत्वाद्वासुदेव इति वदन्ति, सन्धिरार्षः, प्रातिपदिकमात्रानुवादो वा, तस्यैव नामधेयत्वेन प्रदर्शनीयत्वाद्विभक्तेस्साधुत्वार्थत्वाच्च॥४२॥

मु ॥ वसुदेवसुतं मां अतएव वासुदेवेति वदन्ति तत्संबन्धित्वेन सम्बोधयन्तीत्यर्थः, स्वेनहतान् दुष्टानाह—कालनेमिरिति ॥ निष्कारणमारणशङ्कां निवर्तयितुमाह—सद्विष इति ॥ सतां साधूनां द्विषः ॥ ४२ ॥

वी ॥ अथाधुनिकानि कर्माण्याह—कालनेमिरिति । हे राजन् तव तिग्मेन तीक्ष्णेन चक्षुषा निमित्तेन मयैवायं यवनो दग्धः धर्मगुप्त्याद्यर्थं प्रार्थितत्वाद्युक्त्यैव तदुपयुक्तसार्वज्ञ्यसर्वशक्तित्वादिगुणानामुक्तप्रायत्वान्न पृथग्गुणोक्तिः, तर्हीह किमर्थमागत इत्यत आह—सोऽहमिति । स उक्तविधोऽहं त्वामनुग्रहीतुम् इमां गुहां प्रति समुपागतः ॥४३॥

मु ॥ अयश्चेति ॥ ते तिग्मचक्षुषा तीक्ष्णदृष्ट्या मम तद्वधे उपकरणभूतेनेत्यर्थः, यवनोपि दग्धः त्वयैवेति शेषः ॥ ४३ ॥

वी ॥ सर्वानपि जनान्किं नानुगृह्णासीत्यत आत्मानं विशिनष्टि—भक्तवत्सलइति॥ नाहं भक्त इत्यतो विशिनष्टि—पुरा जन्मनि त्वया अहं प्रचुरं यथा तथा प्रार्थितः आराधितः, कोऽसावनुग्रह इत्यत आह—वरानिति । हे राजर्षे ते तुभ्यं सर्वान् काम्यन्त इति कामाः, तानिष्टान् ददामि, नन्वित्थं प्रचोदितेन मया देवाः प्रत्याख्याता इति सर्व-

---

[1] सद्द्विषः. मु. भा. प्र. पा ॥

श्रीशुकउवाच—
इत्युक्तस्तंप्रणम्याहमुचुकुन्दोमुदाऽन्वितः। ज्ञात्वानारायणंदेवंगर्गवाक्यमनुस्मरन्॥
मुचुकुन्दउवाच—
विमोहितोऽयञ्जन ईशमाययात्वदीययात्वां न भजत्यनर्थदृक्।
सुखायदुःखप्रभवेषुसज्जतेगृहेषुयोषित्पुरुषश्चवञ्चितः॥ ४६

ज्ञस्त्वं किं न जानासीत्यत्राह—मामिति। भूयः पुनश्शोचितुं संसर्तुं नार्हति, किंतु मुक्तिमेवार्हतीति भावः, मुक्तिं दास्याम्येव, किंतु ततोऽन्येऽपि यदि कामाः प्रार्थ्यास्तानपि प्रार्थयस्वेति भावः॥ ४४॥

मु॥ मां प्रपन्नः भक्त्यङ्गभूतया प्रपत्त्या उपपन्नइत्यर्थः, अन्यथा स्वतन्त्रप्रपत्तेः देहान्तरविलम्बायोगेन भक्तिर्मय्यनपायिनीत्युत्तरवाक्य विरोधाच्च भक्तिप्रतिबन्धक पाप निवृत्यर्था तदङ्गप्रपत्तिरेव अत्र ग्राह्या, भूयो नार्हति शोचितुमिति येन केनापि प्रकारेण तत्प्रपन्नस्य निश्शेषसंसारनिवृत्तेः आवश्यकत्वादियमुक्तिः॥ ४४॥

वी॥ इतीति॥ इत्थं भगवतोक्तो मुचुकुन्दस्तं श्रीकृष्णं देवं तत्रापि नारायणं ज्ञात्वा तदुक्तिभिरिति शेषः, गर्गस्य वृद्धगर्गस्य ऋषेर्वाक्यम् अष्टाविंशतितमे युगे भगवान्वसुदेवगृहेऽवतरिष्यतीत्येवंविधमनुस्मरंश्च मुदा हर्षेण युतः प्रणम्योवाच॥ ४५॥

मु॥ एवं भगवतोक्ते सति मुचुकुन्दः किमाहेत्यत आह—इतीति॥ तं प्रणम्य गर्गवाक्यमनुस्मरन् अष्टाविंशमहायुगे भगवानवतरिष्यतीति वृद्धगर्गवचनमनुस्मरन्नित्यर्थः॥ ४५॥

वी॥ उक्तिमेवाह—विमोहितइत्यादित्रयोदशश्लोकात्मिकाम्, यदुक्तं 'वरान्वृणीष्व राजर्षे सर्वान्कामान्ददामिते' इति, तस्योत्तरोपयुक्तमाह—विमोहितइति॥ विषयाभिलाषेणैव निदानेनेदृशसंसृतिरूपानर्थं प्राप्तोऽहं भूयो विषयानेव वरयेति चोदयता त्वया वञ्चितस्स्याम्, अतो भक्तवञ्चनं तवानुचितमिति मैवं वादीरित्यभिप्रायः, हे ईश त्वदीयया मायया मोहितो योऽयं मत्प्रभृतिर्योषिच्च पुरुषश्च योषिदात्मकः पुरुषात्मकश्चेत्यर्थः, जनस्त्वां निरतिशयपुरुषार्थभूतं न भजति, किन्तु स्वानर्थविषये दृग्बुद्धिर्यस्य तथाभूतः वस्तुतोऽनर्थहेतुमप्यर्थवन्मन्यमानः, प्रभवन्त्येभ्य इति प्रभवाः दुःखस्य प्रभवास्तेषु दुःखैकनिदानेषु गृहेषु सुखलेशाभासप्रभवेषु सुखाय सज्जते सक्तो भवति, स जनः पूर्वमेव त्वया वञ्चित इत्यर्थः॥ ४६॥

मु॥ एवं भगवता भावपरिशीलनार्थं सर्वान् कामान् ददामित इति प्रतिज्ञाय तत्प्रसङ्गेन लोके यः कश्चित् तत्प्रपन्नश्चेत् भूयः दुःखार्हो न भवेदिति साक्षात् स्वसायुज्यसाधनरूपं स्वशरणागत्यङ्गकभक्तिसामर्थ्यं यत् प्रकटितं तत्र मुचुकुन्दः केवलसंसारमोहान्धस्य लोकस्य वृत्तिमेतावत्पर्यन्तं तदन्तःपातिस्ववृत्तिगर्भं यथातथानिन्दन् स्वाभीष्टा भगवत्प्राप्तिसाधनभूता भक्तिरेवेति प्रकटयन् पूर्वं तदङ्गभूतां शरणागतिमात्रचारेत्याह—विमोहित इत्यादिना॥ हे ईश! योषिच्च पुरुषश्चायं जनः योषिदात्मकः पुरुषात्मकश्च लोक इत्यर्थः त्वदीयया मायया त्रिगुणात्मकप्रकृत्या मोहितः अतएवानर्थे अनर्थरूपे संसारे दृक् दृष्टिर्यस्येतिवा अर्थमात्महितं न पश्यतीति वा अनर्थदृक् त्वां न भजति कि-

लब्ध्वाजनोदुर्लभमत्रमानुषं [1]कथंचिदप्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपेपतितोयथापशुः ॥ ४७
ममैषकालोऽजितनिष्फलोगतोराज्यश्रियोन्नद्धमदस्यभूपतेः ।
मर्त्यात्मबुद्धेस्सुतदारकोशभूष्वासज्जमानस्यदुरन्तचिन्तया ॥ ४८

न्तु वञ्चितः प्रलोभितस्सन् प्रभवत्यस्मादिति प्रभवो हेतुः दुःखस्य प्रभवेषु गृहेषु सुखाय सज्जते केवलदुःखहेतुषु गृहेषु विपरीतबुद्ध्या सुखार्थीसन् आसक्तो भवतीत्यहो भगवन्मायामहिमेति भावः ॥ ४६ ॥

वी ॥ नन्वित्थं जनं वञ्चयन्नहं निर्घृणो विषमश्च किमित्यत आह—लब्ध्वेति ॥ हे अनघ न विद्यते यद्भजनादघं तथाभूतेत्यर्थः, अयत्नतस्स्वप्रयत्नमन्तरेणापि केवलमनुजिघृक्षैकस्वभावत्वत्सङ्कल्पादेव हेतोः अत्र कर्मक्षेत्रे दुर्लभमपि मानुषमङ्गं शरीरं त्वदाराधनोपयुक्तं प्राप्याप्ययं जनस्त्वत्पादारविन्दं निरतिशयपुरुषार्थरूपं तत्प्राप्त्युपायभूतं च न भजति,किन्तु असन्मतिः प्रकृतिपरिणामात्मकदेह एव मतिरात्माभिमानो यस्य तथाभूतः केवलं गृहमेवान्धकूपः तस्मिन्पतितो भवति, यथा पशुरजानंस्तृणावृते कूपे जिघत्सया गतस्तत्र पतितो भवति, तद्वत् , नह्येतावता तव वैषम्यादिकमापादयितुमुचितं केवलमनुजिघृक्षयैव स्वाराधनोपयुक्तकरणकलेबरादिप्रदानादिति भावः ॥ ४७ ॥

मु॥किञ्च कामसुखं जन्तुमात्रसाधारणं,तद्भजनन्तु न मानुषत्वव्यतिरेकेण न सुसाधमिति तस्मिन् संभवत्यपि त्वामभजमानो हतएवेत्याह—लब्ध्वेति ॥ तत्र कर्मभूमौ अव्यङ्गम् अविकलाङ्गं स्तुतिश्रवणप्रणामादिसाधनभूतदृढाङ्गमित्यर्थः, मानुषं मनुष्यजन्म अप्यङ्गमिति पाठे मानुषमङ्गं मनुष्यदेहं लब्ध्वापीत्यर्थः,असति गर्हितत्वात् दुष्टे विषयसुखे मतिर्यस्य असती सततं विषयानुधावित्वात् दुष्टा मतिर्यस्येतिवा तथोक्तः, पशुर्यथा तृणलोभात् तदाच्छादितकूपपतितपशुरिव गृहमेवान्धकूपः अन्धयति तृणाद्यावृतमुखतया अलक्षितस्सन् सदृष्टिमपि जन्तुमदृष्टिमिव प्रलोभयतीत्यन्धः सचासौ कूपश्चेति विग्रहः, तस्मिन् पतितस्सन् ते पादारविन्दं न भजतीति ॥ ४७॥

वी॥जनसामान्योद्देशेनोक्तमर्थं स्वस्मिन्पर्यवसाययति—ममेति॥ हे अजित एष भूतः कालो मम निष्फलो गतः मया निष्फलो नीत इत्यर्थः, कथंभूतस्य ? राज्यश्रियोन्नद्धः प्रभूतो मदो यस्य दुष्टा विषयाभिलाषिणी मतिर्यस्य,तत्र हेतुः—मर्त्ये मरणशीले देहे आत्मबुद्धिर्यस्य, न केवलं मर्त्यात्मबुद्धेरेव किन्तु सुतादिषु तद्रक्षणपोषणादिविषयया अपारचिन्तया आसज्जमानस्य आसक्तस्य अहङ्कारममकारयुक्तस्येति पदद्वयफलितोऽर्थः, तत्र कोशो धनागारम् ॥ ४८ ॥

मु ॥ एतत्क्षणपर्यन्तं स्वयमपि तथैवेत्याह—ममैवेति ॥ हे अजित अन्तश्शत्रुभिः बाह्यशत्रुभिर्वा प्राकृतजनवदपरिभूतेत्यर्थः, अतएवाजितशब्दस्तन्नामापि, उन्नद्धमदस्य उत्कटमदस्य अतएव मर्त्ये शरीरे आत्मेति बुद्धिर्यस्य सः सुतादिषु दुरन्तचिन्तया निरवधिकोत्कण्ठया आसज्जमानस्यासक्तिं भजतः मम एष कालः इयान् कालः निष्फलो व्यर्थो गतः ॥ ४८ ॥

[1]. कथंचिदव्यङ्गं. मु. भा. प्र. पा ॥

कलेवरेऽस्मिन्घटकुड्यसन्निभेनिरूढमानोनरदेवइत्यहम् ।
वृतोरथेभाश्वपदात्यनीकपैर्गांपर्यटं[1]स्त्वामगणय्यदुर्मदः ॥ ४९

प्रमत्तमुच्चैरितिकृत्यचिन्तयाप्रवृद्धलोभंविषयेषुलालसम् ।
त्वमप्रमत्तस्सहसाऽभिपद्यसेक्षुल्लेलिहानोऽहिरिवाखुमन्तकः ॥ ५०

पुरारथैर्हेमपरिष्कृतैश्चरन्मतङ्गजैर्वानरदेवसंज्ञितः ।

वी ॥ उन्नद्धमदत्वमेव प्रपञ्चयति—कलेबरइति ॥ घटकुड्यसदृशे जडे अस्मिन्कलेबरे रूढमूलः मानः आत्माभिमानो यस्य सोऽहं नरदेव इत्यभिमन्यमान इति शेषः, रथाश्च इभा गजाश्च पदातयश्च तेषामनीकानि सैन्यानि तानि पान्तीति तथा तैः परिवृतो गां भूमिं पर्यटन् त्वामगणय्य तुच्छीकृत्य दुर्मद आसमिति शेषः ॥ ४९ ॥

मु ॥ उन्मदत्वमेव प्रपञ्चयति—कलेबर इति ॥ घटकुडयसन्निभे तत्सदृशे तद्वदचेतन इत्यर्थः, कलेबरे अत्रान्तर्वर्तिजलावारकघटस्य अन्तस्थितजनाच्छादककुड्यस्य च कलेवरानुगुणदृष्टान्तत्वं तत्तदन्तर्वर्तिनश्चेतनस्य धर्मभूतज्ञानावरकतयेति बोद्धयम्, अहं नरदेव इति निरूढमानः चिरप्रवृद्धाभिमानस्सन् रथैरिभैरश्वैः पदातिभिः पादचारिभटैः अनीकपैः सेनारक्षकैश्च वृतस्सन् गां पर्यटन् शत्रुसंहारार्थं सञ्चरन् त्वामगणयन् सुदुर्मदः संज्ञानप्रलोभकमदाकुलइत्यर्थः, अस्मीतिशेषः, अतो ममैव कालो निष्फलो गत इति ॥ ४९ ॥

वी ॥ त्वामगणयन्तमित्थं दुर्मदं मां त्वं कालरूपेणाक्रामसीत्याह—प्रमत्तमिति ॥ इतिकृत्यचिन्तया एवमेवं कर्तव्यमिति मनोरथपरम्परया नितरां प्रवृद्धः लोभो यस्य तं विषयेषु शब्दादिषु लालसम् आसक्तचित्तं प्रमत्तं स्वहितानभिज्ञं मां त्वमप्रमत्तः अन्तं करोतीत्यन्तकः विनाशहेतुः कालरूपो भूत्वा अभिपद्यसे आकर्षसि, ग्रससइति यावत्, यथा क्षुधा बुभुक्षया लेलिहानः आस्वदमानः क्षुधा लोलजिह्व इति यावत् , यङ्लुगन्ताल्लिहेः कर्तरि लटश्शानजादेशः, अहिस्सर्पः आखुं मूषकम् आपद्यते तद्वत् ॥ ५० ॥

मु ॥ एवन्त्वामविगणयन्तं त्वमभिभवसीत्याह—प्रमत्तमिति ॥ इतिकृत्यचिन्तया एवमेवङ्करिष्यामि एवमेवमनुभवामीत्यादिमनोरथपरम्परया प्रमत्तं त्वामन्तकमविगणय्य देहानुगुणभोगासक्त्या प्रमादयुक्तमिति यावत्, विषयेषु लालसं विफलेऽपि मनोरथे विषयौत्सुक्यं पुनरजहन्तं प्रवृद्धलोभं कथंचिदर्थे प्राप्ते सत्यप्यनिवृत्ततृष्णमित्यर्थः, जनमिति शेषः, अन्तकः कालात्मकः स त्वमप्रमत्तः जागरूकः अभिपद्यसे अभिभवसि, अत एव दृष्टान्ते क्षुल्लेलिहान इत्यमत्ततांद्योतकविशेषणम्, क्षुधा लेलिहानः लोलजिह्वः आखुं मूषकमिव ॥ ५० ॥

वी ॥ नन्वतिदुर्लभकल्याणतरनरदेवशरीरं प्राप्यापि किमिति तन्निन्दसीत्याशङ्कायामन्ततः कालाभिपन्नस्य तस्य गतिं पश्येत्यभिप्रायेणाह पुरेति ॥ पुरा तावत्सुवर्णालङ्कारालङ्कृतैः रथैर्गजैर्वा सञ्चरन्यो नरदेवसंज्ञितः नरदेवसंज्ञाऽस्य जज्ञातेति तथा तारकादित्वादितच्,स एव देहः दुरतिक्रमेण कालेनाभिपन्नश्चेत्तावच्छवसृगालादिभिः

१. त्वागणयन्त्सुदुर्मदः. मु. भा. प्र. पा ॥

सएवकालेनदुरत्ययेनचेत्कलेबरोविट्कृमिभस्मसंज्ञितः ॥ ५१

निर्जित्यदिक्चक्रमभूतविग्रहोवरासनस्थस्समराजवन्दितः ।
गृहेषुमैथुन्यसुखेषुयोषितांक्रीडामृगःपूरुषईशनीयते ॥ ५२

करोतिकर्माणितपस्सुनिष्ठितोनिवृत्तभोगस्तदपेक्षयादधत् ।
पुनश्चभूयासमहंस्वराडितिप्रवृद्धतर्षोनसुखायकल्पते ॥ ५३

---

भक्षितो विट्संज्ञितः तैरभक्षितश्चेत्कृमिसंज्ञितः दग्धश्चेद्भस्मसंज्ञितः भवतीत्यर्थः ॥५१॥

मु ॥ किञ्च बहुभोगास्पदत्वेन सर्वेषां स्पृहणीयो यो राजदेहः स एव कालात्मना त्वया अभिपन्नश्चेदेवं भवतीत्याह—पुरेति ॥ ते तव सम्बन्धिना कालेन निमित्तेन पुनः कीदृशेन दुरत्ययेन आब्रह्मस्तम्बपर्यन्तं केनाप्यत्येतुमशक्येनेत्यर्थः, कालेन कालात्मना ते त्वयेतिवार्थः, तत्रापि निमित्तेनेतिशेषः, सृगालादिभक्षितस्य चाभक्षितस्यचादग्धस्य दग्धस्य च कलेबरस्य जुगुप्सितावस्थामाह—विडिति । विट् विष्ठा ॥ ५१ ॥

वी ॥ "सर्वस्य वशी सर्वस्येशानः" इति श्रुत्युक्तविविधसर्ववस्त्वपेक्षस्वातन्त्र्यं त्वामविगणय्य स्वतन्त्रंमन्यस्य मम निहीनप्रतियोगिकपारतन्त्र्यमवर्जनीयमेवासीदित्यभिप्रेत्याह—निर्जित्येति ॥ दिक्चक्रं दिङ्मण्डलं निर्जित्याभूतः असम्भावितः विग्रहः विरोधो यस्य तथाभूतः असम्भावितप्रतिपक्ष इत्यर्थः, वरासनस्थः सार्वभौमासनाधिष्ठितः ये पूर्वं समास्तुल्या राजानस्तैरपि वन्दितः पुरुषः हे ईश मैथुन्यमेव सुखं येषु तेषु गृहेषु योषितां स्त्रीणां केवलं क्रीडामृगः क्रीडार्थं पोषितो वानरादिरिव नीयते इतस्ततश्चाल्यत इत्यर्थः, पूरुष इति पारोक्ष्यनिर्देशस्सर्वदिग्विजयिपुरुषाभिप्रायकः ॥ ५२ ॥

मु ॥ किञ्च अप्रतिहतमप्यैश्वर्यमतिनीचजनपारतन्त्र्योपहतत्वात् सर्वदा हेयमेवेत्यभिप्रयन्नाह—निर्जित्येति ॥ अभूतविग्रहः प्रतापनिर्मूलितसर्वशत्रुकत्वात् कुत्राप्यसञ्जातकलहः समैः अभिजनादिना स्वतुल्यैरपि राजभिर्वन्दित इति पराक्रममहिमातिशयोक्तिः; एवं विधोऽपि पुरुषः मैथुन्यं मिथुनभवं सुखं येषु तेषु तदेकप्रधानेष्वित्यर्थः, योषितां गृहेषु हे ईश क्रीडामृगस्सन् नीयते, तद्वत् पारतन्त्र्येणेतस्ततः प्रवर्त्यत इत्यर्थः ॥

वी ॥ ननु भोग्यभोगोपकरणादिसमृद्धान् राजगृहान् दुःखप्रभवेषु मैथुन्यसुखेष्विति च कथं निन्दसीत्यतस्तत्र सुखाभावमाह—करोतीति ॥ पुनश्च जन्मान्तरेऽपि स्वराट् सार्वभौमो भूयासमितीत्थं प्रवृद्धः तर्षः तृष्णा यस्य तथाभूतस्तपस्सु जन्मान्तरीयसार्वभौमत्वसाधनेषु तपस्सु अधश्शयनब्रह्मचर्यादिषु निष्ठितः सञ्जातनिष्ठः अत एव निवृत्तो भोगो यस्य तथाभूतः तदपेक्षया भाविजन्मभोगापेक्षया दधत् बिभ्राणः, तपांसीति विपरिणतेनान्वयः, कर्माणि वर्तमानदेहभोगार्थानि भोजनादिकर्माणि करोति, इत्थंभूतोऽसौ न सुखाय कल्पते न सुखी भवति,किन्तु दुःख्येवेति भावः, यद्वैवमन्वयः—तावद्राजशरीरप्राप्तिसाधनानि कर्माणि करोति, ततो दधत् राजशरीरमिति शेषः, निवृत्तभोगः तपस्सु निष्ठितः तदपेक्षया तद्धेतुभूतः स्वराट् स्यामिति प्रवृद्धः तर्षो यस्य तथाभूतो न सुखाय कल्पत इति ॥ ५३ ॥

मु ॥ किञ्च ऐश्वर्यस्योपर्युपर्यपि तारतम्यसम्भवात् तत्प्राप्तितृष्णाया अपि विरामाभावेन तद्व्याकुलचित्तस्य न कश्चिद्भोगक्षणोऽप्यस्तीत्याह—करोतीति ॥ निवृत्तभोगः

भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः ।
सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः ॥ ५४

मन्ये ममानुग्रह ईश ते कृतो राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया वनं विविक्षद्भिरखण्डभूमिपैः ॥ ५५

इतोऽप्यधिकभोगसाधनापेक्षया निवर्तमानभोग इत्यर्थः, तपसा अनशनाधश्शयनब्रह्मचर्यादिकेषु निष्ठितः तदपेक्षया दधत् प्राणान् वहन् कर्माणि करोति, पुनश्च अहं स्वराडिन्द्रो भूयासमिति प्रवृद्धतर्षो विवृद्धतृष्णस्सन् सुखाय निरुपद्रवसौख्याय न कल्पते न प्रभवतीत्यर्थः ॥ ५३ ॥

वी ॥ तर्हि कदा सुखाय कल्पत इत्याह—भवापवर्ग इति ॥ एवं संसृतौ भ्रमतः पुंसो भवापवर्गः संसारान्तः भवनिवृत्तिः मुक्तिरिति यावत् , स यदा भवेदासन्नस्स्यात्तदैवायं सुखाय कल्पते, इति पूर्वेण सम्बन्धः, कदा तर्हि भवापवर्गो भवेदित्यत आह—तर्हीति।हे अच्युत अस्य संसरतो जनस्य यर्हि यदा यस्मिन्जन्मनि सत्समागमः सद्भिः भागवतैस्समागमः सङ्गतिस्सहवास इति यावत्,तदा भवापवर्गः,नहि सत्समागमस्साक्षाद्भवापवर्गसाधनभूतः, किन्तु त्वद्भक्तिजननादिप्रणाड्येत्याह— सत्सङ्गम इति । यदा हि सत्सङ्गमस्तर्ह्येव परे इन्द्रादयः अपरे अवमा यस्मात्तस्य चतुर्मुखस्यापीशे नियन्तरि सतां गतौ त्वत्प्राप्त्युपायभूते त्वयि मतिर्भक्त्यात्मिका बुद्धिर्जायते उत्पद्यते ॥ ५४ ॥

मु ॥ एवं भगवद्विमुखानां संसारं प्रपञ्च्य केनचिद्व्याजेन तत्कटाक्षप्रसरेणैव तन्निवृत्तिक्रममाह—भवेति ॥ हे अच्युत भ्रमतः संसरतो जनस्य भवापवर्गः संसारनाशो यदा भवेत् प्राप्तकालस्स्यात् आसन्नस्स्यादित्यर्थः, तर्हि तदा सतां समागमो भवेत्, सतां सङ्गतौ गम्यत इति गतिरिति व्युत्पत्त्या प्राप्यभूते परावरेशे परेषां कारणानाम् अपराणां कार्याणाञ्च नियन्तरीत्यर्थः, त्वयि मतिः ज्ञानं जायते ॥ ५४ ॥

वी॥ यदुक्तं 'सोऽहं तवानुग्रहार्थं गुहामेतामुपागतः' इति, तत्सत्यमेव, किन्तु पूर्वमेव देहानुबन्ध्यपनयेन लिङ्गेन त्वयाऽनुगृहीतोऽहमिति मन्य इत्यभिप्रेत्याह—मन्ये इति॥ हे ईश यदृच्छया त्रिदशसाहायकव्याजेन राज्यरूपो योऽनुबन्धः पाशस्तस्यापगमोऽपायः कृत इत्येष महान् त्वयैवानुग्रहः कृत इति मन्ये,तस्यानुग्रहप्रयुक्तत्वे हेतुं वदन् तमेव राज्यानुबन्धापगमं विशिनष्टि—यइति । यो राज्यानुबन्धापनयस्साधुभिर्विवेकिभिस्तपसे वनं प्रवेष्टुमिच्छद्भिस्सार्वभौमैरेकचर्यया एकचर्यार्थम् एकाकित्वेन संचारार्थं प्रार्थ्यते॥

मु॥ अथ महात्मभिर्यः प्रार्थ्यते सोऽयं राज्यादिसङ्गविच्छेदो ममाप्रयत्नेन यदभूत् , असौ भवन्महानुग्रहप्रभाव इत्याह—मन्य इति ॥ हे ईश यदृच्छया मत्प्रयत्नमन्तरेणैव मम राज्यानुबन्धापगमः राज्यं राज्ञः कर्म अर्थसङ्ग्रहप्रजादण्डनादिव्यापारः स एवानुबन्धः अनुगतबन्धः तस्यापगमो निवृत्तिः ते त्वया कृतः, ननु सर्वप्रार्थनीयस्य राज्यानुबन्धस्य निवृत्तिः कथं मदनुग्रहस्स्यादित्यत्राह—य इति । साधुभिस्सत्त्वसम्पन्नैः अत एवैकचर्यया एकाग्रमनोवृत्त्या वनं विविक्षद्भिः तपसे प्रवेष्टुमिच्छद्भिः अखण्डैः अन्यूनविषयानुभवैरित्यर्थः, भूमिपैः योऽनुबन्धः प्रार्थ्यते, एतस्य राज्यानुबन्धस्येति पूर्वेणान्वयः ॥ ५५ ॥

न कामयेऽन्यन्तवपादसेवनादकिञ्चनप्रार्थ्यतमाद्वरंविभो ।
आराध्यकस्त्वामपवर्गदंहरेवृणीत आर्योवरमात्मबन्धनम् ॥ ५६
तस्माद्विसृज्याशिष ईशसर्वतोरजस्तमस्सत्त्व[१]गुणानुबन्धनाः ।
निरञ्जनंनिर्गुणमद्वयंपरंत्वां ज्ञप्तिमात्रंपुरुषंव्रजाम्यहम् ॥ ५७

वी ॥ तदेवं प्रतिवचनोपयुक्तार्थ उक्तः, अथ साक्षात्प्रतिवचनमाह—नकामयइति॥ हे विभो अकिञ्चनैरनन्यप्रयोजनैरेकान्तिभिरतितरां प्रार्थनीयात्तव पादसेवनादन्यं वरं न कामये अन्यो मदिष्टो वरणीयोऽर्थ एव नास्तीभिप्रायः,आर्यः श्रेष्ठो विवेकी चेत्को वा पुमान् साक्षान्मुक्तिप्रदं त्वामाराध्य आराधनेन प्रसन्नीकृत्य केवलमात्मा बध्यते येन तदात्मबन्धनं शब्दादिविषयजालं वृणीत वृणुयात्, मूर्खश्चेद्वृणीत इत्यर्थः ॥ ५६ ॥

मु॥ एवं विषयहेयतां तन्निवृत्तिपूर्वकं भगवद्विषयकज्ञानोत्पत्तिक्रमञ्च प्रपञ्च्य यदुक्तं भगवता वरान् वृणीष्वेति तत्रोत्तरमाह—नकामय इति ॥ अकिञ्चनैः दुष्करोपायान्तरशून्यैः प्रार्थ्यतमात् सौलभ्येन अनादिबन्धनिवृत्त्यर्थं अतिशयेन प्रार्थनीयादित्यर्थः तव पादसेवनादन्यं वरं न कामये तत् कुत इत्यत्राह—आराध्येति ॥ अपवर्गदं मोक्षप्रदं त्वामाराध्य आर्यः सुज्ञानसम्पन्नः कः आत्मबन्धनं स्वबन्धहेतुभूतवैषयिकसुखमित्यर्थः वृणीत ? ॥ ५६ ॥

वी ॥ यस्मात्त्वत्पादारविन्दसेवनमेव प्रार्थनीयं तस्मात् हे ईश सर्वतः सर्वाः रजस्तमस्सत्त्वगुणैः रजआदिगुणकार्यैः कामक्रोधादिभिः अनुबध्यन्ते पृष्ठतस्संबध्यन्त इति तथा कामक्रोधाद्युत्तरफलका इत्यर्थः, आशिषः कामान् विसृज्याहं त्वां व्रजामि, व्रज गतौ, गत्यर्थाः बुद्ध्यर्थाः, त्वत्प्राप्त्युपायत्वेन त्वामध्यवस्यामीत्यर्थः, शरण्यस्य तस्य जीवतुल्यत्ववारणाय तं विशिनष्टि—निरञ्जनं पुण्यपापसंबन्धरहितं प्रकृतिपारवश्यरूपाञ्जनरहितं वा, ननु किमहं मुक्तजीवः, नेत्याह—निर्गुणं कदापि गुणत्रयसंबन्धरहितम् अनेन बद्धदशायां गुणत्रयतत्कार्यरागादिसंबन्धवन्मुक्तव्यावृत्तिः, तर्हि किं नित्यसिद्धः—नेत्याह । अद्वयं द्वित्वरहितं समाभ्यधिकरहितं तत्सत्त्वे हीश्वरद्वित्वप्रसङ्गः, अतस्समाभ्यधिकराहित्यादीश्वरद्वित्वं नास्ति, नित्यसिद्धस्तु समाभ्यधिकवानिति तद्व्यावृत्तिः, अतः परं सर्वोत्कृष्टं सौलभ्याभावे केवलं परत्वं न शरण्यत्वप्रयोजकमतःसौलभ्यमाह—पुरुषं पुरुषरूपेण यदुषु वर्तमानमिति भावः,दिव्यात्मस्वरूपंनिर्दिशति—ज्ञप्तिमात्रमिति । मात्रशब्देन क्वचिदपि जडत्वव्यावृत्तिः,ज्ञानैकस्वरूपमित्यर्थः,अत्र पुरुषपदलभ्यं सौलभ्यमन्येषामपि वात्सल्यादिशरण्यतोपयुक्तगुणानामुपलक्षणम् ॥ ५७ ॥

मु ॥ अथ यदुक्तं भगवता मां प्रपन्नो जनः कश्चित् भूयोनार्हति शोचितुमिति तत्र सर्वकामवैमुख्येन स्वानुमतिं दर्शयन् भगवच्छरणागतिमाचरति—तस्मादिति ॥ तस्माद्विषयासक्तेः सर्वधात्याज्यत्वात् रजस्तमस्सत्वगुणैरनुबध्यन्त इति तदनुबन्धिनीः ऐश्वर्यशत्रूः तदनुमारणधर्मानुरूपा इत्यर्थः आशिषः कामान् विसृज्य निरञ्जनमपहतपाप्मानं निर्गुणं गुणत्रयरहितं अद्वयं द्वित्वरहितं " न तत्समश्चाभ्यधिकश्च दृश्यत " इति श्रुत्या तत्समाभ्यधिकदेवतान्तर निषेधादीश्वरद्वित्वं हि नास्ति ज्ञप्तिमात्रं स्वरूपे क्वचिदपि जडत्वरहितं मात्रचः कार्त्स्न्यार्थत्वं स्पष्टम् परं पुरुषं त्वां व्रजामि शरणं व्रजामीत्यर्थः॥

१. गुणानुबन्धिनीः, मु. भा. प्र. पा॥

चिरमिह वृजिनार्तस्तप्य[1]मानोरुतापैरवितृषषडमित्रोलब्धशान्तिः कथंचित् ।
शरणद समुपेतस्त्वत्पदाब्जं परात्मन्नभयमृतमशोकं पाहि माऽऽपन्नमीश ॥ ५८

श्रीभगवानुवाच—

सार्वभौम महाराज मतिस्ते विमलोर्जिता । वरैः प्रलोभितस्यापि न कामैर्विहता यतः ॥

प्रलोभितो वरैर्यस्त्वमप्रमादाय विद्धि तत् । न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचित् ॥

वी॥ इत्थं शरणं प्रतिपद्याथात्मनः कार्पण्यनिवेदनपूर्वकं रक्षां प्रार्थयते—चिरमिति॥ इह संसारे उरुभिर्विपुलैस्तापैराध्यात्मिकादिभिः तप्यमानोऽत एव चिरं वृजिनेन दुःखेनाऽर्तः पीडितः अविजिताष्षडमित्राश्शत्रवो मनष्षष्ठानीन्द्रियाणि येन सः 'अवितृषषडमित्रः' इति पाठे विगता तृषा येषां ते वितृषाः अवितृषास्ते षट् अमित्रा यस्येत्यर्थः, अत एवालब्धा शान्तिर्मनःप्रसादो येन तथाभूतोऽहं हे शरणद कथंचित्त्वत्सङ्कल्पादिवशेन त्वत्पदाब्जं समुपेतः शरणं गतवान्, पदाब्जं कथम्भूतं न विद्यते भयं संसारो यस्मात् अत एव न विद्यते शोको यस्मात् ऋतं सत्यं नित्यं वा अनेने स्वर्गयागादिसाध्यसाधनवैलक्षण्यमुक्तम् , हे परात्मन् परमात्मन् हे सर्वनियन्तः इत्थमापन्नमापदा व्याप्तम् अधुना प्रपन्नं मां पाहि संसृतिभयात् त्रायस्व ॥ ५८ ॥

मु ॥ अथ रजस्तमोभिव्याप्तिलुप्तधिया आत्मना एतावत्पर्यन्तं कृतदुरन्तदुष्कर्मालोच्य भयात् पश्चात्तप्तः स्वरक्षणं प्रार्थयते—चिरमिति ॥ तृडेव तृषा तृष्णा सा न विगतायेभ्यस्ते अवितृषाः षडमित्राः शत्रवः इन्द्रियलक्षणा यस्य सः अविरततृष्णालोलेन्द्रिय इत्यर्थः अत एव चिरं वृजिनैः पापैः आर्तः पीडितः अनुतापैः आर्तिजनितपश्चात्तापैस्तप्यमानः अन्तर्दह्यमान इत्यर्थः , अतः कथञ्चिल्लब्धशान्तिस्सन् न विद्यते भयं यस्मात्तदभयं ऋतं नित्यं सत्यमिति पूर्वैरभिहितं, नास्ति शोको यस्मात्तदशोकं त्वत्पदाब्जं समुपेतः प्रपन्नः हे शरणद ! रक्षणप्रद आपन्नं आपद्यार्तं मां पाहीति ॥ ५८ ॥

वी ॥ एवं विज्ञापितः प्राह भगवान्यावत्समाप्ति—सार्वभौमेति ॥ तव मतिः विमला रागादिमलरहिता ऊर्जिता बलवती निवृत्तिधर्मे एव दृढेत्यर्थः, कुतः यतः वरैर्हेतुभिः प्रलोभं प्रापितस्यापि तव मतिः कामैः विषयैः न विहता न विहन्यते ॥ ५९ ॥

मु ॥ एवं तेनोक्ते सति भगवान् किमाहेत्यत्राह—सार्वभौमेति ॥ वरैः "सर्वान् कामान् ददामिते" इत्युक्तैः प्रलोभितस्यापि ते मतिर्यतः कामैः न विहता अतः विमला निष्कल्मषा ऊर्जिता निश्रेयसकरीचेति ॥ ५९ ॥

वी ॥ वरैः प्रलोभित इति यत्तदप्रमादाय विद्धि बुद्धेरप्रमादार्थं विजानीहि, ननु प्रलोभनात्कदाचिद्बुद्धिप्रमादोऽपि स्यात्तत्तश्च भ्रश्येदत आह—नधीरिति ॥ मय्येकभक्तानाम् अनन्यप्रयोजनभक्तानां मतिः क्वचित्कदाचिदप्याशीर्भिः कामैः न भिद्यते न विहन्यते ॥ ६० ॥

मु ॥ किञ्च त्वं वरैः प्रलोभित इति यत् तदप्रमादाय प्रमादाय न भवत्येवेति विद्धि । तत् कुत इत्यत्राह—न धीरिति ॥ मय्येकान्तभक्तानां नियतभक्तानां धीः आशीर्भिः कामैस्सफलैरपीत्यर्थः नभिद्यते नासज्यत इत्यर्थः ॥ ६० ॥

---

१. मानोनुतापै. मु. भा. प्र. पा ॥

युञ्जानानामभक्तानांप्राणायामादिभिर्मनः। अक्षीणवासनंराजन्दृश्यतेक्वचिदुत्थितम्
विचरस्वमहींकामंमय्यावेशितमानसः। अस्त्येवनित्यदातुभ्यंभक्तिर्मय्यनपायिनी॥
क्षत्रधर्मेस्थितोजन्तूनवधीर्मृगयादिभिः। समाहितस्तत्तपसाजह्यघंमदुपाश्रयः ॥ ६३
जन्मन्यनन्तरेराजन्सर्वभूतसुहृत्तमः। भूत्वाद्विजवरस्त्वंवैमामुपैष्यसिकेवलम् ॥ ६४

इति श्रीभागवते महापुराणे दशमस्कन्धे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

---

वी॥ अभक्तानां तु भिद्यत एवेत्याह—युञ्जानानामिति ॥ प्राणायामादिभिः उपायैः युञ्जानानां नियुञ्जानानां मनोनियमनं कुर्वतां तु मनः अक्षीणवासनम् अक्षीणा वासना यस्य तत् हेतुगर्भमिदम्, तत्त्वात् क्वचिद्विषये कदाचिद्वा उत्थितं विषयप्रवणं दृश्यते ॥

मु॥ अनीदृशानां व्यतिरेकमात्रमाह—युञ्जानानामिति ॥ युञ्जानानां प्राणायामादिभिस्सष्टाङ्गैर्योगमाचरतामपीत्यर्थः, अभक्तानां मय्येकान्तभक्तिरहितानां मनः अक्षीणा वासना कर्मवासना यस्य तत् क्वचिदुत्थितम् अत एव कुत्रचिद्विषयोन्मुखं सदित्यर्थः, दृश्यते ॥ ६१ ॥

वी॥ विचरस्वेति॥ मयि आवेशितं मानसं येन तथाभूतस्त्वं महीं कामं यथेच्छं विचरस्व, मयि नित्यमनपायिनी भक्तिस्तु अस्त्येव, तथाऽनुगृह्णामीति भावः॥ ६२॥

मु ॥ अथ हरिः स्वविषयनिरन्तरभक्तिफलकाशीःप्रदानपूर्वकं तं यथेच्छसञ्चारे न्ययोजयदित्याह—विचरस्वेति ॥ मय्यनपायिनी अविच्छिन्ना भक्तिरेव नित्यदा सर्वदा तुभ्यमस्तु ॥ ६२ ॥

वी॥ ननु भक्त्येकलभ्यो भवान् तामन्तरेणाप्यधुना प्रत्यक्षितः, किमिति मुक्तिं विलम्बयसीति विदिततदभिप्रायः प्राह—क्षत्रेति ॥ क्षत्रवर्णोचितधर्मनिष्ठो मृगयादिभिः लोकरक्षानुपयुक्तमृगयादिव्यापारैः जन्तून् हतवानसि, ततः त्वम् अहमेवोपाश्रयस्संश्रयो यस्य सः मद्भक्तिनिष्ठस्सन् तपसा मत्प्राप्तिप्रतिबन्धकनिवर्तकेन भक्तियोगोत्पत्तिप्रतिबन्धकनिवर्तकेन वा तपसा जन्तुवधप्रयुक्तं पापं जहि अपनय, प्रत्यक्षितपरमात्मनामप्यघे प्रारब्धे तपसाऽनुभवेन वा विनाशिते सत्येव परमात्मप्राप्तिरिति भावः॥ ६३॥

मु॥ नन्वहं यथामनोरथं भोगानन्वभवम् इदानीं केनचिददृष्टविशेषेण मया भवतस्साक्षात्कारो लब्धः,अतः सद्य एव मुक्तिर्दीयतां 'विचरस्व महीं कामम्'इत्युक्तरीत्या किं कालविलम्बसहनोक्त्येत्याशङ्क्य स्वप्राप्तौ कालविलम्बे हेतुं तन्निवर्तनोपायञ्च जन्मान्तर एवावश्यं स्वप्राप्तिश्चाह—क्षत्रेत्यादिना ॥ मृगयादिभिर्लोकरक्षणानुपयुक्तव्यापारैरित्यर्थः, जन्तूनवधीः 'न हिं स्यात् सर्वा भूतानि' इति यागीयपशुहिंसाव्यतिरिक्तव्यर्थहिंसायाः प्रत्यवायावहत्वश्रवणे सत्यपि मदौत्कट्येन तदविगणय्य व्यर्थमेव जन्तून्निहतवानिति भावः,अतस्तदघमेतद्देहानन्तरमेव मत्प्राप्तेः प्रतिबन्धकमित्यर्थः,तर्हि तत् पापं कथं मे निवर्तेत इत्यत्राह—समाहित इति। समाधिनिष्ठस्सन्नित्यर्थः, कंविषयमवलम्ब्य समाधिं करोमीत्यत्राह—मदुपाश्रयइति। अहमेवोपाश्रयः ध्यानालम्बनं यस्य स सन् तपसा तत् पापं जहि निवर्तयेत्यर्थः,तपोध्यानादीनां प्रतिबन्धकपापक्षपणद्वारा तद्भक्तिजनकत्वादिति हृदयम् ॥ ६३ ॥

श्रीशुक उवाच—

इत्थंसोऽनुगृहीतोऽङ्गकृष्णेनेक्ष्वाकुनन्दनः। तंपरिक्रम्यसन्नम्यनिश्चक्रामगुहामुखात्
सवीक्ष्यक्षुल्लकान्मर्त्यान्पशून्वीरुद्वनस्पतीन्। मत्वाकलियुगंप्राप्तंजगामदिशमुत्तराम्।।
तपश्श्रद्धायुतोधीरोनिस्सङ्गोमुक्तसंशयः। समाधायमनःकृष्णेप्राविशद्गन्धमादनम्।।३
बदर्याश्रममासाद्यनरनारायणालयम्। सर्वद्वन्द्वसमश्शान्तस्तपसाऽऽराधयद्धरिम्।।४

वी ॥ कदा तर्ह्यघक्षयस्त्वत्प्राप्तिश्चेत्यत आह—जन्मनीति ॥ अनन्तरे एतज्जन्माव्यवहितोत्तरजन्मनि त्वं द्विजश्रेष्ठो भूत्वा सर्वभूतसौहार्दवान् समः कृत्स्नं जगद्ब्रह्मात्मकं पश्यंश्च केवलं प्रकृतिमण्डलात्परतः स्थितं मामुपैष्यसि प्राप्स्यसि, वै नूनम् ॥ ६४ ॥

मु ॥ ६४ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां त्रिपञ्चाशोध्यायः ॥ ५३ ॥

---

वी॥ अथावशिष्टं मुचुकुन्दवृत्तान्तम् इत्थं मुचुकुन्दमनुज्ञाप्यानुगृहीतवतो भगवतोऽनन्तरचेष्टितं चाह—इत्थमिति॥ अङ्ग हे राजन् श्रीकृष्णेनेत्थमनुगृहीतो मुचुकुन्दस्तं श्रीकृष्णं प्रदक्षिणीकृत्य प्रणम्य च गुहाद्वारान्निर्गतवान् ॥ १ ॥

मु॥प॥ जगज्जननसंहारपालनेष्वनपायिनीम् । हरेर्दीनावनोदारकटाक्षां श्रियमाश्रये ॥
दुष्टशिष्टक्षयक्षेमदीक्षितस्याखिलेशितुः । तत्तद्रूपानुरूपाङ्गीं शीतापाङ्गां श्रियम्भजे ॥
साधुक्षेमंविधायादौ सन्तःस्वानन्दकर्मणि।प्रवर्तन्ते हि पश्चादित्यभ्यधाय्यत्र मौनिना॥

इत्थमित्यादि ॥ अङ्गेति परीक्षितस्सम्बुद्धिः, स इक्ष्वाकुनन्दनः मुचुकुन्दः कृष्णेनेत्थमनुगृहीतस्सन् तं परिक्रम्य प्रदक्षिणीकृत्य सन्नम्य प्रणम्य गुहामुखात् निश्चक्राम निर्जगाम ॥ १ ॥

वी॥स मुचुकुन्दः क्षुल्लकानल्पपरिमाणान्मर्त्यादीनवलोक्य कलियुगं प्राप्तं विज्ञायोत्तरां दिशं प्रति जगाम, तपस इति शेषः ॥ २ ॥

मु ॥ क्षुल्लकान् अल्पपरिमाणकान् वीरुधो लताः वनस्पतयो वृक्षाः ॥ २ ॥

वी ॥ धीरो जितेन्द्रियः देहतदनुबन्ध्यादिष्वासक्तिरहितः मुक्तः संशयः सेत्स्यामि वा नवेत्येवंविधो येन सः श्रद्धायुतः कर्तव्यविषयत्वरायुक्तः कृष्णे भगवति स्वमनस्सम्यगाधाय स्थिरीकृत्य गन्धमादनं पर्वतं प्राविशत् ॥ ३ ॥

मु॥ तपश्श्रद्धायुतः तपसि विश्वासयुक्तः विश्वासे हेतुगर्भविशेषणत्रयमाह—धीर इत्यादि । कृष्णे मनस्समाधाय सम्यङ्निधाय गन्धमादनं गन्धेन तटरुहनवेरुप्रमुखवृक्षपुष्पसौरभेण मादयति क्रीडद्गन्धर्वमिथुनान्युन्मादयतीति व्युत्पत्त्या गन्धमादनाख्यं नगं प्राविशत् ॥ ३ ॥

वी ॥ तत्रापि बदर्यालयं नरनारायणयोराश्रमं प्राप्य सर्वाणि द्वन्द्वानि शीतोष्णादीनि सहत इति तथा शान्तः जितमनाः हरिमाश्रितबन्धहरं भगवन्तं तपसा आराधयामास ॥ ४ ॥

भगवान्पुनराव्रज्यमधुरांयवनावृताम्।हत्वाम्लेच्छबलंनिन्येतदीयंद्वारकान्धनम्॥५
नीयमानेधनेगोभिर्नृभिश्चाच्युतचोदितैः।आजगामजरासन्धस्त्रयोविंशत्यनीकपः॥६
विलोक्यवेगरभसंरिपुसैन्यस्यमाधवौ। मनुष्यचेष्टामापन्नौराजन्दुद्रुवतुर्द्रुतम् ॥ ७
विहायवित्तंप्रचुरमभीतौभीरुभीतवत्। पद्भ्यांपद्मपलाशाभ्यांचेरतुर्बहुयोजनम्॥८
पलायमानौतौदृष्ट्वामागधःप्रहसन्बली। अन्वधावद्रथानीकैरीशयोरप्रमाणवित् ॥ ९

मु॥ नरनारायणालयं पुरा आत्मारामस्य नरनारायणात्मकस्य भगवतः आश्रमभूतं बदर्याश्रममासाद्य गन्धमादनप्रान्तस्थलमित्यर्थः, सर्वद्वन्द्वं शीतोष्णादिसुखदुःखं सहत इति सर्वद्वन्द्वसहः कुत इत्यत्राह—शान्त इति ॥ चित्तप्रशान्तिसम्पन्नः तपसा हरिमाराधयत् अप्रीणयत् ॥ ४ ॥

वी ॥ अथ मुचुकुन्दानुग्रहानन्तरं भगवच्चेष्टितमाह—भगवानित्यादिना ॥ यवनैरावृतां मधुरामागत्य म्लेच्छानां बलं हत्वा तदीयं म्लेच्छसम्बन्धि सर्वं धनं द्वारकां प्रति निन्ये प्रापयामास ॥ ५ ॥

मु ॥ अथ हरिः किमकार्षीदित्यत्राह—भगवानित्यादिना ॥ यवनैरावृतां परिवेष्टितां मधुरां पुनरावृत्य एत्य तदीयं म्लेच्छसम्बन्धि धनं द्वारकां निन्ये इत्यव्यवहितप्रापणविवक्षया लिट्, अन्यथा उत्तरवाक्यार्थविरोधस्स्यात्॥ ५ ॥

वी ॥ अच्युतेन चोदितैः नृभिः कर्तृभिः गोभिः साधनैः धने नीयमाने सति पूर्ववत् त्रयोविंशत्यक्षौहिणीसैन्याधिपतिः जरासन्ध आजगाम ॥ ६ ॥

मु॥ अच्युतचोदितैः श्रीकृष्णनियुक्तैरित्यर्थः, गोभिर्नृभिश्च धने नीयमाने प्राप्यमाणे सति त्रयोविंशत्यनीकपः त्रयोविंशतिसङ्ख्याकान्यनीकानि तत्तद्योधकदम्बकानि पाति स्वयं तदधिपतित्वेन रक्षतीति तथा सन् जरासन्धः आजगाम तन्मध्ये पुनरागमत् ॥६ ॥

वी ॥ माधवौ रामकृष्णौ जरासन्धसैन्यस्य वेगरभसं वेगोद्रेकमवलोक्य मनुष्यचेष्टां प्राप्तौ चिकीर्षन्तौ हेतुगर्भं वा तत्त्वात् हे राजन् द्रुतं त्वरितं यथातथा दुद्रुवतुः पलायितवन्तौ ॥ ७ ॥

मु ॥ माधवौ बलकेशवौ रिपुसैन्यस्य वेगं रभसं वेगयुक्तं रणकरणहर्षं युद्धोत्साहमित्यर्थः, विलोक्य मनुष्यचेष्टामापन्नौ उत्तरत्र तद्वधस्यान्यदा कर्तव्यत्वात् तदा स्वमाहात्म्यं निगूह्य मर्त्यचेष्टामनुकुर्वाणावित्यर्थः ॥ ७ ॥

वी ॥ तदेवाह—विहायेति ॥ प्रचुरं प्रभूतं यावनं वित्तं विहाय भीतादपि भीतवत् पद्मपत्रसदृशाभ्यां पद्भ्यां बहुयोजनं देशं चेरतुः जग्मतुः ॥ ८ ॥

मु॥अभीतौ स्वतः अकुतोभयौ तथापि भीतः भीतिमान् ततोऽपि भीतवत् अतिभीतवदित्यर्थः,प्रचुरम् अतिप्रभूतं वित्तं विहाय यत्पत्न्याः कटाक्षलेशेन चतुर्मुखेन्द्रादेरैश्वर्यसम्पदाद्युत्कर्षं स्यात्तद्वल्लभस्य किं क्षुद्रधनलिप्सयेति भावः, पद्भ्यामेव पद्मपलाशाभ्यां तद्वदतिसुकुमारपादाभ्यां बहुयोजनं तन्मितन्देशं चेरतुः अपलायेताम् ॥ ८ ॥

वी॥ मागधो जरासन्धः तौ दृष्ट्वा बली स्वबलोपेतः दैहिकबलोपेतो वा ईशयोः रामकृष्णयोरप्रमाणवित् ईशयोः प्रमाणं स्वरूपगुणानन्त्यरूपं न वेत्तीति तथाभूतः रथानीकैः

प्रद्रुत्यदूरंसंश्रान्तौतुङ्गमारुहतांगिरिम्। प्रवर्षणाख्यंभगवान्नित्यदायत्रवर्षति ॥ १०
गिरौनिलीनावाज्ञाय[1]चाधिगम्यपदंनृप।ददाहगिरिमेधोभिस्समन्तादग्निमुत्सृजन्
ततउत्प्लुत्यतरसादह्यमानतटादुभौ । दशैकयोजनोत्तुङ्गान्निपेततुरधोभुवि ॥ १२
अलक्ष्यमाणौरिपुणासानुगेनयदूत्तमौ । स्वपुरंपुनरायातौसमुद्रपरिघांनृप ॥ १३
सोऽपिदग्धावितिमृषामन्वानोबलकेशवौ।बलमाकृष्यसुमहन्मगधान्मागधोययौ १४

---

रथसैन्यैस्सह अन्वधावत् अनुदुद्राव ॥ ९ ॥

मु ॥ ततोऽसौ किं कृतवानित्यत्राह—पलायमानाविति ॥ ईशयोः तयोः प्रमाणं शक्तेरियत्तां न वेत्तीति तथा ॥ ९ ॥

वी ॥ तौ रामकृष्णौ प्रद्रुत्य पलाय्य श्रान्तौ सन्तौ तुङ्गमत्युन्नतं प्रवर्षणाख्यं गिरिमारूढवन्तौ, आख्याया अन्वर्थतामाह—भगवानिति । भगवान्पर्जन्यो यत्र गिरौ नित्यदा वर्षति, प्रकृष्टं नित्यमस्मिन् वर्षतीति प्रवर्षणः, अधिकरणे ल्युट् ॥ १० ॥

मु ॥ तुङ्गम् एकादशयोजनोन्नतं प्रकर्षेण वर्षत्यस्मिन्निन्द्र इति व्युत्पत्त्या प्रवर्षण इत्याख्या यस्य तं गिरिं ददाह, भगवानिति । इन्द्र इत्यर्थः ॥ १० ॥

वी ॥ हे नृप स जरासन्धः पदं रामकृष्णयोः पदाङ्कितं तत्रतत्र भूप्रदेशम् अधिगम्यावलोक्य तेन लिङ्गेन गिरौ विलीनौ अन्तर्हितौ आज्ञायानुमाय 'नाधिगम्य'इतिपाठे तत्र विचिन्वन्नपि तयोः पदं नियतस्थानमज्ञात्वा केवलं तत्र विलीनौ ज्ञात्वा तं गिरिं सर्वतो दशयोजनम् एधोभिः काष्ठैः चितिं कारयित्वेति शेषः,तत्राग्निमुत्सृजन् ददाह ॥११॥

मु ॥ गिरौ तस्मिन्नेव पर्वते निलीनौ कुत्रचित् स्थले तौ निलीय स्थिताविल्येतावदाज्ञाय ज्ञात्वा पदं तयोर्निलयनस्थानं नाधिगम्य अविदित्वा एधोभिः गिरेः परितः प्रापितैः काष्ठभरैः हेतुभिरग्निमुत्सृजन् प्रक्षिपन् गिरिं ददाह ॥ ११ ॥

वी ॥ तदा दह्यमानानि तटानि यस्य तस्माद्गिरेरुत्प्लुत्य दशैकं च योजनानि यानि तावदुत्तुङ्गाद्गिरेर्मागधसंरोधदेशमतिक्रम्य परतः अधो निपेततुः ॥ १२ ॥

मु॥ ततस्तौ किमकुरुतामित्यत आह—तत इति॥ दह्यमानानि तटानि यस्य तस्मात् दशैकञ्च यानि योजनानि तावदुत्तुङ्गात् तस्मात् गिरेः अधो भुवि मागधसंरुद्धदेशात् परतः अधस्स्थले निपेततुः ॥ १२ ॥

वी ॥ ततो रिपुणा मागधेनादृश्यमानौ रामकृष्णौ समुद्र एव परिघा यस्यास्तां स्वपुरीं द्वारकां प्रति पुनराजग्मतुः ॥ १३ ॥

मु ॥ ततस्तौ किमकुरुतामित्यत्राह—अलक्ष्यमाणाविति ॥ सानुगेन ससैन्येन रिपुणा तेन अलक्ष्यमाणौ अदृश्यमानौ यदूत्तमौ स्वपुरीं पुनरायातौ आगतौ ; स्वपुरीमित्युक्ते मधुरामिति शङ्का स्यात्, तां निवारयितुमाह—समुद्रपरिघामिति ॥ १३ ॥

वी ॥ सोऽपि मागधोऽपि रामकृष्णौ दग्धाविति मृषा यथातथा मन्वानः बलं सैन्यमाकृष्यादाय मागधान् देशान्प्रत्याजगाम ॥ १४ ॥

मु ॥ १४ ॥

---

१. नाधिगम्य. मु भा. प्र. पा ॥

आनर्ताधिपतिश्श्रीमान्रैवतोरेवतींसुताम्। ब्रह्मणाचोदितःप्रादाद्बलायेतिपुरोदितम्
भगवानपिगोविन्द उपयेमेकुरूद्वह । वैदर्भींभीष्मकसुतांश्रियोमात्रांस्वयंवरे ॥ १६
[1]प्रमथ्यतरसाराज्ञस्साल्वादींश्चैद्यपक्षगान्।पश्यतांसर्वलोकानांतार्क्ष्यपुत्रस्सुधामिव
राजोवाच—
भगवान्भीष्मकसुतांरुक्मिणींरुचिराननाम्।राक्षसेन[2]विवाहेनउपयेमइतिश्रुतम्॥१८
भगवञ्श्रोतुमिच्छामिकृष्णस्यामिततेजसः। यथामागधसाल्वादीञ्जित्वैकःपुनरागमत्
ब्रह्मन्कृष्णकथाःपुण्यामाध्वीर्लोकमलापहाः।कोनुतृप्येतशृण्वानश्श्रुतज्ञोनित्यनूतनाः

---

वी ॥ अथ श्रीकृष्णस्य विवाहान्निरूपयितुकामः तावद्बलभद्रविवाहं नवमस्कन्धोक्तमनुस्मरति— आनर्तेति ॥ स्पष्टोऽर्थः ॥ १५ ॥

मु ॥ अथ भगवतो विवाहान् प्रपञ्चयिष्यन् नवमस्कन्धोक्तं बलभद्रविवाहन्तावदनुस्मारयति—आनर्तेत्यादिना ॥ आनर्तानाम् आनर्ताख्यानां देशानाम् अधिपतिः श्रीमान् सर्वसम्पत्पूर्णः रैवतो नाम राजा ब्रह्मणा चोदितः बलभद्राय कन्यां प्रयच्छेति नियुक्तः रेवतीं नाम सुतां प्रादात् ददाविति पुरा उदितम् उक्तञ्च ॥ १५ ॥

वी ॥ अथ भगवद्विवाहान्निरूपयितुकामः तावद्रुक्मिणीकल्याणं तद्विस्तरबुभुत्सामुत्पादयन् संग्रहेणाह—भगवानपीति द्वाभ्याम्॥ हेकुरूद्वह श्रियो लक्ष्म्याः मात्रामंशभूतां भीष्मकस्य राज्ञः सुतां वैदर्भीं यथा तार्क्ष्यपुत्रो गरुडः सुधामाजहार,तद्वत्स्वयंवरे सर्वभूतानां पश्यतां सतां चैद्यपक्षपातिनस्सर्वान्साल्वादीन् राज्ञः क्षत्रियान् तरसा बलेन प्रमथ्य आलोड्य अभिभूयेति यावत् , आहृतामितिशेषः, उपयेमे इत्यन्वयः ॥ १६ ॥ १७ ॥

वी ॥ तत्र तद्विस्तरबुभुत्सया पृच्छति राजा—भगवानिति ॥ रुचिरं सुन्दरमाननं यस्यास्ताम् उपयेमे विवाहितवानिति श्रुतं मयेति शेषः,त्वन्मुखादधुना श्रुतमिति भावः, नियुध्यानीतया विवाहो राक्षसविवाहः 'राक्षसो युद्धहरणात्'इतिस्मृतेः, यद्वा युद्धे हरणमेव राक्षसो विवाहः, तथाच राक्षसेन विवाहेन हेतुभूतेन पश्चाद्यथावदुपयेमे इत्यर्थः॥

वी॥ भगवन्निति ॥ यथा येन प्रकारेण मागधादीनेक एव सन् जित्वा पुनरागमत् , वैदर्भीमादायेति शेषः, तममिततेजसः श्रीकृष्णस्य जयागमनादिप्रकारं श्रोतुमिच्छामि ॥

वी ॥ आत्मनः श्रवणौत्सुक्यमाविष्करोति—ब्रह्मन्निति॥ हे ब्रह्मन् श्रीकृष्णस्य कथाः पुण्याः शृण्वतां वदतां च पुण्यावहाः माध्वीः श्रुतिसुखावहाः न केवलं पुण्या एव, अपितु शृण्वतो गदतश्च जनस्य मलापहाः पापघ्नीश्च अतस्ताः श्रुतज्ञः श्रोत्रेन्द्रियविषयसुखसारासारविवेकी चेत्कोवा पुमान् शृणुवान् शृण्वन् उवङ् दीर्घश्चार्षः, न सेवेत श्रुतज्ञश्चेत्सर्वोऽपि सेवेतेत्यर्थः, सत्यं सेवतेति सकृच्छ्रुत्वा पुनर्नसेवेतेत्यतस्ता विशिनष्टि—नित्यनूतनाइति ॥ २० ॥

मु ॥ भगवान् श्रियो मात्राम् अंशभूतां वैदर्भीं नाम सुताम् ॥ १६ ॥

मु ॥ राज्ञः प्रमथ्य जित्वा राक्षसेन विधानेन उपयेमे परिणिनाय, 'राक्षसो युद्धहरणात्'इति स्मरणात् राक्षसविवाहेनेत्यर्थः,तार्क्ष्यपुत्रो गरुडः सुधामिव यथा देवा

---

१. मु. भा. प्रकाशिकायां 'प्रमथ्य' इत्यादिश्लोकद्वयं परीक्षितप्रश्नतया व्याख्यातम्॥ २. विधानेन. मु. भा. प्र. पा॥

••◆( रुक्मिणीविवाहकथारम्भग्रन्थः. )◆••

श्रीशुक उवाच—

राजाऽऽसीद्भीष्मकोनामविदर्भाधिपतिर्महान् ।
तस्यपञ्चाभवन्पुत्राः कन्यैकाचवरानना ॥ २१

रुक्म्यग्रजोरुक्मरथोरुक्मबाहुरनन्तरः।रुक्मकेशोरुक्ममालीरुक्मिण्येषांस्वसासती ॥
[१]सापश्यन्तीमुकुन्दस्यरूपवीर्यगुणश्रियः। गृहागतैर्गीयमानास्तंमेनेसदृशंपतिम्॥२३
तांबुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम्।कृष्णश्चसदृशींभार्यां[२]समुद्वोढुंमनोदधे॥२४

सुरान् प्रमथ्य सुधामहरत्, तद्वदिति,पश्यतामित्यनादरे षष्ठी,ताननादृत्येत्यर्थः, उपयेम इति श्रुतं परिणीतवानिति पूर्वमेव सामान्यतश्श्रुतमित्यर्थः, नित्यनूतनाः बहुशः श्रुतत्वे सत्यपि अश्रुतपूर्ववत् नित्याश्चर्यकरीरित्यर्थः,शृणुवान् शृण्वन् कोनु श्रुतज्ञः कोवा शास्त्रार्थज्ञानवान् तृप्येत एतावता अलमिति श्रुतार्थसारवित् कस्तृप्तिं यायादित्यर्थः॥ १७॥२०॥

वी ॥ एवमापृष्टो विस्तरतो वर्णयति—राजाऽऽसीदिति॥ विदर्भाणां देशानामधिपतिः महान् गुणैरिति शेषः, तस्य भीष्मकस्य सुताः पञ्च, कन्यका त्वेकैव, सा च वरानना, आननग्रहणं सर्वावयवानामुपलक्षणम् , सर्वावयवसौन्दर्यवतीत्यर्थः ॥ २१ ॥

मु ॥ उत्तरमाह—राजेत्यादिना ॥ महान् श्लाघ्यगुणोन्नतः ॥ २१ ॥

वी ॥ पुत्रान्क्रमेण निर्दिशन् कन्यकाख्यामाह—रुक्मीति ॥ अग्रजो रुक्मी ततः क्रमेण रुक्मरथादयः, एषां रुक्म्यादीनां स्वसा भगिनी रुक्मिणी सती सुशीला ॥ २२ ॥

मु ॥ पञ्चपुत्राणां कन्यकायाश्च नामान्याह—रुक्मीत्यादिना ॥ २२ ॥

वी ॥ सा रुक्मिणी स्वगृहान् प्रत्यागतैः जनैः गीयमानाः श्रीकृष्णस्य रूपसौन्दर्यवीर्यगुणाः अन्ये गाम्भीर्यौदार्यादयः श्रीभोग्यभोगोपकरणादिसंपत्तिः, एताः पश्यन्ती शृण्वती तं मुकुन्दमेवात्मनः सदृशमनुरूपं पतिं मेने ॥ २३ ॥

मु ॥ रुक्मिण्याः श्रीकृष्णस्य च परस्परगुणाकर्णनेन अन्योन्यानुरागप्रकारमाह—सोपश्रुत्येत्यादिना ॥ गृहागतैः द्वारकानगरात् स्वगृहं प्रत्यागतैः वन्दिद्विजादिभिः गीयमानारूपवीर्यगुणश्रियः सौन्दर्यपराक्रमक्षान्त्यादिगुणसम्पदः उपश्रुत्य समीपे स्थित्वा आकर्ण्येत्यर्थः, तं श्रीकृष्णमेव सदृशं पतिं स्वानुगुणं भर्तारं यद्वा असदृशमिति न विद्यते सदृक् समानपुरुषव्यक्त्यन्तरं यस्य तम् अप्रतिममित्यर्थः, तादृशं पतिं मेने इति ॥२३॥

वी ॥ तथा कृष्णोऽपि गृहागतजनमुखाद्बुद्ध्यादिगुणैकतानां तां रुक्मिणीं श्रुत्वा आत्मनोऽनुरूपां भार्यां समुद्वोढुम् उपयन्तुं मनश्चक्रे ॥ २४ ॥

मु ॥ बुद्धिः विवेकरूपज्ञानं, लक्षणानि सामुद्रिकादिप्रसिद्धशुभचिह्नानि, औदार्यं दीनपोषणोपयुक्तद्रव्यदित्सा. रूपं लोकोत्तरसौन्दर्यं,शीलं परिशुद्धवृत्तिः,गुणाः सौहार्दगाम्भीर्यक्षमाशान्तिकारुण्यादयः, तेषामाश्रयामित्याश्रयशब्दस्य नियतपुलिङ्गत्वेऽप्यार्षत्वात् स्त्रीलिङ्गप्रयोगः, तदा रुक्मिणीं परिणेतुं दारयितुं कृष्णश्च मनो दधे तथा सङ्कल्पितवानित्यर्थः ॥ २४ ॥

१. सोपश्रुत्य. मु. भा. प्र. पा ॥ २. परिणेतुं. मु. भा. प्र. पा ॥

बन्धूनामिच्छतांदातुंकृष्णायभगिनींनृप । ततोनिवार्यकृष्णद्विड्रुक्मीचैद्यममन्यत ॥
तदवेत्यासितापाङ्गीवैदर्भीदुर्मनाभृशम् । विचिन्त्याप्तंद्विजंकञ्चित्कृष्णायप्राहिणोद्द्रुतम्
द्वारकांससमभ्येत्यप्रतिहारैःप्रवेशितः । अपश्यदाद्यंपुरुषमासीनंकाञ्चनासने ॥ २७
दृष्ट्वाब्रह्मण्यदेवस्तमवरुह्यनिजासनात् । उपवेश्यार्हयाञ्चक्रेयथाऽऽत्मानंदिवौकसः ॥
तंभुक्तवन्तंविश्रान्तमुपगम्यसतांगतिः । पाणिनाऽभिमृशन्पादावव्यग्रस्तमपृच्छत ॥

---

वी ॥ एवंस्थिते रुक्मी बन्धूनां रुक्मीतरेषामितिशेषः, कृष्णायैव भगिनीं दातुमिच्छतां सतां हेनृप ततस्तान्निवार्य श्रीकृष्णं द्वेष्टीति तथाभूतस्सन् चैद्यं शिशुपालमेव भगिन्याः पतिममन्यत चैद्यायैव दातुं निश्चिकायेत्यर्थः ॥ २५ ॥

मु॥ ततः किमासीदित्यत्राह —बन्धूनामिति॥ ततोऽनन्तरं बन्धूनाम् इच्छतां सतां तदनादृत्येत्यनादरे षष्ठी ; यद्वा तसेस्सार्वविभक्तिकत्वात् द्वितीयार्थे तसिः,तान्निवार्येति, चैद्यम् अमन्यत शिशुपालमेव तदनुगुणं वरम् अबोधीत्यर्थः, तत्र हेतुगर्भविशेषणम्—कृष्णद्विडिति ॥ २५ ॥

वी॥ तद्भ्रातुः निश्चितमालक्ष्य असितौ अपाङ्गौ यस्यास्सा वैदर्भी दुःखितचित्ता ततो विचिन्त्याप्तं कञ्चिद्द्विजश्रेष्ठं द्रुतं त्वरितं यथातथा श्रीकृष्णाय प्राहिणोत् श्रीकृष्णमानेतुं प्रेषयामासेत्यर्थः, "क्रियार्थोपपदस्य" इतिचतुर्थी ॥ २६ ॥

मु ॥ तदवेत्य तत्कार्यं ज्ञात्वा असितौ स्वभावादेव कज्जलाञ्चिताविव नीलौ अपाङ्गौ नेत्रान्तौ यस्यास्सा आप्तं द्विजं कृष्णाय प्राहिणोत् कृष्णम् आनेतुं प्रेषयामास ॥२६॥

वी ॥ स द्विजः द्वारकांप्रति गत्वा तत्र द्वारपालैरन्तः प्रवेशितः काञ्चनमये सिंहासने स्थितं जगत्कारणं पुरुषं श्रीकृष्णं ददर्श ॥ २७ ॥

मु॥ स विप्रः द्वारकां समभ्येत्य प्राप्य प्रतिहारैः द्वारपालैः प्रवेशितः विशन् आद्यं पुरुषं श्रीकृष्णम् अपश्यत् ॥ २७ ॥

वी ॥ तं दृष्टवन्तं द्विजमवलोक्य ब्रह्मणि कुले साधवो ब्रह्मण्याः, तेषां मध्ये देवः दीप्यमानः श्रेष्ठ इत्यर्थः, स भगवान्निजासनादवरुह्य द्विजमुपवेश्य अर्हयांचक्रे पूजयामास, यथा देवा आत्मानं पूजयन्ति तद्वत् ॥ २८ ॥

मु॥ ब्रह्मण्यदेवः ब्राह्मणपक्षपाती कृष्णः निजासनात् अवरुह्य स्वासनादुत्थाय उपवेश्य उपवेशनं कारयित्वा वरासन इति शेषः, दिवौकसः आत्मानं यथा आत्मानमिव तम् अर्हयाञ्चक्रे अपूजयत् ॥ २८ ॥

वी ॥ तमिति ॥ विश्रान्तं विगताध्वश्रमं तं द्विजम् उपगम्य स्वयं सतां गतिः श्रेयःप्राप्त्युपायत्वात्सद्भिरेवमनुष्ठेयमिति प्रदर्शयन्निवेति भावः, अभिमृशन् शनैस्संस्मर्दयन् अव्यग्रः अवहितचित्तस्तं द्विजमपृच्छत ॥ २९ ॥

मु ॥ सतां गतिः श्रीकृष्णः अव्यग्रः सावधानस्सन् पाणिना पादावभिमृशन् शनैः संवाहयन् तमपृच्छत इति, अत्र सर्वकारणेन सर्वप्राप्येन सर्वशेषिणा भगवता स्वलीलाविभूत्यन्तर्गतस्य स्वशेषभूतस्य स्वकल्पितवर्णाश्रमाचारनिष्ठस्य कस्यचित् विप्रस्य पादावमर्शनाद्युपचारकरणं स्वानुष्ठानव्याजेन लोकशिक्षार्थमिति बोध्यम् ॥ २९ ॥

श्रीभगवानुवाच—

कच्चिद्द्विजवरश्रेष्ठधर्मस्तेवृद्धसम्मतः । वर्ततेनातिकृच्छ्रेणसन्तुष्टमनसस्सदा ॥ ३०

सन्तुष्टोयर्हिवर्तेतब्राह्मणोयेनकेनचित् । अहीयमानस्स्वाद्धर्मात्सह्यस्याखिलकामधुक् ।

[१]असन्तुष्टोऽसकृल्लोकान्नाप्नोत्यपिसुरेश्वरः। अकिञ्चनोऽपिसन्तुष्टश्शेतेसर्वाङ्गविज्वरः

वी ॥ प्रश्नमेव वर्णयति—कच्चिदिति ॥ हेद्विजश्रेष्ठानामपि श्रेष्ठ तव धर्मः आर्यसम्मतो वर्तते कच्चित् मदिष्ट इति भावः, कोऽसावार्यसम्मतः त्वदिष्टश्चेत्यतो विशिनष्टि—नातिकृच्छ्रेण अनतिक्लेशेन अयत्नलब्धेन सदा सन्तुष्टं मनो यस्य तव धर्म इति पूर्वेण सम्बन्धः, सन्तोष एव ब्राह्मणस्य परमो धर्म आर्यसम्मतो मदिष्टश्चेति भावः ॥ ३० ॥

मु॥कच्चिदित्यादि ॥ द्विजवरेत्यनेन वर्णाश्रमोचिताचारपूर्तिरुक्ता, श्रेष्ठेत्यनेन सत्यदयादिगुणप्रयुक्तश्लाघ्यत्वमुक्तम्, वृद्धसम्मतः गुणवृद्धैरविगीतः ते धर्मः नातिकृच्छ्रेण अतिकृच्छ्रराहित्येन असम्बाधेनेत्यर्थः, वर्तते किमित्यर्थः, अत्र हेतुगर्भविशेषणमाह—सदा सन्तुष्टमनस इति । 'असन्तुष्टा द्विजा नष्टास्सन्तुष्टा इव पार्थिवाः' इत्याद्युक्तरीत्येति भावः ॥ ३० ॥

वी ॥ एतदेवोपपादयति—सन्तुष्टइति ॥ यर्हि यदा येनकेनचित् अयत्नलब्धेनैव देहधारणोपयुक्तेन सन्तुष्टः स्यात् स्वस्मात् धर्माद्वर्णाश्रमोचिताद्धर्मादहीयमानः वर्तेत, स हि नित्यसन्तोषरूपो धर्मः, अस्य नित्यसन्तुष्टस्य स्वधर्मादनपेतस्य च पुंसः अखिलान्कामानिष्टार्थान् दोग्धीति तथा. स्यादित्यत्र "पूर्वादिभ्यो नवभ्योवा" इति विकल्पात्स्मादादेशाभावः, अखिलकामधुगित्यनेन वृद्धसम्मतत्वं फलितम् , शिष्टसम्मतस्यैव धर्मस्य फलसाधनत्वाव्यभिचारात् , फलसाधनत्वाध्यवसायिनामेव शिष्टत्वात् ॥ ३१ ॥

मु॥ सदासन्तुष्टमनस इत्युक्तमेव प्रपञ्चयति—सन्तुष्टइति॥ येनकेनचित् यत्किञ्चिल्लाभेनेत्यर्थः, सन्तुष्टस्सन् स्वाद्धर्मादहीयमानइति येनकेनचित् सन्तोषाभावे चित्तवैकल्येन स्वधर्महानिः स्यादितिभावः, यर्हि यदि वर्तेत, स धर्मो हि अस्य ब्राह्मणस्य अखिलकामधुक् काम्यत इतिकाम इतिव्युत्पत्त्या काम इष्टार्थः, तत्पूरक इत्यर्थः ॥ ३१ ॥

वी ॥ एवं सन्तोषस्य पारलौकिकसुखसाधनत्वमुक्तम् , अथेहलोकेऽपि सुखहेतुत्वं वक्तुमसन्तोषस्योभयत्र दुःखहेतुतामाह—असन्तुष्टइत्यर्धेन ॥ सुरेश्वरोऽप्यसन्तुष्टश्चेल्लोकान् अनुकूलतया लोक्यन्त इति लोका आनन्दाः सुखानीतियावत् ,तानैहिकानामुष्मिकांश्च न प्राप्नोति, अकिञ्चनोऽपि सन्तुष्टश्चेत्सर्वाङ्गविज्वरः कस्मिंश्चिदङ्गेऽपि तापरहितश्शेते ॥ ३२ ॥

मु ॥ व्यतिरेकमाह—असन्तुष्ट इति ॥ सुरेश्वरोऽपि तादृक्सम्पत्तिपूर्णोऽपीत्यर्थः, असन्तुष्टश्चेत् असकृत् लोकानाप्नोति लोकाल्लोकान्तरं पर्यटन्नेवास्ते नत्वेकत्रनिवृत्ततृष्णस्तिष्ठतीत्यर्थः, नाप्नोतीति पाठे सुरेश्वरो भूत्वापि लोकान् नाप्नोति उत्तमलोकान् प्राप्य अप्राप्त इव क्लिश्यतीत्यर्थः, अकिञ्चनोऽपि सन्तुष्टश्चेत् सर्वाङ्गेषु हृदयादिषु विज्वरः तापरहितः शेत इति ॥ ३२ ॥

१. असन्तुष्टोऽसकृल्लोकानाप्नोत्यपि सुरेश्वरः, मु. भा. प्र. पा ॥

विप्रान्स्वलाभसन्तुष्टान्साधून्भूतसुहृत्तमान् ।
निरहङ्कारिणश्शान्तान्नमस्ये शिरसाऽसकृत् ॥ ३३

कच्चिद्वः कुशलं ब्रह्मन्राजतो यस्य हि प्रजाः। सुखं वसन्ति विषये पाल्यमानास्स मे प्रियः ॥
यतस्त्वमागतो दुर्गं निस्तीर्येह यदिच्छया । सर्वं मे ब्रूह्यगुह्यं चेद्वयं किङ्करवामहे ॥ ३५

श्रीशुक उवाच—

एवं संपृष्टसंप्रश्नो ब्राह्मणः परमेष्ठिना । लीलागृहीतदेहेन तस्मै सर्वमवर्णयत् ॥ ३६

---

वी ॥ अथ सन्तोषस्य स्वाभिमतत्वमाह—विप्रानिति ॥ स्वलाभेन स्वसत्तालाभेन "स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि । आत्मदास्यं हरेस्स्वाम्यं स्वभावं च सदा स्मर" इत्युक्तहरिदास्याद्यनुसन्धानप्रयुक्तात्मलाभेनेत्यर्थः, तेनैव सन्तुष्टान्साधून् परोपकारिणः निरहङ्कारिणः देहात्माभिमानरहितान् शान्तान् जितेन्द्रियान् द्विजानहम् असकृच्छिरसा नमस्ये नमस्करोमि, अतीव मदिष्टं कुर्वद्भ्यस्तेभ्यः प्रत्युपकर्तुमशक्तः केवलं नमस्करोमीत्यभिप्रायः ॥ ३३ ॥

मु॥ अथ सत्सु स्वकर्तव्यांशं तद्गुणकीर्तनपूर्वकमाह—विप्रानिति ॥ स्वलाभेन स्वतएव प्राप्तलाभेन "आत्मलाभेन स्वोज्ञातावात्मनि" इति नैघण्टुकाः, यद्वा सुष्ठु अलाभेन भगवत्सङ्कल्पसहकृततादृशादृष्टमहिम्ना कदाचित् देहधारणोपयुक्ततत्तद्द्रव्यालाभेनापीत्यर्थः; सन्तुष्टान् साधून् स्वधर्मनिष्ठान् भूतसुहृत्तमान् सर्वभूतहितपरान् उक्तगुणोत्कर्षावहगुणद्वयवैशिष्ट्यमाह—निरहङ्कारिणश्शान्तानिति ॥ अहङ्कारक्रोधौ क्षीरसुराबीजन्यायेन सर्वसद्गुणदूषकाविति भावः, एवंविधान् विप्रान् असकृत् सर्वदा शिरसा नमस्ये इति, अत्र सर्वकारणस्य सर्वशेषिणः सर्वप्राप्यस्य च भगवतः परब्रह्मभूतस्य पुरुषोत्तमस्य स्वविभूत्यन्तर्गतस्वनियोज्यस्वशेषभूतविप्रनमस्कारपादावनेजनाद्युपचाराचरणं "यद्यदाचरति श्रेष्ठः" इत्युक्तरीत्या स्वानुष्ठानव्याजेन लोकशिक्षार्थमिति बोद्धव्यम् ॥ ३३ ॥

वी ॥ हे ब्रह्मन् वो युष्माकं राजतः राज्ञस्सकाशात्कुशलं कच्चित् , यस्य राज्ञो विषये देशे प्रजाः पाल्यमानाः सुखं यथा तथा वसन्ति, स राजा मम प्रियः ॥ ३४ ॥

मु ॥ अथ सर्वज्ञोऽपि भगवान् लौकिकविधया तदागमनप्रयोजनादिकं पृच्छतीत्याह—कच्चिदित्यादिना ॥ वः तद्विषयवासिनां युष्माकं राजतः भीष्मकात् कुशलं कच्चित् ? क्षेमं भवति किम् ? एवं प्रजासौख्यकर्ता चेत् मत्प्रियश्च स एवेत्याह—स मे प्रिय इति ॥ ३४ ॥

वी ॥ यतो यस्माद्देशात् इह दुर्गं समुद्रजलात्मकं निस्तीर्य यदिच्छया यत्प्रयोजनेच्छया हेतुभूतया आगतः, तत्सर्वमगुह्यं चेन्नोऽस्मभ्यं ब्रूहि, वयं किंकरवामहे किङ्करा वयमित्यर्थः ॥ ३५ ॥

मु ॥ यतः देशात् यदिच्छया यस्य कार्यस्य साधनेच्छया दुर्गं जलदुर्गं समुद्रं निस्तीर्य तीर्त्वा इहागतः, अगुह्यम् अगोप्यश्चेत् सर्वं तत् ब्रूहि वद तत् किं कार्यं कीदृक् प्रयोजनं वा करवामहे सफलीकुर्म इति ॥ ३५ ॥

वी ॥ एवमिति ॥ लीलया हेतुभूतया गृहीतो देहो येन परो मा यस्मात्तस्मिन्म-

रुक्मिण्याप्रेषितस्तेऽहंसकाशंपुरुषोत्तम। तस्यास्सन्देशमाकर्ण्यक्रियतांतदनन्तरम् ॥ निधायलिखितंपत्रंपादयोःप्रणनामतम्।तदादायजगन्नाथस्स्मितसुन्दरलोचनः॥ वाचयामासधर्मात्मासादरंस्स्पृहयन्निव ॥. ३८

श्रीरुक्मिण्युवाच—

श्रुत्वागुणान्भुवनसुन्दरशृण्वतांतेनिर्विश्यकर्णविवरैर्हरतोऽङ्गतापम्।
रूपंदृशांदृशिमतामखिलार्थलाभंत्वय्यच्युताविशतिचित्तमपत्रपम्मे॥ ३९

हिम्नि तिष्ठतीति तथा "स्वे महिम्नि प्रतिष्ठितः" इति श्रुतेः, तेन भगवतेत्थं संपृष्टः संप्रश्नः प्रश्नविषयो यस्य स ब्राह्मणस्तस्मै श्रीकृष्णाय सर्वं पृष्टं वर्णयामास ॥ ३६ ॥

मु ॥ एवमिति ॥ सम्पृष्टः सम्यक् पृष्टः सम्प्रश्नः प्रष्टव्यार्थो यस्य स सन् सर्वं रुक्मिणीसन्देशमवर्णयत् ॥ ३६ ॥

वी॥वर्णनमेवाह—रुक्मिण्येति ॥ तव सकाशं समीपं प्रति प्रेषितः तस्या रुक्मिण्याः सन्देशं वाचिकमाकर्ण्य अनन्तरं तद्रुक्मिण्युक्तं क्रियतां यद्वा तदन्तरं श्रवणानन्तरं क्रियतां यथोचितमिति शेषः ॥ ३७ ॥

मु ॥ ३७ ॥

वी ॥ एवमुक्त्वा लिखितं रुक्मिण्येति शेषः, पत्रं पादयोः भगवत इति शेषः, निधाय तं कृष्णं प्रणनाम नमस्कृतवान्, तत्पत्रमादाय सादरं यथा तथा वाचयामास, ब्राह्मणमुखेनैवेति शेषः, कथम्भूतः? स्मितेन सुन्दरे लोचने यस्य सः धर्मात्मा याचितार्थप्रदानरूपधर्मप्रवणबुद्धिमान् स्पृहयन्निव वाचनेनैव लिङ्गेन तद्विषयकस्पृहां व्यञ्जयन्निवेत्यर्थः ॥ ३८ ॥

मु ॥ ३८ ॥

वी ॥ ब्राह्मणः कृष्णानुज्ञया वाचिकं वक्ति—श्रुत्वेति ॥ हे भुवनसुन्दर अनेन औत्सुक्यं द्योतयति, त्वद्गुणान् शृण्वतां जनानां कर्णरन्ध्रैरन्तः प्रविश्याङ्गतापम् आध्यात्मिकं तापं हरतः ते तव गुणान् तथा दृशिमतां चक्षुष्मतां दृशामखिलार्थानाम् अनुकूलविषयाणां लाभो यस्मात् तथाभूतं च तव रूपं च श्रुत्वा हे अच्युत मम चित्तं निर्लज्जं यथा तथा चित्तविशेषणं वा, त्वय्येवाविशति आसज्जते, क तव महिमा, क्वाहं रूपशीलादिवियुक्ता, तथाऽप्यपत्रपं निर्वि[illegible]तीत्यभिप्रायेणापत्रपमित्युक्तम् ॥ ३९ ॥

मु ॥ रुक्मिणीवाक्यान्येव स्वयं शुकवत् पठति—श्रुत्वेति ॥ हे अच्युत आश्रितरक्षणव्रतान्नच्युत अहन्त्वामाश्रि[illegible]ा, अतो मदुपेक्षा नवानेति भावः, ननु लोके स्त्रीपुरुषयोरन्योन्यसौन्दर्यमन्योन्यानुरागविषयः, ततः केनाकारेण मय्यनुरज्जसीत्यत्राह—भुवनसुन्दरेति। सुन्दरान्तरङ्गवेषेणापि जगत्सु त्वमेकएव सुन्दर इत्यर्थः. अनेन सम्बुद्धिद्वयेन श्रीकृष्णे लोकविलक्षणं तदौत्सुक्यन्द्योत्यते, शृण्वतामाकर्णयतां जनानां कर्णविवरैः निर्विश्य अन्तः प्रविश्य अङ्गतापं हरत इति गुणविशेषणम् ;अङ्गेति सम्बुद्धिर्वा, ते गुणान् दृशिमतां चक्षुष्मताम् अखिलार्थलाभं सर्वार्थलाभात्मकं रूपञ्च श्रुत्वा त्वयि सर्वजगन्मोहकसौन्दर्याकरे समस्तकल्याणगुणामृतसागरे पुरुषोत्तम इत्यर्थः, मे लौकिकगणनीय

कात्वामुकुन्दमहतीगुणरूपशीलविद्यावयोद्रविणधामभिरात्मतुल्यम् ।
धीरापतिंकुलवतीनवृणीतकन्याकालेनृसिंहनरलोकमनोभिरामम् ॥ ४०
तन्मेभवान्खलुवृतःपतिरङ्गजायामात्माऽर्पितश्चभवतोऽत्रविभोविधेहि ।
मावीरभागमभिमर्शतुचैद्यआराद्गोमायुवन्मृगपतेर्बलिमम्बुजाक्ष ॥ ४१
पूर्तेष्टदत्तनियमव्रतदेवविप्रगुर्वर्चनादिभिरलम्भगवान्परेशः ।

कुलशीलादिपरिमितगुणाथा इत्यर्थः, अतएव चित्तमपत्रपं निर्लज्जं सत् आविशति आसक्तं सन्न निवर्तत इति वर्तमानप्रयोगार्थः ॥ ३९ ॥

वी ॥ अहो कुलकन्यानामिदमतिधार्ष्ट्यमिति मा शङ्किष्ठा इत्याह—कात्वेति ॥ हे मुकुन्द हे नृसिंह नरश्रेष्ठ का नाम कन्या कुलवती तथा महती गुणोदारा तथा धीरा स्थिरचित्ता चेत्—त्वा त्वां पतिं न वृणीत, तेन न मय्येव केवलं दोषशङ्केति भावः, कथम्भूतं? गुणशीलादिभिरात्मनैव तुल्यं निरुपममित्यर्थः, द्रविणं द्रव्यसंपत्, धाम तेजः, प्रभाव इतियावत्, तथा नरलोकस्य मनसः अभिराममतीवानुकूलविषयभूतं किञ्च काले विवाहावसरे ॥ ४० ॥

मु ॥ अथ कथमहो कुलकन्यकानामिदमतिधार्ष्ट्यमिति न शङ्कनीयं नायमस्मद्दोषः किन्तु त्वद्गुणस्वभावएव तादृशः किं कुर्यामहमित्याह—कात्वेति ॥ कुलवती सत्कुलजा सत्कुलस्वभावप्रबुद्धमहागुणसम्पन्नेत्यर्थः, धीरा प्रज्ञाशालिनी हेयोपादेयविवेकसम्पन्नेत्यर्थः, का नाम कन्या मुकुन्दनृसिंहेत्याभ्यां ऐहिकामुष्मिकफलप्रदत्वं तद्विरोधिनिरसनसामर्थ्यञ्चोच्यते, कुलं सद्वंशः शीलं सद्वृत्तिः गुणाः वात्सल्यकारुण्यादयः, अनुरूपविद्या अनुगुणप्रज्ञा, वयो नित्ययौवनम्, द्रविणं लौकिकापेक्षितद्रव्यसंपत्तिः, धाम पराभिभवनसमर्थतेजोविशेषः, एतैरात्मतुल्यं स्वस्य स्वयमेव सदृशं 'गगनं गगनाकारं सागरस्सागरोपमः' इतिवन्निरुपममित्यर्थः नरलोकस्य मनोभिरामं त्वा त्वां काले उचितकाले न संवृणीत ॥ ४० ॥

वी ॥ तन्म इति ॥ हे विभो तत्तस्मान्मे मया भवान् खलु पतिः वृतः, आत्मा च भवते तुभ्यम् अर्पितः, अतः अङ्ग हे कृष्ण जायां भार्यां विधेहि त्वमागत्य मामिति शेषः, विपक्षे बाधकं द्योतयन्त्याह—मावीरभागमिति । हे अम्बुजाक्ष मृगपतेः सिंहस्य बलिं गोमायुः सृगाल इव वीरस्य तव भागभूतां मां चैद्यः शिशुपालः आराच्छीघ्रमागत्य माभिमर्शतु मा स्पृशतु ॥ ४१ ॥

मु ॥ तत् तस्मात् अङ्ग मे मया भवान् खलु पतिर्वृतः, आत्मा मज्जीवश्च भवते अर्पितः, सर्वथा मद्रक्षणभरन्यासस्त्वयि कृत इत्यर्थः, अतः विभो अत्रागत्य जायां विधेहि अत्रागत्यमां जायां स्वीकुर्वित्यर्थः, अन्यथा बाधकं द्योतयन्त्याह—मेति । वीरस्य तव भागं प्राप्तांशं मामिति शेषः चैद्यः आरात्समीपे आगत्य मृगपतेः सिंहस्य बलिं गोमायुवत् जम्बुक इव माभिमर्शतु मास्पृशतु, अत्राम्बुजाक्षेति सम्बुद्ध्या लोकोत्तरं सौन्दर्यादिकमात्तान्नाम, पुण्डरीकसौभाग्यजुषा त्वन्नयनसौभाग्येनैव सता जनलोकः प्रमुषितचित्तोऽभूत्, तत्राहं का नामेति भावः ॥ ४१ ॥

वी ॥ अनेकजन्मार्जितसुकृतैरिदमेव मे भूयादिति प्रार्थयते—पूर्तेति ॥ पूर्तं स्मार्तं

आराधितोयदिगदाग्रजएत्यपाणिंगृह्णातुमेनदमघोषसुतादयोऽन्ये ॥ ४२
श्वोभाविनित्वमजितोद्वहनेविदर्भान्गुप्तस्समेत्यपृतनापतिभिःपरीतः ।
निर्मथ्यचैद्यमगधेन्द्रबलंप्रसह्यमांराक्षसेनविधिनोद्वहवीर्यशुल्काम् ॥ ४३
अन्तःपुरान्तरचरीमनिहत्यबन्धूंस्त्वामुद्वहेकथमितिप्रवदाम्युपायम् ।
पूर्वेद्युरस्तिमहतीकुलदेवयात्रायस्यांबहिर्नव[1]वधूर्गिरिजामुपेयाम् ॥ ४४

कर्म वापीकूपतटाकादिनिर्माणं वा, इष्टं वैदिकं यागादिकर्म, दत्तादयः प्रदर्शनार्थाः, तत्र दत्तं दानं सत्पात्रे द्रव्यत्यागात्मकम्, नियमस्तीर्थस्नानादिः,व्रतं कृच्छ्रादि,देवादीनां द्वन्द्वः, तेषामर्चनम् आदिशब्देन भूतहितत्वदयादिसंग्रहः, एभिः यदि नूनं भगवानाराधितः स्यात्तर्हि गदाग्रजः श्रीकृष्णः एव आगत्य मम पाणिं गृह्णातु, न त्वन्ये दमघोषसुतादयः शिशुपालादयः ॥ ४२ ॥

मु ॥ अनेकजन्माचरितैस्सुकृतैः श्रीकृष्णएव मे पतिस्स्यादिति प्रार्थयते—पूर्तेति ॥ पूर्तं कूपतटाकादिनिर्माणम्, इष्टं यागादिकर्म, दत्तं पात्रदत्तसुवर्णादि, नियमः तीर्थाचरणादिनियमः, व्रतं कृच्छ्रचान्द्रायणादिकम्, देवविप्रगुरूणामर्चना उचितकाले पूजा, तदादिभिः सत्कर्मभिः परेशः परेषां ब्रह्मादीनामपि ईशो भगवान् नारायणः आराधितो यदि पूर्वं मया पूजितश्चेत् गदाग्रजः श्रीकृष्ण एत्य तत्फलत्वेनागत्येत्यर्थः, मे पाणिं गृह्णातु, अन्ये दमघोषसुतादयः चैद्यादयो न गृह्णन्त्वित्यर्थः॥ ४२ ॥

वी॥ननु बन्धुभिश्चैद्यायार्पितायां त्वयि किमधुना मया विधेयमित्यत्राह --श्वोभाविनीति॥हे अजित श्वो भाविन्युद्वहने विवाहे त्वं तावद्गुप्तः अलक्षित एवागत्य ततस्सेनापतिभिः परिवृतस्सन् चैद्यादिबलं निर्मथ्य पराभूय प्रसह्य हठाद्वीर्यं प्रभावदर्शनमेव शुल्कं वैवाहिकं देयं यस्यास्तां मां राक्षसेन विधिना उद्वहेत्युपदेशरहस्यम् ॥ ४३ ॥

मु ॥ अथ त्वय्यग्रजेन चैद्याय दत्तयां सत्याम् अधुना किम्मया कर्तव्यमित्यत आह—श्वइति॥ हेऽजित श्वोभाविन्युद्वहने विवाहे गुप्तः प्रथममलक्षितएव विदर्भान् समेत्य आगत्य ततः पृतनापतिभिः अनुपदमेवागच्छद्भिर्योधैः परीतस्सन् प्रसह्य हठात् वीर्यं निजप्रभावप्रकटनमेव शुल्कं कन्यायै वरेण देयं मूल्यं यस्यास्तां मां राक्षसेन विधिना उद्वहेत्युपदेशरहस्यम् ॥ ४३ ॥

वी ॥ ननु भवतु शिशुपालादिबलप्रमथनम्, अन्तःपुरगतायास्तव हरणे त्वद्बन्धुवधोऽपि प्रसज्येतेत्यत आह—अन्तःपुरेति॥ अन्तःपुरमध्यचरीं त्वां बन्धूनहत्वा कथमुद्वहे इतिचेत्तत्रोपायं वदामि,पूर्वेद्युः विवाहदिनादिति शेषः, महती कुलदेवयात्रा अस्ति, यस्यां यात्रायां बहिः पुरादिति शेषः, नववधूरहं गिरिजामम्बिकामुपेयां गच्छेयम्, दर्शनार्थमिति शेषः, अम्बिकागृहादेव मम हरणं सुकरमिति भावः ॥ ४४ ॥

मु ॥ नन्वस्तु चैद्यादिविरोधिमथनेन त्वदाहरणम्, अभिमतबन्धुवधपरिहारेण अन्तः पुरचारिण्यास्तव आहरणं कथं घटेतेत्यत्राह—अन्तःपुरेति ॥ कथं त्वामुद्वहे इति चिन्तयतस्ते उपायं प्रवदामीत्यध्याहृत्ययोजना पूर्वेद्युः विवाहात्पूर्वदिवसे कुलदेवया-

१. वधूर्गिरिजामुपेयात्, मु. भा. प्र. पा ॥

यस्याङ्घ्रिपङ्कजरजस्स्नपनंमहान्तोवाञ्छन्त्युमापतिरिवात्मतमोपहत्यै ।
यर्ह्यम्बुजाक्षनलभेयभवत्प्रसादंजह्यामसून्व्रतकृशाञ्शतजन्मभिस्स्याम्॥ ४५
ब्राह्मण उवाच—
इत्येतेगुह्यसन्देशायदुदेवमयाऽऽहृताः । विमृश्यकर्तुंयच्चात्रक्रियतांतदनन्तरम्॥ ४६
इति श्रीभागवते महापुराणे दशमस्कन्धे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

---

त्रा स्वकुलदेवतावन्दनार्थं तन्निलयं प्रति यात्रास्तीति । तस्याः स्वकुलक्रमादागतत्वेन विधिविहितवन्नैयत्यमाह—यस्यामिति॥नववधूः आसन्नपाणिग्रहणा कन्या यस्यां यात्रायाम् बहिरन्तःपुराद्बहिः वर्तमानां गिरिजामंबिकामुपेयादिति मत्कुलवृद्धानां परम्पराप्राप्तः साङ्केतिकोऽयं विधिरित्यर्थः अतस्तदेव मदाहरणं सुकरमिति भावः ॥ ४४ ॥

वी॥ननु किमनेनानर्थकारिणा निर्बन्धेन, चैद्योऽपि तावत्प्रख्यातगुणकर्मा योग्य एव वर इत्यत आह—यस्येति ॥ हे अम्बुजाक्ष यस्य भवतोऽङ्घ्रिरजोभिः स्नपनमात्मनः तमसोऽपहत्यै अज्ञाननिवृत्त्यै उमापतिरिव अन्येऽपि महान्तो वाञ्छन्ति, तस्य भवतः प्रसादं यर्ह्यहं न लभेय न प्राप्नुयाम् तर्हि व्रतैरुपवासादिभिः कृशा असून् प्राणान् जह्यां त्यजेयम् , ततःकिमित्यत आह—शतजन्मभिरपि स्यां तवाहं भार्या स्यामित्यर्थः ॥ ४५ ॥

मु ॥ अथ सर्वथा तदुपेक्षायां निश्चितमाविष्कुर्वन्त्याह यस्येति ॥ यस्य ते अङ्घ्रिरजोभिः पादपङ्कजरेणुभिः स्नपनं महान्तो महात्मानः आत्मतमोपहत्यै स्वाज्ञाननिवृत्त्यै उमापतिरिव वाञ्छन्ति शतजन्मभिस्स्यां भवत्पत्नीत्वरूपफलकामनया शतजन्मसुप्राप्यमाणेषु तत्र यज्जन्म मत्पुण्यपरिपाकेन सफलं स्यात् तावदित्यर्थः व्रतकृशान् तत्सावनव्रतैरेव क्षीणान् असून् जह्यां त्यजेयं, हे अम्बुजाक्ष ! भवत्प्रसादं पत्नीत्वेन मत्स्वीकाररूप भवदनुग्रहमित्यर्थः । यर्हि यदि अहं न लभेय नप्राप्नुयाम् अत्रायमन्वयक्रमः—उमापतिरिव महान्तः आत्मतमोपहत्यै यस्याङ्घ्रिपङ्कजरजस्नपनं वाञ्छन्ति. हे अम्बुजाक्ष; यर्हि-यदि भवत्प्रसादंतस्य भवतः प्रसादं न लभेय तदाव्रतकृशानसून् जह्यां शतजन्मभिस्स्यां, ' शतजन्मभिस्स्यात् ' इति पाठे भवत्प्रसादमित्यत्र तस्य भवतः प्रसाद इत्यर्थः ॥ एवमेव वारंवारं असून् जह्यां यावच्छतजन्मभिरपि स्यात् त्वत्प्रसाद इति शेषः ॥ ४५ ॥

वी ॥ इत्थं वाचिकं पठित्वाऽऽह द्विजः—हे यदुदेव इत्येवं विधा गुह्यतमाः सन्देशा मया आहृताः, अत्र यत्कर्तव्यं तद्विमृश्य क्रियतां तच्च समनन्तरमेव क्रियतामिति ॥

मु ॥ इत्येते गुह्यसन्देशाः रहस्यवाचकानि देव ! मया आहृताः आनीताः अत्र विमृश्य सम्यग्विचार्य यत्कर्तव्यं कर्तुमुचितम् अनन्तरमेव तत् क्रियताम् विधीयताम् 'विमृश्य कर्तुं यच्चात्रेति पाठे अत्र कार्ये यद्विमृश्य कर्तुमुचितमिति शेषः तद्विमृश्य क्रियताम् तच्चानन्तरमेव क्रियतामिति ॥ ४६ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे द्विपञ्चशोऽध्यायः ॥ ५२ ॥

इति श्रीभागवते दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां चतुःपञ्चशोऽध्यायः ॥

श्रीशुक उवाच—

वैदर्भ्यास्सतुसन्देशंनिशम्ययदुनन्दनः।प्रगृह्यपाणिना[1]पाणौप्रहसन्द्विजमब्रवीत्॥ १

श्रीभगवानुवाच—

यथासारुक्मिणीनित्यंमच्चित्ताऽऽस्तेसुशोभना।तथाऽहमपितच्चित्तोनिद्राञ्चनलभेनिशि
वेदाहंरुक्मिणाद्वेषान्ममोद्वाहोनिवारितः। तामानयिष्यउन्मथ्यराजन्यापशदान्मृधे॥
मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव॥ ३

श्रीशुक उवाच—

उद्वाहर्क्षंसविज्ञायरुक्मिण्यामधुसूदनः। रथस्संयुज्यतामाशुदारुकेत्याहसारथिम्॥ ४

---

वी ॥ वैदर्भ्या इति ॥ ततस्स भगवान् यदुनन्दनस्तु वैदर्भ्यास्सन्देशमाकर्ण्य स्वपाणिना द्विजं पाणौ गृहीत्वा प्रहसन्नुवाच ॥ १ ॥

मु-प॥स्वशेषतामुपारूढान्मनोवाक्कायकर्मभिः। हरिरालंबते निष्प्रत्यूहमित्यत्र सूच्यते॥ वैदर्भ्याइति ॥ पाणिना स्वहस्तेन पाणिं विप्रहस्तं प्रगृह्येत्यनेन महतो मन्दैस्सह नीरन्ध्रसंश्लेषलक्षणं भगवतस्सौशील्यमुच्यते ॥ १ ॥

वी ॥ उक्तिमेवाह—यथेति ॥ मच्चित्तेति निद्राया अलाभे हेतुः, तथा तच्चित्त इत्यपि ॥ २ ॥

मु ॥ इदमब्रवीदित्युक्तं प्रपञ्चयति—तथेति ॥ यथा वैदर्भी मिच्चन्ता निद्रां न लभते तथा अहमपीत्यर्थः, तस्यांचित्तं यस्य तच्चित्त इति ॥ २ ॥

वी ॥ हेत्वन्तरंचाह—वेदेति ॥ मयि द्वेषाद्धेतोः रुक्मिणा मदुद्वाहो निवारित इत्यहं वेद्मि, अतश्चाहं निद्रां न लभइत्यर्थः, अधुना तु राजन्याधमान्युद्धे उन्मथ्य अनवद्यानि निर्दुष्टानि शोभनान्यङ्गानि यस्याः अहमेव परो यस्यास्तां मच्चित्तां वा तां रुक्मिणीम् आनयिष्यामि उन्मथ्यानयने दृष्टान्तः एधसो दारुणोऽग्निशिखामिवेति ॥ ३ ॥

मु ॥ निद्राया अलाभे एकं कारणमुक्तम्! अन्यच्चाह—वेदेति ॥ ममोद्वाहः रुक्मिणीपाणिपीडनं रुक्मिणा चैद्यपक्षपातिना तदग्रजेन निवारित इतीदमपि वेद जाने त्वया-अनुक्तमेव जान इत्यर्थः। स्वकर्तव्यांशमाह—तामिति ॥ राजन्या एवापशदाः अथमपशवः तान् मृधे युद्धे उन्मथ्य आनयिष्ये आनेष्यामि। उन्मथ्यानयने अनुगुणं दृष्टान्तमाह—एधस इति ॥ अरणिरूपात् काष्ठादित्यर्थः, अनेन भगवतो यजमानसाम्यं रुक्मिण्याशिखिसाम्यं शत्रूणामेधस्साम्यंचोच्यते तथाच शत्रुमथनसामर्थ्यं वह्निशिखौज्वल्यं काष्ठनिष्ठुरत्वञ्च क्रमेणैषां द्योत्यत इति बोद्ध्यम् ॥ ३ ॥

वी ॥ इति ब्राह्मणमुक्त्वाऽथ सूतमाहेत्याह—उद्वाहेति ॥ मधुसूदनो रुक्मिण्या उद्वाहर्क्षं परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय सारथिमाह—किमिति हेदारुक रथस्संयुज्यतामश्वैस्संयुक्तः क्रियताम् ॥ ४ ॥

मु ॥ उद्वाहर्क्षं सविज्ञाय अत्र 'श्वो भाविनि त्वमजितोद्वहने विदर्भान्गुप्तस्समेत्य' इति रुक्मिणीसन्देशानुगुण्येन परश्वो रात्रौ विवाहनक्षत्रमिति विज्ञाय वर्तमानरात्र्याः प्रातर्विदर्भान प्रत्यगमादित्यर्थः ॥ ४ ॥

---

१. पाणिं. मु. भा. प्र. पा ॥

सचाश्वैस्सैन्यसुग्रीवमेघपुष्पबलाहकैः। युक्तंरथमुपानीयतस्थौप्राञ्जलिरग्रतः ॥ ५
आरुह्यस्यन्दनंशौरिर्द्विजमारोप्यतूर्णगैः। आनर्तादेकरात्रेणविदर्भानगमद्धयैः ॥ ६
राजासकुण्डिनपतिःपुत्रस्नेहवशङ्गतः। स्वांकन्यांशिशुपालायदास्यन्कर्माण्यकारयत्॥
पुरंसम्मृष्टसंसिक्तमार्गरथ्याचतुष्पथम्।चित्रध्वजपताकाभिस्तोरणैस्समलङ्कृतम्॥ ८
[1]स्रग्गन्धमाल्याभरणैर्विरजोम्बरभूषितैः। जुष्टंस्त्रीपुरुषैश्श्रीमद्गृहैरगरुधूपितैः ॥ ९

वी ॥ ततो दारुकः सैन्याद्याख्यैः चतुर्भिः श्रेष्ठैः अश्वैर्युक्तं रथमुप समीपमानीयाग्रतः पुरतः बद्धाञ्जलिस्तस्थौ ॥ ५ ॥

मु ॥ सैन्यः सुग्रीवो मेघपुष्पो बलाहकश्चेति चत्वारस्तद्रथाश्वाः तैर्युक्तम् ॥ ५ ॥

वी ॥ आरुह्येति ॥ तावत् द्विजमारोप्य ततस्स्वयमपि स्यन्दनं रथमारुह्य आनर्तात् स्वदेशाद्विदर्भान् देशान् हयैस्तुरगैरेकरात्रेणागमत्, तस्यां रात्र्यां प्रस्थाय प्रातर्विदर्भदेशानगमदित्यर्थः, 'श्वो भाविनि त्वमजितोद्वहने'इति रुक्मिणीसन्देशात् ॥ ६ ॥

मु ॥ रथमारुह्य द्विजञ्चारोप्य तूर्णगैः शीघ्रगामिभिः हयैः साधनैः एकरात्रेणैव आनर्तात् स्वाधिष्ठितदेशात् विदर्भान् भीष्मकदेशानगमदित्यर्थः ॥ ६ ॥

वी ॥ राजेति ॥ कुण्डिनपतिर्भीष्मकः पुत्रस्य रुक्मिणः स्नेहवशङ्गतः पुत्रस्नेहेन तत्परतन्त्रीभूत इत्यर्थः, दास्यन् 'लक्षणहेत्वोः'इति शत्रादेशः, दातुमित्यर्थः, कर्माणि पुरालङ्कारपितृदेवार्चनादीनि कारयामास ॥ ७ ॥

मु ॥ अथ तत्र भीष्मकक्रियमाणं वैवाहिकोत्सवक्रममाह—राजेत्यादिना ॥ पुत्रस्नेहेन रुक्मिविषयकस्नेहेन वशंगतः तत्परतन्त्रः अनेनवस्तुतोऽस्य शिशुपाले अप्रीतिर्द्योत्यते ॥ कर्माणि पुरप्रसाधनपितृदेवार्चनादीनि अकारयत् ॥ ७ ॥

वी ॥ कर्माण्येवाह—पुरमितिचतुर्भिः ॥ सम्मृष्टास्संसिक्ताश्च मार्गादयो यस्मिन् तत् चित्रध्वजेषु पताकास्ताभिस्तोरणैश्च सम्यगलङ्कृतमकारयत् ॥ ८ ॥

मु ॥ तत्र पुरमेवंविधमकारयदित्याह—पुरमित्यादिना द्वयेन ॥ सम्मृष्टाः सम्मार्जिनीभिश्शोधिताः संसिक्ताः कुङ्कुमकस्तूर्यादिवासितजलैस्समन्ततः सिक्ताश्च मार्गाः रथ्याः प्रतोल्यः चतुष्पथानि पूर्वपश्चिमादिवीथीमेलनमध्यस्थानानिच यस्मिन् तत् चित्राः नानावर्णरचनाविचित्राः ध्वजाः तत्तद्गृहद्वारोभयपार्श्वनिबद्धानि केतनानि पताकाः सौधोपरि निबद्धवैजयन्त्यः ताभिः तोरणानि इन्द्रचापसदृशानि नानारत्नग्रथितानि तत्र वीथीबद्धानि क्वचित् पल्लवग्रथितानि च तैस्समलङ्कृतम् । यद्वा चित्राः ध्वजेषु उन्नतवेणुदण्डादिषु पताकाः वस्त्रविशेषाः ताभिरित्यर्थः ॥ ८ ॥

वी ॥ स्रऽग्गन्धमाल्याभरणैरित्यत्र मत्वर्थीयोऽर्शआद्यच् द्रष्टव्यः,स्रगादिमद्भिः तथा विरजांम्बरैश्च भूषितैः स्त्रीपुरुषैर्जुष्टं तथा श्रीमद्भिः अगरुणा धूपितैर्गृहैश्च जुष्टम् ॥९

मु ॥ शोभनानि गन्धमाल्याभरणानि येषां तैः 'स्रगान्धमाल्याभरणैः' इति पाठे मतुबर्थो द्रष्टव्यः अत्र स्रङ्माल्ययोश्च तनुस्थूलमालाभेदेन पौनरुक्त्यपरिहारः कार्यः, विरजानि निर्मलानि अम्बराणि भूषणानि च येषान्तैः "कच्चधार्यं देहधार्यं परिधेयं विलेपनम् । चतुर्धाभूषणं प्राहुः स्त्रीणामन्यत्तु दैशिकम्" इत्यम्बरस्यापि भूषणत्वोक्तेः, एवंविधैः स्त्रीपुरुषैर्जुष्टं गृहैः श्रीमत् बहुधालङ्कृतगृहैः श्रीयुक्तञ्चाकारयदित्यन्वयः ॥ ९ ॥

1. सुगन्धमाल्याभरणैः. मु. भा. प्र. पा ॥

पितॄन्देवान्समभ्यर्च्य विप्रांश्च विधिवन्नृप। भोजयित्वा यथान्यायं वाचयामास मङ्गलम्
सुस्नातां सुदतीं कन्यां कृतकौतुकमङ्गलाम्। अहतांशुकयुग्मेन भूषितां भूषणोत्तमैः॥ ११
चक्रुस्सामर्ग्यजुर्मन्त्रैर्वध्वा रक्षां द्विजोत्तमाः। पुरोहितोऽथर्वविद्वै जुहाव ग्रहशान्तये ॥
हिरण्यरूप्यवासांसि तिलांश्च गुडमिश्रितान्। प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदां वरः
एवं चेदिपती राजा दमघोषस्सुताय वै। कारयामास मन्त्रज्ञैस्सर्वमभ्युदयोचितम्॥ १४
मदच्युद्भिर्गजानीकैस्स्यन्दनैर्हेममालिभिः। पत्त्यश्वसङ्कुलैस्सैन्यैः परीतः कुण्डिनं ययौ॥
तं वै विदर्भाधिपतिस्समभ्येत्याभिपूज्य च। निवेशयामास मुदा कल्पितान्यनिवेशने ॥

वी ॥ पितृन्देवांश्च सम्यगभ्यर्च्य हे नृप सविसर्गपाठे भीष्मकः विप्रान्यथाविधि भोजयित्वा विधिवत्समभ्यर्च्येति वा, यथान्यायं भोजयित्वा रुक्मिणीं प्रति मङ्गलं वाचयामास, यथान्यायमन्याश्च कन्याः प्रति मङ्गलं वाचयामासेति वार्थः ॥ १० ॥

वी ॥ कथम्भूताम्—सुस्नातामिति ॥ कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् अहतयोर्नवीनयोरंशुकयोर्युग्मेन भूषणोत्तमैश्चालङ्कृतां चक्रुरिति ॥ ११ ॥

मु ॥ कृतं कौतुकेन विवाहसूत्रेण मङ्गलं यस्यास्ताम् अहतेन नूतनेन अखण्डेन वा, अंशुकयुग्मेन भूषणोत्तमैः अनर्घभूषणैश्च भूषितां कन्यां प्रति मङ्गलं पुण्याहमन्त्रादिकं वाचयामासेत्यन्वयः ॥ १० ॥ ११ ॥

वी ॥ वध्वास्तस्याः कन्यायाः सामादिभिर्मन्त्रैः रक्षां च चक्रुः, अथर्वमन्त्रवित्पुरोहितः प्रतिकूलग्रहशान्त्यर्थं जुहाव ॥ १२ ॥

मु ॥ रक्षां रक्षासूत्रबन्धनं चक्रुः, अथर्ववित् अथर्वणमन्त्रज्ञः पुरोहितः ग्रहशान्तये जुहाव अग्निप्रतिष्ठापनपूर्वकं शान्तिपौष्टिकादिमन्त्रैः होमं चकार ॥ १२ ॥

वी ॥ हिरण्येति ॥ विधिविदां विधिज्ञानां वरो राजा भीष्मकः हिरण्यादीन् धेनूश्च विप्रेभ्यः प्रादात् ॥ १३ ॥

मु ॥ तदुचितदानान्याह—हिरण्येति ॥ १३ ॥

वी ॥ एवं यथा रुक्मिण्यै तथा दमघोषः सुताय शिशुपालाय च सर्वमभ्युदयोचितं कर्म मन्त्रज्ञैः द्विजैः कारयामास ॥ १४ ॥

मु ॥ अथैवमेव तत्र दमघोषोऽपि सुताय शिशुपालाय अभ्युदयोचितं आभ्युदयिकं सर्वं कृत्यं मन्त्रज्ञैर्विप्रैः कारयामास स्वस्थान एवेत्यर्थः ॥ १४ ॥

वी ॥ ततो मदजलानि स्रवद्भिर्गजानाम् अनीकैः हेम्नो माला येषां सन्तीति तथा तैः रथैः पदातिभिरश्वैश्च संकुलैर्व्याप्तैस्सैन्यैश्च परिवृतश्चैद्य इति शेषः, कुण्डिनं पुरं ययौ॥

मु ॥ ततस्तदागमनमाह—मदेति ॥ मदं च्यवन्त इति मदच्युन्ति तैः गजानीकैः हेममालिभिः सुवर्णमालिकालङ्कृतैः स्यन्दनैः रथैश्च पत्तयः पदातयो भटाः अश्वाश्च तैस्सङ्कुलैस्सैन्यैश्च परीतः वृतः कुण्डिनं भीष्मनगरं ययौ ॥ १५ ॥

वी ॥ तं चैद्यं समभ्येत्याभिपूज्य च कल्पितं निर्मितं यदन्यन्निवेशनं तस्मिन्मुदा निवेशयामास ॥ १६ ॥

तत्रसाल्वोजरासन्धोदन्तवक्रोविदूरथः।आजग्मुश्चैद्यपक्षीयाःपौण्ड्रकाद्यास्सहस्रशः॥
कृष्णरामद्विषोयत्ताःकन्यांचैद्यायसाधितुम् ॥ १७
यद्यागत्यहरेत्कृष्णोरामाद्यैर्यदुभिर्वृतः। योत्स्यामस्सहितास्तेनइतिनिश्चितमानसाः॥
आजग्मुर्भूभुजश्चान्येसमग्रबलवाहनाः ॥ १८
श्रुत्वैतद्बलवान्रामोविपक्षीयनृपोद्यमम्।कृष्णंचैकंगतंहर्तुंकन्यांकलहशङ्कितः ॥ १९
बलेनमहतासार्धंभ्रातृस्नेहपरिप्लुतः।त्वरितःकुण्डिनंप्रागाद्गजाश्वरथपत्तिभिः ॥ २०
भीष्मकन्यावरारोहाकाङ्क्षन्त्यागमनंहरेः।प्रत्यापत्तिमपश्यन्तीद्विजस्याचिन्तयत्तदा

---

मु ॥ ततः किमत आह—तमिति ॥ कल्पितं तदर्थं सज्जितं यदन्यनिवेशनं तस्मिन्निवेशयामास प्रवेशयति स्म ॥ १६ ॥

वी॥तत्रेति ॥ कृष्णरामौ द्विषन्तीति तथा ते चैद्यपक्षानुवर्तिनः साल्वादयः पौण्ड्राद्याश्च सहस्रशः यत्तास्सन्तः चैद्याय कन्यां साधयितुमाजग्मुः ॥ १७ ॥

वी॥कथंभूताः? रामाद्यैर्यदुभिः परिवृतः कृष्णः आगत्य यदि कन्यां हरेत्,तर्हि सर्वे वयं सङ्घीभूतास्तेन कृष्णेन सह योत्स्यामः, चैद्याय कन्यां साधयिष्यामः —इतीत्थं कृतः निश्चयो यैस्तथाभूताः, तथा अन्ये च भूभुजो राजानस्समग्राणि बलानि वाहनानि येषां तथाभूताः आजग्मुः ॥ १८ ॥

मु ॥ रामाद्यैः बलरामप्रमुखैः वृतस्सन् कृष्ण आगत्य यदि कन्यां हरेत् , तदा चैद्याय साधितुं तां कन्यां तस्मै बलाद्दापयितुमित्यर्थः, यत्तास्सन्नद्धास्सन्तः आजग्मुरित्यन्वयः ॥ १७ ॥ १८ ॥

वी ॥ बलवान्प्रशस्तबलसम्पन्नः रामः विपक्षीयाणां राज्ञामुद्यमं प्रयत्नं श्रुत्वा कन्यामाहर्तुं गतमेकमसहायं कृष्णं ज्ञात्वा नूनं तत्र कलहो भविष्यतीति शङ्काऽस्य संजातेति तथाभूतः भ्रातरि कृष्णे स्नेहेन व्याप्तः महता विपुलेन सैन्येन सह, बलमेव प्रपञ्चयति—गजाश्वरथपत्तिभिरिति।त्वरितः संजातत्वरः कुण्डिनं पुरं प्रति प्रागात्॥१९ २०

मु ॥ एतच्चैद्यागमनमित्यर्थः विपक्षीयाः विपक्षस्य चैद्यस्य सम्बन्धिनो ये नृपाः तेषामुद्यमं युद्धोद्योगश्च कन्यां हर्तुमेकमेव गतं कृष्णञ्च श्रुत्वेत्यन्वयः, शङ्काऽस्य संजाता कलहेन शङ्कितः कलहो भवितेति वितर्कवानित्यर्थः, रामः गजाश्वरथपत्तिभिः महता बलेन भटसैन्येन च सार्धं कुण्डिनं प्रतिप्रायात् ययौ, निरङ्कुशशक्तेः श्रीकृष्णस्य सर्वसंहारसामर्थ्यज्ञाने सत्यपि रामस्यैवं शङ्कयानुगमने हेतुगर्भविशेषणमाह—भ्रातृस्नेहपरिप्लुतइति ॥ १९ ॥ २० ॥

वी ॥ ततः पूर्वमेव रुक्मिणी औत्सुक्यादचिन्तयदित्याह--भीष्मकन्येति ॥ हरेरागमनमाकाङ्क्षन्ती द्विजस्य प्रेषितस्य प्रत्यापत्तिं प्रत्यागमनमपश्यन्ती चाचिन्तयत् ॥ २१॥

मु ॥ अथ विप्रविलम्बाकुला रुक्मिणी सूर्योदयात् पूर्वम् उत्कण्ठावेशेन किञ्चिदचिन्तयदित्याह—भीष्मकन्येति ॥ वरारोहा अतिसुन्दरनितम्बबिम्बा भीष्मकन्या रुक्मिणी हरेरागमनमाकाङ्क्षन्ती द्विजस्य प्रत्यापत्तिं पुनरागमनमपश्यन्ती तदा अचिन्तयत्॥ २१॥

अहोत्रियामान्तरितउद्वाहोमेऽल्पराधसः। नागच्छत्यरविन्दाक्षोनाहंवेद्म्यत्रकारणम्
सोऽपिनावर्ततेऽद्यापिमत्सन्देशहरोद्विजः। अपिमय्यनवद्यात्मादृष्ट्वाकिञ्चिज्जुगुप्सितं
मत्पाणिग्रहणेनूनंनायातिहिकृतोद्यमः ॥ २३
दुर्भगायानमेधातानानुकूलोमहेश्वरः। देवीवाविमुखीगौरीरुद्राणीगिरिजासती॥२४
एवंचिन्तयतीबालागोविन्दहृतमानसा। न्यमीलयतकालज्ञानेत्रे अश्रुकलाकुले॥ २५
एवंवध्वाःप्रतीक्षन्त्याःगोविन्दागमनंनृप। वामऊरुर्भुजोनेत्रमस्फुरन्प्रियशंसिनः॥
अथकृष्णविनिर्दिष्टस्सएवद्विजसत्तमः। अन्तःपुरचरींदेवींराजपुत्रींददर्शह ॥ २७

---

वी ॥ चिन्ताप्रकारमेवाह—अहो इति चतुर्भिः ॥ त्रियामा रात्रिः तावन्मात्रान्तरितो मन्दभाग्याया मम विवाहः,अरविन्दाक्षः कृष्णोऽधुनाऽपि नागच्छति, अत्र अनागमने कारणं न वेद्मि ॥ २२ ॥

मु ॥ तदाह—अहो इत्यादिना ॥ अल्पराधसः मन्दभाग्यया मे उद्वाहः पितृभ्रात्रादिकुलकल्पितो विवाहमुहूर्त इत्यर्थः, त्रियामान्तरितः एकरात्रिमात्रेण व्यवहितः॥ २२॥

वी ॥ यश्च मत्सन्देशहरो द्विजस्सोऽप्यद्यापि नावर्तते नागच्छति, अपि किं वा अनवद्यात्मा मुकुन्दः किञ्चिन्मयि जुगुप्सितं धाष्ट्र्यादिकं दृष्ट्वा मत्पाणिग्रहणे निमित्ते कृतः उद्यमः प्रयत्नो येन तथाभूतः नूनं नायाति, नागच्छत्येव किमित्यर्थः ॥ २३ ॥

मु ॥ नागच्छत्यरविन्दाक्ष इति विचिन्त्य पुनः दूतविलम्बः कार्यसिद्धिहेतुरिति लौकिकन्यायमनुसृत्याह—सोऽपीति॥ अनागमने पक्षान्तरमाशङ्कते—अपीति शङ्कायाम् , मत्पाणिग्रहणे कृतोद्यमः सन्देशप्रेषणात् पूर्वं कृतयत्नोऽपि मयि किञ्चिद्वचनैरेवोन्नीतं धाष्ट्र्यादि जुगुप्सितं दृष्ट्वा आलोच्येत्यर्थः, आप्तवचनस्य प्रत्यक्षसमानाकारप्रमाणतया दृष्ट्वेति प्रयोगः, नूनं नायात्यपीति ॥ २३ ॥

वी ॥ किं वा धाता विश्वकृन्महेश्वरो दुर्भगाया ममाननुकूल एव, किंवा रुद्रस्य स्त्री मम विमुखी प्रतिकूला ॥ २४ ॥

मु ॥ यद्वा दैवप्रातिकूल्येन तदागमनं प्रतिबद्धं वेत्याशङ्कते—दुर्भगाया इति ॥ मम तादृशभाग्ये फलोन्मुखेत्वेवं न स्यादिति भावः ॥ २४ ॥

वी ॥ एवमिति॥ इत्थं चिन्तयन्ती बाला रुक्मिणी गोविन्देन हृतं मानसं यस्यास्सा कालज्ञा नाधुनाऽपि गोविन्दागमनकाल इति मन्वाना अश्रुबिन्दुभिराकुले स्तब्धे लोचने न्यमीलयत निमीलितवती ॥ २५ ॥

मु ॥ कालज्ञा अधुना श्रीकृष्णागमनकाल इत्यौत्सुक्येन मन्वानेत्यर्थः ॥ २५ ॥

वी ॥ हे नृप इत्थं गोविन्दागमनं गोविन्दागमनवार्ताहरं द्विजं तदागमनद्वारं च प्रतीक्षन्त्याः रुक्मिण्या वामा ऊर्वादयः प्रियशंसिनः कृष्णागमनरूपप्रियसूचकाः अस्फुरन् सञ्चलितवन्तः ॥ २६ ॥

मु ॥ प्रियभाषिणः हितार्थसूचकाः वामनेत्रं वामऊरुर्भुजश्चैते अस्फुरन् अस्पन्दन्त ॥ २६ ॥

वी ॥ अथ ततः यः पूर्वम् आत्मना प्रेषितः स एव द्विजः कृष्णेनादिष्टोऽन्तःपुर-

सातंप्रहृष्टवदनमव्यग्रात्मगतिंसती।आलक्ष्यलक्षणाभिज्ञासमपृच्छच्छुचिस्मिता॥२८
तस्या आवेदयत्प्राप्तं[1]सरामंयदुनन्दनम् । उक्तंचसत्यवचनमात्मोपनयनंप्रति ॥२९
तमागतंसमाज्ञायवैदर्भीहृष्टमानसा । नपश्यन्तीब्राह्मणायप्रियमन्यन्ननामसा॥ ३०
प्राप्तौश्रुत्वास्वदुहितुरुद्वाहप्रेक्षणोत्सुकौ।अभ्ययात्तूर्यघोषेणरामकृष्णौसमर्हणैः॥ ३१
मधुपर्कमुपानीयवासांसिरुचिराणिसः।उपायनान्यभीष्टानिविधिवत्समपूजयत्॥३२

चरीं रुक्मिणीं ददर्श ह ॥ २७ ॥

मु ॥ अथेति ॥ कृष्णविनिर्दिष्टः त्वं पुरो गत्वा मां प्राप्तं कथयेति पुरोपवनं प्रविष्टेन श्रीकृष्णेनादिष्ट इत्यर्थः ॥ २७ ॥

वी ॥ सा रुक्मिणी नव्यग्रा आत्मनो देहस्य गतिर्यस्य प्रहृष्टं वदनं यस्य तं द्विजमालक्ष्य लक्षणाभिज्ञा दूतलक्षणतत्कार्याभिज्ञा अत एव शुचिस्मिता सती सम्यगपृच्छत् ॥ २८ ॥

मु ॥ अव्यग्रा गम्भीरा आत्मनो देहस्य गतिर्यस्य तम् आलक्ष्य आलोक्य लक्षणाभिज्ञा प्रहृष्टवदनत्वादिदूतलक्षणाभिज्ञा अतएव शुचिस्मिता समपृच्छत् ॥ २८ ॥

वी ॥ तस्यै पृच्छन्त्यै रुक्मिण्यै रामेण सहितं कृष्णं प्राप्तमागतमावेदयत् शशंस आत्मोपनयनं प्रति आत्मनो रुक्मिण्याः उपनयनं स्वसमीपप्रापणं प्रति भगवता यत्सत्यवचनमुक्तं 'तामानयिष्य उन्मथ्य राजन्यापशदान्मृधे । मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव' इत्युक्तं सत्यवचनं शशंसेत्यर्थः ॥ २९ ॥

मु ॥ तस्यै आवेदयदिति वाक्यं समाप्तम् , कथमित्यपेक्षायामाह—यदुनन्दनं प्राप्तं शशंसेति, आत्मोपनयनं प्रति उक्तं श्रीकृष्णोक्तं सत्यवचनं शशंसेति सम्यगवर्णयदित्यर्थः ॥ २९ ॥

वी ॥ ततस्तं कृष्णमागतं ज्ञात्वा हृष्टं मानसं यस्यास्सा रुक्मिणी ब्राह्मणाय प्रत्युपकर्तुं प्रियं योग्यं वस्त्वपश्यन्ती केवलं ननाम ॥ ३० ॥

मु ॥ तमिति ॥ तं श्रीकृष्णम् आगतं समाज्ञाय ज्ञात्वा हृष्टमानसा सन्तुष्टचित्ता वैदर्भी रुक्मिणी ब्राह्मणाय अन्यत् प्रत्युपकारार्थमित्यर्थः, वस्तु देयवस्तु नपश्यन्ती ननाम नमस्कारं विना तदुचितं प्रियवस्तु सर्वस्वार्पणमपि नाभूदेवेति भावः, यद्वा श्रियम्मां प्रणमतां सम्पदो भवन्ति, तस्यामेव मयि प्रणतायां किमुतेत्यतोऽधिकमन्यत् प्रियमपश्यन्ती ननामेति ॥ ३० ॥

वी ॥ प्राप्ताविति—स्वदुहितुरुद्वाहप्रेक्षणे निमित्ते उत्सुकौ प्राप्तौ उद्वाहदिदृक्षयाऽऽगतावित्यर्थः, श्रुत्वा तूर्यघोषेण समर्हणैः पूजासाधनैश्च सह अभ्याजगाम ॥ ३१ ॥

मु ॥ अथ रामकृष्णयोस्तत्पुरप्रवेशानन्तरं भीष्मकेण किं कृतमित्यत्राह—प्राप्ताविल्यादिना ॥ रामकृष्णौ स्वदुहितुः रुक्मिण्या उद्वाहप्रेक्षणोत्सुकौ विवाहोत्सवदर्शनोत्कण्ठितावेव प्राप्ताविति श्रुत्वा जनवादेन तदा आकर्ण्येत्यर्थः, समर्हणैः पूजोचितद्रव्यैः तूर्यघोषेण चेत्यभियानसाधनत्वविवक्षायां तृतीया, अभ्ययात् अभिमुखं ययौ ॥ ३१ ॥

वी ॥ ततस्स भीष्मको मधुपर्कादीनि समर्प्य यथाविधि सम्यगपूजयत्, तत्रोपायनानि श्रेष्ठवस्तूनि ॥ ३२ ॥

१. शशंस. मु. मा. प्र. पा ॥

तयोर्निवेशनंश्रीमदुपकल्प्यमहामतिः। ससैन्ययोस्सानुगयोरातिथ्यंविदधेयथा॥३३
एवंराज्ञांसमेतानांयथावीर्यंयथावयः। यथाबलंयथावृत्तंसर्वैःकामैस्समार्हयत् ॥ ३४
कृष्णमागतमाकर्ण्यविदर्भपुरवासिनः। आगत्यनेत्राञ्जलिभिःपपुस्तन्मुखपङ्कजम् ॥
अस्यैवभार्याभवितुंरुक्मिण्यर्हतिनापरा। असावप्यनवद्यात्माभैष्म्यास्समुचितःपतिः
किञ्चित्सुचरितंयन्नस्तेनतुष्टस्त्रिलोककृत्। अनुगृह्णातुगृह्णातुवैदर्भ्याःपाणिमच्युतः ॥
एवंप्रेमकलाबद्धावदन्तिस्मपुरौकसः ॥ ३७

मु ॥ मधुपर्कं दधिमध्वाज्यगुडमेलनात्मकं स्वगृहागतमहाजनदेयं वस्तु उपानीय समर्प्य विविधानि विचित्राणि वासांसि अभीष्टानि उपायनानि रत्नभूषणाद्युपहारांश्चोपनीयेत्यर्थः, विधिवत् यथाशास्त्रं समपूजयत् ॥ ३२ ॥

वी ॥ महामतिर्भीष्मकस्तयोः रामकृष्णयोः श्रीमत् भोग्यभोगोपकरणादिसमृद्धिमत् निवेशनं गृहमुपकल्प्य सभृत्ययोस्ससैन्ययोश्च तयोर्यथावदातिथ्यं चक्रे ॥ ३३ ॥

मु ॥ तयोरिति ॥ महामतिरित्यनेन बलात् कृष्णेन स्वकन्याहरणे कृतेऽपि एतत्स्वाभिमतं मत्वा वरोचितेनैव विधिना समपूजयदिति सूच्यते. यथा यथाशास्त्रमातिथ्यम् अतिथिसत्कारं विदधे ॥ ३३ ॥

वी ॥ इत्थमन्येषामपि सर्वेषां समुदितानां राज्ञां तत्तद्वीर्यवयःप्रभृत्यनुरूपं सर्वैः कामैः अपूजयत् ॥ ३४ ॥

मु ॥ एवमिति ॥ रामकृष्णयोरिवेत्यर्थः, समेतानां राज्ञां यथावीर्यं तत्पराक्रममनतिक्रम्य तदनुगुणमित्यर्थः, एवमन्यद्द्रष्टव्यम् , सर्वकामैरिष्टवस्तुभिः समार्हयत् पूजितवान्॥

वी ॥ कृष्णमिति ॥ विदर्भपुरवासिनः कुण्डिनपुरवासिनो जनाः कृष्णमागतं श्रुत्वा इतस्ततः स्थित्वेति शेषः, तस्य कृष्णस्य मुखपङ्कजं मुखपङ्कजस्थलावण्यसुधां नेत्ररूपैरञ्जलिभिः पपुः पीतवन्तः ॥ ३५ ॥

मु॥ अथ श्रीकृष्णस्य भाविशुभकार्याशंसामनोहरं सानुरागपुरजनवाक्यजातं वर्णयति– कृष्णमित्यादिना ॥ विदर्भपुरवासिनः कृष्णमागतमाकर्ण्य तत्रागतं श्रुत्वा आगत्य नेत्रैरेवाञ्जलिभिः तन्मुखपङ्कजं पपुः, अत्र नेत्राणामञ्जलित्वरूपणसामर्थ्यात् पपुरिति पानक्रियासामर्थ्याच्च मुखपङ्कजशब्देन तल्लावण्यरूपमकरन्दो व्यज्यते ॥ ३५ ॥

वी ॥ किञ्च एवमित्थं प्रेमकलाबद्धाः प्रेमाश्रुगद्गदस्वरास्सन्तः पुरौकसः पुरवासिनो जनाः ऊचुः, किमिति? असौ कृष्णः अनवद्यात्मा सुन्दरतरतनुः अपिशब्दो भैष्म्या अप्यनवद्यात्मत्वसमुच्चयार्थः, समुचितोऽनुरूपः पतिः; अत्रास्यैव रुक्मिण्येवार्हत्येव असावेव भैष्म्या एव समुचित एवेति षडवधारणानि, नोऽस्माभिः किञ्चित्सुचरितं स्वनुष्ठितं यद्यस्माकं प्राचीनं पुण्यमस्तीत्यर्थः, तेन सुचरितेन तुष्टः प्रीतः त्रिलोककृत् ब्रह्मा वैदर्भ्याः पाणिमच्युतो गृह्णात्विति अनुगृह्णात्विति ॥ ३६ ॥ ३७ ॥

मु ॥ अथ पुरौकसां श्रीकृष्णविषयकपरस्परालापानाह—अस्यैवेति ॥ अत्र समुचितशब्दो लिङ्गव्यत्ययेनात्रापि योज्यः, रुक्मिणीत्यध्याहारश्च, तथाच रुक्मिणी अस्यैव भार्या भवितुमर्हति रूपादिभिः तत्तुल्यतया अवश्यं रुक्मिण्येवार्हति, अतएव समुचितैव

कन्याचान्तःपुरात्प्रागाद्भटैर्गुप्ताऽम्बिकालयम् ।
पद्भ्यांविनिर्ययौद्रष्टुंभवान्याःपादपङ्कजम् ॥ ३८

साचानुध्यायतीसम्यङ्मुकुन्दचरणाम्बुजम् ।
यतवाङ्मातृभिस्सार्धं सखीभिःपरिवारिता ॥ ३९

गुप्ताराजभटैश्शूरैस्सन्नद्धैरुद्यतायुधैः ।
मृदङ्गशङ्खपणवास्तूर्यभेर्यश्चजघ्निरे ॥ ४०

नानोपहारबलिभिर्वारमुख्यास्सहस्रशः । स्रग्गन्धवस्त्राभरणैर्द्विजपत्न्यस्स्वलङ्कृताः॥
गायन्तश्चस्तुवन्तश्च गायकावाद्यवादकाः। परिवार्यवधूंजग्मुस्सूतमागधवन्दिनः॥४२

भार्या भवितुमर्हति, असावेव भैष्म्या एव पतिर्भवितुमर्हतीति असावेवार्हति समुचित एव पतिर्भवितुमर्हतीति षडवधारणानि, योज्यानि अत्रैकत्र नापरेति इतरनिषेध्यप्रदर्शनमप्यन्येषामप्युपलक्षणार्थम्, नचैवं वाक्यभेददोषः एवमनूद्य तत्तदितरनिषेधरूपविधेयविभेदाकारेण भिन्नवाक्यानामेवात्र सहप्रयोगादिति ॥ ३६ ॥

मु ॥ नः किञ्चित् सुचरितं यदस्ति, तेन तुष्टस्सन् त्रिलोककाङ्घाता अनुगृह्णातु अस्मन्मनोरथं सफलीकरोत्वित्यर्थः, अयमेवास्मासु तत्कृतोऽनुग्रह इति निर्दिशन्ति—गृह्णात्विति । प्रेमकलाभिर्भगवत्यनुरागप्रसरैराबद्धाः विषयान्तरनैस्पृह्येण दृढलग्नमनोवृत्तय इत्यर्थः, पुरौकसः तत्पुरवासिनो जनाः एवं वदन्तिस्मेति ॥ ३७ ॥

वी ॥ एवं स्थिते तदा भैष्मी कन्या भटैर्गुप्ता सती अन्तःपुरादम्बिकागृहं प्रति भवान्याः पादपङ्कजं द्रष्टुं पद्भ्यामेव निर्जगाम ॥ ३८ ॥

मु ॥ अथ रुक्मिण्या अम्बिकागारयात्रां वर्णयति—कन्याचेत्यादिना ॥ भटैर्गुप्ता तत्सौन्दर्यलोलुपनृपान्तरग्रहणशङ्कया शूरसन्दोहरक्षिता अम्बिकालयं प्रति प्रागात् ययौ, तस्याः गमनक्रमं विशिनष्टि—पद्भ्यामित्यादिना द्वयेन ॥ ३८ ॥

वी ॥ कथं भूता? सा रुक्मिणी मुकुन्दवदनाम्बुजं सम्यग्ध्यायन्ती यतवाक् मौनिनी मातृभिस्सखीभिश्च परिवारिता उद्धृतान्यायुधानि यैस्तैस्सन्नद्धैरायत्तैः शूरैः राजभटैः गुप्ता, तदा मृदङ्गादयो जघ्निरे वादिता इत्यर्थः ॥ ३९ ॥ ४० ॥

मु ॥ यतवाग्दृढमौनव्रता मातृभिरिति बहुवचनं पितृज्येष्ठकनिष्ठपत्नीसङ्ग्रहणार्थम् पूर्वं भटैर्गुप्तेति सामान्यतः उक्तमर्थं सविशेषमाह—गुप्तेति । मृदङ्गादयो वाद्यविशेषा जघ्निरे वादिताः ॥ ३९ ॥ ४० ॥

वी ॥ नानाविधैरुपहारैः नैवेद्यैः बलिभिः पूजासाधनैश्च सह सुष्ठ्वलङ्कृताः द्विजपत्न्यः गणिकोत्तमाश्च तथा गायका गायन्तः स्तुवन्तः सूतादयः वाद्यादीनां तूर्यादीनां वादकाः वादयन्तश्चेति शेषः, वधूं कन्यां परिवार्य परिवेष्ट्य जग्मुः ॥ ४१ ॥ ४२ ॥

मु ॥ नानेति ॥ वारमुख्या गणिकोत्तमाः नानाविधैरुपहारैर्भोज्यवस्तुकलापैः बलिभिः पूजाद्रव्यैश्च सार्धमित्यर्थः, जग्मुरिति सर्वत्रान्वयः ॥ ४१ ॥

मु ॥ वाद्यानि वादयन्तइति वाद्यवादकाः वाद्यवादकाश्च गायन्तो गायकाश्च स्तुवन्तः, सूतमागधवन्दिनश्च वधूं परिवार्य जग्मुरित्यन्वयः ॥ ४२ ॥

आसाद्यदेवसदनंधौतपादकराम्बुजा। उपस्पृश्यशुचिश्शान्ताप्रविवेशाम्बिकान्तिकम्
तांवैप्रवयसोबालांविधिज्ञाविप्रयोषि ॥भवानींवन्दयांचक्रुर्भवपत्नींभवान्विताम् ४४

नमस्येत्वाम्बिकेऽभीक्ष्णंस्वसन्तानयुतांशिवाम् ।
भूयात्पतिर्मेभगवान् कृष्णस्तदनुमोदताम् ॥ ४५

[1]इतिसंप्रार्थयन्तीसादेवींदेवमुनांशिवम् । पूजयामासविधिवद्द्विजपत्नीपुरस्कृता॥४६

वी ॥ आसाद्येति ॥ देवसदनमम्बिकापतिगृहम् उपगम्य तत्र धौते प्रक्षालिते पादाम्बुजे कराम्बुजे च यस्यास्सा उपस्पृश्याचम्य अतएव शुचिश्शान्ता समाहितचित्ता-चाम्बिकागृहं प्रविवेश ॥ ४३ ॥

मु॥ देवसदनमासाद्य तत्समीपं प्राप्येत्यर्थः, धौतपादकराम्बुजा प्रक्षालितपादपाणिः उपस्पृश्य शुद्धोदकैराचम्य अम्बिकालयं प्रविवेशेति ॥ ४३ ॥

वी ॥ ततः प्रवयसो वृद्धाः विधिज्ञाश्च विप्रयोषितः भवस्य पत्नीं भवेनान्वितां भवानीं प्रति तां कन्यां वन्दयांचक्रुः, यद्यपि भवानीमिति पुंयोगलक्षणङीषैव भवसम्बन्धलाभः, तथाऽपि साहित्यलाभार्थं तत्रापि भवस्याप्राधान्यसूचनार्थं भवान्वितामित्युक्तम् , पुंयोगश्चात्र भर्तृभार्यासम्बन्धविशेषरूप इति द्योतयितुं भवपत्नीमिति ॥ ४४ ॥

मु ॥ ततः किमासीदित्यत्राह—तामिति ॥ प्रवयसः वृद्धाः ननु वृथा वार्धकमित्याह—विधिज्ञा इति । देवतापूजाविधिज्ञा इत्यर्थः विप्रयोषितः तां बालां भवानीं वन्दयाञ्चक्रुः तया प्रणाममकारयन्नित्यर्थः, अत्र भवानीमित्युक्त्या मुनिना तदर्थप्रकाशनद्वारा भवपत्नीमिति तस्याः स्वपतिप्राधान्यं स्वभावत उक्तम् , ततश्चात्र स्त्रीकर्तव्यपूजादिकमौचित्येन भवस्योपसर्जनत्वं तत्पत्न्याः प्राधान्यञ्चोच्यते— भवान्वितामिति। अतो न कश्चिद्विरोधः ॥ ४४ ॥

वी॥ तदा रुक्मिणी नमस्य इत्यादिमन्त्रमपूर्वमेव स्वयं पश्यन्ती तन्मुखेन स्वमनीषितं च प्रार्थयन्ती यथावत्पूजयामासेत्याह—नमस्यइतित्रिभिः ॥ हे अम्बिके स्वसन्तानयुतां गणेशादिसहितां शिवां मङ्गलरूपां त्वामभीक्ष्णं पुनःपुनः नमस्ये नमस्करोमि, भगवान् कृष्णः मम पतिर्भूयादिति यत्, तदनुमोदताम् अनुगृह्णातु भवतीति कर्तृपदाध्याहारः, यद्वा कृष्णो मम पतिर्भूयात् कृष्ण एव तदनुमोदतामिति त्वमनुगृह्णीष्वेत्यर्थः ॥ ४५ ॥

मु ॥ तत्प्राधान्यमेव दर्शयन्नाह —नमस्य इति ॥ हे अम्बिके स्वसन्तानयुतां सकलविघ्ननिवारकविघ्नेशाद्यपत्ययुतां शिवां मङ्गलस्वरूपां त्वामभीक्ष्णं भूयोभूयो नमस्ये नमस्यामि, नमस्कारस्य किं फलमाशास्यं तवेत्यत्राह—भूयादिति । भगवान् ज्ञानादिषड्गुणसम्पूर्णः कृष्णः मे पतिर्भूयादिति मनोरथेन त्वां नमस्य इति, अयमेव तत्पूजाविधानमन्त्रश्चेति बोद्ध्यः, पूर्णस्यापि तस्य कथं त्वद्वरणे प्रीतिस्स्यादित्यत आह —तदनुमोदतामिति । तत् मद्वरणं प्रत्यनुमोदतां कृष्णस्सन्तोषेणानुकूलो भवत्वित्यर्थः, विप्रयोषितः तां बालां कर्त्रीं भवानीं कर्मभूतां वन्दयाञ्चक्रुरिति णिजन्तप्रयोगः, तया भवानीं प्रति वन्दनं कारयामासुरित्यर्थः ॥ ४५ ॥

वी ॥ इत्थं प्रार्थयन्ती सा रुक्मिणी द्विजपत्नीभिः पुरस्कृता पुरोऽवस्थापिता अबा-

१. अयं श्लोकः क्वचिन्न दृश्यते ॥

अद्भिर्गन्धाक्षतैर्धूपैर्वासस्स्रङ्माल्यभूषणैः। नानोपहारबलिभिःप्रदीपावलिभिःपृथक्
विप्रस्त्रियःपतिमतीस्तथातैस्समपूजयत्।लवणापूपताम्बूलकण्ठसूत्रफलेक्षुभिः॥ ४८
तस्यैस्त्रियस्ताः [१]प्रददुश्शेषांयुयुजुराशिषः।ताभ्योदेव्यैनमश्चक्रेशेषांचजगृहेवधूः४९
[२]मौनव्रतमथत्यक्त्वानिश्चक्रामाम्बिकागृहात्।प्रगृह्यपाणिनाभृत्यांरत्नमुद्रोपशोभिताम्

दिभिर्यथाविधि देवीम् उमां देवं शिवंच पूजयामासेत्यर्थः ॥ ४६ ॥

मु ॥ ४६ ॥

वी ॥ अद्भिश्शुद्धोदकैः गन्धैः चन्दनैरक्षतैश्च वासोभिः दिव्याम्बरैस्स्रग्भिर्माल्यै र्भूषणैश्च नानाविधैरुपहारैर्नैवेद्यैर्बलिभिश्च, यद्यपि 'वैदर्भीं भीष्मकसुतां श्रियो मात्राम्' इति लक्ष्म्यवतारत्वेनोक्ताया भगवन्नित्यानपायिन्यास्सर्वोत्तमाया रुक्मिण्याः केवलप्राकृतस्त्रिया इवाम्बिकावन्दनादिकमनुचितम् , तथाऽपि भगवत इव तमनुव्रताया अस्या मानव्यवतारत्वात् "यद्यदाचरति श्रेष्ठः" इति न्यायेन लोकानुग्रहशीलत्वाच्च तथा कृतमित्यवगन्तव्यम् ॥ ४७ ॥

वी ॥ ततस्तथा लवणापूपादिभिस्तैरबादिभिश्च पतिमतीः जीवद्भर्तृकाः विप्रस्त्रीश्च सम्यगपूजयत् ॥ ४८ ॥

मु ॥ अथ रुक्मिणी विप्रस्त्रीरपूजयदित्याह—अद्भिरित्यादिना ॥ वासस्स्रङ्माल्यभूषणैरित्यत्र स्रङ्माल्ययोस्तनुस्थूलपुष्पमालाविवक्षया परस्परभेदः कल्पनीयः, नानोपहारबलिभिरित्यत्र उपहाराः भक्ष्यद्रव्यविशेषाः, बलयो गन्धपुष्पादिपूजोपकरणविशेषाः, नानाविधैस्तैरित्यर्थः, अर्हणम् अर्घ्यार्थजलम् , अपूपाः गोधूमादिपिष्टविकाराः, कण्ठसूत्राणि हरिद्रारञ्जिततन्तवः, फलानि खर्जूरादीनि, इक्षवश्च, तैस्समपूजयत् , तैरेव पतिमतीस्सुमङ्गलीः विप्रस्त्रियश्च समपूजयदिति योजना ॥ ४७॥ ४८ ॥

वी ॥ ततस्ताः द्विजपत्न्यः शेषां स्वपूजोपयुक्तावशिष्टां सामग्रीं यद्वा शेषाशब्दस्त्रीलिङ्गो देवतोपभुक्तस्रगादिनिर्माल्यवाची, तदा शेषां गौर्युपभुक्तनिर्माल्यमित्यर्थः, तस्यै रुक्मिण्यै प्रददुः अलङ्काराद्यर्थमिति शेषः, तथा आशिषो युयुजुः पेठुः. तदा वधूः रुक्मिणी ताभ्यो द्विजपत्नीभ्यो देव्यैच नमश्चक्रे, शेषां जगृहेच ॥ ४९ ॥

मु॥ ताः स्त्रियश्च तस्यै रुक्मिण्यै आशिषः युयुजुः प्रायुञ्जत, शेषाः आशीर्वादमन्त्रसंस्कृतहरिद्राक्षतांश्च प्रददुः, ताभ्यः विप्रस्त्रीभ्यः देव्यै अम्बिकायैच नमश्चक्रे, शेषां ताभिर्दत्तामित्यर्थः ॥ ४९ ॥

वी ॥ ततो मौनव्रतं विहाय रत्नमुद्रिकाभिरुपशोभितां भृत्यां सखीं गृहीत्वा रत्नमुद्रिकोपशोभितं सखीपाणिं स्वपाणिना गृहीत्वेत्यर्थः, अम्बिकागृहान्निर्गतवती ॥ ५० ॥

मु ॥ मुनिव्रतं तत्पूजासमाप्तिपर्यन्तमवलम्बितं मौनादिकं त्यक्त्वा रत्नमुद्रोपशोभिना रत्नाङ्गुलीयकैर्दीप्यमानेन पाणिना भृत्यां दासीं प्रगृह्य अवलम्ब्य अम्बिकागृहात् निश्चक्राम निरगात् ॥ ५० ॥

१. प्रददुश्शेषाः. मु. भा. प्र. पा॥ २. मुनिव्रतं. मु. भा. प्र. पा ॥ ३. शोभिना. मु. भा. प्र. पा॥

तां देवमायामिव वीरमोहिनीं सुमध्यमां कुण्डलमण्डिताननाम् ।
श्यामां नितम्बार्पितरत्नमेखलां व्यञ्जत्स्तनीं कुन्तलशङ्कितेक्षणाम् ॥ ५१
शुचिस्मितां बिम्बफलाधर[1]द्युतिशोणायमानद्विजकुन्दकुड्मलाम् ।
पदा चरन्तीं कलहंसगामिनीं शिञ्जत्कलानूपुरधामशोभिना ॥
विलोक्य वीरा मुमुहुस्समागता यशस्विनस्तत्कृतहृच्छयार्दिताः ॥ ५२

वी ॥ तदा तां विलोक्य समागतास्सर्वे प्रसिद्धा वीरास्तद्दर्शनोदितकामातुरा मुमुहुरिति तृतीयश्लोकेनान्वयः, कथंभूतां? देवमायामिव सर्वाश्चर्यैकरीं मूर्तीभूतां देवमायामिव स्थितामित्यर्थः, वीरान्मोहयन्तीति तथा तां शोभनः कृशो मध्यप्रदेशो यस्याः कुण्डलाभ्यां मण्डितमाननं यस्याः तां श्यामाम् अजातरजस्कां नितम्बयोश्श्रोण्योरर्पिता निबद्धा रत्नमयी मेखला यस्याः व्यञ्जन्तौ यौवनप्रादुर्भावसूचकौ स्तनौ यस्याः कुन्तलेभ्यश्शङ्किते इव चपले ईक्षणे यस्याः ॥ ५१ ॥

मु ॥ अथैवमम्बिकालयान्निर्गत्य आगच्छन्त्यास्तस्याः सर्वाद्भुतावहसौन्दर्यादिकमवलोकयतां नृपाणां स्मरपारवश्यजनितावस्थाविशेषान्वर्णयन् श्रीकृष्णप्राप्तिमाह—तामित्यादिना ॥ तां विलोक्य वीराः मुमुहुरिति तृतीयश्लोकेनान्वयः,वीरमोहिनीं देवमायामिव वीरपुरुषमोहनार्थं देवैर्निर्मितां मायामिव स्थितामित्यर्थः, माया नाम स्त्रीवेषधारिणी सर्वसम्मोहिनी दैवी शक्तिः, श्यामां यौवनवयोमध्यस्थाम् ,अजातरजस्कामिति व्याख्याने तुङ्गस्तनीमित्युक्तिर्विरुध्येत, क्षत्रियकन्यानामुद्वाहात्पूर्वं रजस्सम्भवेऽपि दोषाश्रवणात् , व्यञ्जत्स्तनीमिति पाठेतु येन केनापि प्रकारेण वा न विरोधः, कुन्तलेभ्यश्शङ्किते भीते तद्वच्चलाचले इत्यर्थः, ईक्षणे नयने यस्यास्ताम् ॥ ५१ ॥

वी ॥ शुचि स्मितं यस्याः बिम्बफलमिव योऽधरोष्ठस्तस्य द्युभिः कान्तिभिः शोणायमाना द्विजा दन्ता एव कुन्दानां कुड्मलानि मुकुलानि यस्यास्तां कलहंसवद्गच्छतीति तच्छीला तथा तां कला शोभा तद्वती नूपुरे शिञ्जन्तौ च ते कलानूपुरे च तयोः धाम दीप्तिस्तेन शोभत इति तथोक्तेन पदा पादेन पद्भ्यामित्यर्थः, चलन्तीम् ॥ ५२ ॥

मु॥बिम्बफलवद्योऽधरः तस्य द्युत्यः द्युतयः अरुणिमान इत्यर्थः,ताभिश्शोणायमानानि अरुणायमानानि द्विजाः दन्ताएव कुन्दकुड्मलानि यस्यास्ताम् , शिञ्जतोः शिञ्जानयोः मधुरं शब्दायमानयोरित्यर्थः, कलानूपुरयोः कलाप्रधाननूपुरयोः स्वर्णकारशिल्पविद्यासौष्ठवपरिस्फूर्तिदेदीप्यमानमणिमञ्जीरयोरित्यर्थः, 'कलाशिल्पे कालभेदे' इति नैघण्टुकाः, धाम्ना तेजसा शोभते प्रकाशत इति तथाभूतेन पद्भ्यामित्यर्थः, चरन्तीं सञ्चरन्तीं यद्वा श्रीकृष्णागमनप्रतीक्षया तदागमनपर्यन्तविलम्बार्थश्च इयं गच्छत्येवेति लोकप्रतीतिजननार्थं च एकं पादं भुवि विन्यस्य च चलितेनेतरपादेन गच्छन्तीमिव नाटयन्तीमित्यर्थः तां विलोक्य यशस्विनः धैर्यसंलब्धकीर्तयोऽपीत्यर्थः समागताः तां द्रष्टुमागता वीराः तया कृतः तद्दर्शनोद्बोधितः हृच्छयो मदनः तेनातुराः पीडितास्सन्तः मुमुहुः मोहमभजन्त ॥ ५२ ॥

१. द्युतीशोणायमान. मु. भा. प्र. पा ॥

यांवीक्ष्य तेनृपतयस्तदुदारहासव्रीडावलोकहृतचेतसउज्झितास्त्राः ।
पेतुःक्षितौगजरथाश्वगताविमूढाःयात्राच्छलेनहरयेऽर्पयतींस्वशोभाम् ॥५३
सैवंशनैश्चलयतीपदपद्मकोशौ प्राप्तिंतदाभगवतःप्रसमीक्षमाणा ।
उत्सार्यवामकरजैरलकानपाङ्गैः प्राप्तान्ह्रियैक्षतनृपान्[1]ददृशेऽच्युतञ्च ॥५४
तांराजकन्यांरथमारुरुक्षतीं जहारकृष्णोद्विषतांसमीक्षताम् ।
रथंसमारोप्यसुपर्णलक्षणं राजन्यचक्रम्परिभूयमाधवः ॥

वी ॥ न केवलं मुमुहुः, अपितु पेतुश्चेत्याह—यामिति ॥ रथाद्यारूढास्ते नृपतयो यात्रामिषेण हरये स्वलावण्यमर्पयन्तीं यां वीक्ष्य तस्या उदारहासेन व्रीडावलोकनेन च हृतानि चेतांसि येषां ते अत एव विमूढाः अत एव च उज्झितानि त्यक्तान्यस्त्राणि यैस्ते भूमौ निपेतुः ॥ ५३ ॥

मु॥ अथ न केवलं ते मुमुहुः, किन्त्ववशास्सन्तो भुवि निपेतुश्चेत्याह—यामिति ॥ ते नृपतयो यां वीक्ष्य तस्याः उदाराभ्यां द्रष्टृणां स्मरविकारप्रदातृभ्यां हासमुग्धावलोकाभ्यां हृतचेतसः आकृष्टचित्ताः व्रीडावलोकनेतिपाठे लज्जासङ्कुचद्विलोकनमर्थः, गजरथाश्वगता एव विमूढाः मूर्च्छापरवशाः अतएव उज्झितास्त्रास्सन्तः क्षितौ निपेतुः, तन्निश्चयं स्फुटयितुं तां विशिनष्टि—यात्रेति । अम्बिकादर्शनार्थयात्राव्याजेनेत्यर्थः, स्वशोभां स्वलावण्यसम्पदं हरये श्रीकृष्णाय अर्पयन्तीम् उन्मस्तकनिरन्तरध्यानमहिम्ना पुरस्स्फुरते श्रीकृष्णमूर्तये इदं त्वदीयं वस्त्विति समर्पयन्तीमिति भावः ॥ ५३ ॥

वी॥ सैवमिति॥ सा रुक्मिणी इत्थं पद्मकोशतुल्यौ चरणौ शनैश्शनैश्चलयती तत्र हेतुर्भगवतः श्रीकृष्णस्य प्राप्तिं प्रसमीक्षमाणा वामकरनखैः अलकानुत्सार्य अपाकृत्य अपाङ्गैस्तान्प्राप्तान् नृपान् ह्रिया अवैक्षत, तदैवाच्युतं च ददर्श ॥ ५४ ॥

मु ॥ सेति ॥ एवमुक्तरीत्या सा रुक्मिणी तदा भगवतः प्राप्तिमागमनं प्रतीक्षमाणा कदा सम्भवेदिति प्रतीक्षमाणा पदपद्मकोशौ पद्मकोशसदृशौ पादावित्यर्थः, शनैश्चलयती आकृष्णागमनविलम्बार्थं मन्दमन्दं गच्छन्तीत्यर्थः. वामकरजैः वामहस्तनखैः अलकान् गमनवशाद्विश्लिष्य दृष्टिप्रसारप्रतिरोधिनश्चूर्णकुन्तलान् उत्सार्य पार्श्वयोः प्रसार्य अपाङ्गैः कटाक्षैः प्राप्तान् नृपान् ह्रियैक्षत लज्जाकुला न्यवीक्षत, तदैव सा अच्युतं ददृशे एतेष्वागत्याच्युतस्स्थितो वा नवेति परामर्शार्थं यदा व्यलोकत तदैवागत्य वर्तमानं कृष्णं ददर्शेत्यर्थः, अत्र सा नृपान् ह्रिया ऐक्षत सा अच्युतं ददर्शेति तच्छब्दस्य क्रियाद्वयेन अन्वयः ॥ ५४ ॥

वी ॥ तामिति ॥ तदा कृष्णः रथमारोढुमिच्छन्तीं तां राजपुत्रीं द्विषतां चैद्यादीनां समीक्षतां जहार, ततो माधवः सुवर्णलक्षणं गरुडध्वजं रथमारोप्य रथोपस्थे आरोप्येत्यर्थः, राजन्यमण्डलं परिभूय तुच्छीकृत्य रामः पुरोगमः अग्रयायी यस्य तथाभूतश्शनैर्ययौ, शनैरित्यनेन निर्भयत्वं सूच्यते, हरिस्सिंहः सृगालमध्याद्यथा स्वभागहृच्छनैर्याति, तद्वत ॥ ५५ ॥

[1]. ददृशेऽच्युतं सा. मु. भा. प्र. पा ॥

ततोययौरामपुरोगमश्शनैस्सृगालमध्यादिवभागहृद्धरिः ॥ ५५
तन्मानिनःस्वाभिभवंयशःक्षयं परेजरासन्धमुखानसेहिरे ।
अहोधिगस्मद्यश आत्तधन्वनां गोपैर्हृतं केसरिणांवृकैरिव ॥ ५६

इति श्रीभागवते महापुराणे दशमस्कन्धे रुक्मिणीहरणंनाम त्रिपञ्चाशोऽध्यायः ॥

---

श्रीशुकउवाच—

इतिसर्वेसुसंरब्धा वाहानारुह्यदंशिताः ।

मु ॥ ततः किमत आह—तामित्यादि ॥ रथमारुरुक्षतीं प्रथममम्बिकासेवार्थं तद्व्रताङ्गत्वेन पादचारेणागतायास्तस्याः पुनर्गमनसमये स्वकीयैरानीतं रथमारोढुमिच्छन्तीमिति भावः, तां राजपुत्रीं रुक्मिणीं द्विषतां समीक्षतामित्यनादरे षष्ठी, समीक्षमाणान् द्विषतोऽनादृत्येत्यर्थः, कृष्णो जहार स्वयमेव दोर्भ्यां गृहीत्वा जगामेत्यर्थः, ततः किमकरोदित्यत्राह—रथमित्यादिना ॥ सुपर्णलक्षणं गरुडध्वजचिह्नं रथं समारोप्य राजन्यचक्रं विरोधिराजसैन्यं परिभूयतिरस्कृत्य सृगालमध्यात् भागहृत् मांसभागहरः हरिः सिंह इव रामः पुरोगमः पुरस्सरो यस्य स सन् शनैर्मन्दमेव ययौ, लोके परद्रव्यापहारी भयात्त्वरया पलायते, सर्वशक्तिरयन्तु न तथेति द्योतयितुं शनैरित्युक्तिः ॥ ५५ ॥

वी ॥ तदिति ॥ मानिनः केवलं दुरहङ्कारिणश्शत्रवो जरासन्धादयः तत्कन्याहरणं स्वाभिभवं यशःक्षयं च न सेहिरे, असहमानानां तेषामाक्रोशमाह—अहो इति । अस्मत्कीर्तिं धिक्,कुतः? यतः आत्तधन्वनां धनुर्धारिणाम् अस्माकं स्वमिति शेषः, गोपैरुपहृतं केसरिणां सिंहानां भागो वृकैरिवेति ॥ ५६ ॥

मु ॥ ततः किमत आह—तामिति ॥ केसरिणां यशः मृगैः हरिणादिक्षुद्रमृगैरिव आत्तधन्वनां चापाद्यायुधसन्नद्धानां भटानाम्मध्यएवेर्थः, गोपैः जन्मप्रभृतिपशुपालनैकवृत्तिभिरेवेति भावः, अस्मद्यशो हृतं क्षत्रियवंश्यानामस्माकम् एतावत्पर्यन्तम् अकुण्ठिता विजयप्रशस्तिर्ध्वस्तेत्यर्थः, अहो इदमत्यद्भुतमित्यर्थः, इति मानिनो जरासन्धप्रमुखाः परे शत्रवः यशसः क्षयो यस्मात्तं स्वाभिभवं स्वेषामभिभवं स्वेषामपजयरूपं तिरस्कारं न सेहिरे इति ॥ ५६ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

वी ॥ अथासहमानानां यदुभिस्सह संग्रामं पराजयं चानुवर्णयति चतुःपञ्चाशत्तमेन—इतीति ॥ इति अहोधिगित्येवं ब्रुवाणास्सर्वे सुतरां क्रोधाविष्टा दंशिताः कवचिताश्च वाहानश्वादीनारुह्य स्वस्वबलैः परिक्रान्ताः परिवृताः धृतानि कार्मुकाणि धनूंषि यैस्ते अन्वीयुरन्वधावन् ॥ १ ॥

स्वैस्वैर्बलैःपरिक्रान्ता अन्वीयुर्धृतकार्मुकाः॥ .१
तानापततआलोक्ययादवानीकयूथपाः।तस्थुस्तत्संमुखाराजन्विष्फार्यस्वधनूंषिते॥
[1]अश्वपृष्ठेगजस्कन्धे रथोपस्थेचकोविदाः। मुमुचुश्शरवर्षाणि मेघाअद्रिष्वपोयथा ॥
पत्युर्बलंशरासारैश्छन्नंवीक्ष्यसुमध्यमा। सव्रीडमैक्षत्तद्वक्त्रं भयविह्वललोचना ॥४
प्रसह्यभगवानाह मास्मभैर्वामलोचने। विनङ्क्ष्यत्यधुनैवैतत्तावकैश्शात्रवम्बलम्॥५

मु ॥ प ॥ महात्मश्रेयसां भङ्गकारिणो ह्यसहिष्णवः।
यान्त्येव बहुधा भङ्गमित्यत्राचकथन्मुनिः॥

इतीत्यादि ॥ इति अहो धिगित्येवं प्रकारेण वदन्त एवेत्यर्थः, सुसंरब्धाः महासंरम्भयुक्ताः अतिक्रुद्धा इति वा 'संरम्भस्सम्भ्रमे क्रोधे' इति नैघण्टुकाः, दंशिताः कवचादिभिः कृताङ्गावरणाः स्वैः स्वैः बलैः स्वस्वसैन्यैः परिक्रान्ता परिवृतास्सन्तः अन्वीयुः अन्वधावन् ॥ १ ॥

वी ॥ तानापततश्शत्रून् अवलोक्य ते यादवसैन्याधिपतयः हे राजन् स्वधनूंषि विष्फार्य टङ्कारयित्वा सम्मुखा उत्तस्थुः ॥ २ ॥

मु॥ धनूंषि विष्फार्य ज्याटङ्कारयुतानि कृत्वेत्यर्थः "विष्फारो धनुषां स्वनः" इति निघण्टुः, ते यादवानीकयूथपाः तत्तत्प्रतिनियतयादवसैन्याधिपतयः आपततः युद्धाय स्वाभिमुखं धावतस्तानालोक्य तत्सम्मुखाः तदभिमुखास्तस्थुः ॥ २ ॥

वी ॥ परेषां शराणां बाहुल्ये यादवानामल्पत्वे च दृष्टान्तः—मेघाइत्यादि ॥ मेघा यथा अद्रिषु अपो जलधारा मुञ्चन्ति, तद्वदश्वपृष्ठादिषु कोविदाश्शात्रवो यादवसैन्येषु शरवर्षाणि मुमुचुः ॥ ३ ॥

मु ॥ रणकरणशिक्षाप्रौढिमाह—अश्वेति ॥ अश्वपार्श्वे गजस्कन्धे रथोपस्थे च कोविदाः इत्यस्यायमर्थः—ऊरुबलादश्वपार्श्वयोर्दृढावष्टम्भेन तेषु गजानां स्कन्धबद्धरज्जुषु स्वपादावसञ्जनेन तेषुच रथानां प्रत्यालीढादिस्थित्यनुकूलप्रदेशेच कोविदाः निश्चलस्थितिकौशलेन योद्धुं शक्ता इत्यर्थः, ते परयोधाः शरवर्षाणि मुमुचुः, अत्राद्रिष्वित्यादिदृष्टान्तेन श्रीकृष्णयोधानां तैरप्रकम्प्यत्वं द्योत्यते ॥ ३ ॥

वी॥ तदा सुमध्यमा रुक्मिणी शरासारैश्छन्नं भर्तुर्बलमवलोक्य भयेन कातरे लोचने यस्यास्सा सव्रीडं यथा तथा तस्य पत्युर्वक्त्रं मुखमैक्षत ॥ ४॥

मु ॥ सुमध्यमा रुक्मिणी शरासारैः परप्रयुक्तनिरन्तरबाणवर्षैः हेतुभिः छन्नं पत्युर्बलं श्रीकृष्णसैन्यं वीक्ष्य भयेन विह्वले विक्लबे लोचने यस्यास्सा सती तद्वक्त्रं श्रीकृष्णमुखं सव्रीडं सलज्जम् ऐक्षत् अपश्यत् , अत्र श्रीकृष्णमुखदर्शने तस्यास्सव्रीडतायां न वोढात्वं भ्रात्रादिबलैरेव स्वभर्तृबलपीडाचेति हेतुद्वयं बोद्ध्यम् ॥ ४ ॥

वी ॥ तदा भगवान् प्रहस्य तामाह, उक्तिमेवाह—मास्मेति। हेवामलोचने त्वं मास्म भैः भयं मा कृथाः, अधुनैव त्वदीयैस्सैन्यैश्शात्रवं बलं विनङ्क्ष्यति नाशमेष्यति॥

मु ॥ एवं तया सभयं वीक्षिते सति सर्वज्ञो भगवान् तद्भयं निराकर्तुमाह—प्रसह्येति ॥ मा स्म भैः भयम्मा भज, एतच्छात्रवं बलं तावकैस्त्वदीयैः यादवयोधैः करणैन अधुनैव विनङ्क्ष्यति विनाशमेष्यति, इत्याहेत्यन्वयः ॥ ५ ॥

१. अश्वपार्श्वे. मु. भा. प्र. पा ॥

तेषांतद्विक्रमंवीरागदसङ्कर्षणादयः । अमृष्यमाणानाराचैर्जघ्नुर्हयगजान्रथान् ॥ ६
पेतुश्शिरांसिरथिनामश्विनांगजिनाम्भुवि।सकुण्डलकिरीटानिसोष्णीषाणिचकोटिशः
हस्तास्सासिगदेष्वासाः करभाऊरवोऽङ्घ्रयः।अश्वाश्वतरनागोष्ट्रखरमर्त्यशिरांसिच॥
हन्यमानबलानीका वृष्णिभिर्जयकाङ्क्षिभिः।राजानोविमुखाजग्मुर्जरासन्धपुरस्सराः
शिशुपालंसमेत्याथ हृतदारमिवातुरम् । नष्टत्विषङ्गतोत्साहं शुष्यद्वदनमब्रुवन् ॥१०
भोभोःपुरुषशार्दूलदौर्मनस्यमिदन्त्यज। नप्रियाप्रिययोराजन्निष्ठादेहिषुदृश्यते॥ ११

वी॥ इति तेषां चैद्यादीनां तथाविधं विक्रममसहमाना वीरा गदादयो यादवाः नाराचैर्हयान् जघ्नुः ॥ ६ ॥

मु ॥ ततः किमासीदित्यत्राह—तेषामिति ॥ स चासौ विक्रमश्च तद्विक्रमः तममृष्यमाणाः असहमानाः गदश्च सङ्कर्षणो बलरामश्च आदिर्येषां ते वीराः नाराचैः हयाश्च गजाश्च हयगजमिति सेनाङ्गत्वादेकवद्भावः, रथांश्च जघ्नुः ॥ ६ ॥

वी ॥ तदा अश्विनाम् अश्वा एषां सन्तीति तेषाम् अश्वारूढानां रथिनां गजिनां च कोटिशः शिरांसि कुण्डलकिरीटसहितानि उष्णीषसहितानि च भुवि निपेतुः, खड्गगदाधनुर्भिस्सहिता हस्ताश्च करभाः प्रकोष्ठाश्च ऊरवश्चाङ्घ्रयश्च निपेतुः, करभास्तत्सदृशा ऊरव इत्यूरुविशेषणं वा,तथा अश्वादीनां शिरांसिच निपेतुः, तत्र नागा गजाः॥७,८

मु॥ रथिनां रथिकानाम् अश्विनां तुरगसादिनां गजिनां यन्तॄणाञ्च शिरांसि पेतुः, तानि विशिनष्टि—सकुण्डलेति । सोष्णीषाणि शिरोवेष्टनवस्त्रसहितानि कोटिशः कोटिसङ्ख्यावन्ति ॥ ७ ॥

मु ॥ सासिगदेष्वासाः खड्गगदाधनुस्सहिताः हस्ताः करभाः केषाञ्चित्करबहिःप्रदेशा इत्यर्थः, यद्वा करभाः करभाकारा ऊरव इति वा, अश्वतराः अप्रौढाश्वाः, मर्त्याः पदातयः तेषां शिरांसि च पेतुरिति पूर्वेणान्वयः ॥ ८ ॥

वी ॥ इत्थं जयकाङ्क्षिभिर्यदुभिर्हन्यमानानि बलानीकानि सैन्यसमुदायाः येषां ते जरासन्धादयो राजानो विमुखाः पराङ्मुखास्सन्तो जग्मुः ॥ ९ ॥

मु ॥ जयकाङ्क्षिभिः वृष्णिभिः हन्यमानं बलं शक्तिः येषां तानि अनीकानि येषां ते जरासन्धपुरस्सराः तत्प्रमुखाः राजानो विमुखाः युद्धपराङ्मुखाः जग्मुः ॥ ९ ॥

वी ॥ ततस्ते सर्वे शिशुपालमभ्येत्याब्रुवन् , कथंभूतम् ? अप्राप्तदारमेव हृतदारमिवातुरं नष्टत्विषं निस्तेजस्कं गत उत्साहो यस्मात् शुष्यत् वदनं यस्य तम् ॥ १० ॥

मु ॥ शिशुपालमित्यादि ॥ हृतदारमिवेति—इयं रुक्मिणी मद्भार्येति स्वाभिमानजनितभ्रान्त्या श्रीकृष्णेन तस्यामपहृतायां हृतस्वदारमिव आतुरं दुरन्तान्तस्सन्तापज्वरपीडितमित्यर्थः,आतुरलक्षणैस्तं विशिनष्टि—नष्टत्विषमित्यादिना । राजानो विमुखा जग्मुः शिशुपालं समभ्येत्य एवं गत्वा शिशुपालमुपेत्यर्थः, अब्रुवन् ॥ १० ॥

वी ॥ उक्तिमेवाह—भोभोइति ॥ हे पुरुषश्रेष्ठ दौर्मनस्यं विषादं त्यज, नहि सुखदुःखयोः देहिषु स्थैर्यं दृश्यते, किन्तु ते क्षणिके आगपायिनी इति भावः ॥ ११ ॥

यथादारुमयीयोषिन्नृत्यतेकुहकेच्छया। एवमीश्वरतन्त्रोऽयमीहतेसुखदुःखयोः॥१२
जरासन्धउवाच—
शौरेस्सप्तदशाहंवै संयुगानिपराजितः। त्रयोविंशतिभिस्सैन्यैर्जिग्यएकमहम्परम्॥
तथाऽप्यहंनशोचामि नप्रहृष्यामिकर्हिचित्।कालेनदैवयुक्तेन जानन्विद्रावितञ्जगत्॥
अधुनाऽपिवयंसर्वे वीरयूथप[1]यूथपाः।पराजिताःफल्गुतन्त्रैर्यदुभिःकृष्णपालितैः १५

मु ॥ पुरुषशार्दूलेत्यनेन व्याघ्रान्मृगाइव एतावत्पर्यन्तं त्वत्तो भिया शत्रवः पलायन्त इति स्फोर्यते, इदं दौर्मनस्यं चित्तवैकल्यं त्यज, कुत इत्यत्राह—नेति । प्रियाप्रिययोरिष्टानिष्टयोः निष्ठा स्थैर्य देहिषु नत्तत्कर्मफलभोगार्थं देहधारिषु न दृश्यते, अतोऽयं कर्मपरतन्त्रतया न स्वतन्त्र इति भावः ॥ ११ ॥

वी ॥ नन्वप्रतिहतपौरुषाणामस्माकमयं पराभवोऽविषह्य इत्यत आहुः—यथेति ॥ कुहको नर्तकस्तस्येच्छया इच्छानुसारमित्यर्थः, दारुमयी योषित्प्रतिमा यथा नृत्यते,तथा अयं देहिवर्गोऽपि ईश्वरपरतन्त्रः सुखदुःखयोरीहते सुखदुःखयोर्निमित्तभूतयोश्चेष्टते सुखदुःखार्थकर्माणि करोतीत्यर्थः, नहि सुखदुःखप्रापणे स्वात्मनस्स्वातन्त्र्यमस्ति, अपितु सुखायैवेहमानोऽयं जनः स्वस्वकर्मानुगुणेश्वरेच्छया सुखदुःखे प्राप्नोति, अतः किं विधेयमित्यर्थः ॥ १२ ॥

मु ॥ तदेव द्रढयितुमाह—यथेत्यादिना ॥ दारुमयी योषित् दारुनिर्मितपाञ्चालिका कुहको नर्तयिता तस्येच्छया नृत्यत इति केवलपारतन्त्र्ये दृष्टान्तः, एवमयं लोकः ईश्वरतन्त्रः स्वतन्त्रस्येश्वरस्य परतन्त्रस्सन्नित्यर्थः, सुखदुःखयोरीहते चेष्टते सुखदुःखहेतुभूतकर्मणि प्रवर्तत इत्यर्थः, अतो न कदाचित् स्वतन्त्र इति भावः, अतस्तयोस्साम्यबुद्धिः विवेकिनामावश्यिकीति हृदयम् ॥ १२ ॥

वी ॥ एवमीश्वरपारतन्त्र्यमुक्तम् , तत्र चाहमेव दृष्टान्त इत्याह जरासन्धः—शौरेरिति ॥ सप्तदश संयुगानि युद्धानि कृत्वेति शेषः, त्रयोविंशत्यक्षौहिणीकैस्सैन्यैस्सहितोऽप्यहं शौरेः श्रीकृष्णसकाशात्पराजितः, सप्तदशकृत्व इति शेषः, एकं संयुगं त्वहं परं केवलं जिग्ये जितवानस्मि ॥ १३ ॥

मु ॥ तत्र अहमेव दृष्टान्त इति जरासन्धः प्राह—शौरेरिति॥ तत्सकाशादित्यर्थः, सप्तदशसंयुगानि तावत्सु संयुगेष्वित्यर्थः, त्रयोविंशतिभिस्सैन्यैस्सह पराजितः, एकं परं तत्रैकमेवान्तिमं संयुगम् अहं जिग्ये जितवान् ॥ १३ ॥

वी ॥ तथाऽपि सप्तदशकृत्वः पराजयकालेऽप्यहं कर्हिचिन्न शोचामि, नापि जयकाले हृष्यामिच, किं कुर्वन् दैवमदृष्टं तद्युक्तेन कालेन कालशरीरेणेश्वरेण दैवमीश्वरस्तद्युक्तेन तदात्मकेन कालेनेति वा ; कृत्स्नं जगद्विद्रावितम् उपद्रुतं जानन् ॥ १४ ॥

मु॥ तथापि एवं पराजितोऽपि कर्हिचित् कदाचिदपि न शोचामि, न प्रहृष्यामि च अन्तिमसंयुगजयेन प्रहर्षोऽपि मे नास्तीत्यर्थः,शोकाभावे हेतुमाह— कालेनेति। दैवयुक्तेन पुरुषादृष्टसहायेन कालेन जगत् विद्रावितं बहुधा विलोडितमिति जानन् न शोचामीति॥

वी ॥ अतोऽधुनाऽपि वयं सर्वे वीरयूथपा अपि फल्गुतन्त्रैरपि अल्पबलैरपि पराजिताः ॥ १५ ॥

१. योधपाः. मु. भा. प्र. पा ॥

रिपवोजिग्युरधुना कालआत्मानुसारिणि।तदावयंविजेष्यामोयदाकालःप्रदक्षिणः॥
श्रीशुक उवाच—
एवंप्रबोधितोमित्रैश्चैद्योऽगात्सानुगःपुरम्।हतशेषाःपुनस्तेऽपिययुस्स्वंस्वंपुरंनृपाः॥
रुक्मीतुराक्षसोद्वाहं कृष्णद्विडसहन्स्वसुः।पृष्ठतोऽन्वगमत्कृष्णमक्षौहिण्यावृतोबली॥
रुक्म्यमर्षीसुसंरब्धश्शृण्वतांसर्वभूभुजाम्। प्रतिजज्ञेमहाबाहुर्दंशितस्सशरासनः॥
अहत्वासमरेकृष्णमप्रत्यूह्यचरुक्मिणीम्। कुण्डिनंनप्रवेक्ष्यामि सत्यमेतद्ब्रवीमिवः॥
इत्युक्त्वारथमारुह्य सारथिंप्राहसत्वरः। चोदयाश्वान्यतःकृष्णस्तेनमेसंयुगोभवेत्॥

मु॥ पुरुषस्य जयापजययोः दैवानुकूल्यप्रातिकूल्ये एव निदानमिति स्वानुभवमुखेन दर्शयन्नाह—अधुनापीति॥ वीराश्च यूथपा यूथनाथाश्च योधपा योधश्रेष्ठाश्च वयं फल्गुतन्त्रैरल्पबलैः तथापि कृष्णपालितैः कृष्णपराक्रमरक्षितैरित्यर्थः, यदुभिः पराजिताः॥

वी॥ रिपवस्तु आत्मानुसारिणि स्वानुकूले काले प्राप्ते सति जिग्युः, यदाच प्रदक्षिणोऽस्मदनुकूलः कालो भावी, तदा वयमपि जेष्याम एव॥ १६॥

मु॥ किं कुर्मो वयम्, अस्मासु दैवी वृत्तिस्तादृशीत्याह—रिपव इति॥ काले दैविकफलनिमित्तभूत इत्यर्थः,आत्मानुसारिणि स्वानुकूले प्रवर्तमाने इत्यर्थः अधुना रिपवो जिग्युः अजयन्, यदा कालः अस्मद्विजयहेतुः काल इत्यर्थः, प्रदक्षिणः अनुकूलः स्यादिति शेषः, तदा वयं विजेष्याम इति॥ १६॥

वी॥ इत्थं मित्रैर्जरासन्धादिभिर्बोधितः सान्त्वितश्चैद्यस्स्वपुरं प्रति जगाम, ततो हतशेषास्ते जरासन्धादयोऽपि नृपास्स्वं स्वं गृहं प्रति जग्मुः॥ १७॥

मु॥ एवं मित्रैः प्रबोधितः चैद्यः पुरमगात्॥ १७॥

वी॥ ततः कृष्णद्विट् रुक्मीतु स्वसुर्भगिन्याः राक्षसोद्वाहमसहमानः अक्षौहिण्या सैन्येन परिवृतः कृष्णं पृष्ठतोऽन्वधावत्॥ १८॥

मु॥ अथ श्रीकृष्णरुक्मिणोः युद्धक्रमं रुक्मिपराजयं चाह—रुक्मीत्यादिना॥ कृष्णद्विट् रुक्मी स्वसुः राक्षसोद्वाहं युद्धे शत्रून् विजित्य हृतायाः रुक्मिण्याः विवाहमसहन् असहमानः कृष्णं पृष्ठतः पश्चात् अन्वगमत्॥ १८॥

वी॥ अनुधावनात्पूर्वं तस्य संरम्भमाह—रुक्मीति॥ अमर्षी क्रुद्धः सुसंरब्धस्सन्नद्धः, तदेव प्रपञ्चयति—दंशितः कवचितः शरासनेन धनुषा सहितस्सर्वभूभुजां शृण्वतां सतां प्रतिजज्ञे॥ १९॥

मु॥ सुसंरब्धः महासंरम्भवान् अमर्षी क्रोधाकुलः॥ १९॥

वी॥ प्रतिज्ञामेवाह—अहत्वेति॥ अप्रत्यूह्य अनावर्त्य॥ २०॥

मु॥ २०॥

वी॥ इतीति॥ सत्वरस्त्वरया सहितः, उक्तिमेवाह—चोदयेति सार्धेन। यतो यत्र कृष्णस्तत्राश्वानाशु चोदय गमयेत्यर्थः, तेन कृष्णेन सह मम संयुगः सङ्ग्रामो भवेत् भवितव्यः॥ २१॥

मु॥ सारथिं प्राह, कृष्णः यतः यस्मिन् स्थले वर्तते, तेन कृष्णेन संयुगो युद्धं भवेत् यथा सङ्घटेत, तथा अश्वान् ततश्चोदयेत्यर्थः॥ २१॥

अद्याहंनिशितैर्बाणैर्गोपालस्यसुदुर्मतेः । नेष्येवीरमदंयेन स्वसामेप्रसभंहृता ॥ .२२
विकत्थमानःकुमतिरीश्वरस्याप्रमाणवित् । रथेनैकेनगोविन्दं तिष्ठतिष्ठेत्युपाद्रवत् ॥
धनुर्विकृष्यसुदृढं जघ्नेकृष्णंत्रिभिश्शरैः । आह[1]चोरःक्षणन्तिष्ठयदूनांकुलपांसन ॥
कुत्रयासिस्वसारंमे मुषित्वाध्वाङ्क्षवद्धविः ॥ २४
हरिष्येऽद्यमदंमन्द मायिनःकूटयोधिनः ।यावन्नमेहतोबाणैश्शयीथामुञ्चदारिकाम् ॥

वी ॥ सुतरां दुर्बुद्धेर्गोपालस्य वीरमदं वीरोऽहमवेत्येवंविधं मदं नेष्ये, ततो नयामि त्याजयामीत्यर्थः, तत्र हेतुं वदन्विशिनष्टि—येन कृष्णेन मम भगिनी प्रसह्य नीता अपहृता ॥ २२ ॥

मु ॥ अद्यैव सुदुर्मतेः कन्याप्रदानस्वतन्त्रैरस्माभिरेव चैद्याय दत्तां कन्यां यो मध्ये बलात् जहार, तस्मात् को वास्मिन् लोके सुदुर्मतिरस्तीति भावः. अस्य गोपालस्य हेयोपादेयविवेकरहितस्येत्यर्थः, वीरमदम् अहमेव वीर इति दुर्मदं मे निशितैर्बाणैर्नेष्ये निवर्तयिष्यामि, तस्यैवं दण्डनहेतुमपराधं निरूपयति—येनेति ॥ २२ ॥

वी ॥ विकत्थमान इति ॥ ईश्वरस्य कृष्णस्य प्रमाणं ज्ञानशक्तिबलादीनामनन्तपरिमाणत्वमजानन् अत एव कुमतिरत एव चैवं विकत्थमानः प्रगल्भं भाषमाणः तिष्ठतिष्ठेति वदन्निति शेषः, उपाद्रवदन्वधावत ॥ २३ ॥

मु ॥ ईश्वरस्य तस्याप्रमाणवित् अनन्तपरिमाणकत्वमजानन् अत एव कुमतिः कुत्सितबुद्धिः विकत्थमानः एवमपभाषमाणः एकेनैव रथेन अनुधावन्निति शेषः, अथ गोविन्दं तिष्ठतिष्ठेत्यब्रवीत् ॥ २३ ॥

वी ॥ धनुरिति ॥ दृढं धनुर्विकृष्य शरान् सन्धायेति शेषः, कृष्णमुरो वक्षस्थलं जघ्ने, आह च, उक्तिमेवाह—क्षणमित्यादिना स्मयन्नित्यतः प्राक्तनेन । हे यदुकुलदूषक क्षणं तिष्ठ ममाग्रत इति शेषः, ध्वाङ्क्षः काकः स यथा हविः हृत्वा याति, तथा मम स्वसारं मुषित्वा क्व यासि, नेत्यमयोग्यत्वं च दृष्टान्ताभिप्रेतम् ॥ २४ ॥

मु ॥ सुदृढं धनुः विकृष्य त्रिभिश्शरैः कृष्णं जघ्ने, हे चोर यदूनां कुलपांसन कुलदूषक हविः देवतार्हं पुरोडाशादिकं ध्वाङ्क्षवत् काकवत् मे स्वसारं मुषित्वा अपहृत्य कुत्र यासि ॥ २४ ॥

वी ॥ हे मन्द कूटयोधिनः कूटस्समुदितो युध्यति, तच्छीलः तथा तस्य एकाकितया योद्धुमसमर्थस्येत्यर्थः, तव मदं हरिष्ये मम बाणैर्यावद्धतो न शयीथाः, ततः पूर्वमेव दारिकां कन्यां मुञ्च ॥ २५ ॥

मु ॥ हे मन्द कर्तव्याकर्तव्यविवेकरहित मायिनः ऐन्द्रजालिकवत् निस्सारकार्यप्रपञ्चं विडम्बयतः कूटेन कपटेन युध्यतीति कूटयोधिनस्ते मदं गर्वं हरिष्ये निवर्तयिष्यामि, अत्र गोपालस्येत्यत्र वाङ्मात्रवाचकगोशब्दस्य तद्विशेषदेववाचकत्वेन तत्पालकस्येति च, सुदुर्मतेरित्यत्र शोभना वैषम्यनैर्घृण्यादिरहिता, दुरित्य नेन दुष्टा विवक्ष्यन्ते, तेष्वपि मतिर्यस्येति भगवत्स्वरूपस्वभावानुगुणार्थं केचिद्वर्णयन्ति, नत्वयं रुक्म्यभिप्रायः, मे बाणैः हतस्सन् यावत् न शयीथाः दीर्घनिद्रया भुवि न पतेः, तावदेवेत्यर्थः, दारिकां बालिकां मुञ्चेत्याहेति पूर्वेणान्वयः ॥ २५ ॥

---

१. चोर. मु. भा. प्र. पा ॥

स्मयन्कृष्णोधनुश्छित्त्वा षड्भिर्विव्याधरुक्मिणम् ।
अष्टभिश्चतुरोवाहान्द्वाभ्यांसूतंत्रिभिर्ध्वजम् ॥ २६

सचान्यद्धनुरादायकृष्णंविव्याधपञ्चभिः।तैस्ताडितश्शराग्रैस्तांश्चिच्छेदधनुरच्युतः॥
पुनरप्यन्यदादत्त तदप्यच्छिनदव्ययः ॥ २७

परिघंपट्टिसंशूलं चर्मासीशक्तितोमरौ । यद्यदायुधमादत्त तत्सर्वंसोऽच्छिनद्धरिः ॥
ततोरथादवप्लुत्य गृहीत्वाखड्गचर्मणी । कृष्णमभ्यपतत्क्रुद्धः पतङ्गइवपावकम् ॥
तस्यचापततःखड्गंतिलशश्चर्मचेषुभिः।छित्वाऽसिमाददेतीक्ष्णंरुक्मिणंहन्तुमुद्यतः३०
दृष्ट्वाभ्रातृवधोद्योगं रुक्मिणीभयविह्वला। पतित्वापादयोर्भर्तुरुवाचकरुणंसती ॥३१

रुक्मिण्युवाच—

योगेश्वराप्रमेयात्मन् देवदेवजगत्पते ।

---

वी ॥ स्मयन्निति ॥ षड्भिर्बाणैरिति शेषः, तथोत्तरत्रापि ॥ २६ ॥

वी ॥ सचेति ॥ सः रुक्मी तैः रुक्मिप्रयुक्तैश्शराग्रैस्ताडितः कृष्णस्तदपि धनुश्चिच्छेद एवं पुनः पुनर्यद्धनुराददे तदप्यव्ययो भगवान् चिच्छेद ॥ २७ ॥

मु ॥ कृष्णयुद्धमाह—स्मयन्निति ॥ अत्र षड्भिरित्यादिसङ्ख्यावाचकशब्दाः बाणसङ्ख्यापराः ॥ २६ - २७ ॥

वी ॥ ततः परिघादिकमपि यद्यदाददे, तत्सर्वमप्यच्छिनत् ॥ २८ ॥

मु॥ अथ रुक्मी यद्यदायुधमादत्त,तत्सर्वं विभुः श्रीकृष्णः अच्छिनत् शरांश्चच्छेद॥

वी ॥ ततइति ॥ खड्गः पाणौ यस्य स रुक्मी रथादवप्लुत्य हन्तुमिच्छया पतङ्गः शलभः पावकमिव कृष्णमभ्यपतत् ॥ २९ ॥

मु ॥ अथ दीपशलभन्यायेन परिभवमजानतो रुक्मिणः साहसकृत्यमाह—तत इत्यादिना ॥ २९ ॥

वी ॥ आपततस्तस्य रुक्मिणः खड्गं चर्मखेटं च इषुभिस्तिलप्रमाणशश्चिच्छेद, एवं छित्वा रुक्मिणं हन्तुं निशितं खड्गमादत्त ॥ ३० ॥

मु ॥ आपततः स्वाभिमुखमागच्छतः तस्य रुक्मिणः चर्म परप्रयुक्तास्त्रपातनिवारकः फलकः, तं खड्गं च तिलशः तिलप्रमाणशकलं यथा तथेत्यर्थः, छित्वा निशितमसिं खड्गमाददे ॥ ३० ॥

वी ॥ तदा भ्रातृवधार्थमुद्योगं प्रयत्नं दृष्ट्वा भयकम्पिता सती रुक्मिणी भर्तुः पादयोः पतित्वा करुणं यथातथोवाच ॥ ३१ ॥

मु ॥ अथ रुक्मिणी तं न्यवारयदित्याह—दृष्ट्वेत्यादिना ॥ भ्रातृवधोद्योगं श्रीकृष्णस्य तं स्वभ्रातृवधप्रयत्नं दृष्ट्वा भयविह्वला भयविवशा सती रुक्मिणी भर्तुः श्रीकृष्णस्य पादयोः पतित्वा प्रणिपत्य करुणं दीनमुवाच ॥ ३१ ॥

वी ॥ उक्तिमेवाह—योगेश्वरेति ॥ हेयोगेश्वर योगनिर्वाहक योगीश्वरेति पाठे योगिहृत्कमलाभिव्यक्त तन्नियन्तश्चेत्यर्थः, योगपरिशुद्धमनोग्राह्यस्य तव स्वरूपस्वभावादिकं

हन्तुंनार्हसिकल्याण भ्रातरम्मेमहाभुज ॥ ३२

श्रीशुकउवाच—

तयापरित्रासविकम्पिताङ्गयाशुचाऽवशुष्यन्मुखरुद्धकण्ठया ।
कातर्यविस्रंसितहेममालयागृहीतपादःकरुणोन्यवर्तत ॥ ३३

चेलेनबद्ध्वातमसाधुकारिणं सश्मश्रुकेशंप्रवपन्व्यरूपयत् ।
तावन्ममर्दुःपरसैन्यमुद्भुतं यदुप्रवीरानलिनींयथागजाः ॥ ३४

कथमयं देहाभिमानी विद्यात् ततोऽयं मूढः केवलमनुग्राह्य एवेति तत्सम्बोधनाभिप्रायः, त्वन्वसाधुलोकदमनार्थमवतीर्णोऽहमेतं निगृह्णाम्येवेत्यतस्सम्बोधयति—हेजगत्पते शरणागतजगत्पालक, नायं शरणागतोऽपितु कृतापराध एवेत्यत आह—शरणागताया मम भ्रातरं हन्तुं नार्हसीति, शरण्यत्वोपयुक्तं वीरत्ववात्सल्यसौशील्यादिकमपि सम्बोधनेनैवाह—देवानां ब्रह्मादीनामपि देव अप्रमेयात्मन् अपारवात्सल्यसौशील्यादिस्वभावस्वरूप, लोकदृष्ट्याधुना तवैतद्वधो नोचित इति सम्बोधयति—कल्याणेति । आरब्धे विवाहरूपकल्याणेऽपरिसमाप्त एवान्तरा मद्भ्रातृवधोऽनुचित इत्यर्थः, अहो दृष्टं सखड्गस्य त्वद्भुजस्य सौन्दर्यमिति साक्षेपं सम्बोधयति—महाभुजेति ॥ ३२ ॥

मु ॥ तदाह—योगेश्वरेति॥ योगस्य ध्यानस्येश्वर अभिलषितार्थप्रदानस्वतन्त्रेत्यर्थः, अप्रमेयात्मन् इयत्तया परिमातुमशक्यस्वरूप देवदेव सर्वदेवानामप्युद्दिश्यदेवते जगत्पते सर्वजगत्पालक महाभुज त्वद्भुजबलेन सर्वसंहारसमर्थ तथापि कल्याण दयावात्सल्यसौशील्यादिसद्गुणशोभन अत एव मे भ्रातरं हन्तुं नार्हसि ॥ ३२ ॥

वी ॥ तयेति ॥ परित्रासेन परितो भयेन विशेषतः कम्पितान्यङ्गानि यस्याः शुचा शोकेन अवशुष्यन्मुखं यस्याः रुद्धः कण्ठो यस्यास्सा च सा कातर्येण वैक्लव्येन विस्रंसिता हेममयी माला यस्यास्तया रुक्मिण्या गृहीतौ पादौ यस्य सः करुणः करुणावान् न्यवर्तत, रुक्मिवधादिति शेषः ॥ ३३ ॥

मु ॥ ततः किमासीदिति राज्ञा पृष्टो मुनिराह—तयेति ॥ परित्रासेन भयेन विकम्पितान्यङ्गानि यस्यास्तया शुचा शोकेन अवशुष्यत् शोषं भजत् मुखं यस्यास्सा रुद्धः शोकगद्गदः कण्ठो यस्याः सा सा चेति विशेषणयोस्समासः तया कातर्येण भयक्षोभेण विस्रंसिताः विश्लथं प्रापिता हेममयी माला यस्यास्तया रुक्मिण्या गृहीतपादस्सन् करुणः दयावान् कृष्णः न्यवर्तत तद्वधोद्योगान्निवृत्तः ॥ ३३ ॥

वी ॥ चेलेनेति ॥ ततस्तमसाधुकारिणं रुक्मिणं चेलेन तद्वस्त्रेण बद्ध्वा सश्मश्रुकेशं सहितानि स्थानेस्थाने अवशिष्टानि श्मश्रूणि केशाश्च यथा भवन्ति तथा तेनैवासिना प्रवपन् मुण्डयन् विरूपमकरोत् नलिनीं यथा गजा इति दृष्टान्तेनानायासः खेलनमात्रं चाभिप्रेतम ॥ ३४ ॥

मु ॥ तर्हि किमकरोदित्यत्राह—स इति ॥ असाधुकारिणम् अहितकारिणं तं बध्वा रथस्तम्भे संयम्य तेन तद्वधार्थमुद्यतेन असिनैवेत्यर्थः, सश्मश्रुकेशं प्रवपन् व्यरूपयत् श्मश्रुकेशसहितं यथा तथा मुण्डयन् विरुद्धरूपमकरोदित्यर्थः, यद्वा मध्येमध्ये अवशिष्ट-

कृष्णान्तिकमुपव्रज्य ददृशुस्तत्ररुक्मिणम् । तथाभूतंहतप्रायं दृष्ट्वासङ्कर्षणोविभुः ॥
विमुच्य[१]बन्धंकरुणोभगवान्कृष्णमब्रवीत् ॥ ३५

बलभद्र उवाच—

असाध्विदंत्वयाकृष्णकृतमस्मज्जुगुप्सितम् । वपनंश्मश्रुकेशानां वैरूप्यंसुहृदोवधः ॥

मैवास्मानसाध्व्यसूयेथाभ्रातुर्वैरूप्यचिन्तया ।
सुखदुःखप्रदोनान्योयतस्स्वकृतभुक्पुमान् ॥ ३७

बन्धुर्वधार्हदोषोऽपिनबन्धोवधमर्हति । त्याज्यस्तेनैवदोषेण हतःकिंहन्यतेपुनः ॥३८

कतिपयश्मश्रुकेशसहितमेवमुण्डयन् विरुद्धरूपमकरोदित्यर्थः, तावदिति। यावत् कृष्णेन रुक्मी तथा विरूपः क्रियते,तावदेवेत्यर्थः, यदुप्रवीराः उद्धतं परसैन्यं ममर्दुः मर्दयामासुः ॥ ३४ ॥

वी ॥ कृष्णान्तिकमिति ॥ ददृशुः यदुप्रवीरा इति कर्तृपदानुषङ्गः, भगवान्सङ्कर्षणः तथाभूतं विरूपतामापन्नं हतप्रायं हततुल्यं रुक्मिणं दृष्ट्वा सकरुणो बन्धं विमुच्य कृष्णमब्रवीत् ॥ ३५ ॥

मु ॥ कृष्णान्तिकम् उपव्रज्य एत्य तत्र रुक्मिणं ददृशुः, अथ भगवान् ज्ञानशक्त्यादिषड्गुणसंपन्नः विभुः निग्रहानुग्रहसमर्थः करुणः दयावान् संकर्षणः रामः तथारूपं विरूपमित्यर्थः,हतप्रायं जीवन्मृतमित्यर्थः,दृष्ट्वा बद्धं तं विमुच्य बन्धाद्विमुक्तं विधाय कृष्णम् अब्रवीत् ॥ ३५ ॥

वी ॥ उक्तिमेवाह—असाध्विति ॥ हे कृष्ण असाध्वसमञ्जसं निन्दितं चेदं कर्म कृतम्, ननु बन्धुवध एवासाधुः जुगुप्सितश्चेत्यत आह—वपनमिति । सुहृदो बन्धोः वधो नाम श्मश्रुकेशवपनं वैरूप्यकरणं चेत्येष एव ॥ ३६ ॥

मु ॥ तदाह—असाध्विति ॥ श्मश्रुकेशानां वपनं वपनरूपं वैरूप्यं विरूपत्वमेव सुहृदो मित्रस्य वधो नाम, अतः हे कृष्ण अस्मज्जुगुप्सितम् अस्माकं जुगुप्सावहमित्यर्थः, असाधु अनुचितमेवेदं कार्यं त्वया कृतमिति ॥ ३६ ॥

वी॥ अथ रुक्मिणीं सान्त्वयति मैवास्मानिति॥हे साध्वि भ्रातृवैरूप्यप्रयुक्तया चिन्तया अस्मान्मासूयेथाः, ननु दुःखप्रदा यूयमसूयितव्या एवेत्यत आह—सुखेति । सुखप्रदः दुःखप्रदश्च अन्यो नास्ति, यतः पुमान् स्वकृतभुक् स्वकृतकुशलाकुशलकर्मापादितसुखदुःखभुक्, सुखग्रहणं दृष्टान्तार्थम् ॥ ३७ ॥

मु॥ रुक्मिणीं प्रत्याह—मैवेति ॥ हे साध्वि विवेकसंपन्ने भ्रातृवैरूप्यचिन्तया भ्रातृवैरूप्यमस्माभिः कृतमिति विचारेणेत्यर्थः, अस्मान् मासूयेथाः अस्मास्वसूयां माकृथाः, तत्कथमित्यत्राह—सुखेति । सुखदुःखप्रदः चेतनस्य सुखदुःखप्रदाता अन्यो नास्ति, यतो हेतोः पुमानात्मा स्वकृतभुक् स्वकृतकर्मफलभोक्ता,अतः स्वकृतकर्मैव तत्तत्फलमनुभावयतीत्यर्थः ॥ ३७ ॥

वी ॥ पुनः कृष्णमाक्षिपति—बन्धुरिति ॥ हे बन्धो वधायार्ह उचितः दोषो यस्य सोऽपि बन्धुर्वधं नार्हति, किन्तु त्याज्य एव, स हि तेन वधार्हेण दोषेण हत एव हतप्राय एव हतोऽपि पुनर्हन्यते किमिति ॥ ३८ ॥

१. बद्धं, मु. भा. प्र. पा ॥

[1]क्षत्रियाणामयन्धर्मःप्रजापतिविनिर्मितः।भ्राताऽपिभ्रातरंहन्याद्येनघोरतरस्ततः॥
राज्यस्यभूमेर्वित्तस्य श्रियोमानस्यतेजसः।
मानिनोऽन्यस्यवाहेतोश्श्रीमदान्धाःक्षपन्तिहि॥ ४०
तवेयंविषमाबुद्धिस्सर्वभूतेषुदुर्हृदाम्।यन्मन्यसेसदाऽभद्रं सुहृदांभद्रमज्ञवत्॥ ४१

मु॥ कृष्णमाक्षिपति—बन्धुरिति॥ वधमर्हतीति वधार्हः, तादृशो दोषो यस्य सः वधनिष्कृतिदोषवानित्यर्थः, बन्धुश्चेत् बन्धोस्त्याज्यः, इयं पञ्चमी, बन्धोर्विवेकसंपन्नात्त्यक्तुमर्ह एवेत्यर्थः, तेनैव दोषेण त्याज्यः गर्ह्यतया विवेकिभिस्त्याज्य इत्यर्थः, तत्र दृष्टान्तमाह—हत इति। दोषबाहुल्येन बुधगर्हितस्य वधो मृतमारणकल्प इत्यर्थः॥

वी॥ भूयो रुक्मिणीं प्रत्याह—क्षत्रियाणामिति॥ प्रजापतिना ब्रह्मणा निर्मितोऽयं वधो धर्मः,कोऽसौ? येन धर्मेण भ्राताऽपि भ्रातरं हन्यात्,यश्च घोरतरः अतिदारुणः,अतः को नामास्माकमपराध इति भावः॥ ३९॥

मु॥ क्षत्रधर्मस्वरूपपर्यालोचनयापि न दौर्मनस्यावकाश इत्याह—क्षत्रियाणामिति॥ परो धर्मः श्लाघ्यधर्मः, प्रजापतिनिर्मितः ब्रह्मणैव कल्पितः, येन धर्मेण भ्राताऽपि भ्रातरमेव हन्यात्, अयं विधिरिति भावः, ततो हेतोः घोरतरः अयं धर्मो रौद्र इत्यर्थः, अतोऽस्माकं न कश्चिदपराध इति भावः॥ ३९॥

वी॥ पुनः कृष्णं प्रत्याह—राज्यस्येति॥ श्रीमदेनैश्वर्यमदेनान्धाः विवेकरहिता, मानिनो दुरहङ्कारिणो जनाः राज्यादेः अन्यस्य वा हेतोः कारणात् राज्याद्यर्थं तेभ्योऽन्यार्थं वेत्यर्थः, क्षिपन्ति हि निरस्यन्ति बन्धूनिति शेषः,अस्माकं त्वेतदनुचितमिति भावः, तत्र मानस्य वयमेव वीरा इत्यभिमानस्य तेजसः पराभिभवनसामर्थ्यस्य॥ ४०॥

मु॥ श्रीकृष्णः प्रत्याह—राज्यस्येति॥ श्रीमदान्धाः संपन्मदेन लुप्तविवेका इत्यर्थः, मानिनोऽहंकारिणः राज्यस्य प्रजापरिपालनादिकर्मणः भूमेः परराष्ट्रस्य वित्तस्य धनस्य श्रियः पशुपुत्रदारादिरूपविविधवस्तुसंपत्तेः तेजसः प्रतापस्य अन्यस्य वा तत्तत्काम्यवस्तुजातस्य हेतोः क्षिपन्ति परस्परं प्रहरन्ति, यस्मात्प्रहरन्ति, ततो घोरतर इत्यन्वयः, यद्वा श्रीमदान्धाः मानिनः अभिमानवन्तः पुरुषान् क्षिपन्ति निरस्यन्ति तारतम्यापरिज्ञानेन परिभवितुं प्रवर्तन्त इत्यर्थः, अतः श्रीमदान्धो रुक्म्यपि मानिनोऽस्मान्निरसितुमागतस्सन्नेवमभूदिति रुक्मिणीं प्रत्येव रामवचनम्॥ ४०॥

वी॥ सान्त्वितामपि विण्णामेव तामालक्ष्यान्तरेण तत्त्वोपदेशमस्या विषादो न शाम्यतीति मत्वा तत्त्वमुपदिदिक्षुः तावद्देहानुबन्धिषु सौहार्दस्य तदभद्रप्रयुक्तचित्तविकारस्य चाज्ञानप्रयुक्तत्वमाह—तवेति द्वाभ्याम्॥ अज्ञवत् देहात्मस्वतन्त्रात्माभिमानिवत् सदा सुहृदां भद्रं दुर्हृदामहितानामभद्रं च मन्यस इति यत्, तवेयं बुद्धिस्सर्वेषु भूतेषु विषयभूतेषु विषमा असमा एकरूपा न भवतीत्यर्थः॥ ४१॥

मु॥ पुनस्तामेवाह—सर्वभूतेषु दुर्हृदाम् असुहृदां भद्रमेव हितरूपमेव दण्डनात्मकं वैरूप्यं यदभद्रम् अहितं मन्यसे, अतो विषमा बुद्धिरिति,यद्वा सुहृदां भद्रं सुहृदामाशास्यं भद्रं दुर्हृदाम् अपकारिणामपि यत् त्वं मन्यसे आकाङ्क्षसि, अतस्तवेयं बुद्धिः भू-

१. क्षत्रियाणां परो धर्मः. सु. भा. प्र. पा॥

आत्ममोहोनृणामेष [1]कल्प्यतेदेवमायया । सुहृद्दुर्हृदुदासीन इतिदेहात्ममानिनाम् ॥
एकएवपरोह्यात्मा सर्वेषामपिदेहिनाम् । नानेवगृह्यतेमूढैर्यथाज्योतिर्यथानभः॥४३
देहआद्यन्तवानेष द्रव्य[2]प्राणगुणात्मकः । आत्मन्यविद्ययाकॢप्तस्संसारयतिदेहिनम्॥

तेषु विषमा नैकरूपा, मन्यत इति पाठे लोको दुर्हृदामभद्रं सुहृदां भद्रं च यन्मन्यते, अतः तवापि लोकान्तर्गताया इत्यर्थः, विषमा बुद्धिरिति ॥ ४१ ॥

वी ॥ कुत इत्यत आह—आत्ममोहो बुद्धिमोहो भगवन्मायया अनात्मन्यात्मबुद्धिम स्वतन्त्रे स्वातन्त्र्यबुद्धिं च कल्पयन्त्या कल्पितः, कोऽसौ यो देहात्मवादिनां सुहृदित्यादि रूपः ॥ ४२ ॥

मु ॥ उक्तार्थस्येम्ने प्रपञ्चयति—आत्मेत्यादिना ॥ देह एव आत्मेति वादिनां देहात्म-विवेकरहितानामित्यर्थः,नृणाम् अयं सुहृत् 'अयं दुर्हृत्' इत्यादिरात्ममोहः आत्मनि भ्रमः एष देवस्येश्वरस्य मायया अनादिकर्मवासनानुगुणं तत्सङ्कल्पप्रेरितया प्रकृत्येत्यर्थः,कल्पते प्रवर्तते ॥ ४२ ॥

वी ॥ सुहृदादिविभागस्याज्ञानकल्पितत्वमेवोपपादयति—एकएवेति ॥ सर्वेषामपि देहिनां जीवात्मनामात्मा अन्तरात्मा एक एव परः, गूढतयाऽवस्थाने दृष्टान्तमाह—यथा-ज्योतिरिति । यथा ज्योतिरग्निः काष्ठे गूढतयाऽवतिष्ठते, तथा परमात्मापीत्यर्थः, अवस्थितस्यापि, परस्य तत्तद्वस्तुगतदोषास्पर्शे दृष्टान्तमाह—यथानभ इति । यथा सर्वत्र व्याप्नुवत आकाशस्य न व्याप्यगतदोषस्पर्शस्तथेत्यर्थः, एवं स्थिते एकस्य परमात्मनः कृत्स्नं जगच्छरीरभूतमिति एकशरीरभूतपाणिपादादिषु शत्रुमित्रादिविभागोऽनुपपन्नः, मूढैः परमात्मशरीरत्वानभिज्ञैस्तु नानेव शत्रुमित्रादिविभागयुक्तमिव जगद्विज्ञायत इत्यर्थः॥

मु ॥ सुहृच्छत्रूदासीनविभागस्य अज्ञानकल्पितत्वमेवोपपादयति—एक एवेति ॥ सर्वेषामपि देहिनां कर्मसम्बन्धितत्तद्देहधारिणां जीवात्मनामित्यर्थः, आत्मा अन्तरात्मा एक एव परः परमात्मा एक एव,तथा चास्य सर्वत्र गूढतयावस्थाने दृष्टान्तमाह—यथा ज्योतिरिति।काष्ठेष्वन्तर्गतोऽग्निरिवेत्यर्थः, तथापि जीवगतदोषास्पर्शे दृष्टान्तमाह—यथा नभ इति। सर्ववस्तुबाह्याभ्यन्तरसम्बद्धस्यापि नभसः तत्तद्वस्तुगतदोषास्पर्शइवेत्यर्थः, एवं स्थिते सत्यपि मूढैः जगतः परमात्मशरीरत्वानभिज्ञैः नानेव गृह्यते, एकशरीरभूत पाणिपादादिषु शत्रुमित्रादिविभागयुक्तमिव जगद्विज्ञायत इत्यर्थः ॥ ४३ ॥

वी ॥ कोऽसौ देहातिरिक्तो जीवो नाम, कीदृशश्च, देहश्च कीदृशः, कथं च देहातिरिक्तस्यात्मनस्सुखदुःखादिभोक्तृत्वमित्यत आह—देह इति ॥ देहस्तावद्द्रव्यप्राणगुणात्मकः द्रव्यं पृथिव्यादिभूतपञ्चकम् , प्राणा इन्द्रियाणि, गुणाः पृथिव्यादिभूतपञ्चकगुणाः गन्धादयः, सत्त्वादिप्रकृतिगुणारब्धद्रव्यादितत्त्वान्तरसमुदायरूपः, आत्मा तु ज्ञानात्मक इति भावः, स च आद्यन्तवान् उत्पत्तिविनाशवान् , आत्मा तु नित्य इति भावः, स चाविद्यया प्रकृत्या आत्मनि कॢप्तस्सन् देहिनं जीवात्मानं संसारयति, तस्य जन्मजरामरणादिदुःखं जनयतीत्यर्थः ॥ ४४ ॥

मु ॥ ननु नित्यशुद्धस्य जीवात्मनः कथमेवं मूढता स्यादित्यत्र तद्धेतुमुपपादयति

१ कल्पते. मु. भा. प्र. पा ॥ २. ज्ञान. मु. भा प्र. पा ॥

नात्मनोऽन्येनसंयोगोवियोगश्चासतासति। तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यांयथारवेः ॥
जन्मादयस्तुदेहस्यविक्रियानात्मनःक्वचित् । कलानामेवनेन्दोर्मृतिर्ह्यस्यकुहूरिव ॥

—देह इति ॥ द्रव्यज्ञानगुणात्मकः—द्रव्याणि पञ्चभूतानि, ज्ञानशब्देन ज्ञानेन्द्रियाण्युच्यन्ते, गुणशब्देन गुणत्रयकार्यभूततत्त्वान्तराणि, एतत्समुदायरूप इत्यर्थः. 'द्रव्यप्राणगुणात्मकः' इति पाठान्तरम्, तदा प्राणापानव्यानोदानसमानाः प्राणशब्देनोच्यन्ते, आद्यन्तवान् अनित्यः अविद्यया प्रकृत्या आत्मनि कॢप्तः अनादिकर्मवासनया आत्मबन्धकत्वेन कल्पित इत्यर्थः, देहः देहिनं जीवात्मानं संसारयति जन्मजरामरणादिकं दुःखं नयति, अतो मोह इति भावः ॥ ४४ ॥

वी ॥ ननु यदि देहस्स्वसंबन्धमात्रेण जीवात्मानं संसारयेत्, तर्हि परमात्मानमपि स्वसंबन्धादेव संसारयत्वित्यत आह– नात्मन इति ॥ हे सति आत्मनः परमात्मनः असता देहेन जीवपराभ्यामन्येन सह जीवस्येव संयोगवियोगावुत्पत्तिमरणात्मकौ न भवतः, अनेन जीवस्योत्पत्तिविनाशौ नाम देहसंयोगवियोगात्मकावेवेत्युक्तम्, कुतः?तत्प्रसिद्धेः, देहोत्पत्तेः संयोगवियोगोत्पत्तेर्वा तद्धेतुत्वात्परमात्मसङ्कल्पहेतुकत्वात्परमात्माधीनत्वाद्देहः परमात्मनो न बन्धक इत्यर्थः, तदधीनेन तस्य बन्धाभावे दृष्टान्तमाह—दृग्रूपाभ्यां यथारवेरिति । आदित्येनानुग्राह्यं चक्षुस्तेन प्रकाश्यश्यामादिमरूपं चेत्युभाभ्याम् आदित्यस्य न संसर्गः दूरस्थत्वात्, एवं परमात्माधीनेन देहेनान्तःस्थितस्यापि परमात्मनो दूरस्थस्येव न तत्कृतदोषाश्रयत्वमित्यर्थः ॥ ४५ ॥

मु ॥ तर्ह्येतदन्तरात्मनोऽपि परमात्मनः कथं देहसम्बन्धप्रयुक्तदुःखाद्यन्वयो नास्तीत्यत्राह– नात्मन इति ॥ हे सतीति सम्बुद्धिः, आत्मनः परमात्मनः असता दुष्टतया हेयेन अन्येन देहेन संयोगो वियोगश्च न जीवस्येव न भवतीत्यर्थः, कुतः, तत्प्रसिद्धेः प्रसिद्धिः, प्रकर्षेण सिद्धिः सम्भवः, तस्मात्प्रसिद्धेः तत्प्रसिद्धेः परमात्मसङ्कल्पहेतुकत्वात् परमात्माधीनत्वात् देहः परमात्मनो न बन्धक इत्यर्थः, तदधीनेन तस्य सम्बन्धाभावे दृष्टान्तमाह—दृग्रूपाभ्यां यथा रवेरिति । आदित्येन ग्राह्यं चक्षुः तेन प्रकाश्यं रूपं ताभ्यामुभाभ्याम् आदित्यस्य न संसर्गः दूरस्थत्वात्, एवं परमात्माधीनेन देहेन तदन्तः स्थितस्यापि दूरस्थस्येव न तत्कृतदोषान्वय इत्यर्थः ॥ ४५ ॥

वी॥ आद्यन्तवानित्यनेन सूचितमात्मनो जन्माद्यभावमुपपादयति—जन्मादयस्त्विति ॥ जन्मादयो विक्रिया विकारा देहस्यैव, क्वचिदपि शरीरे स्थितस्यापि आत्मनो न सन्ति, यथा कलानामेव जन्मादयः, न चन्द्रस्य, तद्वत् द्रव्यादिसंघातात्मकदेहानामेव न जीवस्येत्यर्थः, जन्मादय इत्यादिशब्देन बाल्यादिविकारसंग्रहः, तर्हि "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्यवानुविनश्यति" इति जीवविनाशवादिनी श्रुतिर्विरुध्येतेत्यत आह—मृतिर्ह्यस्य कुहूरिवेति । अस्य जीवस्य मरणं चन्द्रस्य कुहूरिवेत्यन्वयः, नष्टेन्दुकला पञ्चदशी कुहूः, यथा चन्द्रस्य कलानाशादेवामावास्या कुहूरिन्दुक्षय इति व्यपदिश्यते, तद्वदस्यात्मनो देहनाशादेव मृतिरिति व्यवहार इत्यर्थः ॥ ४६ ॥

यथाशयानमात्मानंविषयान्फलमेवच । अनुभुङ्क्तेऽप्यसत्यर्थेतथाऽप्नोत्यबुधोभवम्॥
तस्मादज्ञानजंशोकमात्मशोषविमोहनम् । तत्त्वज्ञानेननिर्हृत्यस्वस्थाभवशुचिस्मिते ॥
श्रीशुकउवाच—
एवंभगवतातन्वी रामेणप्रतिबोधिता । वैमनस्यम्परित्यज्य मनोबुद्ध्यासमादधे॥४९

---

मु॥ ननु देहो देहिनं संसारयतीत्युक्तम्, संसारश्च जन्ममरणादिदुःखानुभवः, स च नित्यस्य आत्मनः कथमित्यत आह—जन्मादयस्त्विति ॥ कलानाम् इन्दुकलानामेव जन्मादयो विक्रियाः, इन्दोस्तु नैव, एवं देहस्यैव जन्मजरामरणाद्यवस्थारूपा विक्रिया विकाराः आत्मनः क्वचिदपि न, तर्ह्यस्य जीवस्य का नाम मृतिरित्यत्राह—मृतिरिति। अस्य जीवस्य मृतिः इन्द्रोः कुहूरिवेत्यन्वयः, कुहूर्नाम नष्टेन्दुकला पञ्चदशी, सा च चन्द्रस्य कलानाशात्मिका, एवं कर्मफलभोगार्थं धृतशरीरस्य जीवस्य भोगेन कर्मक्षये तद्देहनाशो मृतिरित्यर्थः, एवं च देहारम्भकपृथिव्यादितत्त्वानामेव जन्मादयो न जीवस्येति परमार्थः, तथाच कलानाशादेव कुहूरिन्दुक्षय उच्यते, तद्वदस्यात्मनो देहनाशादेव मृतिव्यवहारः ॥ ४६ ॥

वी ॥ देहो देहिनं संसारयतीत्युक्तम्, तत्र यावदयं संसरति, किं वा तत्र कारणम्, देहसम्बन्ध एवेतिचेन्न, परमात्मनोऽपि तदविशेषात्संसारापत्तेरित्यतस्सदृष्टान्तमाह यथेति॥ अर्थे स्वाप्ने असत्यपि अस्थिरेऽपि शयानः पुरुषः स्थिरबुद्ध्या यावदात्मानं भोक्तारं विषयान् स्वाप्नान्विषयान्फलं तद्भोगं चानुभुङ्क्ते, तद्वद्विषयध्रुवबुद्ध्या विषयान्यावदनुभवति, तदा तावदयमबुधोऽज्ञस्सन् भवं संसारं प्राप्नोति, न तु ततो मुच्यते, प्रबुद्धस्तु मुच्यत इति भावः, स्वरूपेणात्मनो नित्यत्वेऽपि स्वप्नावस्थावैशिष्ट्यस्यानित्यत्वात्तन्नित्यत्वबुद्धिस्तदनुभवनिमित्तेत्यभिप्रायेणात्मानमित्युक्तम् ॥ ४७ ॥

मु ॥ एवं देहस्य नानाविकारास्पदत्वादिना दुष्टत्वं प्रतिपाद्य तत्परतन्त्रस्यात्मनः पूर्वम् 'आत्ममोहे नृणाम्' इत्यत्र उक्तमूढत्वं मुखान्तरेण सदृष्टान्तमुपपादयति—यथेति॥ शयानः पुमान् अर्थे असति अस्थिरे आत्मानं तात्कालिकात्मस्वरूपप्रतीतिसुखमित्यर्थः, विषयान् स्वप्नार्थांश्च यथा ध्रुवम् अनुभुङ्क्ते स्थिरत्वबुद्ध्या अनुभवति, 'फलमेव च' इति पाठे तत्सुखं चेत्यर्थः, तथा अबुधः देहात्मभ्रान्त्या लुप्तविवेकः भवं संसारम् आप्नोति जाग्रदवस्थायामपि विषयान् ध्रुवत्वबुद्ध्या अनुभवतीत्यर्थः ॥ ४७ ॥

वी ॥ उपसंहरति—तस्मादिति ॥ तस्मात्तत्त्वस्थितेरीदृशत्वादात्मानं मानसं शोषयत्यभास्वरयति विमोहयति चेति तथा तमज्ञानप्रभवं सुहृदर्हदुदासीन इत्येवंविधं मोहं तत्त्वज्ञानेन कृत्स्नस्य जगतः परमात्मशरीरकत्वज्ञानेन निर्हृत्य अपाकृत्य हे शुचिस्मिते स्वस्था स्वस्मिन् स्थिता ज्ञानानन्दस्वरूपात्मविमर्शनपरा भव सुस्थेति पाठे निर्विषादा भवेत्यर्थः॥

मु ॥ उपसंहरति—अस्मादिति ॥ आत्मानं शोषयतीत्यात्मशोषं विमुह्यतेऽनेन जन इति विमोहनं तत्त्वज्ञानेन निर्हृत्य अपाकृत्य स्वस्था समाहितचित्ता भवेति ॥ ४८ ॥

वी ॥ एवमिति ॥ तन्वी रुक्मिण्येवं प्रतिबोधिता वैमनस्यं त्यक्त्वा बुद्ध्या तत्त्वनिर्णयात्मिकया मनः सङ्कल्पविकल्पात्मकं समाहितवती ॥ ४९ ॥

प्राणावशेषउत्सृष्टो द्विड्भिर्हतबलप्रभः । स्मरन्विरूपकरणं वितथात्ममनोरथः ॥
[1]चक्रेभोजकटंनाम निवासायमहत्पुरम्॥ ५०
अहत्वा[2]दुर्मतिःकृष्ण मप्रत्यूह्ययवीयसीम्।कुण्डिनंनप्रवेक्ष्यामीत्युक्त्वातत्रावसद्रुषा ॥
भगवान्भीष्मकसुतामेवंनिर्जित्यभूमिपान् । पुरमानीयविधिवदुपयेमेयदूद्वहः ॥
तदामहोत्सवोनृणां यदुपुर्यांगृहेगृहे । अभूदनन्यभावानां कृष्णेयदुपतौनृप ॥ ५३

मु ॥ ततः किम्? अत आह—एवमिति ॥ तन्वी रुक्मिणी भगवता सर्वज्ञेन रामेण एवं पूर्वोक्तरीत्या प्रतिबोधिता सती वैमनस्यं विमनस्कत्वं परित्यज्य बुद्ध्या सम्यग्ज्ञानेन मनः समादधे समाहितम् अकरोत् ॥ ४९ ॥

वी ॥ रुक्मिणस्त्वेवं श्रुतवतोऽपि नाज्ञानं निवृत्तमिति सूचयन्नाह—प्राणेति ॥ रुक्मी तु द्विड्भिः शत्रुभिः हतं बलं प्रभा तेजश्च यस्य सः अत एव प्राणमात्रावशिष्टस्त्यक्तः वितथो व्यर्थः स्वमनोरथो यस्य सः आत्मनस्स्वस्य विरूपकरणं कृष्णकर्तृकमिति शेषः, स्मरन् भोजकटाख्यं विपुलं पुरं चक्रे ॥ ५० ॥

मु॥ एवं श्रुतवतोऽपि रुक्मिणः तदा ज्ञानानुदयेन मनो न निर्वृतमिति दर्शयन्नाह—प्राणावशेष इति ॥ द्विड्भिः शत्रुभिः प्राणावशेषः प्राणमात्रावशिष्ट एव उत्सृष्टः अत एव हते बलप्रभे शक्तिप्रतापौ यस्य स सन् विरूपकरणं श्रीकृष्णकृतम् आत्मनो वैरूप्यं स्मरन् दुरभिमानप्रयुक्तवेदनया मनसि पुनःपुनः आवर्तयन्नित्यर्थः, वितथो व्यर्थः आत्ममनोरथः श्रीकृष्णविजयेन स्वसृप्रत्याहरणाकाङ्क्षारूपः यस्य सः ॥ ५० ॥

वी ॥ तत्रेत्थं सङ्कल्प्यावसच्चेत्याह—अहत्वेति ॥ दुर्मतिः रुक्मी यवीयसीं कनीयसीं कन्यां रुक्मिणीम् अप्रत्यूह्य अनावर्त्य कुण्डिनं पुरं न प्रवेक्ष्यामीति प्रतिज्ञाय रुषा क्रोधेन तत्र भोजकटे न्यवसत् ॥ ५१ ॥

मु ॥ दुर्मतिं श्रीकृष्णम् अहत्वा यवीयसीं सोदरीं रुक्मिणीम् अप्रत्यूह्य अनावर्त्य तस्याः पुनरानयनम् अकृत्वेत्यर्थः, तत्रापि 'अदुर्मतिम्' इति पदच्छेदेन सर्वज्ञमिति 'अहत्वा' इत्यस्य हन्तेर्धातोर्गत्यर्थत्वाच्च 'सर्वे गत्यर्था ज्ञानार्थाः' इति परिभाषया ज्ञानार्थत्वाच्च सर्वज्ञं श्रीकृष्णम् अज्ञात्वेति वास्तवोऽर्थो बोध्यः, कुण्डिनं स्वपुरं न प्रवेक्ष्यामीत्युक्त्वा इति प्रतिज्ञायेत्यर्थः, रुषा क्रोधेन तत्रावसत्, यत्र विरूपितः, तत्रैवेत्यर्थः, तत्रैव भोजकटं नाम पुरमभवदिति ॥ ५१ ॥

वी ॥ भगवानिति ॥ पुरं प्रति प्रापय्य यदूद्वहो भगवान् यथाविधि विवाहितवान् ॥

मु ॥ अथ भगवान् किमकरोदित्यत्राह—भगवानित्यादिना ॥ भीष्मकसुतां रुक्मिणीं द्वारकामानीय प्रापय्य विधिवत् उपयेमे यथाशास्त्रं पाणिग्रहणम् अकरोत् ॥ ५२ ॥

वी ॥ तदेति ॥ तदा उद्वाहदिनेष्वित्यर्थः, नृणाम् उत्सवो बभूव, कथं भूतानां यदुपतौ कृष्णे अनन्यभावानाम् एकान्तस्नेहानाम् ॥ ५३ ॥

मु ॥ तन्महोत्सवं वर्णयति—तदेत्यादिना ॥ यदुपतौ यदुनाथे श्रीकृष्णे अनन्यभावानाम् एकाग्राशयानां नृणां प्रजानां यदुपुर्यां द्वारवत्यां तथा गृहेगृहे प्रतिगृहं महोत्सवोऽभूत् ॥ ५३ ॥

१. दुर्मतिं. मु. भा. प्र. पा ॥ २. तत्रभोजकटं नामनिवासायाभवत्पुरम्. मु.भा.प्र.पा ॥

नरानार्यश्चमुदिताः प्रमृष्टमणिकुण्डलाः । पारिबर्हमुपानिन्युर्वरयोश्चित्रवाससोः ॥

सावृष्णिपुर्युत्तभितेन्द्रकेतुभिर्विचित्रमाल्याम्बररत्नतोरणैः ।
बभौप्रतिद्वार्युपक्लृप्तमङ्गलैरापूर्णकुम्भागुरुधूपदीपैः ॥ ५५

सिक्तमार्गामदच्युद्भिराहूतप्रेष्ठभूभुजाम् । गजैर्द्वार्षुपरामृष्टरम्भापूगोपशोभिता ॥
कुरुसृञ्जयकैकेयविदर्भयदुकुन्तयः । मिथोमुमुदिरे[1]मध्ये संभ्रमात्परिधावताम् ॥

---

वी ॥ नराइति ॥ प्रमृष्टानि निर्मलीकृतानि मणिमयकुण्डलानि येषां यासां च ते ताश्च वरयोर्वरवध्वोः देयं पारिबर्हमुपस्करम् आनिन्युः ॥ ५४ ॥

मु ॥ प्रमृष्टमणिकुण्डलाः उत्तेजितरत्नकुण्डला इति सर्वभूषणधारणस्योपलक्षणम्, चित्रवेषयोः विचित्रनेपथ्ययोः वरयोः वरवध्वोः पारिबर्हं देयमुपस्करम् उपाजह्रुः ददुः॥

वी ॥ तात्कालिकीं पुरीमालक्षयति ॥ सेति ॥ उत्तभितैरुद्धृत्य प्रतिबद्धैरिन्द्रकेतुभिः ध्वजकेतुविशेषैः विचित्रैर्माल्यादिभिश्च गृहाणां द्वारेद्वारे उपक्लृप्तानि मङ्गलानि लाजाङ्कुरपुष्पप्रकरादीनि तैश्च समन्तात्पूर्णैः कुम्भैः अगरुधूपैः दीपैश्च सा वृष्णीनां पुरी द्वारका बभौ ॥ ५५ ॥

मु ॥ अथ द्वाभ्यां तदुत्सवे अलङ्कृतां द्वारकां वर्णयति —सेति ॥ उत्तभितैः उच्चैः स्थापितैः इन्द्रकेतुभिः ध्वजविशेषैः विचित्रैः माल्याम्बररत्नानां तोरणैश्च प्रतिद्वारि प्रतिगृहद्वारम् उत्क्षिप्तानि तत्र तत्र रचितानि मङ्गलानि लाजां शुकपुष्पप्रवालादीनि मङ्गलद्रव्याणि, तैश्च आपूर्णकुम्भैः पूर्णकलशैः अगरुधूपैः दीपकैः दीपवृक्षैश्च सावृष्णिपुरी-द्वारका बभौ ॥ ५५ ॥

वी ॥ सिक्तेति आहूताः ये प्रेष्ठा भूभुजो नृपास्तेषां सबन्धिभिर्मदोदकं स्रवद्भिर्गजैस्सिक्ताः गजमदोदकैस्सिक्ता इत्यर्थः ते मार्गा वीथयो यस्यां सा तथा द्वार्षु परामृष्टा उच्छ्रिताः रम्भाः कदल्यः ताभिः पूगैश्चोपशोभिता अलङ्कृता च बभौ ॥ ५६ ॥

मु ॥ पुनस्तामेव विशिनष्टि—सिक्तेति ॥ मदच्युद्भिः सप्तस्रोतोभिर्मदवर्षिभिः "करात्कटाभ्यां मेढ्राच्च नेत्राभ्यां च मदस्रुतिः" इत्यभिधानात्, तत्र करादित्यनेन नासारन्ध्रद्वयग्रहणात् सप्त मदस्रोतांसीति, आहूतप्रेष्ठभूभुजां विवाहोत्सवायामन्त्रितप्रियतमनृपाणां गजैः सिक्तमार्गा तन्मदजलस्नापितराजमार्गा द्वार्षु सर्वगृहद्वारेषु परामृष्टा उच्छ्रिता रम्भाः कदल्यः पूगाः क्रमुकतरवश्च तैः उपशोभिता ॥ ५६ ॥

वी ॥ कुर्विति॥ सम्भ्रमादौत्सुक्यात् परितो वीथिषु धावतां सञ्चरतां बन्धूनां मध्ये कुर्वादयो मिथस्समेत्य मुदं प्रापुः ॥ ५७॥

मु ॥ कुरुसृञ्जयेत्यादिना तत्तद्देशाधिपतय उच्यन्ते, तस्मिन् विवाहोत्सवे सम्भ्रमात् औत्सुक्यात् परिधावतां तत्तत्प्रयोजनकरणे सत्वरं प्रवर्तमानानां बन्धूनामित्यर्थः, मिथः समेत्य स्वयमपि प्रयोजकतया अन्योन्यं मिलित्वेत्यर्थः, मुमुदिरे आननन्दुः, भगवद्विवाहोत्सवे यत्किञ्चित्प्रयोजनान्वयेन ब्रह्मादिदुर्लभकिङ्करतालाभ एव तेषाम् आनन्दहेतुरभूदिति भावः ॥ ५७ ॥

---

१. तस्मिन्. मु. भा. प्र. पा ॥

रुक्मिण्याहरणंश्रुत्वा गीयमानंततस्ततः।राजानोराजकन्याश्च बभूवुर्भृशविस्मिताः ॥
द्वारकायामभूद्राजन्महामोदःपुरौकसाम् । रुक्मिण्यारमयोपेतंदृष्ट्वाकृष्णंश्रियःपतिम्॥

इति श्रीभागवते महापुराणे दशमस्कन्धे रुक्मिणीविवाहो नाम
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

—

(प्रद्युम्नजननशम्बरवधादिवृत्तान्तः)

श्रीशुक उवाच—
कामस्तुवासुदेवांशोदग्धःप्राग्रुद्रमन्युना । देहोपपत्तयेभूयस्तमेवप्रत्यपद्यत ॥ १

वी ॥ रुक्मिण्याहरणमिति ॥ ततस्ततस्तत्रतत्र देशेषु गीयमानं रुक्मिण्यानयनात्मकं भगवच्चेष्टितं श्रुत्वा नितरां विस्मिता बभूवुः ॥ ५८ ॥

मु ॥ ततस्ततः तत्तद्देशेष्वित्यर्थः, गीयमानं द्विजवन्दिचारणादिभिः उपगीयमानं रुक्मिण्याहरणं कृष्णेन बलात्कृतं रुक्मिणीसमाहरणं श्रुत्वा राजानो राजकन्याश्च भृशं विस्मिता आश्चर्यरसाविष्टा बभूवुः, तत्र राज्ञां विस्मयः—एतादृशसाहसकार्ये वयं कदापि अहो अशक्ताः—इति,राजकन्यानान्तु—इयं रुक्मिणी पुरा कीदृशानि पुण्यकर्माणि कृतवती यत् कोटिमन्मथसुन्दरः स्वोत्कर्षार्थं सर्वैः प्रार्थनीयायाः श्रीदेव्याः वल्लभः श्रीकृष्ण एव स्वयं गत्वा एतां प्रियभार्यात्वेन वृतवान्–इति विस्मय इति भृशविस्मिता इत्यस्याभिप्रायः ॥ ५८ ॥

वी ॥ द्वारकायामिति॥ हे राजन् रमया लक्ष्म्यवताररूपया रुक्मिण्या सहितं श्रियः पतिं श्रीकृष्णं दृष्ट्वा पुरवासिनां महान्मोदो बभूव ॥ ५९ ॥

मु ॥ रमया लक्ष्मीरूपया रुक्मिण्या उपेतम् अत एव श्रियः पतिं साक्षाल्लक्ष्मीपतिं दृष्ट्वा हे राजन्निति परीक्षितं प्रति संबुद्धिः, द्वारकायां नगरे पुरौकसां तत्पत्तनवासिनां महान् मोदः उद्वेलानन्दोऽभूदिति ॥ ५९ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे
रुक्मिणीविवाहो नाम चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

—

वी॥ इत्थं भगवतो रुक्मिणीविवाहस्सविस्तरमनुवर्णितः, अथ जाम्बवत्यादिविवाहान् विवक्षुस्तेभ्यः प्रागेव प्रद्युम्नजन्मेति तदनुवर्णयति पञ्चपञ्चाशत्तमेन—काम इत्यादिना ॥ यद्यपि शम्बरागारात्प्रत्यागमनादिकं तु विवाहेभ्यः पाश्चात्यं, तथाऽपि कथापर्यवसानायात्रोक्तमिति द्रष्टव्यम्, कामस्त्विति ॥ कामो मन्मथस्तस्य च वासुदेवांश इति विशेषणेन भाविजन्मप्रभृतिसम्बन्धः कीर्तितः, वासुदेवविभूतित्वाद्वासुदेवांशः, अत एव पुनर्देहोपपत्तये देहसंयोगाय तमेव वासुदेवमेव प्रत्यपद्यतेत्युक्तम्, प्रत्यपद्यत भगवत्तनुमाश्रित्यावतस्थ इत्यर्थः, अनेन चतुर्व्यूहेषु तृतीयव्यूहविभूतित्वमुच्यते, नामसाम्यं च तद्विभूतित्वनिबन्धनमेव ॥ १ ॥

सएवजातोवैदर्भ्यांकृष्णवीर्यसमुद्भवः। प्रद्युम्नइतिविख्यातस्सर्वतोऽनवमःपितुः॥ २
तंशम्बरःकामरूपीहृत्वातोकमनिर्दशम्।सविदित्वाऽऽत्मनश्शत्रुंप्रास्योदन्वत्यगाद्गृहम्
तंनिर्जगारबलवान्मीनस्सोऽप्यपरैस्सह।वृतोजालेनमहतागृहीतोमत्स्यजीविभिः॥ ४

मु॥ प॥ अघटितघटनाशक्तेर्लक्ष्मीनाथस्य साधुसन्त्रातुः ।
परवञ्चितनिजवस्त्वानयनं कियदित्यसूचि मुनिनेह ॥
निस्स्पृहस्याप्तकामस्याप्यत्र पुत्रेषणादिकम् ।
लीलाविभूत्यनुगुणा नटनेत्यपि सूच्यते ॥
पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः ।
इति लौकिकवाक्यं च यथार्थमिति सूच्यते ॥

कामस्त्विति ॥ अत्र जाम्बवत्यादिविवाहेभ्यः प्रागेव प्रद्युम्नोत्पत्तिः, ततो विवाहः, ततश्शम्बरग्रहात्प्रद्युम्नप्रत्यागमनम् , अतः पुत्रकथनाप्रस्तावेऽपि प्रथमं प्रद्युम्नस्य जातमात्रस्य शम्बरेण हरणं निरूप्यते, प्रत्यागमनं तु विवाहानन्तरभाव्यपि कथापर्यवसानायात्रोक्तमिति न कश्चिद्विरोधः, वासुदेवांश इति विशेषणम् , अनेन भाविजन्मप्रतिसंबन्ध उक्तः, न तु चतुर्व्यूहेष्वयं तृतीयव्यूह उच्यते, नामसाम्यन्तु तद्विभूतित्वनिबन्धनमिति विवेकः, वासुदेवाधिष्ठितचित्तप्रभवत्वाद्वासुदेवांशः, तत्सृष्टिहेतुत्वाद्वा, एवंविधस्य पुनरुत्पत्तिहेतुमाह—दग्ध इति । देहोपपत्तये जन्मने तमेव प्रत्यपद्यत प्रापेति ॥ १ ॥

वी ॥ स एव काम एव कृष्णस्य भगवतो वीर्यात्सङ्कल्परूपज्ञानात्मकात्समुद्भवो यस्य सः वैदर्भ्यां रुक्मिण्यां जातः प्रद्युम्न इति विख्यातः अभिहितः सर्वतः सर्वप्रकारेण पितुरनवमः अन्यूनस्तुल्य इत्यर्थः ॥ २ ॥

मु ॥ तदाह—स एवेति ॥ सर्वतः सौन्दर्यादिसर्वगुणैःपितुः श्रीकृष्णात् अनवमः अन्यूनः स एव कृष्णस्य वीर्यमेव समुद्भवः स्वोत्पत्तिकारणं यस्य स सन् प्रद्युम्न इति नाम्ना विख्यातः सन् वैदर्भ्यां जातः ॥ २ ॥

वी॥ तमिति॥ स प्रसिद्धः कामशत्रुश्शम्बरस्तु प्रद्युम्नम् आत्मनस्स्वस्य शत्रुं विदित्वा नारदमुखादिति शेषः, अनिर्दशम् अनतीतदशाहं तोकं शिशुं कामरूपी सन् हृत्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहं प्रत्यगात् ॥ ३ ॥

मु ॥ ततः किमत आह —तमिति ॥ सः मायावित्वेन प्रसिद्धः कामरूपी यथेष्टरूपधारी शम्बरः शम्बराख्यः कश्चिदसुरः अनिर्दशम् अनतिक्रान्तदशादिनं तोकं कृष्णापत्यभूतं शिशुम् आत्मनः शत्रुं विदित्वा उदन्वति समुद्रे प्रास्य क्षिप्त्वा गृहमगात् स्वगृह ययौ ॥ ३ ॥

वी ॥ तं शिशुं कश्चिद्बलवान्मीनो मत्स्यो निर्जगार निगीर्णवान् , ततः कदाचिन्मत्स्यजीविभिर्दाशैस्सोऽपि मीनोऽप्यपरैर्मीनैस्सह महता जालेन वृतः आवृतो गृहीतश्च ॥ ४ ॥

तंशम्बरायकैवर्ताउपाजह्रुरुपायनम्।सूदामहानसंनीत्वाऽवध्यन्स्वधितिनाऽद्भुतम्॥ ५
दृष्ट्वातदुदरेबालंमायावत्यैन्यवेदयन् । नारदोऽकथयत्सर्वंतस्याश्शङ्कितचेतसः ॥
बालस्यतत्त्वमुत्पत्तिंमत्स्योदरनिवेशनम् ॥ ६
साचकामस्यवैपत्नीरतिर्नामयशस्विनी। पत्युर्निर्दग्धदेहस्यदेहोत्पत्तिंप्रतीक्षती ॥ ७
निरूपिताशम्बरेणसासूदौदनसाधने । कामदेवंशिशुंबुद्ध्वाचक्रेस्नेहंतदाऽर्भके ॥ ८

---

मु ॥ ततस्तस्य शम्बरप्राप्तिप्रकारमाह—तमिति॥ बलवान् मीनः तं शिशुं निर्जगार निगीर्णवान्, सोऽपि निगीर्णशिशुः स मीनोऽपि अपरैर्मीनैस्सह महता जालेन आनायेन "आनायः पुंसि जालं स्यात्" इति निघण्टुः, वृतः आवृतस्सन् मत्स्यजीविभिः मत्स्यक्रयजीविभिः दाशैः गृहीतः ॥ ४ ॥

वी ॥ कैवर्ता दाशास्तं महामीनं शम्बरायोपायनमुपाजह्रुः समर्पयामासुः, ततस्सूदाः पाचकाः छेत्तारो वा महानसं पाकगृहं प्रति तं मीनं प्रापय्य स्वधितिना शस्त्रविशेषेण अवध्यन् खण्डितवन्तः ॥ ५ ॥

मु ॥ ततः किमत आह—तमिति ॥ कैवर्ताः दाशाः तं मीनं शम्बराय उपायनम् उपहारं कृत्वेत्यर्थः, आजह्रुः आर्पयन्, सूदाः सूपकाराः महानसं पाकगृहं नीत्वा तमिति शेषः, स्वधितिना शस्त्रिकया अवध्यन् चिच्छिदुः ॥ ५ ॥

वी ॥ तदा तस्य मत्स्यस्योदरे अद्भुतं बालं दृष्ट्वा तं मायावत्यै मन्मथपत्न्यै रत्याख्यायै शम्बरेण प्रसह्याहृत्य महानसे स्थापितायै न्यवेदयन्, कोऽसावयं बाल इति,मम भर्तैव स्थितः, किं वा स एवायमित्येवं शङ्कितं चेतो यस्यास्तस्या मायावत्याः नारदः तत्सर्वं कथयामास, किं तत्सर्वं यदकथयत्तत्राह—बालस्येति । तत्त्वं याथार्थ्यं काम एवायमित्येवंविधं मत्स्योदरनिवेशनादिकं चेति सर्वमकथयत् ॥ ६ ॥

मु ॥ तदुदरे मत्स्योदरे अद्भुतं बालं दृष्ट्वा मायावत्यै मायावतीनाम्न्यै तद्गृहे वर्तमानायै रत्यै इत्यर्थः, न्यवेदयन् समार्पयन्, शङ्कितचेतसः मन्मथस्वरूपोऽयं बालः को वेति वितर्काकुलचित्तायाः तस्याः बालस्य तत्त्वं तद्भावं कामोऽयं तव भर्तेति याथार्थ्यमित्यर्थः, उत्पत्तिं रुक्मिण्यां श्रीकृष्णात् जन्म,मत्स्योदरनिवेशनं मत्स्योदरे तस्य प्रवेशप्रकारं चेत्येतत्सर्वं नारदोऽकथयत् शशंस ॥ ६ ॥

वी ॥ साचेति ॥ सा शम्बरेण सूदैस्सह ओदनसाधने पाकगृहे निरूपिता सूदानां परिचारकतया स्थापिता मायावती पत्युः कामस्य देहोत्पत्तिं प्रतीक्षमाणा स्थिता सती तं शिशुं नारदमुखात्कामदेवं ज्ञात्वा तस्मिन्नर्भके अविच्छिन्नं स्नेहं चक्रे ॥ ७; ८ ॥

मु ॥ ननु मायावती नाम केति परीक्षिज्जिज्ञासानुगुणं तत्प्रकारं ज्ञापयन् कथां गमयति—सा चेति ॥ सा मायावती च यशस्विनी पातिव्रत्यादिसद्धर्मजन्यकीर्तिसम्पन्ना अत एव निर्दग्धदेहस्य शम्भुललाटनेत्राग्निभस्मीकृतशरीरस्य पत्युः दयितस्य देहोत्पत्तिं प्रतीक्षती प्रतीक्षमाणा कदा वा स्यादित्युत्प्रेक्षमाणेत्यर्थः ॥ ७ ॥

मु ॥ सूपौदनसाधने सूपशब्देन तत्प्रमुखव्यञ्जनान्युच्यन्ते, ओदनशब्देन अन्नपायसनानाविधपिष्टविकारादयो गृह्यन्ते, तेषां साधनं तत्परिपाकादिकरणाधिकारः,तस्मिन्

नातिदीर्घेणकालेनसकार्ष्णीरूढयौवनः।जनयामासनारीणांवीक्षन्तीनांचविभ्रमम्॥

सातंपतिंपद्मदलायतेक्षणंप्रलम्बबाहुंनरलोकसुन्दरम् ।
सव्रीडहासोत्तभितभ्रुवेक्षतीप्रीत्योपतस्थेरतिरङ्गसौरतैः ॥ १०

तामाहभगवान्कार्ष्णिर्मातस्तेमतिरन्यथा।मातृभावमतिक्रम्यवर्तसेकामिनीयथा॥११

रतिरुवाच—

भवान्नारायणसुतश्शम्बरेणाहृतोगृहात् । [१]अहंतेदयितापत्नीरतिःकामोभवान्प्रभो ॥

एषत्वाऽनिर्दशंसिन्धावक्षिपच्छम्बरोऽसुरः ।

---

निरूपिता नियमिता सती शिशुं तं बालं देवं स्वभर्तारं मन्मथं बुद्ध्वा अर्भके तस्मिन् स्नेहं भर्त्रनुरागं चक्रे ॥ ८ ॥

वी ॥ कार्ष्णिः कृष्णस्यापत्यं प्रद्युम्नः नातिदीर्घेणाल्पेनैव कालेन रूढं प्राप्तं यौवनं यस्य सः विभ्रमं सम्मोहं जनयामास ॥ ९ ॥

मु ॥ स कार्ष्णिः प्रद्युम्नः नातिदीर्घेण कालेन अल्पकालेनेत्यर्थः, लौकिकशिशुरीत्या न पर्यायप्राप्तबाल्यादिवयःक्रमेणेति यावत्, कृष्णस्यापत्यं कार्ष्णिः स प्रद्युम्नः रूढयौवनः पूर्णयौवनस्सन् वीक्षन्तीनां पश्यन्तीनां नारीणां विभ्रमं सम्मोहं जनयामास॥९॥

वी ॥ सेति ॥ अङ्ग हे राजन् सा मायावती तं प्रद्युम्नं रूढयौवनं प्रीत्या सौरतैर्भावैः उपतस्थे अभजत्, कथंभूता व्रीडया सहितो यो हासस्तेन उत्तभिते भ्रुवौ यस्याः तया दृशेति विशेष्याध्याहारः, ईक्षती ईक्षमाणा ॥ १० ॥

मु ॥ सा रतिः नरलोकात् सुन्दरं सर्वनरेभ्योऽप्यतिशयितसौन्दर्यमित्यर्थः, प्रलम्बबाहुम् आजानुबाहुं पद्मदलायतेक्षणं पितृसारूप्यात् पुण्डरीकदलामलायतेक्षणमित्यर्थः, तं पतिं सव्रीडहासा लज्जादरहासमिलिता उत्तभिते ईषन्नमिते भ्रुवौ यस्यास्सा उत्तभितभ्रुवाच सती सौरतैः सुरतानुरागज्ञापकचेष्टाविशेषैरित्यर्थः, उपतस्थे अभजत्, अङ्गेति परीक्षितं प्रति संबुद्धिः ॥ १० ॥

वी ॥ तदा भगवान् कार्ष्णिस्तां मायावतीमाह, उक्तिमेवाह—मातरिति । हे मातस्तव मतिरन्यथा विपरीता बभूव, अन्यथात्वमेव दर्शयति—मातृभावमिति । कामिनी पुंश्चली यथा तद्वत् ॥ ११ ॥

मु ॥ ततः किमत आह—तामाहेति ॥ हे मातः ते मतिः अन्यथा वैपरीत्येन प्रवर्तत इत्यर्थः, तदाह—मातृभावमिति । कामिनी यथा कामुकस्त्रीव ॥ ११ ॥

वी ॥ एवमुक्ता प्राह रतिः—भवानिति ॥ नारायणस्य कृष्णस्य सुतः एवं चेत्तद्गृह एव किं न वसामीत्यत आह शम्बरेणेति । गृहान्नारायणस्य गृहात्, तवाहं दयिता प्रियतमा पत्नी ॥ १२ ॥

मु ॥ भवानिति ॥ हे प्रभो भवान् नारायणसुतः कामो मदनः, अहं च ते अधिकृता त्वया परिगृहीतेत्यर्थः, रतिर्नाम पत्नी ॥ १२ ॥

वी ॥ एष शम्बरोऽसुरः अनतीतदशाहमेव त्वां समुद्रे पातयामास, हे प्रभो समर्थ ॥ १३ ॥

---

१. अहंतेऽधिकृतापत्नी. मु. भा. प्र. पा ॥

मत्स्योऽग्रसीत्तदुदरादिहप्राप्तोभवान्प्रभो ॥ १३

तमिमंजहिदुर्धर्षंदुर्जयंशत्रुमात्मनः । मायाशतविदंत्वंचमायाभिर्मोहनादिभिः ॥ १४
परिशोचतितेमाता [1]कुरङ्गीवहतप्रजा । पुत्रस्नेहाकुलादीना विवत्सागौर्यथाऽऽतुरा॥
प्रभाष्यैवन्ददौविद्यां प्रद्युम्नायमहात्मने । मायावतीमहामायां सर्वमायाविनाशनीम्॥
सचशम्बरमभ्येत्य संयुगायसमाह्वयत्। अविषह्यैस्तमाक्षेपैः क्षिपन्संजनयन्कलिम् ॥
सोऽधिक्षिप्तोदुर्वचोभिः पादाहतइवोरगः । निश्चक्रामगदापाणिरमर्षात्ताम्रलोचनः॥

मु ॥ तर्हि कथमेवं वृत्तिरित्यत्राह—एष इति ॥ अनिर्दशम् अनिर्गतदशाहमेव त्वा त्वां सिन्धौ समुद्रे अक्षिपत अपातयत् , मत्स्योऽग्रहीत् अगिलत् , त्वामिति शेषः, तदुदरात् मत्स्योदरात् इह प्राप्तः इति ॥ १३ ॥

वी॥ तमात्मनश्शत्रुं शम्बरं जहि, दुर्जयत्वे हेतुः मायाशतविदमिति। कथं तर्हि हन्तव्यस्तत्राह—मायाभिरिति ॥ मोहनमादिर्यासां ताभिर्मायाभिः मयोपदेक्ष्यमाणाभिरिति शेषः ॥ १४ ॥

मु ॥ दुर्धर्षं धर्षितुं प्रतिद्वन्द्वितया योद्धुमशक्यमित्यर्थः, अत एव दुर्जयं मायाशतविदम् ऐन्द्रजालिकादिवत् शतधाकल्पिततत्तद्भयङ्कररूपैः युद्धकरणविशारदमित्यर्थः, तमिमं शम्बरं जहि संहर, तर्हि कथमसौ संहर्तव्य इत्यत्राह—त्वं चेति । मुह्यन्त्यनेन शत्रव इति मोहनं नाम शत्रुसंमोहनविद्याविशेषः, तदादिभिर्मायाभिः शक्तिविशेषैः जहीत्यन्वयः ॥ १४ ॥

वी ॥ नचात्र विलम्बः कार्य इत्याह—परिशोचतीति ॥ तव माता रुक्मिणी हता विनष्टा अदृष्टेति यावत् , प्रजा पुत्रो यस्यास्सा कुरङ्गीव हरिणीव परिशोचति, किञ्च पुत्रस्नेहेनातुरा विवत्सा विनष्टवत्सा अत एव आतुरा गौर्यथा तद्वत् ॥ १५ ॥

मु ॥ तत्र हेतुमाह—परिशोचतीति ॥ हतप्रजा नष्टापत्या कुररी पक्षिविशेष इव किञ्च पुत्रे त्वयि स्नेहेनातुरा अत एव दीना सती विवत्सा विगतवत्सा अत एव आतुरा गौरिव परिशोचति ॥ १५ ॥

वी ॥ प्रभाष्येति॥ सर्वाश्शत्रोस्संबन्धिनोर्मायाः विनाशयतीति तथा तां मायां मोहनादिमायात्मिकां विद्यां ददौ ॥ १६ ॥

मु ॥ एवं मायावती प्रभाष्य सम्यगुक्त्वा सर्वमायानां विनाशनीं निवर्तनीं महामायां नाम विद्यां महात्मने तदुपदेशानुगुणधृतिसम्पन्नायेत्यर्थः, प्रद्युम्नाय ददौ ॥ १६ ॥

वी ॥ ततस्स च प्रद्युम्नः संयुगाय युद्धार्थं समाहूतवान्, किं कुर्वन् सोढुमशक्यैः अधिक्षेपैः तं शम्बरं क्षिपन् परिभवन् कलिं कलहं जनयंश्च ॥ १७ ॥

मु ॥ सचेति ॥ एवं शत्रुसंहारसाधनसंपन्नः प्रद्युम्न इत्यर्थः, शम्बरमभ्येत्य प्राप्य अविषह्यैर्दुस्सहैः आक्षेपैः धिक्कारवचनैः क्षिपन् आक्षिपन् ताडितं कुर्वाण इत्यर्थः, कलिं कलहबीजं मन्युमित्यर्थः, जनयन् संयुगाय युद्धाय समाह्वयत् एहीत्याहूतवान् ॥ १७ ॥

वी ॥ सइति॥ सः शम्बरः पादेन ताडितः सर्प इव दुर्वचोभिरधिक्षेपैरधिक्षिप्तः अत एव क्रोधात्ताम्रे लोचने यस्य गदा पाणौ यस्य सः निश्चक्राम ॥ १८ ॥

[1] कुररीव. मु. भा. प्र. पा ॥

गदामाविध्यतरसाप्रद्युम्नायमहात्मने। प्रक्षिप्यव्यनदन्नादंवज्रनिष्पेषनिष्ठुरम् ॥ १९
तामापतन्तींगदया प्रद्युम्नोगदयागदाम्। अपास्यशत्रवेक्रुद्धः प्राहिणोत्स्वगदांनदन् ॥
सचमायांसमाश्रित्य दैतेयींमयदर्शिताम्। [1]मुमुचेऽश्ममयंवर्षंकार्ष्णौवैहायसोऽसुरः॥
[2]बाध्यमानोऽश्मवर्षेणरौक्मिणेयोमहाबलः।सत्वात्मिकांमहाविद्यांसर्वमायोपमर्दिनीम्
ततोगौह्यकगान्धर्वपैशाचोरगराक्षसीः। प्रायुङ्क्तशतशोदैत्यःकार्ष्णिर्व्यधमयत्सताः॥

---

मु॥दुर्वचोभिः अभिमानोत्तम्भकैः दुष्टवचनैः अधिक्षिप्तः आक्षिप्तस्सन् पदा चरणेन आहतः ताडितः उरग इव अमर्षी क्रोधाविष्टस्सन् अत एव ताम्रलोचनः आरक्तनयनः गदापाणिः निश्चक्राम निष्क्रान्तः ॥ १८ ॥

वी ॥ तरसा बलेन गदामाविध्य भ्रामयित्वा प्रक्षिप्य प्रयुज्य वज्रस्याशनेर्निष्पेषे निर्घाते यथा निष्ठुरस्तीव्रो नादो भवति तथाभूतं नादं व्यनदच्चकार पाकं पचतीतिवद्यं निर्देशः ॥ १९ ॥

मु ॥ तरसा बलेन वेगेन वा, गदाम् आविध्य भ्रामयित्वा महात्मने धीरस्वभावाय प्रद्युम्नाय प्रक्षिप्य प्रयुज्य वज्रस्य अशनेः निष्पेषे निर्गमने यथा निष्ठुरः सकलजन्तुकर्णपरुषो नादो भवति, तथाविधं नादं व्यनददिति 'वाचमुवाच' इत्यादिवदपौनरुक्त्यम्, अतिभयङ्करं सिंहनादमकरोदित्यर्थः ॥ १९ ॥

वी॥ तामिति॥ प्रद्युम्नः स्वगदया तां शम्बरप्रयुक्ताम् आकाशे आपतन्तीं गदामपास्य निरस्य स इव स्वयमपि नदन् शत्रवे शम्बराय स्वगदां प्रायुङ्क्त ॥ २० ॥

मु॥ तामिति॥ गगने आपतन्तीम् अभिमुखमागच्छन्तीं गदां शम्बरप्रयुक्तां प्रद्युम्नः गदया स्वया अपास्य अपवाह्य क्रुद्धः क्रोधपरीतः नदन् सिंहनादं कुर्वन् स्वगदां शत्रवे शम्बराय प्राहिणोत् प्रायुङ्क्त ॥ २० ॥

वी ॥ स च शम्बरः मयेन दैत्यदानवाचार्येण दर्शितामुपदिष्टां मायामन्तर्धानाद्यात्मिकामाश्रित्य वैहायसः आकाशे स्थितः कार्ष्णौ प्रद्युम्ने शिलामयं वर्षं मुमुचे ॥ २१ ॥

मु ॥ स च शम्बरः मयेन दर्शितां प्रकाशितां दैतेयीं राक्षसमायां समाश्रित्य अवलम्ब्य वैहायसः खेचरस्सन् असुरः कार्ष्णौ प्रद्युम्ने अस्त्रमयं वर्षं शरासारं मुमुचे ॥

वी ॥ तदा रौक्मिणेयः प्रद्युम्नः शिलावर्षेण बाध्यमानः ताड्यमानः सत्त्वात्मिकां सत्त्वगुणमयीं महाविद्याख्यां सर्वासुरमायोपघातिनीं प्रायुङ्क्तेत्युत्तरस्यापकर्षः ॥ २२ ॥

मु ॥ बाध्यमान इति ॥ रौक्मिणेयः प्रद्युम्नः अस्त्रवर्षेण बाध्यमानः स्वजायया आदिष्टामुपदिष्टां महामायां नाम विद्यामित्यर्थः, स्मरन् तत्र हेतुगर्भविशेषणम्—अमोघदृगिति। विस्मरणादूषितनिशितज्ञान इत्यर्थः, तां शम्बरप्रयुक्तां दैतेयीं मायामित्यर्थः, व्यनुदत् निरास्थत् ॥ २२ ॥

वी ॥ ततः पुनः दैत्यः गुह्यकानां संबन्धिनीं तथा गन्धर्वादिसंबन्धिनीं च मायां प्रायुङ्क्त, कार्ष्णिस्तु तास्सर्वा माया व्यधमयत् व्यनाशयत् ॥ २३ ॥

मु ॥ तत इति ॥ दैत्यः शम्बरः गौह्यकगान्धर्वपैशाचोरगराक्षसीः गुह्यकादिदेवयोनिविशेषाधिदेवताकाः युद्धेषु शत्रुजयोपायभूताः विद्या इत्यर्थः, शतशः प्रायुङ्क्त प्रयुक्तवान्, कार्ष्णिः प्रद्युम्नः ताः विद्याः व्यधमयत् निराकरोत्, सर्वमायोपमर्दिनीं सर्वमायानिवर्तनीं सत्त्वात्मिकां सत्त्वगुणमयीं महाविद्यां च प्रायुङ्क्तेत्यन्वयः ॥ २३ ॥

---

१. मुमुचेऽस्त्रमयं. मु. भा. प्र. पा ॥ २. बाध्यमानोऽस्त्रवर्षेण. मु. भा. प्र. पा ॥

निशातमसिमुद्यम्यसकिरीटंसकुण्डलम्।शम्बरस्यशिरःकायात्ताम्र[1]श्मश्रोर्जहारतत्॥
आकीर्यमाणोविबुधैः स्तुवद्भिः कुसुमोत्करैः।
भार्ययाऽम्बरचारिण्यापुरीं नीतोविहायसा ॥ २५
अन्तःपुरवरं राजन्ललनारत्नसंकुलम् । विवेशपत्न्यागगनाद्विद्युतेवबलाहकः ॥२६
तंदृष्ट्वाजलदश्यामं पीतकौशेयवाससम्।प्रलम्बबाहुंताम्राक्षंसुस्मितंरुचिराननम्॥ २७
अलङ्कृतमुखाम्भोजंनीलवक्रालकालिभिः। कृष्णंमत्वास्त्रियोह्रीतानिलिल्युस्तत्रतत्रह
अवधार्यशनैरीषद्वैलक्षण्येनयोषितः। उपजग्मुःप्रमुदितास्सस्त्रीरत्नंशुचिस्मिताः॥२९

वी ॥ ततः निशातं खड्गम् उद्धृत्य निर्मोयस्य ताम्राणि श्मश्रूणि यस्य तस्य शम्बरस्य कायात्सकिरीटं सकुण्डलं च शिरो जहार पातयामासेत्यर्थः ॥ २४ ॥

मु ॥ निशातं निशितम् असिं खड्गम् उद्यम्य ताम्राणि श्मश्रूणि मुखरोमाणि यस्य तत् ताम्रश्मश्रु सकिरीटं सकुण्डलं च शम्बरस्य शिरः अञ्जसा सत्वरं कायात् अहरत हृतवान्, 'ताम्रश्मश्रोजसाऽहरत्' इति पाठे ओजसा बलेनेत्यर्थः ॥ २४ ॥

वी॥ आकीर्यमाण इति॥ स्तुवद्भिः विबुधैः देवैः कर्तृभिः कुसुमोत्करैः कुसुमाञ्जलिभिः कुसुमजालैर्वा आकीर्यमाणः प्रद्युम्नः अम्बरे स्वयं चरति अन्यांश्च चारयति तच्छीला तथा भार्यया कर्त्र्या विहायसा आकाशमार्गेण पुरीं द्वारकां प्रति नीतः ॥ २५॥

मु ॥ स्वशत्रुसंहारसन्तोषेण बहुधा स्तोत्राणि कुर्वद्भिः दिविजैः कर्तृभिः कुसुमोत्करैः करणैः आकीर्यमाणः अम्बरचारिण्या भार्यया तया विहायसा गगनमार्गेण पुरं द्वारकां नीतः ॥ २५ ॥

वी ॥ तत्र हे राजन् ललनाः स्त्रिय एव रत्नानि तैस्सङ्कुलम् अन्तःपुरश्रेष्ठं पत्न्या सह प्रविवेश, यथा विद्युता सह बलाहको नीलमेघः तद्वत् ॥ २६ ॥

मु ॥ विद्युता सहितो बलाहको मेघ इव पत्न्या सहितः गगनात् अन्तःपुरं विवेश ॥ २६ ॥

वी ॥ तमिति ॥ तं प्रविष्टं प्रद्युम्नं दृष्ट्वा स्त्रियः कृष्णमेव मत्वा लज्जितास्तत्रतत्र निलिल्युः, कृष्णं मत्वेत्यत्र हेतुं वदन् कृष्णासाधारणैर्धर्मैर्विशिनष्टि जलदश्याममित्यादि । प्रलम्बौ दीर्घौ बाहू यस्य तं नीला वक्राश्च ये अलकास्त एव अलयः तैरलङ्कृतं मुखाम्भोजं यस्य तम् ॥ २७, २८ ॥

मु ॥ तमिति ॥ 'जलदश्यामम्' इत्याद्युक्तविशेषणविशिष्टं तं दृष्ट्वा कृष्णं मत्वा तत्सारूप्यात् सहसा निर्णेतुमशक्ता इति भावः, ह्रीताः लज्जिताः सत्यः तत्रतत्र स्थले निलिल्युः निलीना बभूवुः ॥ २७, २८ ॥

वी ॥ ततस्ता योषितश्शनैरीषद्वैलक्षण्येन श्रीवत्साद्यभावरूपेणेति भावः, अवधार्य कृष्णो न भवत्ययमिति निश्चित्य स्त्रीरत्नेन सहितं प्रद्युम्नमुपजग्मुः समीपमाजग्मुः॥ २९॥

मु ॥ योषितः ईषद्वैलक्षण्येन कृष्णप्रद्युम्नयोरीषद्रूपभेदकधर्मेण शनैः उपधार्य 'कृष्णो न भवति' इति निश्चित्य सस्त्रीरत्नं रतिसहितं तम् उपजग्मुः परिवव्रुरित्यर्थः॥२९॥

१. श्मश्रुजहार. मु. भा. प्र. पा ॥

अथतत्रासितापाङ्गीवैदर्भीवल्गुभाषिणी । अस्मरत्स्वसुतंनष्टंस्नेहस्नुतपयोधरा ॥ ३०
कोन्वयंनरवैदूर्यः कस्यवाकमलेक्षणः । धृतःकयावाजठरे [१]केयंलब्धात्वनेनवा ॥ ३१
[२]ममासावात्मजोनष्टोनीतोयस्सूतिकालयात् । एतत्तुल्यवयोरूपोयदिजीवतिकुत्रचित् ॥
कथंत्वनेनसंप्राप्तं सारूप्यंशाङ्गधन्वनः । आकृत्याऽवयवैर्गत्या स्वरहासावलोकनैः ॥
सएवभगवान्नूनंयोमेगर्भगतोऽर्भकः । अमुष्मिन्प्रीतिरधिकावामस्स्फुरतिमेभुजः ३४

वी॥ अथ तत्रेति ॥ वल्गु सुन्दरं यथा तथा भाषत इति तथा सा वैदर्भी रुक्मिणी नष्टं सुतम् अस्मरत् स्नेह न सुतस्नेहेन स्नुतौ क्षरन्तौ पयोधरौ यस्यास्सा इत्थं प्राहेति शेषः ॥ ३० ॥

मु ॥ अथ रुक्मिणी तं दृष्ट्वा किमकरोदित्यत्राह—अथेति ॥ अत्र अन्तःपुरे असितापाङ्गी दृष्टिविलासविशेषेषु कनीनिकाकान्तिप्रसरणमहिम्ना नीलनयनाञ्चलेत्यर्थः, वल्गुभाषिणी मधुरालापिनी वैदर्भी रुक्मिणी तं स्नेहेन पुत्रप्रेम्णा तत्त्वनिश्चयाभावेऽपि तत्सादृश्यमात्रबुद्धिसान्निध्यापितपुत्रविषयानुरागेणेत्यर्थः, स्नुतौ क्षीरस्राविणौ पयोधरौ यस्यास्सा सती नष्टं स्वसुतम् अस्मरत् ॥ ३० ॥

वी ॥ उक्तमेवाह—कोन्विति पञ्चभिः ॥ अयं नर एव वैदूर्यः पुरुषरत्नमित्यर्थः, को नु को वा कस्य वा संबन्धी पुत्र इति यावत्, कया स्त्रिया जठरे धृतः कस्याः पुत्र इत्यर्थः, अनेनेयं स्त्री क लब्धा ॥ ३१ ॥

मु ॥ स्मृतिप्रकारमाह—कोन्वयमिति ॥ अयं को नु अस्य नाम किं वेत्यर्थ, अयं नरवैदूर्यः पुरुषश्रेष्ठः कस्य वा कस्य पुत्रो वेत्यर्थः, कमलेक्षणोऽयं कया स्त्रिया वा जठरे कुक्षौ धृतः, अथ कया स्त्रिया केन वा सुकृतविशेषेण लब्धः ॥ ३१ ॥

वी ॥ योऽसौ ममाऽत्मजः सूतिकागृहान्नीतो नष्टोऽदृष्टश्च, स एवायं किं वेत्यर्थः, एतेन तुल्यं वयो रूपं च यस्य सोऽस्मत्पुत्रः क्वचिद्यदि जीवति किं वा जीवति ॥ ३२ ॥

मु ॥ सूतिकालयान्नीतः केनचिदपहृतः ममात्मजश्च नष्टोऽपि नष्ट एव वा यदि कुत्रचित् स्थले जीवति जीवेच्चेदित्यर्थः, एतेन इदानीं समागतेन अनेन तुल्ये वयोरूपे यस्य सः स्यादिति ॥ ३२ ॥

वी ॥ तस्य स्वपुत्रत्वं सम्भावयन्त्याह—कथमिति ॥ ३३ ॥

मु ॥ अयमेव मत्पुत्र इति सम्भावयन्ती कृष्णसारूप्यं तावदाश्चर्येण निरूपयति—कथमिति॥ आकृत्यादिभिः सर्वैः कथम् अनेन शार्ङ्गधन्वनः श्रीकृष्णस्य सारूप्यं रूपसाम्यं प्राप्तम् ॥ ३३ ॥

वी॥ निश्चिनोति—सएवेति ॥ यो भगवान् कृष्णांशभूतो मम गर्भगतः सएवायं नूनं ध्रुवं 'सएवायं भवेत्' इति पाठान्तरम्, तत्र हेतुः अमुष्मिन् अस्मिन् मम प्रीतिरधिका भवति मम वामो भुजश्च स्फुरति सञ्चलति, अन्यथैतन्न घटेतेति भावः ॥ ३४ ॥

मु॥ अतः योऽर्भकः मे गर्भगतः, स एवायं भवेत्, नूनं निश्चितम्, एवं निश्चये निमित्तमाह—अमुष्मिन्निति । मे प्रीतिः स्नेहः अधिका आकस्मिकप्रीतेरसम्भवादिति भावः, मे वामो भुजश्च स्फुरति स्त्रीणां वामभुजस्फुरणस्य अविसंवादेनेष्टप्राप्तिज्ञापकत्वादिति ॥ ३४ ॥

१. कया लब्धोऽथ केन वा. मु. भा. प्र. पा ॥ २. मम चाप्यात्मजो. मु. भा. प्र. पा ॥

नारदमुखावगतप्रद्युम्नवृत्तानां रुक्मिण्यादीनामानन्दप्राप्तिः

एवंमीमांसमानायांवैदर्भ्यांदेवकीसुतः। देवक्यानकदुन्दुभ्यामुत्तमश्लोकआगमत् ॥
विज्ञातार्थोऽपिभगवांस्तूष्णीमासजनार्दनः। नारदोऽकथयत्सर्वंशम्बराहरणादिकम्
तच्छ्रुत्वामहदाश्चर्यंकृष्णान्तःपुरयोषितः। अभ्यनन्दन्बहूनब्दान्नष्टं[१]पुनरिवागतम्॥
देवकीवसुदेवश्चकृष्णरामौतथास्त्रियः। दंपतीतौपरिष्वज्यरुक्मिणीचययुर्मुदम्॥ ३८
नष्टंप्रद्युम्नमायातमाकर्ण्यद्वारकौकसः। अहोमृतइहायातोबालोदिष्ट्येतिचाब्रुवन् ॥
यंवैमुहुःपितृसरूपनिजेशभावास्तन्मातरोयदभजन्रहरूढभावाः ।

वी ॥ इत्थं वैदर्भ्यां मीमांसमानायां तर्कयन्त्यां सत्याम् उत्तमश्लोको भगवान्देवकीवसुदेवाभ्यां सह तत्राजगाम ॥ ३५ ॥

मु ॥ एवं वैदर्भ्यां रुक्मिण्यां मीमांसामानायां तर्कयन्त्यां सत्याम् उत्तमश्लोकः श्लाघनीयकीर्तिः देवकीसुतः कृष्णः देवक्यानकदुन्दुभिभ्यां स्वमातापितृभ्यां देवकीवसुदेवाभ्यां सहितः आगमत् ॥ ३५ ॥

वी ॥ विज्ञातोऽध्यवसितः अर्थः इतरसंशयविषयभूतोऽर्थो येन तथाभूतोऽपि तूष्णीमास, तदा नारदः शम्बराहरणादिकं सर्वमकथयत् ॥ ३६ ॥

मु ॥ भगवान् अकुण्ठितज्ञानादिपूर्णः जनार्दनः केनापि व्याजेन दुष्टजनसंहारी कृष्णः विज्ञातार्थोऽपि तूष्णीमास, तर्हि स वृत्तान्तः केनवा श्रावित इत्यत्राह—नारद इति । शम्बराहरणादिकं शम्बरेण प्रद्युम्नाहरणादिकमित्यर्थः, नारदः अकथयत् अवर्णयत् ॥ ३६ ॥

वी ॥ तन्नारदकथितं महदाश्चर्यं श्रुत्वा कृष्णान्तःपुरस्त्रियो देवक्यादयश्च मृतं पुत्रं पुनरागतमिव बहूनब्दान्वत्सरान् नष्टमदृष्टं दृष्ट्वेति शेषः, अभ्यनन्दन् ॥ ३७ ॥

मु ॥ कृष्णान्तःपुरयोषितः आश्चर्यम् आश्चर्यावहं महत् इतरदुष्करं तत् कृत्यं श्रुत्वा बहूनब्दान् नष्टं बहुकालं नष्टप्रायमेवेत्यर्थः, पुनरिहागतं भाग्यमहिम्ना पुनरागतम् अभ्यनन्दन ॥ ३७ ॥

वी ॥ तौ दम्पती देवकीवसुदेवौ रुक्मिणी च परिष्वज्य प्रद्युम्नमिति शेषः,नष्टं प्रद्युम्नमायातमित्यस्यापकर्षो वा, मुदं ययुः ॥ ३८ ॥

मु ॥ देवक्यादयो मुदमापुरित्याह—देवकीति ॥ परिष्वज्य आलिङ्गच ॥ ३८ ॥

वी ॥ नष्टमिति ॥ द्वारकौकसो द्वारकावस्थायिनो जना इत्थम् अब्रुवन्, किमिति— अहो मृतो बालः पुनरिहायातः, दिष्ट्या अयमानन्द इति ॥ ३९ ॥

मु ॥ द्वारकावासिनां साश्चर्यानन्दवार्तामाह—नष्टमिति ॥ ३९ ॥

वी ॥ सौन्दर्यातिशयेन प्रद्युम्नं वर्णयति—यमिति ॥ पिता श्रीकृष्णः तत्सरूपतया निज आत्मीयः ईशः भर्तेति भावो भावना यासां ताः पितृसारूप्यान्निजभर्तृबुद्धिसहिता इत्यर्थः,तन्मातरः श्रीकृष्णपत्न्यः रहसि निरूढभावास्सत्यः यमभजन्निति यत्तन्न खलु चित्रम् 'तन्मातरो मनांसि जाउदृशो बभूवुः' इति पाठे ताः कृष्णपत्न्यः यं प्रद्युम्नं दृष्ट्वेति शेषः, कामवशात् स्त्रिग्धदृष्ट्योऽभवन्निति यत्तच्चित्रमिति संबन्धः, स्मरे स्मर्यमाणत्वेनैव क्षोभके कामे अक्षिविषयं सति किञ्च रमाया आस्पदं श्रीकृष्णस्तस्य बिम्बं मूर्तिस्त-

१. पुनरिहागतम्. मु. भा. प्र. पा ॥

चित्रंनतत्खलुरमास्पदबिम्बबिम्बेकामेस्मरेऽक्षिविषयेकिमुतान्यनार्यः॥ ४०

इति श्रीभागवते महापुराणे दशमस्कन्धे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

---

(स्यमन्तकोपाख्यानारम्भः ॥)

श्रीशुक उवाच—

सत्राजितस्स्वतनयांकृष्णायकृतकिल्बिषः। स्यमन्तकेनमणिनास्वयमुद्यम्यदत्तवान्॥

---

स्य बिम्बे प्रतिबिम्बे भगवद्विग्रहसदृशे पुत्रे सतीत्यर्थः, तत्किमु वक्तव्यम्, यदन्या नार्यो भजेयुरिति ॥ ४०॥

मु ॥ प्रद्युम्नस्याद्भुतसौन्दर्यं मुनिराश्चर्येणाह—यमिति ॥ पितृसरूपनिजेशभावाः पितृसरूपे कृष्णप्रतिनिधिरूपे तस्मिन् निजेश इति भावो भावना यासां ताः पितृसारूप्यान्निजभर्तृबुद्धिसहिता इत्यर्थः, तन्मातरः श्रीकृष्णपत्न्यः रहो रहसि ऊढभावाः ऊढशृङ्गाररसाः अभवन्निति यत् 'मनसिजार्द्रदृशोऽभवन्' इति पाठे मनसिजात् कामवशादित्यर्थः, आर्द्रदृशः स्निग्धदृष्टयः अभवन्निति यत् स्मरे स्मर्यमाण एव मनःक्षोभक इत्यर्थः, रमायाः आस्पदं स्थानं यत् बिम्बं भगवद्विग्रहः तस्य बिम्बे सदृशे कामे अक्षिविषये नेत्रगोचरे सति तत् न चित्रं नाद्भुतं खलु, एवञ्च सति अन्यनार्यः किमुत भजेयुरिति किमु वक्तव्यमित्यर्थः ॥ ४० ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां सप्तपञ्चशोऽध्यायः ॥ ५७ ॥

---

वी॥ अथ सत्यभामाजाम्बवत्योर्विवाहं वर्णयितुकामस्तद्विस्तरपिपृच्छिषामुत्पादयितुमाह—सत्राजित इति ॥ सत्राजित इत्यकारान्तः क्वचित्तकारान्तोऽप्यन्वयानुसारेण द्रष्टव्यः, तत्राकारान्तः कर्तरि क्तान्तः, सत्रेण आ समन्ताज्जितः जितवान् सर्वोत्कर्षेण वर्तितवानिति तथा, स च तावत् कृतं किल्बिषमपराधो येन तथाभूतः स्यमन्तकाख्येन मणिना सह स्वतनयां सत्यभामां कृष्णायोद्यम्योद्धृत्य ददौ ॥ १ ॥

मु ॥ प ॥ऐहिकामुष्मिकश्रेयोहानिर्दनिन्द्यजीवनम्।अतश्शुद्धःपुमाञ्जीवेदित्यत्राकलयन्मुनिः॥
अकर्मवश्यस्य हरेरप्यवद्यावहाऽभवत् । लोकनिन्देतरेषां तु किमुतेत्यत्र सूच्यते ॥

अथ भगवतः सत्यभामाजाम्बवतीपाणिग्रहणोपोद्घातत्वेन स्यमन्तकाख्यानं तावदाह—सत्राजित इत्यादि ॥ स्यमन्तकः स्यमन्तकनामा मणिः, तस्य सत्राजितः सुता कस्माद्धेतोः हरये दत्ता श्रीकृष्णाय दत्तेति परीक्षित्कृतप्रश्नः, श्रीशुकोक्तमुत्तरमाह—आसीदित्यादिना ॥ सत्राजित इत्यकारान्तः, तकारान्तोऽप्यस्तीति प्रयोगवशात् द्रष्टव्यः, कृतकिल्बिषः कृतापराधः स्वयमुद्यम्य स्वापराधनिवृत्त्यै स्वयमेवोद्योगं कृत्वा मणिना सह स्वतनयां सत्यभामां कृष्णाय दत्तवानिति ॥ १ ॥

( सत्राजितस्य स्यमन्तकप्राप्तिप्रकारः, तत्प्रभावादिवृत्तान्तश्च. )

राजोवाच—

सत्राजितःकिमकरोद्ब्रह्मन्कृष्णस्यकिल्बिषम्।स्यमन्तकःकुतस्तस्यकस्माद्दत्तासुताहरेः

श्रीशुक उवाच—

[१]आसीत्सत्राजितस्सूर्यभक्तश्चपरमस्सदा।प्रीतस्तस्मैमणिंप्रादात्सूर्यस्तुष्टस्स्यमन्तकम्

सतंबिभ्रन्मणिंकण्ठेभ्राजमानोयथारविः। प्रविष्टोद्वारकांराजंस्तेजसानोपलक्षितः॥

तंविलोक्यजनादूरात्तेजसामुष्टदृष्टयः। दीव्यतेऽक्षैर्भगवतेशशंसुस्सूर्यशङ्किताः॥ ५

नारायणनमस्तेस्तुशङ्खचक्रगदाधर। दामोदरारविन्दाक्षगोविन्दयदुनन्दन॥ ६

---

वी॥ तत्र लब्धप्रश्नावसरः पृच्छति राजा—सत्राजित इति॥ हे ब्रह्मन् तावत्सत्राजित्किं किल्बिषमपराधमकरोत्, तस्य सत्राजितस्य स्यमन्तकः कुतः कस्माल्लब्धः,कस्माद्धेतोः सुता च हरेः हरये दत्ता॥ २॥

मु॥ एतावति श्रीशुकेनोक्ते सति राजा तद्वृत्तान्तं सविशेषं शुश्रूषुः पृच्छति—सत्राजित इति॥ कृष्णस्य किं किल्बिषम् अपराधम् अकरोत्, स्यमन्तकः कुतः कस्मात् आगतः॥ २॥

वी॥ इति पृष्टस्सविस्तरमनुवर्णयितुं तावदुपोद्घातमाह—आसीदिति॥ सत्राजिताख्यः कश्चिद्राजा सदा परमस्सूर्य भक्तः आसीत्,सूर्यस्तुष्टः भक्तेति शेषः, तस्मै सत्राजिताय स्यमन्तकाख्यं मणिं ददौ॥ ३॥

मु॥ सूर्यो भक्तस्य परमस्सखेति स्वभक्तस्यापि स्वामी सूर्यः सखेवासीदित्यर्थः,प्रीतः प्रेमपरीतः तुष्टः तद्भक्तिप्रसन्नः स्यमन्तकं नाम मणिं प्रादात्॥ ३॥

वी॥ सत्राजितस्तं मणिं बिभ्राणः रविरिव भ्राजमानः हे राजन् मणितेजसा अनुपलक्षितशरीरो द्वारकां प्रविष्टः॥ ४॥

मु॥ तेजसा मणिप्रकाशेन नोपलक्षितः सत्राजिदयमिति अज्ञातः तद्दिव्यतेजसा सूर्यवद्दुर्निरीक्षो वेत्यर्थः॥ ४॥

वी॥ तं प्रविष्टमवलोक्य जनाः दूरादेव तस्य तेजसा मुष्टा अपहृताः अभिभूताः दृष्टयो येषां ते सूर्योऽयमिति शङ्कितास्सन्तः अक्षैः दीव्यते क्रीडां कुर्वाणाय भगवते श्रीकृष्णाय शशंसुः कथयामासुः॥ ५॥

मु॥ तदाह—तं विलोक्येति॥ तेजसा मुष्टदृष्टयः प्रतिहतदृष्टिप्रसराः जनाः अक्षैः पाशकैः दीव्यते क्रीडते भगवते 'सूर्यशङ्किनः' इति पाठान्तरम्, शशंसुः॥ ५॥

वी॥ नमस्कर्तुमागतं सूर्यं संभाव्य भक्त्युद्रेकेण भगवन्तं संबोधयन्ति—नारायणेति॥ ६॥

मु॥ तत्प्रकारमाह—नारायणेत्यादिना॥ अत्र नारायणेत्यनेन सर्वधारकत्वं सर्वान्तर्यामित्वं च तस्य बहुव्रीहितत्पुरुषसमासाश्रयणेनोच्यते, शङ्खचक्रगदाधरेत्यनेन स्वाश्रितविरोधिनिरसनसदोद्युक्तत्वमुच्यते, दामोदरेत्यनेन भक्तपरतन्त्रत्वमुच्यते, अरविन्दाक्षेत्यनेन 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादिश्रुत्युपात्तपरत्वासाधारणचिह्नमुच्यते, गोविन्देत्यनेन भूदेवीवल्लभत्वं तद्भारनिरसनेन तल्लाभश्चोच्यते, यदुनन्दनेत्यनेन

---

१. आसीत्सत्राजितस्सूर्यो भक्तस्य परमस्सखा. मु. भा. प्र. पा॥

एषआयातिसविनात्वांदिदृक्षुर्जगत्पते।मुष्णन्गभस्तिचक्रेणनृणांचक्षूंषितिग्मगुः॥ ७
अन्विच्छन्ति।हितेमार्गंत्रिलोक्यांविबुधर्षभाः।ज्ञात्वाऽद्यगूढंयदुषुद्रष्टुंत्वाऽयात्यजःप्रभो
श्रीशुक उवाच—
निशम्यबालवचनंप्रहस्याम्बुजलोचनः।प्राहनासौरविर्देवस्सत्राजिन्मणिनाज्वलन्॥
श्रीशुक उवाच—
सत्राजित्स्वगृहंश्रीमानकृतकौतुकमङ्गलम्। प्रविश्यदेवसदनेमणिंविप्रैर्न्यवेशयत्॥१०
दिनेदिनेस्वर्णभारानष्टौससृजतिप्रभो ।

---

तद्दोषानवेक्षणेन तस्सह नीरन्ध्रसंश्लेषस्थित्युक्त्या सौशील्यमुच्यते, तथाच नारायणेत्यादिसम्बुद्धयः जगद्वन्द्यमपि सूर्यम् एतद्वन्दनायागतं मन्वानानां जनानां भक्तयुद्रेकप्रयुक्ताः॥

वी ॥ एष इति ॥ एष इत्यागच्छतो रूपप्रदर्शनपरम्, सूर्यः त्वां द्रष्टुमिच्छुः हे जगत्पते आयाति, कथंभूतः? तिग्मास्तीक्ष्णाः गावो रश्मयः यस्य सः गभस्तिचक्रेण रश्मिजालेन नृणां चक्षूंषि मुष्णन् प्रतिघ्नन् ॥ ७ ॥

मु ॥ गभस्तिचक्रेण किरणमण्डलेन नृणां चक्षूंषि दृष्टिं मुष्णन् सन् अपहरन् तिग्माः तीक्ष्णा गावो रश्मयो यस्य सः तिग्मगुः भानुः एष आयातीति हस्तसंज्ञापूर्वकोक्तिः॥

वी ॥ नचैतदघटमानमित्याहुः—अन्विच्छन्तिहीति ॥ विबुधर्षभाः देवश्रेष्ठाः त्रिलोक्यां तव मार्गमन्विच्छन्ति अन्वेषयन्ति, त्वं यद्रूपगुणकर्मकस्तथाभूतं त्वां द्रष्टुमिच्छन्तीत्यर्थः, अतोऽधुना यदुषु गूढं गृहीतयदुवेषं त्वां ज्ञात्वा हे प्रभो अजस्सूर्य आयाति ॥ ८ ॥

मु ॥ ननु जगच्चक्षुस्सर्ववन्द्यः सुरोत्तमोऽयं कथं मां द्रष्टुमागच्छेदिति भगवन्मनसि शङ्कामुत्प्रेक्ष्य तां परिहर्तुमाहुः—नन्विति ॥ त्रिलोक्यां ये विबुधर्षभाः विबुधश्रेष्ठाः ते मार्गं मृग्यते सनकादिभिरिति मार्गं स्वरूपम् अन्विच्छन्ति ज्ञातुं प्राप्तुं वा अनुसृत्येच्छन्ति खल्वित्यर्थः, मृगयन्तीति वार्थः, अतः सूर्यागमनमपि सम्भावितमेवेत्याहुः—ज्ञात्वापीति । हे प्रभो यदुषु गूढं प्रच्छन्नमपि ज्ञात्वा त्वां द्रष्टुम् अजः सूर्यः आयातीति ॥८॥

वी॥ निशम्येति॥बालानामागच्छतो याथात्म्यानभिज्ञानां वचनमाकर्ण्य प्रहस्याह—नासाविति । असावागच्छन् देवो रविस्सूर्यः, किन्तु सत्राजित्, कुतस्तस्येदृशं तेज इत्यतो विशिनष्टि—मणिना स्यमन्तकेन ज्वलन्विद्योतमान आयाति ॥ ९ ॥

मु ॥ बालवचनम् अज्ञवाक्यम्, मणिना ज्वलन् दीप्यमानः॥ ९ ॥

वी ॥ कीदृशस्तस्य मणेः प्रभाव इति जिज्ञासुं राजानं प्रत्याह मुनिः—सत्राजिदिति ॥ अस्य 'सूर्याल्लब्धमणिः' इत्यादिः, श्रीमान् भाग्यवान् सत्राजित्कृतानि कौतुकेनोत्सवेन मङ्गलानि यस्मिन् तत्स्वगृहं प्रविश्य देवसदने विप्रैः प्रयोज्यकर्तृभिः मणिं न्यवेशयत्॥

मु ॥ कृतानि कौतुकेन उत्सवेन मङ्गलानि यस्मिन् तत् स्वगृहं प्रविश्य देवसदन गृहार्चानिलये मणिं विप्रैः कृत्वा न्यवेशयत् तत्र स्थापितं कारयामासेत्यर्थः ॥ १० ॥

वी॥ स च मणिः हे प्रभो राजन् प्रतिदिनमष्टौ स्वर्णभारान् सृजति असूत, भारः प्रमाणविशेषः, तथाहि "चतुर्भिर्व्रीहिभिर्गुञ्जं गुञ्जान् पञ्च पणं पणान् । अष्टौ धरणमष्टौतान् कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारस्स्याद्विंशतिस्तुलाः" इति ॥

१. नन्वन्विच्छन्तिते. मु मा. प्र. पा ॥

दुर्भिक्षमार्यरिष्टानिसर्वाधिव्याधयोऽशुभाः ।
नसन्तिमायिनस्तत्रयत्रास्तेऽभ्यर्चितोमणिः ।। ११
सयाचितोमणिंक्वापियदुराजायशौरिणा ।
नैवार्थकामुकःप्रादाद्याच्ञाभङ्गमतर्कयन् ।। १२

जाम्बवतः स्यमन्तकप्राप्तिः, मण्यर्थं नागरैस्सह भगवतो वनगमनञ्च.

तमेकदामणिंकण्ठेप्रतिमुच्यमहाप्रभम् ।
[1]प्रसेनोहयमारुह्यमृगयांव्यचरद्वने ।। १३
प्रसेनंसहयंहत्वामणिमाच्छिद्यकेसरी।गिरिंविशञ्जाम्बवतानिहतो मणिमिच्छता १४

किञ्च—दुर्भिक्षेति । मारो नामाकालमृत्युः, अरिष्टमभद्रम्, अशुभाः दुःखहेतवः आधिर्मनःपीडा व्याधयो रोगाः मायिनो वञ्चकाश्चोरा इति यावत्, यस्मिन् राज्ये स मणिरर्चितः स्यात्, तत्र कदाचिदपि दुर्भिक्षादयो न सन्ति स्म ।। ११ ।।

मु ॥ मणिमहिमानमाह—दिनेदिन इति ॥ स मणिः अष्टौ स्वर्णभारान् सृजतीति-भारप्रमाणं "चतुर्भिर्व्रीहिभिर्गुञ्जां गुञ्जाः पञ्च पणं पणान् । अष्टौ धरणमष्टौ च कर्षं तांश्चतुरः पलम् । तुलां पलशतं प्राहुर्भारस्स्याद्विंशतिस्तुलाः"इत्याहुः, तत्प्रभावमाह—दुर्भिक्षेति । दुर्भिक्षशब्देन अनावृष्टिकृतसस्यनाशेन लोकस्याहारशून्यता, मारी नामाकालमृत्युः, अरिष्टान्यमङ्गलानि. आधयो येनकेनापि दुर्व्याजेन प्राप्तमनोव्यथाः, अशुभानि शुभविनाशनदुर्निमित्तानि, मायिनः कुहनया साधुप्रलोपकाः खलाश्च तत्र स्थले न सन्ति, यत्र मणिः अभ्यर्चितः नित्यं पूजितः सन् आस्ते ॥ ११ ॥

वी ।। क्वापि कदाचित् यदुराजायोग्रसेनार्थं शौरिणा मणिं याचितोऽपि स सत्राजित् अर्थकामुकः हेतुगर्भमिदम्, तस्मात् याच्ञावैयर्थ्यम् अविचारयन् नैव ददौ ॥१२॥

मु ततः किम्,अत आह—स इति॥क्वापि सः सत्राजित् शौरिणा यदुराजाय बलरामार्थं याचितः सन् याच्ञाभङ्गं प्रार्थनाभङ्गं अतर्कयन् अविचारयन् नैव प्रादात् न ददावेव,तत्र हेतुमाह—अर्थकामुक इति।"अर्थातुराणां न गुरुर्न बन्धुः"इति भावः,एतेन स्वभावतः सर्वानर्थनिवर्तकमपि वस्तु भगवतेऽनिवेद्य अग्रभोजिनः सर्वानर्थमूलमेव स्यादिति स्फोर्यते ॥ १२ ॥

वी ।। एवं स्थिते महती प्रभा दीप्तिर्यस्य तं मणिम् एकदा प्रसेनः सत्राजिद्भ्राता कण्ठे प्रतिमुच्य बद्ध्वा अश्वमारुह्य वने मृगयां व्यचरत् ॥ १३ ।।

मु ॥ तदेव दर्शयितुमाह—तमेकदेति ॥ प्रतिमुच्य धृत्वा प्रसेनः सत्राजितो भ्राता वने मृगयां व्यचरत् आखेटक्रीडामाचचारेत्यर्थः ॥ १३ ॥

वी ॥ तदा कश्चित्केसरी सिंहः साश्वं प्रसेनं हत्वा मणिमाच्छिद्य आकृष्य गृहीत्वा गिरिं प्रविशन् आत्मानं दृष्टवता मणिमिच्छता जाम्बवता ऋक्षराजेन हतः ।। १४ ।।

मु॥ सिंहः सप्रसेनं प्रसेनेन सहितं यथा तथा हयं हत्वा मणिम् आच्छिद्य आकृष्य गृहीत्वेत्यर्थः, गिरिं विशन् मणिमिच्छता जाम्बवता चिरकालं तद्गिरिगुहानिवासिनेत्यर्थः, निहतः ॥ १४ ॥

१. सप्रसेनं हयं. मु. भा. प्र. पा ।।

सोऽपिचक्रेकुमारस्यमणिंक्रीडनकंबिले। अपश्यन्भ्रातरंभ्रातासत्राजित्पर्यतप्यत १५
प्रायःकृष्णेन निहतो मणिग्रीवोवनं गतः । भ्राताममेतितच्छ्रुत्वाकर्णकर्णेऽजपञ्जनाः॥
भगवांस्तदुपश्रुत्यदुर्यशोलिप्तमात्मनि। मार्ष्टुं प्रसेनपदवीमन्वपद्यतनागरैः ॥ १७
हतं प्रसेनमश्वंच वीक्ष्यकेसरिणावने । तंचाद्रिपृष्ठेनिहतमृक्षेण ददृशुर्जनाः ॥ १८

( भगवतः स्यमन्तकार्थे जाम्बवता सह युद्धम् )

ऋक्षराजबिलंभीममन्धेनतमसावृतम्। एकोविवेशभगवानवस्थाप्यबहिःप्रजाः॥१९
तत्र दृष्ट्वा मणिश्रेष्ठंबालक्रीडनकंकृतम् । हर्तुं कृतमतिस्तस्मिन्नवतस्थेऽर्भकान्तिके॥

---

वी॥ सोऽपि जाम्बवानपि बिले स्वनिवासभूते गिरिबिले तं मणिं स्वकुमारस्य क्रीडनकं क्रीडासाधनं चक्रे, भ्राता सत्राजिद्भ्रातरं प्रसेनं मणिंचापश्यन् पर्यतप्यत परितप्याहेत्यर्थः ॥ १५ ॥

मु ॥ सः जाम्बवानपि मणिं कुमारस्य स्वपुत्रस्य क्रीडनकं क्रीडोपयुक्तं चक्रे, भ्राता अग्रजः सत्राजित् भ्रातरमनुजं प्रसेनम् अपश्यन् पर्यतप्यत ॥ १५ ॥

वी॥ उक्तिमेवाह—प्राय इति॥मणिः ग्रीवायां यस्य सः मम भ्राता वनं प्रति गतस्तत्र प्रायो बहुधा ध्रुवमिति यावत्, श्रीकृष्णेनैव हत इत्येतद्वचो जनः श्रुत्वा कर्णेकर्णे अजपदुपांश्ववोचत् ॥ १६॥

मु ॥ पारितापकृतवचनप्रकारमाह—प्राय इति॥ मणिः ग्रीवायां यस्य सः मम भ्राता कृष्णेन निहत इति प्राय इति सम्भावनायाम् , मणिग्रीवो मम भ्राता कृष्णेन निहत इति पर्यतप्यतेत्यन्वयः, तत् सत्राजिद्वचनं श्रुत्वा जनः कर्णेऽकर्णे अजपत् भगवद्विषयामकीर्तिवार्ता तत्र तत्र मिथो रहस्यवोचदित्यर्थः ॥ १६ ॥

वी ॥ क्रमेण भगवानपि तद्वच आकर्ण्य, आत्मनि स्वस्मिन् दुर्यशोलिप्तं भावेक्तः, दुर्यशोलेपं प्रमार्ष्टुम् अपोहितुं नागरैर्जनैस्सह प्रसेनपदवीम् अन्वपद्यत अन्वगच्छत्॥१७

मु ॥ आत्मनि लिप्तं लग्नं तत् दुर्यशः उपश्रुत्य मार्ष्टुं तत् प्रमार्ष्टुं नागरैः साक्षित्वयोग्यैः पुरवासिभिस्सह प्रसेनपदवीम् अन्वपद्यत अनुसृत्य गतवान् ॥ १७ ॥

वी॥ हतमिति ॥ तं केसरिणं चाद्रिपृष्ठे ऋक्षेण जाम्बवता निहतं ददृशुः॥ १८ ॥

मु ॥ वने केसरिणा सिंहेन हतं प्रसेनं हयं च वीक्ष्य जनाः ऋक्षेण जाम्बवता अद्रिपृष्ठे गिरिप्रान्ते निहतं तं सिंहं च ददृशुः ॥ १८ ॥

वी ॥ ऋक्षराजबिलमिति ॥ ततस्तत्र बिलद्वारे प्रजाः नागरान् जनानवस्थाप्य भगवानेकोऽसहाय एव तद्बिलं प्रविवेश ॥ १९ ॥

मु ॥ अन्धेन तमसा गाढान्धकारेण वृतम् अत एव भीमं भयङ्करम् ऋक्षराजबिलं जाम्बवन्निवासभूतं गिरिगह्वरं प्रजाः स्वानुचरभूताः बहिः अवस्थाप्य भगवान् एक एव विवेश प्रविष्टः ॥ १९ ॥

वी ॥ तत्रेति ॥ तत्र बिले क्रीडनकं क्रीडासाधनं यथा तथा कृतं मणिश्रेष्ठं दृष्ट्वा हर्तुं कृता निश्चिता मतिर्येन सः तस्मिन्नर्भकसमीपे अवतस्थे ॥ २० ॥

मु ॥ तत्र बिले बालक्रीडनकं कृतं बालक्रीडोपयोगिवस्तूकृतं मणिश्रेष्ठं स्यमन्तकं दृष्ट्वा हर्तुं कृतमतिः अपहर्तुकामः अर्भकान्तिके शिशुसमीपे तस्मिन् गह्वरे अवतस्थे ॥२०॥

तमपूर्वनरं दृष्ट्वा धात्री चुक्रोश भीतवत् । तच्छ्रुत्वाऽभ्यद्रवत्क्रुद्धो जाम्बवान्बलिनां वरः॥
स वै भगवता तेन युयुधे स्वामिनात्मनः । पुरुषं प्राकृतं मत्वा कुपितो नानुभाववित्॥२२
द्वन्द्वयुद्धं सुतुमुलमुभयोर्विजिगीषतोः। आयुधाश्मद्रुमैर्दोर्भिः क्रव्यार्थे श्येनयोरिव२३
आसीत्तदष्टाविंशाहमितरेतरमुष्टिभिः । वज्रनिष्पेषपरुषैरविश्रममहर्निशम् ॥ २४
श्रीकृष्णमुष्टिनिर्घातनिष्पिष्टाङ्गोरुबन्धनः।क्षीणसत्त्वः स्विन्नगात्रस्तमाहातीवविस्मितः

( जाम्बवत्कृतकृष्णस्तुतिः. मणिना सह जाम्बवतीप्राप्तिश्च. )

जाने त्वां सर्वभूतानां प्राणमोजस्सहोबलम् ।

---

वी ॥ तमिति ॥ तमुपस्थितमदृष्टपूर्वं नरं दृष्ट्वा भीतवत् धात्री उपमाता चुक्रोश, तच्छ्रुत्वेति तदाक्रोशनम् अभ्यद्रवदभ्यधावत् ॥ २१ ॥

मु ॥ धात्री उपमाता अपूर्वनरम् अलौकिकपुरुषं तं कृष्णं दृष्ट्वा भीतवत् भीतपुरुषतुल्यं चुक्रोश उच्चैराक्रोशं चकार, तत् आक्रोशनं श्रुत्वा अभ्यद्रवत् कृष्णाभिमुखमधावत् ॥ २१ ॥

वी ॥ स वै जाम्बवान्नानुभाववित् भगवत्प्रभावमजानन् अत एव तं केवलं प्राकृतं लौकिकं पुरुषमेव मत्वा आत्मनः स्वस्य स्वामिनाऽपि तेन भगवता सह युयुधे अयुध्यत ॥

मु ॥ स वै जाम्बवान् आत्मनः स्वामिना रामावतारेण स्वनाथेन भगवता शक्त्यादिपूर्णेन श्रीकृष्णेन सह युयुधे युद्धं चकार, तत्कुत इत्यत्राह—पुरुषमिति । अत एव नानुभाववित् तत्प्रभावानभिज्ञः ॥ २२ ॥

वी ॥ द्वन्द्वयुद्धमिति॥ विजिगीषतोः जेतुमिच्छतोः दोर्भिर्भुजैश्च यथा क्रव्यार्थे आमिषार्थे श्येनयोर्युद्धं भवति तद्वत् ॥ २३ ॥

मु ॥ क्रव्यार्थे आमिषार्थं श्येनयोः पक्षिविशेषयोरिव विजिगीषतोः परस्परं जेतुमिच्छतोः उभयोः तुमुलं संकुलं द्वन्द्वयुद्धम् आयुधादिभिश्च ॥ २३ ॥

वी ॥ आसीदिति॥ इतरेतरयोरन्योन्ययोर्मुष्टिभिः वज्रनिष्पेषः वज्रनिर्घातः तद्वन्निष्ठुरैस्तत् द्वन्द्वयुद्धं न विद्यते विश्रमो यस्मिन् तद्यथा तथा अहर्निशमष्टाविंशतिदिनान्यासीत् ॥ २४ ॥

मु ॥ वज्रनिष्पेषपरुषैः अशनिद्वयसङ्घर्षनिष्ठुरैः इतरेतरस्य अन्योन्यस्य मुष्टिभिश्च अविश्रमं मध्ये विश्रान्तिरहितं तद्युद्धम् अहर्निशमासीत् ॥ २४ ॥

वी॥श्रीकृष्णेति॥श्रीकृष्णस्य मुष्टीनां निर्घातैः निष्पातैः निष्पिष्टानि विश्लथान्यङ्गान्युरूणि बन्धनानि सन्धिस्थानानि यस्य सः अत एव क्षीणबलः अतएव स्विन्नं प्रस्वेदयुक्तं गात्रं यस्य स कदाऽपि मद्बलविनाशो न दृष्टः, अहो अधुना मृतप्रायोऽभवमित्येवमतीव विस्मितः ततो विमृशंस्तं कृष्णमाह ॥ २५ ॥

मु॥ श्रीकृष्णस्य मुष्टीनां निष्पातैः निष्ठुरपातैः निष्पिष्टानि विश्लथानि अङ्गानामुरूणि बन्धनानि सन्धिस्थानानि यस्य सः क्षीणसत्त्वः क्षीणबलः स्विन्नं स्वेदजलव्याप्तं गात्रं यस्य सः अतिविस्मितस्सन् तमाह 'जाने त्वाम्' इत्यादिवक्ष्यमाणप्रकारेण तमाहेत्यन्वयः ॥

वी ॥ उक्तिमेवाह—जाने इतित्रिभिः ॥ त्वां जाने, कथंभूतम् , ओजःप्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यं प्राणादीनां निर्वाहकमित्यर्थः, पुराणपुरुषं जगत्कारणपुरुषं प्रभविष्णुं जगद्रूपेण प्रभवनशीलं समर्थीभवनशीलं वा, कारणत्वोपयुक्तसार्वज्ञ्य-

विष्णुंपुराणपुरुषं प्रभविष्णुमधीश्वरम् ॥ २६
त्वंहिविश्वसृजांस्रष्टा सृज्यानामपियच्चसत्।कालःकलयतामीशःपरमात्मातथाऽऽत्मनां
यस्येषदुत्कलितरोषकटाक्षमोक्षैर्वर्त्मादिशत्क्षुभितनक्रतिमिङ्गिलोऽब्धिः।
[1]सेतुःकृतस्स्वयशसोज्ज्वलिताचलङ्कारक्षश्शिरांसिभुविपेतुरिषुक्षतानि॥२८

सार्वशक्त्यादियुक्तमित्यर्थः, अधीश्वरं सर्वान्तरात्मानं तत्र देवताविशेषनिर्धारणाय वि- ष्णुमाति ॥ २६ ॥

मु ॥ जानइत्यादि ॥ अप्रतिमसामर्थ्यस्य स्वस्याप्यतिविस्मयहेतुशक्तिपूर्णत्वादयं नान्यो विष्णुरेवेति जान इति निश्चिकायेति भावः, सर्वभूतानां यानि प्राणादीनि तेषां निर्वाहकं त्वामिति सन्दर्भार्थः, तथाच धार्यधारकभावसम्बन्धेन त्वमेव भूतानां प्रा- णादिनिर्वाहक इति त्वां जान इति सामानाधिकरण्येनोच्यते, तत्र ओजः प्रवृत्तिसामर्थ्य- म्, सहो वेगः, बलं धारणसामर्थ्यम्, कुत एतदित्यत्र तस्य सर्वकारणत्वं सर्वेश्वरत्वं च प्रतिपादयन्नाह—विष्णुमित्यादिना।व्याप्नोतीति विष्णुरिति व्युत्पत्त्या सर्वकार्येष्वनुग तकारणत्वोक्त्या उपादानकारणमित्यर्थः, पुराणपुरुषं सृष्टेः पूर्वमपि वर्तमानपुरुषं प्रभवि- ष्णुं प्रकर्षेण भवितारम् अधीश्वरम् अधिष्ठातारं च जान इति ॥ २६ ॥

वी ॥ पुराणपुरुषत्वे हेतुं वदन्नाशिनष्टि —त्वंहीति ॥ विश्वसृजां महदादिपृथिव्य- न्तानां तत्त्वानां स्रष्टा अनेन निमित्तकारणत्वमुक्तम्, उपादानत्वमाह-सृज्यानां महदादी- नां यत्सदुपादानकारणं तदपि त्वमेव, उपादानत्वप्रयुक्तं सार्वात्म्यमाह— कालइति। क लयतां परिच्छिन्दतां सर्वं स्ववशीकुर्वतामिति यावत्, तेषाम् ईशः प्रभुः कालः सोऽ- पि त्वमेव तच्छरीरक इत्यर्थः,तथा आत्मनां जीवानां परमात्मा अन्तः प्रविश्य प्रशासनेन धर्ता व्याप्यगतदोषैरस्पृष्टश्च जीवशरीरकश्चेत्यर्थः॥ २७॥

मु॥एतदेव विवृण्वन्नाह —त्वंहीति॥ स्रष्टा निमित्तं सृज्यानां कार्याणां यत् सत् उपादानं तच्च त्वमवेत्यर्थः, कलयतां वर्तमानपदार्थानां कालः परिपाकहेतुः विनाशक- इत्यर्थः, आत्मनां जीवानां परमात्मा अन्तर्यामी सन् ईशः शास्ता "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इति श्रूयते ॥ २७ ॥

वी ॥ यत एवंभूतस्ततो ममेष्टदैवतं श्रीरघुनाथ एव त्वमित्याह - यस्येति ॥ यस्य रघुपतेः ईषुदुत्कलित उद्दीपितः यो रोषः तेन ये कटाक्षमोक्षास्तैः क्षुभिताः नक्रा ग्राहाः तिमिङ्गिला महामत्स्याश्च यस्मिन् सोऽब्धिः वर्त्म मार्गमदिशत् दत्तवान्, येन स्वयशसा 'अध्ययनेन वसति' इतिवद्धेत्वर्थे तृतीया, स्वकीर्त्यर्थं सेतुः कृतो निर्मितः, येन च लङ्का उज्ज्वलिता दग्धा, यस्यचेषुभिः क्षतानि छिन्नानि रक्षसो दशकण्ठस्य शिरांसि भुवि पेतुः, स त्वमिति जान इत्यन्वयः ॥ २८॥

मु॥किं बहुना यः पूर्वमस्मद्रक्षकः इष्टदैवंच श्रीरामः,सोऽपि त्वमेवेत्याह —यस्येति॥ ईषदुत्कलितेन किञ्चिद्दीपितेन रोषेण ये कटाक्षमोक्षाः तैः क्षुभिताः नक्रादयो यस्मिन् सः, नक्राः ग्राहाः, तिमिङ्गिलाः महामत्स्याः, वर्त्म अदिशत् ददौ, तथापि येन सेतुः स्वयशः कृतः अब्धिना मार्गे दत्तेऽपि सर्वदा सेतुरेव स्वयशोध्वजः कृत इत्यर्थः,लङ्का च उज्ज्वलिता दग्धा, यस्येषुभिः क्षतानि खण्डितानि रक्षसो रावणस्य रक्षसां वा शिरांसि पेतुः, स एवत्वमिति जान इति ॥ २८ ॥

---

१. सेतुःकृतस्स्वयशज्वलिताचलङ्का. मु. भा. प्र. पा ॥

इतिविज्ञातविज्ञानमृक्षराजानमच्युतः। व्याजहारमहाराज भगवान्देवकीसुतः॥२९
अभिमृश्यारविन्दाक्षःपाणिनाशङ्करेणतम्।कृपयापरयाभक्तं मेघगम्भीरयागिरा॥३०
मणिहेतोरिहप्राप्तावयमृक्षपतेबिलम्। मिथ्याभिशापंप्रमृजन्नात्मनोमणिनाऽमुना॥३१
इत्युक्तस्स्वांदुहितरं कन्यांजाम्बवतींमुदा। अर्हणार्थंसमणिना [1]कृष्णायोपजहारसः॥
ततोऽन्यैश्चमणिश्रेष्ठैःपूजितोभक्तवत्सलः।तस्मैददौपरांमुक्तिपुनरावृत्तिवर्जिताम् ३३
अदृष्ट्वानिर्गमंशौरेःप्रविष्टस्यबिलञ्जनाः।प्रतीक्ष्यद्वादशाहानिदुःखिता[2]स्तपुरंययुः३४

वी ॥ इतीति ॥ इत्थं विज्ञातं विज्ञानं विज्ञेयं येन तमृक्षराजानम् अनित्यत्वादार्षत्वाद्वा "राजाहः" इति समासान्ताभावः, व्याजहारोवाच ॥ २९ ॥

मु ॥ विज्ञायते कालान्तरे संस्कारोद्बोधेन विज्ञानं भूतार्थः, तदिदानीं विज्ञातं येन तं संस्कारोद्बोधस्मृतपूर्वार्थमित्यर्थः, ऋक्षराजानमित्यत्र "राजाहस्सखिभ्यष्टच्" इति टच्प्रत्ययाभावश्छान्दसः ॥ २९ ॥

वी ॥ कथमित्यत आह—अभिमृश्येति ॥ शङ्करेण पाणिना भक्तं तमृक्षराजमभितस्संस्पृश्य परया निरतिशयया कृपयोपलक्षितः मेघध्वनिवद्गम्भीरया गिरा प्राह॥ ३०॥

मु ॥ ३० ॥

वी॥ उक्तिमेवाह—मणिहेतोरिति॥ हे ऋक्षपते मण्यर्थमिह बिलं प्रति वयमागताः, अवाप्तसमस्तकामस्य तव किं मणिनेत्याह—मिथ्येति। अमुना मणिना हेतुना आत्मनो मम यो मिथ्याभिशापः मिथ्यापवादः प्रसक्तः,तममुना मणिनैव विमृजन् "लक्षणहेत्वोः" इति शत्रादेशः, विमार्ष्टुमपनेतुमिति यावत्, विमृजन्नहमागत इति शब्दयोजना ॥ ३१ ॥

मु ॥ वयं बिलं प्राप्ता इति बहवः प्राप्ता इत्यर्थः, बिलं बिलद्वारम्, मिथ्याभिशापम् अपवादम् अमुना मणिनाप्रमृजन् प्रमार्ष्टुमिच्छन्नित्यर्थः, अहमिहान्तर्बिलं प्राप्त इति॥

वी ॥ इतीति ॥ इत्थमुक्तः स प्रसिद्धः स जाम्बवान् मणिना सह जाम्बवतीमुपायनार्थं श्रीकृष्णाय समर्पयामास ॥ ३२ ॥

मु॥ इति एवं श्रीकृष्णेन उक्तः स जाम्बवान् स्वां दुहितरं स्वपुत्रीं जाम्बवतीं नाम कन्याम् अर्हणार्थं पूजार्थं कृष्णाय उपाजहार समर्पितवान् ॥ ३२ ॥

वी ॥ ततोऽन्यैश्च मणिश्रेष्ठैः पूजितो भक्तवत्सलो भगवान् तस्मै जाम्बवते परामुत्कृष्टां पुनरावृत्तिरहितां मुक्तिं ददौ दास्यामीति सङ्कल्पितवानित्यर्थः, तदैव ददाविति वा ॥ ३३॥

मु ॥ ३३ ॥

वी ॥ अदृष्ट्वेति ॥ बिलं प्रविष्टस्य शौरेः पुनः निर्गममदृष्ट्वा द्वारस्था जनाः द्वादश दिनानि प्रतीक्ष्य दुःखिताः पुरं द्वारकां जग्मुः ॥ ३४ ॥

मु ॥ ननु भगवन्तमनुसृत्यागता जनाः किमभवन्नित्यत्राह—अदृष्ट्वेति ॥ जनाः पूर्वं भगवन्तमनुसृत्यागता द्वारकावासिनः बिलं प्रविष्टस्य शौरेः निर्गमम् अदृष्ट्वा द्वादशाहानि प्रतीक्ष्य अद्यवागमिष्यति श्व एवागमिष्यतीति चोत्प्रेक्ष्य स्थित्वेत्यर्थः,स्वपुरं द्वारकां ययुः॥

१. कृष्णायोपजहारह. पा ॥ २. स्वपुरं. मु. भा. प्र. पा ॥

निशम्यदेवकीदेवीरुक्मिण्यानकदुन्दुभिः।सुहृदोज्ञातयोऽशोचन्बिलात्कृष्णमनिर्गतम्
सत्राजितंशपन्तस्तेदुःखिताद्वारकौकसः।उपतस्थुमहामायांदुर्गांकृष्णोपलब्धये।।३६
तेषान्तुदेव्युपस्थानात्प्रत्यादिष्टाशिषांसच।प्रादुर्बभूवसिद्धार्थस्सदारोहर्षयन्हरिः ३७
उपलभ्यहृषीकेशं मृतंपुनरिवागतम्। सहपत्न्यामणिग्रीवं सर्वेजातमहोत्सवाः।।३८

(सत्राजिताय मणिप्रत्यर्पणं, सत्यभामाविवाहश्च.)

सत्राजितंसमाहूयसभायांराजसन्निधौ।प्राप्तिश्चाख्यायभगवान्मणिन्तस्मैन्यवेदयत्।।

---

वी ॥ निशम्येति ॥ देवक्यादयो बिलादनिर्गतं कृष्णं श्रुत्वा अशोचन्॥ ३५॥

मु ॥ ततः किम्, अत आह—निशम्येति ॥ देवकी देव्यः श्रीकृष्णस्य अन्ये परिग्रहाश्च रुक्मिणी प्रधानपत्नी च आनकदुन्दुभिः वसुदेवश्च तैस्साकं सुहृदः श्रीकृष्णस्य मित्राणि ज्ञातयश्च कृष्णं बिलादनिर्गतं निशम्य अशोचन् ॥ ३५ ॥

वी॥ ते दुःखितास्सन्तः सत्राजितं शपन्तः कृष्णप्राप्तये महामायां दुर्गाम् उपतस्थुः अभजन् ॥ ३६ ॥

मु ॥ अथ द्वारकाजनवृत्तान्तमाह—सत्राजितमिति ॥ शपन्तः अमुं धिगिति निन्दन्तः ते द्वारकौकसः दुःखितास्सन्तः महती माया तत्तन्मनोरथानुगुणफलप्रदानसङ्कल्पविशेषो यस्यास्तां ''माया वयुनं ज्ञानम्'' इति, प्रयोगो दर्शितः प्राक्, दुर्गां पार्वतीप्रतिमामुपतस्थुः अभजन्त 'चन्द्रभागाम्'इति पाठे तदाख्यां दुर्गामित्यर्थः बहुनामभिः तत्तत्स्थानेषु दुर्गायाः शिलामृद्दारुलोहप्रतिमासु विशेषाधिष्ठाने सन्निधिं विधाय लौकिकैः पूज्यमानत्वात् ॥ ३६ ॥

वी ॥ तेषामिति ॥ स च कृष्णस्तेषां प्रादुर्बभूव, कदा? तस्या देव्या उपस्थानात्तया तान्प्रति आदिष्टा आशिषः श्रीकृष्णं द्रक्ष्यथेत्येवंविधाः येषां तेषां सताम् कथम्भूतः?सिद्धस्साधितोऽर्थः मण्यानयनरूपप्रयोजनं यस्य सः सदारः जाम्बवतीसहितः अत एव हर्षयन् ॥ ३७॥

मु ॥ ततः तस्मात् देव्या उपस्थानादित्यर्थः, प्रति तान् प्रति आदिष्टाशिषां तदैवेष्टसिद्धिर्भवेदिति दत्ताशिषां तेषां हरिः प्रादुर्बभूव, 'प्रत्यादिष्टाशिषा' इति पाठे प्रतितान्प्रतिदत्ता या आशीः 'कृष्णं द्रक्ष्यथ, सोऽनुपदमेवैष्यति' इत्यनुग्रहोक्तिः,तया सहैव हरिस्तेषां प्रादुर्बभूवेति. 'आशिषा स वः' इति पाठे असवः प्राणभूत इत्यर्थः,हरिः आशिषा सहैव प्रादुर्बभूवेति ॥ ३७ ॥

वी ॥ उपलभ्येति ॥ यथा लोके जनाः मृतं बन्धुं पुनरागतमुपलभन्ते तद्वद्धृषीकेशं तत्रापि पत्न्या सहितं मणिः ग्रीवायां यस्य तमुपलभ्य सर्वे जातमहोत्सवा आसन् ॥

मु ॥ यथा मृतं परेतं पुनरिहागतं विचित्रदैवसङ्कल्पमहिम्ना पुनरिह लोकं प्राप्तं सुतादिकं जना लभन्ते, तद्वत् हृषीकेशमुपलभ्येत्यर्थः, पुनः कीदृशं? मणिः स्यमन्तकः ग्रीवायां यस्य तं सह पत्न्या नूत्नपत्न्या सहागतमित्यर्थः,मणिसाधनदृष्ट्या गतस्य तस्य यादृच्छिकलोकाद्भुतसुन्दरीमणिप्राप्तिः कस्योत्सवं नावहेदित्यभिप्रायेणाह—सर्वे जातमहोत्सवा इति । अभवन्निति शेषः ॥ ३८ ॥

वी ॥ सत्राजितमिति ॥ राज्ञः उग्रसेनस्य सन्निधौ प्राप्तिं मणिलाभप्रकारमाख्याय तस्मै सत्राजिते मणिं न्यवेदयत् अर्पयामास ॥ ३९ ॥

सचातिव्रीडितोरत्नं गृहीत्वाऽवाङ्मुखस्ततः। अनुतप्यमानोभवनमगमत्स्वेनपाप्मना॥
[1]सोऽनुध्यायंस्तमेवार्थं बलवद्विग्रहाकुलः। कथंमृजाम्यात्मरजःप्रसीदेद्वाऽच्युतःकथम्
किंकृत्वासाधुमह्यंस्यान्नशपेद्राजनोयथा। अदीर्घदर्शनंमूढं मान्धिग्द्रविणलोलुपम्॥४२
दास्येदुहितरन्तस्मैस्त्रीरत्नंरत्नमेवच। उपायोऽयंसमीचीनस्तस्यशान्तिर्नचान्यथा॥४३
एवंव्यवसितोबुद्ध्यासत्राजित्स्वसुतांशुभाम्। मणिश्चस्वयमुद्यम्य कृष्णायोपजहारह॥

मु ॥ ततो हरिः किमकरोदित्यत्राह—सत्राजितमिति ॥ राजसन्निधौ बलरामसन्निधौ प्राप्तिं मणिप्राप्तिक्रमं भगवान् आख्याय उक्त्वा मणिं च तस्मै सत्राजिते न्यवेदयत् अर्पितवान् ॥ ३९ ॥

वी॥ सचेति ॥ स्वेन पाप्मना याच्ञावैफल्यकरणमिथ्यापवादापादनादिरूपेण अनुतप्यमानः स्वगृहं जगाम ॥ ४० ॥

मु ॥ ततः किम्, अत आह—स चेति ॥ स्वेन पाप्मना अपराधेन अनुतप्यमान इत्यत्राक्षराधिक्यमार्षम्, भवनं स्वगृहम् अगमत् ॥ ४० ॥

वी॥स सत्राजित्तमेवार्थमपराधरूपमनुचिन्तयन् अघमिति च पाठः,बलवता भगवता सह यो विग्रहो विरोधस्तेन आकुलश्च चिन्तयामासेति शेषः,चिन्ताप्रकारमेवाह—कथमितिसार्धेन। आत्मरजः स्वापराधं मृजाम्यपनयामि,कथंवा अच्युतः प्रसन्नो भवेत्॥

मु ॥ एवं भगवते कृतापराधस्य तस्य परितापविचारमाह—स इति॥ तत् स्वकृतमेवाघम् अपराधम् अनुध्यायन् निरन्तरं चिन्तयन्, तत्र हेतुगर्भविशेषणमाह—बलवद्विग्रहाकुल इति । बलवता सर्वशक्तिमता कृष्णेन विग्रहः कलहः तेन आकुलः भयकम्पमानचित्तः ॥ ४१ ॥

वी ॥ किं कृत्वा कस्मिन्कर्मणि कृत इत्यर्थः, साधु भद्रं स्यात्, कथंच मां जनो न शपेत्, मां धिक् अहं निन्द्य इत्यर्थः, तत्र हेतुं वदन्नात्मानं विशिनष्टि—अदीर्घदर्शनं दूरविचारानभिज्ञं मूढं मन्दमतिं वित्तैकासक्तम् ॥ ४२ ॥

वी ॥ इत्थं विचार्य निश्चिनोति—दास्य इति ॥ स्त्रीरत्नं दुहितरं रत्नं स्यमन्तकं च कृष्णाय दास्ये दास्यामि, अन्यथा यदि न दास्ये इत्यर्थः, तस्य कृष्णस्य शान्तिश्चित्तसमाधिर्न भवेत् ॥ ४३ ॥

वी ॥ एवमिति ॥ बुद्ध्या व्यवसितः निश्चिन्वन् शुभां शुभलक्षणां स्वसुतां सत्यभामां मणिं स्यमन्तकं च उद्यम्य उद्धृत्यादाय वा कृष्णाय समर्पयामास ॥ ४४ ॥

मु ॥ सत्राजित् एवं बुद्ध्या व्यवसितः सञ्जातव्यवसायः निश्चयवान् सन्नित्यर्थः, स्वसुतां मणिं च स्वयमुद्यम्य स्वयमेवोद्योगं कृत्वा कृष्णायोपजहार समर्पितवान्, 'कथं मृजामि' इत्यारभ्य 'शान्तिर्नचान्यथा' इत्यन्तेन तस्य विचारक्रम उच्यते, आत्मरजः स्वस्य मलम् अपराधमित्यर्थः, कथं मृजामि निवर्तयिष्यामि, अच्युतो वा कथं प्रसीदेत् अपराधनिवृत्तिफलत्वेन भगवान् कथं मे प्रसन्नो भवेदित्यर्थः, किं कृत्वा साधु मह्यं स्यात् भगवतः कृते कस्मिन् कार्ये आचरिते मम भद्रं स्यादित्यर्थः, जनोऽयं लोकः यथा वा मां न शपेत् 'दुष्टात्मानमेनं धिक्' इति नापवदेदित्यर्थः,एवमुक्त्वा स्वयमेव गर्हते—

१. सो बुध्यायंस्तदेवाघं. मु. भा. प्र. पा ॥

तांसत्यभामांभगवानुपयेमेयथाविधि।बहुभिर्याचितांशीलरूपौदार्यगुणान्विताम्४५
भगवानाहनमणिं प्रतीच्छामोवयंनृप।तवास्तान्देवभक्तस्य वयन्तुफलभागिनः ॥ ४६
इति श्रीभागवते महापुराणे दशमस्कन्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

श्रीशुक उवाच—

(सत्राजितं हत्वा स्यमन्तकमपहर्तुश्शतधन्वनो वधवृत्तः.)

विज्ञातार्थोऽपिभगवान्दग्धानाकर्ण्यपाण्डवान्।कुन्तीञ्चकुल्यकरणेसहरामोययौकुरून्

---

अदीर्घेति । अदीर्घदर्शनम् अविचारकं, तत्कुत इत्यत्राह—मूढमिति । अज्ञमित्यर्थः, द्रविणलोलुपम् अर्थाभिलाषलम्पटं मा धिगिति,एवं ध्यायंस्तत्रोचितोपायं निश्चिनोति—दास्य इति । स्त्रीरत्नं स्त्रीषु श्रेष्ठां दुहितरं स्वपुत्रीं तावद्दास्यामि, अथ पारिबर्हत्वेन रत्नमपि दास्यामि; अयमेवोपायः समीचीनः अत्रोचितः, अन्यथा प्रकारान्तरेण तस्य निग्रहानुग्रहसमर्थस्य सर्वशक्तेः भगवतः शान्तिः न च नैवेति ॥ ४२, ४३, ४४ ॥

वी ॥ तामिति ॥ उपयेमे विवाहितवान्, कथंभूतां? बहुभिः कृतवर्मशतधन्वादिभिः याचितां रूपादिभिरन्वितां च, तत्र रूपं सौष्ठवम् , शीलं सुस्वभावः, गुणाः म्रदिमकरुणादयः ॥ ४५ ॥

मु ॥ ततः कृष्णकृत्यमाह—तामिति ॥ उपयेमे पाणिग्रहणं कृतवान् , तामेव विशिनष्टि—बहुभिरिति । रूपेण सौन्दर्येण शीलेन सद्वृत्तेन औदार्येण दीनार्थिविप्रबान्धवाद्यभिलषितार्थप्रदातृत्वेन गुणैः पातिव्रत्यादिभिश्च अन्विताम् अत एव बहुभिः राजभिः याचिताम् एवंविधगुणसम्पन्ना मह्यमेव देयेति प्रार्थितामित्यर्थः ॥ ४५ ॥

वी ॥ भगवानिति ॥ उक्तिमेवाह—नमणिमिति।हे नृप सत्राजित मणिं न प्रतीच्छामः न प्रतिगृह्णीमः,किन्तु स्त्रीरत्नमेव प्रतीच्छामः, देवभक्तस्य सवितृभक्तस्य तवैव मणिरास्तां तिष्ठतु, वयं तु केवलं फलभागिनः दुर्भिक्षादिशान्तिरूपफलभागिनः, यद्वा तवापुत्रत्वात्त्वदीयं धनमस्माकमेवेत्यन्ततः फलभागिन इत्यर्थः ॥ ४६ ॥

मु ॥ ततः किम्, अत आह—भगवानिति ॥ हे नृप मणिं न प्रतीच्छामः न स्वीकुर्मः, किंतु देवभक्तस्य सूर्यभक्तस्य तवैवास्तु—इति, किन्तु वयं फलभागिनः—इति, अयमभिप्रायः—अपुत्रस्य ते धनं पश्चात् अस्मदीयमेव—इति, यद्वा मणिस्त्वदीय एव, वयं तु दुर्भिक्षशान्त्यादिरूपतत्फलभागिन इति ॥ ४६ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम् अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वी ॥ फलभागिन इत्युक्तम् , तदेव दर्शयितुं मणिकथाशेषमाह सप्तपञ्चाशत्तमेन विज्ञातार्थ इत्यादिना ॥ विज्ञातः विदितः अर्थः पाण्डवाः बिलद्वारेण जतुगृहान्निर्गता इत्येवंविधोऽर्थो येन तथाभूतोऽपि केवलं प्राकृतलोक इव पाण्डवान् कुन्तीं च दग्धान् जतुगृहेष्विति शेषः, आकर्ण्य कुल्यकरणे कुलोचितसंव्यवहारार्थं रामेण सहितः कुरून् देशान् ययौ ॥ १ ॥

भीष्मंकृपंसविदुरं गान्धारीन्द्रोणमेवच।[१]तुल्यकष्टान्समागम्य हाकष्टमितिहोचतुः॥
ज्ञात्वातदन्तरंराजन् शतधन्वानमूचतुः।अक्रूरकृतवर्माणौ मणिःकस्मान्नगृह्यते॥ ३
योऽस्मभ्यंसंप्रतिश्रुत्य कन्यारत्नंविगृह्यनः।
कृष्णायादान्नसत्राजित्कस्माद्भ्रातरमन्वियात्॥ ४

---

मु ॥ पा ॥ नारायणः स्वस्य सर्वबन्धुतां निरुपाधिकाम्।
सुहृत्त्वं च प्रकटयेत् क्वचिदित्यत्र कथ्यते॥
लीलाविभूतौ स्वस्यावतीर्णस्य परमात्मनः। नृताविडम्बनादेवमितिचासूचि मौनिना॥
नारायणः स्वस्य समस्तमित्रभावे समानेऽपि जनस्य भक्तिः।
स्वस्मिन्यथा स्यादिह तांस्तथैव कटाक्षयेदित्यपि सूच्यतेऽत्र॥
क्षुद्रेषु महतो याच्ञा विफला यदि सर्वदा। विपरीतफलं कुर्यादितिचात्राभिधीयते॥ अथ सत्राजितः कृष्णयाच्ञाभङ्गफलं प्रकटयन्नाह—विदितार्थोऽपीत्यादि॥ 'विज्ञातार्थोऽपि' इति च पाठः, सर्वज्ञत्वात् पूर्वमेव विदितसकलार्थोऽपीत्यर्थः, कृष्णस्य साक्षादीश्वरत्वेन सर्वज्ञत्वेऽपि नरावतारत्वेन लोकविडम्बनेनैव प्रायशस्सर्वे व्यवहारा इति अपिशब्दाभिप्रायः, इममेव मनसि निधाय आध्यायपरिसमाप्ति तत्रतत्र अर्थसरणिर्नेतव्या,विदितः अर्थः जतुगृहाद्बिलद्वारेण पाण्डवनिर्गमनरूपो यस्य सः कुन्तीमपिदग्धामाकर्ण्य कुल्यकरणे कुलोचितसंव्यवहारार्थम्॥ १॥

वी॥ भीष्मंकृपमिति॥ पाण्डवेतरेषां जतुगृहदुःखाभावाद्भीष्मादीन् समागम्येत्युक्तम्, तुल्यकष्टानात्मना तुल्यदुःखान् हा कष्टं दुःखं प्राप्तमित्येवं तान्प्रत्यूचतुः सान्त्वयामासतुः॥ २॥

मु॥ भीष्ममित्यादि॥ अन्येषां तद्दाहप्रयुक्तदुःखाभावादेतान् समागम्येत्युक्तम्, तुल्यदुःखौ रामकृष्णौ हा हा कष्टमित्यूचतुः॥ २॥

वी॥ ज्ञात्वेति॥ तदा अक्रूरकृतवर्माणौ भगवानधुना अत्र नास्ति, अयमेवावसर इत्येवमन्तरं समयं ज्ञात्वा हे राजन् शतधन्वानमूचतुः, उक्तिमेवाह—मणिरित्यादिना सपादेन। न गृह्यते त्वयेति शेषः॥ ३॥

मु॥ ततः किम्, अत आह—ज्ञात्वेति॥ एतत् श्रीकृष्णनिर्गमनमेव अन्तरं मणिसाधनावकाशं ज्ञात्वा अक्रूरकृतवर्माणौ शतधन्वानमूचतुः, तत्प्रकारमाह—मणिरित्यादिना। कस्मात् हेतोः मणिः न गृह्यते ,तस्मात् सर्वथा मणिः ग्राह्य एवेत्यर्थः॥ ३॥

वी॥ ग्राह्यत्वे हेतुः—यइति॥ यस्सत्राजित् कन्यारत्नं सत्यभामामस्मभ्यं प्रतिश्रुत्य दास्यामीति प्रतिज्ञाय नोऽस्मान्विगृह्य अनादृत्य कृष्णायादाद्ददौ, अतः मणिर्ग्राह्य इति भावः, ननु जीवन्सत्राजित्कथं मणिं दास्यतीत्यत्रोचतुः—नेत्यादि। सत्राजित्कस्माद्धेतोः भ्रातरं प्रसेनं नान्वियान्नानुगच्छेत्, हन्तव्य एव स इत्यर्थः॥ ४॥

मु॥ तत्कुत इत्यत्राह—य इति॥ यः सत्राजित् अस्मभ्यं सम्प्रतिश्रुत्य दास्यामीति प्रथमं प्रतिज्ञाय कन्यारत्नं कन्याश्रेष्ठां नः अस्मान् विगर्ह्य कृष्णाय अदात् ददौ, स इति शेषः, कस्मात् हेतोः भ्रातरं नान्वियात् मृतं प्रसेनं नानुगच्छेत् म्रियतामित्यर्थः॥ ४॥

---

१. तुल्यदुःखौ. मु. भा. प्र. पा॥

एवंभिन्नमतिस्ताभ्यां सत्राजितमसत्तमः। शयानमवधील्लोभात्सपापःक्षीणजीवितः॥
स्त्रीणांविक्रोशमानानांक्रंदतीनामनाथवत्। हत्वापशुंसौनिकवन्मणिमादायजग्मिवान्
सत्यभामाचपितरं हतंवीक्ष्यशुचाऽर्पिता।व्यलपत्ताततातेतिहाहतास्मीतिमुह्यती ॥ ७
तैलद्रोण्यांमृतंप्रास्य जगामगजसाह्वयम्।कृष्णायविदितार्थाय तस्याचख्यौपितुर्वधम् ॥
तदाकर्ण्येश्वरौराजन्ननुसृत्यनृलोकताम् ।अहोनःपरमंकष्टमित्यस्राक्षौविलेपतुः ॥ ९

वी ॥ एवमिति ॥ इत्थं ताभ्याम् अक्रूरकृतवर्मभ्यां भिन्ना भेदिता मतिर्यस्य सोऽसत्तमः पापात्मा शतधन्वा क्षीणजीवितः हेतुगर्भमिदम् , तत्त्वात् लोभान्मणिलोभाच्छयानं सत्राजितं हतवान्॥ ५॥

मु॥ एवम् उक्तरीत्या ताभ्याम् अक्रूरकृतवर्मभ्यां भिन्नमतिः विच्छिन्नसद्बुद्धिः सन्नित्यर्थः, तत्कुत इत्यत्राह—असत्तमइति । दुर्जनश्रेष्ठ इत्यर्थः, पापी प्रशस्तपापः अत एव क्षीणजीवितः नष्टायुः सः ॥ ५ ॥

वी ॥ स्त्रीणामिति ॥ यथा सौनिकः पशुहिंसकः पशुं हन्ति तद्वद्धत्वा अनाथवत् स्त्रीणां सत्राजिन्नारीणां विक्रोशन्तीनां रुदन्तीनां सतीनामेव मणिमादाय जगाम ॥ ६ ॥

मु ॥ स्त्रीणां विक्रोशमानानां मा वधीरित्यनाथवत् उच्चैराक्रोशन्तीनां सतीनामेवेत्यनादरे षष्ठी, ता अनादृत्येत्यर्थः, पशुं सौनिकवत् पशुहन्तेव हत्वा तमिति शेषः, जग्मिवान् जगाम ॥ ६ ॥

वी ॥ सत्यभामेति ॥ शुचा शोकेनार्पिता व्याप्ता मुह्यती मध्येमध्ये मूर्छां प्राप्नुवती व्यलपत् , विलपनप्रकारमेवाह—ताततातेति हा हतास्मीति ॥ ७ ॥

मु ॥ ततः किम् , अत आह—सत्यभामा चेति ॥ शुचा शोकेन अर्पिता व्याप्तेत्यर्थः, मुह्यती मोहं मूर्च्छां प्राप्तवतीत्यर्थः, व्यलपत् विललाप ॥ ७ ॥

वी ॥ ततो मृतं पितरं तैलद्रोण्यां तैलकटाहे प्रास्य निधाय हास्तिनपुरं जगाम, तत्रागत्य विज्ञातपितृमरणरूपार्थाय अजानत इव स्थिताय कृष्णाय पितुर्वधं शतधन्वकृतमाचख्यौ ॥ ८ ॥

मु ॥ मृतं तैलद्रोण्यां तप्ततैलपूर्णभाजनविशेषे प्रास्य विन्यस्य गजसाह्वयं हास्तिनपुरं जगाम,गजेन समान आह्वय आख्या नाम यस्य तत् गजसाह्वयमित्यर्थः, विदितार्थाय सर्वज्ञतया पूर्वमेव विदितैतद्वृत्तान्ताय कृष्णाय पितुर्वधमाचख्यौ कथयामास ॥ ८ ॥

वी ॥ तद्व्याख्यानं श्रुत्वा हे राजन् ईश्वरौ रामकृष्णौ नृलोकतामनुसृत्य नरचेष्टामभिनयन्तावित्यर्थः, अस्राक्षौ अश्रुपूर्णनेत्रौ अहो नोऽस्माकं परममनवधिकं कष्टं दुःखं प्राप्तम् , इत्येवं विलेपतुः विलपितवन्तौ ॥ ९ ॥

मु ॥ अथ "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इत्यादिश्रुत्युक्तहेयगुणप्रत्यनीकत्वकल्याणैकतानत्वरूपोभयलिङ्गपूर्णस्यापि भगवतः कथमश्रुविलोचनविलापादिकमित्याशङ्कां परिहर्तुमाह—अनुसृत्य नृलोकतामिति । नृलोकतां मानुषलोकरीतिमित्यर्थः, अनुसृत्य विडम्ब्य अस्रम् अश्रु अक्षणोर्ययोस्तौ सन्तौ विलेपतुः विलापं चक्रतुः, तत्प्रकारमाह—अहो नः परमं कष्टमिति। नः परमं कष्टम् अहो इति विलेपतुरित्यन्वयः ॥ ९ ॥

आगत्य भगवांस्तस्मात्सभार्यस्साग्रजः पुरम्। शतधन्वानमारेभे हन्तुं हर्तुं मणिं ततः॥
सोऽपि कृष्णोद्यमं ज्ञात्वा भीतः प्राणपरीप्सया। साहाय्ये कृतवर्माणमयाचत स चाब्रवीत्
नाहमीश्वरयोः कुर्यां हेलनं रामकृष्णयोः। को नु क्षेमाय कल्पेत तयोर्वृजिनमाचरन् १२
कंसस्सहानुगोऽपीतो यद्द्वेषात्त्याजितश्श्रिया। जरासन्धस्सप्तदशसंयुगाद्विरथो गतः १३ अपीतः
प्रत्याख्यातस्स चाक्रूरं पार्ष्णिग्राहमयाचत। सोऽप्याह को विरुध्येत विद्वानीश्वरयोर्बलम्

वी ॥ ततस्स सत्यभामस्साग्रजस्स भगवान् पुरं द्वारकामागत्य शतधन्वानं हन्तुं ततश्शतधन्वनो मणिं हर्तुं चारेभे उद्युक्तवान्॥ १० ॥

मु ॥ ततो भगवान् किमकरोदित्यत्राह—आगत्येति ॥ ततः तस्मात् हास्तिनपुरात् पुरीं द्वारकां प्रत्यागत्य शतधन्वानं हन्तुं ततः तस्मात् मणिं हर्तुं च आरेभे उद्युक्तोऽभूत् ॥ १० ॥

वी ॥ सोऽपि शतधन्वाऽपि कृष्णस्योद्यममुद्योगमाकर्ण्य प्राणपरीप्सया प्राणरिरक्षिषया कृतवर्माणं सहाय्यं सहायार्थम् अयाचत, स च कृतवर्मा अब्रवीत् ॥ ११ ॥

मु ॥ ततः किम्, अत आह—सोऽपीति ॥ कृष्णोद्यमं कृष्णसङ्कल्पितं स्ववधोद्योगं श्रुत्वा भीतस्सन् प्राणपरीप्सया स्वप्राणरक्षणेच्छया साहाय्ये सहायकर्मणि कृतवर्माणम् अयाचत ॥ ११ ॥

वी ॥ उक्तिमेवाह—नाहमिति द्वाभ्याम् ॥ हेलनं प्रातिकूल्यं न कुर्याम्, तत्र हेतुमाह—कोन्विति। तयोः रामकृष्णयोः वृजिनमपराधं कुर्वन् को नु पुमान् क्षेमाय कल्पेत क्षेमं प्राप्नुयादित्यर्थः, न कोऽपीति भावः॥ १२ ॥

मु ॥ ततः कृतवर्मोक्तिप्रकारमाह—नचेत्यादिना प्रत्याख्यात इत्यन्तेन ॥ ईश्वरयोः जगत्सृष्ट्यादिकर्त्रोः रामकृष्णयोः हेलनं प्रतिकूलम् अपराधमित्यर्थः, अन्यथा हानिमाह-कोन्विति ॥ वृजिनम् अपराधं तयोराचरन् को नु क्षेमाय श्रेयसे कल्पते ॥ १२ ॥

वी ॥ किं त्वयेत्थं दृष्टमित्यत्रोदाहरणमात्रमाह—कंस इति॥ यस्मिन् श्रीकृष्णे द्वेषाद्धेतोः श्रिया राज्यश्रिया प्राणैश्चेति शेषः, त्याजितः, तथा जरासन्धोऽपि सप्तदशसङ्ख्याकात्संयुगाद्विरथः शरीरमात्रावशिष्टो गतः ॥ १३ ॥

मु ॥ इतः पूर्वं भगवति कृतापराधानां विपदं दर्शयन्नाह—कंसइत्यादिना ॥ यद्द्वेषात् यस्मिन् भगवति वैरात् श्रिया त्याजितः विमोचितः निवर्तितश्रीकस्सन्नित्यर्थः, अपीतः मृतः, सप्तदशसंयुगात् सप्तदशसंख्यायुद्धात् विरथस्सन् जरासन्धो गतः॥१३॥

वी ॥ इत्थं तेन प्रत्याख्यातः ततः अक्रूरं सहाय्यमयाचत, सोऽप्यक्रूरोऽपि, उक्तिमेवाह—कइत्यादिना आत्मने नम इत्यन्तेन। ईश्वरयोः रामकृष्णयोः बलं जानन् कः पुमान्विरुध्येत ईश्वराभ्यामिति शेषः ॥ १४ ॥

मु ॥ प्रत्याख्यातः एवं कृतवर्मणा नाहं शक्त इति प्रत्युक्तः स च शतधन्वा अक्रूरं पार्ष्णिग्राहं स्वस्य पश्चादनुसृत्य रक्षकत्वेन वर्तमानं सहायम् अयाचत, ततः किम्, अत आह—सोऽपीति। ईश्वरयोः रामकृष्णयोः बलं विद्वान् जानन् पुमान् न विरुध्येत विरोधं तयोर्न कुर्यादित्यर्थः, श्रेयस्कामी भगवद्विरोधं न कुर्यादित्यर्थः, श्रेयस्कामी भगवद्विरोधं न कुर्यादिति तन्महिमानभिज्ञान् प्रति उपदेशात्मको विधिरेवायमिति भावः ॥

१. साहाय्येकृतवर्माण. मु. भा. प्र. पा ॥

यइदंलीलयाविश्वं सृजत्यवतिहन्त्यजः। चेष्टांविश्वसृजोयस्य नविदुर्मोहिताऽजया ॥
यस्सप्तहायनश्शैलमुत्पाट्यैकेनपाणिना।दधारलीलयाबालउच्छिलीन्ध्रमिवार्भकः॥
नमस्तस्मैभगवतेकृष्णायाद्भुतकर्मणे। अनन्तायादिभूताय कूटस्थायात्मनेनमः॥१७
प्रत्याख्यातस्सतेनापि शतधन्वामहामणिम्।तस्मिन्न्यस्याश्वमारुह्य शतयोजनगंययौ॥

---

वी ॥ भगवतो बलं वक्तुं तावत्तस्य कृत्स्नजगदुदयविभवलयलीलत्वमाह —यइति॥ अवति रक्षति अजः सृज्यगतजन्मादिस्पर्शरहितः, तेन को विरुध्येतेति भावः, सर्वेऽप्येवं किं न विदुरित्यत आह —चेष्टामिति । यस्य भगवतः अजया मायया मोहितास्तस्य चेष्टां विश्वसृष्ट्यादिरूपां न विदुः, मोहिताजयेत्यत्र सन्धिरार्षः ॥ १५ ॥

मु ॥ एवं 'विद्वानीश्वरयोर्बलम्' इत्युक्त्वा बहुधा जगद्रक्षणाय व्यक्तिभेदेन अवतीर्णौ तावेकमेव तत्त्वमित्यभिप्रायेणाह—य इति ॥ यः अजः हरिः "अजो हरौ हरे कामे विधौ च्छागे रघोस्सुते" इति नैघण्टुकाः, इदं विश्वं लीलयैव सृजति न तु कुलालादिवदायासबाहुल्येनेत्यर्थः, लीलयैवावतिरक्षति, हन्ति संहरति, तर्हि कथं तन्महिमा लोकैर्न विज्ञायत इत्यत्राह—चेष्टामिति । विश्वसृजः विश्वनिर्माणकर्तुः यस्य भगवतः चेष्टां विश्वनिर्माणादिव्यापारशक्तिमित्यर्थः, अजया प्रकृत्या मोहिता जना इत्यर्थः, न विदुरिति, मोहिताजयेत्यत्र सन्धिरार्षः ॥ १५ ॥

वी ॥ बलं प्रपञ्चयति—यइति॥यो भगवान् बालः तत्रापि सप्तवर्षवयास्सन्नेव शैलं गोवर्धनमेकेनैव पाणिनोत्पाट्य लीलया दधार, यथा अर्भकश्शिलीन्ध्रमुत्पाट्य धरति, तद्वत् शिलीन्ध्रं भूतालकुसुमम् ॥ १६ ॥

मु ॥ एवमुक्त्वा यथामति भगवन्तं स्तुवन् भक्त्यावेशेन पुनः पुनर्नमस्यति—य इत्यादिना ॥ तत्र प्रथमं तस्य सर्वशक्तित्वभूषितम् अलौकिकमहिमानमाह—य इति। सप्तहायनः सप्तसंवत्सरपरिमितवयास्सन्नेवेत्यर्थः, अर्भकः लौकिकबालकः उच्छिलीन्ध्रं छत्राकमिव एकेनैव पाणिना शैलमुत्पाट्य लीलया दधार ॥ १६ ॥

वी ॥ अतस्स केवलं नमस्कार्य एवेत्यभिप्रयन्नमस्करोति—नम इति ॥ भगवते षाड्गुण्यपूर्णाय अत एव अद्भुतममानुषमदैवं च कर्म यस्य तस्मै अनन्ताय अपरिच्छेद्यस्वरूपस्वभावाय आदिभूताय जगत्कारणभूताय कूटस्थाय स्वरूपतस्स्वभावतश्च निर्विकाराय आत्मने सर्वान्तरात्मने कृष्णाय तस्मै नमोनमः ॥ १७ ॥

मु ॥ नम इति ॥ भगवते ज्ञानशक्त्यादिपूर्णाय कृष्णाय अनन्तनामसु उच्चारणमात्रेणैव सकलपापकर्षककृष्णनाम्ना प्रसिद्धायेत्यर्थः, अद्भुतकर्मणे सकललोकाश्चर्यरसावहव्यापाराय अनन्ताय स्वरूपतो गुणतश्चेयत्तारहिताय अतएव आदिभूताय चिदचिदात्मकतत्त्वत्रयस्य प्रधानकारणायेत्यर्थः, कूटस्थाय अक्षराय नमो नमः ॥ १७ ॥

वी ॥ प्रत्याख्यात इति ॥ तेन अक्रूरेणाप्येवं प्रत्याख्यातः स शतधन्वा महामणिं तस्मिन्नक्रूरे न्यस्य निधाय अक्रूराधीनं कृत्वेत्यर्थः, शतयोजनगं शतयोजनैर्गन्तव्यं देशं ययौ ॥ १८ ॥

गरुडध्वजमारुह्य रथंरामजनार्दनौ। अन्वयातांमहावेगैरश्वैराजन्गुरुद्रुहम् ॥ १९
मिथिलायाउपवने विसृज्यपतितंहयम्।पद्भ्यामधावत्सन्त्रस्तःकृष्णोऽप्यन्वद्रवद्रुषा॥
पदातेर्धावतस्तस्यपदातिस्तिग्मनेमिना।चक्रेण शिरउत्कृत्य [1]वाससोर्व्यचिनोन्मणिम्
अलब्धमणिरागत्यकृष्णआहाग्रजान्तिकम्।वृथाहतश्शतधनुर्मणिस्तत्रनविद्यते॥ २२
ततआहबलोनूनंसमणिश्शतधन्वना। कस्मिंश्चित्पुरुषेन्यस्त[2]स्तमन्वेष्टुंपुरंव्रज॥ २३

( बलदेवस्य मिथिलानिवासः, तत्र दुर्योधनस्य गदाभ्यासश्च. )

अहंवैदेहमिच्छामिद्रष्टुंप्रियतमंमम। इत्युक्त्वामिथिलांराजन्विवेशयदुनन्दनः॥ २४

---

मु ॥ इति एवं तेन अक्रूरेणापि प्रत्याख्यातः प्रत्युक्तः शतधन्वा तस्मिन् अक्रूरे मणिं न्यस्य शतयोजनानि गच्छत्येकेनैव दिनेनेति शतयोजनगम् अश्वम् आरुह्य ययौ ॥ १८ ॥

वी ॥ तदा गरुडो ध्वजे यस्मिन् तं रथ मारुह्य हे राजन् महावेगैः अश्वैर्गमनसाधनैः गुरुद्रुहं श्वशुरहन्तारं शतधन्वानमन्वयाताम् अन्वगच्छताम् ॥ १९ ॥

मु ॥ ततः श्रीकृष्णकृत्यमाह—गरुडध्वजमिति ॥ रामजनार्दनौ महावेगैः अश्वैः साधनैः गुरुद्रुहं गुरुद्रोहकारिणं तम् अन्वयाताम् अनुसृत्य अगच्छताम् ॥ १९ ॥

वी॥ मिथिलायाइति॥ शतयोजनमात्रगामित्वात्ततःपरं गन्तुमशक्तं पतितं हयमश्वं विसृज्य सन्त्रस्तः पद्भ्यामधावत्, एवं धावन्तं शतधन्वानं रुषा भगवानप्यन्वधावत् ॥

मु ॥ ततः किम्, अत आह—मिथिलाया इति ॥ मिथिलायाः मिथिलाख्यनगरस्य उपवने पतितं शतयोजनपरिमिताध्वमात्रगमनशक्तत्वेन अतः परं गन्तुमशक्ततया तत्र पतितमित्यर्थः ॥ २० ॥

वी ॥ पदातेरिति ॥ तिग्मनेमिना तीक्ष्णधारेण चक्रेण तस्य शिर उत्कृत्य छित्त्वा तस्य वाससोरन्तरीयोत्तरीययोर्मणिं व्यचिनोत् मृगयामास, अक्रूरे मणिरस्तीति सर्वज्ञतया विदित्वाऽपि रामवञ्चनार्थं तथा कृतवानित्यर्थः ॥ २१ ॥

मु ॥ वाससः तद्वस्त्रात् मणिं व्यचिनोत् मृगयामास, अक्रूर एव मणिरस्तीति सर्वज्ञतया विदित्वापि भगवान् रामवञ्चनाय तथा कृतवानिति भावः ॥ २१ ॥

वी ॥ तदाह—अलब्धमणिरिति ॥ न लब्धो मणिर्येन तथाभूतः अग्रजान्तिकमागत्योवाच, उक्तिमेवाह—वृथेति। तत्र शतधन्वनि ॥ २२ ॥

मु ॥ 'अलब्धमणिः' इत्यारभ्य 'मणिस्तत्र न विद्यते' इत्यन्तं श्रीकृष्णस्योक्तिः, 'ततः' इत्यारभ्य 'इत्युक्त्वा' इत्यन्तं रामोक्तिः ॥ २२ ॥

वी ॥ एवं वञ्चितोऽपि स बलो बलभद्रः सर्वज्ञत्वात् तं कृष्णमाह—नूनमिति ॥ नूनं कस्मिंश्चित्पुरुषे मणिः न्यस्तः, अतस्तमन्वेष्टुं स्वपुरं द्वारकां गच्छेति ॥ २३ ॥

मु ॥ अन्वेष मृगय स्व ॥ २३ ॥

वी ॥ ततः पुनः सर्वज्ञेनैवं चेष्टितं मद्वञ्चनायेति गूढमन्युराह—अहमिति ॥ वैदेहं जनकम्, इतीति। हे राजन् यदुनन्दनो बलभद्रः ॥ २४ ॥

मु ॥ स्वप्रयोजनमाह—अहमिति ॥ २४ ॥

---

१. वाससो व्यचिनोन्मणिम्. मु. भा. प्र. पा ॥ २. तमन्वेष. मु. भा. प्र. पा ॥

तं दृष्ट्वासहसोत्थायमैथिलः प्रीतमानसः। अर्हयामासविधिवदर्हण्यं वै समर्हणैः॥
उवासतस्यांकतिचिन्मिथिलायां समाविभुः॥ २५

ततोऽशिक्षद्गदांकालेधार्तराष्ट्रस्सुयोधनः।मानितःप्रीतियुक्तेनजनकेनमहात्मना॥२६

केशवोद्वारकामेत्यनिधनंशतधन्वनः।[१]अप्राप्तिंचमणेःप्राहप्रियायाःप्रियकृद्विभुः॥ २७

ततस्सकारयामासक्रियाबन्धोर्हतस्यवै।साकंसुहृद्भिर्भगवान्यायास्स्युस्सांपरायिकाः

( अक्रूरेण मणिप्रत्यर्पणघट्टः. )

अक्रूरःकृतवर्माचश्रुत्वाशतधनोर्वधम्। व्यूषतुर्भयवित्रस्तौद्वारकायाःप्रयोजकौ॥२९

---

वी ॥ मैथिलो जनकः, तं रामं दृष्ट्वा प्रीतमानसस्सहसा उत्थाय पूजार्हं रामम् अर्हणैः पूजासाधनैर्यथाविधि पूजयामास, उवासेति ॥ विभू रामः कतिचित्समाः वत्सरानुषितवान् ॥२५॥

मु ॥ अर्हण्यं पूजार्हं तं समर्हणैः पूजाद्रव्यैः अर्हयामास, कतिचित् समाः संवत्सरान् उवास "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥ २५ ॥

वी ॥ प्रासङ्गिकमाह—ततइति ॥ धृतराष्ट्रस्यापत्यं सुयोधनस्तदा काले लब्धावसरे ततो रामाद्गदामशिक्षत् गदाधारणविद्यां गृहीतवानित्यर्थः,सुयोधनं विशिनष्टि—मानित इति ॥ २६ ॥

मु ॥ तत्र प्रासङ्गिकमाह—ततः तस्मात् बलरामात् धार्तराष्ट्रः धृतराष्ट्रपुत्रः सुयोधनः काले कस्मिंश्चित्समये गदामशिक्षत् गदायुद्धकौशलमभ्यस्तवानित्यर्थः, तदुपयुक्तस्थितिसौख्यमाह—मानित इति ॥ २६ ॥

वी ॥ सत्यभामामप्यवञ्चयदित्याह—केशवइति ॥ एत्यागत्य शतधन्वनो निधनं वधं मणेरलाभं च प्रियायास्सत्यभामायाः प्राह, प्रियकृत्प्रियं कुर्वन्निव ॥ २७ ॥

मु ॥ श्रीकृष्णः सत्यभामामप्यवञ्चयदिति सूचयन् तत्कृत्यमाह—केशव इत्यादिना॥ शतधन्वनो निधनं मरणं मणिम् अप्राप्तं च प्रियायाः सत्यभामायाः प्राह, प्रियकृद्विभुरित्याभ्यां भगवतः सर्वहितकारित्वं तत्सामर्थ्यं चोच्यते ॥ २७ ॥

वी ॥ ततइति ॥ सुहृद्भिस्सहितो भगवान् हतस्य बन्धोः श्वशुरस्य सत्राजितस्य क्रिया उत्तरक्रियाः कारयामास, कास्ताः याः कारयामासेत्यत्राह—यायाः क्रियाः सांपरायिकाः परलोकहेतवः ता इत्यर्थः ॥ २८ ॥

मु॥ तस्य बन्धोः सत्राजितः सांपरायिकाः पारलौकिक्यः यायाः क्रियाः स्युः, ताः कारयामासेति,स्युरित्यनेन शास्त्रविहिताः याः क्रियास्सन्ति,ता इत्यर्थो बोध्यते, कारयामास अकारयत् , तत्कर्त्रेति शेषः ॥ २८ ॥

वी ॥ अक्रूरइति ॥ प्रयोजकौ मणिहरणार्थं शतधन्वनः प्रवर्तकौ हेतुगर्भमिदम्, तत्त्वात् भयेन वित्रस्तौ कृतवेपथू द्वारकायास्सकाशाद्व्यूषतुः प्रोषितवन्तौ, तत्राक्रूरः कृष्णानुमत एव गतः, कृतवर्मा तु भक्तपक्षपातप्राकट्यभयादेवोपेक्षित इति गम्यते, कथमन्यथा सर्वज्ञेश्वरवञ्चनं तयोस्संभवति ॥ २९ ॥

मु ॥ ततः किमत आह—अक्रूर इति ॥ प्रयोजकौ सत्राजिद्वधकर्तुः प्रेरकौ अक्रूरः

---

१. अप्राप्तं च मणिं प्राह. मु. भा. प्र. पा ॥

अक्रूरेप्रोषितेऽरिष्टाआसन्वैद्वारकौकसाम्।शारीरमानसास्तापामुहुर्दैविकभौतिकाः॥
इत्यङ्गोपदिशन्त्येकेविस्मृत्यप्रागुदाहृतम्। मुनिवासनिवासेकिंघटेतारिष्टदर्शनम्॥३१
देवेऽवर्षतिकाशीशःश्वफल्कायागतायवै। स्वसुतांगान्दिनींप्रादात्ततोऽवर्षत्सकाशिषु

---

कृतवर्मा चेत्युभावित्यर्थः, शतधनोः शतधन्वनः वधं श्रुत्वा वित्रस्तौ सन्तौ द्वारकायाः सकाशात् व्यूषतुः प्रोषितौ क्वापि पलायितावित्यर्थः, तत्र हेतुगर्भविशेषणं—प्रयोजकाविति ॥ २९ ॥

वी ॥ तदेवं वाराणस्यां दानपतिसमाख्यया मणिहस्तेऽक्रूरे रुक्मवेदिकैर्महाध्वरैर्यजमाने निवसति सति कृष्णेनैव प्रस्थापितोऽक्रूर इति कर्णेकर्णे जपति सति जने सत्यभामारामादीनामप्यविश्वासे जनसङ्ग्रहायाक्रूरमाहूय साक्षेपं कृष्णः प्राह. इदं च भगवन्मतं संगोप्य केचन ऋषयः अक्रूरानयने कारणान्तरमनुवर्णयन्ति, तद्दूषयितुमनुवदति मुनिः—अक्रूरेप्रोषितइति।प्रोषिते देशान्तरङ्गते सति द्वारकास्थानां जनानां शारीरा मानसाः इत्याध्यात्मिकतापकीर्तनम्, तत्र शारीरा व्याधयः,मानसा आधयः,दैविका इत्याधिदैविकतापोक्तिः, भौतिका इत्याधिभौतिकस्य ॥ ३० ॥

मु ॥ एवं सति तत्र भगवन्महिमानभिज्ञानां केषांचिदन्योन्यसंवादमाह—अक्रूर इति ॥ अक्रूरे प्रोषिते मणिना सह अन्यत्र गते सति द्वारकौकसां प्रजानां दैविकाः दैवकृताः भौतिका भूतकृताश्चेति दैविकभौतिकाः अरिष्टाः उत्पाता आसन् ॥ ३० ॥

वी ॥ इतीति ॥ अस्मातोऽक्रूरमानयामासेत्यादिः एवमन्ये ऋषयः उपदिशन्तीत्यनुवादः, अथ तद्दूषयति अङ्गेति । अङ्ग हे राजन् प्रागुदाहृतं श्रीकृष्णमाहात्म्यं यत्रयत्र भगवानवसन्न तत्र तापत्रयसंभावनेत्येवंविधं विस्मृत्येत्थमुपदिशन्तीत्यर्थः. तदेवाह—मुनिवासनिवासइति मुनीनां स्वनिवासदेशेषु तापत्रयनिवर्तकानां वासस्याश्रयभूतस्य श्रीकृष्णस्य निवासे सत्यनिष्टदर्शनं दुःखोत्प्रेक्षणं दुःखसंभावनाऽपीति यावत्, किं घटेत न घटेतैवेत्यर्थः ॥ ३१ ॥

मु॥अङ्गेति परीक्षितं प्रति संबुद्धिः,इत्येके जनाः प्रागुदाहृतं भगवन्महिमानं विस्मृत्य उपदिशन्ति, अन्योन्यमिति शेषः, अथ मुनिः परीक्षितं प्रत्याह—मुनीति । मुनयो मननशीलाः महात्मानः, त एव वासो यस्य सः सन्ततध्यानपरिशुद्धान्तरङ्गपुरुषान्तर्वर्तीत्यर्थः, तस्य श्रीकृष्णस्य निवासे देशे किमरिष्टदर्शनं घटेत, न किञ्चिदित्यर्थः, अरिष्टदर्शनं घटेत किं न घटेतैवेति वा योजना, अक्रूरापगममात्रेण अरिष्टदर्शनं तदिच्छां विना न घटत इत्यर्थः ॥ ३१ ॥

वी॥ अथान्यदपि ऋषिमतं दूषयितुमनुवदति—देवइत्यादिना श्रुत्वेत्यन्तेन॥ श्रुत्वेत्यनन्तरमतोऽक्रूरमानयामासेतिशेषः, वृद्धवचःप्रदर्शनमेव देवइत्यादिना इतीत्यन्तेन, पुरा किल काशीषु काशीदेशेषु देवे पर्जन्ये अवर्षति सति तद्देशाधिपतिस्तत्रागताय श्वफल्काय स्वसुतां गान्दिनीं ददौ, ततस्स पर्जन्यस्तद्देशेष्ववर्षत् ॥ ३२ ॥

मु ॥ अथ भगवान् वृद्धवचनानुसारेण अक्रूरमानीय किञ्चिदाहेत्याह, तत्र प्रथममक्रूरपितृप्रभावमाह—देव इति ॥ देवेवर्षतीत्यत्र अवर्षतीतिच्छेदः, अवग्रहे सतीत्यर्थः, काशीशः काशीराजः आगताय श्वफल्काय अक्रूरस्य पित्रे गान्दिनीं नाम सुतां प्रादात्

तत्सुतस्तत्प्रभावोऽसावक्रूरोयत्रयत्रह। देवोऽभिवर्षतेतत्र[1]नोपतापानमारिकाः॥३३
इतिवृद्धवचश्श्रुत्वानैतावदिहकारणम् । इतिदूतैस्तमानीयप्राहाक्रूरंजनार्दनः ॥३४
पूजयित्वाऽभिभाष्यैनंकथयित्वाप्रियाःकथाः।विज्ञाताखिलचित्तज्ञःस्मयमानउवाचह

ततो हेतोः काशीषु काशीदेशेषु अवर्षत्स्म देव इति शेषः ॥ ३२ ॥

वी ॥ तत्सुतः श्वफल्कस्य सुतस्तत्प्रभावः पितृतुल्यप्रभावोऽक्रूरो यत्रयत्र वसति तत्रतत्र देवोऽभिवर्षते, न तत्रोपतापा मारिका अपमृत्युहेतवश्च सन्ति ॥ ३३ ॥

मु ॥ तत्सुतः तत्पुत्रः तत्प्रभावः असावक्रूरः यत्र यत्र हि वर्तत इति शेषः, तत्र देवः इन्द्रः अभिवर्षति अभितो वर्षति, पापाश्च ते मारकाश्च पापमारकाः पापाः क्रूरा मारका हन्तारश्च उत्पाताः तत्र न सन्ति ॥ ३३ ॥

वी॥इत्येवंविधं वृद्धानां वच आकर्ण्य अक्रूरमानयामासेति,तद्दूषयति-नैतावदिति॥सत्यमेवं तथाऽप्येतावदेव अक्रूरानवस्थानमात्रमेव तत्र वृष्टौ उपतापाद्यभावे च न कारणं,किंतु मण्यवस्थानं चेति, इतिदूतैरिति इति एवं सत्यक्रूरे देशान्तरस्थे सतीत्यर्थः, दूतैरक्रूरं सम्यगानीय प्राह स्वाभिमतानयनकारणं तु वक्ष्यमाणेन 'किन्तु मामग्रजस्सम्यङ्न प्रत्येति मणिप्रति' इति भगवद्वचनेनैव स्फुटीभविष्यतीत्यत्र नोक्तम्, यद्वा अद्भुतचेष्टितो भगवान् अक्रूरानयनार्थव्याजेन स्वनिवासभूतायामपि द्वारकायां तापत्रयमुत्पाद्य अङ्ग हे आर्य हे सत्यभामे अहो अक्रूरे प्रोषिते सत्यत्र तापा उपस्थिताः, तथाह्यन्ये जनाः प्राज्ञ-योदाहृतं मणिप्रभावमविस्मृत्यैवमुपदिशन्ति, मुनिर्मननशीलोऽक्रूरस्तस्य मणियुक्तस्य निवासस्तन्निवासे तत्समीपनिवासदेशेऽपि मणियुक्ताक्रूरनिवाससमीपदेशेप्यरिष्टदर्शनं न घटत एवेत्युक्त्वा तथैव देव इत्यादिरूपं वृद्धवचश्श्रुत्वा अक्रूरावस्थानमात्रमेव न कारणं किन्तु मणेरपीत्येवं रामादिविश्वासार्थं वृद्धवचश्च विमृश्य दूतैरक्रूरमानयामासे-त्याह—अक्रूरइत्यादिभिः । पञ्चभिः अस्मिन्पक्षे अविस्मृत्येतिच्छेदः, अरिष्टदर्शनमित्य-स्यानन्तरामत्युक्त्वेति शेषः, देवोऽभिवर्षते तत्रेत्यस्य काशीदेशेष्वित्यर्थः ॥ ३४ ॥

मु ॥ इति एवं वृद्धवचः श्रुत्वा जनार्दनः इह उत्पातादिदर्शने एतावदेव कारणं न अक्रूरापगमनमात्रमेव कारणं न भवति, किन्तु कारणान्तरमप्यस्तीति भावः, एतच्च मणे-रपगम एवेति हृदयम् , इत्यालोच्येत्यर्थः, अक्रूरं दूतैः समानीय स्यमन्तकमहाप्रभावेन वाराणस्यां दानपतिसंज्ञया रुक्मवेदिपरिष्कृतैर्महाध्वरैर्यजमानं सन्तं दूतान् प्रेषयित्वा आनीयेत्यर्थः, प्राह ॥ ३४ ॥

वी ॥ कथमित्यत आह—पूजयित्वेति॥ एनमक्रूरमभिभाष्य संबोध्य विज्ञाताखिल-चित्तज्ञः सर्वाभिप्रायज्ञाः ये पुरुषाः ते येन विज्ञाताः स तथा बुद्धिमत्पुषान्तर्गतवेदी महाभागवतस्यास्य मया दत्तेऽपि मणावपेक्षा नास्त्येव, तस्मादाहूतो मणिना सहैवागत इति जानन्नित्यर्थः ॥ ३५ ॥

मु ॥ एवं सामान्यतः प्राहेत्युक्त्वा तदनन्तरं किं कृत्वा केनाकारेण प्राहेत्यत आह —पूजयित्वेति ॥ एनम् अभिभाष्य कुशलं पृष्ट्वा प्रियाः कथा योगक्षेमवार्ताः कथयित्वा

[1] नोत्पाताः पापमारकाः. मु. भा. प्र. पा ॥

ननुदानपतेन्यस्तस्त्वय्यास्तेशतधन्वना। स्यमन्तकोमणिश्श्रीमान्विदितःपूर्वमेवनः॥
सत्राजितोनपत्यत्वाद्गृह्णीयुर्दुहितुस्सुताः। दानंनिनीयापःपिण्डान्विमुच्यर्णंचशेषितम्
तथाऽपिदुर्द्धरस्त्वन्यैस्त्वय्यास्तांसुव्रतेमणिः। किन्तुमामग्रजस्सम्यङ्नप्रत्येतिमणिंप्रति
दर्शयस्वमहाभागबन्धूनांशान्तिमावह।अविच्छिन्नामखास्तेऽद्यवर्तन्तेरुक्मवेदयः ३९

स्वयं विज्ञाताखिलचित्तज्ञः विज्ञातम् अखिलं येन अत एव स चासौ चित्तज्ञः सर्वाभिप्रायज्ञश्चेत्यर्थः, यद्वा अखिलचित्तज्ञाः सर्वाभिप्रायज्ञाः पुरुषाः, ते विज्ञाता येन सः विज्ञाताखिलचित्तज्ञः बुद्धिमतां पुरुषाणामन्तर्गतं जानातीत्यर्थः, अतः अक्रूरकृत्यमपि वेत्त्येवेति भावः, जनार्दनः स्मयमानः प्रहसन् उवाच ॥ ३५ ॥

वी॥ उक्तिमेवाह—नन्वितिचतुर्भिः॥हे दानपते अक्रूरस्यैवेदं नामान्तरम्,स्यमन्तकमणिः शतधन्वना त्वयि निहितः, अधुना आस्ते च, नोऽस्माकं पूर्वमेव शतधन्वनो वधात्प्रागेव विदितः ॥ ३६ ॥

मु ॥ तदाह—नन्विति ॥ ननु दानपते हे अक्रूर शतधन्वना श्रीमान् स्यमन्तकमणिः त्वयि न्यस्त आस्ते वर्तत इति पूर्वमेव नः विदितः अस्माभिर्ज्ञात इत्यर्थः ॥ ३६ ॥

वी॥ ततः किमत आह—सत्राजितइति॥ अनपत्यत्वादपुत्रकत्वात्तस्य दुहितुः सुता दौहित्रास्तस्य अपस्तिलोदकानि पिण्डांश्च निनीय दत्वा ऋणं विमुच्यापाकृत्य अवशेषितं सर्वं दायं रिक्थं गृह्णीयुः, ऋणापाकरणे यावदपेक्षितं तदतिरिक्तं सर्वमपुत्रस्य धनं दौहित्रा गृह्णीयुरिति शास्त्रार्थ इत्यर्थः ॥ ३७ ॥

मु ॥ न्यायशिरस्कैस्सामभिराह—सत्राजित इति ॥ अनपत्यत्वात् सन्तानरहितत्वाद्धेतोः दुहितुः सत्यभामायाः सुता दौहित्राः अपः पिण्डांश्च निनीयेत्युदकक्रियादिशास्त्रार्थोपलक्षणम्, निनीय दत्वा ऋणं च विमुच्य अपाकृत्य शेषितं पारलौकिककर्मणः ऋणापकरणस्य च यावदपेक्षितं धनं तद्विमुच्य अतिरिक्तं दायं सर्वं तद्धनं दुहितुः सत्यभामायाः सुताः दौहित्राः गृह्णीयुरिति शास्त्रार्थः, तथाच स्मरन्ति—"पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा । तत्सुतौ गोत्रजो बन्धुश्शिष्यस्सब्रह्मचारिणः" इति ॥ ३७ ॥

वी ॥तथाऽपीति ॥ तथाऽपि एवं शास्त्रार्थेऽपि मणिस्त्वय्येवास्तां तवैव तिष्ठतु, न तु तद्दौहित्रैः गृह्यत इत्यर्थः, तत्र हेतुं वदन्मणिमक्रूरं च विशिनष्टि—अन्यैर्धर्तुमशक्यः सुव्रते शोभनं व्रतमाचारो यस्मिन् तस्मिन् त्वयि, किन्त्वग्रजो रामः मणिं प्रति सम्यङ्न प्रत्येति न विश्वसिति, मणिमहं तिरोधापितवानित्याशङ्कत इति भावः, अतो हे महाभाग्यवन् दर्शयस्व मणिमति शेषः, शान्तिं चित्तसमाधिमावह संपादय, नास्तीति मा वोच इत्याह—अविच्छिन्नाइति।यतस्ते स्वर्णवेदयः संतता मखा यज्ञाश्च वर्तन्ते प्रवर्तन्ते, अतोऽस्त्येवेत्यनुमिनोमीत्यर्थः ॥ ३८ ॥ ३९॥

मु ॥ तथापीति ॥ शास्त्रार्थपर्यालोचनया सत्यभामापत्यानामेव मणेरर्हत्वेऽपि अन्यैः व्रतहीनैः दुर्धरो धर्तुमशक्योऽयं मणिः सुव्रते परिशुद्धाचारे त्वय्यास्तां त्वय्येव तिष्ठतु, नास्माकमाग्रह इति भावः, तत्राप्यनुपपत्तिमाह—किन्त्विति । ममाग्रजो बलरामः मणिं प्रति न प्रत्येति न विश्वसिति ॥ ३८ ॥

मु ॥ अतः दर्शयस्व मणिं दर्शय, बन्धूनां मया हृत एवायं मणिरित्यविश्वासक-

एवंसामभिरालब्धश्श्वफल्कतनयोमणिम् । आदायवाससाच्छन्नन्ददौसूर्यसमप्रभम्
स्यमन्तकंदर्शयित्वाज्ञातिभ्योरजआत्मनः।प्रमृज्यपाणिनाभूयस्तस्मैप्रत्यार्पयत्प्रभुः॥
यस्त्वेतद्भगवत ईश्वरस्यविष्णोर्वीर्याढ्यं वृजिनहरंसुमङ्गलं च ।
आख्यानंपठतिशृणोत्यनुस्मरेद्वादुष्कीर्तिन्दुरितमपोह्ययातिशान्तिम् ॥ ४२
इति श्रीभागवते महापुराणे दशमस्कन्धे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

लुषितात्मनामित्यर्थः, शान्तिं चित्तसमाधानम् आवह कुरु, नास्तीति न वक्तव्यमिति तत्कार्यस्मृत्यापि तत्स्थितिं स्थापयन्नाह--अविच्छिन्ना इति । रुक्मवेदिकाः सुवर्णवेदिकापरिष्कृताः मखाः यतः अविच्छिन्नाः सन्तन्यमानास्सन्तो वर्तन्ते प्रवर्तन्ते, अन्यथा कथमेवं समृद्धिरिति भावः ॥ ३९ ॥

वी ॥ एवमिति ॥ इत्थं सामोक्तिभिरालब्धः हृदि स्पृष्टः ददौ कृष्णायेति शेषः॥४०॥

मु ॥ एवमिति ॥ सामभिः प्रियोक्तिभिः आलब्धः हृदि स्पृष्टः 'आरब्धः' इति पाठे उपारब्धः सामभिरभिमुखीकर्तुमुपक्रान्त इत्यर्थः, श्वफल्कतनयः अक्रूरः मणिं ददौ ॥ ४० ॥

वी ॥ विभुः श्रीकृष्णः ज्ञातिभ्यो रामादिभ्यः आत्मनः स्वस्य रजः मिथ्याभिशापं प्रमृज्य अपास्य पाणिना स्वहस्तेनैव पुनः तस्मै अक्रूराय मणिं प्रत्यार्पयद्ददौ ॥ ४१ ॥

मु ॥ ततो हरिः किमकरोदित्यत्राह—स्यमन्तकमिति ॥ ज्ञातिभ्यः दर्शयित्वा आत्मनः रजः मिथ्याभिशापं प्रमृज्य प्रभुः श्रीकृष्णः पाणिना स्वहस्तेन प्रत्यार्पयत् ॥ ४१ ॥

वी ॥ उक्ताख्यानकथनश्रवणस्मरणादिफलं वदन्निगमयति—यस्त्विति ॥ विष्णोर्वीर्येण प्रभावप्रकाशनेनाढ्यं युक्तं वदतां शृण्वतां स्मरतां च पापहरम् अनेनानिष्टनिवर्तकत्वमुक्तम्, सुमङ्गलं मङ्गलावहं चेत्यनेन इष्टप्रापकत्वम्,यः पुमानेवंविधमाख्यानं वदेच्छृणुयादनुस्मरेद्वा, स दुष्कीर्तिं दुरितं च निरस्य मनश्शान्तिं मुक्तिसाधनभूतां याति प्राप्नोति ॥ ४२ ॥

मु॥ अथ लौकिकपुरुषाणामपकीर्तिः श्रोतॄणां पापावहा भवति, भगवतस्तु नैवमित्याह—यस्त्विति ॥ भगवतः ईश्वरस्य विष्णोरिति पदत्रयेण सर्वेषामन्तर्व्याप्य स्वासाधारणज्ञानशक्त्यादिषड्गुणमहिम्ना सर्वपापनिर्हरणपूर्वकनियमनसमर्थत्वमुच्यते, तदेवाह—वीर्याढ्यं वृजिनहरं पापनिवर्तकम् आख्यानं चरित्रं सति वाक्पाटवे यः पठति, तदभावेऽपि श्रवणपाटवे सति शृणोति, तदुभयाभावेऽपि सति मनस्समाधौ अनुस्मरेद्वा, स इति शेषः, दुष्कीर्तिं तन्मूलदुरितं च अपोह्य विधूय शान्तिं मोक्षसाधनज्ञानाद्युपयुक्तमनस्समाधिं यातीति ॥ ४२ ॥

इतिश्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायामेकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

(श्रीकृष्णस्य कालिन्दीविवाहघट्टः.)

श्रीशुक उवाच—

एकदापाण्डवान्द्रष्टुंप्रतीतान्पुरुषोत्तमः । इन्द्रप्रस्थङ्गतश्श्रीमान्युयुधानादिभिर्वृतः॥१

दृष्ट्वातमागतंपार्थामुकुन्दमखिलेश्वरम् । उत्तस्थुर्युगपद्वीराःप्राणामुख्यमिवागतम्॥ २

परिष्वज्याच्युतंवीराअङ्गसङ्गहतैनसः । सानुरागस्मितंवक्त्रंवीक्ष्यतस्यमुदंययुः॥ ३

युधिष्ठिरस्यभीमस्यकृत्वापादाभिवन्दनम् । फल्गुनंपरिरभ्याथयमाभ्यामभिवादितः

वी ॥ अथ भगवतः कालिन्दीमित्रविन्दानाग्नजितीभद्रालक्ष्मणानां विवाहं वर्णयत्यष्टपञ्चाशत्तमेन । तावत्कालिन्दीविवाहोपोद्घातमाह—एकदेत्यादिना अथोपयेमे इत्यतः प्राक्तनेन । प्रतीतान्नष्टा इति श्रुतानपि पुनर्द्रुपदगृहे सर्वैर्दृष्टान् पाण्डवान् द्रष्टुं युयुधानस्सात्यकिरादिर्येषां तैः यदुभिः परिवृतः इन्द्रप्रस्थं ययौ ॥ १ ॥

मु ॥ प ॥ यस्यानुरक्तलोकस्य योगक्षेमाय कल्पते ।
तस्योत्तरोत्तरश्रेयस्स्यादेवेत्यत्र कथ्यते ॥

एकदेत्यादि ॥ प्रतीतान् द्रुपदगृहे दृष्टानपि पाण्डवान् पुनर्द्रष्टुं यद्वा प्रतीतान् लोकहितधर्माचरणेन प्रसिद्धान्, युयुधानः सात्यकिः आदिः येषां तैः आप्तैः वृतः ॥ १ ॥

वी ॥ दृष्ट्वेति॥ पृथायाः कुन्त्याः अपत्यानि वीराः युधिष्ठिरादयः तमागतं कृष्णं दृष्ट्वा युगपदुत्तस्थुः, यथा प्राणा इन्द्रियाणि आगतं मुख्यं पञ्चवृत्तिप्राणमनूत्तिष्ठन्ति तद्वत् ॥ २ ॥

मु ॥ प्राणाः इन्द्रियाणि आगतं मुख्यमिव हृद्गुदनाभिकण्ठसर्वशरीरपञ्चस्थलवृत्तिं प्राणमिवेत्यर्थः, युगपदुत्तस्थुः, सर्वशरीरान्तवर्तिनं प्राणम् इन्द्रियाणीव ते पञ्चापि वीराः आगतमखिलेश्वरं तं दृष्ट्वा उत्तस्थुरित्यर्थः, यद्वा आगतं मुख्यं स्थविरं दृष्ट्वा निषेदुषः प्रत्युत्थानमकुर्वाणस्य यूनः प्राणाः वायव इवोत्तस्थुरिति, तथा च स्मर्यते—"ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" इति ॥ २ ॥

वी ॥ परिष्वज्येति ॥ प्रीतास्तमच्युतमालिङ्ग्य अच्युतस्याङ्गसङ्गेन हतान्येनांसि पपानि येषां ते पार्थास्तस्यानुरागेण सहितं स्मितं यस्मिन् तन्मुखमवलोक्य मुदं हर्षं प्रापुः ॥ ३ ॥

मु ॥ अथ तेषामन्योन्यसंभावनाक्रममाह—परिष्वज्येत्यादिना ॥ अङ्गसङ्गेन ब्रह्मादिदुर्लभभगवद्दिव्यविग्रहसंश्लेषेण हतैनसः निवृत्तपापास्सन्तः अनुरागस्मिताभ्याम् अन्तःपूर्णानुरागप्रकाशकविकासदरास्मिताभ्यां सहितं सानुरागस्मितं तस्य वक्त्रं वीक्ष्य मुदं ययुरित्यनेन तेषां मुक्तसाम्यं स्फोर्यते, तेषामपि भगवदङ्गभूतमहादेशिकसमागमहतपूर्वाघोत्तराघरूपपाप्मनां नित्यमुक्तानुभाव्यभगवन्मुखसाक्षात्कारजनितोद्वेलानन्दप्राप्तेरावश्यकत्वादिति, ते वीराः तं परिष्वज्य तस्य वक्त्रं वीक्ष्य च मुदं ययुरित्यन्वयः॥ ३ ॥

वी ॥ युधिष्ठिरस्येति॥ पादाभिवन्दनं कृत्वा तयोरधिकवयस्त्वादिति भावः;फल्गुनं अर्जुनं परिरभ्यालिङ्ग्य तस्य तुल्यवयस्त्वात् यमाभ्यां यमलाभ्यां नकुलसहदेवाभ्यां

परमासनमासीनंकृष्णाकृष्णमनिन्दिता । नवोढाव्रीडिताकिंचिच्छनैरेत्याभ्यवन्दत
तथैवसात्यकिःपार्थैःपूजितश्चाभिवन्दितः।निषसादासनेऽन्येचपूजिताःपर्युपासत॥६
पृथांसमागत्यकृताभिवन्दनस्तयाऽतिहार्दार्द्रदृशाऽभिरम्भितः ।
आपृष्टवांस्तांकुशलंसहस्नुषांपितृष्वसारंपरिपृष्टबान्धवः ॥ ७
तमाहप्रेमवैक्लव्यरुद्धकण्ठाऽश्रुलोचना।स्मरन्तीतान्बहून्क्लेशान्क्लेशापायात्मदर्शनम् ८

अभिवादितः नमस्कृतः तयोर्न्यूनवयस्त्वादितिभावः ॥ ४ ॥

मु ॥ ४ ॥

वी ॥ परमासनमिति ॥ कृष्णा द्रौपदी नवोढा नवमचिरमूढा विवाहिता अतएव किंचिद्व्रीडिता सती शनैः आगत्य कृष्णमभ्यवन्दत ननाम ॥ ५ ॥

मु ॥ द्रौपदीकृत्यमाह—परमासनमिति॥ अनिन्दिता स्वयं बहूनामेकैव भार्या सत्यपि यावज्जीवमनुलङ्घ्यवृद्धकृतसांकेतिकनियमाचारनिष्ठतया जनैरविगीतेत्यर्थः, नवोढा नूतनपरिणीता अत एव व्रीडिता संजातलज्जा कृष्णा द्रौपदी कृष्णम् अभ्यवन्दत नमश्चक्रे, शनैरेत्याभ्यवन्दतेत्यन्वयः ॥ ५ ॥

वी ॥ तथैवेति ॥ यथा कृष्णस्तथा सात्यकिश्च यथायोग्यं पूजितः बहुमतः अभिवन्दितश्च निषसादोपविष्टवान्, तथाऽन्येच यदवः पार्थैः पूजिताः कृष्णं परित उपासत ॥ ६ ॥

मु ॥ तथैव कृष्णवदेव अन्ये अनुसृत्यागतास्तदाप्ता इत्यर्थः, पर्युपासन समीपे परिवेष्ट्यातिष्ठन्नित्यर्थः ॥ ६ ॥

वी ॥ पृथामिति ॥ पृथां कुन्तीं समभ्येत्य कृतमभिवन्दनं येन सः अतिस्नेहेनार्द्रे सजले दृशौ यस्यास्तया पृथया अभिरम्भितः परिष्वक्तः पितृभगिन्या पृथया परिपृष्टाकुशलप्रश्नविषयाः बान्धवा वसुदेवादयो यस्य सः सहस्नुषां पुत्रभार्यासहितां तां पृथामापृष्टवान् कुशलं पप्रच्छ ॥ ७ ॥

मु॥ पृथां कुन्तीं समागत्य अभिगम्य अतिहार्देन अतिप्रेम्णा आर्द्रे बाष्पप्लुते दृशौ यस्यास्तया तयापृथया अभिरम्भितः परिष्वक्तः सह स्नुषां स्नुषया जन्या सहितां "स्नुषा जनी वध्वः" इत्यमरः, तां पितृष्वसारं कुन्तीं परिपृष्टबान्धवः प्रथमं पृष्टबन्धुकुशलस्सन्नित्यर्थः, कुशलमापृष्टवानिति,यद्वा परिपृष्टबान्धवः तथैव प्रथमं परिपृष्टबन्धुकुशलस्सन् तां कुशलं पृष्टवानिति ॥ ७ ॥

वी ॥ तमिति ॥ प्रेम्णा वैक्लव्यमधार्ष्ट्यं तेन रुद्धः कण्ठो यस्यास्सा अश्रु लोचनयोः यस्यास्सा पृथा तान् भूतपूर्वान् क्लेशान् स्मरन्ती क्लेशापायायात्मानं दर्शयतीति तथा तं कृष्णं प्राह ॥ ८ ॥

मु ॥ अथकुन्तीवचनान्याह—तमाहेत्यादि ॥ प्रेम्णा यद्वैक्लब्यं विह्वलत्वं तेन रुद्धः कण्ठो यस्या स्सासती क्लेशापायाय भक्तक्लेशनिवारणाय आत्मानं दर्शयतीति तथोक्तं, भगवतोऽयं स्वभावः गजेन्द्रप्रह्लादादिरक्षणे प्रसिद्ध एवेत्ययमर्थोऽत्र स्फोर्यते, क्लेशस्यापायो यस्मात्तत् तथाविधम् आत्मनः स्वस्य दर्शनं यस्य तमिति वा, एवंविधं तमाहेत्यन्वयः, तान् पूर्वानुभूतान् बहून् क्लेशान् विरोधिकृतान् स्मरन्तीति, क्लेशापायात्म-

तदैवकुशलंनोऽभूत्सनाथास्तेकृतावयम्।ज्ञातीन्नस्मरताकृष्णभ्रातामेप्रेषितस्त्वया॥९
नतेऽस्ति स्वपरभ्रान्तिः विश्वस्यसुहृदात्मनः ।
तथाऽपिस्मरतांशश्वत्क्लेशान्हंसिहृदिस्थितः ॥ १०

युधिष्ठिर उवाच—

किंनआचरितंश्रेयोनवेदाहमधीश्वर। योगेश्वराणांदुर्दर्शोयन्नोदृष्टःकुमेधसाम् ॥ ११
इतिवैवार्षिकान्मासान्राज्ञासोऽभ्यर्थितस्सुखम् ।

---

दर्शनमित्यत्र क्लेशानाम् अविद्यास्मितारागद्वेषाभिनिवेशानामपायो यस्मात्तस्मिन् आत्मनि स्वस्वरूपेदर्शनं साक्षात्कारो यस्य तम् आनन्दमयस्वस्वरूपानुभवपूर्णमिति वार्थः ॥ ८ ॥

वी ॥ उक्तिमेवाह—तदैवेति॥ नोऽस्माकं कुशलमभूत्,तथा वयं ते त्वया सनाथाश्च कृताः, कदा यदा ज्ञातीन् बन्धून्नोऽस्मान् स्मरता त्वया मम भ्राता अक्रूरः प्रेषितः ॥९॥

मु॥ ते एतत्पर्यन्तम् अनाथा इत्यर्थः, वयं सनाथाः त्वया नाथवन्तः कृताः, अतस्तदैव कुशलं नोऽस्माकम् अभूत्, ज्ञातीन् त्वद्बन्धून् नः अस्मान् स्मरता अस्मद्योगक्षेमपरामर्शवतेत्यर्थः, त्वयेति शेषः, मे भ्राता अक्रूरः प्रेषितः, पूर्वमिति शेषः ॥ ९ ॥

वी ॥ ज्ञातीनित्यनेन प्राप्तां ममतां वारयितुमाह—नेति ॥ ते तव स्वः पर इति च भ्रान्तिर्नास्ति,तत्रहेतुः—विश्वस्येति। जगतस्सुहृच्च आत्मा अन्तरात्मा च तस्य कथं तर्हि युष्मान् स्मरामीत्यतआह—तथापीति। स्वपरभ्रान्त्यभावेऽपि स्मरतां भक्तानां हृदि स्थितस्त्वं शश्वत्सदा क्लेशान् हंसि नाशयसि ॥ १० ॥

मु ॥ सर्वसमस्यापि ते क्वचित् तत्तद्भक्तितारतम्येन विशेषतः पक्षपातोऽप्यस्तीत्याह—नतेऽस्तीति ॥ विश्वस्य जगतः सुहृत् सर्वभूतसुहृच्च आत्मा अन्तर्यामी तस्य, यद्वा सुहृदिति भावप्रधानो निर्देशः, आत्मशब्दः स्वभाववचनः, तथा च सर्वसुहृत्स्वभावस्येत्यर्थः, ते स्वपरभ्रान्तिः एते स्वीयाः, एते परे अन्ये इति भ्रान्तिः नास्ति, तथापि हृदि स्थित आत्मा सन् अन्तरात्मा सन् स्मरतां क्लेशान् शश्वत् सदा हंसि निवारयसीति ॥ १० ॥

वी॥ अथ युधिष्ठिरः प्राह—किमिति ॥ हे अधीश्वर अस्माभिः किं पुण्यं आचरितं कृतमिति न वेद्मि कृतं पुण्यमीदृशमिति न वेद्मि किन्तु सामान्यतो महत्पुण्यं कृतमेवेति तु वेद्मीति भावः, कुतः यत् यस्मात् योगीश्वराणामपि द्रष्टुमशक्यो भवान् कुमेधसां विषयासक्तचित्तानामस्माकं दृष्टः॥ ११ ॥

मु॥ एवंविधस्त्वं पूर्वाचरितास्मत्सुचरितपरिपाकमहिम्नाऽद्य दृष्ट इत्याह—किमित्यादिना ॥ हे अधीश्वर सर्वनियन्तः नः अस्माभिः किं श्रेयः सत्कर्म आचरितं वा जन्मान्तर इत्यर्थः, तदेतत्कुत इत्यत्र त्वत्साक्षात्काररूपमहाफलेन निश्चिनोमीत्याह—योगीश्वराणामिति । योगमहिमसाक्षात्कृतसर्वतत्त्वानामपीत्यर्थः, स्वरूपतो गुणतश्चेयत्तया निश्चेतुमशक्य इत्यर्थः, त्वं यत् यस्मात् कुमेधसां विषयप्रवणचित्तानां नः दृष्टः दृष्टिगोचरोऽसीत्यर्थः ॥ ११ ॥

वी ॥ इतीति ॥ इत्थं राज्ञा युधिष्ठिरेणाभ्यर्थितो बहुमतः स भगवान् वार्षिकान्मा-

जनयन्नयनानन्दमिन्द्रप्रस्थौकसांविभुः ॥ १२

एकदारथमारुह्यविजयोवानरध्वजम्। गाण्डीवंधनुरादायतूणौचाक्षयसायकौ॥१३

साकंकृष्णेनसन्नद्धोविहर्तु[1]विजनंवनम्। बहुव्यालमृगाकीर्णंप्राविशत्परवीरहा॥१४

तत्राविध्यच्छरैर्व्याघ्रान्सूकरान्महिषान्रुरून्।
शरभान्गवयान्खङ्गान्हरिणाञ्शशशल्यकान्॥ १५

तान्निन्युःकिङ्कराराज्ञेमेध्यान्पर्वण्युपागते। [2]ततःक्षुत्तृट्परिश्रान्तोबीभत्सुर्यमुनामगात्

---

सान् सुखं यथातथा न्यवसदिति शेषः ॥ १२ ॥

मु ॥ इति राज्ञा अभ्यर्थितः विभुः श्रीकृष्णः इन्द्रप्रस्थौकसां जनानां नयनानन्दं चक्षुःप्रीतिं जनयन् सुखं यथा तथा अवसदिति शेषः, कति मासान् तत्रावसदित्यत्राह— वार्षिकानिति । यद्यपि श्रावणभाद्रपदावेव वर्षर्तुः तथापि "आषाढस्य प्रथमदिवसे" इति कालिदासोक्तरीत्या तमारभ्य वर्षर्तोः आश्वयुजावधिकत्वेन लौकिकव्यवहारसम्भवात् तेषु तथैव वृष्टिपौष्कल्याच्च वार्षिकान्मासानिति बहुवचनम् , वार्षिकान् वर्षर्तुसम्बन्धिन इत्यर्थः, वर्षं प्रयोजनम् एषामिति वा, "प्रयोजनम्" इति ठक् ॥ १२ ॥

वी ॥ कालिन्दीदर्शनप्रसङ्गमाह—एकदेति ॥ तदैकदा विजयोऽर्जुनः वानरो हनूमत्प्रतिकृतिः ध्वजे यस्मिन् तं रथमारुह्य अक्षया अक्षीणास्सायका ययोस्तौ तूणौ इषुधी चादाय सन्नद्धः कवचितः कृष्णेन सहितो विहर्तुं निर्जनं वनं प्राविशत्, व्यालास्सर्पाः गजा वा, अयं वक्ष्यमाणकथायाः 'यदा च कृष्णस्संदिष्टः' इत्यादिकायाः पाश्चात्यवृत्तान्तः खाण्डवदहनात्पूर्वं गाण्डीवप्राप्त्यनुपपत्तेः ॥ १३ ॥ १४ ॥

मु ॥ अथ भगवतः कालिन्द्याख्यकन्याप्राप्तिफलिकां पार्थेन साकं मृगयायात्रां प्रस्तौति—एकदेति ॥ अत्र गाण्डीवं धनुरादायेत्युक्त्या अयं वक्ष्यमाणकथायाः पाश्चात्यवृत्तान्तः खाण्डवदाहात्पूर्वं गाण्डीवप्राप्त्यनुपपत्तेः,एवं व्युत्क्रमस्तु प्रश्नवशादागत इति रहस्यम् , अक्षयाः सायकाः ययोस्तौ तूणौ तूणीरौ आदाय सन्नद्ध इत्यन्वयः॥ १३ ॥

मु ॥ व्यालमृगाकीर्णं क्रूरमृगव्याप्तं यद्वा व्यालैः अजगरादिसर्पैः मृगैश्चेति वा, व्यालमृगैः व्याघ्रादिक्रूरसत्त्वैरिति वा, आकीर्णं सङ्कुलं विहर्तुं विपिनं ययावित्यनेन यानमात्रमुक्तम् , प्राविशदिति तत्र प्रवेश उक्तः ॥ १४ ॥

वी ॥ तत्रेति ॥ तत्र वने शरैः व्याघ्रादीनविध्यज्जघान ॥ १५ ॥

मु ॥ तत्र किमकरोत्तदाह—तत्रेति॥ अविध्यत् हतवान् हतान् , मृगविशेषानाह— व्याघ्रानित्यादिना । एतेषु व्याघ्रमहिषशरभाः क्रूरत्वेन प्राणिबाधकतया हताः, इतरे भक्ष्यतया हता इति विवेकः ॥ १५ ॥

वी ॥ तानिति ॥ तत्र मेध्यान्कर्मार्हान्मृगान्राज्ञे युधिष्ठिराय किङ्कराः निन्युः प्रापयामासुः, भक्षणार्थत्वशङ्कां व्युदस्यति—पर्वण्युपागतइति। पर्वप्रयुक्तकर्मण्युपस्थिते सतीत्यर्थः ततः क्षुत्तृड्भ्यां अशनायापिपासाभ्यां परिश्रान्तो बीभत्सुः अर्जुनः यमुनां जगाम॥

मु ॥ पर्वणि कस्मिंश्चिदुत्सवकाले उपागते प्राप्ते सति किङ्कराः तान् राज्ञे निन्युः,

---

१. विपिनं ययौ. मु. भा. प्र. पा ॥ २. तृट्परीतः परिश्रान्तः. मु. भा. प्र. पा ॥

तत्रोपस्पृश्यविशदंपीत्वावारिमहारथौ ।
कृष्णौददृशतुःकन्याश्चरन्तींचारुदर्शनाम् ॥ १७

तामासाद्यवरारोहांसुद्विजांरुचिराननाम्। पप्रच्छप्रेषितस्सख्याफल्गुनःप्रमदोत्तमाम्

कात्वंकस्यासिसुश्रोणिकुतोवाकिंश्चिकीर्षसि ।
मन्येत्वांपतिमिच्छन्तींकन्येकथयशोभने ॥ १९

कालिन्द्युवाच—

अहंदेवस्यसवितुर्दुहितापतिमिच्छती । विष्णुंवरेण्यंवरदंतपःपरममास्थिता ॥ २०

नान्यंवृणेपतिंवीरतमृतेश्रीनिकेतनम् । तुष्यतांमेसभगवान्मुकुन्दोऽनाथसंश्रयः॥२१

---

मेध्यान् कर्माहान्, अत्र मेध्यत्वोक्तिः व्याघ्रमहिषादीनामपि वधकथनात् अभक्ष्याणां लिन्युरिति शपथक्रियान्यथा न स्यादिति, तद्दृपरीत इत्यादि। बीभत्सुरितिच्छान्दसः प्रयोगः ॥ १६ ॥

वी ॥ उपस्पृश्य स्नात्वा महारथौ कृष्णार्जुनौ विशदं निर्मलं वारि जलं पीत्वा चारु सुन्दरं दृश्यत इति तथा तां चरन्तीं कांचित्कन्यां ददृशतुः ॥ १७ ॥

मु ॥ विशदं निर्मलं वारि उपस्पृश्य आचम्य पीत्वा च चारुदर्शनां स्पृहणीयदर्शनां कन्यां ददृशतुः दृष्टवन्तौ ॥ १७ ॥

वी ॥ तामिति ॥ सख्या कृष्णेन प्रेषितः फल्गुनोऽर्जुनः शोभना द्विजाः दन्ताः यस्याः रुचिरमाननं यस्यास्तां वरमाकाङ्क्षन्तीमिव स्थितां प्रमदोत्तमां पप्रच्छ ॥ १८ ॥

मु ॥ सख्या कृष्णेन प्रेषितः प्रमदोत्तमां वरवर्णिनीं पप्रच्छ पृष्टवान् ॥ १८ ॥

वी ॥ प्रश्नमेवाह — कात्वमिति ॥ कस्यासि कस्य संबन्धिन्यसि किं कर्तुमिच्छसि, अहन्तु पतिमिच्छन्तीं कन्यां त्वां मन्ये, हे शोभने कथय ॥ १९ ॥

मु ॥ तदाह—कात्वमिति ॥ कात्वमिति नामप्रश्नः, कस्यासीति सम्बन्धप्रश्नः, कस्य वा पुत्रिकासीत्यर्थः, कुतो वेति निदानप्रश्नः, कुतः कस्माद्देशात् आगतेत्यर्थः, हेतुप्रश्नो वा, किं चिकीर्षसि कर्तुमिच्छसीति प्रयोजनप्रश्नः, स्वनिश्चितं वदन्नाह—मन्य इति। कन्याम् इतः पूर्वं केनाप्यनूढां त्वां पतिम् इच्छन्तीं मन्ये, अतः हे शोभने सत्कर्माचरणशीले कथय त्वन्मनोरथं वदेत्यर्थः ॥ १९ ॥

वी ॥ उत्तरमाह—अहमिति त्रिभिः ॥ सवितुरादित्यस्य दुहितेति कस्यासीत्यस्योत्तरम्, किञ्चिकीर्षसीत्यस्योत्तरमाह—पतिमित्यादि । वरेण्यं वरणीयं विष्णुं पतिं कामयमाना परमं तप आस्थिता ॥ २० ॥

मु ॥ २० ॥

वी॥बहुषु सत्सु किं विशेषेण विष्णुमेव कामयस इत्यत आह—नान्यमिति॥ हे वीर तं विष्णुम् ऋते विना अन्यं न वृणे, तत्र हेतुं वदन्ती तं विशिनष्टि—श्रियो निकेतनम् आश्रयं श्रीर्हि सर्वोत्तमं तमेवाश्रितवती, अतोऽहमपि तमेव वृणे इति भावः, दुर्लभस्स कथं त्वदिच्छामात्रेण लभ्यत इत्यत आह—तुष्यतामिति । तत्र हेतुः, अनाथानामनन्यनाथानां संश्रयः ॥ २१ ॥

कालिन्दीतिसमाख्यातावसामियमुनाजले। निर्मितेभवनेपित्रायावदच्युतदर्शनम् २२
तथाऽवदद्गुडाकेशोवासुदेवायसोऽपिताम्। रथमारोप्यतद्विद्वान्धर्मराजमुपागमत्॥२३
[1]यदाचकृष्णस्सन्दिष्टःपार्थानांपरमाद्भुतम्। कारयामासनगरं विचित्रंविश्वकर्मणा॥
भगवांस्तत्रनिवसन्स्वानांप्रियचिकीर्षया। अग्नयेखाण्डवन्दातुमर्जुनस्यासारथिः॥२५
सोऽग्निस्तुष्टोधनुश्चादाद्धयाञ्श्वेतान्रथंनृप। अर्जुनायाक्षयौतूणौवर्मचाभेद्यमस्त्रिभिः॥

---

मु ॥ अयं मां कामयेदिति शङ्कया आह—नान्यं पतिमिति ॥ श्रीनिकेतनं श्रीनिवासं तं श्रीकृष्णमृते विना अन्यं न वृणे इति, अनाथसंश्रयः अनाथजनाश्रयः, इदानीमनाथाया मे अवश्यं नाथो भवेदित्याकूतम्, मुकुन्दः मुंच कुंच ददातीति मुकुन्दः ऐहिकामुष्मिकफलप्रद इत्यर्थः, मे तुष्यतां मत्तपसा संतुष्टो भूत्वा मां परिगृह्णात्विति भावः ॥ २१ ॥

वी ॥ अथ कात्वमित्यस्योत्तरमाह—कालिन्दीति ॥ पित्रा सवित्रा यावदच्युतस्य श्रीकृष्णस्य दर्शनं तावन्निवसामि ॥ २२ ॥

मु॥स्वनामकथनपूर्वकं स्ववृत्तिप्रकारमाह—कालिन्दीति॥ पित्रा सूर्येण निर्मिते संकल्पनिर्मिते भवने स्थिता सतीति शेषः, यावदच्युतदर्शनम् अच्युतदर्शनपर्यन्तं यमुनाजले वसामि तपोनिष्ठया वर्त इत्यर्थः ॥ २२ ॥

वी ॥ तथेति ॥ गुडाकेशोऽर्जुनः वासुदेवार्थं तां कन्यां रथमारोप्य तद्भगवदभिप्रेतं जानन् ॥ २३ ॥

मु ॥ गुडाकेशः अर्जुनः तथा कालिन्द्युक्तप्रकारेण वासुदेवाय अवदत् कथयामास, तत् विद्वान् तद्वृत्ताभिज्ञः स कृष्णोऽपि तां कालिन्दीं रथमारोप्य धर्मराजमुपागमत् ॥

वी ॥ अथार्जुनाय गाण्डीवादिप्रदानात्मकं भगवच्चेष्टितमाह—यदाचेति ॥ सन्दिष्ट आदिष्टः पार्थैरिति विभक्तिविपरिणामः, कृष्णः प्रयोजककर्ता विश्वकर्मणा प्रयोज्यकर्त्रा नानाविधशिल्पोपेतं विचित्रम् अत्याश्चर्यं नगरं पार्थानामावासार्थं कारयामास ॥ २४ ॥

मु ॥ प्रसङ्गात्तात्कालिकं चरित्रान्तरमाह—यथैवेति ॥ कृष्णः यथैव संदिष्टः पार्थैः विज्ञापितः तथैव पार्थानां विश्वकर्मणा नगरं कारयामास ॥ २४ ॥

वी ॥ तदा स्वानां प्रियं कर्तुमिच्छया तत्र नगरे निवसन् अग्नये खाण्डवं नाम वनं दातुमर्जुनस्य सारथिर्बभूव ॥ २५ ॥

मु ॥ अथ गाण्डीवप्राप्तिहेतुं वृत्तान्तरमाह—भगवांस्तत्रेति ॥ निरतिशयशक्त्यैश्वर्यादिगुणसंपन्नोऽपीत्यर्थः अर्जुनाय सारथिरास अभूत्, अनेनास्य भक्तिविधेयत्वमुक्तं तस्यालौकिकधनुरादिश्रेयःप्रापणार्थमिति भावः, तत्कथमित्यत आह—अग्नय इति। खाण्डवम् इन्द्रस्य वनं दातुमिति ॥ २५ ॥

वी ॥ सइति ॥ स दग्धखाण्डवोऽग्निरतएव तुष्टः हे नृप अर्जुनाय धनुरादीन् ददौ, अस्त्रिभिर् अस्त्रधारिभिरभेद्यं वर्म कवचम् ॥ २६ ॥

मु ॥ संतुष्टेनाग्निना दत्तवस्तून्याह—सोऽग्निरिति ॥ अक्षयौ अक्षयसायकौ तूणौ

---

1. यथैव. मु. भा. प्र. पा ॥

मयश्चमोचितोवह्नेस्सभांसख्यउपाहरत्।यस्मिन्दुर्योधनस्यासीज्जलस्थल[1]मतिभ्रमः॥
सतेनसमनुज्ञातस्सुहृद्भिश्चानुमोदितः। आययौद्वारकांभूयस्सात्यकिप्रमुखैर्वृतः॥ २८
अथोपयेमेकालिन्दीं सुपुण्यर्त्वृक्षऊर्जिते।वितन्वन्परमानन्दं स्वानांपरममङ्गलम्॥२९

मित्रविन्दाविवाहः.

विन्दानुविन्दावावन्त्यौदुर्योधनवशानुगौ।स्वयंवरेस्वभगिनी[2]कृष्णेसक्तांन्यषेधताः३०
राजाधिदेव्यास्तनयांमित्रविन्दांपितृष्वसुः। प्रसह्यहृतवान्कृष्णोराजन्राज्ञांप्रपश्यताम्

निषङ्गौ अस्त्रिभिः धनुरायस्त्रधरैः अभेद्यं वर्म कवचम् अदात् ददौ ॥ २६ ॥

वी ॥ मयश्चेति ॥ मयः खाण्डववनवासी वह्नेस्सकाशान्मोचितः सख्ये अर्जुनाय सभामुपाहरद्ददौ, तां विशिनष्टि—यस्यामिति। यस्यां सभायां जलस्थलमतिभ्रमः जले स्थलबुद्धिः स्थले जलबुद्धिः इत्येवंविधो यो भ्रमः स बभूव ॥ २७ ॥

मु ॥ मयो नाम कश्चित् विश्वकर्मजातीयः तद्वनाश्रयः स वह्नेः मोचितः सन् सख्ये अर्जुनाय सभाम् उपाहरत् समर्पितवान्, तच्छिल्पवैचित्रीमाह—यस्यामिति। दुर्योधनस्य यस्यां सभायां जलस्थलदृशिभ्रमः जलस्थलयोः दृष्टिभ्रान्तिः स्थले जलभ्रान्तिः जले स्थलभ्रान्तिश्च आसीदित्यर्थः ॥ २७ ॥

वी ॥ सइति॥ स कृष्णः तेनार्जुनेन समनुज्ञातः सुहृद्भिर्युधिष्ठिरादिभिः अनुमोदितश्च भूयः पुनः ॥ २८ ॥

मु ॥ स इति ॥ तेन अग्निना समनुज्ञातः स कृष्णः द्वारकाम् आययौ ॥ २८ ॥

वी ॥ अथेति ॥ ऊर्जिते ग्रहबलवति सुपुण्यमनुकूलमृक्षं नक्षत्रं यस्मिन् तस्मिन् सुमुहूर्ते स्वानां द्वारकौकसां परमानन्दं विस्तारयन् परमं मङ्गलं यस्य सः विवाहितवान् ॥ २९ ॥

मु ॥ अथेति ॥ परममङ्गलः "मङ्गलानां च मङ्गलम्" इत्युक्तरीत्या सर्वमङ्गलस्वरूपः कृष्णः स्वानां स्वकीयानां परमानन्दं वितन्वन् विस्तारयन् ऊर्जिते बलसंपत्त्याद्यतिशयावहे पुण्यर्त्वृक्षे शुभकर्तौ शुभनक्षत्रेचेत्यर्थः, कालिन्दीम् उपयेमे परिणीतवान् ॥ २९ ॥

वी ॥ अथ पञ्चमं मित्रविन्दाविवाहं प्रस्तौति—विन्दानुविन्दाविति॥ आवन्त्यौ अवन्तिराजौ दुर्योधनवशं दुर्योधनाधीनताम् अनुगच्छत इति तथा तौ न्यषेधतां न्यवारयताम् ॥ ३० ॥

मु ॥ अथ पञ्चमं मित्रविन्दाविवाहमाह—विन्दानुविन्दाविति ॥ आवन्त्यौ अवन्तिदेशाधीश्वरौ दुर्योधनस्य वशम् आयत्तत्वम् अनुगच्छतः अनुवर्तेते इति दुर्योधनवशानुगौ विन्दानुविन्दौ नाम राजानौ कृष्णरक्तां कर्णाकर्णिकया श्रुते श्रीकृष्णे अनुरागवतीम् ॥ ३० ॥

वी । राजाधिदेव्याइति॥ तथा भगवान् पितृष्वसुः स्वपितृभगिन्याः राजाधिदेव्याः तनयां राज्ञां पश्यतां सतामेव हे राजन् प्रसह्य हृतवान् ॥ ३१ ॥

मु ॥ पितृष्वसुः वसुदेवसोदर्याः राजाधिदेव्याः पट्टमहिष्याः तनयां मित्रविन्दां नाम कन्यां राज्ञां प्रपश्यतां सतामित्यनादरे षष्ठी, तान् अनादृत्येत्यर्थः, कृष्णः स्वयंवरे

१. दृशिभ्रमः. मु. मा. प्र. पा ॥ २. कृष्णरक्तां. मु. भा. प्र. पा ॥

(सत्याविवाहघट्टः)

नग्नजिन्नामकौसल्य आसीद्राजाऽतिधार्मिकः। तस्य सत्याभवत्कन्या देवी नाग्नजिती नृप
नतांशेकुर्नृपावोढुमजित्वा सप्तगोवृषान्[१] तीक्ष्णशृङ्गान्सुदुर्धर्षान्वीरगन्धासहान्खलान्
तांश्रुत्वावृषजिल्लभ्यां भगवान्सात्वतांपतिः। जगाम कौसल्यपुरं सैन्येन महताऽऽवृतः ३४
सकोसलपतिःप्राह प्रत्युत्थायासनादिभिः। अर्हणेनापि गुरुणा पूजयन्प्रतिनन्दितः ३५
वरंविलोक्याभिमतंसमागतं नरेन्द्रकन्याचकमेरमापतिम् ।

प्रसह्य हृतवानिति ॥ ३१ ॥

वी ॥ अथ षष्ठं नाग्नजितीविवाहमनुवर्णयति—नग्नजिन्नामेति ॥ कौसल्यः कोसल-देशाधिपतिः अयोध्याधिपतिरित्यर्थः, तस्य देवी कान्तिमती सत्या नाम कन्या अभूत्, अन्वर्थं नामान्तरमप्याह—नाग्नजितीति ॥ नग्नजितोऽपत्यं स्त्री तथा हे नृप ॥ ३२ ॥

मु ॥ षष्ठं विवाहमाह—नग्नजिदिति ॥ नामेति प्रसिद्धौ, कौसल्यः कोसलदेशाधि-पतिः, नाग्नजितीति नग्नजिदपत्यतया यौगिकनाम, सत्येति पित्रादिकृतसाङ्केतिकनाम, देवी कान्तिमती लावण्यपूर्णेत्यर्थः, दिविधातोः कान्तेरप्यर्थत्वात्, कन्या तस्य नग्नजितोऽभवत् ॥ ३२ ॥

वी ॥ नेति ॥ खलान् दुर्वृत्तान् वीराणां गन्धमपि न सहन्त इति तथा तान् सोढु-मशक्यान् गोवृषान् वृषभान् गा अनुधावमानानिति गोशब्दाभिप्रायः, अजित्वा नाग्न-जितीं वोढुमुद्वोढुं न शेकुः न प्रबभूवुः ॥ ३३ ॥

मु ॥ नतामिति ॥ नृपाः केचिदपि सप्तगोवृषान्—य एतान् स्वबलेन जयति, तस्या एवैतां कन्यां दास्यामीति प्रतिज्ञाय तज्जयमेव कन्याशुल्कं विधाय बद्धानित्यर्थः, तीक्ष्ण-शृङ्गान् निशिताग्रविषाणान् खलान् अविनीतान् वीर इति गन्धस्य वायुवशादागतवीर-देहामोदस्यापि असहान्, यद्वा वीरोऽहमेवेति गन्धं गर्वमपि न सहन्त इति तान् अत एव दुर्मर्षान् दुस्सहान् अजित्वा तां कन्यां वोढुं पत्नीत्वेन परिग्रहीतुं न शेकुः शक्ता ना-भवन्, तान् जेतुमशक्तास्सन्तः सत्यां परिणेतुं नाशक्नुवन्नित्यर्थः ॥ ३३ ॥

वी ॥ तामिति ॥ एवं स्थिते भगवान् तां वृषजितैव लभ्यां श्रुत्वा कौसल्यपुरमयो-ध्यां जगाम ॥ ३४ ॥

मु ॥ भगवान् तां कन्यां वृषान् जयतीति वृषजित् यः तेन लभ्यां श्रुत्वा प्रतिन-न्दितः सन्तुष्टस्सन् कौसल्यपुरं जगाम ॥ ३४ ॥

वी ॥ सइति ॥ स नग्नजित् प्रत्युत्थायासनादिभिः महता अर्हणेन पूजासाधनेन पूजयन्ननुमोदितश्च भगवन्तमाह ॥ ३५ ॥

मु ॥ स इति ॥ आसनादिभिः गुरुणा अर्हणेन पूजाविधिनापि प्रतिनन्दितः धन्योऽयमिति सर्वैरभिष्टुतस्सन्नित्यर्थः, यद्वा तं प्रति नन्दितः कृष्णेन वा स प्रतिनन्दितः तम् अपूजयत् इति ॥ ३५ ॥

वी ॥ उक्तिं विवक्षुस्तावन्नाग्नजित्युत्साहमनुवर्णयति—वरमिति॥नरेन्द्रकन्या चकमे अकामयत, किमिति अयमेव मम पतिर्भूयात्, कथं मदिच्छामात्रेण भूयादिति स्वयमेवा-

१. तीक्ष्णशृङ्गान्सुदुर्मर्षान् . मु. भा. प्र. पा ॥

भूयादयंमे[1]पतिराशिषोऽमलाः करोतुसत्यायदहंधृतव्रता ॥ ३६
अर्चितंपुनरित्याह नारायणजगत्पते।आत्मानन्देनपूर्णस्य करवाणिकिमल्पकः॥३७
यत्पादपङ्कजरजश्शिरसाबिभर्ति श्रीरब्जजस्सगिरिशस्सहलोकपालैः ।
लीलातनूस्स्वकृतसेतुपरीप्सयायः कालेदधत्सभगवान्ममकेनतुष्येत् ॥ ३८

शङ्क्य कामयते—मे ममाशिषः कामाः अमलाः निर्विघ्नाः सत्यास्सतीश्च यथार्थाश्च करोतु, भगवानिति शेषः, तत्रहेतुमुद्भावयति—यद्यहं धृतं व्रतं यया सा कृतपुण्या भवेयमित्यर्थः ॥ ३६ ॥

मु ॥ वरमित्यादि ॥ नरेन्द्रकन्या नाग्नजिती रमापतिं साक्षाल्लक्ष्मीपतिमेव समागतम् अभिमतम् अभीष्टं वरं विलोक्य चकमे तम्मनस्यकामयत,कामनाप्रकारमेवाह—भूयादिति। मे मया धृतः अमलः विषयान्तरासक्त्यादिदोषास्पृष्टः व्रतः नियमविशेषः आशिषः मन्मनोरथान् सत्याः करोतु यदि फलाविनाभूताः करोतु चेदित्यर्थः,अयं मे पतिर्भूयादिति चकमे इत्यन्वयः ॥ ३६ ॥

वी॥ अथोक्तिमाह—अर्चितमिति॥यद्यपि कोसलपतिः प्राहेत्यनेनैवास्य राजोक्तित्वलाभस्तथाऽपि वरमित्यादिना व्यवहितत्वादत्रार्चितमाहेत्युक्तं, पुनश्शब्दोवाक्यालङ्कारे हे नारायण हे जगत्पते स्वानन्देनैव पूर्णस्य तव अल्पकः क्षुद्रोऽहं किं करवाणि, न किमपि प्रियं कर्तुं शक्त इत्यर्थः, यद्वा किंकरवाणि किंकरोऽहम् , अत आज्ञापयेत्यर्थः, आत्मनस्स्वाभाविककिंकरतां द्योतयितुं नारायणेत्यादिसंबोधनम्, आत्मानन्देन पूर्णस्येतिविशेषणं चेत्यवगन्तव्यम् ॥ ३७ ॥

मु ॥ अर्चितमिति ॥ नारायण जगत्पते इत्याभ्यां जगतोऽन्तर्बहिर्व्याप्त्या रक्षकत्वमुच्यते, आत्मानन्देन पूर्णस्येत्यनेन "युवा स्यात् " इत्यादिश्रुत्युक्तापरिच्छेद्यानन्दपूर्णत्वमुच्यते, अल्पक इत्यस्य अल्पशक्तिरल्पबुद्धिरल्पश्रीकश्चेत्यर्थः ॥ ३७ ॥

वी॥ अथ परत्वं व्यनक्ति—यत्पादेति॥ अब्जजो ब्रह्मा सरुद्रः लोकपालैश्च सहितः श्रीः लक्ष्मीश्च शिरसा यस्य तव पादपङ्कजरजो बिभर्ति एकवचनं प्रत्येकाभिप्रायकम्, नाहं नारायणः किंतु यदुष्वन्यतम इत्यतआह—लीलातनूरिति । स्वेन त्वया कृताः ये धर्मसेतवो धर्ममर्यादाः तेषां परित्राणेच्छया काले धर्मज्ञानहानिकाले लीलातनूः लीलाविग्रहान् अनेनाकर्मवश्यत्वमुक्तम्, दधत् बिभ्राणः अनेन नारायण एव सन् धर्मपरित्राणाय यदुषु त्वमवतीर्ण इतिलब्धम्,एवंविधो भगवान् मम केन कैङ्कर्येण तुष्टो भवेत्॥३८

मु ॥ पूर्णस्येत्युक्तार्थस्थेम्ने तस्य सर्वोत्कर्षमनुसन्दधानस्तत्प्रसक्तिं प्रार्थयते—यत्पादेति ॥ बिभर्तीति। प्रत्येकमन्वयः, श्रीः स्वोत्कर्षाय सर्वैः आश्रयणीया लक्ष्मीरपि अब्जजः तन्नाभिकमल एव उत्पन्नः सकलजगन्निर्माता चतुर्मुखोऽपि सः सर्वज्ञनाम्ना प्रसिद्धः गिरिशोऽपि लोकपालैः इन्द्रादिभिः सह यत्पादपङ्कजरजः शिरसा स्वोज्जीवनासक्त इति प्रत्येकमन्वयः, किं च यः काले दुष्टजनकृतसद्धर्मविप्लवकाले स्वकृतसेतुपरीप्सया

१. पतिराशिषोऽमलः करोतु सत्यायदिमे धृतोव्रतः. मु भा. प्र. पा ॥

श्रीशुक उवाच—

तमाहभगवान्कृष्णः कृतासनपरिग्रहः। मेघगम्भीरयावाचा सस्मितंकुरुनन्दन॥ ३९

श्रीभगवानुवाच—

नरेन्द्रयाच्ञाकविभिर्विगर्हिता राजन्यबन्धोर्निजधर्मवर्तिनः।
तथाऽपियाचेतवसौहृदेच्छया कन्यान्त्वदीयांनहिशुल्कदावयम्॥ ४०

राजोवाच—

कोऽन्यस्तेऽभ्यधिकोनाथकन्यायाईप्सितोवरः।
गुणैकधाम्नोयस्याङ्गेश्रीर्वसत्यनपायिनी॥ ४१

---

स्वकल्पितमर्यादास्थापनाय लीलातनूः लीलाकल्पितमत्स्यादिविग्रहान् यः अदधत् दधार, स भगवान् षड्गुणैश्वर्यसंपन्नः भगवानिति शेषः, मम केन तुष्येदिति, यद्वा 'आत्मानन्देन पूर्णस्य करवाम किमल्पकः' इत्युक्त्वा अथ भक्त्यावेशेन तन्महिमानुसन्धानपूर्वकं तत्प्रसक्तिं प्रार्थयते—यत्पादेति॥ मम केन तुष्येदिति स्वमनस्येव स्वस्यानुसन्धानक्रमः॥

वी॥ तमिति॥ कृत-आसनपरिग्रहो येन स कृष्णः तं कौसल्यं हे कुरुनन्दन स्मितेन सहितं यथा तथा प्राह॥ ३९॥

मु॥ एवं तेनोक्ते सति भगवान् किमाहेत्यत्राह—तमिति॥ भगवतः स्मितपूर्वाभिभाषित्वात् सस्मितमित्युक्तम्॥ ३९॥

वी॥ उक्तिमेवाह—नरेन्द्रेति॥ हे नरेन्द्र यद्यपि स्वधर्मनिरतस्य राजन्यबन्धोः क्षत्रियस्य याच्ञा विगर्हिता निन्दिता, प्रतिषिद्धेति यावत्, तथापि सौहृदेच्छया त्वद्बन्धुत्वेच्छया त्वदीयां कन्यां याचे शुल्कदा द्रव्यादिप्रदाः न भवामः॥ ४०॥

मु॥ हेनरेन्द्र राजन्यबन्धोः क्षत्रियस्य तत्रापि निजधर्मवर्तिनः अजहत्क्षत्रधर्मस्य याच्ञा शौर्येणैव जित्वा अर्थसाधनं विना परप्रार्थना कविभिः गर्हिता जुगुप्सिता,तथापि याचे प्रार्थये, तर्हि किं याच्ञयेत्यत्राह—तवसौहृदेच्छयेति। त्वत्सौहार्दमपेक्ष्य याच इति भावः, अतः वयं शुल्कदाः कन्यामूल्यप्रदा नहीति॥ ४०॥

वी॥ इत्थमुक्त आह नग्नजित्—कइति॥ हे नाथ ते त्वत्तः अभ्यधिकः कन्याया ईप्सितो वरः कोवाऽस्ति, सन्ति बहव इत्यतो विशिनष्टि—गुणैकइति। गुणानां कल्याणानामेकमेव धाम स्थानं तथाभूतात् यस्येत्यपेक्षया षष्ठ्यन्तंवा, यस्य तवाङ्गे वक्षसि श्रीर्लक्ष्मीरनपायनी निवसति॥ ४१॥

मु॥ ननु सन्त्येव लोके मनोज्ञा वराः, कोऽयं मयैव वरेण भवितव्यमित्याग्रहस्तवेत्यत्राह—कोऽन्यइति॥ गुणैकधाम्नः अनन्तकल्याणगुणैकाश्रयस्य यस्य तव अङ्के श्रीः अनपायिनी कदाचिदपि विश्लेषरहिता वसति, ईप्सितः अभिमतः तेऽभ्यधिकः कन्यावरः इह को वास्तीति॥ ४१॥

किन्त्वस्माभिः कृतः पूर्वं समयस्सात्वतर्षभ। पुंसां वीर्यपरीक्षार्थं कन्यावर[1]परीप्सया॥
सप्तैते गोवृषा वीर दुर्दान्ता दुरवग्रहाः। एतैर्भग्नास्सुबहुशो भिन्नगात्रा नृपात्मजाः ॥४३
यदीमे निगृहीतास्स्युस्त्वयैव यदुनन्दन। वरो भवानभिमतो दुहितुर्मे श्रियःपते ॥ ४४
एवं समयमाकर्ण्य बद्ध्वा परिकरं विभुः। आत्मानं सप्तधा कृत्वा न्यगृह्णाल्लीलयैव तान्॥ ४५
बद्ध्वा तान्दामभिश्शौरिर्भग्नदन्तान्हतौजसः। व्याचकर्ष तथा बद्ध्वा बालो दारुमयान्यथा ॥

वी॥ किन्त्विति॥ हे सात्वतर्षभ समयः भाषाबन्धनम्, किमर्थम्? पुंसां वरत्वेनागतानाम्, साऽपि किमर्थेत्यत्राह—कन्याया वरः अनुरूपस्तत्परीप्सया हेतुभूतया॥ ४२॥

मु॥ तर्हि किमनेन दुष्टवृषभजयादिनिर्बन्धेनेत्यत्राह—किंत्विति॥ कन्यावरपरीक्षया हेतुना कन्याया योग्यवरपरीक्षार्थमित्यर्थः. पूर्वं समयः कृतः प्रतिज्ञा कृता, वरपरीक्षा च केनाकारेणेत्यत्राह—पुंसां वीर्यपरीक्षार्थमिति॥ ४२॥

वी॥ कोऽसौ समय इत्यत्र तं वक्तुं तावत्तत्रान्येषामसमर्थतामाह—सप्तेति॥ हे वीर दुर्दान्ताः अशिक्षिताः दुरवग्रहाः अपरायत्ताः, तत्र निदर्शनमाह—एतैरिति। एतैः गोवृषैः भिन्नानि गात्राणि येषां तथा बभूवुः, एतान्यो गृह्णाति तस्येयं कन्येति भावः॥४३॥

मु॥ तेच वृषाः कति वा कीदृग्विधा वेत्यत्राह—सप्तेति॥ दुर्दान्ताः अशिक्षिताः दुरवग्रहाः दुस्साधाः गोवृषा एत इति हस्तसंज्ञया च निर्देशः, तेषां दुरवग्रहत्वमाह—एतैरिति। भग्नाः भङ्गं प्राप्ताः, सुबहुशो नृपात्मजाः तैर्भिन्नगात्रास्सन्तो भग्ना इत्यन्वयः॥ ४३॥

वी॥ यदीति॥ अतो यदीमे वृषास्त्वया निगृहीतास्स्युस्तर्हि भवानेव मम दुहितुरभिमतो वरः॥ ४४॥

मु॥ इमे त्वयैव यदि निगृहीताः स्युः, तर्हि भावनेव मे दुहितुः पुत्र्याः अभिमतो वरइति तस्याभिमतत्वेऽनुगुणा संबुद्धिः—श्रियः पत इति। यदीम इति सवर्णदीर्घपाठश्च, यदित इति च पाठः॥ ४४॥

वी॥ एवमिति॥ परिकरमुत्तरीयादिकम्, लीलयैवेत्यनेन श्रमाभाव उक्तः, तान्वृषान् न्यगृह्णात्॥ ४५॥

मु॥ एवम् एवंविधं समयं प्रतिज्ञाम् आकर्ण्य एतान् यो निगृह्णाति तस्मै कन्यां दास्यामीति तत्कृतसमयमाकार्ण्येत्यर्थः, प्रभुः समर्थो भगवान् परिकरं वृषनिग्रहसाधककलापं बद्ध्वा आत्मानं सप्तधा कृत्वा सप्तानां वृषाणां प्रत्येकं निग्रहाय सप्त आकृतीर्धृत्वेत्यर्थः, दामभिः रज्जुभिः बद्ध्वा तान् अगृह्णात् शृङ्गयोर्गृहीतवानित्यर्थः॥ ४५॥

वी॥ बद्ध्वेति॥ दामभीरज्जुभिः भग्नाः दन्ता येषाम् अतएव हतम् ओजो बलं येषां तान् वृषान् बद्ध्वा व्याचकर्ष आकृष्टवान्, यथा बालो बद्धान् दारुमयान् वृषान् विकर्षति, तद्वत्॥ ४६॥

मु॥ भग्नदन्तान् ग्रहणमात्रेणैव भग्नविषाणान् हतौजसः हतबलान् तानिति पूर्वेणान्वयः, ततः किमकरोदित्यत्राह—न्यकर्षदिति। बालः दारुमयान् क्रीडार्थं दारुणा निर्मितान् वृषान् यथा वृषानिव लीलयैव व्यकर्षत् इतस्ततः पुच्छेषु गृहीत्वा नीतवानित्यर्थः॥ ४६॥

[1]. परीक्षया. मु. भा. प्र. पा॥

ततःप्रीतस्सुतांराजाददौकृष्णायविस्मितः। तांप्रत्यगृह्णाद्भगवान्विधिवत्सदृशींप्रभुः॥
राजपत्न्यस्स्वदुहितुःकृष्णंलब्ध्वाप्रियंपतिम्। लेभिरेपरमानन्दंजातश्चपरमोत्सवः॥
शङ्खभेर्यानकानेदुर्गीतवाद्यद्विजाशिषः।नरानार्यःप्रमुदितास्सुवासस्स्रगलङ्कृताः॥ ४९
दशधेनुसहस्राणिपारिबर्हमदाद्विभुः। युवतीनांत्रिसाहस्रंनिष्कग्रीवसुवाससाम् ॥५०
नवनागसहस्राणिनागाच्छतगुणान्रथान्। रथाच्छतगुणानश्वानश्वाच्छतगुणान्नरान्
दंपतीरथमारोप्यमहत्यासेनयावृतौ। [१]स्नेहविक्लिन्नहृदयौयापयामासतुस्तदा ॥ ५२

वी ॥ ततइति ॥ ततो वृषग्रहणात् प्रीतःपूर्वमेव प्रीतः ततस्सुतरां प्रीत इत्यर्थः, विस्मितश्च राजा नग्नजित्, प्रभुः श्रीकृष्णः सदृशीम् अनुरूपां तां कन्यां यथाविधि प्रत्यगृह्णादुपयेम इत्यर्थः ॥ ४७॥

मु ॥ प्रभुः कृष्णः तां विधिवत् यथाशास्त्रं प्रत्यगृह्णात् परिगृहीतवान् ॥ ४७ ॥

वी ॥ राजपत्न्यइति ॥ दुहितुः प्रियं पतिं लब्ध्वा राजपत्न्यः परमानन्दं प्रापुः, तदा महानुत्सवश्चासीत् ॥ ४८ ॥

मु ॥ राजपत्न्य इत्यारभ्य श्लोकद्वयेन तयोर्वैवाहिकोत्सवं प्रपञ्चयति— राजपत्न्यः तन्मातरः दुहितुः सुतायाः कृष्णं प्रियं पतिं लब्ध्वा परमानन्दं लेभिरे, परमोत्सवः विवाहोत्सवश्च जातः ॥ ४८ ॥

वी ॥ उत्सवमेव प्रपञ्चयति—शङ्खेति ॥ नेदुः दध्वनुः, तदा गीतयुक्तानि वाद्यानि द्विजानाम् आशिष आशीर्वादाश्च नेदुः,शोभनैर्वासोभिः स्रग्भिश्चालङ्कृता आसन्नितिशेषः॥

मु ॥ सुवासस्स्रकच्छब्दौ सर्वभूषणोपलक्षकौ ॥ ४९ ॥

वी ॥ विभुर्नग्नजित् दश धेनूनां सहस्राणि पारिबर्हमुपायनमदात्, निष्कग्रीवास्सुवाससश्च तासां युवतीनां दासीनां त्रिसहस्रमदादित्यनुषङ्गः ॥ ५० ॥

मु ॥ कन्यावरयोर्देयं वस्त्वाह—दशेत्यादिना ॥ पारिबर्हं विवाहादिषु यथोचितं देयमाभरणाख्यं वस्तु अदात् ददौ, तदाह—युवतीनामित्यादिना। नागाद्रथादश्वादित्येकवचनोक्तिर्जात्यभिप्राया, निष्कानि सुवर्णभूषणानि ग्रीवासु यासां ताः सुष्ठु वासांसि यासां ताः ताश्च तास्ताश्चेति तासां युवतीनां यौवनोन्मत्तदासीनामित्यर्थः ॥ ५० ॥

वी ॥ नागानां गजानां सहस्राणि नागात् नागेभ्यः शतगुणं शतगुणान्नवलक्षाणि रथान् रथाद्रथेभ्यः शतगुणान्नवपद्मान् अश्वान् नरान्भृत्यान् ॥ ५१ ॥

मु ॥ ५१ ॥

वी ॥ दंपतीइति ॥ दंपती नग्नजिद्भार्ये तदा रथमारोप्य सभार्यं कृष्णमिति शेषः, स्नेहेन प्रक्लिन्नमार्द्रं हृदयं ययोस्तौ यापयामासतुः गमयामासतुः, यापयामास कोसलइति पाठे स्नेहप्रक्लिन्नहृदय इति पाठ्यम्, दंपती नाग्नजितीश्रीकृष्णौ ॥ ५२ ॥

मु ॥ स्नेहेन पुत्रीविषयप्रेम्णा प्रक्लिन्नहृदयः आर्द्रचित्तः कोसलः कोसलाधिपतिर्नग्नजित् दम्पती तौ रथम् आरोप्य स्वयं महत्या सेनया वृतस्सन् यापयामास प्रेषयामास ॥ ५२ ॥

१. स्नेहविक्लिन्नहृदयो यापयामास कोसलः. इति मु. भा. प्र. पा ॥

श्रुत्वैतद्रुरुधुर्भूपानयन्तंपथिकन्यकाम् । भग्नवीर्यास्सुदुर्धर्षाय[1]दुभिर्गोवृषैःपुरा॥ ५३
तानस्यतश्शरव्रातान्बन्धुप्रियकृदर्जुनः॥गाण्डीवीकालयामाससिंहःक्षुद्रमृगानिव॥५४
पारिबर्हमुपानीयद्वारकामेत्यसत्यया । रेमेयदूनामृषभोभगवान्देवकीसुतः ॥ ५५

श्रुतकीर्तेस्सुतांभद्रामुपयेमेपितृष्वसुः ।
कैकयींभ्रातृभिर्दत्तांकृष्णस्सन्तर्दनादिभिः ॥ ५६

सुतांचमद्राधिपतेर्लक्ष्मणांलक्षणैर्युताम् । स्वयंवरेजहारैकस्ससुपर्णस्सुधामिव ॥ ५७

---

वी ॥ श्रुत्वेति ॥ एतद्भगवतो यानं श्रुत्वा यदुभिर्गोवृषैश्च सप्तभिर्भग्नं वीर्यं येषां तथाभूता अपि दुर्धर्षाः कन्यकां नयन्तं कृष्णं पथि रुरुधुः ॥ ५३ ॥

मु ॥ ततः किमत आह—श्रुत्वैतदिति ॥ भूपाः पुरा यदुभिः गोवृषैश्च भग्नवीर्या अपि सुदुर्मर्षाः श्रीकृष्णश्रेयोसहिष्णवः कन्यकां नयन्तं स्वपुरं प्रापयन्तं श्रीकृष्णम् एतच्छ्रुत्वा तस्य वृषभजयेन कन्याहरणं तया सह स्वपुरं प्रति गमनं च आकर्ण्येत्यर्थः, पथि मध्येमार्गं रुरुधुः ॥ ५३ ॥

वी ॥ तानिति ॥ शरसमूहानस्यतः क्षिपतः प्रयुञ्जानानिति यावत् , तान् भूपान् बन्धूनां कृष्णादीनां प्रीतिकृदर्जुनः गाण्डीवी धृतगाण्डीवः कालयामास पलाययाञ्चक्रे, यथा क्षुद्रमृगान् सिंहस्तद्वत् ॥ ५४ ॥

मु ॥ शरव्रातान् अस्यतः क्षिपतः प्रयुञ्जानानिति यावत्, तान् भूपान् बन्धोः श्रीकृष्णस्य प्रियकृत् हितकारी अर्जुनः गाण्डीवी गाण्डीवधरः सन् कालयामास संजहार न्यवारयदितिवा, तत्पराक्रमानुगुणदृष्टान्तमाह—सिंह इति ॥ ५४ ॥

वी ॥ पारिबर्हं श्वशुरदत्तमेत्य आगत्य सत्यया नाग्नजित्या सह ॥ ५५ ॥

मु ॥ पारिबर्हं श्वशुरेण वराय देयं पारितोषिकं वस्तु परिगृह्य स्वीकृत्य 'परीगृह्य' इति सदीर्घएव पाठः, सत्यया सह रेम इत्यनेन उक्तरीत्या भगवतस्तत्तन्नूतनपत्नीपरिग्रहे सत्यपि सत्यभामाया अमर्षणशीलतया तच्छन्दानुवृत्त्यविरोधेनैवेतरानुवृत्तिरिति स्फोर्यते ॥ ५५ ॥

वी ॥ अथ सप्तमं विवाहमाह—श्रुतकीर्तेरिति ॥ सन्तर्दन आदिर्येषां तैः भ्रातृभिः दत्तां कैकयस्यापत्यभूतां स्वपितृष्वसुः श्रुतकीर्तेस्सुतां भद्रां नाम कन्यामुपयेमे ॥ ५६ ॥

मु ॥ सप्तमं विवाहमाह—श्रुतकीर्तेरिति ॥ श्रुतकीर्तिसमाख्यायाः पितृष्वसुः वसुदेवसोदर्याः सुतां भद्रां नाम कैकेयीं केकयदेशाधिपतिपुत्रीं संतर्दनो नाम तस्या ज्येभ्राता, तदादिभिः भ्रातृभिः दत्तां कन्याम् उपयेमे परिणीतवान् ॥ ५६ ॥

वी॥अष्टमं विवाहमाह—सुतामिति ॥ मद्रदेशाधिपतेः सुतां लक्षणैर्युक्तां लक्ष्मणां नाम कन्यां स्वयंवरे असहाय एव सन् जहार यथा सुपर्णो गरुत्मान् सुधां तद्वत्॥ ५७ ॥

मु ॥ अष्टममाह—सुतां चेति॥मद्राणां देशानामधिपतेः सुतां लक्षणैः सामुद्रिकोक्तशुभचिह्नैः युतां लक्ष्मणां नाम कन्याम् एक एव कृष्ण इत्यनेन सर्वशक्तेस्तस्य क्वचित् सेनादिसहायोक्तिर्लौकिकप्रभुवृत्त्यनुकरणाभिप्राया ॥ ५७ ॥

---

१. दुर्मर्षाः. मु. भा. प्र. पा ॥

अन्याश्चैवंविधाभार्याःकृष्णस्यासन्सहस्रशः ।
भौमंहत्वातन्निरोधादाहृताश्चारु[1]दर्शनाः ॥ ५८

इति श्रीभागवते महापुराणे दशमस्कन्धे अष्टपञ्चाशत्तमोऽध्यायः॥ ५८ ॥

(नरकासुरवधारम्भः.)

राजोवाच—

यथाहतोभगवताभौमोयेनचतास्स्त्रियः। निरुद्धाएतदाचक्ष्वविक्रमंशार्ङ्गधन्वनः॥ १

श्रीशुक उवाच—

इन्द्रेणहृतच्छत्रेणहृतकुण्डलबन्धुना । हृतामराद्रिस्थानेन[2]ज्ञापितोभौमचेष्टितम् ॥ २

वी ॥ इत्थं प्रधानपत्नीरुक्त्वा अथान्या अप्याह—अन्याश्चेति ॥ कास्ता इत्यत आह—भौममिति । भौमं नरकासुरं हत्वा तन्निरोधादानीताः ॥ ५८ ॥

मु ॥ एवं तस्य प्रधानभूताष्टमहिषीविवाहान् उक्त्वा एवंविधा एव अन्याश्च पत्न्योऽभवन्नित्याह—अन्याश्चेति ॥ एवंविधाः लक्ष्म्यंशभूतरुक्मिण्यादिप्रधानपत्नीभिरेव रूपलावण्यविलासादिभिस्तुल्या इत्यर्थः, सहस्रशो भार्याः कृष्णस्यासन्, कुत आगतास्ता इत्यत्राह— भौममिति । भौमो नरकासुरः, तं हत्वा निरुध्यन्ते स्त्रियोऽस्मिन्निति निरोधोऽन्तःपुरम्, तस्मात् आहृताः चारुलोचनाः वामलोचनाः सहस्रशः कृष्णस्य भार्या आसन्निति ॥ ५८ ॥

प ॥ रुक्मिणीचर्क्षजा सत्या कालिन्दी विन्दसोदरी ।
सत्या भद्रा लक्ष्मणाच महिष्योऽष्टौ हरेः क्रमात् ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां षष्टितमोऽध्यायः ॥ ६० ॥

वी ॥ भौमं हत्वा तन्निरोधादाहृता इत्युक्तम्, तद्विस्तरबुभुत्सया पृच्छति राजा—यथेति ॥ येन भौमेन ताः स्त्रियो निरुद्धाः स भौमः यथा येन प्रकारेण हतः चकाराद्येन कारणेनेत्यपि बोद्धव्यम्, तदाचक्ष्वाख्याहि ॥ १ ॥

मु ॥ प ॥ नशिष्टदुष्टान्वयजन्मनीहरेःप्रसादविद्वेषनिमित्तमात्मनाम् ।
तदानुकूल्यप्रतिकूलतेविनेत्यमुत्र भावो मुनिनाभिसूच्यते ॥

यथेत्यादि ॥ येन ताः स्त्रियः निरुद्धाः, स भौमो नरकासुरः येन कारणेन भगवता यथा येन प्रकारेण हतः, एतत् भौमहननमेव शार्ङ्गधन्वनो विक्रमं भौमवधोज्जृम्भितं पराक्रममित्यर्थः, आचक्ष्वेति राजकृतप्रश्नः ॥ १ ॥

वी ॥ आचष्टे—इन्द्रेणेति ॥ इन्द्रेण भौमचेष्टितं ज्ञापितस्सन् प्राग्ज्योतिषपुरं ययाविति सम्बन्धः, कथं भूतेन? हृतं भौमेन हृतं छत्रं यस्य तेन लोकपालप्रधानत्वादिन्द्रस्य वरुणच्छत्रहरणेऽपि तस्यैव मानभङ्ग इति तथोक्तम्, हृते कुण्डले यस्यास्सा बन्धु-

१. लोचनाः ;
२. विज्ञप्तो भौम. मु. भा. प्र. पा ॥

सभार्योगरुडारूढःप्राग्ज्योतिषपुरंययौ। गिरिदुर्गैश्शस्त्रदुर्गैर्जलाग्न्यनिलदुर्गमम्॥
मुरपाशायुतैर्घोरैर्दृढैस्सर्वतआवृतम्॥ ३

गदयानिर्बिभेदाद्रीञ्शस्त्रदुर्गाणिसायकैः। चक्रेणाग्निंजलंवायुंमुरपाशांस्तथासिना॥

---

र्माता आदितिर्यस्य तेन हृतममराद्रिस्थानं मणिपर्वतात्मकं यस्य तेन॥ २॥

मु॥ श्रीशुकस्तत्रोत्तरमाह—इन्द्रेणेति॥ हृतच्छत्रेणेत्यत्र तुगागमप्रयुक्तश्छन्दोभङ्ग आर्षः, इन्द्रेण भौमचेष्टितं विज्ञप्तो हरिः प्राग्ज्योतिषपुरं ययावित्यन्वयः, विज्ञप्तः विज्ञापितः प्राग्ज्योतिषपुरं भौमनगरम्, कथंभूतेन? हृतं छत्रं यस्य तेन, यद्यपि भौमेन वरुणस्यैव छत्रं हृतम्; तथापि लोकपालप्रधानस्येन्द्रस्यैव मानभञ्जकमिति तद्विशेषणीकृतम्, हृते कुण्डले यस्य सः बन्धुः देवमाता अदितिः यस्य तेन हृतम् अमराद्रौ मेरौ यत् स्थानं मणिपर्वतलक्षणं तद्यस्य तेनेति॥ २॥

वी॥ सत्यभामागृहे भगवन्तमिन्द्र आगत्य विज्ञापितवान्, तदा तस्याः कौतुकाय तया सह ययाविति, यद्वा त्वदनुज्ञयैव त्वत्सुतं हनिष्यामीतीतिहासेनोक्तं भूम्यै वरं दत्तं सत्यापयितुं सत्यभामाया भूम्यंशत्वात्तया सह ययाविति,यद्वा नारदानीतपारिजातैककुसुमे रुक्मिण्यै दत्ते सति कुपितां सत्यभामां सान्त्वयितुं तुभ्यं पारिजाततरुमेव दास्यामीति प्रतिश्रुतमिति हरिवंशे प्रसिद्धम्, तदर्थं तां नीतवानिति, गरुडारूढ इत्यत्र हेतुं वदन् पुरं विशिनष्टि—गिरीति। गिरिदुर्गैश्शस्त्रदुर्गैश्चोपलक्षितं जलाग्न्यनिलैश्च परितो वर्तमानैश्च दुर्गमं घोरैः दृढैश्च मुरस्य पाशैः परित आवृतम्॥ ३॥

मु॥ सभार्यः सत्यभामासहितः इन्द्रेणागत्य सत्यभामागृहनिवासिने भगवते नरकासुरचेष्टिते विज्ञापिते सति ततः प्रस्थितोऽसौ तस्याः कौतुकाय तया सह ययाविति वा, त्वत्सुतं दुस्सहदौष्ट्यतया त्वदनुज्ञयैव हनिष्यामीति भूम्यै भगवान् पुरा किल वरं दत्तवानिति इतिहासान्तरे प्रसिद्धत्वात् तदंशभूतया तया सह ययाविति वा,नारदेनैकस्मिन् पारिजातकुसुमे रुक्मिण्यै दत्ते सति ततः कुपितां सत्यभामां सन्त्वयितुं भगवता पारिजातमेव तुभ्यं दास्यामीति प्रतिश्रुतमिति हरिवंशे प्रसिद्धम्, अतस्तदर्थं तया सह ययाविति तद्याने कारणमूह्यम्, गिरिदुर्गैश्शस्त्रदुर्गैश्च उपलक्षितम्, जलेति। जलदुर्गं प्रसिद्धम्, अग्न्यनिलौ तु तत्पीडाभीतौ तन्नगरं परितः परीत्य दुर्गाकारेण पराभेद्यत्वहेतू तिष्ठत इति ज्ञेयम्, मुरपाशाः मुरासुरेण दुर्गरक्षणार्थं कल्पिताः समीपगतानरीन् कण्ठेषु बद्ध्वा तेषां मारकाः द्वात्रिंशदायुधेषु परिगणिताः आयुधविशेषाः, तेषामयुतैः दशसहस्रैः सर्वत आवृतम्, तान्विशिनष्टि—घोरैरिति। स्वदर्शनमात्रेण क्रूराहिवद्भयङ्करैः दृढैः इतरायुधैश्छेत्तुमशक्यैरिति सर्वत आवृतम्॥ ३॥

वी॥ गदयेति॥ चक्रेण सुदर्शनेन अग्निजलवायून्निर्बिभेद, असिना खड्गेन॥ ४॥

मु॥ ततो हरिः किमकरोदित्यत्राह—गदयेत्यादिना॥ अद्रिं गिरिदुर्गं गदया निर्बिभेद सर्वतो भिन्नमकरोत्, सायकैः शस्त्रदुर्गाणि दुर्गाकारेण परितः सुघटितान्यायुधानीत्यर्थः, सायकैः बाणैः निर्बिभेद, चक्रेण सुदर्शनाग्निना अग्निं जलं वायुं च असिना खड्गेन मुरपाशान् दुर्गसंरक्षणार्थं परितो मुरासुरबद्धान् पाशांश्च निर्बिभेद, तेहि परितः प्रयुक्तास्सन्तः समीपगतं शत्रुं दृढं बद्ध्वा पातयन्ति॥ ४॥

क॥ य

शङ्खनादेनयन्त्राणिहृदयानिमनस्विनाम्। प्राकारंगदयागुर्व्यानिर्बिभेदगदाधरः॥ ५
पाञ्चजन्यध्वनिंश्रुत्वायुगान्ताशनिभीषणम्।मुरश्शयानउत्तस्थौदैत्यःपञ्चशिराजलात्

त्रिशूलमुद्यम्यसुदुर्निरीक्षणोयुगान्तसूर्यानलरोचिरुल्बणः।
ग्रसंस्त्रिलोकीमिवपञ्चभिर्मुखैरभ्यद्रवत्तार्क्ष्यसुतंयथोरगः॥ ७
आविध्यशूलंतरसागरुत्मतेनिरस्यवक्त्रैर्व्यनदत्सपञ्चभिः।
खंरोदसीसर्वदिशोऽम्बरंमहानापूरयन्नण्डकटाहमावृणोत्॥ ८
तदापतद्वैत्रिशिखंगरुत्मतेहरिश्शराभ्यामभिनत्त्रिधौजसा।
मुखेषुतंचापिशरैरताडयत्तस्मैगदांसोऽपिरुषाव्यमुञ्चत॥ ९

वी॥ मनस्विनां स्वैरिणां मुरादीनां हृदयानि यन्त्राणि च शङ्खनादेन॥ ५॥

मु॥ शङ्खनादेन अशनिध्वनिकल्पेन पाञ्चजन्यध्वनिना यन्त्राणि दारुघटितानि पुरुषप्रयत्नोत्क्षेपणादिना शत्रुषु स्थूलशिलासङ्घातप्रेरकाणि गुर्व्या गदया प्राकारं च निर्बिभेद, गदायां गुरुत्वं शत्रुष्वमोघशक्तितया श्रेष्ठत्वम्, लोकातिशायिप्रयोगकुशलतयैव हि 'गदाधरः' इति अत्र प्रयोग इति बोध्यम्॥ ५॥

वी॥ पाञ्चजन्येति॥ युगान्ताशनेः ध्वनिवद्भीषणं पाञ्चजन्यध्वनिमाकर्ण्य॥ ६॥

मु॥ युगान्ते योऽशनिः लक्षणया तद्ध्वनिः तद्वद्भीषणं पाञ्चजन्यध्वनिं श्रुत्वा जलात् परिखाजलात् मुरः उत्तस्थौ॥ ६॥

वी॥ त्रिशूलमिति॥ युगान्ते सूर्याग्न्योरिव रोचिर्दीप्तिर्यस्य स मुरासुरः अत एवोल्बणो दुस्सहो दुर्निरीक्ष्यस्सन् त्रिशूलमुद्धृत्य पञ्चभिर्मुखैस्त्रिलोकीं ग्रसन्निवाभ्यधावत् यथोरगस्सर्पः तार्क्ष्यसुतं गरुडं तद्वत्॥ ७॥

मु॥ युगान्ते सूर्यानलयोः सकलजगद्भस्मीकरणप्रवृत्तयोरित्यर्थः, रोचिः ज्वालाकलाप इव उल्बणः प्रवृद्धः अत एव सुदुर्निरीक्षणः निरीक्षितुमशक्यः स इत्यर्थः, त्रिशूलं त्रिमुखं शूलम् उद्यम्य पञ्चभिर्मुखैः त्रिलोकीं ग्रसन्निव उरगो यथा सर्प इव तार्क्ष्यसुतं गरुत्मन्तम् अभ्यद्रवत् तं प्रत्यभिमुखम् अधावदित्यर्थः, तार्क्ष्यसुतं काश्यपपुत्रं गरुडमित्यर्थः॥ ७॥

वी॥ आविध्येति॥ स मुरश्शूलमाविध्यालोल्य तरसा बलेन गरुडाय प्रयुज्य पञ्चभिर्वक्त्रैः व्यनदन्ननाद, किं कुर्वन्? रोदसी द्यावापृथिव्यौ खमन्तरिक्षं लोकोपरितनमाकाशं सर्वेषां श्रोत्रबिलं वा दिगन्तरं चापूरयन् नादेनेति शेषः, कृत्स्नमप्यण्डकटाहमावृणोत्॥ ८॥

मु॥ तरसा बलेन वेगेन वा शूलम् आविध्य भ्रामयित्वा गरुत्मते क्षिप्त्वा व्यनदत् क्ष्वेलामकरोत्, स महान् नादः खं सर्वेषां श्रोत्रेन्द्रियं रोदसी द्यावाभूमी च सर्वदिशः सर्वस्या अपि दिशः दिशामित्यर्थः, अन्तरं मध्यगोलं, यद्वा सर्वाश्च ता दिशश्च ताश्च अन्तर्मध्यं च आपूरयन् अण्डकटाहं ब्रह्माण्डम् आवृणोत्॥ ८॥

वी॥ तदिति॥ तिस्रश्शिखा यस्य तद्गरुडायागच्छत्त्रिशूलम् ओजसा बलेन शराभ्यां त्रिधा चिच्छेद, तं मुरं च मुखेषु शरैः ताडयामास, सोऽपि मुरोऽपि रुषा तस्मै

तामापतन्तीङ्गदयामृथेगदाङ्गदाग्रजोनिर्बिभिदेसहस्रधा ।
उद्यम्यबाहूनभिधावतोऽजितश्शिरांसिचक्रेणजहारलीलया ॥ १०
व्यसुःपपाताम्भसिकृत्तशीर्षोनिकृत्तशृङ्गोऽद्रिरिवेन्द्रतेजसा ।
तस्यात्मजास्सप्तपितुर्वधातुराःप्रतिक्रियामर्षजुषस्समुद्यताः ॥ ११
ताम्रोऽन्तरिक्षश्श्रवणोविभावसुर्वसुर्नभस्वानरुणश्चसप्तमः ।
पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्तानिरगुर्धृतायुधाः ॥ १२

---

कृष्णाय गदां व्यमुञ्चत प्रायुङ्क ॥ ९ ॥

मु ॥ तदिति ॥ पतिः रक्षकः श्रीकृष्णः गरुत्मते लक्ष्याय आपतत् त्रिशिखं त्रिशिरस्कं तत् शूलम् ओजसा पराक्रमेण शराभ्यां त्रिधात्रिशकलं यथा तथेत्यर्थः, अभिनत् चिच्छेद , तं चापि राक्षसमपि शरैः मुखेषु अताडयत् पश्चापि तन्मुखानि पञ्चभिः शरैः अताडयदित्यर्थः, तस्मै श्रीकृष्णाय गदां व्यमुञ्चत मुमोच प्रयुक्तवान् ॥ ९ ॥

वी ॥ तामिति ॥ गदाग्रजो भगवान् स्वगदया तां मुरप्रयुक्ताम् आपतन्तीं गदां मृधे युद्धे सहस्रधा निर्बिभेद, ततो बाहू उद्धृत्याभिधावतो मुरस्य पञ्च शिरांस्यजितो भगवान् चक्रेण चिच्छेद ॥ १० ॥

मु ॥ तामिति ॥ गदाग्रजः श्रीकृष्णः मृधे युद्धे गदया कौमोदक्या आपतन्तीं तां गदां सहस्रधा निर्बिभेद सहस्रशकलान्यकरोदित्यर्थः, अजितः श्रीकृष्णः बाहून् उद्यम्य अभिधावतः अभिमुखम् आपततः अस्य शिरांसि चक्रेण लीलया जहार, अत्र "हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः"इति नैघण्टुकैः शृङ्गारभावजन्यचेष्टापर्यायत्वेन लीलाशब्दाभिधानात् सर्वशक्तेस्तस्य एवंविधरक्षस्संहारः तावन्मात्रमेवेति लीलयेत्यनेन स्फोर्यते ॥ १० ॥

वी ॥ व्यसुरिति ॥ निकृत्तानि शीर्षाणि शिरांसि यस्य सः अत एव व्यसुर्गतप्राणोऽम्भसि जले पपात, यथेन्द्रतेजसोपलक्षितेन वज्रेण निकृत्तशृङ्गो गिरिस्तद्वत् , तस्येति । तस्य मुरस्यात्मजास्सप्त पितुर्वधाद्दुःखिताः प्रतिक्रियायै अमर्षजुषः क्रोधाविष्टाः भौमेन प्रेषिताः धृतान्यायुधानि यैस्ते च मृधे युद्धे निमित्ते पीठनामानं चमूपतिं पुरस्कृत्य समुद्यता आयत्ताः निरगुः निर्गता बभूवुरिति सम्बन्धः. तानेव सप्तनिर्दिशति— ताम्र इति ॥ ११ ॥ १२ ॥

मु ॥ व्यसुरिति ॥ विगता असवः प्राणा यस्य स व्यसुः सन् अम्भसि पपात, तदनुगुणदृष्टान्तमाह—निकृत्तेति । इन्द्रस्य तेजः प्रतापः तेन तत्साधकत्वाद्वज्रायुधं लक्ष्यते, तेन निकृत्तानि शृङ्गाणि यस्य सः अद्रिरिवेति, ततः किम् , अत आह—तस्येति । प्रतिक्रियामर्षजुषः प्रतिक्रियायै वैरनिर्यातनाय अमर्षजुषः क्रोधभाजः तत्र हेतुमाह— पितुर्वधातुरा इति । समुद्यताः युद्धोद्युक्ताः ॥ ११ ॥

मु ॥ तन्नामान्याह—ताम्र इति ॥ मृधे युद्धे पीठं नाम चमूपतिं पुरस्कृत्य भौमप्रयुक्ताः नरकासुरप्रेरितास्सन्तः निरगुः निर्गताः ॥ १२ ॥

प्रायुञ्जतासाद्यशरानसीन्गदाश्शक्त्यष्टिशूलान्यजितेरुषोल्बणाः ।
तच्छस्त्रकूटं भगवान्स्वमार्गणैरमोघवीर्यस्तिलशश्चकर्तह ॥ १३

तान्पीठमुख्याननयद्यमक्षयं निकृत्तशीर्षोरुभुजाङ्घ्रि[१]वर्ष्मणः ॥
स्वानीकपानच्युतचक्रसायकैस्तथानिरस्तान्नरकोधरासुतः ॥
निरीक्ष्यदुर्धर्षणआस्रवन्मदैर्गजैःपयोधिप्रभवैर्निराक्रमत् ॥ १४

दृष्ट्वासभार्यं गरुडोपरिस्थितं सूर्योपरिष्टात्सतडिद्घनं यथा ।
कृष्णं स तस्मैव्यसृजच्छतघ्नीं योधाश्चसर्वेयुगपत्प्रविव्यधुः ॥ १५

---

वी ॥ प्रायुञ्जतेति ॥ उल्बणास्ते ताम्राद्य आसाद्य अभ्येत्य रुषा क्रोधेनाजिते कृष्णे शरादीन्प्रयुक्तवन्तः, तथा भगवान् स्वमार्गणैस्स्वशरैस्तच्छस्त्रजालं तिलप्रमाणशश्चिच्छेद, हेतिविस्मये ॥ १३ ॥

मु ॥ आसाद्य कृष्णं प्राप्य रुषा क्रोधेनोल्बणा प्रवृद्धाः सन्तः शक्त्यादीन् अजिते श्रीकृष्णे प्रायुञ्जत प्रयुक्तवन्तः, अष्टिः यष्टिः मुद्गरविशेषः, अन्यत् स्फुटार्थकम् , तदिति । शस्त्रकूटम् आयुधसङ्घातं चकर्त चिच्छेद, भगवानमोघवीर्य इत्यनेन भगवच्छब्दप्रवृत्तिनिमिमित्तगुणेषु ज्ञानादिषु विशेषतः प्रकृतोपयोगितया वीर्यस्य पृथगुक्तिरिति स्फोर्यते ॥ १३ ॥

वी ॥ तानिति ॥ निकृत्तानि च्छिन्नानि शीर्षादीनि येषां तांस्ताम्रादीन्यमसदनमनयत् , वर्ष्म शरीरं तच्चोपात्तातिरिक्तप्रदेशपरम् , इदमर्धं पृथगन्वेतव्यम्॥

वी ॥ स्वानीकपानिति ॥ स्वान् कांश्चिदनीकपान् सेनापतीन् अच्युतस्य सायकैः हतानिति शेषः, तथा कांश्चिन्निरस्तान् दूरतः पातितांश्च दृष्ट्वा धरासुतो नरकः दुस्सहः स्रवन् मदो येषां तैः पयोधिप्रभवैः पयोध्यन्तर्द्वीपजैर्गजैस्सह निराक्रमत् निर्गतवान् ॥१४

मु ॥ तानिति ॥ निकृत्तानि छिन्नानि शीर्षाणि शिरांसि ऊरवो भुजा अङ्घ्रयो वर्माणि कवचानि च येषां तान् ॥

मु ॥ अच्युतचक्रसायकैः तथा तेन प्रकारेण निरस्तान् स्वानीकपान् स्वसेनापतीन् निरीक्ष्य धरासुतः नरकः पयोधिप्रभवैः समुद्राकरजन्यैः आ समन्तात् स्रवन्मदैः गजैस्सह निराक्रमत् युद्धाय निश्चक्राम ॥ १४ ॥

वी ॥ दृष्ट्वेति ॥ यथा सूर्यस्योपरिष्टात् तडिता सहितं घनं नीलमेघं तद्वत्सभार्यं गरुडोपरि स्थितं कृष्णं तत्र सूर्यस्थानीयो गरुडः, तडित्स्थानीया भार्या, घनस्थानीयस्तु कृष्णः, इति विवेकः, स भौमस्तस्मै कृष्णाय शतघ्नीं शक्तिविशेषं व्यसृजत्प्रायुङ्क्त, तथा योधाश्च भौमसम्बन्धिनः युगपत्प्रविव्यधुः ताडयामासुः स्वस्वायुधैरिति शेषः ॥ १५ ॥

मु ॥ दृष्ट्वेति ॥ स्वर्णवर्णगरुडोपरिस्थितस्य हरिद्रावर्णभार्यासहितस्य च तस्यानुरूपदृष्टान्तमाह—सूर्येति। सः कृष्णं दृष्ट्वा शतघ्नीं नाम आयुधविशेषं तस्मै व्यसृजत् प्रायुङ्क्त, युगपत् एकदैव सर्वे योधाश्च तं विव्यधुः अपीडयन् ॥ १५ ॥

१. वर्मण: मु. भा. प्र. पा ॥

तद्भौमसैन्यं भगवान्गदाग्रजोविचित्रवाजैर्निशितैश्शलीमुखैः ।
निकृत्तबाहूरुशिरोध्रविग्रहं चकारतर्ह्येवहताश्वकुञ्जरम् ॥ १६

यानियोधैःप्रयुक्तानिशस्त्रास्त्राणिकुरूद्वह।हरिस्तान्यच्छिनत्तीक्ष्णैश्शरैरेकैकशस्त्रिभिः
उह्यमानस्सुपर्णेनपक्षाभ्यां निघ्नतागजान् ॥ १७

गरुत्मताहन्यमानास्तुण्डपक्षनखैर्गजाः । पुरमेवाविशन्नार्तानरकोयुध्ययुध्यत॥ १८
दृष्ट्वा विद्रावितंसैन्यंगरुडेनार्दितंस्वकम्।तंभौमःप्राहरच्छक्त्यावज्रःप्रतिहतोयतः॥१९
नाकम्पततयाविद्धोमालाहतइवद्विपः । शूलंभौमोऽच्युतंहन्तुमाददेवितथोद्यमः॥२०

---

वी ॥ तदिति ॥ विचित्रा वाजाः पत्राणि येषां तैर्निशितैर्बाणैः निकृत्ता बाहव ऊरवश्शिरोधरा विग्रहा देहाश्च यस्य हता अश्वाः कुञ्जराश्च यस्मिन् तथाभूतं तर्ह्येव यदा विव्यथुः तस्मिन्नेव क्षणे चकार ॥ १६ ॥

मु ॥ गदाग्रजो भगवान् तत् भौमसैन्यं नरकबलं विचित्रवाजैः चित्रपक्षैः निशितैश्च शिलीमुखैः निकृत्ताः खण्डिताः बाहव ऊरवश्च शिरोध्राः कण्ठाश्च विग्रहो देहश्च यस्य तत् तथोक्तं च हता अश्वाः कुञ्जराश्च यस्य तत् तथाविधं च चकार ॥ १६ ॥

वी ॥ यानीति ॥ हे कुरूद्वहेत्याश्चर्यसम्बोधनम्, तथाहि तैर्योधैर्यानि शस्त्राणि प्रयुक्तानि बभूवुः, तत्प्राप्तेः पूर्वमेव तत्सैन्यं सर्वं हत्वा पश्चात्तानि शस्त्राणि चिच्छेद, तत्राप्येकैकं शस्त्रं त्रिभिश्शरैरिति, कथंभूतः? पक्षाभ्यां गजान्निघ्नता गरुत्मतोह्यमानः ॥१७॥

मु ॥ एकैकशः परप्रयुक्तमेकमेकं शस्त्रमित्यर्थः, तीव्रैः त्रिभिस्त्रिभिश्शरैरित्येवं क्रमेणेत्यर्थः, योधैः प्रयुक्तानि यानि शस्त्राण्यासन्, हरिस्तानि तीव्रैश्शस्त्रैरच्छिनदिति, तीव्रैरित्यनेन शत्रुप्रयुक्तशस्त्रप्राप्तेः पूर्वमेव शत्रूनच्छिनत् पश्चात् तच्छस्त्राणि तत्राप्येकैकम्, तदपि त्रिभिस्त्रिभिश्शरैरित्यलौकिकमद्भुतावहंचास्य करकौशलमिति भावः, किञ्च तद्वाहनमपि विचित्रमहिमैव, यद्विश्वंभरं वहन्नपि स्वयमपि युध्यतीत्यभिप्रयन्नाह —उह्यमान इति । गजान् पक्षाभ्यां निघ्नता सुपर्णेन उह्यमानो हरिः तान्यच्छिनदिति पूर्वेणान्वयः ॥ १७ ॥

वी ॥ किञ्च—गरुत्मतेति ॥ गरुत्मता कर्त्रा तुण्डादिभिः साधनैः हताः ताडिताः अत एवार्ता गजाः पुरं प्राग्ज्योतिषपुरं विविशुः, नरकस्तु युद्धे अयुध्यत ॥ १८ ॥

मु॥तुण्डेन त्रोट्या पक्षाभ्यां नखैश्च साधनैः गरुत्मता हन्यमाना गजाः पुरमेव अविशन्, नरकः युधि युद्धे अयुध्यत, एक एवेत्यर्थः ॥ १८ ॥

वी ॥ दृष्ट्वेति ॥ विद्रावितं पलायितं गरुडेन पीडितं स्वकीयं बलमालोक्य भौमस्तं गरुडं शक्त्या प्राहरत्, तां विशिनष्टि—यतः यया शक्त्या वज्रः प्रतिहतः ॥ १९ ॥

मु ॥ दृष्ट्वेति ॥ गरुडेन अर्दितं पीडितं विद्रावितं पलायितं स्वकं सैन्यं दृष्ट्वा भौमः शक्त्या तं प्राहरत् निहतवान्, शक्तिप्रभावमाह—वज्र इति । यतः यया शक्त्या यत्सकाशाद्वा वज्रः प्रतिहतः कुण्ठितोऽभूदिति ॥ १९ ॥

वी ॥ नेति ॥ तया शक्त्या ताडितोऽपि गरुडो नाकम्पत, यथा मालया गजो हतस्तद्वत्, गरुडे व्यर्थोद्यमस्सन् शूलमाददे स्वीकृतवान् ॥ २० ॥

तद्विसर्गात्पूर्वमेवनरकस्यशिरोहरिः । अपाहरद्गजस्थस्यचक्रेणक्षुरनेमिना ॥ २१

सकुण्डलंचारुकिरीटभूषितं शिरःपृथिव्यांपतितं समज्वलत् ।
हाहेतिसाध्वित्यृषयस्सुरेश्वरा माल्यैर्मुकुन्दं विकिरन्त ईडिरे ॥ २२

ततश्चभूःकृष्णमुपेत्यकुण्डले प्रतप्तजाम्बूनदरत्नभास्वरे ।
सावैजयन्त्यावनमालयाऽर्पयत्प्राचेतसंछत्रमथोमहामणिम् ॥ २३

अस्तौषीदथविश्वेशं देवदेववरार्चितम् । प्राञ्जलिःप्रणताराजन् भक्तिप्रवणयाधिया॥

(भूमिकृत श्रीकृष्णस्तुतिः)

धरोवाच—

नमस्तेदेवदेवेश शङ्खचक्रगदाधर । भक्तेच्छोपात्तरूपाय परमात्मन्नमोस्तु ते ॥ २५

---

मु ॥ तया शक्त्या विद्धः गरुडः नाकम्पत न चचाल, तत्रानुगुणं दृष्टान्तमाह— मालेति । पुष्पमालाताडित इत्यर्थः, वितथोद्यमः विफलप्रयत्नस्सन् शूलम् आददे ज-ग्राह ॥ २० ॥

वी॥ तद्विसर्गाच्छूलप्रयोगात्पूर्वमेव हरिः नरकस्य शिरश्चक्रेण चिच्छेद,कथंभूतेन? क्षुरस्येव नेमिः धारा यस्य तेन ॥ २१ ॥

मु ॥ हरेश्शत्रुवधचमत्कारमाह—तदिति ॥ तद्विसर्गात् शूलप्रयोगात् पूर्वमेव च क्षुरनेमिना क्षुरवत् तीक्ष्णनेमिना चक्रेण हरिः गजस्थस्य तस्य शिरः अहरत् ॥ २१ ॥

वी ॥ सकुण्डलमिति ॥ कुण्डलाभ्यां सहितं सुन्दरेण किरीटेन भूषितं शिरः पृथिव्यां पतितं सत्सम्यगज्वलत् नरकसम्बन्धिनो हाहेति ऋषयस्तु साधुसाध्वित्यूचुः, सुरेश्वरास्तु कुसुमैर्विकिरन्तो मुकुन्दं तुष्टुवुः ॥ २२ ॥

मु ॥ पतितं तच्छिरो वर्णयति—सकुण्डलमिति ॥ हाहेति दुष्टनिवृत्तिजनितानन्दानुकरणोक्तिः, साध्विति प्रशंसाप्रारम्भोक्तिः, ईडिरे अस्तुवन् ॥ २२ ॥

वी ॥ ततश्चेति ॥ भूः भूमिर्नरकस्य माता प्रतप्ते जाम्बूनदे यानि रत्नानि तैर्भास्वरे कुण्डले तथा वैजयन्त्या वनमालया सह प्राचेतसं वारुणं छत्रं मेर्वंशभूतं मन्दरशिखरं महामणिं च कृष्णायार्पयामास ॥ २३ ॥

मु ॥ ततश्चेति ॥ प्रतप्ते पुटपाकशोधिते जाम्बूनदे सुवर्णे यानि रत्नानि खचितमणयः तैः भास्वरे जाज्वल्यमाने कुण्डले च प्राचेतसं वारुणं छत्रं च महामणिं मेर्वंशभूतमन्दराद्रिशिखरं महामणिं च वैजयन्त्या वनमालया सह आर्पयदिति ॥ २३ ॥

वी ॥ अस्तौषीदिति ॥ हे राजन् देवो देववरैरर्चितश्च तं कृष्णं भक्त्या प्रवणा या धीस्तयोपलक्षिता तुष्टाव ॥ २४ ॥

मु ॥ अथ भूदेवीकृतस्तुतिप्रकारमाह—अस्तौषीदित्यादिना॥ स्तुतिमकरोदित्यर्थः, विश्वस्य समस्तजगतः ईशं नियन्तारम् अत एव देवैः सुरैः देववरैः इन्द्रादिभिश्च अर्चितं भक्त्या प्रवणया तस्मिन्नासक्तया धिया प्रणता सती अस्तौषीत् ॥ २४ ॥

वी ॥ स्तुतिमेवाह—नमस्तइति॥ तावत्परत्वभक्तानुग्रहशीलत्वसर्वान्तरात्मत्वादिविशिष्टं,स्तुवन्ती नमस्करोति—देवानामिन्द्रादीनां देवो ब्रह्मा तस्येश भक्तेच्छया भक्तानु-

नमःपङ्कजनाभाय नमःपङ्कजमालिने । नमःपङ्कजनेत्राय नमस्तेपङ्कजाङ्घ्रये ॥ २६
नमोभगवतेतुभ्यं वासुदेवायविष्णवे । पुरुषायादिबीजाय पूर्णबोधायतेनमः ॥ २७
अजायजनयित्रेऽस्य ब्रह्मणेऽनन्तशक्तये । परावरात्मन्भूतात्मन्परमात्मन्नमोस्तुते ॥

ग्रहेच्छया उपात्तरूपाय गृहीतविग्रहाय तुभ्यं हे परमात्मन् नमः ॥ २५ ॥

मु ॥ परो मा अस्मादिति परमः सर्वकारणतया सर्वाधीशतया च सर्वोत्तम इत्यर्थः, स चासावात्मा चेति परमात्मन्, शङ्खचक्रगदाधरेति तदितरदेवताद्यसाधारणचिह्नधारणोक्त्या तदन्येषां परमात्मत्वं व्यावर्त्यते, अत एव देवदेवेश देवानां सुराणां देवाश्चतुर्मुखादयः तेषामपीश, तर्हि कथमेवं कर्मपरतन्त्रजनेषूत्पन्न इत्यत्राह—भक्तेच्छोपात्तरूपायेति । भक्तानामिच्छया दुष्टेभ्यः स्वरक्षणवाञ्छया हेतुना उपात्तरूपाय स्वीकृतविग्रहाय भक्तवाञ्छानुगुणमवतीर्णायेत्यर्थः, स्वत एव भक्तरक्षणेच्छया अवतीर्णायेति वा, ते नम इति जगत्कारणत्वभूषितं तत्स्वाभाविकाकारमनुसन्दधाना नमस्करोति॥२५॥

वी ॥ पङ्कजनाभायेति मन्त्रविशेषेण नमस्करोति—नमइति ॥ पङ्कजं चतुर्मुखोत्पत्तिस्थानभूतं नाभिर्यस्य तस्मै जगत्कारणभूतायेति भावः, अत एव सत्कीर्तिमयी पङ्कजमाला यस्य तस्मै पङ्कजनेत्राय पङ्कजवत्प्रपन्नजनतापत्रयोपशमननेत्राय पङ्कजवत्सौगन्ध्यसौकुमार्यादियुक्ताङ्घ्रये, अनेन भक्तैर्ध्येयत्वमुक्तम् ॥ २६ ॥

मु॥नम इति॥ पङ्कजनाभाय जगत्कारणचतुर्मुखजननकारणपद्मभूषितनाभायेत्यर्थः, स्वासाधारणालङ्कारपद्ममालाधरत्वमाह—पङ्कजमालिन इति । "यथा कप्यासं पुण्डरीकमेवमक्षिणी" इति श्रुत्युक्तपुण्डरीकाक्षत्वमाह—नमः पङ्कजनेत्रायेति । पङ्कजवत् भक्तसन्तापनिवर्तकशीतलकटाक्षपरिष्कृतनेत्रायेति वा पङ्कजाङ्घ्रय इत्यनेन आश्रितानां निरतिशयसौख्यापादकभोग्यताङ्घ्रित्वं च प्रकाश्यते, अयं च पूर्वं कुन्त्या भगवत्प्रसादकमन्त्र इति भूमिरप्यनेन नमस्यतीत्याहुः ॥ २६ ॥

वी ॥ अथ ध्येयत्वसमनियतकारणत्वविशिष्टं नमस्करोति—नमो भगवत इति ॥ भगवत इति कारणत्वोपयुक्तगुणपूर्तिरुच्यते, आदिबीजाय कारणाय, अनेन सृष्टिकारणत्वमुक्तम्, अथ स्थितिकारणत्वमाह—वासुदेवायविष्णवेपुरुषायेति । स्थितिर्हि मन्वाद्यन्तःप्रवेशस्वावतारादिभिः, तत्र वासुदेवायेत्यनेन वसुदेवपुत्रत्वादिरूपस्वावतारेण स्थितिरभिप्रेता, पुरुषायेत्यनेन मन्वादिपुरुषशरीरान्तःप्रवेशेन विष्णवइत्यनेन कृत्स्नजगदन्तरात्मतयाचाभिप्रेता, पूर्णबोधायेत्यनेन लयकारणत्वं सूचितम्, प्रलयदशायां स्वानन्दानुभवपूर्णाय असहायत्वेन स्थितायेत्यर्थः ॥ २७॥

मु ॥ अथ कारणत्वोपयुक्तगुणपूर्तिपूर्वकं तस्य सर्वकारणत्वं प्रपञ्चयन्ती स्तौति—नमो भगवते तुभ्यमित्यादिना॥ भगवते ज्ञानशक्त्यादिसम्पन्नाय,एतद्विवरणतया—पूर्णबोधाय अनन्तशक्तय इति चोच्यते, वासुदेवाय सर्वभूताश्रयाय विष्णवे सर्वव्यापिने पुरुषाय सर्वस्मात्कार्यजातात्पूर्वभाविने "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः, आदिबीजाय प्रधानकारणाय ॥ २७ ॥

वी ॥ अथ कारणत्वप्रयुक्तविकारादिदोषप्रसङ्गं वारयन्ती नमस्करोति—अजायेति॥ अस्य जगतो जनयित्रे अनेन निमित्तकारणत्वमुक्तम्, उपादानकारणत्वं त्वादिबीजायेति

त्वंवैसिसृक्षूरजउत्कटंप्रभो तमोनिरोधायविभर्ष्यसंवृतः ।
स्थानायसत्त्वंजगतोजगत्पते कालःप्रधानंपुरुषोभवान्परः ॥ २९

पुरस्तादेवोक्तम्, तथाऽव्यजाय कार्यगतोत्पत्त्यादिविकाररहिताय विकाराणां स्वशरीरभूतप्रकृतिपुरुषगतत्वादिति भावः, नहि लोके किञ्चिदेवं दृष्टमित्येवंविधदुर्घटत्वशङ्कां व्यावर्तयति—अनन्तशक्तयइति । अनन्ता अपरिमिताः शक्तयः स्वासाधारणाः अन्नचाद्देहिकत्वादय इव यस्य तस्मै ब्रह्मण इति दृष्टान्तार्थम्, यथा स्वरूपेण गुणैश्च निरतिशयबृहत्त्वं त्वदसाधारणं तथा कारणत्वमजत्वञ्चेति, तर्हि जगदुपादानत्वं केनाकारेणेत्यपेक्षायां "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुत्युक्तविधया चिदचिद्गतनामरूपनिर्वाहकत्वोपयुक्तान्तरात्मत्वेनेत्यभिप्रेत्य सम्बोधयति—परावरात्मन् उच्चावचजीवान्तरात्मन् भूतात्मन् अचिदन्तरात्मन्, अचिदन्तरात्मत्वं जीवसाधारणमिति तद्विशेषे पर्यवसाययति—परमात्मन्निति । परमात्मशब्दश्च गीताचार्येण निरुक्तः "यो लोकत्रयमाविश्य बिभर्त्यव्ययईश्वरः" इति, जीव आत्मापि स्वभावेन व्ययः, त्वं तु स्वरूपतस्स्वभावतश्चाव्यय इत्यभिप्रेतम् ॥ २८ ॥

मु ॥ अजाय जायते वर्धते विपरिणमते इत्यादिविकाररहिताय ब्रह्मणे बृहत्त्वादिगुणयुक्ताय अस्य प्रपञ्चस्य जनयित्रे स्रष्ट्रे तुभ्यं नम इति सम्बोधनत्रयेण सर्वजीवान्तरात्मत्वं पृथिव्यादिभूतशरीरकत्वं सर्वोत्कृष्टत्वं चोच्यते, अत्र आदिबीजाय जनयित्रे इति द्वाभ्यां तस्याभिन्ननिमित्तोपादानत्वमुक्तम्, तत्र भगवते पुरुषाय पूर्णबोधाय अनन्तशक्तय इति पदैः निमित्तस्य कर्तुः तस्य उपयुक्तगुणजातं तदितरैरुपादानानुगुणगुणजातं च, अजायेत्यनेन सम्बोधनैश्च उपादानभूतस्यापि तस्य विकारराहित्यमौज्ज्वल्यं च प्रकाश्यत इति विवेकः ॥ २८ ॥

वी ॥ उक्तनामभिरभिप्रेतमेव कारणत्वं सुव्यक्तमाह—त्वं वा इति ॥ हे विभो तावत्त्वं स्रष्टुमिच्छुः उत्कटं रजो बिभर्षि रजोगुणप्रधानचतुर्मुखाख्यदेहानुप्रवेशेन सृजसीत्यर्थः, जगतां विनाशाय संहाराय तमः प्रधानकाग्निरुद्रादीननुप्रविशसि, तथात्वेन विनाशयसीत्यर्थः, स्थानाय स्थितये तु हे जगत्पते उत्कटं सत्वं बिभर्षि, सत्त्वप्रधानमन्वादिशरीरको भूत्वा पालयसीत्यर्थः, न केवलं सृष्टयादिवत्पालनमपि सद्वारकमेव, अपि त्वद्वारकमपीत्यभिप्रायेण विशिनष्टि—असंवृतः असंवृतोऽपि जीवादिसंवरणरहितोऽपि केवलस्वावताररूपेणापि पालयसीत्यर्थः, उपादानकारणत्वप्रयुक्तं कार्यानन्यत्वं वक्तुं कारणत्वं न स्वरूपेण अपि तु प्रकृतिपुरुषकालवैशिष्ट्यरूपेणेत्यभिप्रेत्य कारणत्वावस्थायां प्रकृत्यादिशरीरकत्वमाह—कालइत्यादि । इदं सामानाधिकरण्यं शरीरात्मभावनिबन्धनम्, अत एव स्वरूपतादात्म्यनिबन्धनत्वाशङ्कानिरासाय विशिनष्टि—पर इति । परोऽन्यः सन्निहितत्वात्कालादेरन्य इत्यर्थः, "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति वदयं निर्देशः ॥ २९ ॥

मु ॥ सिसृक्षुः स्रष्टुमिच्छुः उत्कटं रजो बिभर्षि, तद्गुणप्रधानदेहाधिष्ठानेन सृजसीत्यर्थः, अन्यत्राप्येवं बोद्धव्यम्, तन्निरोधाय संहाराय स्थानाय स्थितये तथाप्यसंवृतः तद्गुणव्याप्तिरहितः परो भवान् कालः प्रधानं पुरुषश्च सृष्ट्याद्युपयोगिशक्तिभूतकालादिशरीरक इत्यर्थः ॥ २९ ॥

अहंपयोज्योतिरथानलोऽनिलो मात्राणिदेवामनइन्द्रियाणि ।
कर्तामहानित्यखिलंचराचरंत्वय्यद्वितीये भगवन्नयंभ्रमः ॥ ३०
तस्यात्मजोऽयंतवपादपङ्कजं भीतःप्रपन्नार्तिहरोपसादितः ।
तंपालयैनंकुरुहस्तपङ्कजं शिरस्यमुष्याखिलकल्मषापहम् ॥ ३१

(भगवतो नरकासुरान्तःपुरगतराजकन्यकाद्याहरणम्)

श्रीशुक उवाच-
इतिभूम्यार्चितोवाग्भिर्भगवान्भक्तिनम्रया। दत्वाऽभयंभौमगृहंप्राविशत्सकलर्द्धिमत्

वी ॥ अथ कार्यानन्यत्वमाह—अहमिति ॥ अहं पृथिवी पयो जलं ज्योतिष एव प्रदर्शनार्थमनल इत्युक्तम्, अनिल इति तत्कारणस्याकाशस्याप्युपलक्षणम्, मात्राणि गन्धादितन्मात्राणि. देवा इन्द्रियाधिष्ठातारः दिग्वातादयः, इन्द्रियाणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च दश, कर्ता देहेऽहं बुद्धिहेतुत्वात्कर्तेत्यहङ्कारो विवक्षितः, यद्वा महानिति तत्कार्यस्याहङ्कारस्याप्युपलक्षणम्. कर्ता जीवः "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रात् इत्येवंविधमखिलं चराचरात्मकं जगत् अद्वितीये स्वतुल्यवस्त्वन्तररहिते त्वय्येव प्रकृतिपुरुषकालशरीरके त्वय्ये मृदि घट इव वर्तत इति शेषः, अतो मृदयं घट इति वत्त्वदभिन्नमेवेत्यर्थः, यद्वा उपादानत्वं कालादिवैशिष्ट्यरूपेणेत्यभिप्रायेण तेभ्योऽन्यत्वमाह—पर इति। तर्हि किं निबन्धनमिति जिज्ञासायां शरीरात्मभावनिमन्धनमित्युपपादयति—अहमिति। त्वय्येवान्तः प्रविश्य धारके आत्मन्यवतिष्ठत इत्यर्थः, पृथिव्यादिषु स्वतन्त्रबुद्धिस्तु भ्रमात्मिकेत्याह—अयंभ्रमइति। अयं पृथिव्यादिषु स्वतन्त्रवस्तुत्वप्रत्ययो भ्रमः भ्रमात्मक इत्यर्थः। व्यासार्यैस्तु 'देहानां जीवाभिमानभ्रमहेतुत्वात्पृथिव्यादितत्त्वजातं भ्रम इत्युच्यते" इति व्याख्यातम् ॥ ३० ॥

मु ॥ एतदेव प्रपञ्चयति—अहमिति ॥ अहं पृथिवी, मात्राणि पञ्च तन्मात्राणि. देवाः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि, यद्वा देवशब्देन इन्द्रियाभिमानिदेवता उच्यन्ते, देहे अहंबुद्धिहेतुत्वात् कर्तेत्यहङ्कारो विवक्षितः, महान् अहङ्कारकारणं प्रकृतेः प्रथमविकारः देहानां जीवाभिमानभ्रमहेतुत्वात् पृथिव्यादितत्त्वजातं भ्रमइत्युच्यते, तथा च अहमित्यारभ्य कर्ता महानित्ययम् भ्रमः अखिलं चराचरं कार्यप्रपञ्चश्च अद्वितीये समाभ्यधिकरहिते त्वय्येवेति धारके त्वयि धार्यतया वर्तत इत्यर्थः ॥ ३० ॥

वी ॥ एवं स्तुत्वा किञ्चित्प्रार्थयते—तस्येति ॥ अयं भगदत्तनामा तस्य भौमस्यात्मजः भीतस्सन् हे प्रपन्नार्तिहर तव पादपङ्कजमुपसादितः, तं प्रपन्नमेनं पालय, अमुष्य भगदत्तस्य शिरसि अखिलाशुभहन्तृ त्वत्करपङ्कजं कुरु निधेहि ॥ ३१ ॥

मु ॥ एवं स्तुत्वा किञ्चिद्याचते—तस्येति ॥ तस्य नरकस्य आत्मजः अयं भगदत्ताख्यः भीतः अत एव तव पादपङ्कजम् उपसादितः मया प्रापितइ त्यर्थः ॥ ३१ ॥

वी ॥ इतीति ॥ भक्त्या नम्रा प्रणता तया भूम्या कर्त्र्या वाग्भिः साधनभूताभिरर्चितः सकला ऋद्धयः भोग्यभोगोपकरणादिसमृद्धयो यस्मिन् सन्तीति तद्भौमस्य गृहं प्राविशत् ॥ ३२ ॥

मु ॥ ३२ ॥

तत्र राजन्यकन्यानां षट्सहस्राधिकायुतम् । भौमाहृतानां विक्रम्य राजभ्यो ददृशे हरिः ॥
तं प्रविष्टं स्त्रियो वीक्ष्य वरवर्यं विमोहिताः । मनसा वव्रिरेऽभीष्टं पतिं दैवोपपादितम् ॥ ३४
भूयात्पतिरयं मह्यं धाता तदनुमोदताम् । इति सर्वाः पृथक्कृष्णे भावेन हृदयं दधुः ॥ ३५
ताः प्राहिणोद्द्वारवतीं सुमृष्टविरजोऽम्बराः । नरयानैर्महाकोशान्रथांश्वद्रविणं महत् ॥ ३६
ऐरावतकुलेभांश्च चतुर्दन्तांस्तरस्विनः । पाण्डुरांश्च चतुष्षष्टिं प्रेषयामास केशवः ॥ ३७

(पारिजाताहरणवृत्तान्तः)

गत्वा सुरेन्द्रभवनं दत्वादित्यै च कुण्डले । पूजितस्त्रिदशेन्द्रेण महेन्द्राण्या च सप्रियः ॥ ३८
चोदितो भार्ययोत्पाट्य पारिजातं गरुत्मति ।

---

वी ॥ तत्रेति ॥ पराक्रम्य राजभ्यो भौमेनाहृतानां राजकन्यानां षट्सहस्राण्यधिकानि यस्मिन् तदयुतं दश सहस्राणि षोडश सहस्राणीत्यर्थः, ददर्श ॥ ३३ ॥

मु ॥ तत्रेति ॥ विक्रम्य विक्रमं कृत्वा राजभ्यो भौमेन आहृतानां राजन्यकन्यानां षट्सहस्राणि अधिकानि यस्मिन् तदयुतं दशसहस्राणि षोडश सहस्राणीत्यर्थः, शतमप्यधिकं ज्ञातव्यम्, यथाह पराशरः—"कन्यापुरे स कन्यानां षोडशातुलविक्रमः । शताधिकानि ददृशे सह[illegible]णि महामतिः" इति, राजभ्य इति देवादीनामुपलक्षणम्, तथाहि तेनैवोक्तं—"देवसिद्धसुरादीनां नृपाणां च" इत्यादिना ॥ ३३ ॥

वी ॥ तमिति ॥ वरवर्यं वरश्रेष्ठं तं कृष्णं दैवेन प्रापितं भाग्यलब्धमभीष्टं पतिं मेनिरे ॥ ३४ ॥

मु ॥ दैवोपपादितं भाग्यलब्धम् ॥ ३४ ॥

वी ॥ मननप्रकारमेव दर्शयति—भूयादिति ॥ मह्यं मम तदस्मदभिमतं धाता ब्रह्मा अनुमोदताम् अनुगृह्णातु सत्यापयत्वित्यर्थः, इतीति । पृथक् प्रत्येकं भावेन उक्ताभिसन्धिना कृष्णे हृदयं चित्तं दधुः निदधुः ॥ ३५ ॥

मु ॥ ३५ ॥

वी ॥ ता इति ॥ विगतमालिन्यान्यम्बराणि यासां तास्सुमृष्टाश्च स्नापिताः धौतवस्त्राद्यलङ्कारिताश्चेत्यर्थः, नरयानैरान्दोलिकाभिः द्वारकां प्रति प्रेषयामास, तथा महान्कोशो येषांताननर्घान्रथादीन्विपुलं धनं च प्राहिणोत् प्रेषयामास ॥ ३६ ॥

मु ॥ सुमृष्टाः कमनीयाः विरजोम्बराः निर्मलवाससः ताश्च ताः नरयानैः शिबिकाभिः प्राहिणोत् प्रेषितवान्, महान् कोशो मूलधनं येषां तान् महार्घानित्यर्थः ॥ ३६ ॥

वी ॥ ऐरावतेति ॥ चत्वारो दन्ता येषां तान् तरस्विनः बलीयसः ऐरावतकुलोद्भवान् अत एव पाण्डुरांश्चतुष्षष्टिसङ्ख्याकान् प्रेषयामास ॥ ३७ ॥

मु ॥ ३७ ॥

वी ॥ गत्वेति ॥ सप्रियस्ससत्यभामः इन्द्राण्या शच्या पूजितः भार्यया सत्यभामया चोदितः प्रेरितः पारिजातं तरुमुत्पाट्य गरुत्मत्यारोप्य सेन्द्रान्देवान्युद्धे निर्जित्य पुरं द्वारकां प्रति प्रापयामास ॥ ३८ ॥ ३९ ॥

आरोप्यसेन्द्रान्विबुधान्निर्जित्योपानयत्पुरम् ॥
स्थापितस्सत्यभामाया गृहोद्यानोप[1]शोभनः ।
अन्वगुर्भ्रमरास्स्वर्गात्[2]तद्गन्धासवलम्पटाः ॥ ४०
ययाचआनम्यकिरीटकोटिभिः पादौस्पृशन्नच्युतमर्थसाधनम् ।
सिद्धार्थएतेनविगृह्यतेमहानहोसुराणांचतमोधिगाढ्यताम् ॥ ४१

नरकान्तःपुराहृतराजकन्यकोद्वाहादि वृत्तान्तः

[3]अतोमुहूर्तएकस्मिन्नानागारेषु ताःस्त्रियः । [4]तथोपयेमेभगवांस्तावद्रूपधरोऽव्ययः ॥

मु ॥ सप्रियः प्रियया सत्यभामया सहितः महेन्द्राण्या शच्या पूजितः, भार्यया चोदितः प्रेरितस्सन् पारिजातमुत्पाट्य गरुत्मति आरोप्य सेन्द्रान् विबुधान् पारिजातग्रहणार्थं युद्धसन्नद्धानित्यर्थः, निर्जित्य पुरं द्वारकाम् उपानयदिति ॥ ३९ ॥

वी ॥ स च तरुः स्थापितः आलवाल इति शेषः, सत्यभामाया गृहारामे शोभावहो बभूव, तस्य सौरभमकरन्दयोः लोलुपाः भ्रमराः स्वर्गादन्वगच्छन्, सेन्द्रान्विबुधान्निर्जित्येतीन्द्रकृष्णयोः पारिजातार्थसङ्ग्राम उक्तः ॥ ४० ॥

मु ॥ स्थापितः आरोपितस्सन् सत्यभामायाः यत् गृहोद्यानं गृहारामः तस्योपशोभितः शोभावहोऽभूदित्यर्थः, कर्तरिक्तः, यस्य गन्धासवयोः सौरभमकरन्दयोः लम्पटाः लोलुपाः भ्रमराः स्वर्गात् अन्वगमन् अनुगताः, स स्थापित इति पूर्वेणान्वयः, यत्तदोर्नित्यसम्बन्धात् ॥ ४० ॥

वी ॥ नन्विन्द्रः पराजितः किमकरोत्तदाह —ययाच इति ॥ आनम्य इन्द्रो मूर्धानमिति कर्तृकर्मपदाध्याहारः,किरीटाग्रैः पादौ स्पृशन् अर्थसाधनमाश्रितजनाभिमत प्रयोजननिष्पादकं कल्पतरुं ययाचे, तमेवं कृतवन्तमिन्द्रं निन्दति—सिद्धार्थइति।तावन्निष्पन्नस्वप्रयोजनस्समनन्तरमेतेन स्वप्रयोजनसाधकेन भगवता विगृह्यते विरुध्यते, तत्समनन्तरमेव महान् याच्ञया प्राप्तकल्पतरुत्वेनाढ्यो बभूव,तस्मादहो सुराणां तमः अहङ्कारमाढ्यतां च धिक् तदुभयं निन्द्यमित्यर्थः ॥ ४१ ॥

मु ॥ अथेन्द्रः किमकरोत्तदाह—ययाच इति ॥ आनम्य दण्डवत्प्रणम्य किरीटस्य कोटिभिः अग्रिभिः पादौ स्पृशन् अच्युतमर्थसाधनं ययाच इति द्विकर्मकोऽयं धातुः, अर्थस्य सकलजनाभिलषिततत्तद्वस्तुजातस्य साध्यतेऽनेनेति व्युत्पत्त्या साधनमितिल्युडन्तः, सकललोकवाञ्छितार्थकल्पकतरुमित्यर्थः, ययाचे, ततः किम् , अत आह—सिद्धार्थ इति । सिद्धः फलितोऽर्थः प्रयोजनं यस्य सः अभूदिति, तथा च इन्द्रो महापुरुषः एतेन कृष्णेन विगृह्यते विग्रहो युद्धं भगवानपि युद्धेन प्रत्यर्थीक्रियत इत्यर्थः, अहो सुराणामपि तमो मोहः, अतः तेषाम् आढ्यतां धिगिति ॥ ४१ ॥

वी ॥ अतइति ॥ अतस्ततः एकस्मिन्नेव मुहूर्ते नाना बहुष्वगारेषु यावत्यः स्त्रियस्तावत्सु गृहेष्वित्यर्थः, तथा तावन्ति रूपाणि शरीराणि धरतीति तथाभूतः ताष्षोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीरुपयेमे उदवोढेति भगवन्महिमातिशयोक्तिः ॥ ४२ ॥

मु ॥ अथो अनन्तरम् एकस्मिन् एव मुहूर्ते नानागारेषु ता या वत्यः तावत्सु गृ-

१. शोभितः मु. भा. प्र.पा ॥ २. यद्गन्धासवलम्पटाः. मु. भा. प्र. पा ॥ ३. अथो. मु. भा. प्र. पा ॥ ४. यथा. मु. भा. प्र. पा ॥

गृहेषुतासामनपाय्यतर्क्यकृन्निरस्तसाम्यातिशयेष्ववस्थितः ।
रेमेरमाभिर्निजधामसंप्लुतोयथेतरोगार्हमेधिकांश्चरन् ॥ ४३

स्वदारेषुपृथग्भावोभक्तचित्तानुवर्तिनः। अनन्तस्याद्वितीयस्यकिंनुचित्रंमुरद्विषः॥४४

योगेश्वरेश्वरःकृष्णोभक्तैरद्यापिलक्ष्यते। अन्तर्बहिस्समन्ताच्चशतधाचसहस्रधा॥ ४५

---

हेष्वित्यर्थः, तावन्ति रूपाणि मूर्तीः धरतीति तथा सन् अव्ययः स्वरूपतो गुणतश्च व्ययरहितः समाप्तिरहितः ता यथा यथावत् उपयेमे, अत एकस्मिन्नेव मुहूर्ते नानागृहेषु देवक्यादिपितृबन्धुसमागमसहितमेव स्थितस्सन् सर्वास्ताः पाणिग्रहणमकरोदिति भगवतो महिम्नः परा काष्ठोच्यते ॥ ४२ ॥

वी॥अहो तासां भाग्यमित्याह—गृहेष्विति॥ अतर्क्याण्यचिन्त्यानि चेष्टितानि करोतीति तथा स भगवान्निजधाम्ना स्वतेजसा उपात्तमनुजरूपत्वेऽप्यपरित्यक्तस्वासाधारणप्रभावेनेत्यर्थः, संप्लुतो व्याप्तोऽपि स्वानन्दानुभवपूर्णोऽपि वा, निरस्तसाम्यातिशयेषु भोग्यादिसमृद्ध्या समाभ्यधिकरहितेषु तासां गृहेषु अनपायी विश्लेषरहितोऽवस्थितः प्राकृतजनवत् गार्हमेधिकान् गृहस्थधर्मांश्चरन् अनुतिष्ठन् रमाभिः रमणीयाभिः स्त्रीभिस्सह रेमे ॥ ४३ ॥

मु ॥ अहो तासां भाग्यमहिमेत्याह त्रिभिः—गृहेष्विति ॥ अतर्क्याणि केनापि ईदृशानीति निश्चेतुमशक्यानि चेष्टितानीत्यर्थः, करोतीति अतर्क्यकृत् अचिन्त्यचेष्टितकारीत्यर्थः, कृष्णः निजधाम संप्लुतः मनुष्यावतारत्वेऽपि अतिरोहितस्वाभाविकौज्ज्वल्यव्याप्तः सन् निरस्तसमातिशयेषु भौमाभौमसमस्तवस्तुपूर्त्या समाभ्यधिकरहितेषु तासां गृहेषु अनपायी विश्लेषरहितस्सन् इतरो यथा प्राकृतजनवत् गार्हमेधिकान् गृहमेधी गृहस्थः तद्विहिता धर्मा गार्हमेधिकाः तांश्चरन् आचरन् रमाभिः अभिरामाभिः लक्ष्म्यंशभूताभिरिति वा, ताभिस्सह रेम इति ॥ ४३ ॥

वी ॥ अतिचित्रमेतदेकस्यानेकथा भवनमिति विस्मयमानं प्रत्याह—स्वदारेष्विति॥ अपरिच्छिन्नस्य समाभ्यधिकरहितस्य स्वभक्तचित्तानुवर्तिनो मुरारेः स्वदारेषु पृथग्भावः एकदैव तत्तद्दाराभिमतरूपधारणं किं चित्रं तदद्भुतचेष्टितेषु नेदं चित्रमित्यर्थः॥४४॥

मु ॥ नन्वेकस्य तस्य तासां मनोरथानुगुणरूपधारणेन वृत्तिः कथमित्याशङ्क्य समाधत्ते—स्वेति ॥ अखण्डस्य परिच्छेत्तुमशक्यस्वरूपस्य समाभ्यधिकरहितस्य तथापि भक्तचित्तानुसारिणः भक्तमनोरथानुगुणं तद्रूपधारिण इत्यर्थः, मुरशासितुः श्रीकृष्णस्य स्वदारेषु पृथग्भावः एकदैव तत्तद्दारेष्टरूपधारणेन तत्तत्प्रत्यासक्तिरित्यर्थः, किं चित्रं तदद्भुतकृत्येषु इदं कियदित्यर्थः ॥ ४४ ॥

वी ॥ भक्तचित्तानुवर्तिन इति विशेषणाभिप्रेतं व्यनक्ति—अद्यापि न केवलं तदैव अपित्वधुनाऽपि, योगेश्वरेश्वरो योगनिर्वाहकः कृष्णोऽन्तर्हृदि बहिस्तत्रापि समन्ताच्च भक्तैः परिपूर्णभक्तियोगैः शतधा सहस्रधा च लक्ष्यते ॥ ४५ ॥

मु ॥ भक्त्या तत्साक्षात्कारिणो धन्या अद्यापि सन्त्येवेत्याह—अद्यापीति ॥ भक्तैर्दृश्यते भक्तिरूपचक्षुषा साक्षात्क्रियत इत्यर्थः, भक्तैः योगमहिम्ना साक्षात्कृतभगवद्वै-

इत्थंरमापतिमवाप्यपतिंस्त्रियस्ताब्रह्मादयोऽपिनविदुःपदवींयदीयाम् ।
भेजुर्मुदाऽविरहमेधितयाऽनुरागहासावलोकनवसङ्गमजल्पलज्जाः ॥ ४६
प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रवणवीजनगन्धमाल्यैः ।
केशप्रसाधशयनस्नपनोपहारैर्दासीशता अपि विभोर्विदधुस्स्मदास्यम्॥ ४७
इति श्रीभागवते महापुराणे दशमस्कन्धे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

श्रीरुक्मिणीकृष्णयोः परस्परनर्मोक्तिघट्टः

श्रीशुक उवाच–
कर्हिचित्सुखमासीनंस्वतल्पस्थंजगद्गुरुम् । पतिंपर्यचरद्भैष्मीव्यजनेनसखीजनैः॥ १

श्वरूप्यैरित्यर्थः, योगो भगवद्ध्यानम् , तैलधारावदविच्छिन्नप्रत्यक्षसमानाकारस्मृतिसन्तानरूपं तत्र ईश्वराः समर्थाः महात्मानः तेषामीश्वरः ध्येयतया तत्फलप्रदातृतया च अवस्थितः स्वामीत्यर्थः, "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्युक्ततन्महिमानमाह—अन्तरिति ॥ ४५ ॥

वी ॥ अथाहरहस्तासां वृत्तिक्रममाह—इत्थमितिद्वाभ्याम् ॥ रमापतिं श्रीकृष्णम् , तं विशिनष्टि—यस्य श्रीकृष्णस्य संबन्धिनीं पदवीं महिमानं ब्रह्मादयोऽपि न विदुः,तं पतिमवाप्य अविरहमविच्छिन्नं सन्ततमिति यावत् , तद्यथा तथा वर्धितया मुदा अनुरागसहितो हासस्तत्पूर्वकावलोकश्च तत्पूर्वको नवसङ्गमश्च तत्र जल्पाः नर्मवचनानि तेषु लज्जां भेजुः प्रापुः ॥ ४६ ॥

मु ॥ अथ भगवति तासां प्रत्यहं वृत्तिक्रममाह—इत्थमित्यादिना द्वयेन ॥ यदीयां पदवीं ब्रह्मादयोऽपि न विदुः, तं रमापतिमेव पतिमवाप्य ताः स्त्रियः अनुरागहाससहितावलोकः अनुरागहासावलोकः तत्पूर्वको यो नवसङ्गमः तत्र जल्पाः नर्मवचनानि तेषु लज्जाः ताः कर्म अविरतं सन्ततम् एधितया वर्धितया मुदा भेजुरिति ॥ ४६ ॥

वी ॥ किञ्च प्रत्युद्गमेति ॥ दास्यश्शतानि यासां तथाभूता अपि स्वयमेव विभोर्भर्तुः प्रत्युद्गमादिभिः दास्यं विदधुः चक्रुः, तत्र प्रत्युद्गमः प्रत्युत्थानम्,आसनवरार्हणमासनश्रेष्ठसमर्पणम् , पादशौचं पादप्रक्षालनम् , विश्रमणं पादसंवाहनादिना श्रमापहरणम् ॥४७॥

मु ॥ विश्रमणं पादसंवाहनादिना श्रमापहरणम्, केशप्रसाधः केशप्रसाधनम्, स्नपनम् अभिषेचनम् , दासीशता अपि दासीशतयुक्ता अपि ताभिस्तद्दास्यमकारयित्वा स्वयमेव विभोर्दास्यं विदधुरिति ॥ ४७ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायामेकषष्टितमोऽध्यायः ॥ ६१ ॥

वी ॥ अथ भगवतो रुक्मिण्या सह प्रेमकलहं वर्णयति षष्टितमेन—कर्हिचिदिति ॥ भैष्मी रुक्मिणी जगद्गुरुं स्वपर्यङ्कस्थं तत्रापि सुखं यथा तथा आसीनं सखीजनैस्सहिता व्यजनेन चामरेण पर्यचरदुपचचार ॥ १ ॥

यस्त्वेतल्लीलयाविश्वंसृजत्यत्त्यवतीश्वरः।सहिजातस्स्वसेतूनांगोपीथाययदुष्वजः॥ २
तस्मिन्नन्तर्गृहेभ्राजन्मुक्तादामविलम्बिना। विराजितेवितानेनदीपैर्मणिमयैरपि॥ ३
मल्लिकादामभिर्धूपैर्द्विरेफकुलनादितैः।

मु ॥ प ॥ भक्तचित्तानुरागस्य स्वस्मिन् दार्ढ्यविवित्सया।
भगवत्कृतकोपोऽपि भद्रायेत्यत्र सूच्यते ॥

अथ साक्षाल्लक्ष्मीभगवतोर्लीलामनुष्ययोः रुक्मिणीश्रीकृष्णयोः तदानुगुण्येन प्रवृत्तं नर्मविवादं वर्णयति—कर्हिचिदित्यादिना ॥ तत्रापि भगवतो रुक्मिणीं प्रत्यप्रियोक्तेः प्रयोजनं मुनिनैवोत्तरत्रोच्यते ॥ सुखं यथा तथा आसीनं सा आसिका कुत्रेत्यत्राह—स्वतल्पस्थमिति। स्वस्य पर्यङ्के स्थितं सखीजनैस्सह पर्यचरत् उपचचार ॥ १ ॥

वी ॥ एतदेव प्रपञ्चयति—यस्त्वित्यादिना उपासाञ्चक्रेईश्वरमित्यन्तेन ॥ तावज्जगद्गुरुत्वं प्रपञ्चयति—यस्त्विति॥ सृजति स्वाराधनोपयुक्तकरणकलेबरादिप्रदानेन हितं करोति, अत्ति संहरति संसरतां जीवानां प्रलयमुखेन विश्रान्तिरूपहितं करोति, अवति पालयति अनिष्टनिरसनेष्टप्रापणरूपहितं करोतीति भावः किञ्च सेतूनां स्वकृतधर्ममर्यादानां गोपीथाय रक्षणाय यदुषु जातः, कथंभूतोऽपि? अजोऽपि कर्मायत्तोत्पत्तिरहितोऽपि स्वेच्छया यदुष्ववतीर्ण इत्यर्थः, गुरुत्वं हितैककारित्वम्. एवं जगद्गुरुरिति भावः, य एवंविधस्तमीश्वरमुपतस्थ इति यच्छब्दस्य सम्बन्धः ॥ २ ॥

मु ॥ ननु कथं तस्य भगवतः प्राकृतजनवन्नर्मविवादादिकमिति शङ्काव्युदासाय प्रस्तुतविवादस्य मनुष्यसाजात्यविडम्बनानुगुण्यं स्फोरयन्नत्र पुनः पूर्वं बहुशः प्रपञ्चितमेव तस्य सर्वेश्वरत्वं स्मारयन्नाह—यस्त्विति॥ अत्ति संहरति.अत्र संहारस्य अत्तीत्यदनक्रियाप्रयोगः "ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनम्" इत्यादिश्रुत्युक्तक्रमेणेति बोध्यः, सेतूनां जगद्रक्षणार्थं स्वकल्पिततत्तन्मार्यादानां गोपीथाय रक्षणाय अजोऽपि यदुषु जात इति वस्तुतः स्वयमुत्पत्त्यादिप्राकृतविकाररहितोऽपि करुणापरवशतया स्वेच्छया तथाऽवतीर्ण इत्यर्थः ॥ २ ॥

वी॥अथ स्वतल्पस्थमित्युक्ततल्पं वर्णयितुं तावत्तल्पाश्रयमन्तर्गृहं वर्णयति—तस्मिन्निति त्रिभिः ॥ तच्छब्दः प्रसिद्धिपरः, तृतीयान्तानां विराजित इत्यनेनान्वयः, भ्राजन्ति भ्राजमानानि मुक्तादामानि तेषां विलम्बो यस्मिन् तेन वितानेन उल्लोचेन मणिमयैरपि दीपैरित्यर्थः ॥ ३ ॥

मु॥ आदौ तावत् त्रिभिः केलीगृहं वर्णयति—तस्मिन्निति ॥ तथा प्रसिद्ध इत्यर्थः, यद्वा यस्मिन् गृहे एतावत्पर्यन्तम् अप्रियगन्धरहितैः सरससंलापैरुद्वेलविहारः कृतः, तस्मिन्नेवेत्यर्थः, भ्राजन्मुक्तादामविलम्बिना भ्राजद्विलम्बमानमुक्तादामवतेत्यर्थः, भ्राजतां वितानाञ्चलेषु दीप्यमानानां मुक्तादाम्नां विलम्बो विलम्बनमस्यास्तीति तेनेति वा, यद्वा भ्राजन्मुक्तादामसु तन्मयेष्वेवाधारसूत्रेष्वित्यर्थः, विलम्बिना लग्नेन तत्सूत्रबद्धेनेत्यर्थः, वितानेन उल्लोचेन विराजित इति पदेन तृतीयान्तानामन्वयः ॥ ३ ॥

वी ॥ द्विरेफाणां भ्रमराणां कुलेन समूहेन नादितैः मल्लिकादामभिश्च विराजित इत्यन्वयः, नादित इति पाठान्तरम्, तदा सौरभलोभभ्रमद्भ्रमरकुलैः नादिते तत्र हेतु

जालरन्ध्रप्रविष्टैश्चगोभिश्चन्द्रमसोऽरुणैः ॥ ४
पारिजातवनामोदवायुनोद्यानशोभिना । धूपैरगरुजैराजञ्जालरन्ध्रविनिर्गतैः ॥ ५
पयःफेननिभे शुभ्रेपर्यङ्केकशिपूत्तमे । उपतस्थेसुखासीनंजगतामीश्वरंपतिम् ॥ ६
वालव्यजनमादायरत्नदण्डंसखीकरात् । तेनवीजयतीदेवीउपासांचक्रईश्वरम् ॥ ७
सोपाच्युतंक्वणयतीमणिनूपुराभ्यांरेजेङ्गुलीयवलयव्यजनाग्रहस्ता ।
वस्त्रान्तगूढकुचकुङ्कुमशोणहारभासानितम्बधृतयाचपरार्ध्यकाञ्च्या ॥ ८

---

मल्लिकादामभिर्धूपैश्च विराजित इति, अरुणैः औदयकालिकत्वादिति भावः, जालरन्ध्रद्वारा अन्तःप्रविष्टैः चन्द्रमसो गोभिः किरणैश्च ॥ ४ ॥

मु ॥ द्विरेफकुलनादितैः सौरभलोभपरिभ्रमद्भ्रमरकुलनादितैः, तत्र हेतुमाह—मल्लिकादामभिः धूपैश्च विराजित इति। अरुणैः उदयकालरक्तैः गोभिः किरणैः ॥ ४ ॥

वी ॥ उद्यानवेन शोभते रोचते इति तथा तेन पारिजातवनामोदेन युक्तेन वायुना अगरुजैरगरुकाष्ठजैः गवाक्षरन्ध्रविनिर्गतैः धूपैश्च हे राजन् ॥ ५ ॥

मु॥ उद्याने शोभते मन्दप्रसरणेन स्पृहणीयतया प्रकाशत इति तच्छोभिना पारिजातवनस्य कल्पवृक्षषण्डस्य आमोदवायुना तत्पुष्पसौरभसुरभितपवनेन च जालरन्ध्रविनिर्गतैः गवाक्षविवरप्रसृतैः अगुरुजैः अगुरुकाष्ठजन्यैः धूपैश्च विराजिते तस्मिन्नेव गृहे ॥ ५ ॥

वी ॥ अथ तल्पं वर्णयति—पयःफेनेति ॥ दुग्धफेनवन्मृदुले धवलेच पर्यङ्के यत्कशिपूत्तममास्तरणश्रेष्ठं तस्मिन् सुखं यथा तथा आसीनं पतिम् उपतस्थे सन्निधिमवापेत्यर्थः ॥ ६ ॥

मु ॥ पयसः क्षीरस्य फेननिभे डिण्डीरसदृशे तथा धवले मृदुलेचेत्यर्थः, पर्यङ्कस्य शय्यायाः कशिपूत्तमे उपर्यास्तीर्णहंसतूलिकामयाच्छादने सुखासीनं पतिं भर्तारम्, सोऽपि लौकिकभर्तेव न सामान्य इत्याह––जगतामीश्वरमिति । उपतस्थे सेवापरतया सन्निधिमवापेत्यर्थः ॥ ६ ॥

वी ॥ रत्नमेव दण्डस्थानीयं तदाकारं च यस्य तद्वालव्यजनं चामरं सख्याः कराद्धस्तादादाय तेन वालव्यजनेन वीजयन्ती देवी रुक्मिणी उपासाञ्चक्रे तमेव पश्यन्त्यवतस्थ इत्यर्थः ॥ ७ ॥

मु ॥ सेवोपयुक्तपरिकरेण तां विशिंषन्नाह—वालव्यजनमिति ॥ अत्र रत्नमयदण्डयुक्तं रत्नखचितदण्डयुक्तमिति वार्थः, वालव्यजनं चामरम्, उपासांचक्रे उपासांचकार ॥ ७ ॥

वी॥ तादात्विकीं तामनुवर्णयति—सेति॥ सा रुक्मिणी उपाच्युतम् अच्युतसमीपे मणिमयनूपुराभ्यां क्वणयती ध्वनिमुत्पादयन्ती अङ्गुलीयादयोऽग्रहस्ते हस्ताग्रे यस्यास्सा वस्त्राञ्चलेन गूढयोः स्थगितयोः कुचयोः कुङ्कुमेन शोणो यो हारः तस्य भासा दीप्त्या नितम्बयोः धृतया परार्ध्यया अनर्घ्यया काञ्च्या च रेजे ॥ ८ ॥

मु ॥ उपाच्युतम् अच्युतसमीपे अङ्गलीयानि मणिमुद्रिकाः वलयौ कङ्कणौ वाल-

तांरूपिणींश्रियमनन्यगतिंनिरीक्ष्ययालीलयाधृततनोरनुरूपरूपा ।
प्रीतस्स्मयन्नलककुण्डलनिष्ककण्ठवक्त्रोल्लसत्स्मितसुधांहरिराबभाषे ॥ ९

श्रीभगवानुवाच—
राजपुत्रीप्सिताभूपैर्लोकपालविभूतिभिः।महानुभावैश्श्रीमद्भीरूपौदार्य[1]बलोर्जितैः॥

व्यजनं च अग्रहस्ते हस्ताग्रे यस्यास्सा सती सा क्वणयती मणिनूपुराभ्यां रेजे इतस्ततः सञ्चारेण मणिनूपुरौ क्वणयन्ती ताभ्यां रेज इत्यर्थः, किञ्च वस्त्रान्तेन गूढयोः पिहितयोः कुचयोः कुङ्कुमेन शोणानाम् अरुणवर्णानां हाराणां भासा च नितम्बे धृतया परार्ध्यया श्रेष्ठया काञ्च्या च रेजे इति ॥ ८ ॥

वी ॥ तामिति ॥ तां रुक्मिणीं निरीक्ष्य प्रीतो हरिः स्मयन्नीषद्धसन् आबभाषे उवाचेति संबन्धः, कथंभूतां ? रूपिणीं मनुष्यरूपधारिणीं श्रियं महालक्ष्मीं न विद्यते अन्यः पतिः प्रत्यवतारं यस्यास्ताम् अनन्यगतामितिपाठान्तरम,तदा न विद्यते अन्या गतिः प्राप्तिः यस्यास्ताम् अनन्यप्राप्यामित्यर्थः, धृततनोः उपात्तमनुष्यरूपस्य हरेर्या अनुरूपा ताम् अलकैः कुन्तलैः कुण्डलाभ्यां निष्केण पदकाख्यभूषणेन अलङ्कृतेन कण्ठेन चतुर्दिक्षु शोभिते वक्त्रे उल्लसन्ती स्मितमेव सुधा यस्यास्तां यद्वा अलककुण्डलनिष्काणि यथास्थानं कण्ठवक्त्रयोः यस्यास्ताम् , अनेन अनपायिनोः श्रीश्रीपत्योर्वक्ष्यमाणो विवादः केवलं नृलोकविडम्बनायेति सूच्यते ॥ ९ ॥

मु ॥ ततः किम् , अत आह—तामिति ॥ तां निरीक्ष्य प्रीतस्सन्नित्यनेन प्रस्तुतकलहस्य प्रणयगर्भत्वमुच्यते, हरिराबभाषे, कथंभूतामित्यत्राह—येति । या धृततनोः प्रगृहीतमनुष्यदेहस्य स्वस्य अनुरूपम् अनुगुणं रूपं देहो यस्यास्सा, यथोक्तं श्रीपराशरेण —"देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी । विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम्" इति, अत एव रूपिणीं मानुषमूर्तिमतीं श्रियं साक्षात् लक्ष्मीम् अनन्यगतिम् असम्भावितप्राप्यान्तराम् अलकैः कुण्डलाभ्यां च निष्केन पदकाख्यभूषणेन च अलङ्कृतेन कण्ठेन च सर्वतः सर्वत्र शोभिते विराजिते वक्त्रे उल्लसत् उदयत् स्मितमेव सुधा यस्यास्तां यद्वा अलककुण्डलनिष्कानि यथार्हं कण्ठवक्त्रयोर्यस्यास्सा उल्लसन्ती स्मितसुधा यस्यास्सा तां च तां चेति, एवंविधां तां हरिराबभाषे, अनेन पूर्णानन्दयोः पाररहितयोः सत्यकामयोः आद्यदम्पत्योः तयोः वक्ष्यमाणविवादः स्वावतारानुगुण्येन नृलोकविडम्बनायेति स्फोर्यते ॥ ९ ॥

वी ॥ भाषणमेवाह—राजपुत्रीत्यादिभिरेकादशभिः ॥ तात्पर्यतस्तामुपचरन्तीमभिनन्दयन्नेव शब्दवृत्त्या कोपयन्निव कूटवचांसि प्रयुङ्क्ते—हे राजपुत्रि लोकपालानामिव विभूतिरैश्वर्यं येषां महान्प्रभावो येषां भोग्यादिसमृद्धिमद्भिः लोकपालविभूतिभिरित्यस्यैव प्रपञ्चः, श्रीमद्भिः रूपादिभिरुच्छ्रितैः उत्कृष्टैः भूपैः त्वमीप्सिता, रूपं सौन्दर्यम् , औदार्यं वदान्यत्वम् , बलं शत्रुपरिभवसामर्थ्यम् , इत्थं सर्वं वस्तुगत्या आत्मनिष्ठमित्यभिप्रेतम् , शब्दतस्त्वपरित्याज्यत्वे तात्पर्यम् ॥ १० ॥

मु ॥ तद्वचनक्रमं प्रपञ्चयति—राजपुत्रीत्यादिभिः एकादशभिः॥ अत्र राजपुत्रीति सम्बुद्ध्या क्षत्रियकुलप्रसूतायास्तव सर्वथा वयं नार्हा इति भावः स्फोर्यते, लोकपाला-

[1]. बलोर्जितैः. मु. भा. प्र. पा ॥

तान्प्राप्तानर्थिनोभूपांश्चैद्यादीन्[1]स्मरदुर्मदान् ।
दत्ताभ्रात्रास्वपित्राचकस्मान्नवव्रृषेसमान् ॥ ११
राजभ्योबिभ्यतस्सुभ्रुसमुद्रंशरणंगतान् ।

नामिव विभूतिः ऐश्वर्यं येषां तैः महानुभावैः महाप्रभावैः श्रीमद्भिः लावण्यशालिभिः आढ्यैरिति वा, रूपं सौन्दर्यम् , औदार्यं दातृत्वम् , बलं शत्रुपरिभवसामर्थ्यम् , तैरूर्जितैः पूर्णैः भूपैः ईप्सिता प्रथममपेक्षिता ॥ १० ॥

वी ॥ तानिति ॥ तानेवंविधानर्थिनो याचमानान् प्राप्तानागतान् स्मरेण कामेन दुष्टो मदो येषां तान् चैद्यादीन् त्वं पित्रा भ्रात्रा च दत्ता सती समाननुरूपान् कस्माद्धेतोः न ववृषे न वृतवत्यसि, 'नो ववृषे' इति पाठे अर्थिनो हित्वेति पाठ्यम् , तान् हित्वा नोऽस्मान् कस्माद्धेतोः वृतवत्यसीत्यर्थः, अतस्त्वं मन्देति भावः, तत्र हेतुं वदन्नात्मानं विशिनष्टि—असमानिति अननुरूपानित्यर्थः, बहुवचनं कोपापादनार्थम् , अस्मासु त्वदनुरूपः कोऽधुना वा वरणीयोऽस्तीति 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्यक्तविधया सर्वोत्तमं मां कस्माद्धेतोः वृतवत्यसि तं हेतुम् आवयोः लक्ष्मीनारायणयोरनपायित्वरूपं जानास्येवेति हार्दो भावः ॥ ११ ॥

मु ॥ तान् हित्वा असमान् असदृशान् नः अस्मान् कस्मात् हेतोः ववृषे वृतवत्यसि, सर्वथा राज्ञामपरित्याज्यताहेतूनुपन्यस्यन्नाह—तानिति । प्राप्तान् स्वयमेव अयाचितान् आगतान् "अयाचिताहृतं ग्राह्यम्" इति न्यायादिति भावः, तत्राप्यर्थिनः सर्वथा त्वामेव कलत्रं प्रार्थयामानान् सारः स्थिरांशभूतो दुर्मदो येषां तान् स्वपित्रा भ्रात्रा च दत्ता कन्यादातृत्वस्य पितृभ्रात्रादेरेव शास्त्रविहितत्वादिति भावः, त्वं हि त्यक्त्वा असमान् असदृशान् पामरलोकाभिमतक्षुद्रजातिगुणवद्भिरसदृशानिति हार्दो भावः, प्रकृतेतु त्वदीयाभिजनतदनुगुणगुणादिरहितानित्यर्थः, एवंविधान् नः कस्मात् ववृष इति पूर्वेणान्वयः, अत्र न इति बहुवचनं कोपावेशाभिमानप्रयुक्तम् ॥ ११ ॥

वी ॥ असमत्वमेव प्रपञ्चयितुं विशिनष्टि—राजभ्यइति ॥ हे सुभ्रु राजभ्यो जरासन्धादिभ्यो बिभ्यतः भीतानत एव समुद्रं शरणं गृहं प्राप्तान् समुद्रान्तर्द्वीपमावासस्थानत्वेनाश्रितानित्यर्थः, हार्दभावपक्षे तु अबिभ्यत इतिच्छेदः, ममाभीतत्वं त्वदानयनकाले किं त्वया न दृष्टमिति भावः, समुद्रं शरणं गतानित्यस्यायं भावः—त्वत्पितृक्षीरसागरगतसमुद्रत्वधर्मयोगित्वमात्रप्रयुक्तप्रेमातिशयेन लवणार्णवान्तर्द्वीपमाश्रितानां किं पुनस्साक्षात्त्वत्पितरि दुग्धार्णवे साक्षाच्छ्वशुरे अस्माकं प्रीतिः, किं तरां साक्षात्त्वयि—इति, बलवद्भिरिति बलशालिभिः जरासन्धादिभिस्सह कृत उत्पादितो द्वेषो यैस्तानिति शाब्दोऽर्थः, पक्षान्तरे तु बलवद्भिरिति निन्दायां मतुप् "भूमनिन्दाप्रशंसासु" इत्यनुशासनात्, बलं धारणसामर्थ्यम् , तथाच बलवद्भिः निन्दितबलैः इन्द्रियाण्यात्मवश्यतया धर्तुमसमर्थैः अजितेन्द्रियैरिति यावत् , कृतः द्वेषो येषु तान् अजितेन्द्रियाणामेकमातृप्रसूतानामपि त्वद्भ्रातृणां मयि द्वेषः, तव तु जितेन्द्रियायाः अत एव मद्याथात्म्याभिज्ञायास्त्वयि ममेव मयि प्रीतिरभ्यधिकैवेति प्रकृतोपचारप्रशंसायां तात्पर्यम् , प्रायः प्रायशः त्यक्तं नृपासनं यैस्तान् शापवशात् सिंहासनानर्हवंशप्रभवत्वादिति भावः, पक्षान्तरे तु

१. सारदुर्मदान्. मु. भा. प्र. पा॥

बलवद्भिः कृतद्वेषान्प्रायस्त्यक्तनृपासनान् ॥ १२

अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्। आस्थिताः पदवीं सुभ्रु प्रायस्सीदन्ति योषितः
निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः। तस्मात्प्रायेण नह्याढ्या मां भजन्ति सुमध्यमे

भयविभूतिनायकस्य परमेष्ठिनो मम केवलप्राकृतजनाधिष्ठयनृपासनस्यायोग्यत्वादिति भावः, मम भर्ता नारायणश्चेदयमस्पृष्टशापदोषो नृपासनमधितिष्ठेदेवेत्यनारायणत्वसंभावनानिरासायेदमुक्तम्, नृपासनपरित्यागस्याभिनयमात्रत्वाच्चेत्यपि तात्पर्यम् ॥ १२ ॥

मु ॥ असमत्वमेवाह—राजभ्य इति ॥ जरासन्धात् राजकात् बिभ्यतः त्रस्यतः प्रायः प्रायशः बलवद्भिः कृतद्वेषान् जरासन्धादिबलशालिभिराचरितवैरान् शापवशात् सिंहासनानर्हवंशजत्वात् परित्यक्तं नृपासनं यैस्तानिति ॥ १२ ॥

वी ॥ किञ्च सत्कुलप्रसूतानां त्वादृशीनामनिर्धारितकुलोत्पथवञ्चकमादृशानुवर्तनं दुःखहेतुरित्याह—अस्पष्टेति ॥ वर्त्म गतिः प्रकारः जातिरिति यावत्, किमयम् वसुदेवसुतः क्षत्रियः, उत नन्दात्मजस्तृतीयवर्णप्रसूत इत्येवमस्पष्टं संशयविषयं वर्त्म येषां तेषाम् अलोकपथं लोकविरुद्धपथम् उत्पथमित्यर्थः, ईयुषामुन्मर्यादानामित्यर्थः, एवंविधानां मादृशां पुंसां पदवीमास्थिता अनुवृत्ताः स्त्रियः त्वद्विधाः हे सुभ्रु प्रायशः सीदन्ति क्लिश्यन्ति. पक्षान्तरेतु—अस्पष्टवर्त्मनां दुर्ज्ञेयस्वरूपस्वभावानामपि अलोकपथमीयुषाम् अकर्मवश्यानामाचारं चेष्टितमिति यावत्, प्राप्तानां कुर्वतामपीत्यर्थः, पुंसामस्माकं पदवीं याथात्म्यमास्थिताः मामनुवर्तमाना एव स्त्रियः प्रायशस्सीदन्ति, "षद्ऌ गतौ" गत्यर्था बुद्ध्यर्थाः, विदन्त्येवेत्यर्थः, मामननुवर्तमानास्तु एवंविधानामप्यस्माकं पदवीं न विदुरेव, अतः मामनुवर्तमानायाः मद्याथात्म्याभिज्ञायास्तव मदुपचरणं युक्तमेवेति ॥ १३ ॥

मु ॥ किञ्च लोके स्त्रीणां स्वभावे परिशीलिते सत्यपि मादृशां वृत्तिः तद्दुःखहेतुरेवेत्याह—अस्पष्टेति ॥ अस्पष्टवर्त्मनाम् अविज्ञाताचाराणाम् अत एव अलोकपथं लोकविरुद्धपथम् उत्पथमित्यर्थः, ईयुषां भजतामुन्मर्यादानामित्यर्थः,यद्वा लोकपथस्तु प्रायशः स्त्रीपारतन्त्र्यवृत्तिः,तथाच अलोकपथम् अस्त्रीपारतन्त्र्यम् ईयुषां पुंसां पदवीम् आस्थिताः अनुवृत्ताः योषितः प्रायशः सीदन्ति, अतः सन्तापदुःखाभ्यां कार्श्यं भजन्तीत्यर्थः ॥१३॥

वी ॥ किञ्च लोके कुरूपोऽप्याढ्य एव स्त्रीणामभिमतः, अहं त्वनाढ्यः न त्वादृश्या वरणीय इत्याह—निष्किञ्चनाइति॥ नास्ति किञ्चन स्वं येषां ते निष्किञ्चनाः निर्धना इति यावत्, पृषोदरादित्वात्साधुः, तर्हि यूयं केषां प्रियाः केत्र युष्माकं प्रिया इत्यत्राह—निष्किञ्चनेति । मादृशामेव जनानां वयं प्रियास्ते च प्रिया येषां तथाभूताश्चेत्यर्थः, तस्मादेव हेतोः हे सुमध्यमे नोऽस्मान्प्रायश आढ्यास्संपन्ना न भजन्ति नानुवर्तन्ते, पक्षान्तरे तु नास्ति किञ्चनावाप्यं येषां ते निष्किञ्चनाः अवाप्तसमस्तकामा इत्यर्थः, निष्किञ्चनानामनन्यप्रयोजनानामेकान्तिजनानां प्रियाः, तस्मादाढ्याः अभिजनादिमदैः आढ्यंमन्या जनाः न मां भजन्ते, अनन्यार्हशेषत्वानन्यशरण्यत्वानन्यभोग्यत्वरूपाकारत्रयशालिनी त्वं मामेव भजस इत्युचितमेवेत्यभिप्रेतम् ॥ १४ ॥

मु॥किञ्च लोके स्त्रियः प्रायशः सम्पन्नं कुरूपमपि वृण्वते, वयं तु निष्किञ्चनत्वात् तादृशामेव प्रियाः, न युष्मादृशामित्याह—निष्किञ्चना इति ॥ शश्वत् सर्वदा निर्गतं

ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवेत् । तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥
वैदर्भ्येतदविज्ञाय त्वयाऽदीर्घसमीक्षया । वृता वयं गुणैर्हीना भिक्षुभिश्श्लाघिता मुधा १६
अथात्मनोऽनुरूपं वै भजस्व क्षत्रियर्षभम् । येन त्वमाशिषस्सत्या इहामुत्र च लप्स्यसे ॥ १७

---

निश्शेषं गतं किञ्चन किञ्चिदपि वस्तु येषां ते निष्किञ्चनाः, तर्हि युष्मादृशाः केषां प्रिया इत्यत्राह —निष्किञ्चनजनप्रिया इति । तादृशा वयं तथाविधानामेव प्रिया इत्यर्थः, तस्मात् हेतोः आढ्याः सम्पन्नाः प्रायेण प्रायशः नः अस्मान् न भजन्ति ॥ १४ ॥

वी ॥ किञ्च ''विवाहश्च तथा मैत्री समयोरेव शोभते'' इति न्यायेनासमयोराव-योरसम्बन्धो न शोभत एवेत्यभिप्रायेणाह—ययोरिति ॥ ऐश्वर्येण सहिता आकृतिरैश्वर्याकृतिः, ऐश्वर्यमाकृतिश्चेत्यर्थः, तत्र जन्म कुलम् , आकृतिस्सौन्दर्यम् , ययोरात्मसमं परस्परानुरूपं वित्तादिकं भवेदस्ति, तयोरेव विवाहो मैत्री च, उत्तमाधमयोरस्मादृशयोस्तु क्वचित्कदाचिदपि न नोचित इत्यर्थः, पक्षान्तरे तु—वित्तादिभिरसमयोरपि स्वभावतश्शेषशेषिणोरावयोस्सम्बन्धोऽनुरूपः, न तु विषमयोः त्वच्चैद्ययोरिति ॥ १५ ॥

मु ॥ एवं लोकरीत्या स्त्रीपुरुषयोः वैषम्ये हेतूनुपन्यस्य तदानुकूल्यहेतूनाह—ययोरिति ॥ वित्तं द्रव्यं जन्मैश्वर्याभ्यां सहिता आकृतिः रूपं जातिर्वा, ययोः वित्तादिकम् आत्मसमानम् अन्योन्यानुरूपं भवेत् , तयोरेव विवाहो मैत्री च स्यातामित्यर्थः, उक्तवैपरीत्यं निषेधति,—नेति ॥ १५ ॥

वी ॥ सर्वमेतद्वैषम्यमविचार्यैव त्वया वृता वयमित्याह—वैदर्भीति ॥ हे वैदर्भि अदीर्घा अदूरा समीक्षा विचारो यस्यास्तया त्वया एतन्मदुपन्यस्तमनानुरूप्यमविदित्वा वयं वृताः, कथम्भूताः? गुणैर्वरणीयताहेतुभूतैः श्लाघ्यैर्गुणैः रहिताः अत एव भिक्षुभिः मुधा मिथ्या असद्गुणारोपेणेति भावः, श्लाघिताः न त्वाढ्यैः, पक्षान्तरे तु—दीर्घसमीक्षयेति च्छेदः, अविज्ञाय अविचार्य जगन्मातुर्मम चैद्यादयः पुत्रस्थानीया इति तद्गतं वित्तजन्मादिसाम्यमविचार्येति यावत् , दीर्घा भगवदसाधारणगुणान्वेषणपरा समीक्षा विचारो यस्यास्तया त्वया गुणैः परमात्मासाधारणैः कल्याणगुणैर्हीनाः ''ओहाङ्गतौ''सङ्गता इत्यर्थ , अत एव भिक्षुभिः नारदादिभिः मुधा व्यर्थं प्रयोजनान्तरनिरपेक्षं श्लाघिताः वयं वृताः ॥ १६ ॥

मु॥ एवं स्थिते सत्यपि सर्वज्ञाऽपि त्वं दैवेन वञ्चितेत्याह—वैदर्भीति॥ एतत् पूर्वोक्तलोकवृत्तम् अविज्ञाय अदीर्घा हिताहितनिर्णयशून्या स्वल्पा समीक्षा विचारो यस्यास्तया अत एवं गुणैः हीनाः तादृशाश्रयणीयगुणरहिताः किन्तु मुधा अप्रयोजनमेव भिक्षुभिः परित्यक्तसर्वस्वैः भिक्षाटनपरैः परिव्राड्भिः श्लाघिताः कीर्तिताः, अतस्तव सर्वथा वयं नार्हा इति भावः ॥ १६ ॥

वी ॥ किमत इत्यत आह—अथेति ॥ अथ अधुनेत्यर्थः, क्षत्रियर्षभं चैद्याद्यन्यतमं भजस्व, तं विशिनष्टि—येन सेव्यमानेन क्षत्रियर्षभेण हेतुना इहामुत्र च लोके सत्याः सतीराशिषः कामान् लप्स्यसे, पक्षान्तरे—क्षत्रियर्षभं क्षत्रियश्रेष्ठत्वेनावतीर्णं मामित्थं भजस्व, इह लीलाविभूतौ अमुत्र नित्यविभूतौ च येन मया सेव्यमानेन सह सत्याः आशिषः कामान् मदनुभवात्मकान् लप्स्यस इत्यर्थः ॥ १७ ॥

चैद्यसाल्वजरासन्धदन्तवक्त्रादयोनृपाः । ममद्विषन्तिवामोरुरुक्मीचापितवाग्रजः ॥
तेषांवीर्यमदान्धानांदृप्तानांस्मयनुत्तये । आनीतासिमयातन्वितेजसांहरताऽसताम्॥
उदासीनावयंनूनंनस्त्र्यपत्यार्थकामुकाः ।
आत्मलब्ध्याऽऽस्महेपूर्णागेहयोर्ज्योतिरक्रियाः ॥ २०

---

मु ॥ तर्हि मया किं कर्तव्यम् , अत आह—अथेति ॥ अथेति कर्तव्यार्थारम्भे, आत्मनोऽनुरूपम् अभिजनरूपगुणवित्तादिभिः सम्बन्धयोग्यं क्षत्रियर्षभम् उत्तमक्षत्रियं भजस्व, नैतादृशभजने प्रसिद्धिरस्तीति भावः, येन क्षत्रियर्षभेण हेतुना इहामुत्राशिषः ऐहिकामुष्मिकसुखविषयमनोरथान् सत्यान् फलाविनाभूतान् लप्स्यसे ॥ १७ ॥

वी ॥ तर्हि मां किमर्थमानीतवानसीत्यत आह— चैद्येति॥ हे वामोरु शोभनोरु मम द्विषन्ति मां द्विषन्तीत्यर्थः ॥ १८ ॥

मु ॥ तर्ह्येवं निस्स्पृहस्त्वं मां किमित्याहृतवानित्यत्राह—चैद्येत्यादि ॥ मम द्विषन्ति मह्यं द्विषन्ति, तर्हि मदग्रजः किं करोतित्यत आह—रुक्मीति ॥ १८ ॥

वी ॥ ततः किमत आह—तेषामिति ॥ वीर्यमदेनान्धानां विवेकशून्यानां गर्वितानां च तेषां चैद्यादीनां च स्मयनुत्तये गर्वापाकरणाय मया त्वमानीता, कथंभूतेन? असतां खलानां तेजसामिति कर्मणि षष्ठी,तेजांसि हरता,पक्षान्तरे—यद्यपि मदनपायिनी त्वं केनाप्युपायेन मामेव प्राप्तवत्यसि, तथापि तेषां स्मयनुत्तये मयाऽऽनीतासीति प्रासङ्गिकोक्तिः, युक्तं चैतदित्यभिप्रायेणात्मानं विशिनष्टि—असतां तेजांसीति पूर्ववत् , हरता "लक्षणहेत्वोः" इति शत्रादेशः हर्तुम्, अवतीर्णेनेति शेषः ॥ १९ ॥

मु ॥ वीर्यमदेन वयमेव वीरा इति मदेन अन्धानां स्वपरतारतम्यपरामर्शशून्यानामित्यर्थः, अत एव दृप्तानाम् उन्मत्तानां तेषां स्मयनुत्तये अहङ्कारनिराकरणाय मया त्वमानीतासीति। उन्मत्तमदहरणे कोऽयं भारस्तवेत्यत्राह- तेजोऽपहरताऽसतामिति । असतां दुष्टानां तेजः शक्तिम् अपहरता एवंविधेन मया आनीताऽसि, नतु त्वयि कामुकन सता भोगेच्छयेति भावः ॥ १९ ॥

वी ॥ स्त्रीणामतिदुस्सहमौदासीन्यमकामुकत्वं चात्मन्याह— उदासीनाइति ॥ गेहयोरुदासीनाः गृहशब्दपर्यायो गेहशब्दोऽप्यत्र कलत्रवेश्मोभयपरः, अत एव द्विवचनान्तनिर्देशः,अत एव न स्त्र्यपत्यार्थकामुकाः दारेषणापुत्रेषणाधनेषणारहिताः, तत्र हेतुः —आत्मलब्ध्या स्वात्मानुभवलाभेनैव पूर्णाः अलम्पटाः ज्योतिषा स्वयंप्रकाशस्वात्मस्वरूपस्फुरणेन हेतुना अक्रियाः निष्क्रियाः प्राकृतचेष्टारहिताः आस्महे गृहे वर्तामहे इत्यर्थः, पक्षान्तरेऽर्थस्तु यथोक्त एव, तात्पर्यं त्वसतां स्मयनुत्तये अवतीर्णस्य मम गृहमेधिधर्मानुवर्तनं विडम्बनमात्रम् , अन्यथैवंविधस्यैतन्न घटत इति ॥ २० ॥

मु॥ लोके स्त्रीणामतिदुस्सहमौदासीन्यमकामुकत्वं चाह— उदासीना इति॥ अस्पृष्टसंसारगन्धतया तटस्था एवेत्यर्थः, अत एव न स्त्र्यपत्यार्थकामुकाः दारेषणपुत्रेषण धनेषणरहिताः आत्मलब्ध्या स्वदिव्यात्मस्वरूपानुभवेन पूर्णाः ज्योतिषा स्वयंप्रकाशस्वरूपेण अक्रियाः चाञ्चल्यरहिताः अत एव गेहयोः गृहदेहयोः उदासीनाः स्त्र्यादिषु अकामुकाश्च आस्महे वर्तामहे ॥ २० ॥

बादरायणिरुवाच—

एतावदुक्त्वाभगवानात्मानंवल्लभामिवामन्यमानामविश्लेषात्तद्दर्पघ्नउपारमत् ॥२१

इतित्रिलोकाधिपतेस्तदात्मनःप्रियस्यदेव्यश्रुतपूर्वमप्रियम् ।
आश्रुत्यभीताहृदिजातवेपथुश्चिन्तांदुरन्तांरुदतीजगामह ॥ २२

पदासुजातेननखारुणश्रियाभुवंलिखन्त्यश्रुभिरञ्जनाविलैः ।
आसिञ्चतीकुङ्कुमरूषितौस्तनौतस्थावधोमुख्यतिदुःखरुद्धवाक् ॥ २३

---

वी ॥ एतावदिति ॥ अविश्लेषाद्विश्लेषाभावाद्धेतोरात्मानमेव वल्लभामितरपत्न्यपेक्षया भगवतो निरतिशयप्रीतिविषयां मन्यमानां रुक्मिणीं तद्दर्पघ्न इव तस्या दर्पमपनेतुकाम इवेत्यर्थः एतावदुक्त्वा उपारमत् तूष्णीमास, इवशब्दस्य व्यवहितेनापि दर्पघ्न इत्यनेन सम्बन्धः स्वारस्यात्, दर्पघ्न इवेत्यनेन वस्तुतस्तामुपचरन्तीमभिनन्दितुमुक्त्वेति सूच्यते ॥ २१ ॥

मु ॥ एतावदिति ॥ अविश्लेषात् कदाचिदपि विश्लेषाभावात् हेतोः आत्मानं वल्लभामिव सर्वाभ्यः पत्नीभ्योऽप्यतिशयितप्रियामिव मन्यमानाम् अहमेव सर्वाभ्योऽपि प्रियाभ्योऽतिशयितवल्लभेत्यभिमानवतीमित्यर्थः, अत एव तद्दर्पघ्नः तस्या अहङ्कारहारी सन् भगवान् एतावत् उक्त्वा उपारमत् तूष्णीमास ॥ २१ ॥

वी ॥ ततः किमासीदित्यत्राह—इतीति ॥ देवी रुक्मिणी आत्मनः स्वस्य प्रियस्य त्रिलोकाधिपतेः तदश्रुतपूर्वं कदाप्यश्रुतम् इति एवंविधमप्रियं वच आकर्ण्य भीता त्यागसम्भावनाभीता अत एव हृदि जातवेपथुः सञ्जातकम्पा रुदती च अपारां चिन्ताम् अवाप, यद्यप्यभिप्रायान्तरेणैव प्रयुक्तानि वचांसि, यद्यपि च साक्षाल्लक्ष्म्यवतारभूता सापि तदभिप्रायं जानात्येव, तथाऽपि किमयं रामावतार इवात्रापि केनापि व्याजेन मां जिहासति, किंवाऽभिनन्दतीत्येवं पूर्वकोटिसम्भावनामात्रेणैव जातवेपथुः रुदती च चिन्तामवापेति तात्पर्यम् ॥ २२ ॥

मु ॥ ततः किमासीदित्यत्राह—इतीति ॥ तदा आत्मनः प्रियस्य भर्तुः अश्रुतपूर्वं पूर्वं कदाप्यश्रुतम् इति एवंविधम् अप्रियं तदात्मन इत्यत्र तदितिच्छेदेन तत् पूर्वोक्तमितिवाऽर्थः,आश्रुत्य आकर्ण्य भीता सती अत एव हृदि जातवेपथुः संजातकम्पा रुदती दुरन्ताम् अनिश्चितपारां चिन्तां जगाम ॥ २२ ॥

वी ॥ चिन्तालक्षणमाह—पदेति ॥ नखैः अरुणा श्रीः कान्तिर्यस्य तेन सुकोमलेन पादेन वामपादाङ्गुष्ठेन भुवं लिखन्ती अञ्जनेनाविलैः व्याप्तैरश्रुभिश्चन्दनचर्चितौ स्तनौ सिञ्चती दुःखेन रुद्धा वाग्यस्यास्सा अधोमुखी चावतस्थे ॥ २३ ॥

मु ॥ चिन्तालक्षणमाह—पदेति ॥ सुजातेन आरुण्यसौकुमार्यशुभलक्षणसुसंस्थित्यादिगुणैः सुष्ठुजातेन नखेषु अरुणा श्रीः यस्य तेन पदा भुवं विलिखन्ती चन्दनरूषितौ चन्दनचर्चितौ स्तनौ अञ्जनेन आविलैः मिश्रितैः अश्रुभिः सिञ्चती स्नपयन्ती अतिदुःखेन रुद्धवाक् निरुद्धवाग्व्यापारा सती अधोमुखी तस्थौ ॥ २३ ॥

तस्यास्सुदुःखभयशोकविनष्टबुद्धेर्हस्ताच्छ्लथद्वलयतोव्यजनंपपात ।
देहश्चविक्लबधियःसहसैवमुह्यन्रम्भेववातविहताप्रविकीर्यकेशान् ॥ २४
तद्दृष्ट्वाभगवान्कृष्णःप्रियायाःप्रेमबन्धनम्।हास्यप्रौढिमजानन्त्याःकरुणस्सोन्वकम्पत॥
पर्यङ्कादवरुह्याशुतामुत्थाप्यचतुर्भुजः। केशान्समूह्यतद्वक्त्रंप्रामृजत्पद्मपाणिना॥२६॥
प्रमृज्याश्रुकलेनेत्रे स्तनौचोपहतौशुचा।आश्लिष्यबाहुनाराजन्ननन्यविषयांसतीम्॥

---

वी ॥ तस्या इति ॥ सुदुःखम् अप्रियश्रवणजन्यं भयं त्यागसम्भावनाजन्यं शोकश्च तैर्विनष्टा स्फुरणरहिता बुद्धिर्यस्यास्तस्याः रुक्मिण्याः श्लथन्ति तत्कालिकदुःखप्रभवकार्श्येन भ्रश्यन्ति वलयानि यस्मात्तस्माद्धस्ताद्व्यजनं पपात भूमाविति शेषः, तथा विक्लबा अधृष्टा धीर्यस्यास्तस्याः हेतुगर्भमिदम्,तत्त्वात् तस्याः देहः मुह्यन् मोहं प्राप्नुवन् केशान्विकीर्य पपात केशपाशविश्लथनपूर्वकं पपातेत्यर्थः, यथा वातेन चण्डमारुतेन विहता रम्भा कदली पतति तद्वत् ॥ २४ ॥

मु ॥ तस्या इति ॥ सुदुःखम् अप्रियश्रवणजन्यमनोव्यथा भयं त्यागशङ्काप्रभवं शोकाश्रुविमोचनपूर्वकं रोदनं तैः विनष्टा बुद्धिः यस्याः तस्याः श्लथन्ति तात्कालिकदुस्सहदुःखजातकार्श्येन भ्रश्यन्ति वलयानि कङ्कणानि यस्मात् तस्मात् श्लथद्वलयत इति पञ्चम्यर्थे तसिः, एवंविधात् हस्तात् व्यजनं पपात मूर्च्छामयन्त्याः अवशाङ्ग्याः तस्याः करात् प्रथममेव तत् पपातेत्यर्थः, अथ विक्लबा विवशा धीः यस्याः तस्याः मुह्यन् मोहं प्राप्नुवन् देहश्च वातविहता महावायुभग्ना रम्भा कदलीव केशान् प्रविकीर्य पपात केशपाशविश्लेषपूर्वकं पपातेत्यर्थः ॥ २४ ॥

वी ॥ तदिति ॥ स भगवान्कृष्णः हास्यप्रौढिम् अजानन्त्या इव लक्षितायाः प्रियायास्तत्प्रेमबन्धनं प्रेमपाशमवलोक्य करुणावानन्वकम्पत अनुपदमेव भीत इव अकम्पतेत्यर्थः ॥ २५ ॥

मु ॥ करुणः करुणावान् तद्दशां दृष्ट्वा दीन इव स्थितस्सन् इति वाऽर्थः, सः कृष्णः अन्वकम्पयत् अनुकम्पा दया तद्वानभूदित्यर्थः,यद्वा अनु तद्दशादर्शनानुपदमेव भीत इव अकम्पत भयजनितकम्पवानिवाभूदित्यर्थः ॥ २५ ॥

वी ॥ ततः किमकरोदित्यत्राह—पर्यङ्कादिति ॥ चतुर्भुजः उत्थापनाश्लेषणवक्त्रपरिमार्जनार्थमाविष्कृतचतुर्भुज इत्यर्थः, केशान्समूह्य निबध्य पद्मतुल्येन पाणिना वक्त्रं प्रामृजत् ॥ २६ ॥

मु ॥ ततः किमकरोदित्यत्राह—पर्यङ्कादिति ॥ आशु सत्वरं पर्यङ्कात् अवरुह्य हास्यस्य प्रौढिं प्रागल्भ्यम् , अत्र चतुर्भुज इति भुजचतुष्टयाविष्करणप्रयोजनं द्वाभ्यामालिङ्गय तदुत्थापनम् , एकेन केशबन्धनम् , अन्येन वक्त्रपरिमार्जनं चेति वा द्वाभ्यां च केशबन्धनं चेति वा यथोचितं द्रष्टव्यम् , केशान् समूह्य बद्ध्वा ॥ २६ ॥

वी ॥ किञ्च—प्रमृज्येति ॥ अश्रूणां कलाः बिन्दवो ययोस्ते नेत्रे तथा शुचा शोकाश्रुणा उपहतौ स्तनौ च परिमृज्य हे राजन् बाहुना आलिङ्गय सान्त्वज्ञः सतां गतिः प्राप्यः श्रेयःप्राप्त्युपायभूतो वा विभुर्भगवान् हास्यप्रौढेः भ्रमच्चित्तं यस्यास्ताम् अतद-

सान्त्वयामाससान्त्वज्ञःकृपयाकृपणांप्रभुः। हास्यप्रौढेर्भ्रमच्चित्तामतदर्हांसतांगतिः॥
मामावैदर्भ्यसूयेथा जानेत्वांमत्परायणाम्।त्वद्वचश्श्रोतुकामेन क्ष्वेल्याचरितमङ्गने॥
मुखंचप्रेमसंरम्भस्फुरिताधरमीक्षितुम्।कटाक्षेपारुणापाङ्गंसुन्दरभ्रुकुटीतटम्॥ ३०
अयंहिपरमोलाभोगृहेषुगृहमेधिनाम्।यन्नर्मैर्नीयतेयामः[1]प्रियया भीरुभामिनि॥ ३१

र्हाम् इत्थमपहसितुमनर्हां तत्र हेतुरनन्यविषयां न विद्यते अन्यः पुरुषान्तरं विषयः ज्ञानविषयो यस्यास्तां दीनां सतीं रुक्मिणीं सान्त्वयामास ॥ २७॥ २८॥

मु॥ अश्रूणां कलाः लेशा ययोस्ते, शुचा शोकाश्रुभिरित्यर्थः॥ २७॥

मु॥ सान्त्वज्ञः अनुनयोक्तिनिपुणः कृष्णः सान्त्वयामास सामवचनैराश्वासयामासेत्यर्थः॥ २८॥

वी॥ सान्त्वनप्रकारमेवाह—मामेति॥ हे वैदर्भि मां मासूयेथाः मह्यमसूयां मा कृथा इत्यर्थः, त्वाम् अहमेव परायणं परमप्राप्यं यस्याः तथाभूतां जाने, तर्हि किमर्थमुक्तमित्यत आह—त्वद्वच इति। तव वचः श्रोतुमिच्छता किन्तु वदिष्यति तत् शृणोमीत्येवं कामयमानेन मया हे अङ्गने क्ष्वेल्या नर्मणा एवमाचरितं कृतमुक्तमिति यावत्॥ २९॥

मु॥ अथ सान्त्वज्ञ इत्यादेः भगवान् स्वमनसि निहितम् 'आत्मानं वल्लभामिव' इत्यत्रोक्तदर्पहरणरूपाप्रियोक्तिप्रयोजनमाच्छाद्य गाढानुरागित्वनटनानुगुणप्रयोजनकल्पनया शाठ्यं गोपयन्नाहेति तत्प्रपञ्चयति—मामेत्यादिना॥ हे वैदर्भि मा मां माभ्यसूयेथाः मयीर्ष्यां मा कृथा इत्यर्थः, त्वद्वचः श्रोतुकामेन एवं मयोक्ते सति तस्य त्वदुक्तोत्तरवाक्यसरणिमाधुरीश्रवणाभिलाषिणेत्यर्थः॥ २९॥

वी॥ किञ्च—मुखञ्चेति॥ प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः कम्पितोऽधरो यस्मिन् कटशब्दोऽत्रापाङ्गसामीप्याद्गण्डस्थलपरः, कटयोः गण्डस्थलयोः अधिकरणयोः आक्षेपाः कोपावेशेन चञ्चलनेत्राघातास्तैररुणावपाङ्गौ नेत्रान्तौ यस्मिन् तत्सुन्दरं कुटिलं भ्रुकुटीतटं यस्मिन् तत्तव मुखं चेक्षितुं द्रष्टुमाचरितमिति पूर्वेण सम्बन्धः॥ ३०॥

मु॥ मया प्रेमसंरम्भेण प्रणयकोपेन स्फुरितः अधरः यस्मिन् तत् कटयोर्गण्डस्थलयोः अधिकरणयोः आक्षेपः कोपावेशेन चञ्चलनेत्राघातः तेन अरुणौ अपाङ्गौ नेत्रान्तौ यस्मिन् तत् सुन्दरम् ईषत्कौटिल्येन मनोहरतया पुनःपुनः दर्शनीयमित्यर्थः, भ्रुकुटीतटं भ्रूभङ्गरम्यप्रदेशो यस्मिन् तत् मुखं च ईक्षितुं द्रष्टुं क्ष्वेल्या त्वत्तर्या आचरितम् एवमुक्तम्, नतु तत्त्वत इत्यर्थः॥ ३०॥

वी॥ ननु कलहे किं कौतुकं सुखं वा, अत आह—अयंहीति॥ कोऽसौ? हे भीरु हे भामिनि कोपिनि प्रियया सह नर्मैः प्रणयकलहैः यामो नीयत इति यत् एष परमो लाभ इत्यर्थः, सुखमेवेति भावः, यामग्रहणं घटिकाद्युपलक्षणम्॥ ३१॥

मु॥ नन्वन्तःकालुष्यहेतौ विवादे किं कौतुकं सुखं वेत्यत आह—अयं हीति॥ प्रियायाः नर्मैः नर्मवादैः प्रणयकलहैरित्यर्थः, यामः दिने रात्रौ वा कश्चित् प्रहरः नीयते इति यत् याप्यते इति यत् अयं गृहेषु गृहस्थाश्रमेषु गृहमेधिनां संसारिणां लाभः कालयापनोपायत्वेन प्रमोदावहत्वादीप्सितार्थलाभप्राय इत्यर्थः, भीरु भामिनीति संबुद्धि-

१. प्रियायाः. मु. भा. प्र. पा॥

सैवंभगवताराजन्वैदर्भीपरिसान्त्विता।ज्ञात्वातत्परिहासोक्तिंप्रियत्यागभयंजहौ ३२
बभाषऋषभंपुंसामीक्षतीभगवन्मुखम्।सव्रीडहासरुचिरस्निग्धापाङ्गेनभारत ॥ ३३
वैदर्भ्युवाच—

नन्वेतदेवमरविन्दविलोचनाहं यद्वैभवान्नभवतस्सदृशीविभूम्नः ।

---

द्वयेन "कोपना सैव भामिनी" इति नैघण्टुकोक्तेः केनचिद्व्याजेन कदाचिदीर्ष्याकृत-कोपसम्भवेऽपि पत्युर्भयोत्प्रेक्षयाऽनुपदमेव सम्यग्विधेयत्वं स्फोर्यते, भामशब्दः क्रोध-वाची, तद्वती भामिनी, अतो माभ्यसूयेथा इति ॥ ३१ ॥

वी ॥ सैवमिति ॥ तद्भगवदुक्तं परिहासार्थोक्तिरूपमेव ज्ञात्वा प्रियकर्तृकत्यागस-म्भावनाप्रयुक्तं भयं तत्याज ॥ ३२ ॥

मु ॥ ततः किम् , अत आह—सैवमिति ॥ परिसान्त्विता अनुनीता सती तत् पू-र्वोक्तं वचनजातं परिहासोक्तिं पत्युः कृष्णस्य हासोक्तिं हास्यप्रयुक्तोक्तिं ज्ञात्वा प्रियत्यागे भयं प्रियेण स्वत्यागे विषये भीतिं जहौ तत्याज ॥ ३२ ॥

वी ॥ किञ्च—बभाष इति ॥ हे भारत सव्रीडहासेन रुचिरेण स्निग्धेनापाङ्गेन भ-गवतो मुखं वीक्षमाणा तं पुंसामृषभं पुरुषोत्तममाबभाषे उवाच ॥ ३३ ॥

मु ॥ ततः किमकरोदित्यत्राह—बभाष इति ॥ व्रीडा नर्मकलहोक्तभगवदप्रियव-चनस्मरणजनितलज्जा, हासः तदुक्तानुनयवचनजातस्मितम् , ताभ्यां रुचिरः स्निग्धः स्नेहयुक्तः तदभिव्यञ्जक इत्यर्थः, तेन अपाङ्गेन लोचनाञ्चलेन लक्षणया तद्वीक्षणेनेत्यर्थः, भगवन्मुखं वीक्षती वीक्षमाणा सती पुंसामृषभं श्रीकृष्णं बभाषे, अत्रायं सङ्ग्रहः—

प ॥ अथासाम्यं भयं दुर्गाश्रितिं द्वेषं महाबलैः ।
नृपासनविदूरत्वमज्ञाताचारतां तथा ॥ १ ॥
अलोकपथगामित्वास्थिरलोकावसादने ।
आकिञ्चन्यं तत्प्रयुक्तामाढ्यैश्चाभजनीयताम् ॥ २ ॥
अनौचित्यं निर्गुणत्वं भिक्षुभिश्श्लाघ्यतां मुदा ।
औदासीन्याकामुकत्वे स्वदोषत्वेन षोडश ॥ ३ ॥
रुक्मिण्यामज्ञतादीर्घदर्शित्वे च बहून् गुणान् ।
राज्ञां च फणतश्शौरेर्नर्मवादं निशम्य सा ॥ ४ ॥
निजसार्वज्ञमालम्ब्य यानि वाक्यानि शार्ङ्गिणः ।
आत्मनिन्दापराणीव तान्युत्कर्षपरत्वतः ॥ ५ ॥
व्याचक्षाणा भीष्मपुत्री विदुषी प्रतिभाषते ॥

वी ॥ भाषणमेवाह—नन्विति पञ्चदशभिः, तत्र तावद्यदुक्तं 'कस्मान्नो ववृषे स-मान' इति, तदनुभाष्य प्रतिभाषते—नन्विति ॥ हे अरविन्दविलोचन तिष्ठन्तु तावद-साम्यं गुणान्तरैः, लोचनसौन्दर्येणैव त्वं स्वतुल्यरहित इति तत्सम्बोधनाभिप्रायः, अहं भवतः असदृशी असमानेति यद्भवानुवाचेत्यनुवादः,यद्यप्यसमानिति भगवदुक्त्या भव-त्या अहमसम इति प्रतीयते, एवं च मम भवानसम इति यदित्येवमेवानुवदितव्यम्, तथापि भगवदभिप्रायक्रोडीकारेणानूदितम् ,अनुवादमुखेनापि मया सह भवानसम इति वक्तुमनुचितमित्यभिप्रायेणच, यद्भवानुवाच तत्तात्त्विकमेवेति वाक्यशेषः, तदेवोप-

कस्त्वेमहिम्न्यभिरतोभगवांस्त्र्यधीशः क्वाहंगुणप्रकृतिरज्ञगृहीतपादा ॥ ३४
सत्यम्भयादिवगुणेभ्यउरुक्रमान्तश्शेतेसमुद्रमुपलम्भनमात्रआत्मा ।

पादयति—भूम्नः स्वरूपस्वभावाभ्याम् अपरिच्छिन्नस्य,हेतुगर्भमिदम् ,क्वेत्यादि—भगवान् षाड्गुण्यपूर्णः त्र्यधीशस्त्रिलोकनायकः स्वे महिम्नि स्वासाधारणायां नित्यविभूतावभिरतस्त्वं क्व ?, गुणप्रकृतिः त्वद्गुणानुवर्तिस्वभावा त्वच्छन्दानुवर्तिनी त्वत्परतन्त्रेति यावत्, ननु त्वमपि स्वतन्त्रा ब्रह्मादिभिरुपास्यमाना तदभिमतफलप्रदा चेत्यत आत्मानं विशिनष्टि —अज्ञगृहीतपादेति। अज्ञैः मम त्वत्पारतन्त्र्यमजानद्भिः गृहीतौ उपासितौ पादौ यस्यास्सा ऽहं क्व?, अभिज्ञास्तु न मां स्वतन्त्रामुपासते, किंतु मां त्वत्परतन्त्रां पुरुषकारमात्रं कृत्वा मद्विशिष्टं त्वामेवोपासत इति भावः ॥ ३४ ॥

मु ॥ तत्र यदुक्तं 'कस्मान्नो ववृषेऽसमान्' इत्यसाम्यम् , तत्सत्यमेवेत्याह—नन्वेतदिति ॥ हे अरविन्दविलोचन तिष्ठन्तु नाम गुणान्तराणि, लोचनसौन्दर्येणैव सर्वं जगन्मोहितमिति भावः, भगवतः ज्ञानादिषाड्गुण्यनिधेः तव भूम्नः अतिशयस्य अहम् असदृशी असमेति यद्वै यद्वचनं वा भवानाह,ननु भगवन् एतत् वचनम् एवं यथार्थमेवेत्यर्थः, तत् कुतः ? स्वे महिम्नि अभिरतः स्वयमेव स्वमहिम्नि आश्चर्येण आसक्तोऽनुरक्तश्चेत्यर्थः, तथा च त्वन्महिमव्यतिरेकेण तवाभिरतिजनकं महिमान्तरं न कस्याप्यस्तीति भावः, त्र्यधीशः ब्रह्मरुद्रेन्द्राणां वा सत्त्वादिगुणत्रयस्य वा लोकत्रयस्य वा नियन्ता त्वम्, गुणप्रकृतिः सत्त्वादिप्राकृतगुणवश्यस्वभावा अहं क्व, ननु स्वातिशयार्थं सर्वैरुपास्या श्रीस्त्वमेव, तत्कथं गुणप्रकृतिस्त्वमित्यत्राह—अज्ञगृहीतपादेति।अज्ञैः सकामैः गृहीतौ पादौ यस्याः सा''पादा रश्म्यङ्घ्रितुर्यांशाः''इति नैघण्टुकोक्तेः पादः किरणः,तेन प्रकाश उच्यते, तेन च प्रकाशात्मकं ज्ञानं फलति, न ज्ञायते सम्यगर्थोऽनेनेत्यज्ञशब्दो दुर्बोधवाची,एवंच अज्ञगृहीतपादेत्यस्य अज्ञानप्रतिबद्धज्ञानेत्यर्थः, अहं क्व?, अत उभयोरसादृश्यमिति भावः॥

वी ॥ यदुक्तं 'राजभ्यो बिभ्यतस्सुभ्रु समुद्रं शरणंगतान्' इति, तत्र प्रतिभाषते —सत्यमिति॥ हे उरुक्रम उरवः विपुलास्त्रिलोकीसंग्राहकाः क्रमाः पादविन्यासाः यस्य तथाभूत पादक्रमैरेव त्रिलोकीं सङ्गृह्णतस्तव कथं राजभ्यो भयमिति तदभिप्रायः, भयादिवेति भगवदुक्त्यनुवादः, राजभ्यो भयात्समुद्रं शरणं गत इत्येतत्सत्यमेवेत्यर्थः, वस्तुतो भयाभावसूचकेनेवशब्देन राजभ्यो बिभ्यत इति त्वदुक्तावबिभ्यत इतिच्छेदो भवदभिमत इति सूच्यते, तर्हि कुतश्शरणं गत इत्यत्राह—गुणेभ्यइति । मत्पितृदुग्धाब्धिगतसमुद्रत्वागाधत्वादिधर्मेभ्यः, समुद्रत्वादिधर्मयोगाल्लवणार्णवं शरणं गत इत्यर्थः, तदपि किमर्थमित्यत आह—उपलम्भनमात्रइति । सप्तम्यन्तमिदम् , उपलम्भनमात्रे निमित्ते मयि प्रीत्यतिशयप्रदर्शनार्थं शरणं गत इत्यर्थः, मात्रशब्देन न तु स्वपरित्राणाद्यर्थमिति सूच्यते, अन्तश्शेते समुद्र इति दृष्टान्तार्थम् , अन्तरित्यव्ययं मध्ये वर्तते, यथोपलम्भनमात्रे निमित्ते भवानन्तस्समुद्रे क्षीराब्धिमध्ये शेते, तद्वल्लवणार्णवं शरणं गत इत्यर्थः, युक्तं चैतदित्यभिप्रायेण विशिनष्टि—आत्मेति । ममेति शेषः, आत्मा निरतिशयप्रीतिविषयः, यो यस्य प्रियतमः, स तस्यापि तथा, तथाचोक्तं भगवता "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" " ज्ञानी त्वात्मैव मे मतम् " इति च, एवं च त्व-

नित्यङ्कदिन्द्रियगुणैःकृतविग्रहस्त्वं त्वत्सेवकैर्नृपपदंविधुतन्तमोऽन्धम् ॥ ३५

त्वत्पादपद्ममकरन्दजुषांमुनीनां वर्त्मास्फुटंनृपशुभिर्ननुदुर्विभाव्यम् ।
यस्मादलौकिकमिवेहितमीश्वरस्य भूम्नस्तवेहितमथोअनुयेभवन्तम् ॥ ३६

त्प्रियतमाया मम प्रियतमत्वान्मत्सम्बन्धिगुणाश्रये तव प्रीतिरुचितैवेति भावः, 'बलवद्भिः कृतद्वेषान्' इत्यत्र प्रतिभाषते—नित्यं कदिन्द्रियगणैः कृतविग्रहस्त्वमिति । कच्छब्देन बलवद्भिरित्यत्र मतुप् निन्दार्थकत्वेन व्याख्यातः, कदिन्द्रियाणां गुणा विषयाः शब्दादयो येषां तैः कुत्सितानीन्द्रियाणि गुणास्तद्विषयाः शब्दादयश्च येषां तैरिति वा, त्वं नित्यं कृतो विग्रहः यस्य सः कृतद्वेषः कृताप्रीतिरिति यावत् , प्रायस्त्यक्तनृपासनानित्यत्र प्रतिभाषते—त्वत्सेवकैरिति। नृपाणां पदमासनम् अन्धं गाढं तम एव तमश्शब्दोऽत्र नरकपर्यायस्तद्धेतुपरः,नरकावहमित्यर्थः,हेतुगर्भमिदम्, तत्त्वात् नृपपदं त्वत्सेवकैरेव विधुतं तुच्छीकृत्य त्यक्तम् , किंपुनस्त्वयोभयविभूतिनायकेन त्यक्तमिति ॥ ३५ ॥

मु ॥ यदुक्तं 'राजभ्यो बिभ्यतस्सुभ्रु समुद्रं शरणं गतान् । बलवद्भिः कृतद्वेषान् प्रायस्त्यक्तनृपासनान्' इति, तत्रोत्तरमाह— सत्यमिति ॥ उरुक्रमेत्यत्र क्रमशब्देन विक्रमः पादन्यास उच्यते, पादन्यासाक्रान्तत्रिविष्टपेत्यर्थः, तथाहि श्रूयते—"यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा" इति,उरुक्रम उरुविक्रमेति प्रतापोष्मलत्वोक्त्या तस्याकुतोभयत्वंवा स्फोर्यते,उपलम्भनमात्रः कार्त्स्न्येन ज्ञानस्वरूपः, ननु स्वरूपे क्वापि जड इत्यर्थः,आत्मा त्वं गुणेभ्यः शब्दादिभ्यः, अनेन शब्दानां चित्तरञ्जकत्वात् रञ्जयतीति व्युत्पत्त्या राजशब्दस्य तद्वाचकत्वात् 'राजभ्यो बिभ्यतस्सुभ्रु' इत्यत्रोक्तराजशब्दार्थोऽत्र निरूढः, भयादिव अन्तस्समुद्रे प्रलयपयोधिमध्ये शेषे, यद्वा समुद्रे मुद्रासहिते "यत्पुण्डरीकं पुरमध्यसंस्थम्" इति श्रुत्युक्तपुण्डरीकमुद्रित इत्यर्थः, अन्तः दहराकाशे शेषे, प्रथमं चेतनान् तत्कर्मानुगुणैः करणकलेबरैः घटयित्वा तेषां स्वातन्त्र्यं दत्त्वा तज्ज्ञानचिकीर्षणप्रयत्नानुत्पादयन् वर्तस इत्यर्थः, किंच कदिन्द्रियगुणैः कुत्सितेन्द्रियजन्यज्ञानैः कृतविग्रहः कृतद्वेषः तव तेषामविषयत्वादधोक्षजत्वादिति भावः, अतो 'बलवद्भिः कृतद्वेषान्' इति सत्यमुक्तमित्यर्थः, किंच नृपपदं नृपासनम् अन्धं गाढं तम एव राजसादिगुणोत्तम्भकतया अविवेकबाहुल्यहेतुत्वात् तथाविधमित्यर्थः, यद्वा तमसा अज्ञानेन अन्धयति जनमिति तमोन्धं नृपपदं नृपासनं त्वत्सेवकैरेव विधुतं तिरस्कृतम् , त्वया त्यक्तमिति किमु वक्तव्यमिति भावः ॥ ३५ ॥

वी ॥ अस्पष्टवर्त्मनामित्यत्र प्रतिभाषते—त्वत्पादेति ॥ तव पादपद्मयोर्यो मकरन्दः अनुभवरसात्मकः तं सेवमानानां मुनीनामेव तव वर्त्म याथात्म्यम् अस्फुटम्, किंपुनरितरेषामिति भावः, तदेवाह—नृपशुभिरिति । ननु हे भगवन् नृपशुभिः नर एव पशवस्तैः पशुतुल्यैर्नृभिः पशुवज्जिह्वोपस्थसुखमात्राभिज्ञैः नृभिरित्यर्थः दुर्विभाव्यं दुःखेनापि विभावयितुं चिन्तयितुमशक्यमिति, अलोकपथमीयुषामित्यत्र प्रतिभाषते-यस्मादिति। यस्मात् ये त्वामनुवर्तन्ते तेषामपीहितं चेष्टितम् अलौकिकमेव, अथो अतः किमु वक्तव्यं भूम्नस्तवेश्वरस्य ईहितमलौकिकमितीत्यर्थः ॥ ३६ ॥

मु ॥ 'अस्पष्टवर्त्मनां पुंसामलोकपथमीयुषाम्' इति यदुक्तं, तदपि तथैवेत्याह—त्वत्पादेति ॥ त्वत्पादपद्ममकरन्दजुषां त्वत्पादभक्तिरूपमकरन्दसेविनां तदनुभवपरव-

निष्किञ्चनोननुभवान्नयतोऽस्तिकिञ्चिद्यस्मैबलिंबलिभुजोऽपिहरन्त्यजाद्याः
नत्वाविदन्त्यसुतृपोऽन्तकमाढ्यतान्धाः प्रेष्ठोभवान्बलिभुजामपितेपितुभ्यम्

शानामित्यर्थः, मुनीनामेव वर्त्म नृपशुभिः नराकारैः पशुभिः पशुवन्मूढात्मभिरित्यर्थः, दुर्विभाव्यं ननु एतावदितिदुर्विज्ञेयं खलु,तव वर्त्मास्फुटमिति उक्तमेवार्थं भङ्ग्यन्तरेणाह —यस्मादिति । ये भवन्तमनु अनुवर्तन्त इत्यर्थः , तेषामपीति शेषः, ईहितं व्यापार-पद्धतिः यस्मात् हेतोः अलौकिकमिव प्रतिभातीति शेषः, तस्मात् भूम्नः ईश्वरस्य सर्व-नियन्तुः तव ईहितम् अथो अथ अस्फुटमिति किमु वक्तव्यमित्यर्थः ॥ ३६ ॥

वी॥'आस्थिताः पदवीम्'इत्यादौ प्रतिभाषिष्यते 'यद्वाञ्छया'इत्यष्टमेन, तावत् 'नि-ष्किञ्चनाः'इत्यत्र प्रतिभाषते—निष्किञ्चनइति॥ ननु हे विभो त्वं निष्किञ्चन इति सत्य-मेव कुतः?यतः किञ्चिदप्यनवाप्यं नास्ति यस्य तथाभूतस्त्वं निष्किञ्चन इत्यर्थः, दरिद्र-तालक्षणनिष्किञ्चनत्वं तु न घटत इत्याह —यस्मात् इति। बलिभुजः बलिं पूजां भुञ्जत इ-ति तथा अन्येभ्यः पूजार्हा अपि ब्रह्मादयो यस्मै तुभ्यं बलिं पूजां हरन्त्यर्पयन्ति कुर्वन्ती-त्यर्थः,तस्य सर्वेश्वरस्य दरिद्रता न घटत इत्यर्थः, निष्किञ्चनजनप्रिया इत्यस्योत्तरं—प्रे-ष्ठोभवानित्यादि।निष्किञ्चनजनप्रिया इत्यत्र बहुव्रीहितत्पुरुषान्यतरत् उभावपि वा,सर्वदा-चेदृश एव भवानित्याह—प्रेष्ठइति।बलिभुजां पूजार्हाणां नारदादीनाम्,अकिञ्चनानाम् अ-नन्यप्रयोजनानां प्रेष्ठो भवान्, तथा तेऽपि बलिभुजोऽपि तुभ्यं तव प्रेष्ठाः.तस्मात्प्रायेणे-त्यस्योत्तरमाह—नत्वेति। आढ्यतया अभिजनादिभिराढ्यत्वाभिमानेनान्धाः विवेकशून्याः अन्तं करोतीत्यन्तकः तथाविधं त्वा त्वां न भजन्ति न भजन्ते,असुतृपः असूनिन्द्रियाण्येव तर्पयन्ति तथा, अन्तकमित्यस्य कालरूपेणायुर्हरन्तमित्याशयः ॥ ३७ ॥

मु ॥ अथ 'आस्थिताः पदवीं सुभ्रु प्रायस्सीदन्ति योषितः' इत्यस्य परिहारं 'यद्वा-ञ्छया' इत्यष्टमश्लोके वक्ष्यन्ती 'निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः । तस्मा-त्प्रायेण नह्याढ्या मां भजन्ति सुमध्यमे' इत्यत्रोक्तं दोषत्रयं तावत्परिहरति; लोके प्रसि-द्धं दौर्गत्यरूपं निष्किञ्चनत्वमन्यथाकृत्याह—निष्किञ्चन इति॥अत्र निष्किञ्चनत्वं द्वे-धा— कस्यचित् समस्यवा अभ्यधिकस्य वा वस्तुनोऽभावात् धनाभावाच्च, तत्राद्यमेव त्वयि, दारिद्र्यलक्षणं तु श्रियःपत्युस्तव दूरतोऽपास्तमित्याह— यतः त्वत्तः किंचित् सममधिकं वेत्यर्थः, नास्ति, स भवान् निष्किञ्चनो ननु, बलिभुजः हविर्भोक्तारः अन्य-त्र सर्वतः पूज्या अपीति भावः, अजाद्याः ब्रह्मादयोऽपि यस्मै भवते बलिं हरन्ति समर्प-यन्ति, तस्य भवतः कुतो दरिद्रतेत्यर्थः, अथ यदुक्तं भवता 'निष्किञ्चनजनप्रियाः' इति तत्पुरुषेण बहुव्रीहिणावा निन्दापरत्वेन, तदेव स्वयमप्युभयधा स्तुतिपरत्वेनाह—प्रेष्ठो भवानिति । बलिभुजां ब्रह्मादिलोकेश्वराणामपि भवान् प्रेष्ठः इष्टार्थप्रदानादिना सर्वनिर्वा-हकत्वेन प्रियतमः, अत एव ब्रह्मादयोऽपि तुभ्यं ते तवैव शेषभूता इत्यर्थः, 'तस्मात् प्रायेण नह्याढ्या मां भजन्ति सुमध्यमे' इत्यत्रोत्तरं— नमां विदन्तीति । आढ्यतया सं-पन्मदेन अन्धाः अदृशः विवेकशून्या इत्यर्थः, त्वा त्वाम् अन्तकं दण्डधरं न विदन्ती-ति, अतस्ते असून् प्राणानेव तर्पयन्ति अन्यायार्जितवित्तादिना प्रीणयन्तीत्यसुतृपः केव-लकुक्षिंभरयो न त्वात्महितं किञ्चिद्विदन्तीत्यर्थः , 'प्रेष्ठं सतां बलिभुजाम्' इति पाठे स-

त्वंवैसमस्तपुरुषार्थमयःफलात्मा यद्वाञ्छयासुमतयोविसृजन्तिकृत्स्नम् ।
तेषांविभोसमुचितोभवतस्समाजः[१]पुंसःस्त्रियाश्चरतयोस्सुखदुःखिनोर्न॥३८
त्वंन्यस्तदण्डमुनिभिर्गदितानुभाव[२]आत्माऽऽत्मदश्चजगतामितिमेवृतोऽसि ।
हित्वाभवद्भ्रुवउदीरितकालवेग ध्वस्ताशिषोऽब्जभवनाकपतीन्कुतोऽन्ये ३९

तां ब्रह्मादीनां प्रेष्ठं त्वाम् असुतृपः प्राणतर्पकाः केवलविषयासक्त्या देहपोषणैकलम्पटा इत्यर्थः, आढ्यतान्धा अन्तकं न विदन्तीत्यन्वयः॥ ३७ ॥

वी ॥ प्रेष्ठमित्यत्र हेतुं वदन्ती 'ययोरात्मसमं वित्तम्' इत्याद्युक्तमनौचित्यं परिहरति—समस्तपुरुषार्थस्वरूपः फलात्मा अभीप्सितफलरूपः आत्मा च, यद्वा अभीष्टतपःफलरूपः सर्वेषामिष्टतमं हि फलं सुखं त्वं तु निरवधिकानन्दरूपः चतुर्विधपुरुषार्थनिर्वाहकत्वस्वरूपस्य निरतिशयानन्दरूपस्य च तव सुखलेशसाधनभूतवित्तादिमद्भिस्साम्यं दूरापास्तमेवेति भावः,तर्हि निस्समत्वादेव मम त्वया सह विवाहोऽनुचित एव जात इत्यत आह—यद्वाञ्छयेति । यस्मिन् त्वद्दास्ये वाञ्छया कृत्स्नं त्वद्दास्यव्यतिरिक्तं सर्वं विसृजन्ति त्यजन्ति नेच्छन्तीति यावत्, अत एव ते जनाः सुमतयस्तेषां तव च समाजस्सङ्गतिरुचित एव, नहि तारतम्येऽपि स्वभावतः शेषशेषिणोस्सम्बन्धो नोचितः, अतस्त्वद्दास्यमात्राकाङ्क्षिण्याः मम तव च सम्बन्धस्सूचित एवेति भावः, ममान्येन तु संबन्धोऽनुचित इत्यभिप्रेत्याह—पुंसइति । रतयोर्मिथोः अतयोरतएव तत्कृतसुखदुःखिनोः पुंसः स्त्रियाश्च समाजो नोचित इत्यर्थः, यः केवलमैथुन्यतत्प्रयुक्तसुखदुःखानुभवार्थस्समाजः स तु नोचितः यस्त्वावयोश्शेषशेषिलक्षणस्समाजः स उचित एवेति भावः ॥ ३८ ॥

मु॥अथ बलिभुजामपि भवान्प्रेष्ठ इत्यत्र हेतुं बदन्ती यदुक्तं 'ययोरात्मसमं वित्तम्' इत्यत्रानौचित्यं तत्रोत्तरमाह—त्वंवा इति ॥ फलात्मा परमानन्दस्वरूपः तदनुभवस्यैवोपासकप्राप्यफलत्वात्, श्रूयते हि "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" "तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादि, त्वं खलु, अत एव यस्मिन् त्वयि वाञ्छया यत्प्राप्तीच्छयेत्यर्थः,सुमतयः आस्तिका मुनयः कृत्स्नं कर्म भवत्प्राप्तिसाधनेतरकर्म विसृजन्ति,तेषां मुनीनामेव समाजः सेव्यसेवकलक्षणसंबन्धः तवोचितः, यद्वा "समाजोऽथ सधर्मणाम्" इति नैघण्टुकोक्तेः तेषु तत्समानधर्मतया वृत्तिः तवैवोचितेत्यर्थः, स्वरतयोः मिथोरतयोः सुखदुःखिनोः अतएव तत्कृतसुखदुःखाकुलयोरित्यर्थः, पुंसस्त्रियोः स्त्रीपुंसयोः न तव नोचितः, अजितेन्द्रियाणां जन्तूनां समाजस्तव नोचित इत्यर्थः ॥ ३८ ॥

वी ॥ भिक्षुभिः श्लाघिता मुधेत्यस्योत्तरमाह—त्वमिति॥ भिक्षुपदव्याख्यानं न्यस्तदण्डैरिति, भिक्षुभिः सर्वभूतसुहृत्त्वं प्रार्थयमानैः न्यस्तदण्डैरित्यस्याप्ययमेवार्थः, गदितः श्लाघितः प्रभावो यस्य तथाभूतः तत्र हेतुं वदन्ती मुधेत्यस्योत्तरमाह—आत्मेति । त्रिजगतामात्मा आत्मदः आत्मपर्यन्तप्रदः 'य आत्मदा बलदाः'इतिश्रुतेः,आत्मत्वादात्मपर्यन्तवदान्यत्वाच्च गदित इत्यर्थः,आत्मद इत्यनेन मुक्तप्राप्यत्वं विवक्षितम्, नह्यात्मनः प्राप्यस्य च श्लाघा प्रयोजनान्तरापेक्षा, किंतु स्वसत्तालाभार्था प्राप्यप्राप्त्यर्था चेति । मुधे-

१. पुंसस्त्रियोस्स्व. मु. भा. प्र. पा ॥ २. आत्माऽऽत्मदस्त्रिजगताम्. मु. भा. प्र. पा ॥

जाड्यं वचस्तव गदाग्रज यस्तु भूपान्विद्राव्य शार्ङ्गनिनदेन जहर्थ मां त्वम् ।
सिंहो यथा[1] स्वबलिमाशु पशून्स्वभागं तेभ्यो भयाद्यदुदधिं शरणं प्रपन्नः ॥ ४०

वेति सत्यमुक्तमित्यर्थः,आत्मनश्शरीरादिविलक्षणतया स्तुतौ हि शरीरसत्तासिद्धिः,अथ 'वैदर्भ्यैतदविज्ञाय त्वयाऽदीर्घसमीक्षया' इत्यस्योत्तरमाह—इतीति । इतीत्थंभूतं भवन्तं ज्ञात्वेति शेषः, अब्जभवनाकपतीन् ब्रह्मेन्द्रादीन् भवतो भ्रुवस्सकाशादुदीरितो यः कालस्तस्य वेगेन ध्वस्ता आशिषो येषां तथाभूतान् हित्वा विहाय एवंविधत्वान्मम तेषां पुत्रस्थानीयत्वाच्च तद्गतवित्तादिप्रयुक्तसाम्यमविचार्यैवेति भावः, एवं हित्वेत्यनेन अविज्ञायेति व्याख्यातम्, मे मया त्वं वृतोऽसि, अब्जयोन्यादय एवाविचार्याः, कुतोऽन्ये चैद्यादयो विचार्याः स्युरित्यर्थः ॥ ३९ ॥

मु ॥ अथ 'भिक्षुभिः श्लाघिता मुधा' इत्यस्योत्तरमाह— त्वमिति ॥ न्यस्तदण्डैर्मुनिभिरिति भिक्षुपदं व्याख्यातम्, न्यस्तदण्डैः धृतत्रिदण्डैरित्यर्थः, गदितानुभावः वर्णितप्रभावः अतिस्पृहणीयभगवद्गुणाभिरत्या प्राप्यतया विरक्तैरप्यपेक्षणीय इति भावः, उक्तार्थस्थेम्ने हेतुद्वयमाह—त्रिजगतामात्मेत्यादि । सत्तानिर्वाहाय सर्वान्तर्यामीत्यर्थः, आत्मदः मुक्तप्राप्यभूतस्वरूपप्राप्तिप्रदश्च,अतस्तव श्लाघा न वृथेति मुधेत्यत्र परिहार उक्तः, 'वैदर्भ्यैतदविज्ञाय त्वयाऽदीर्घसमीक्षया' इति स्वस्मिन्नुक्तं दोषद्वयं परिहरति—इतीति । इति विज्ञायैवेत्यर्थः, मे मया वृतोऽसीत्यज्ञतापरिहारः, भवतो भ्रुवः भ्रूक्षेपात् तद्व्यङ्ग्यसंकल्पलेशादेरित्यर्थः.उदितः प्रेरितो यः कालवेगः तेन ध्वस्ताः वृथाकृताः आशिषो दीर्घमनोरथा येषां तान् अब्जभवादीनपि हित्वा वृतोऽसीत्यदीर्घसमीक्षोक्तिपरिहारः, अन्ये कुतः इतरे क्षुद्राः कुतो वरणीया इत्यर्थः ॥ ३९ ॥

वी॥पुनस्सिंहावलोकितन्यायेन 'राजभ्यो बिभ्यतः' इत्यस्योत्तरं वक्तुमात्मानयनदृष्टान्तेन निर्भयत्वं स्थापयन्ती स्पष्टमबिभ्यत इत्येव प्रयोक्तव्ये संशयापादकेन राजभ्योबिभ्यतः इति पूर्वरूपात्मकसन्धिना प्रयुक्तं वचश्शृण्वतां जाड्यावहमित्याह—जाड्यमिति ॥ हे गदाग्रज यस्त्वं शार्ङ्गनिनदेन शत्रून् भूपान् विद्राव्य पलाय्य मां जहर्थ हृतवानसि, तस्येदं वचो जाड्यं शृण्वतां सन्धिविशेषमजानतां त्वयि भयसम्भावनात्मकाज्ञानरूपजाड्यावहमित्यर्थः,हरणे दृष्टान्तः—यथा सिंहः पशून् महिषादीन्विद्राव्य स्वभागं हरति, तद्वदिति, किन्तद्वचो यज्जाड्यं तदाह—तेभ्य इत्यादि । तेभ्यः शत्रुभूतेभ्यो भयादुदधिं समुद्रं शरणं प्रपन्न इति यत् तत् ॥ ४० ॥

मु ॥ एवं स्वदोषद्वयं परिहृत्य उक्तरीत्या मय्यज्ञानादिकमापादयता त्वयैव प्रत्युत 'राजभ्योबिभ्यतस्सुभ्रु समुद्रं शरणं गतान्' इत्यादिकमज्ञानादेवोक्तमिति कोपावेशजनितकालुष्येण भगवन्तं वदतीत्याह—जाड्यमिति ॥ सिंहः पशून् जम्बुकादिक्षुद्रमृगान् विद्राव्य विपलाय्य स्वबलिं यथा स्वामिषमिव शत्रुभूपान् जरासन्धादीन् शार्ङ्गनिनदेनैव विद्राव्य स्वभागं स्वस्य नित्यानपायिलक्ष्म्यंशभूतामित्यर्थः, मां यस्त्वं जहर्थ हृतवानसि, तस्य तव तेभ्यो राजभ्यो भयात् उदधिं शरणं प्रपन्न इति यद्वचः, तत् जाड्यं जडस्य कर्म अज्ञानप्रयुक्तमित्यर्थः, वस्तुतस्तु सर्वज्ञस्य तव स्वत एवेत्याशयः ॥ ४० ॥

---

१. श्वबलिमीश. पा॥

यद्वाञ्छयानृपशिखामणयोऽङ्गवैन्यजायन्तनाहुषगयादयऐकपत्यम् ।
राज्यंविसृज्यविविशुर्वनमम्बुजाक्षसीदन्तितेनुपदवीन्त[१]इहास्थिताःकिम् ॥
काऽन्यंश्रयीततवपादसरोजगन्धमाघ्रायसन्मुखरितंजनतापवर्गम् ।
लक्ष्म्यालयन्त्वविगणय्यगुणालयस्यमर्त्यंसदोरुभयमर्थ[२]विवेकदृष्टिः॥४२॥

वी ॥'आस्थिताः पदवीं सुभ्रु प्रायस्सीदन्ति योषितः'इत्यस्योत्तरमाह—यद्वाञ्छयेति ॥ यस्मिन् त्वद्दास्ये वाञ्छया ये अङ्गादयो नृपोत्तमाः ऐकपत्यं ततो मत्वर्थीयोऽच्, तद्राज्यं त्यक्त्वा वनं विविशुः, तत्राङ्गो वेनस्य पिता, वैन्यः पृथुः, जायन्तो भरतः, नाहुषो ययातिः, ते नृपशिखामणयो हे अम्बुजाक्ष तव पदवीम् आस्थिताः इह सीदन्ति क्लिश्यन्ति किम्, अपित्विह पदवीं याथात्म्यं सीदन्ति उपासिषत उपासनादशायामपि त्वदनुभवात्मकं सुखम् अनुबभूवुः, इह लोके आस्थिताः अवस्थिताः किं, किं तु त्वत्साधर्म्यम् अवापुरित्यावृत्त्याऽन्वयः ॥ ४१ ॥

मु ॥ अथ 'अस्पष्टवर्त्मनाम्' इत्यत्र अर्थात् त्वां भजन्तस्सीदन्तीति श्रमबहुलत्वलक्षणमवसादनं यदवोचः, तदपि मन्दमेवेत्याह—यद्वाञ्छयेति ॥ यद्यप्यस्य परिहारः 'अस्पष्टवर्त्मनाम्' इत्येतदनन्तरमेव कार्यः, तथापि व्युत्क्रमेणात्रोक्तिः कोपवेगप्रयुक्तासहिष्णुतयेति बोद्ध्या. यद्वाञ्छया यस्य तव भजनमनोरथेन नृपशिखामणयः नृपोत्तमाः, अङ्गेति संबुद्धिर्वा, अङ्गो नाम वेनस्य पिता वैन्यः पृथुः जायन्तो जयन्तपुत्रः भरतः नाहुषः ययातिः गयश्चेत्यादिर्येषां ते य एते ये प्रसिद्धतयोक्ताः एते राजान इत्यर्थः, ते तव अनुपदवीम् अनुसरणमार्गं भजनप्रकारमित्यर्थः, नुपदवीमितिच्छेदो वा, आस्थितास्सन्तः अधितिष्ठन्तः ऐकपत्यं स्वव्यतिरेकेण पत्यन्तरशून्यं त्यागानर्हमपीति भावः, राज्यं धर्मपरिपालनात्मकं राज्ञः कर्म विसृज्य वनं विविशुः तपसा निश्श्रेयससाधनार्थमित्यर्थः, ते सीदन्ति किं नु निष्फलमेव क्लेशं प्राप्ताः किन्न्वित्यर्थः, किन्तु त्वत्पदमेव प्राप्ता इति भावः, अन्यथा अत्रैव वर्तेरन्नित्याह—त इहस्थिताः किमिति । ते राजानः इह स्थिताः किं न स्थिता एवेत्यर्थः ॥ ४१ ॥

वी ॥ 'अथात्मनोऽनुरूपम्' इत्यस्योत्तरमाह—काऽन्यमितिश्लोकद्वयेन ॥ गुणानां कल्याणानामाश्रयस्य तव पादसरोजयोः गन्धं कथंभूतं जनताया जनसमूहस्यापवर्गं निरतिशयफलरूपं लक्ष्म्याः ममालयम् आश्रयं सेव्यमितियावत् सद्भिर्मुखरितमाघ्रातम् अविगणय्यानादृत्य मर्त्यं मरणशीलं सदा उरु भयं यस्य तमन्यं पुरुषं का वा स्त्री अर्थविवेकदृष्टिः स्वाहिताहितविभागपरिशीलनपरा चेदाश्रयेत गुणाश्रयस्येत्यनेन गुणैर्हीना इत्येतत्पूर्वोक्तविधया व्याख्येयमित्यभिप्रेतम् ॥ ४२ ॥

मु ॥ 'अथात्मनोऽनुरूपम्' इति यदुक्तम्, तत्रोत्तरमाह—कान्यमित्यादिश्लोकद्वयेन ॥ गुणानामालयस्य कल्याणगुणनिधेः तव जनतायाः अपवर्गं चेतनवर्गस्य मोक्षहेतुम्, तत्कुत इत्यत्राह —सद्भिर्मुखरितमिति । महात्मभिस्तथा बहुधा प्रतिपादितमित्यर्थः, लक्ष्म्यालयं लक्ष्मीप्राप्यं तद्भोग्यमित्यर्थः, तव पादसरोजगन्धम् आघ्रायापि का स्त्री तम् अविगणय्य अनादृत्य मर्त्यम् अन्यं श्रयीत, या स्त्री आश्रयेदित्यर्थः, सा का स्त्री

१. इहस्थिता: किम्. मु. भा. प्र. पा ॥ २. विविक्त. मु. भा. प्र. पा ॥

तंत्वाऽनुरूपमभजंजगतामधीशमात्मानमत्रचपरत्रचकामपूरम् ।
स्यान्मेतवाङ्घ्रिररणंसृतिभिर्भ्रमन्त्यायोवैभजन्तमुपयात्यनृतापवर्गः ॥ ४२ ॥
तस्यास्स्युरच्युतनृपाभवतोपदिष्टाःस्त्रीणांगृहेषुखरगोश्वबिडालभृत्याः ।

---

अर्थे पुरुषार्थे विषये विविक्तं पूतं विषयवैलक्षण्यादनुकूलमित्यर्थः, यत् ज्ञानं तद्वती स्यात् त्वत्पादपद्मोपेक्षिणी चेत् न हि पुरुषार्थाभिज्ञेति भावः, मर्त्यमिति—मरणधमर्कमित्यर्थः, सदोरुभयमित्यनेन देहानुगुणकर्मपरतन्त्रतया सर्वदा अत्र परत्र च भयाकुलमित्यर्थः, अत्र गुणालयस्येत्यनेन 'वृता वयं गुणैर्हीनाः' इत्यस्य परिहार उक्तः, तत्र 'गुणैर्हीनाः' इत्यस्य 'अपहतपाप्मा विजरः' इत्यादिश्रुत्युक्तक्रमेण हेयगुणराहित्यं विवक्षितमित्याकूतम् ॥

वी॥ अतस्त्वामेवाहमभजमित्याह—तमिति ॥'तमुक्तविधं किञ्चानुरूपं शेषित्वादिति भावः, एवंविधं त्वा त्वामेव अभजम्,—किञ्चित्प्रार्थयते—स्यादिति । सृतिभिः गतिभिर्जन्मभिरिति यावत्, 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' 'देवत्वे देवदेहेयं मनुष्यत्वे च मानुषी' इत्युक्तावतारविशेषैरित्यर्थः, भ्रमन्त्याश्चरन्त्यास्त्वत्सहचारिण्या मम तवाङ्घ्रिरेव अरणं गृहमाश्रय इति यावत् स्यात्, कथंभूतस्य योऽनृतस्य पापस्य तन्मूलसंसारस्य वा अपवर्गोऽवसानं यस्मात्तथाभूतः भजन्तमुपयाति अनुभजते तस्य तवेति सम्बन्धः ॥ ४२ ॥

मु ॥ तस्मादहं त्वामेवाभजमित्याह—तं त्वेति ॥ अनृतं संसारः 'अनृतेन हि प्रत्यूढाः' इति श्रूयते, तस्यापवर्गो नाशो यस्मात् सः यो जगदधीशः भजन्तं भक्त्या प्राप्नुवन्तं जनमुपयाति आत्मसात्करोति,तं जगतामधीशं त्वा त्वाम् अभजमित्यन्वयः, "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति श्रुत्यर्थोऽत्र स्फोर्यते, अनुरूपं मन्मनोरथानुगुणस्वरूपव्यापारमित्यर्थः, अत्र परत्र च आत्मानं स्वरूपसत्तानिर्वाहकमन्तर्यामिणं कामान् मनोरथान् पूरयति तत्तदनुगुणफलप्रदानेन पूर्णान् करोतीति कामपूरम्, अत्र परत्र च अनुरूपं यथा तथा कामपूरमिति वा, अथ स्वाभीष्टं प्रार्थयते—स्यादिति । सृतिभिः देवतिर्यगादिजन्मभिः, श्रुतिभिरिति पाठे नानाफलकबहुविधकर्मश्रवणैरित्यर्थः, भ्रमन्त्याः एतावत्पर्यन्तमनिर्धारणेन इतस्ततस्संचरन्मनस्कायाइत्यर्थः, मे तव अङ्घ्रिः अरणं शरणं स्यादिति संसारभीतस्य अनुरूपं शरणमेव भजनयोग्यम्, अतस्त्वामेव अहम् अभजमित्यर्थः, 'या वै भवन्तमुपयात्यनृतापवर्गम्' इति पाठे या स्त्री अपवर्गे मोक्षहेतुं भवन्तम् अपयाति जहाति, सा अनृता ऋतं पुण्यं न विद्यते तद्यस्यास्सा नष्टेत्यर्थः, अतोऽहं त्वामभजमिति ॥ ४२ ॥

वी ॥ ये राज्ञां गुणाः 'राजपुत्रीप्सिता भूपैः' इत्यादिनोक्तास्तत्र सेर्ष्यं सशापं साङ्गुलिभङ्गं चाह द्वाभ्यां—तस्यास्स्युरिति ॥ हे अच्युत ये नृपाः स्त्रीणां गृहेषु स्त्रीप्रधानकेषु गृहेषु खरा इव केवलं भारवाहाः गावो बलीवर्दा इव नित्यं व्यापारक्लिष्टाः श्वान इवावमताः गृहपालनाद्यर्थं द्वारस्थाश्च बिडाला इव कृपणाः पदा ताडयमाना अपि पुनःपुनरनुवर्तमानाश्च भृत्या आज्ञाधारकाश्च ते तस्या दुर्भगायाः पतयस्स्युः, तामेव विशिनष्टि—यदित्यादिना । हे अरिकर्शन शत्रुहन् त्वं यस्याः कर्णमूलं कर्णपथं नोपयायाः नोपगतवान्, तथा मृडविरिञ्चादिभिः सभायां तेषां सभायां वा गीतास्तव कथा-

यत्कर्णमूलमरिकर्शननोपयायाद्युष्मत्कथामृडविरिञ्चिसभासुगीता ॥ ४४
त्वक्श्मश्रुरोमनखकेशपिनद्धमन्तर्मांसास्थिरक्तकृमिविट्कफवातपित्तम् ।
जीवच्छवं भजति कान्तमतिर्विमूढा या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥ ४५
अस्त्वम्बुजाक्ष मम ते चरणानुराग आत्मन्रतस्य मयि चानतिरिक्तदृष्टेः ।

---

श्च नोपाययुः, या त्वां त्वत्कथाश्च कदाऽपि न श्रुतवती, तस्याः पतयस्स्युरिति सम्बन्धः ॥ ४४ ॥

मु॥अथ 'राजपुत्रीप्सिता भूपैर्लोकपालविभूतिभिः'इत्यादिना यद्राज्ञां गुणवर्णनं कृतं तत्रोत्तरं सजुगुप्समाह—तस्यास्स्युरित्यादिना द्वयेन॥ हे अरिकर्शन बाह्याभ्यन्तरशत्रुकर्शन युष्मत्कथा यत्कर्णमूलं नोपयायात् न प्रविशेत्, तस्याः स्त्रिया एव भवतोपदिष्टाः 'राजपुत्रीप्सिता भूपैः' इत्यादिनोक्ताः नृपाः स्युः, प्रियतमास्स्युरित्यर्थः, जुगुप्सावहां तद्वृत्तिमाह—खरगोश्वेति । एतत्तुल्या इत्यर्थः, तत्र खरगोसाम्यं भारवहनादिनित्यव्यापारे सत्यपि क्लेशागणनया तत्क्षमाद्योतनार्थम्,विडालसाम्यं दुस्सहनित्यावमाने सत्यपि तदगणनया पुनःपुनस्तदनुवृत्तिद्योतनार्थम्, भृत्यसाम्यं जुगुप्सानादरेण सर्वकर्मप्रवृत्तिबुद्धिद्योतनार्थश्चेति विवेकः,अत्र स्त्रीणां गृहेषु खरगोश्वबिडालतुल्याश्च ते भृत्याश्च तत्तुल्या भृत्यभूता इत्यर्थः ॥ ४४ ॥

वी ॥ तथाहीत्याह—त्वगिति ॥ या स्त्री तव पदाब्जमकरन्दम् अजिघ्रती नाघ्रातवती कदाप्यश्रुतत्वत्कथा अत एव विमूढा अत एव कान्तः प्रियतमो ममेति मतिर्यस्यास्सा बहिस्त्वगादिभिः पिनद्धं छन्नमन्तर्मांसादयो यस्मिन् तज्जीवितशवतुल्यं कलेबरं यस्य तं पुरुषाधमं भजते, विट् मलम्, त्वगादयः प्रसिद्धाः ॥ ४५॥

मु॥किंच—विमूढा अज्ञा या स्त्री ते पदाब्जमकरन्दम् अजिघ्रती नाघ्रातवती त्वत्पादभक्तिरसास्वादरहितेत्यर्थः, भवतीति शेषः,सा कान्तोऽयमिति मतिर्यस्यास्सा सती बहिः त्वगादिभिः पिनद्धम् आच्छादितम् अन्तर्मांसादिमयं च जीवच्छवं भजतीति॥४५॥

वी ॥ यदुक्तम् 'उदासीना वयम्' इत्यादि, तत्राह—अस्त्विति ॥ हे अम्बुजाक्ष आत्मन् आत्मनि रतस्य आत्मारामस्येत्यर्थः, अनेन निरपेक्षत्वरूपमुदासीनत्वमनूदितम्, मय्यनतिरिक्ता अनतिशयिता दृष्टिर्यस्य अनेनाकामुकत्वम्, तस्य तव चरणयोः अनुरागः प्रेमा अस्तु ममेति शेषः, यद्यप्युदासीनोऽकामुकश्च सन्गृहमेधिधर्मानभिनयसि, तथाऽपि मयाऽपि त्वच्चरणानुरागमात्रमेव प्रार्थनीयं न तु ततोऽधिकमिति भावः, सन्तु वा तव वचांस्यापातप्रतीतिनिष्ठुरार्थपराणि तथापि कदाचित्समयविशेषे तव मय्यनुकम्पा दुर्निवारैवेत्यभिप्रेत्याह—यर्हीत्यर्धेन । यर्हि यदा अस्य विश्वस्य वृद्धये समृद्धये उपात्ता रजसः सृष्ट्युपयुक्तरजोगुणस्यातिमात्रा औत्कट्यं येन तथाभूतस्सन् मामीक्षस इति यत् तदुह तदेव परमा निरतिशया अनुकम्पा कृपा विचित्रं जगत् सृष्ट्वा तत्र मदनुमोदनार्थं मामीक्षस इत्येषैव म[illegible]नी कृपेत्यर्थः ॥ ४६ ॥

मु ॥ यदुक्तम् 'उदासीना वयम्' इत्यादिना औदासीन्याकामुकत्वे, तत्तथेत्यङ्गीकुर्वती आत्मलाभप्रार्थनापूर्वकं सन्तुष्यति—अस्त्विति॥ आत्मन्नित्यव्ययं सप्तम्यर्थे, रत-

यर्ह्यस्यवृद्धयउपात्तरजोतिमात्रो मामीक्षसेतदुहनःपरमानुकम्पा ॥ ४६

नैवालीकमहंमन्ये वचस्तेमधुसूदन। अम्बायाइवहिप्रायःकन्यायास्स्याद्रतिःक्वचित् ॥

ऊढायाश्चापिपुंश्चल्यामनोऽभ्येतिनवंनवम्।बुधोऽसतींनबिभृयात्तांबिभ्रदुभयच्युतः॥

श्रीभगवानुवाच—

साध्व्येतच्छ्रोतु[१]कामेन राजपुत्रिप्रलम्भिता ।

---

स्य आत्मारामस्येत्यर्थः, अनेन निरपेक्षत्वरूपमुदासीनत्वमुक्तम्, मयि च मय्यपि अतिरिक्ता अतिशयवती न भवतीत्यनतिरिक्ता दृष्टिर्यस्येत्यकामुकत्वमुक्तम्, एवंविधस्यापि ते चरणानुरागः पादभक्तिः मम अस्तु. अयमेव परमलाभ इति भावः, किं च यर्हि यदा अस्य विश्वस्य वृद्धये समृद्धये उपात्तरजसः सृष्टिहेतुभूतरजोगुणस्य अतिमात्रौत्कट्यं येन सः तथ ्तस्सन् मामीक्षसे मया सृष्टस्यास्य जगतः समृद्धिं त्वत्कटाक्षैः कुर्विति यथा मामीक्षसे इत्यर्थः, जगत्समृद्धेः श्रीकटाक्षमूलत्वात् तस्यापि भगवदीक्षामूलत्वाच्चेति,तदु तदेव नः अस्माकमिति बहुवचनं संतोषप्रयुक्तबहुमानकृतम्, परमानुकम्पा अत्यनुग्रहः, हेति हर्षे, क्वचित्समयेऽपि वा मय्यनुग्रहो दुर्वारस्त्वंवेति हर्ष इति भावः ॥

वी ॥ तदेवं सर्वं तदुक्तं प्रतिभाष्य प्रसन्नचित्ता मन्त्रमुपदिशन्तीप्राह नैवेति द्वाभ्याम् ॥ हे मधुसूदन तव यद्वचः 'अथात्मनोऽनुरूपं वै' इत्यादि तदलीकमनृतं न मन्ये नासत्यमित्यर्थः, कुतः ? यतो लोके कन्याया एव क्वचित्पुरुषविशेषे रतिर्भवति, यथा अम्बायाः काशिराजपुत्रिकायाः अम्बाख्यायाः, तद्वत्, अम्बायाः कन्याया एव साल्वे रतिर्बभूवेतीतिहासोऽत्र विवक्षितः ॥ ४७ ॥

मु ॥ तदेवं भगवदुक्तं सर्वं प्रत्याख्याय प्रसन्नचित्ता सती योऽयं प्रायशो लौकिकस्त्रीस्वभावः, तत्प्रकटनपूर्वकं रहस्यमुपदिशन्त्याह—नैवेति ॥ ते वचः 'अथात्मनोऽनुरूपम्' इत्यादिकम् अलीकम् असत्यमिति नैव मन्ये, कुतः ? यतः लोके अम्बाया इव अम्बा अम्बाली अम्बिकाचेति तिस्रः काशीराजकन्याः, तासां मध्ये साल्वे रतिमत्यास्तस्या इवेत्यर्थः, कन्याया एव क्वचित् पुरुषे रतिः स्यात् ॥ ४७ ॥

वी ॥ तथा ऊढायाः परिणीताया अपि पुंश्चल्या मनो नवंनवं पुरुषमभ्येति. ततः किमत आह—बुध इति । बुधो बुद्धिमान् असतीमुक्तविधां स्त्रियं न बिभृयात्, विपर्यये अनर्थमाह—बिभ्रत् पुष्णन् उभयच्युतः उभयस्मादेतल्लोकात्परलोकाच्च प्रच्युतो भवति, इहामुत्र च न सुखी किं तु दुःखी भवतीत्यर्थः ॥ ४८ ॥

मु॥ तथाच व्यूढायाः परिणीतायाः अपि पुंश्चल्याः असत्याः मनः नवंनवं पुरुषम् अभ्येति,ततः किमित्यत्र असतीभरणं दुःखोदर्कमित्याह – बुध इति। शास्त्रज्ञश्चेदित्यर्थः, असतीं दुष्टां न बिभृयात् नोद्वहेत्, तां बिभ्रत् पुमान् उभयात् ऐहिकामुष्मिकसौख्यद्वयात् च्युतः भ्रष्टः स्यादिति रहस्यमित्यर्थः ॥ ४८ ॥

वी ॥ अथैवं क्रोडीकृतस्वाभिप्रायो भगवानिदमेव मदभिप्रेतम्, कूटवचांसि तु त्वद्वचश्शुश्रूषया प्रयुक्तानीत्याह—साध्वीति ॥ हे साध्वि हे राजपुत्रि श्रोतुकामेन मया एतत्त्वद्वच इति शेषः. प्रलम्भिता इत्थमुपहसितेत्यर्थः, यन्मयोदितं सर्वमन्वात्थ तात्प-

---

१. कामैस्त्वं. मु. भा. प्र. पा॥

मयोदितंयदन्वात्थ सर्वंतत्सत्यमेवहि ॥ ४९

यान्यान्कामयसेकामान्मय्यकामायमानिनि ।
सन्तिह्येकान्तभक्तायास्तवकल्याणिनित्यदा ॥ ५०

उपलब्धंपतिप्रेमपातिव्रत्यंचतेऽनघे । यद्वाक्यैश्चाल्यमानाया नधीर्मय्यपकर्षिता ॥
येमांभजन्तिदांपत्ये तपसाव्रतचर्यया । कामात्मानोऽपवर्गेशं मोहितामममायया ॥

---

र्यैक्रोडीकारेण प्रतिभाषितवत्यसि, तत्सर्वं सत्यमेव मदभिप्रेतमेव ॥ ४९ ॥

मु ॥ एतत् सम्यक् मनोहरं ते वचनजातमित्यर्थः, श्रोतुकामैः श्रोतुमुत्पन्नैः अभिलाषैरित्यर्थः, हेतुभिः प्रलम्भिता इत्थम् उपहसितासि, अथ मयोदितं यदन्वात्थ अन्वाख्यातवती, तत्सर्वं सत्यमेवेति ॥ ४९ ॥

वी ॥ अतीव तुष्टोऽनुगृह्णाति—यान्यानिति ॥ हे मानिनि यान्यान्कामान् 'स्यान्मे तवाङ्घ्रिरणम्' 'अस्त्वम्बुजाक्ष मम ते चरणानुरागः' इत्येवं काम्यमानान् अकामाय कामान्निवृत्तये मदनपायित्वव्यतिक्रमनिवृत्तये कामयसे, ते कामा मय्येकान्तभक्ताया अनन्यप्रयोजनभक्तियुक्तायाः तव हे कल्याणि नित्यदा सन्त्येव, न त्वया प्रार्थ्या मया देयाश्चेत्यर्थः ॥ ५० ॥

मु ॥ भगवानेवमुक्त्वा अतिसंतुष्टस्सन्नाह—यानिति ॥ हे मानिनि यान् कामान् कामयसे अभिवाञ्छसि,मयि एकान्तभक्ताया नियतभक्तिमत्यास्तव हे कल्याणि भद्रस्वरूपे ते कामा इति शेषः, अकामाय कामनिवृत्तये सन्ति मोक्षपर्यवसायिनो वर्तन्त इत्यर्थः ॥

वी ॥ अभिनन्दति—उपलब्धमिति॥ हे अनघे पत्यौ मयि प्रेम्णा यत्पातिव्रत्यं पतिपारार्थ्यं तदुपलब्धं दृष्टं मयेति शेषः, कुतः? यद्यतो वाक्यैः उक्तविधैर्मद्वाक्यैः चाल्यमानाया अपि तव धीर्बुद्धिर्मयि नापकर्षिता नापनीता नान्यविषया जाता ॥ ५१ ॥

मु ॥ इति वरान् दत्त्वा तामभिनन्दन्नाह— उपलब्धमिति ॥ हे अनघे निरवद्ये पतिप्रेम प्रियानुरागः पातिव्रत्यं च लोके प्रायशो भर्तरि रागरहितायाः पातिव्रत्यासंभवात् कार्यकारणभावेनोभयोक्तिः, उपलब्धं मया सम्यक् परीक्षितमित्यर्थः, कथं तत्परीक्षितमित्यत्राह--- यदिति । यत् यस्मात् वाक्यैः उक्तप्रकारमदुक्तिभिः चाल्यमानायाः अन्यथा क्रियमाणायाः अपि ते मयि विषये धीः नापकर्षिता अपकर्षं मां विहाय अन्यविषयत्वं न प्राप्तेत्यर्थः ॥ ५१ ॥

वी ॥ एकान्तभक्तिमभिनन्द्य तामेव दृढीकर्तुं सकामान्भक्तान्निन्दति—ये मामिति॥ ये जनाः कामात्मानः क्षुद्रमनोरथाविलचित्ताः मोक्षाधिपतिमपि मां दाम्पत्ये दम्पत्योः कर्मणि दम्पत्युपभोग्यसुखार्थमित्यर्थः, तपसा मनःप्रणिधानात्मकेन व्रतचर्यया अनशनादिव्रतानुष्ठानेन च भजन्ति, ते मम मायया मोहिताः ॥ ५२ ॥

मु ॥ एवं स्वस्मिन्नेकान्तभक्तिमभिनन्द्य तदतिशयदृढीकरणार्थं सकामान् भक्तान् निन्दन् आह— येमामिति ॥ कामात्मानः क्षुद्रमनोरथाविलचित्तास्सन्तः ये जनाः दाम्पत्ये दम्पतिकृत्यतदुपभोग्यवैषयिकसुरतार्थमित्यर्थः, तपसा यमनियमादिसप्ताङ्गनिष्पन्नेन समाधिना व्रतचर्यया चान्द्रायणादिना तत्तत्फलसाधनव्रताचरणेन च मां भजन्ति मायया मत्प्रवर्तितप्रकृतिमहिम्ना मोहिताः भ्रान्तिं प्रापिता एवेत्यर्थः ॥ ५२ ॥

मांप्राप्यमानिन्यपवर्गसंपदं वाञ्छन्तियेसंपदएवतत्पतिम् ।
तेमन्दभाग्यानिरयेऽपियेनृणां मात्रात्मकत्वान्निरयस्सुसङ्गमः ॥ ५३
दिष्ट्यागृहेश्वर्यसकृन्मयित्वया कृताऽनुवृत्तिर्भवमोचनीखलैः ।
सुदुष्कराऽसासुतरांदुराशिषो ह्यसुंभरायानिकृतिंजुषस्स्त्रियाः ॥ ५४

वी ॥ तदेवोपपादयति—मामिति॥ अपवर्गः मोक्षः स एव सम्पल्लक्ष्मीर्यस्मात्तं तासामपवर्गेतरसम्पदामपि पतिं मां प्राप्य प्रसाद्य तप आदिभिरिति शेषः, सम्पदः अपवर्गेतरकामानेव वाञ्छन्ति, ते जनाः मन्दभाग्याः, कुतः ? यद्यस्माद्ये नृणां विषयाः, ते निरये नरकेऽपि स्युः, कुतश्शब्दादिविषयसुखानां केवलदुःखात्मकनरके सम्भवः? तत्राह—मात्रात्मकत्वात्तेषां सुखलेशात्मकत्वान्नरके सम्भव इति भावः, अतो निरयः सुसङ्गमः शोभनरूपतया प्रतीयमानो दम्पत्योस्सङ्गमः निरयो नरकप्राय एव, अतस्ते मन्दभाग्या इत्यर्थः ॥ ५३॥

मु ॥ उक्तमेव विशदं प्रपञ्चयति— मामिति ॥ ये नराः अपवर्गेण मोक्षेण सह संपदः तदितरभोग्यविषयाः यस्मात् मत्तः तं मां प्राप्य प्रसाद्य केवलं संपद एव विषयान् भोग्यार्थान् वाञ्छन्ति,एवकारस्य इतरनिषेधित्वात् तन्निषेध्यमाह—तत्पतिमिति । तासांसंपदां योऽहमेव पतिः तं मामित्यर्थः, एवकारसामर्थ्यादेव नेति लभ्यते, न वाञ्छन्तीत्यर्थः, विषयासक्तानां निकृष्टत्वमेवाह—तइति । ये विषयाः निरये निरयप्राये अतिनिकृष्टयोनावपि नृणां स्युः संभवेयुः, तान् संपद एव विषयान् ये वाञ्छन्ति, ते मन्दभाग्या इत्यन्वयः, किंच मात्रात्मकत्वात् तासां संपदां विषयात्मकत्वात् निरयः सुसंगमः तासु सतीषु नृणामतिनिकृष्टयोनिसंबन्धोऽपि शोभनसङ्ग एव स्यात्, अहो संपन्महिमेति भावः, शोभनः तात्कालिकक्षुद्रसुखावहः संगमो यस्येति सुसंगमः, अतः केवलसंपत्कामिनो मन्दभाग्या इति. यद्वा प्राप्य प्रसाद्य ये अपवर्गसंपदं सकलबन्धमोक्षसमृद्धिं वाञ्छन्ति. ते तत्पतिम् अपवर्गकर्तारं मामेव संपदः साक्षान्मत्स्वरूपानुभवजनितानन्दविभूतीरित्यर्थः, वाञ्छन्ति, अपितु ये मन्दभाग्यास्सन्तः निर्गतः अयः मोक्षश्रीरूपशुभावहविधिः यस्मात् तस्मिन् निरये केवलवैषयिकसुखे स्युः, तत्कामुका भवेयुरित्यर्थः, तेषां नृणां निरयो नरकः सुसंगमः सुलभप्रापतिकः,कुतः? मात्रात्मकत्वात तेषामतिकृच्छ्रविषयप्रवणबुद्धिकत्वादित्यर्थः, मात्रासु अल्पविषयांशेषु आत्मा धृतिः येषां ते मात्रात्मका इति विग्रहः ॥ ५३ ॥

वी ॥ पुनरप्यभिनन्दति—दिष्ट्येति॥ हे गृहेश्वरि त्वया मयि भवमोचनी निष्कामा अनुवृत्तिः कृता, एतत् दिष्ट्या आनन्दः, वृत्तिं विशिनष्टि—असावनुवृत्तिः खलैः दुर्जनैः दुःखेनापि कर्तुमशक्या, दुराशिषो दुरभिप्रायाः अतएवासुम्भरायाः इन्द्रियतर्पणपरायाः निकृतिंजुषः वञ्चनपरायाः स्त्रियास्तु सुतरां दुष्करा ॥ ५४ ॥

मु ॥ तस्मात् हे गृहेश्वरि अजिते बाह्याभ्यन्तरशत्रुभिः जेतुमशक्यत्वादजिताख्ये मयि खलैः दुष्प्रवर्तनैः सुदुष्करा भवमोचनी निष्कामतया संसारनिवर्तनी अनुवृत्तिः त्वया कृता, एतदनुवृत्तिकरणं दिष्ट्या भाग्यमहिम्नेत्यर्थः, असौ अनुवृत्तिः दुराशिषः दुर्भगायाः अत एव असुंभरायाः स्वप्राणतर्पणमात्रपरायाः निकृतिंजुषः वञ्चनामेव

नत्वादृशींप्रणयिनींगृहिणींगृहेषु पश्यामिमानिनिययास्वविवाहकाले ।
प्राप्तान्नृपान[1]वगणय्यरहस्करोमे प्रस्थापितोद्विजउपश्रुतसत्कथस्य ॥ ५५
भ्रातुर्विरूपकरणंयुधिनिर्जितस्य प्रोद्वाहपर्वणिचतद्वधमक्षगोष्ठ्याम् ।
दुःखंसमुत्थमसहोऽस्मदयोगभीत्या नैवाब्रवीःकिमपितेनवयंजितास्मः ॥
दूतस्त्वयाऽऽत्मलभनेसुविभक्तमन्त्रः प्रस्थापितोमयिचिरायतिशून्यमेतत् ।

सेवमानायाः तत्पराया इत्यर्थः, स्त्रियाः सुतरां दुष्करेति ॥ ५४ ॥

वी ॥ नत्वामिति ॥ हे मानिनि प्रणयिनीं प्रेमवतीं न पश्यामि, तत्र निदर्शनं वदंस्त्वां विशिनष्टि—ययेति । यया त्वया अवगणय्यानादृत्य श्रुतास्सत्कथास्त्वदीयाः येन तस्य मे मह्यं रहस्करः रहस्यवार्ताहर्ता द्विजः प्रेषितः, अतस्त्वादृशीं भार्यां न पश्यामीत्यर्थः ॥ ५५ ॥

मु ॥ किंच यद्यपि लोके निरङ्कुशपतिप्रेमपारवश्येन निष्कामतया वर्तमानाः कतिचित् सन्ति, तथापि त्वादृशीं कापि न पश्यामीत्यनेकधा तदेकान्तभक्तिं बहुमानेन अभिनन्दति—न त्वादृशीमिति ॥ उपश्रुताः सत्यः मनोहारिण्यः कथाः त्वद्गुणरूपाद्युपश्लोकवार्ता येन तस्य मे मह्यमित्यर्थः, रहोहरः रहस्यवार्ताहारी द्विजः प्रस्थापितः त्वया प्रेषितः,तत्कदेत्यत्राह—ययेति। यया त्वया स्वविवाहकाले आसन्ने स्वस्य विवाहपर्वण्येव प्राप्तान् स्ववरणार्थं तदुत्सवदर्शनार्थं च आगतानित्यर्थः, नृपान् अविगणय्य तृणीकृत्य द्विजः प्रस्थापित इति, अतः गृहेषु गृहस्थाश्रमेषु प्रणयिनीम् ईदृशपतिप्रेमसंपन्नां त्वादृशीं गृहिणीं भार्यां न पश्यामीति ॥ ५५ ॥

वी ॥ किञ्च त्वद्गुणैरेवाहं वशीकृत इत्याह—भ्रातुरिति ॥ युद्धे मया निर्जितस्य भ्रातुः रुक्मिणो विरूपकरणं तथा प्रोद्वाहपर्वण्यनिरुद्धविवाहोत्सवे तत्राप्यक्षगोष्ठ्यां द्यूते तस्य रुक्मिणो वधम्, इदं समनन्तराध्याये स्फुटीभविष्यति, समुत्थं तद्वधश्रवणजं दुःखं च अस्मदयोगभीत्या अस्माद्विश्लेषभीत्या हेतुभूतया असहः सोढवत्यसि, किमपि नाब्रवीः नोक्तवत्यसि, तेनैवंविधगुणजातेन वयं जिताः स्मः वशीकृता बभूविम,यद्यप्यस्य प्रणयकलहस्यानिरुद्धविवाहानन्तर्यमतो ज्ञायते, तथाप्यत्र व्युत्क्रमेणोक्तिः प्रश्नानुगुण्येनेत्यवगम्यते ॥ ५६ ॥

मु ॥ किंच अलोकसाधारणैः त्वद्गुणैरेवाहं वशीकृतोऽस्मीत्याह—भ्रातुरिति ॥ युधि निर्जितस्य भ्रातुः रुक्मिणः विरूपकरणं श्मश्र्वादिखण्डनेन विरुद्धरूपकरणं प्रोद्वाहपर्वणि अनिरुद्धविवाहोत्सवे अक्षगोष्ठ्यां द्यूतप्रसङ्गे तद्वधं तस्य भ्रातुः वधं च समुत्थं कालान्तरे तदनुस्मरणेन पुनःपुनरुत्थितं दुःखं च अस्माभिः अयोगो वियोगः तद्भीत्या असहः सोढवत्यसि किमपि प्रत्युत्तरमित्यर्थः, नैवाब्रवीः नावदः, तेनैतेन त्वच्छीलादिनेत्यर्थः, विनिर्जिता वयं वशीकृताः स्म, अनेनैवास्य नर्मकलहस्य अनिरुद्धविवाहानन्तर्यं बोद्धव्यम्, अत्र व्युत्क्रमोक्तिस्तु प्रश्नानुगुण्येनेति न कश्चिद्विरोधः ॥ ५६ ॥

वी ॥ किञ्च—दूतइति ॥ आत्मलभने मत्प्राप्त्यर्थं सुविभक्तः 'यर्ह्यम्बुजाक्ष न

१. विगणय्य रहोहरो मे मु. भा. प्र. पा ॥

मत्वाजिहासइदमङ्गमनन्ययोग्यं तिष्ठेततत्त्वयिवयंप्रतिनन्दयामः ॥ ५७
श्रीशुक उवाच—
एवंसौरतसल्लापैर्भगवान्देवकीसुतः । स्वरतोरमयारेमे नरलोकंविडम्बयन् ॥ ५८
तथान्यासामपि [१]स्त्रीणांगृहेषुगृहवानिव। आस्थितोगृहमेधीयान्धर्मान्लोकगुरुर्हरिः॥

इतिश्रीभागवते, महापुराणे दशमस्कन्धे षष्टितमोऽध्यायः ॥ ६० ॥

लभेय तव प्रसादं जह्यामसून्व्रतकृशान् शतजन्मभिस्स्याम्' इत्येवं विविच्य ज्ञापितो मन्त्रो यस्य सः दूतः प्रेषितः, तदापि मयि चिरायति ईषद्विलम्बं कुर्वति सति एतद्विश्वं शून्यं मत्वा इदमनन्यार्हमङ्गं शरीरं जिहासे हातुमिच्छामीत्येवं भवती तिष्ठेत स्थितवतीति यत्, तत् त्वयि वयं केवलं प्रतिनन्दयामः प्रतिकर्तुमशक्नुवन्तः केवलं हर्षयाम इत्यर्थः,यद्वा जिहासे इत्येवं विभक्तमन्त्रो दूतः प्रस्थापित इति सम्बन्धः ॥ ५७ ॥

मु ॥ किंच कदाचिदपि पूर्वं मद्दर्शनमलभमानाया अपि श्रवणमात्रेणैव अनिर्वाच्यमनुरागोत्कर्षं मयि दधत्याः तव यन्ममालाभे देहमेव त्यक्ष्यामीति साहसमुक्तम् , तस्य वयं किं प्रतिकर्तुं शक्नुम इत्याह—दूत इति ॥ आत्मलभने मत्प्राप्तिविषये मत्प्रापणार्थमित्यर्थः, सुविभक्तमन्त्रः स्फुटीकृताम्बिकालयगमनादिरहस्यवृत्तान्तः दूतः प्रस्थापितः प्रेषितः, तत्रापि मयि चिरायति श्वो भाविनि विवाहे सत्वरमागन्तव्यमिति कृतसमये मयि मन्दायमाने सतीति तस्मिन्नेव समये मयि कथंचिदप्राप्नुवति सतीत्यर्थः,तदा एतत् विश्वं शून्यं मत्वा अनन्ययोग्यं तदन्यैर्भोक्तुमनर्हमिदमङ्गं जिहासे त्यक्तुमिच्छामि इत्येवं सुष्ठु विभक्तमन्त्रः स्फुटीकृतनिश्चयरूपरहस्यवार्तस्सन् स दूतः प्रेषित इति, तथाह्युक्तं—'यर्ह्यम्बुजाक्ष न लभेय तव प्रसादं जह्यामसून्व्रतकृशाञ्छतजन्मभिः स्याम्' इति, तत् कर्म त्वयि तिष्ठेत त्वय्येव अवतिष्ठेत न तत् प्रतिकर्तुं शक्यमित्यर्थः, किन्तु वयं प्रतिनन्दयामः केवलं त्वां हर्षयन्तो वर्तामह इति ॥ ५७ ॥

वी ॥ एवमिति॥ नरलोकं विडम्बयन्ननुकुर्वन्, हेतुगर्भमिदम् , तस्वादित्थं सौरतसल्लापैः सुरतनर्मगोष्ठीभिः स्वरतः आत्मारामोऽपि रमया लक्ष्म्यवतारभूतया रुक्मिण्या सह रेमे ॥ ५८ ॥

मु ॥ एवमिति ॥ एवमिति उक्तप्रकारैरित्यर्थः, सौरतसल्लापैः सुरतकालसंबन्धिनीभिः नर्मगोष्ठीभिः क्रीडोचितसल्लापप्रसङ्गैः करणैः भगवान् ज्ञानशक्त्यादिपरत्वभूषकषड्गुणसंपन्नोऽपीत्यर्थः, देवकीसुतः सौलभ्यसौशील्यादिगुणपूर्णतया दीनावनार्थं भुवि पामरस्त्रीपुत्रत्वेनावतीर्ण इत्यर्थः, अत एव लोकं विडम्बयन् लौकिकजनवृत्तिमनुकुर्वाणः रमया "रुक्मिणी कृष्णजन्मनि" इत्युक्तेः तादृग्रूपेण अवतीर्णया तया सहेत्यर्थः, रेमेचिक्रीड ॥ ५८ ॥

वी ॥ अथेति ॥ अन्यासामपि पत्नीनां गृहेषु गृहाश्रमीव गृहस्थाश्रमयुक्तान् धर्मानास्थितस्सन्नेव रेमे ॥ ५९ ॥

मु ॥ एवं भगवतो रुक्मिण्या सह लौकिकगार्हस्थ्यानुगुणं वृत्तिप्रकारमुक्त्वा अन्यास्वपि वृत्तिं संग्रहेणाह—अथेति ॥ विभुः "बहु स्याम्"इति श्रुत्युक्तबहुभवनसंकल्पा-

[१]. विभुः. मु. भा. प्र. पा ॥

( भगवतःषोडशसहस्रमहिषीसम्मोहनवर्णनम् )

श्रीशुकउवाच—

एकैकशस्ताःकृष्णस्यपुत्रान्दशदशाबलाः। अजीजनन्ननवमान्पितुस्सर्वात्मसंपदा॥ १
गृहादनपगंवीक्ष्यराजपुत्र्योऽच्युतंस्थितम्। प्रेष्ठंन्यमंसतस्वंस्वमतत्तत्त्वविदःस्त्रियः॥

नुगुणतत्तदुचितबहुरूपधारणसमर्थः, अन्यासामपि स्त्रीणां गृहेषु गृहत्रानिव गृहस्थ इव गृहमेधीयान् गृहस्थसंबान्धिनः तदनुष्ठेयतया शास्त्रविहितानित्यर्थः, धर्मान् आस्थितः आचचार, लोकगुरुः स्वानुष्ठानमुखेन सर्वेषां तत्तद्धर्मशिक्षादेशिकः अत एव धर्माना-स्थित इति, अष्टाधिकद्व्यष्टसहस्रस्त्रीगृहेषु तावद्रूपस्सन् चिक्रीडेत्यर्थः ॥ ५९ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे षष्टितमोऽध्यायः ॥ ६० ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

वी ॥ अथ भगवतस्तासु पत्नीषु पुत्रपौत्रादिपरंपरा अनुवर्णयति द्विषष्टितमेन—एकैकशइति॥ताः कृष्णस्याबलाः स्त्रियः सर्वाः या आत्मसंपत्त्या पितुस्सकाशादनवमा-नन्यूनान् तुल्यानेकैकशो दशदश पुत्रान् जनयामासुः ॥ १ ॥

मु ॥ प ॥ वैरिसंहारसल्लोकावनोज्ज्वलयशोदया ।
यशोदया लालिताऽस्मानकस्माद्देवताऽवतात् ॥
शरणमेमि शमादिगुणाकरं करगृहीतशरासनमार्गणम् ।
गणपतिप्रमुखामरवन्दितं जितदशास्यमुखं रघुपुङ्गवम् ॥
असङ्ख्यब्रह्माण्डव्रततिरजनिष्ट क्षणबल-
द्यदीयापाङ्गान्तप्रसृतसदयालोकनलवात् ।
अमुष्याऽसु स्त्रीषु प्रथितविविधापत्यरचना
कियत्येव स्यादित्यपि च मुनिरत्राऽह भगवान् ॥

एकैकश इत्यादि॥ ताः कृष्णस्य अबलाः सर्वात्मसंपदा समस्तात्मगुणसंपत्त्या पितुः श्री-कृष्णात् अनवमान् अन्यूनान् दशदश पुत्रान् अजीजनत् सुवतेस्म ॥ १ ॥

वी ॥ तदेव विस्तरेण वक्तुं तावत्तासां भगवन्मायामोहितत्वं भगवतस्तदवश्यत्वं चाह—द्वाभ्यां गृहादिति॥ गृहात् अनपगं नापगच्छति न निष्क्रामतीति तथा तं स्थितं गृ-हेष्वेव स्थितमच्युतमालोक्य सर्वास्ता राजपुत्र्यः अतत्तत्त्वविदः भगवद्याथात्म्यानभि-ज्ञाः,हेतुगर्भमिदम्, तत्त्वात् प्रत्येकं स्वंस्वम् आत्मानं प्रियतमं भगवत इति शेषः, न्यमंसत अमन्यन्त ॥ २ ॥

मु ॥ अथ हेयप्रतिभटस्य निर्लेपस्य भगवतः तत्तत्कामनया स्वाश्रितानां तदनुगुणा-नुवृत्त्या मोहनप्रकारमाह—गृहादिति॥ अनपगं प्रयोजनान्तरकल्पनया अन्यत्रानिर्गतं स-न्तं स्थितं वीक्ष्य स्वं आत्मानं प्रेष्ठं तत्प्रेमातिशयविषयमेव न्यमंसत मन्वतेस्म,एवंविधत-क्रमे हेतुमाह—अतत्तत्त्वविदइति । तस्य तत्त्वं आत्मारामत्वादिकं न विदन्तीत्यतत्तत्त्व-विदः ॥ २ ॥

चार्वब्जकोशवदनायतबाहुनेत्रसप्रेमहासरसवीक्षितवल्गुजल्पैः ।
सम्मोहिताभगवतोनमनोविजेतुं स्वैर्विभ्रमैस्समशकन्वनिताविभूम्नः ॥ ३
स्मेरावलोकलवदर्शितभावहारिभ्रूमण्डलप्रहितसौरतमन्त्रशौण्डैः ।
पत्न्यस्तुषोडशसहस्रमनङ्गबाणैर्यस्येन्द्रियंविमथितुंकरणैर्नशेकुः ॥ ४
इत्थंरमापतिमवाप्यपतिंस्त्रियस्ता ब्रह्मादयोऽपिनविदुःपदवींयदीयाम् ।
भेजुर्मुदाऽविरतमेधितयाऽनुरागहासावलोकनवसङ्गमलालसाद्यम् ॥ ५

वी॥ चार्विति॥ चार्वब्जकोशवद्वदनम् आयतानि बाहुनेत्राणिच सप्रेम्णा हास्यरसेन-वीक्षितानिच वल्गुजल्पाश्च एतैस्साधनैर्भगवता कर्त्रा संमोहिताः वनिताः स्वैरनेकैर्विभ्र-मैर्विभूम्नः परिपूर्णस्य भगवतः मनो मानसं जेतुं वशीकर्तुं न समशकन् न समर्था बभूवुः तस्यात्मारामत्वादितिभावः ॥ ३ ॥

मु ॥ एतदेव प्रकटयन्नाह—चार्विति ॥ अब्जकोशः पद्ममुकुलः, तस्य चारुत्वं ना-म सद्योविकासजनितसौभाग्यम्, तथाच चार्वब्जकोशवत् सद्योविकासिपद्मवत् वदनं च,बाहू च नेत्रे च बाहुनेत्रम् आयतं च तद्बाहुनेत्रंच सह प्रेम्णा प्रेमाभिव्यञ्जक इत्यर्थः,स चासौ हासश्च 'सव्रीडहास' इति पाठे लज्जापरिष्कृतदरस्मितमित्यर्थः, रसवीक्षितं शृङ्गाररसोद्बोधकसविलासकटाक्षः, वल्गुजल्पाः मधुरालापाश्च तैस्सम्मोहिताः सत्यः वनिताः विभूम्नः विगतः भूमा अतिशयो यस्मात् सः विभूमा स्वरूपतो गुणतश्च परि-पूर्ण इत्यर्थः, तस्य भगवतः ज्ञानादिषाड्गुण्यनिधेस्तस्य मनः स्वैर्विभ्रमैः विजेतुं वशीकर्तुं न समशकन् शक्ता न बभूवुः ॥ ३ ॥

वी॥तासां विभ्रमान्वर्णयन्नेव तद्विवृणोति—स्मेरेति॥स्मेरो गूढहसितं तद्युक्तोऽवलो-कलवः कटाक्षः तेन रचितस्सूचितो भावोऽभिप्रायस्तेन हारि मनोहरणशीलं यद्भ्रूमण्ड-लं तेन प्रहिताः प्रस्थापिताः ये सौरतमन्त्राः तेषु प्रगल्भैरनङ्गस्य बाणैरन्यैश्च करणैः काम-शास्त्रप्रसिद्धैः यस्य भगवतः इन्द्रियं मनः मथितुं क्षोभयितुं षोडशसहस्रमपि पत्न्यः न शेकुः नाशक्नुवन् ॥ ४ ॥

मु॥अथ तासां विभ्रमान्वर्णयन् उक्तार्थमेव भङ्ग्यन्तरेणाह—स्मेरेति॥ स्मेरो गूढह-सितं तद्युक्तोऽवलोकलवः अपाङ्गदर्शनं तेन दर्शितः सूचितः स्मेरावलोकाभ्यां दर्शि-त इति वा, भावोऽभिप्रायः तेन हारि मनोहरणशीलं यत् भ्रूमण्डलं कुटिलभ्रूयुगम्, अनेन भ्रूयुगस्य कर्णान्ताकृष्टमदनचापत्वं व्यज्यते,तेन प्रहिताः प्रस्थापिताश्च सौरतमन्त्रैः सुरतसंबन्धिरहस्यवार्ताभिरेव मन्त्रैः बाणप्रयोगमन्त्रैः शौण्डाः प्रगल्भाश्च तैः अनङ्गस्य बाणैः अन्यैश्च करणैः कामशास्त्रप्रसिद्धैः साधनैः यस्य इन्द्रियं मनः विमथितुं क्षोभयितुं षोडशसहस्रं पत्न्यश्च तावत्संख्याका भार्याश्च न शेकुः शक्ता नाभवन्निति ॥ ४ ॥

वी॥ इत्थमिति॥ किन्तु तदीयां पदवीं याथात्म्यं ब्रह्मादयोऽपि न विदुः,तमित्थंभूतं श्रियःपतिमवाप्य ताः स्त्रियः अविरतं सततं यथातथा एधितया वार्द्धितया मुदा नव-सङ्गमे लालसा औत्सुक्यम् आद्यो यस्य विभ्रमकदम्बस्य तं भेजुः, नवसङ्गमलालसात् यं भेजुः तस्य मनो विजेतुं न शेकुरिति वा ॥ ५ ॥

मु॥ इत्थमित्यादि॥ अनुरागहासावलोकैः नवः प्रतिक्षणं नूतनः यः संगमः कृष्णेन सह रतिक्रीडासमागमः तत्र लालसाः लोलाः ताः स्त्रियः यदीयां यस्य भगवतः संब-

प्रत्युद्गमासनवरार्हणपादशौचताम्बूलविश्रमणवीजनगन्धमाल्यैः ।
[१]केशप्रसाधशयनस्नपनोपहार्यैर्दासीशता अपि विभोर्विदधुस्स्मदास्यम् ॥ ६

( अष्टमहिषीपुत्रसंख्यानामानवर्णनम् ॥ )

तासांयादशपुत्राणांकृष्णस्त्रीणांपुरोदिताः अष्टौमहिष्यस्तत्पुत्रान्प्रद्युम्नादीन्गृणामित
चारुदेष्णस्सुदेष्णश्च चारुदेहश्चवीर्यवान् । सुचारुश्चारुगुप्तश्च भद्रचारुस्तथाऽपरः ॥
चारुचन्द्रोऽतिचारुश्च चारुश्चन्दशमोहरेः।प्रद्युम्नप्रमुखाजाता रुक्मिण्यांसदृशावभुः ॥

न्धिनीं पदवीं नानाविधविहारसरणिं ब्रह्मादयोऽपि न विदुः, तं रमापतिम् आब्रह्मस्त-म्बपर्यन्तसकलचेतनश्रेयोमूलकटाक्षायाः लक्ष्म्या वल्लभमित्यर्थः, पतिं भर्तारम् अवा-प्य भेजुः नित्यं विविधोपचारैः असेवन्तेत्यर्थः, यद्वा यं भेजुः, तस्य मनो विजेतुं न शे-कुरित्यन्वयः ॥ ५ ॥

वी॥किन्तु प्रत्युद्गमादिभिः विभोस्तस्य दास्यं विदधुरिति प्रौढभावेऽपि नवसङ्गमा-द्यभिधानमगतसारत्वेनौत्सुक्येनच तथा प्रतीतेः, एतेषामेव श्लोकानां प्रस्तावान्तरे पुनः पुनरावृत्तिरपि सौन्दर्यात् ॥ ६ ॥

मु ॥ अथ भगवति तत्करणीयोपचारविशेषानाह—प्रत्युद्गमेति ॥ प्रत्युद्गमः कृष्णे-समागते प्रत्युत्थानम् , आसनं सिंहासनप्रदानम् , वरार्हणम् अर्घ्यादिसमर्पणम् , पा-दशौचं पादप्रक्षालनम्, ततः ताम्बूलं कर्पूरादिवासितताम्बूलसमर्पणम्, विश्रमणवीजना-नि श्रमनिवर्तकगन्धसलिलार्द्रव्यजनान्दोलनानि, गन्धाः कर्पूरागुरुकस्तूरीतक्कोलसु-वासितचन्दनद्रव्याणि, माल्यानि पारिजातादिकुसुममालाः, केशप्रसारः केशानां सौष्ठ-वार्थं नखैरार्जवापादनम्, शयनं सुखस्पर्शपर्यङ्कः, तत्सज्जीकरणमित्यर्थः, स्नपनं मङ्गला-भिषेचनम्. उपहाराः विविधभोज्यवस्तूनि, तैः दासीनां शतानि यासां ता अपि विभोः दास्यं विदधुः, स्वयं महाराजापत्यतया दासीभिः कारयितव्यमपि तद्दास्यं पुरुषोत्तमे त-स्मिन् अनुरागभरेण स्वस्वशीलपरिशीलनेन च विनीतास्सत्यः स्वयमेव चक्रुरित्यर्थः॥६॥

वी॥ प्रासङ्गिकमुक्त्वा प्रकृतमाह—तासामिति॥दशदश पुत्रा यासां तासां कृष्णस्य स्त्रीणां मध्ये या अष्टौ रुक्मिण्यादयः पूर्वं कथितास्तासां पुत्रान् प्रद्युम्नादीन् तुभ्यं कथ-यामि ॥ ७ ॥

मु ॥ अथैतासामपत्योत्पत्तिं कथयन् तत्र तावत् प्रधानभूतरुक्मिण्याद्यष्टमहिषी-णामपत्यसंख्यानामान्याह—तासामित्यादि ॥ दश दश पुत्रा यासां ताः दशपुत्राः, ता-सां मध्ये कृष्णस्त्रीणां मध्ये पुरा उदिताः प्रधानतयोक्ताः याः अष्टौ महिष्यः रुक्मि-ण्यादयः, तत्पुत्रान् प्रद्युम्नादीन् ते गृणामि कथयामि ॥ ७ ॥

वी ॥ चारुदेष्णइति ॥ प्रद्युम्नः प्रमुख आदिर्येषामिति तद्गुणसंविज्ञानबहुव्रीहिः, ते दश पितुर्हरेरनवमास्तुल्या रुक्मिण्याः पुत्रा इति शेषः.प्रद्युम्नव्यतिरिक्तान्नवपु त्रान्निर्दि-शति—चारुदेष्णइति । वीर्यवानिति चारुदेहविशेषणम् ॥ ८ ॥ ९ ॥

मु॥चारुदेष्ण इत्यादि ॥ प्रद्युम्नः प्रथमः, चारुर्दशमः, हरेरिति पञ्चमी, रुक्मिण्या इति षष्ठी, पितुरनवमाः रूपादिभिर्देहधर्मैश्शौर्यादिभिरात्मधर्मैश्च कृष्णादन्यूना इत्यर्थः

१. केशप्रसार. मु. भा. प्र. पा ॥

भानुस्सुभानुस्स्वर्भानुःप्रभानुर्भानुमांस्तथा। चन्द्रभानुर्बृहद्भानूरतिभानुस्तथाऽष्टमः
श्रीभानुःप्रतिभानुश्च सत्यभामात्मजा दश ॥ १०
साम्बस्सुमित्रःपुरुजिच्छतजिच्चसहस्रजित्।विजयश्चित्रकेतुश्च वसुमान्द्रविणःक्रतुः ॥
जाम्बवत्यास्सुताह्येते साम्बाद्याःपितृसन्निभाः ॥ ११
भानुश्चन्द्रोऽश्वसेनश्चचित्रगुर्वेगवान्वृषः।आमश्शङ्कुर्वसुः श्रीमान्धृतिर्नाग्नीजितेस्सुताः
श्रुतिःकविर्वृषोवीरस्सुबाहुर्भद्रएकलः।शान्तिर्दर्शःपूर्णमासःकालिन्द्यास्सोमकोऽवरः
प्रजङ्घोगात्रवान्सिंहोबलःप्रबलऊर्ध्वगःमाद्र्यास्सुतामहाशक्तिस्सह[2]ओजोपराजितः
वृकोह्यर्कोऽनिलोगृध्रोबद्धनोऽन्नादएवच। महाशःपवनोवह्निर्मित्रविन्दात्मजाःक्षुधिः॥
सङ्ग्रामजिद्बृहत्सेनश्शूरःप्रहरणोऽरिजित्। जयस्सुभद्रोभद्राया वामआयुश्चसत्यकः ॥

---

वी ॥ अथ सत्यभामासुतानाह—भानुरिति ॥ भान्वादयो दश सत्यभामायास्सुता इत्यन्वयः ॥ १० ॥

मु ॥ सत्यभामात्मजानाह—भानुरित्यादिना—सत्यभामात्मजा दशेत्यन्तेन ॥ १० ॥

वी ॥ जाम्बवतीसुतानाह—साम्बइति ॥ एते साम्बादयः पितृतुल्याः जाम्बवत्यास्सुताः ॥ ११ ॥

मु ॥ जाम्बवतीसुतानाह—साम्ब इत्यादिना-- पितृसन्निभा इत्यन्तेन ॥ ११ ॥

वी ॥ नाग्नजिती सुतानाह—भानुरिति॥श्रीमानिति वसोः धृतेर्वा विशेषणम् ॥१२॥

मु ॥ सुदन्तासुतानाह—भानुचन्द्र इत्यादिना—नाग्नजितीभुता इत्यन्तेन ॥ अत्र नाग्नजितीति पितुर्नग्नजितस्संबन्धादागतं नाम; सुदन्तेति तस्या एव शोभनदन्तपङ्क्तिमत्तया गुणयोगप्राप्तं नामेति द्रष्टव्यम् ॥ १२ ॥

वी ॥ कालिन्द्यास्सुतानाह—श्रुतिरिति ॥ भद्रस्यैव एकलइति नामान्तरं सोमकोऽवरः तेषां सर्वेषां कनीयान्,एते दश कालिन्द्यास्सुता इति शेषः ॥ १३ ॥

मु ॥ कालिन्दीसुतानाह—श्रुत इत्यादिना—सोमक इत्यन्तेन ॥ १३ ॥

वी ॥ अथ लक्ष्मणायास्सुतानाह—प्रजङ्घइति ॥ माद्र्याः लक्ष्मणायाः सुताः प्रजङ्घादय इत्यन्वयः ॥ १४ ॥

मु ॥ माद्रीसुतानाह—प्रजङ्घ इत्यादिना - अपराजित इत्यन्तेन ॥ माद्री लक्ष्मणा, तत्र सहः ऊर्जः, अपराजित इतिच्छेदः ॥ १४ ॥

वी ॥ मित्रविन्दायास्सुतानाह—वृकइति ॥ क्षुधिः दशमः,एते मित्रविन्दात्मजाः ॥

मु ॥ वृक इत्यादिना क्षुधिरित्यन्तेन मित्रविन्दात्मजा दशोक्ताः ॥ १५ ॥

वी ॥ अथ भद्रायास्सुतानाह—सङ्ग्रामजिदिति ॥ भद्राया इत्यस्य सुता इति शेषः, एवमन्यासामपि षोडशसहस्रपत्नीनां दशदश पुत्राः तथैव, रोहिण्यास्सुतानामुक्तिरन्यासामपि सुतप्रदर्शनार्थम्,दीप्तिमानिति । हरेराश्रितार्तिहरस्य बलभद्रस्य रोहिण्याश्च जाताः पुत्रा इत्यर्थः ॥ १६ ॥

मु ॥ संग्रामजिदित्यादिना हरेः रोहिण्यास्तनया,उक्ताः,रोहिणी नाम काचित्कृष्णप-

---

१. श्रुतः मु. भा. प्र. पा ॥  २. ऊर्जो. मु. भा. प्र. पा ॥

दीप्तिमांस्ताम्रपत्ताद्या रोहिण्यास्तनयाहरेः ॥
प्रद्युम्नाच्चानिरुद्धोऽभूद्रुक्मवत्यांमहाबलः।पुत्र्यांचरुक्मिणोराजन्नाम्नाभोजकटेपुरे
तेषांचपुत्रपौत्राश्च बभूवुःकोटिशोनृप । मातरःकृष्णजातानां सहस्राणिचषोडश ॥
राजोवाच—
कथंरुक्म्यरिपुत्राय प्रादाद्दुहितरंयुधि । कृष्णेनपरिभूतस्तं हन्तुंरन्ध्रंप्रतीक्षते ॥ १९
एतदाख्याहिमेब्रह्मन्द्विषो[1]र्वैवाहिकंमिथः । अनागतमतीतंच वर्तमानमतीन्द्रियम् ॥

त्नी, हरेरिति पञ्चमी, रोहिण्या इति षष्ठी, कृष्णाद्रोहिण्यास्संजातास्तनया इत्यन्वयः, रोहिण्यास्सुतानामुक्तिरन्यासामुपलक्षणार्थम् ॥ १६ ॥

वी ॥ अथ विवक्षिष्यमाणकथाविषयकपिपृच्छिषामुत्पादयन् भगवतः पौत्रादीनाह—प्रद्युम्नादितिद्वाभ्याम् ॥ हेराजन् नाम्ना भोजकटमिति प्रसिद्धे पुरे वसत इति शेषः, तस्य रुक्मिणः पुत्र्यां रुक्मवत्याख्यायां भार्यायां प्रद्युम्नादनिरुद्धो बभूव ॥ १७ ॥

मु ॥ अथ पौत्रसन्ततिमाह—प्रद्युम्नादित्यादिना ॥ नाम्ना भोजकटे पुरे भोजकटाख्ये पुर इत्यर्थः, रुक्मिणो रुक्मिण्यग्रजस्य रुक्मवत्यां नामपुत्र्यां रुक्मवत्याख्यायां सुतायां प्रद्युम्नात् रुक्मिणीतनयात् अनिरुद्धोऽभूत् जातः ॥ १७ ॥

वी ॥ तेषांचेति ॥ तेषां प्रद्युम्नव्यतिरिक्तानां कृष्णपुत्राणामपि पुत्राः पौत्राश्च कोटिशो बभूवुः, तत्र हेतुत्वेन श्रीकृष्णपत्नीनां बाहुल्यमनुस्मारयति—मातरइति । कृष्णजातानां मातरः षोडशसहस्राणि, चशब्दात्ततोऽप्याधिक्यं सूच्यते ॥ १८ ॥

मु ॥ अथैतेषामसंख्येयत्वात्—कोटिश इत्युक्त्वा तन्मातृसंख्यामाह—मातर इति ॥ कृष्णजातानां कृष्णपुत्राणां मातरः षोडश सहस्राणीति, चकारेण अधिकाश्चेत्युक्तं भवति ॥ १८॥

वी ॥ रुक्मिणः पुत्र्यामित्युक्तम् , तत्र पृच्छति राजा—कथमिति ॥ अरेः कृष्णस्य प्रद्युम्नाय कथं दुहितरं ददौ किंच सहि रुक्मी युद्धे कृष्णेन परिभूतोऽवमानितः तं कृष्णं हन्तुं रन्ध्रमन्तरं प्रतीक्षते, स कथं प्रादादिति भावः ॥ १९ ॥

मु ॥ अथ प्रश्नान्तरमाह—कथमिति ॥ अरेः श्रीकृष्णस्य पुत्राय दुहितरं पुत्रीं कथं प्रादात् , तयोः परस्परविरोधित्वमाह—युधीति । कृष्णेन परिभूतः रुक्मिणीविवाहकाले अवमानितः तं श्रीकृष्णं हन्तुं रन्ध्रं प्रतीक्षते अद्यापि तदवमानकरणे प्रयतत इत्यर्थः ॥ १९ ॥

वी ॥ एतदिति ॥ हेविद्वन् द्विषोः कृष्णरुक्मिणोः मिथो यद्वैवाहिकं विवाहनिमित्तमेतन्मह्यमाख्याहि. नजानामीति मावोच इत्याह—अनागतमिति । अतीन्द्रियमस्मदिन्द्रियागोचरं विप्रकृष्टं दूरस्थं व्यवहितमीषदन्तरितं चेत्येतत्सर्वं योगिनो भवन्तः सम्यक् यथावत्पश्यन्ति साक्षात्कुर्वन्ति, अतो जानास्येवेति भावः ॥ २० ॥

मु ॥ हे ब्रह्मन् वैवाहिकः विवाहनिमित्तकः मिथोद्वेषः अन्योन्यवैरम् अस्तीति शेषः, अतः कथं दुहितरं प्रादात् ददौ, एतदाख्याहीत्यन्वयः,वयं किं जानीम इत्यत्राह—अनागतमिति । अनागतमेष्यत् , अतीतमतिक्रान्तम् , वर्तमानं वर्तमानकालसबंन्धि,

१. वैवाहिको, मु. भा. प्र. पा ॥

विप्रकृष्टंव्यवहितं सम्यक्पश्यन्तियोगिनः ॥ २०

( प्रद्युम्नकृतवर्मानिरुद्धानां रुक्मवतीचारुमतीरोचनानां च विवाहप्रश्नः )

श्रीशुकउवाच—

यद्यप्यनुस्मरन्वैरं रुक्मीकृष्णावमानितः।व्यतरद्भागिनेयाय सुतांकुर्वन्स्वसुःप्रियम् ॥

वृतस्स्वयंवरेसाक्षादनङ्गोऽङ्गवृतस्तया। राज्ञस्समेतान्निर्जित्य जहारैकरथोयुधि ॥

रुक्मिण्यास्तनयांराजन्कृतवर्मसुतोबली। उपयेमेविशालाक्षः कन्यांचारुमतींकिल ॥

दौहित्रायानिरुद्धायपौत्रींरुक्म्यददाद्धरेः।रोचनांबद्धवैरोऽपिस्वसुःप्रियचिकीर्षया॥

अतीन्द्रियम् अस्मदादीन्द्रियागोचरं विप्रकृष्टं दूरगतं व्यवहितं कुड्यादिव्यवधानेनान्तरितं च वस्त्वादिकमित्यर्थः, योगिनः सर्वसाक्षात्कारकरणभूतयोगमहिमानः सम्यक् असंशयं पश्यन्तीति ॥ २० ॥

वी॥ इत्थमापृष्टः प्राह श्रीशुकः—यद्यपीति॥यद्यपि रुक्मी कृष्णेनावमानितः तथापि वैरमनुस्मरन्नपि स्वसुः रुक्मिण्याः प्रियं कुर्वन्"लक्षणहेत्वोः"इति शत्रादेशः, कर्तुमित्यर्थः,व्यतरत् ददौ अन्वमोदतेति भावः,नत्वाहूय कन्यां ददौ.अपितु स्वयंवरे प्रद्युम्नेन हृतामन्वमोदतेत्युत्तरमभिप्रेतम् ॥ २१ ॥

मु ॥ यद्यपीति ॥ कृष्णेनावमानितः अवमानान्तकक्ष्याहेतुभूतश्मश्रुकेशादिमुण्डनरूपवैरूप्यं प्रापित इत्यर्थः, यद्यपि वैरमनुस्मरन् वैरानुस्मरणं कुर्वंश्चेदपि भागिनेयाय भगिन्याः रुक्मिण्याः पुत्राय प्रद्युम्नाय सुतां व्यतरत् ददौ, वैरे जाग्रत्यपि किमर्थमेवं कृतवानित्यत्राह—स्वसुरिति।दुर्वारः प्रकृतिसंबन्धो दुस्सहमप्यवमानादिकं विस्मारयतीति भावः ॥ २१ ॥

वी ॥ एतदेव स्पष्टयितुं तावत्स्वयंवरे तद्दुहिता प्रद्युम्नेन हृतेत्याह—वृतइति ॥ एकएव रथो यस्य सः असहायः प्रद्युम्नः स्वयंवरे तया रुक्मवत्या वृतः,स्वयंच तस्यामनुरागयुक्तः समेतान् युयुत्सया प्राप्तान् राज्ञो नृपान् युद्धे निर्जित्य तां जहार ॥ २२ ॥

मु ॥ अनङ्गः हरनेत्रानलदग्धाङ्गतया तत्प्रभृत्यनङ्गनामा साक्षात्स्मर इत्यर्थः, अङ्गयुतः पुनः श्रीकृष्णप्रभवतया यथापूर्वं सर्वलोकसुन्दरपुरुषोपमानविग्रहस्सन्नित्यर्थः, तया स्वयंवरे वृतः, स्वयमेकरथोऽपि समेतान् तद्वरणार्थमितस्ततः समागत्य मिलितान् राज्ञो युधि निर्जित्य तां जहारेति ॥ २२ ॥

वी॥रुक्मितनयाप्रसङ्गात्किं भगवतोऽपि दुहितरस्सन्ति?यदि सन्ति तर्हि कस्यां कस्यां भार्यायां कतिकति कन्या अजीजनदिति राज्ञो बुभुत्सां शमयन्नाह—रुक्मिण्याइति॥ तनयामित्येकवचनेनान्यासामप्येकैकैव कन्येति दर्शितम् , चारुमतीं नाम कन्यां कृतवर्मणः सुतः उपयेमे ॥ २३ ॥

मु ॥ रुक्मिण्या इति ॥ बली विशालाक्षो नाम कृतवर्मसुतः कन्यामष्टवर्षां चारुमतीं नाम रुक्मिण्यास्तनयामुपयेमे परिणीतवान् ॥ २३ ॥

वी ॥ न केवलं रुक्मी प्रद्युम्नगृहीतां स्वसुतामेवान्वमोदत अपितु प्रद्युम्नसुतायानिरुद्धाय स्वदौहित्राय स्वपौत्रीमपि भगिनीप्रियचिकीर्षया ददावित्याह—दौहित्रायेति ॥

[1]जानन्नधर्म्यंतद्यौनं स्नेहपाशानुबन्धनः ॥ २४

( अनिरुद्धविवाहेबलरामकृतरुक्मिवधकथारम्भः )

तस्मिन्नभ्युदयेराजन्रुक्मिणीरामकेशवौ । पुरंभोजकटंजग्मुःप्रद्युम्नाद्यास्तथाऽपरे॥
तस्मिन्निवृत्तउद्वाहेकलिङ्गप्रमुखान्नृपाः । दृप्तास्तेरुक्मिणंप्रोचुर्बलमक्षैर्विनिर्जय ॥
अनक्षज्ञोबलोराजन्नपितद्व्यसनंमहत् ॥ २६
इत्युक्तोबलमाहूय तेनाक्षैरुक्म्यदीव्यत ।

हरेरिति तस्य पौत्रायेतिशेषः, रोचनां नाम पौत्रीं ददावित्यर्थः, नकेवलं बद्धवैरोऽप्येव अपितु तद्यौनमधर्म्यं जानन्नपि, 'युमिश्रणे' योनिर्मिश्रणं वैवाहिकसंबन्धः, तत्प्रयुक्तं भोजनप्रतिभोजनादिकं तदधर्म्यम् अस्वर्ग्यं लोकविरुद्धं जानन्नपीत्यर्थः, "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इति शास्त्रादिति भावः, एवंभूतोऽप्यददात्, तत्र हेतुं वदन्विशिनष्टि— स्नेहपाशेन स्वसरि यः स्नेह एव पाशस्तेनानुबध्यत इति तथा अत एव तस्याः प्रियं कर्तुमिच्छया ददावित्यर्थः ॥ २४ ॥

मु॥दौहित्रायेति॥रुक्मी हरेः कृष्णात् हेतोः बद्धवैरोऽपि बलाद्रुक्मिणीहरणस्ववैरूप्यकरणादिना विस्मरणानर्हसंतप्यमानवैरोऽपीत्यर्थः, स्वसुः रुक्मिण्याः प्रियचिकीर्षया रोचनां नाम पौत्रीम् अदात् ,ननु पूर्वं तथावमानितोऽपि रुक्मी पुनः श्रीकृष्णेन सह संबन्धकरणे कथं प्रवृत्त इत्याशङ्कायां सोपपत्तिकं तत्रोत्तरमाह—जानन्निति । तद्यौनं तस्य विवाहनिमित्तकम् अधर्मं श्रीकृष्णकृतमन्यायम् अधर्मं जानन्नपि स्नेहः सोदर्यां प्रेमातिशयः स एव पाशः अनुबन्धनं निमित्तं यस्य स सन्निति, "द्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत्" इति प्रमाणोक्तिविरोधात् "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नतु" इत्यादिशास्त्रविरोधाच्चेत्यर्थः ॥ २४ ॥

वी ॥ लोकविरुद्धाचरणफलं वक्तुमाह—तस्मिन्निति ॥ तस्मिन्नभ्युदये अनिरुद्धविवाहोत्सवरूपनिमित्ते ॥ २५ ॥

मु ॥ लोकविरुद्धाचरणस्य फलं वक्तुमाह—तस्मिन्निति ॥ अभ्युदये प्रवर्तमाने सतीत्यर्थः, रुक्मिणी रामकेशवौ च साम्बप्रद्युम्नादयश्च भोजकटं नाम पुरं जग्मुः ॥ २५ ॥

वी ॥ तस्मिन्निति ॥ तस्मिन्नुद्वाहे निवृत्ते जाते सति ये कलिङ्गप्रमुखास्ते राजानः रुक्मिणं प्राचुः, किमिति? बलं बलभद्रम् अक्षैः देवनाक्षैः तद्व्यापारैः द्यूतैरिति यावत्, हे राजन् रुक्मिन् अयं बलरामः अनक्षज्ञः द्यूतानभिज्ञः,अपि तथापि तद्व्यसनं द्यूतव्यसनं महदस्य वर्तत इति ॥ २६ ॥

मु ॥ ततः किम् , अत आह—तस्मिन्निति ॥ उद्वाहे विवाहे निवृत्ते अतीते सति ते कलिङ्गप्रमुखा नृपाः दृप्ता मत्तास्सन्तः अक्षैर्बलं विनिर्जयेति रुक्मिणं प्रोचुरित्यन्वयः, हे राजन् अयं बलः अनक्षज्ञः अक्षविद्यानभिज्ञः, अथापि तस्य तद्व्यसनं तस्मिन् अनवरतासक्तिः महत्, अतः अक्षैर्बलं विनिर्जयेति ॥ २६ ॥

वी॥ इत्थमुक्तो रुक्मी बलभद्रमाहूय तेन सह अक्षैः अदीव्यत क्रीडितवान्, शतमिति । निष्काणामित्यादिः, तत्र द्यूते रामः तावन्निष्काणां शतं ततः सहस्रं ततोऽयुतं च पणं जित्वा स्वीकृतवान् ॥ २७ ॥

[1]. जानन्नधर्मं. मु. भा. प्र. पा ॥

शतंसहस्रमयुतं रामस्तत्राददेपणम् ॥ २७
तंतुरुक्म्यजयत्तत्र कालिङ्गःप्राहसद्बलम् ।दन्तान्संदर्शयन्नुच्चैर्नामृष्यत्तद्धलायुधः॥
ततोलक्षंरुक्म्यगृह्णाद्ग्लहंतंचाजयद्बलः।जितवानहमित्याह रुक्मीकैतवमाश्रितः ॥
मन्युनाक्षुभितश्श्रीमान्समुद्रइवपर्वणि।जातारुणाक्षोऽतिरुषा पूर्ववद्ग्लहमाददे॥ ३०
तंचापिजितवान्रामो धर्मेणच्छलमाश्रितः।रुक्मीजितंमयात्रेमे[1] वदन्तिप्राश्निकाइति॥
अथाब्रवीन्नभोवाणी बलेनैवजितोग्लहः। धर्मतोवञ्चनेनैवं रुक्मीवदतिवैमृषा ॥३२

---

मु ॥ तेन बलेन सह अक्षैः अदीव्यत चिक्रीड, तत्र द्यूते रामः शतादिपरिमितं पणम् आददे ग्लहं स्वीकृतवान् ॥२७॥

वी ॥ पुनस्तं राममपि रुक्मी जितवान्, तदा बलं रामं कालिङ्गः दन्तान् संदर्शयन् प्राहसत् अपहसितवान्, रामः तद्धसनं नामृष्यत् न सेहे ॥ २८ ॥

मु ॥ अथ तं रामं तु रुक्मी अजयत् एकवारं तेन जितस्सन् तं पुनः स्वयमजयदित्यर्थः, तत्र स्थले कालिङ्गः दन्तान् संदर्शयन् प्रकटयन् बलं रामम् उच्चैः प्राहसत् बलहेलनार्थमट्टहासं चकारेत्यर्थः, तत् हेलनमित्यर्थः, हलायुधो नामृष्यत् न सोढवान्॥

वी ॥ ततो रुक्मी लक्षं ग्लहं पणमाददे, तं च बलः अजयत्, कैतवं वञ्चनमाश्रितो रुक्मी अहं जितवानित्याह ॥ २९ ॥

मु ॥ ततः रुक्मी लक्षं ग्लहं पणम् अगृह्णात् अङ्गीचकारेत्यर्थः, तत्र लक्षपणके द्यूते बलः अजयत्, ततः किमत आह—जितवानिति । कैतवं धौर्त्यम् आश्रितः सन् रुक्मी अहं जितवानित्याह ॥ २९ ॥

वी ॥ मन्युनेति ॥ यथा पर्वणि समुद्रः तद्वन्मन्युना क्षुभितोऽत एव जाते अरुणे अक्षिणी यस्य तथाभूतो रामः रुषा पूर्ववल्लक्षं ग्लहमाददे ॥ ३० ॥

मु ॥ किंच श्रीमान् संपन्मदान्धः सः पर्वणि समुद्र इव मन्युना क्षुभितः कलुषः सन् अतिरुषा जातारुणाक्षः संजातारुणिमनेत्रः पूर्ववत् ग्लहम् आददे पूर्वं यावद्ग्लहम् अङ्गीकृत्य अदीव्यत् पुनस्तावद्ग्लहमङ्गीचकारेत्यर्थः ॥ ३० ॥

वी ॥ तं रुक्मिणं च धर्मेणैव अजयच्च रुक्मी तु छलमाश्रितः मया जितम्, अत्रास्मिन्विषये प्राश्निकाः कालिङ्गादयो वदन्ति, मया जितमित्येव वदन्ति, अतस्ते प्रष्टव्या इत्याहेत्यर्थः ॥ ३१ ॥

मु॥रामो धर्मेण तं चापि जितवान्, अथ छलं कपटनाटकम् आश्रित्य रुक्मी अत्र सभायां मयैव जितमिति भावे क्तः, इतीमे प्राश्निकाः प्रश्नः प्रयोजनमेषां ते प्रश्नकरणे तदनुगुणोत्तरप्रदाने चतुरा इत्यर्थः, वदन्तु—इत्याहेत्यर्थः ॥ ३१ ॥

वी ॥ अथेति ॥ धर्मतो बलेन रामेणैव ग्लहो जितः, रुक्मी तु वञ्चनेनैवं वदति, अतस्तदुक्तिर्मृषेत्यशरीरवाणी प्राहेत्यर्थः ॥ ३२ ॥ ॥

मु ॥ ततः किमासीत्तदाह—ग्लहो बलेनैव धर्मतः न्यायात् जितः, रुक्मी च वञ्चनेनैव कपटवृत्त्यैव मृषा वै वदति मिथ्यैव वदतीति नभोवाणी तदा अब्रवीत् ॥ ३२ ॥

---

[1] वदन्तु. मु. भा. प्र. पा ॥

तामनादृत्यवैदर्भो दुष्टराजन्यचोदितः। सङ्कर्षणंपरिहसन्बभाषेकालचोदितः॥ ३३
नैवाक्षकोविदायूयंगोपालावनगोचराः। अक्षैर्दीव्यन्तिराजानोबाणैश्चनभवादृशाः॥
रुक्मिणैवमधिक्षिप्तोराजभिश्चापहासितः। क्रुद्धः परिघमुद्यम्यजघ्नेतं[1] नृपसंसदि ॥
कलिङ्गराजंतरसागृहीत्वादशमेपदे। [2]दन्तानपातयत्क्रुद्धोयोऽहसद्विवृतैर्द्विजैः॥ ३६
अन्येनिर्भिन्नबाहूरुशिरसोरुधिरोक्षिताः। राजानोदुद्रुवुर्भीताः बलेनपरिघार्दिताः॥

वी ॥ तां नभोवाणीमनादृत्य दुष्टराजन्यैः कालिङ्गादिभिश्चोदितो वैदर्भः रुक्मी कालचोदितोऽत एव परिहसन् बभाषे ॥ ३३ ॥

मु ॥ तं बलरामम् अनादृत्य वैदर्भः रुक्मी परिहसन् बभाषे, अत्र दुष्टराजन्यचोदितः कालचोदित इत्याभ्यां विनाशकाले दुष्टजनसंसर्गजनितविपरीतबुद्धिद्वारा विनाशोऽवश्यं भावीति स्फोर्यते ॥ ३३ ॥

वी ॥ भाषणमेवाह—नैवेति ॥ नाक्षकोविदा न द्यूतकुशलाः, तत्र हेतुं वदन् विशिनष्टि—गोपाला वनगोचराश्चेति। राजान एवाक्षैर्बाणैश्च दीव्यन्ति, न तु भवादृशाः पशुपालकाः ॥ ३४ ॥

मु ॥ नैवेति ॥ अनक्षकोविदाः अक्षविद्याविशारदा नैव, किंतु वनं गोचरः स्थानं येषां ते गोपालाः पशुपालकाः नागरताप्रावीण्यशून्या इत्यर्थः, भवादृशाः राजानः अक्षैर्दीव्यन्ति, बाणैर्न दीव्यन्ति युद्धं क्रीडामात्रं कृत्वा न विक्रमितुं शक्ता इत्यर्थः ॥ ३४ ॥

वी ॥ रुक्मिणेति॥रुक्मिणैवमधिक्षिप्तो रामः हे नृप संसदि सभायां नृपाणां संसदि वा तं जघ्ने ॥ ३५ ॥

मु॥रुक्मिणेति॥एवमधिक्षिप्तः आक्षिप्तः राजभिरपहासितश्च ग्लहसंसदि अक्षक्रीडासभामण्डपे, 'नृम्णसंसदि'इति पाठे मङ्गलसभायामित्यर्थः,क्रुद्धो रामः परिघम् आयुधविशेषम् उद्यम्य तान् रुक्मिचोदकान् राज्ञः जघ्ने ॥ ३५ ॥

वी ॥ कलिङ्गराजं तु तरसा प्रसह्य दशमे पदे पादविन्यासे गृहीत्वा क्रुद्धस्सन् दन्तानपातयत् भग्नानकरोदित्यर्थः, तत्र हेतुं वदन्विशिनष्टि—यः कालिङ्गः विवृतैः प्रकाशितैः द्विजैः दन्तैः अहसत्, अतो दन्तानेवापातयदित्यर्थः ॥ ३६ ॥

मु॥कलिङ्गराजमिति॥भयात्पलायमानमित्यर्थः, दशमे पदे क्षिप्यमाणे सत्येवेत्यर्थः, तरसा वेगेन बलेन वा, गृहीत्वा क्रुद्धः क्रोधाविष्टस्सन् दन्तान् अपाटयत् उत्पाटितवान्, सर्वेष्वङ्गेषु सत्सु तद्दन्तोत्पाटन एव को हेतुः? तत्राह—यइति। विवृतैः प्रकटीकृतैः द्विजैः दन्तैः अहसत् सर्वदन्तप्रकटनबीभत्साकारमट्टहासं चकारेत्यर्थः ॥ ३६ ॥

वी ॥ अन्ये तु राजानः बलेन कर्त्रा परिघेण साधनेनार्दिताः ताडिताः अत एव निर्भिन्नानि बाह्वादीनि येषां ते अत एव रुधिरेणोक्षिताः सिक्ताः भीताश्च दुद्रुवुः पलायितवन्तः ॥ ३७ ॥

मु॥अन्ये राजानश्च बलेन रामेण परिघेण अर्दिताः पीडितास्सन्तः निर्भिन्नाः छिन्नबाहवः ऊरवः शिरांसिच येषां ते रुधिरेण रक्तेन उक्षिता स्नपिताः भीतास्सन्तः दुद्रुवुः॥

१. ग्लहसंसदि. मु. भा. प्र. पा ॥ २. दन्तानपाटयत्. मु. भा. प्र. पा ॥

निहतेरुक्मिणिस्यालेनाब्रवीत्साध्वसाधुवा ।
रुक्मिणीबलयोराजन्स्नेहभङ्ग[1]भयाद्धरेः ॥ ३८
ततोऽनिरुद्धंसहसूर्ययावरंरथंसमारोप्यययुः कुशस्थलीम् ।
रामादयोभोजकटाद्दशार्हकास्सिद्धाखिलार्थामधुसूदनाश्रयाः ॥ ३९
इति श्रीभागवते महापुराणे दशमस्कन्धे एकषष्टितमोऽध्यायः ॥ ६३ ॥

(उषापरिणयघट्टः)

राजोवाच—
बाणस्यतनयामूषामुपयेमेयदूत्तमः । तत्रयुद्धमभूद्धोरंहरिशंकरयोर्महत् ॥
एतत्सर्वंमहायोगिन्समाख्यातुंत्वमर्हसि ॥ १

वी ॥ निहतइति ॥ हरेः कृष्णस्य स्याले रुक्मिणि निहते सति साध्वसाध्विति वा नाब्रवीत् , कुतः? बलयोः रामकृष्णयोर्विषये यः स्नेहस्तस्य भङ्गभयात् बलयोरित्यत्र द्विवचनबलेन कृष्णपरिग्रहः, हरिरिति प्रथमान्तपाठे स्याले रुक्मिणि निहते सति हरिः भगवान् रुक्मिणीबलयोः रुक्मिणीबलरामयोः स्नेहभङ्गभयात् साध्वसाधु वा नाब्रवीदित्यर्थः ॥ ३८ ॥

मु ॥ निहत इति ॥ हरिः स्याले पत्नीभ्रातरि रुक्मिणि निहते बलरामेन हते सति रुक्मिणीबलयोः स्नेहभङ्गभयात् अन्योन्यमैत्रीविरोधभयाद्धेतोः साध्वसाधु वा किंचिदपि नाब्रवीत् ॥ ३८ ॥

वी ॥ ततइति ॥ ततो रामादयो दशार्हकाः सूर्यया नवोढया सहानिरुद्धं श्रेष्ठं रथम् आरोप्य आरोह्येत्यर्थः, मधुसूदन आश्रयो येषां ते अत एव सिद्धाः सकलाः अर्थाः प्रयोजनानि येषां ते कुशस्थलीं द्वारकां प्रति जग्मुः ॥ ३९ ॥

मु ॥ ततः इति ॥ सह सूर्यया नवोढया सह अनिरुद्धं वरं रथं समारोप्य मधुसूदनः आश्रयो येषां ते अत एव सिद्धाः निष्पन्नाः अखिलार्थाः अभ्युदयशत्रुवधादयो येषां ते सन्तः रामादयः दशार्हाः भोजकटात् रुक्मिपुरात् कुशस्थलं ययुरिति ॥ ३९ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे एकषष्टितमोऽध्यायः॥ ६१ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

वी ॥ अथानिरुद्धविवाहप्रसङ्गात् तदीयमेव विवाहान्तरं समासतश्श्रुतपूर्वं विस्तरबुभुत्सया पृच्छति राजा—बाणस्येति ॥ ऊषाम् उषां नाम तनयां यदूत्तमोऽनिरुद्धः तत्र निमित्ते हरिशङ्करयोः कृष्णशिवयोः महत् घोरं युद्धमभूदित्येतत्सर्वं मह्यमाख्यातुमर्हसि॥

मु ॥ प ॥ ऋते भगवता देवैरितरैः प्रतिपादिताः ।
वरास्सोपप्लवा नूनमित्यत्रासूचि मौनिना ॥ १ ॥

[1] भयाद्धरिः मु. भा. प्र. पा ॥

श्रीशुकउवाच—
बाणःपुत्रशतज्येष्ठोबलेरासीन्महात्मनः । [१]अदायिमेदिनीयेनवामनायमहात्मने॥२
तस्यौरसस्सुतोबाणश्शिवभक्तिरतस्सदा।मान्योवदान्योधीमांश्चसत्यसन्धोदृढव्रतः॥
शोणिताख्येपुरेरम्येसराज्यमकरोत्पुरा। तस्यशंभोः प्रसादेनकिंकराइवतेऽमराः ॥
सहस्रबाहुर्वाद्येनताण्डवेऽतोषयन्मृडम् । भगवान्सर्वभूतेशश्शरण्योभक्तवत्सलः ॥
वरेणच्छन्दयामाससचवव्रेपुराधिपम् ॥
सएकदाऽऽहगिरिशंपार्श्वस्थंवीर्यदुर्मदः । किरीटेनार्कवर्णेनसंस्पृशंस्तत्पदाम्बुजम्॥

वी ॥ आचष्टे—बाण इत्यादिना ॥ बलेः पुत्राणां शतस्य ज्येष्ठः बाणो नामासीत्, कोऽसौ बलिरित्यत आह—येन बलिना मेदिनी भूमिरदायि दत्ता ॥ २ ॥

मु ॥ बाण इत्यादि ॥ २ ॥

वी ॥ बाणं विशिनष्टि—तस्येति ॥ तस्य बलेरौरसः उरसा निर्मितः सुतः सत्ये सन्धा अभिसन्धिर्यस्य धृतं रुद्रोपासनात्मकं व्रतं येन सः ॥ ३ ॥

मु ॥ ३ ॥

वी॥शोणिताख्यइति॥ स बाणः, तस्य बाणस्य शंभोः प्रसादेन वरेण हेतुना अमराः देवाः किङ्करा इव ॥ ४ ॥

मु ॥ ४॥

वी ॥ किंबहुनेत्याह—सहस्रबाहुरिति ॥ सहस्रं बाहवो यस्य स'बाणः सहस्रबाहुर्वाद्येन' इति समस्तपाठे तु सहस्रबाहुभिर्यद्वाद्यं वाद्यवादनं तेन मृडं रुद्रं ताण्डवे नृत्ये अतोषयत् मृडे ताण्डवं कुर्वति सति सहस्रबाहुभिः पञ्चशतवाद्यानि वादयन् तमतोषयदित्यर्थः, इत्थं तोषितः स भगवान् रुद्रस्तं बाणं वरेण 'अध्ययनेन वसति' इतिवत्तृतीया, वरार्थं छन्दयामास चोदयामास, बाणस्तं रुद्रं पुराधिपं पुरपालकं वव्रे, त्वं मत्पुरीं पालयन्नास्स्वेति वव्र इत्यर्थः ॥ ५ ॥

मु ॥ ताण्डवे नृत्यसमये वाद्येन मृडं रुद्रम् अतोषयत्, सहस्रबाहुरिति विशेषणमहिम्ना पञ्चशतकरैः पञ्चशतढक्काख्यवाद्यानि गृहीत्वा इतरैः पञ्चशतकरैः तन्मुखानि वादयमानः तत्तालानुगुणताण्डवेन अतोषयदित्यर्थः, ततः किमत आह—भगवानिति। सर्वभूतेशः रुद्रः वरेण हेतुना वरप्रदानबुध्येत्यर्थः, छन्दयामास तच्छन्दानुवृत्त्या अनुकूलोऽभूदित्यर्थः, "छन्दोऽभिप्राय आशयः"इति निघण्टुः, तत्र हेतुः—शरण्यो भक्तवत्सल इति। शरणे साधुः शरण्यः, भक्तेषु वत्सलः भक्तवत्सलः क्वचित् सतोऽपि भक्तदोषान् भोग्यतया स्वीकृत्य तन्मनोरथपूरक इति यावत् ॥ ५ ॥

वी ॥ सइति ॥ स बाणः वीर्येण दुष्टो मदो यस्य सः अर्क इव वर्णो यस्य तेन किरीटेन तस्य रुद्रस्य पादाम्बुजं स्पृशन् गिरिशमुवाच ॥ ६॥

मु ॥ वीर्येण पराक्रमेण दुर्मदः दुष्टमदः स बाणः एकदा कदाचित् पार्श्वस्थं गिरिशम् अर्कवर्णेन किरीटेन तत्पदाम्बुजं स्पृशन् आहेत्यन्वयः ॥ ६ ॥

१. येन वामनरूपाय हरयेऽदायि मेदिनी. पा ॥

नमस्येत्वांमहादेवलोकानांगुरुमीश्वरम् । पुंसामपूर्णकामानांकामपूरामराङ्घ्रिपम्॥७
दोस्सहस्रंत्वयादत्तंपरंभारायमेऽभवत् । त्रिलोक्यांप्रतियोद्धारंनलभेत्वदृतेसमम् ॥
कण्डूत्यानिभृतैर्दोर्भिर्युयुत्सुर्दिग्गजानहम् [१]अभ्ययांचूर्णयन्नद्रीन्भीतास्तेऽपिप्रदुद्रुवुः
तच्छ्रुत्वाभगवान्क्रुद्धः केतुस्तेभज्यतेयदा । त्वद्दर्पघ्नोभवेन्मूढसंयुगोमत्समेनते ॥
इत्युक्तःकुमतिर्हृष्टः स्वगृहंप्राविशन्नृप।प्रतीक्षन्गिरिशादेशंस्ववीर्यभ्रंशनंकुधीः॥ ११

वी ॥ उक्तिमेवाह—नमस्यइति ॥ हे महादेव त्वां नमस्करोमि, कथंभूतं? न पूर्णः कामो येषां तेषां पुंसां कामान्पूरयतीति तथा स चासावमराङ्घ्रिपः कल्पतरुः तम् ॥ ७ ॥

मु ॥ तत्प्रकारमाह—नमस्यइति ॥ लोकानां गुरुम् अपूर्णकामानाम् असमग्रमनोरथानां पुंसां कामान् मनोरथान् पूरयति सफलीकरोतीति कामपूरः स चासौ अमराङ्घ्रिपः कल्पतरुश्च तं त्वां नमस्य इति ॥ ७ ॥

वी ॥त्वया दत्तं भुजसहस्रं केवलं मम भाराय भारार्थमेवाभवत्, त्वदृते त्वां विना मया प्रतियोद्धारं तुल्यं पुरुषं न पश्यामि. मदिष्टदैवेन त्वया तु समेनापि न योत्स्यामीति भावः ॥ ८ ॥

मु ॥ प्रार्थनाप्रकारमाह—दोस्सहस्रमित्यादिना॥ मे भाराय परं वृथा भारायैव अभवत्, तत्र हेतुमुपन्यस्यन् स्वाकूतमावेदयन्नाह—त्रिलोक्यामिति । त्वदृते त्वां विना समं मत्समं प्रतियोद्धारं न लभे ॥ ८ ॥

वी ॥ कण्डूत्येति ॥ निभृतैर्भरितैर्भुजैर्योद्धुमिच्छुः अद्रींश्चूर्णयन् दिग्गजान् अभ्ययाम् अभिद्रुतवानस्मि, तेऽपि दिग्गजा अपि दुद्रुवुः ॥ ९ ॥

मु ॥ स्वस्यौद्धत्यमाह—कण्डूत्या बलवद्धर्षणमन्तरेण अनिवार्येण युद्धखर्जूप्राबल्येन निभृतैः पूर्णैः दोर्भिः युयुत्सुः योद्धुमिच्छुस्सन् अद्रीन् चूर्णयन् दिग्गजानपि अन्वयाम् अन्वगमम्, ते दिग्गजाः भीताः अपि प्रदुद्रुवुः यथायथं पलायिता बभूवुः ॥ ९ ॥

वी ॥ तदिति॥ तत् बाणवचः श्रुत्वा भगवान् रुद्रः प्राहेति शेषः, उक्तिमेवाह—केतुरिति ॥ तव केतुः ध्वजो यदा भज्यते स्वयमेव भग्नः पतेदित्यर्थः, तदा हे मूढ तव दर्पं हन्तीति तथाभूतः भवेत्संभवेत्, तेन अमत्समेनेति च्छेदः, नाहं समो यस्य सः तेन मत्तोऽप्यधिकेन त्वद्दर्पघ्नेन संयुगश्च भवेत् ॥ १० ॥

मु ॥ तदिति ॥ भगवान् सर्वज्ञः शिवः क्रुद्धः तदुन्मत्तप्रलापश्रवणेन उदीर्णक्रोधस्सन् आहेति शेषः तत्क्रोधोक्तिप्रकारमाह—केतुः द्वारि बद्धो जयध्वजः यदा भज्यते भग्नः पतेदिति शेषः, त्वद्दर्पघ्नः त्वद्दर्पनिवारकः मत्समेन पुरुषेण हे मूढ संयुगो रणो भवेत्, इति ॥ १० ॥

वी ॥ इतीति ॥ हे नृप कुबुद्धिर्बाणः स्ववीर्यं भ्रंशयतीति तथा तं गिरिशस्यादेशं केतुभङ्गात्मकं प्रतीक्षमाणो गृहान्प्राविशत ॥ ११ ॥

मु॥ततः किमत आह—इत्युक्तइति॥ कुमतिः दुर्मतिःस्ववीर्यभ्रंशनं निजपराक्रमनाशनं गिरिशादेशं प्रतीक्षन् कदावेति प्रतीक्षमाणः कुमतिः कुधीरित्याभ्यां गिरिशस्य स्व-

१. अन्वयां. मु. भा. प्र. पा ॥

तस्योषानामदुहितास्वप्नेप्राद्युम्निनारतिम् । कन्याऽलभतकान्तेनप्रागदृष्टश्रुतेनच ॥
सातत्रतमपश्यन्तीक्वासि[1]कासीतिवादिनी ।
सखीनांमध्यउत्तस्थौविह्वलाव्रीडिताभृशम् ॥ १३
बाणस्यमन्त्रीकुम्भाण्डश्चित्रलेखाचतत्सुता ।
सख्यपृच्छत्सखींचोषांकौतूहलसमन्विता ॥ १४
कान्तंमृगयसेसुभ्रुकीदृशस्तेमनोरथः । हस्तग्राहंनतेऽद्यापिराजपुत्र्युपलक्षये ॥ १५

---

स्य च स्वस्वामिभावज्ञानलोपकदुर्मदौत्कट्यं स्वपराक्रमभ्रंशरूपानर्थानभिज्ञत्वं द्योत्यते॥११

वी ॥ एवं स्थिते रुद्रादिष्टसङ्ग्रामप्रसङ्गमाह—तस्येत्यादिना ॥ तस्य बाणस्य दुहिता उषा नाम कन्या प्रागदृष्टः अश्रुतश्च तेन प्राद्युम्निना अनिरुद्धेन सह रतिं लेभे ॥ १२ ॥

मु ॥ गिरिशादिष्टसंग्रामस्य प्रसञ्जकं हेतुमाह—तस्येत्यादिना ॥ उषा नाम दुहिता पुत्री प्रद्युम्नस्यापत्यं प्राद्युम्निः अनिरुद्धः तेन प्रागदृष्टश्रुतेन पूर्वं कदाप्यदृष्टेन अश्रुतेन चेत्यर्थः प्रागदृष्टश्रुतेन प्राद्युम्निना कान्तेन रतिम् अलभतेत्यन्वयः, लोके यद्यपि प्राक् दृष्टश्रुतवस्तुन एव स्वाप्नज्ञानविषयत्वं प्रायशः, तथापि क्वचित् "अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्" इत्युक्तप्रकारेण कदाचित् तादृशभोगप्रापकादृष्टमहिम्नापि अदृष्टवस्तुविषयस्वप्नानुभवः संभवेदेवेति भावः ॥१२ ॥

वी ॥ सेति ॥ सा स्वप्नोत्थिता उषा तं कान्तम् अपश्यन्ती क्वासि क्वासीत्येवं वदन्ती तत्तदा नितरां व्रीडिता लज्जिता च ॥ १३ ॥

मु ॥ सा उषा तत्र स्वप्नेऽपि तम् अपश्यन्ती क्वासि क्वासि हे प्रिय कुत्र कुत्र वर्तसे इतिवादिनीति भ्रान्तिप्रयुक्तसंभ्रमात् द्विरुक्तिः, सखीनां मध्ये व्रीडिता संजातलज्जा सती उत्तस्थौ उत्थिता ॥ १३ ॥

वी ॥ ततः किमासीत्तत्राह—बाणस्येति ॥ तस्य कुम्भाण्डस्य सुता चित्रलेखा, इदमन्वर्थं नाम, सा कौतूहलेन युक्ता सखीमुषामपृच्छत् ॥ १४ ॥

मु ॥ ततः किमसीदित्यत्राह— बाणस्येति ॥ कुम्भाण्डो नाम बाणस्य मन्त्री, चित्ररेखा नाम सखी उषाया वयस्या सुता कुम्भाण्डस्य पुत्री अभवत्, कौतूहलेन कौतुकेन समन्विता सती चित्ररेखा सखीं स्वसखीम् उषां पप्रच्छ ॥ १४ ॥

वी ॥ प्रश्नमेवाह—कान्तमिति ॥ हे सुभ्रु मनोरथविषयः कीदृशः, हे राजपुत्रि ते तव हस्तग्राहं हस्तं गृह्णातीति तथा तं भर्तारम् अद्यापि नोपलक्षये इत्थंत्वेन न निश्चिनोमीत्यर्थः ॥ १५ ॥

मु ॥ तदाह—कान्तमित्यादिना ॥ हे सुभ्रु ते मनोरथः कीदृशः कतमप्रियविषयो वा, एतादृशवस्तुविषय इति निश्चेतुं न शक्य इत्यर्थः, किन्तु कान्तं मृगयसे कंचित्पुरुषं कान्तं प्रियं मृगयसे चिन्तयसि परामृशसीत्यर्थः, हे राजपुत्रि अद्यापि ते हस्तग्राहं हस्तप्राप्तं नोपलक्षये न निश्चिनोमीत्यर्थः ॥ १५ ॥

[1]. कान्तेतिवादिनी. पा ॥

उषोवाच—

दृष्टःकश्चिन्नरस्स्वप्नेश्यामःकमललोचनः । पीतवासाबृहद्बाहुर्योषितां हृदयंगमः ॥

तमहंमृगयेकान्तंपाययित्वाधरंमधु । क्वापियातस्स्पृहयतींक्षिप्त्वामांव्यसनार्णवे॥

चित्रलेखोवाच—

व्यसनंतेपकर्षामित्रिलोक्यांयदिभाव्यते । तमानेष्ये नरंयस्तेमनोहर्तातमादिश ॥

इत्युक्त्वादेवगन्धर्वसिद्धचारणपन्नगान् ।
दैत्यान्विद्याधरान्यक्षान्मनुजांश्चयथाऽलिखत् ॥ १९

मनुजेषुचसावृष्णीञ्शूरमानकदुन्दुभिम् ।
व्यलिखद्रामकृष्णौचप्रद्युम्नंवीक्ष्यलज्जिता ॥ २०

---

वी ॥ एवमुक्ता प्राहोषा—दृष्ट इति ॥ हृदयंगमः मनोहरः ॥ १६ ॥

मु ॥ उत्तरमाह—दृष्ट इति ॥ पीतवासा इति श्रीकृष्णपुत्रत्वेन सर्वाकारसाम्यात् पीताम्बरत्वमपि तुल्यमेवेत्यर्थः, योषितां सर्वासां स्त्रीणां हृदयंगमः सर्वदा सर्वासां सुन्दरीणामविच्छेदेन ध्याताकार इत्यर्थः, एवंविधः कश्चिन्नरः स्वप्ने दृष्ट इति ॥ १६ ॥

वी ॥ तमिति ॥ मृगये विचिनोमि स्पृहयतीं काङ्क्षन्तीं मां दुःखार्णवे क्षिप्त्वा क्वापि नूनं यातः ॥ १७ ॥

मु ॥ तमिति ॥ तं कान्तं हृदये मृगये विचिनोमि, स किं कृत्वा क्व गत इत्यत्राह—पाययित्वेति। आधरमितिच्छेदः अधरस्य संबन्धि आधरं मधु मद्यं क्षौद्रं वा पाययित्वा पिबतेर्ण्यन्तात् क्त्वाप्रत्ययः अधरमधुपानं कारयित्वेत्यर्थः, 'अधरं मधु' इतिच्छेदे अधरात्मना परिणतं मध्विति रूपकार्थः, स्पृहयन्तीम् अवैतृष्ण्येन सर्वकालं स्वसंभोगसुखमाकाङ्क्षन्तीं मां वृजिनार्णवे मत्पापफलभूतदुःखसागरे इत्यर्थः, क्षिप्त्वा क्वापि यातो गतः ॥ १७ ॥

वी ॥ इत्येवमुक्ता प्राह चित्रलेखा—व्यसनमिति ॥ तव व्यसनं दुःखम् अपनयामि, कथं? त्वया यदि त्रिलोक्यां कश्चिद्भाव्यते अयमेवेति निश्चीयते, तर्हि तं नरं पुरुषमानेष्ये, अतो यस्ते मनोहर्ता तं प्रति मामादिश आज्ञापय ॥ १८ ॥

मु ॥ इति तयोक्ते सति चित्रलेखोक्तमुत्तरमाह—व्यसनमित्यादिना ॥ ते व्यसनं मनोव्यथाम् अपकर्षामि निवर्तयामि, त्रिलोक्यां भाव्यते यदि विद्यते चेत्, तं नरम् आनेष्ये, यः पुमान् ते मनोहर्ता अभूदितिशेषः, तम् आदिश वद ॥ १८ ॥

वी ॥ इतीति ॥ इत्थमुक्त्वा देवादीन् पटे यथावदलिखत् ॥ १९ ॥

मु ॥ इत्युक्त्वा देवेत्यादिना उक्तान् तत्तद्देवयोनिविशेषान् मनुजान् भूलोकवासिनो नरविशेषांश्च यथालिखत् यथास्वरूपसंस्थानम् अलिखदित्यर्थः ॥ १९ ॥

वी ॥ यदा च मनुष्येष्वपि वृष्णीन् तत्रापि शूरादीनलिखत्, तदा प्रद्युम्नं वीक्ष्य लज्जिता पुत्रतुल्यरूपत्वादिति भावः ॥ २० ॥

मु ॥ मनुजेषुच वृष्णीन् शूरं च आनकदुन्दुभिं वसुदेवं रामकृष्णौ च व्यलिखत्, प्रद्युम्नम् अनिरुद्धजनकं वीक्ष्य लज्जिता अभवत् ॥ २० ॥

अनिरुद्धंविलिखितंवीक्ष्योषाऽवाङ्मुखीह्रिया ।
सोऽसावसावितिप्राहस्मयमानामहीपते ॥ २१

चित्रलेखातमाज्ञायपौत्रंकृष्णस्ययोगिनी। ययौविहायसाराजन्द्वारकांकृष्णपालिताम्
तत्रसुप्तंसुपर्यङ्केप्राद्युम्निंयोगमाश्रिता । गृहीत्वाशोणितपुरंसख्यैप्रियमदर्शयत् ॥
साचतंसुन्दरवरंविलोक्यमुदितानना । दुष्प्रेक्षेस्वगृहेपुम्भीरेमेप्राद्युम्निनासह ॥ २४

परार्घ्यवासस्स्रग्गन्धधूपदीपासनादिभिः ।
पानभोजनभक्ष्यैश्चवाक्यैश्शुश्रूषयाऽर्चितः ॥ २५

गूढश्चान्तःपुरेशश्वत्प्ररूढस्नेहयातया । नाहर्गणान्सबुबुधेह्युषयाऽपहृतेन्द्रियः ॥ २६

---

वी ॥ ततोऽनिरुद्धमवलोक्य ह्रिया लज्जया अवाङ्मुखी बभूव, स स्वप्नदृष्टः असावेव असावेवेति प्राह, हे महीपते ॥ २१ ॥

मु ॥ उषा अनिरुद्धं वीक्ष्य तु ह्रिया अवाङ्मुखी अवनतानना बभूव, हे महीपते राजन् सा स्मयमाना दरस्मितमुखी सती असावसाविति प्राह असौ पूर्वं स्वप्ने मया अनुभूतः पुमान् असाविति प्राह अहल्या फलकविलिखितां तत्प्रतिमां स्पृष्ट्वा प्राहेत्यर्थः॥

वी ॥ तमुषया निश्चितं कृष्णस्य पौत्रमनिरुद्धं विज्ञाय योगिनी वैहायसगमनान्तर्धानतूर्णगमनाद्यावहयोगशालिनी आकाशमार्गेण द्वारकां ययौ ॥ २२ ॥

मु ॥ योगिनी अतिचित्रमहिमवती चित्ररेखा तं कृष्णस्य पौत्रम् आज्ञाय सम्यक् ज्ञात्वा विहायसा गगनमार्गेण, कृष्णपालितामिति परैर्दुष्प्रवेशामित्यर्थः, द्वारकां ययौ ॥

वी ॥ तत्र द्वारकायां शोभने पर्यङ्के सुप्तं प्राद्युम्निमनिरुद्धं गृहीत्वा शोणितपुरमागत्येति शेषः, सख्यै उषायै ॥ २३ ॥

मु ॥ तत्रेति ॥ प्राद्युम्निं प्रद्युम्नसुतम् अनिरुद्धं योगमाश्रिता आश्चर्यावहशक्तिविशेषमवलम्बमाना सती शोणितपुरं गृहीत्वा नीत्वा सख्यै उषायै प्रियं तम् अदर्शयत् ॥

वी ॥ साचेति ॥ सा उषा पुम्भिरितरैः प्रेक्षितुमशक्ये स्वगृहे प्राद्युम्निना सह अनिरुद्धेन समं रेमे ॥ २४ ॥

मु ॥ एवमनिरुद्धप्राप्त्यनन्तरं तस्यास्तेन सहोपभोगमेकेन वदन् तस्य तया सह उपभोगक्रमं च द्वाभ्यां प्रपञ्चयति—साचेत्यादिना उषयापहृतेन्द्रिय इत्यन्तेन ॥ पुम्भिः दुष्प्रेक्षे प्रेक्षितुमशक्ये गन्तुमशक्य इति किमु वक्तव्यमिति भावः ॥ २४ ॥

वी ॥ परार्घ्यैः वासःप्रभृतिभिः शुश्रूषया अर्चितो बहुमतः सोऽनिरुद्धः उषाया गृहे गूढः शश्वन्नित्यं प्रवृद्धः स्नेहो यस्यास्तया उषया अपहृतम् इन्द्रियं मनो यस्य सः अहर्गणान् न बुबुधे न ज्ञातवान् ॥ २५ ॥ २६ ॥

मु ॥ भोगोपकरणान्याह—परार्घ्येत्यादिना॥ शुश्रूषया तत्तत्कालोचितसेवाविशेषेण च अर्चितः ॥ २५ ॥

मु॥ कन्यागृहे उषायाः क्रीडामन्दिरे शश्वत् सदा गूढः प्रच्छन्नस्सन्नेव प्रवृद्धस्नेहया प्रतिदिनोपचीयमानानुरागया तया उषया अपहृतेन्द्रियः वशीकृतेन्द्रियः अहर्गणान् अतीतदिनसमूहान् न बुबुधे अलौकिकतत्संभोगजनितसुखपारवश्यादिति भावः॥२६

तांतथायदुवीरेणभुज्यमानांक्षतव्रताम् । हेतुभिर्लक्षयां[१]चक्रुर्दूषितांदुरवच्छदैः॥ २७
भटानिवेदयामासूराजंस्तेदुहितुर्वयम्। विचेष्टितंलक्षयामःकन्यायाःकुलदूषणम्॥२८
अनपायिभिरस्माभिर्गुप्तायास्स्वगृहेप्रभो । कन्यायादूषणंपुम्भिर्दुष्प्रेक्षायानविद्महे ॥
ततःप्रव्यथितोबाणोदुहितुश्श्रुतदूषणः।त्वरितःकन्यकागारंप्राप्तोऽद्राक्षीद्यदूद्वहम्॥ ३०
कामात्मजातंभुवनैकसुन्दरंश्यामंपिशङ्गाम्बरमम्बुजेक्षणम् ।

---

वी ॥ तामिति ॥ यदुवीरेणानिरुद्धेन भुज्यमानामत एव क्षतं विहतं व्रतं कन्याया विहितं यस्यास्तथाभूतां वीक्ष्य दुरवच्छदैः छादयितुमशक्यैः हेतुभिः चिह्नैः दूषितां लक्षयांचक्रुः ॥ २७ ॥

मु ॥ ततः किमासीदित्यत्राह—तामित्यादिना ॥ तथा पूर्वोक्तप्रकारेण भुज्यमानां तेन संभोगविशेषैरनुभूयमानाम् आप्रीतां सम्यक् प्रीतिविशिष्टां दुरवच्छदैः दुःखेन च्छादयितुम् आवारयितुं शक्यैः हेतुभिः गर्भचिह्नैः लक्षयाञ्चक्रुः निश्चिक्युः ॥ २७ ॥

वी॥भटास्ततस्ते राज्ञे बाणायावेदयाञ्चक्रुः, आवेदनप्रकारमेवाह—राजन्नित्यादिना नविद्महइत्यन्तेन ॥ हे राजन् कुलं दूषयतीति तथा तच्चेष्टितं लक्षयामः ॥ २८ ॥

मु ॥ भटाः अन्तः, अयं शब्दः काकाक्षिन्यायेन पूर्वोत्तरक्रियाद्वयेनान्वेति, आवेदयाञ्चक्रुः ज्ञापयामासुः, आवेदनप्रकारमाह—राजन्नित्यादि । कन्यायाः असंस्कृताया एव ते पुत्र्याः विचेष्टितं विरुद्धाचरणं लक्षयामः निश्चिनुमः, कुलदूषणं कुलस्य सद्वृत्तिभ्रंशकमिति विचेष्टितस्य क्रूरत्वमुक्तम् ॥ २८ ॥

वी ॥ अनपायिभिः अनुसरद्भिः अप्रमादैरस्माभिः स्वगृहे गुप्ताया अपि दूषणं न विद्महे ॥ २९ ॥

मु ॥ तर्हि अन्तःपुररक्षणे नियुक्तानां वः प्रयत्नः कुतो गत इत्यत्राह—अनपायिभिरिति॥अपायः ततोऽपसर्पणम्,प्रमादो वा,तद्रहितैरस्माभिः गृहे अन्तःपुरे गुप्तायाः सुरक्षितायाश्च पुम्भिः दुष्प्रेक्षायाः प्रेक्षितुमशक्याया दूषणं दौहृदलक्षणं विद्महे तन्निमित्तं न जानीम इत्यर्थः,यद्वा पुम्भिर्दूषणं व्रतभङ्गरूपदोषापादनं न विद्महे कुतो वेति न-जानीमः, 'दुष्प्रेष्यायाः' इति पाठे दुष्टा प्रेष्या अन्तःपुरचारिण्यो यस्यास्तस्या इत्यर्थः, 'प्रेष्याऽन्तःपुरचारिणी' इति निघण्टुः ॥ २९ ॥

वी ॥ ततइति॥ दुहितुर्यद्दूषणं तच्छ्रुतं येन स बाणः अत एव प्रव्यथितः त्वरायुक्तः कन्यकागृहं प्राप्य यदूद्वहमनिरुद्धं ददर्श ॥ ३० ॥

मु ॥ अथ बाणासुरः किमकार्षीदित्यत्राह—तत इति ॥ दुहितुः श्रुतदूषणः श्रुतदुहितृदोषः प्रव्यथितः प्रकर्षेण संजातव्यथः त्वरितः संजातत्वरः कन्यकाया अगारं गृहं प्राप्तस्सन् यदूद्वहं यादवश्रेष्ठम् अद्राक्षीत् अपश्यत् ॥ ३० ॥

वी ॥ कथंभूतं ? कामस्य प्रद्युम्नस्यात्मनो देहाज्जातम् अत एव भुवनैकसुन्दरं कुण्डलयोः कुन्तलानां च त्विषा स्मितयुक्तेन अवलोकेन च मण्डितम् आननं यस्य तम् ॥

---

१. चक्रुराप्रीतां. मु. भा. प्र. पा ॥

बृहद्भुजंकुण्डलकुन्तलत्विषास्मितावलोकेनचमण्डिताननम् ॥ ३१
दीव्यन्तमक्षैःप्रिययाऽभिनृम्णयातदङ्गसङ्गस्तनकुङ्कुमांस्रजम् ।
बाह्वोर्दधानंमधुमल्लिकाश्रितांतस्याग्रआसीनमवेक्ष्यविस्मितः ॥ ३२
सतंप्रविष्टंवृतमाततायिभिर्भटैरनेकैरवलोक्यमाधवः ।
उद्यम्यमौर्वंपरिघंव्यवस्थितो यथाऽन्तकोदण्डधरोजिघांसया ॥ ३३
जिघृक्षयातान्परितःप्रसर्पतश्शुनोयथासूकरयूथपोऽहनत् ।
तेहन्यमानाभवनाद्विनिर्गता निर्भिन्नमूर्धोरुभुजाःप्रदुद्रुवुः ॥ ३४

---

मु ॥ तमेव विशिनष्टि—कामेत्यादिना द्वयेन॥ पिशङ्गाम्बरं पीतवाससं कुण्डलयोः कुन्तलानां च त्विषा स्मितावलोकेन स्मितोदयमनोहरवीक्षणेन च मण्डिताननं परिष्कृतवदनम् ॥ ३१ ॥

वी ॥ अभिनृम्णया सर्वतोमङ्गलया प्रियया अक्षैर्दीव्यन्तं क्रीडन्तं तस्या अङ्गसङ्गेन स्तनकुङ्कुमं यस्यां मधुमल्लिकाः वसन्तभवमल्लिकाः ताभिः आश्रितां स्रजं बाह्वोर्मध्ये वक्षसि दधानं तस्या अग्रे पुरतः,अत्र सन्धिरार्षः, आलक्ष्यावलोक्य विस्मितो बभूव॥ ३२॥

मु ॥ अभिनृम्णया सर्वमङ्गलया प्रियया सह अक्षैः पाशकैः दीव्यन्तं क्रीडन्तं तस्या अङ्गसङ्गेन आलिङ्गनादिगाढसंश्लेषेण हेतुना स्तनकुङ्कुमं लग्नकुचार्द्रकुङ्कुमं यस्यां स्रजि तां तदङ्गसङ्गस्तनकुङ्कुमस्रजं, पुनस्तामेव विशिनष्टि—मधुमल्लिकाश्रितामिति । मधौ वसन्ते भवा मधुमल्लिकाः,ताभिः श्रितां संवलितामिति, "पुष्पे जातिप्रभृतयः स्वलिङ्गाः" इत्यमरोक्तेः मल्लिकाशब्दस्य पुष्पपरत्वेऽपि स्वलिङ्गत्वम्, बाह्वोर्मध्ये वक्षसि दधानम्, तस्याग्रइत्यार्षस्सन्धिः, तस्या अग्र इत्यर्थः, आसीनं तम् अवेक्ष्य विस्मितः आश्चर्यरसाविष्टः ॥ ३२ ॥

वी ॥ स इत्यादिसार्धमेकान्वयि ॥ स माधवो मधुवंशप्रभवोऽनिरुद्धः अत एव आततायिभिः उद्यतायुधैः भटैः परिवृतं तं बाणमवलोक्य यथा दण्डधरोऽन्तकः तद्वत् जिघांसया तत्र व्यवस्थितं लोहमयं परिघमुद्यम्य ग्रहीतुमिच्छया परितः परिसर्पतः तानाततायिनः अहनत् जघान, यथा सूकराणां यूथं पातीति तथा सूकरश्रेष्ठः शुनो हन्ति, तद्वत्, तद्दति । ते आततायिनः निर्भिन्नाः मूर्धादयो येषां ते अत एव गृहाद्विनिर्गताः दुद्रुवुः ॥ ३३ ॥ ३४ ॥

मु॥स माधवः अनिरुद्धः आततायिभिः स्ववधोद्योगेन गृहीतशस्त्रैरित्यर्थः,"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्तारष्षडेते आततायिनः" इत्युक्तत्वात्, अनेकैर्भटैरावृतं सन्तं प्रविष्टं तम् अवलोक्य जिघांसया जगतां हन्तुमिच्छया दण्डधरः अन्तको यथा काल इव स्वायुधदण्डं धृत्वा जगत्संहाराय सन्नद्धो यम इवेत्यर्थः, मुर्वमिति लोहविशेषः, तद्विकारं परिघम् आयुधविशेषम् उद्यम्य व्यवस्थितः, युद्धाभिमुखोऽतिष्ठदित्यर्थः ॥ ३३ ॥

मु॥ततः किमकरोदित्यत आह—जिघृक्षयेति॥ स्वग्रहणेच्छयेत्यर्थः,परितः प्रसर्पतः

तंनागपाशैर्बलिनन्दनोबली घ्नन्तंस्वसैन्यंकुपितोबबन्धह ।
उषाभृशंशोकविषादविह्वला बद्धंनिशम्याश्रुकलाक्ष्यरोदीत् ॥ ३५

इति श्रीभागवते महापुराणे दशमस्कन्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

॥ बाणासुरयुद्धकथारम्भः ॥

श्रीशुक उवाच—
अपश्यतांचानिरुद्धं तद्बन्धूनांचभारत।चत्वारोवार्षिकामासा व्यतीयुरनुशोचताम्॥

तान् भटान् सूकरयूथपः वराहयूथनाथः श्वनो यथा शुनकानिव अहनत् हतवान्, ते भटाः हन्यमानाः निर्भिन्नं छिन्नं मूर्धानः शिरांसि ऊरवो भुजाश्च मूर्धोरुभुजं येषां ते तथाभूतास्सन्तः विनिर्गताः प्रदुद्रुवुः समन्तादपतन् ॥ ३४ ॥

वी ॥ तमिति ॥ बली बलवान् बलिनन्दनो बाणः स्वसैन्यं घ्नन्तम् अनिरुद्धं कुपितो नागपाशैर्बबन्ध, शोकविषादाभ्यां बाह्याभ्यन्तरदुःखाभ्यां विह्वला अवशा अश्रूणां कला बिन्दवो ययोस्ते अक्षिणी यस्यास्सा रुरोद ॥ ३५ ॥

मु ॥ ततः स्वसैन्यं घ्नन्तं संहरन्तं बलिनं तमनिरुद्धं बली भटादिबलसहितः बाणः कुपितस्सन् नागपाशैः क्रूरसर्पमयैः रज्जुविशेषैः बबन्ध, अथोषादशामाह—उषेति-शोकविषादाभ्यां भृशं विह्वला अवशा अश्रूणां कलाः विन्दवो ययोस्ते तथाविधे अक्षिणी यस्यास्सा रुद्धं नागपाशैर्निरुद्धम् अरोदीत् रुरोद, "रुदिर् अश्रुविमोचने" इत्यस्माद्धातोर्लुङ्, उषा रुद्धं तं निशम्य भृशं शोकविषादविह्वला अश्रुकलाक्षी सती रुरोदेत्यन्वयः ॥ ३५ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

वी ॥ अथानिरुद्धादर्शनजव्यथानां क्रमेण नारदाच्छ्रुततद्वार्तानां प्राप्तशोणितपुराणां यदूनां बाणेन सह संग्रामं वर्णयति—त्रिषष्टितमेन ॥ अपश्यतामिति ॥ अनिरुद्धमपश्यतां तस्यानिरुद्धस्य बन्धूनाम् अनुशोचतां वार्षिकाः आषाढाद्याश्विनान्ताः चत्वारो मासाः व्यतीयुः अतिक्रान्ताः ॥ १ ॥

मु ॥ प ॥ सर्वेशत्वं सर्वशक्तिं च विष्णोरीशादीनां दुष्टभावप्रसक्तौ ।
तच्छिक्षातस्तत्कृतस्तोत्रभूम्नाऽप्याह व्यक्तं लौकिकेभ्यो हि मौनी ॥

अपश्यतामित्यादि ॥ अनिरुद्धम् अपश्यताम् अतएव अनुशोचतां तद्बन्धूनां वार्षिकाश्चत्वारो मासाः व्यतीयुः अतिक्रान्ताः वर्षासु यानाघटनादिति भावः, यद्वा अनिरुद्धमपश्यतामिति पुरवासिजनपरं तद्बन्धूनां चेति तदाप्तबन्धुजनपरं च योज्यम्,

नारदात्तदुपाकर्ण्य वार्तांबद्धस्यकर्मच।प्रययुश्शोणितपुरं वृष्णयःकृष्णपालिताः॥ २
प्रद्युम्नोयुयुधानश्चगदस्साम्बोऽथसारणः।नन्दोपनन्दभद्राद्यारामकृष्णानुवर्तिनः॥
अक्षौहिणीभिर्द्वादशभिस्समेतास्सर्वतोदिशम्। रुरुधुर्बाणनगरंसमन्तात्सात्त्वतर्षभाः
भज्यमानपुरोद्यान¹प्राकाराट्टादिगोपुरम्। प्रेक्षमाणोरुषाविष्टस्तुल्यसैन्योविनिर्ययौ
बाणार्थभगवान्रुद्रस्ससुतःप्रमथैर्वृतः। आरुह्यनन्दिवृषभं युयुधेरामकृष्णयोः॥ ६
आसीत्सुतुमुलंयुद्धमद्भुतंरोमहर्षणम्। कृष्णशङ्करयोराजन्प्रद्युम्नगुहयोरपि॥ ७

---

तद्दर्शनं च तद्बन्धूनामपि स्वारस्याल्लभ्यते ॥ १ ॥

वी ॥ नारदादिति ॥ बद्धस्यानिरुद्धस्य वार्ता बन्धनात्पूर्वं तस्य कर्म च श्रुत्वा कृष्णेन पालिताः कृष्णसहिता इत्यर्थः, वृष्णयो यदवः ॥ २ ॥

मु ॥ दण्डयात्राबीजमाह—नारदादिति ॥ बद्धस्य अनिरुद्धस्य वार्ता तत्रायमेवं वर्तत इति वृत्तान्तं तत्कर्म युद्धादिव्यापारं च नारदादुपाकर्ण्येति योजना, शोणितपुरं बाणनगरं, कृष्णपालिता इत्यनेन वृष्णीनामकुतोभयत्वमुक्तम् ॥ २ ॥

वी ॥ वृष्णिप्रधानानाह—प्रद्युम्नइति ॥ एते सर्वे रामकृष्णावनुवर्तन्त इति तथाभूताः ययुः ॥ ३ ॥

मु ॥ वृष्णय इति सामान्यत उक्तान्योधान्विविच्याह—प्रद्युम्न इत्यादिना ॥ ३ ॥

वी ॥ अक्षौहिणीभिः समेताः सहिताः ॥ ४ ॥

मु ॥ एवं योधानुक्त्वा तत्तदनुगतभटसंख्यामाह—अक्षौहिणीभिरिति॥ सात्वतर्षभाः सर्वतोदिशं सर्वतोदिक्षु समन्तात् निरवकाशं बाणनगरं रुरुधुः॥ ४ ॥

वी ॥ भज्यमानेति ॥ भज्यमानानां पुरादीनां द्वन्द्वैकवद्भावो, यद्वा बहुव्रीहिरेव, पुरमिति विशेष्याध्याहारः, रुषा आविष्टो व्याप्तो बाणस्तुल्यसैन्यः द्वादशाक्षौहिणीस्सैन्ययुक्तः विनिर्गतः पुरादिति शेषः, अट्टालाः प्राकारादुपरितनान्युन्नतस्थानानि ॥ ५ ॥

मु ॥ पुरद्वारप्राकारोद्यानगोपुरमिति द्वन्द्वैकवद्भावः, भज्यमानमामर्द्यमानं पुरद्वारप्राकारोद्यानगोपुरं यस्य तदिति नगरविशेषणम्,भज्यमानानि पुरस्योपद्वाराणि प्राकाराः सालाः उद्यानानि आक्रीडाः गोपुराणि महाद्वाराणिच्च यस्य तदित्यर्थः, अस्यां योजनायां तदित्यध्याहार्यम् , प्रेक्षमाणो रुद्रः विनिर्ययाविति, यद्वा पुरद्वाराणि च प्राकाराश्च उद्यानानि च गोपुराणि च पुरद्वारप्राकारोद्यानगोपुरमिति द्वन्द्वैकवद्भावः, भज्यमानम् आमर्द्यमानं च तत् पुरद्वारप्राकारोद्यानगोपुरं च तत् प्रेक्षमाणः भगवान् रुद्रः रुषा क्रोधेन आविष्टः कलुषस्सन् तुल्यसैन्यः यादवसेनातुल्यसैन्यः ॥ ५ ॥

वी ॥ बाणार्थमिति ॥ बाणस्य सहायार्थं ससुतः स्कन्देन सहितः नन्दिनामवृषभमारुह्य रामकृष्णाभ्यां युयुधे अयुध्यत ॥ ६ ॥

मु ॥ ससुतः कुमारसहितः प्रमथैर्वृतः बाणार्थं बाणरक्षणार्थं विनिर्ययौ, नन्दिवृषभं नन्द्याख्यं वृषभम् आरुह्य रामकृष्णयोर्युयुधे रामकृष्णाभ्यां सह युद्धं चकारेत्यर्थः ॥

वी ॥ आसीदिति ॥ तुमुलं सङ्कुलं रोमहर्षणं शृण्वतां पश्यतां च रोमाद्गमावहम्,

---

१. प्राकारोद्यानगोपुरं. मु. भा. प्र. पा ॥

कुम्भाण्डकूपकर्णाभ्यां बलेनसहसंयुगः। साम्बस्यबाणपुत्रेणबाणेनसहसात्यकेः ॥
ब्रह्मादयस्सुराधीशा मुनयस्सिद्धचारणाः।गन्धर्वाप्सरसोयक्षाविमानैर्द्रष्टुमागमन्॥
शङ्करानुचराञ्शौरिर्भूतप्रेतान्सगुह्यकान्।ढाकिनीयातुधानांश्च[१]यक्षरक्षोविनायकान्
प्रेतमातृपिशाचांश्चकूश्माण्डान्ब्रह्मराक्षसान्। द्रावयामासतीक्ष्णाग्रैश्शरैश्शार्ङ्गधनुश्च्युतैः
पृथग्विधानिप्रायुङ्क्तपिनाक्यस्त्राणिशार्ङ्गिणि।प्रत्यस्त्रैश्शमयामासशार्ङ्गपाणिरविस्मितः
ब्रह्मास्त्रस्यतुब्रह्मास्त्रं वायव्यस्यचपार्वतम्। आग्नेयस्यचपार्जन्यं नैजंपाशुपतस्यच ॥

---

कस्य केन सहेत्यत आह—कृष्णशङ्करयोरिति सार्धेन। हे राजन् बलेन बलभद्रेणसह॥

मु ॥ तुमुलम् अतिसंकटं तत् युद्धम् अद्भुतम् आश्चर्यावहम् अत एव रोमहर्षणं द्रष्टॄणां पुलकाङ्कुरजनकं च आसीत्, अथ तत्र अनुगुणयोश्च योर्द्वन्द्वयुद्धमाह—कृष्णेत्यादिना सार्धश्लोकेन, गुहः कुमारस्वामी ॥ ७ ॥

मु ॥ कुम्भाण्डकूपकर्णाभ्यां सह बलेन रामेण संयुग इति शेषः, साम्बस्य बाणपुत्रेण सह सात्यकेर्बाणेन सह संयुग आसीदित्यर्थः ॥ ८ ॥

वी ॥ ब्रह्मादय इति ॥ सिद्धचारणानाम् इतरेतरयोगद्वन्द्वः, तदा गन्धर्वादयोऽपि आगमन् आजग्मुः ॥ ९ ॥

मु ॥ युद्धस्याश्चर्यावहत्वात् ब्रह्मादयोऽपि द्रष्टुमागता इत्याह—ब्रह्मादय इति ॥ विमानानामागमनकरणत्वात्तृतीया ॥ ९ ॥

वी ॥ शङ्करानुचरानिति ॥ शौरिः कृष्णः शार्ङ्गाख्याद्धनुषः च्युतैः तीक्ष्णमग्रं येषां तैः शरैः भूतादीन् शङ्करस्यानुचरान् द्रावयामासेति संबन्धः ॥ १० ॥ ११ ॥

मु ॥ अथ शौरेर्युद्धविहरणक्रममाह—शङ्करानुचरानित्यादिना शार्ङ्गधनुश्च्युतैरित्यन्तेन॥शौरिः शार्ङ्गधनुश्च्युतैः शरैः शङ्करानुचरान् द्रावयामासेत्यन्वयः,तस्य भूतपतित्वात्तन्नामभिस्तदनुचरान्विविच्याह—भूतेत्यादिना सपादश्लोकेन।सर्वदिशः प्रति द्रुतान् विपलायितानकरोदित्यर्थः ॥ १० ॥

मु ॥ ११ ॥

वी ॥ पृथग्विधानीति॥ पिनाकी रुद्रः शार्ङ्गिणि कृष्णे पृथग्विधानि नानाविधान्यस्त्राणि प्रयुक्तवान्, शार्ङ्गपाणिः कृष्णः अविस्मित एव तान्प्रत्यस्त्रैश्शमयामास ॥ १२ ॥

मु ॥ एवं स्वबले शार्ङ्गिणा विपलायिते सति तस्मिंस्तत्कृत्यमाह—पृथगिति। शौरिकृत्यमाह—प्रत्यस्त्रैरिति। इतरदुस्तरेऽपि तद्रणे सर्वशक्तेर्भगवतोऽचिन्त्यमहिमपर्यालोचनया तस्य तुच्छत्वात् अविस्मित इत्युक्तम्, विस्मयरहितस्सन् हेलया शमयामासेत्यर्थः ॥ १२ ॥

वी ॥ तदेवाह—ब्रह्मास्त्रस्येति ॥ नैजं नारायणास्त्रं शामकं प्रायुङ्क्तेत्यर्थः ॥ १३ ॥

मु॥अथ तयोः परस्परस्मिन् दिव्यास्त्रप्रयोगेण दारुणयुद्धमाह—ब्रह्मास्त्रेत्यादिना पाशुपतस्य चेत्यन्तेन ॥ नैजं नारायणास्त्रम्, पर्जन्यो मेघाधिपतिर्देवता, तद्देवताकमस्त्रमाग्नेयास्त्रनिवारकम् ॥ १३ ॥

---

१. वेतालान्सविनायकान्. मु. भा. पा ॥

मोहयित्वातुगिरिशंजृम्भणास्त्रेणजृम्भितम् ।बाणस्यपृतनांशौरिर्जघानासिगदेषुभिः
स्कन्दःप्रद्युम्नबाणौघैरर्द्यमानस्समन्ततः।असृग्विमुञ्चन्गात्रेभ्यश्शिखिना[1]प्राद्रवद्रणात्
कुम्भाण्डःकूपकर्णश्चपेततुर्मुसलार्दितौ ।दुद्रुवुस्तदनीकानिहतनाथानिसर्वतः।। १६
विशीर्यमाणंस्वबलंदृष्ट्वाबाणोऽत्यमर्षितः।कृष्णमभ्यद्रवत्सङ्ख्येरथीहित्वैवसात्यकिम्
धनूंष्याकृष्ययुगपद्बाणःपञ्चशतानिवै।एकैकस्मिञ्शरौद्वौद्वौसन्दधेरणदुर्मदः ।। १८
तानिचिच्छेदभगवान्धनूंषियुगपद्धरिः।सारथिंरथमश्वांश्चहत्वाशङ्खमपूरयत् ।। १९

वी ॥ मोहयित्वेति ॥ जृम्भणाख्येनास्त्रेण गिरिशं जृम्भितं जृम्भणयुक्तं यथा तथा मोहयित्वा ॥ १४ ॥

मु ॥ एवं भगवतो लौकिकयोधप्रतियोधरीत्या युद्धक्रममुक्त्वा "पराऽस्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुत्युक्तं सर्वशक्तित्वं प्रकटीचकारेत्याह—मोहयित्वेति ॥ गिरिशं जृम्भणास्त्रेण निद्राकार्यभूतास्यविवरणरूपजृम्भणजनकास्त्रविशेषेण जृम्भितं संजातजृम्भं यथा तथा मोहयित्वा मूर्च्छयित्वा शौरिः बाणस्य पृतनाम् असिगदेषुभिः जघान. अत्र "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इति सूत्रविहितैकवद्भावाभाव आर्षः, "करपदाक्षिमुखैः" इति पूर्वाचार्यप्रयोगबलाद्वैकल्पिको वा ॥ १४ ॥

वी॥ स्कन्द इति॥ स्कन्दः षण्मुखः असृक् रुधिरं विमुञ्चन् शिखिना मयूरवाहनेन सह रणस्थानात्प्राद्रवत् ॥ १५ ॥

मु ॥ स्कन्द इति ॥ समन्ततः सर्वकर्मसु अर्द्यमानः पीड्यमानः गात्रेभ्यः मुखनासिकाकर्णादिभ्यः असृक् रक्तं विमुञ्चन्, शिखिनेत्यपक्रमणसाधने तृतीया, शिखिना स्ववाहनेन मयूरेणेत्यर्थः, अपाक्रमत् रणात् अपासरत् ॥ १६ ॥

वी ॥ कुम्भाण्ड इति ॥ मुसलेन बलभद्रप्रयुक्तेन अर्दितौ पीडितौ पेततुः,हतौ नाथौ येषां तानि तयोरनीकानि सर्वतो दिक्षु दुद्रुवुः ॥ १६ ॥

मु ॥ कुम्भाण्डः कूपकर्णश्चेत्युभौ मुसलेन अर्दितौ पीडितौ सन्तौ पेततुः भूमावपतताम्, तदनीकानि तयोस्सैन्यानि हतौ नाथौ येषां तानि सन्ति सर्वतः दुद्रुवुः दिशः प्रति विविधं पलायितानि बभूवुः ॥ १६ ॥

वी ॥ विशीर्यमाणमिति ॥ विशीर्यमाणं हन्यमानं दृष्ट्वा अतीव न मृष्यतीति तथा स बाणस्सात्यकिं प्रतियोद्धारं हित्वा अनादृत्य सङ्ख्ये युद्धे रथी सन् कृष्णमभ्यद्रवत् ॥

मु ॥ ततो बाणः किमकरोत्, तदाह—विशीर्यमाणमिति ॥ पुञ्जभावं त्यक्त्वा सर्वतो धावदित्यर्थः, स्वबलं स्वसैन्यं दृष्ट्वा अत्यमर्षणः अतिक्रोधनः बाणः संख्ये युद्धे सात्यकिं हित्वैव कृष्णम् अभ्यद्रवत् अन्वधावत् ॥ १७ ॥

वी ॥ धनूंषीति ॥ रणे दुष्टो मदो यस्य स बाणः एकैकस्मिन् धनुषि द्वौद्वौ शरौ सन्दधे, तानि संहितमात्रशराण्येव न तु प्रयुक्तबाणानि धनूंषि चिच्छेद, सायकैरिति शेषः, ततस्सारथिरथाश्वान् हत्वा नाशयित्वा शङ्खं पाञ्चजन्यमपूरयत्॥ १८॥ १९॥

मु ॥ रणदुर्मदः रणे उन्मत्तवत्प्रवर्तमान इत्यर्थः. युगपत् पञ्चशतानि धनूंषि, अत्र तावद्भिर्हस्तैराकृष्येत्यर्थः, एकैकस्मिन् एकस्मिन्नेकस्मिन् धनुषि द्वौ द्वौ शरौ संदधे ॥

१ ऽपाक्रमद्रणात्. मु. भा. पा ॥

तन्माताकोटरानामनग्नामुक्ताशिरोरुहा।पुरोऽवतस्थेकृष्णस्यपुत्रप्राणरिरक्षया ॥ २०
ततस्तिर्यङ्मुखोनग्नामनिरीक्षन्गदाग्रजः। बाणश्चतावद्विरथश्छिन्नधन्वाऽविशत्पुरम्॥
विद्राविते भूतगणेज्वरस्तुत्रिशिरास्त्रिपात्।[1]महादेवप्रयुक्तोऽसौघोररूपोविभीषणः॥
[1]अभ्यपद्यतदाशार्हं दहन्निवदिशोदश ॥ २२
आविर्बभूवपुरतस्समरेशार्ङ्गधन्वनः।अथनारायणोदेवस्तंदृष्ट्वाव्यसृजज्ज्वरम् ॥ २३
माहेश्वरोवैष्णवश्चयुयुधातेज्वरावुभौ।माहेश्वरस्समाक्रन्दद्वैष्णवेनबलार्दितः ॥ २४
अलब्ध्वाऽभयमन्यत्रभीतोमाहेश्वरोज्वरः ।

---

मु ॥ अथ भगवान् किमकरोदित्यत आह—तानीति ॥ भगवानित्यनेन ज्ञानशक्तिबलैश्वर्यवीर्यतेजस्संपत्तिरुक्ता. हरिरिति विरोधिनिरसनक्षमत्वमुक्तम्, युगपदेव तानि धनूंषि चिच्छेद, सारथिमित्यादि । अपूरयत् दध्मौ ॥ १९ ॥

वी ॥ तन्मातेति ॥ तस्य बाणस्य माता कोटरा नाम नग्ना मुक्ता विस्रस्ताः केशाः यस्यास्तथाभूता च पुत्रस्य प्राणान् रक्षितुमिच्छया कृष्णस्य पुरत उपतस्थे अवस्थितवती॥

मु ॥ तन्माता बाणजननी कोटरा नाम कोटरेति प्रसिद्धा नग्ना अवासास्सती पुत्रप्राणानां रिरक्षया रक्षितुमिच्छया पुरोऽवतस्थे ॥ २० ॥

वी ॥ ततइति॥ नग्नामनिरक्षमाणः तिर्यङ्मुखो बभूव, तावत् तदन्तरं लब्ध्वेत्यर्थः ॥

मु ॥ तत इति ॥ नग्नामनिरीक्ष्य "नेक्षेतार्कं न नग्नां स्त्रीं न च संसक्तमैथुनम्" इति निषेधात्, तिर्यङ्मुखः अभूदिति शेषः, बाणश्चेति । पुरमविशत् युद्धसाधनरहितस्सन् स्वपुरं विवेश ॥ २१ ॥

वी ॥ विद्रावित इति ॥ भूतगणे विद्राविते पलायिते सति शङ्करेण प्रयुक्तः घोरं रूपं यस्य सः विशेषेण भीषयतीति तथा त्रीणि शिरांसि यस्य त्रयः पादा यस्य स तापज्वरः दश दिशो दहन्निव दाशार्हं कृष्णम् अभ्यपद्यत अभ्याजगाम ॥ २२ ॥

मु ॥ विद्राविते पलायिते सति ज्वरस्तु हरप्रयुक्त इति शेषः, तस्याऽकारमाह—त्रिशिरास्त्रिपादिति ॥ २२ ॥

वी ॥ समरे शार्ङ्गधन्वनः कृष्णस्याग्रे आविर्बभूवच्च, अथेति—देवः कृष्णः तं ज्वरं दृष्ट्वा ज्वरं वैष्णवं शीतज्वरं व्यसृजत् प्रायुङ्क्त ॥ २३ ॥

मु ॥ अथेति ॥ नारायणो देव इत्याभ्यां सर्वान्तर्यामिणः सर्वाधारस्य प्रलये महार्णवशायिनः परमकारणस्य भगवतः क्रीडापरवशतया जगद्रक्षणार्थमवतीर्णत्वं स्फोर्यते, तं माहेश्वरज्वरं दृष्ट्वा ज्वरं वैष्णवं व्यसृजत् प्रयुक्तवान् ॥ २३ ॥

वी॥माहेश्वरो वैष्णवश्चेत्युभौ युयुधाते युद्धं कृतवन्तौ,तदा वैष्णवेन ज्वरेण कर्त्रा बलेन साधनेनार्दितः विहतः माहेश्वरो ज्वरः समाक्रन्दत् रुरोद ॥ २४ ॥

मु ॥ माहेश्वरो वैष्णवश्चेति तौ ज्वरावुभौ च युयुधाते परस्परं युद्धमकुरुताम्, वैष्णवेन विष्णुसंबन्धिना तत्प्रयुक्तेन ज्वरेणेत्यर्थः, बलार्दितः बलात्कारेण पीडितः॥

वी ॥ अलब्ध्वेति ॥ अन्यत्र अन्यतः अभयमलब्ध्वा अत एव नितरां भीतः शरणं

---

१. मु. भा. प्रकाशिकानुसारेणेदमर्धद्वयं नास्ति. पा ॥

शरणार्थीहृषीकेशं तुष्टावप्रयताञ्जलिः ॥ २५

ज्वर उवाच—

नमामित्वाऽनन्तशक्तिंपरेशं सर्वात्मानंकेवलंज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्मब्रह्मलिङ्गंप्रशान्तम् ॥ २६
कालोदैवंकर्मजीवस्स्वभावोद्रव्यं क्षेत्रंप्राणआत्माविकारः ।

---

रक्षितारं तदुपायं वा अर्थयत इति तथा बद्धाञ्जलिः कृष्णं तुष्टाव ॥ २५ ॥

मु ॥ माहेश्वरः ज्वरः भीतस्सन् शरणार्थी स्वरक्षणार्थी प्रयताञ्जलिः बद्धाञ्जलिः हृषीकेशं हृषीकाणीन्द्रियाणि तेषामीशं चेतनानां पुण्यपापपरिपाकक्रमेण तत्तद्विषयेषु प्रवर्तनकर्तारमित्यर्थः, तुष्टाव अस्तौत् ॥ २५ ॥

वी ॥ स्तुतिमेवाह—नमामीति चतुर्भिः ॥ तावत्स्वरक्षणोपयुक्तपरत्वविशिष्टं स्तौति द्वाभ्याम् ॥ परेशं त्वां नमामि परेषां ब्रह्मादीनामपीशं नियन्तारम्,किं प्राकृतराजादिवत् ,नेत्याह—सर्वात्मानमिति।सर्वेषां ब्रह्मादीनाम् आत्मानम् अन्तः प्रविश्य धारकत्वेन नियन्तारमित्यर्थः, कथमणुस्वरूपब्रह्मादिजीववर्गान्तःप्रवेश इत्यतो विशिनष्टि—केवलं निरवयवं ज्ञानमात्रस्वरूपं साजात्यादन्तःप्रवेशोपपत्तिरिति भावः, मात्रशब्देन क्वचिदपि जाड्यराहित्यं विवक्षितम् , ननु परेशस्तर्हि कोऽसौ जगत्कर्तेत्यत्र त्वमेवेति वक्तुं कारणत्वोपयुक्तसर्वशक्तित्वादिगुणयोगमाह—अनन्तशक्तीति । कारणत्वमाह—विश्वोत्पत्तीति । स्थानं स्थितिः, विश्वस्योत्पत्त्यादिहेतुमित्यर्थः, ममैवंविधत्वे किं प्रमाणमत आह—ब्रह्मलिङ्गं वेदप्रमाणकम् , ननूक्तविधं ब्रह्म , न त्वहम् , तत्राह—यत्तद्ब्रह्मेति। यद्वेदान्तप्रसिद्धं ब्रह्म,तदभिन्नं त्वाम्, नन्वहमपि कदाचिच्छोचामि,नेत्याह—प्रशान्तम् अशनायापिपासाशोकमोहजरामृत्युरूपोर्मिषट्करहितम् ॥ २६ ॥

मु॥ तत्र प्रथमं तत्स्वरूपस्वभावानुसन्धानजनिताश्चर्यभक्तिपरीतः स्तौति—नमामीति ॥ अनन्ताः अपरिच्छेद्याः सकलब्रह्माण्डनिर्माणनियमनसंहारसामर्थ्यरूपाः शक्तयो यस्य तं परेषां ब्रह्मादीनामीशं तत्तदनुगुणाधिकारेषु नियन्तारं सर्वात्मानं सर्वेषामन्तरात्मतयाऽवस्थाय चोदयितारं तत्तज्ज्ञानचिकीर्षणप्रयतनाद्युत्पादनेन प्रवर्तयितारमित्यर्थः केवलं कृत्स्नमपि ज्ञप्तिमात्रं स्वरूपे क्वचिदपि जाड्यरहितमित्यर्थः, यद्वा केवलं चिदचिच्छरीरकं सर्वजगत्कारणं स्वयमेकमेवेत्यर्थः, "केवलः कृत्स्न एकश्च" इति नैघण्टुकाः, तदेव विवृणोति—विश्वेति । विश्वस्य प्रपञ्चस्य उत्पत्तिः उदयः स्थानं स्थितिः संहारो लयः तेषां हेतुम्, नन्वेवंविधत्वे किं प्रमाणमित्यत्राह—ब्रह्मलिङ्गमिति। ब्रह्म वेदो लिङ्गं प्रमाणमस्येति ब्रह्मलिङ्गं वेदप्रमाणकं प्रशान्तं सर्वक्रियारहितम् आत्मानुभवजानन्दपरवशतया निस्तरङ्गजलधिवच्छान्तोदितदशापन्नमित्यर्थः, ब्रह्मलिङ्गं प्रशान्तं तत् प्रसिद्धं यत् ब्रह्म अस्तीति शेषः, अनन्तशक्तिमित्याद्युक्तं त्वा त्वां नमामीत्यन्वयः, तं त्वां नमामीत्यर्थः ॥ २६ ॥

वी ॥ ननु कालकर्मस्वभावादीनामेव जगद्धेतुत्वं न ममेत्यत आह—कालइति॥ दैवं कालाद्यभिमानिदेवता, कर्म जीवादृष्टम् , स्वभावः जडत्वाजडत्वपरिणामत्वाश्रितत्तद्वस्तुस्वभावः, द्रव्यं पृथिव्यादिभूतपञ्चकम् , क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः, प्राणः

तत्सङ्घातोबीजरोहप्रवाहस्त्वन्मायैषातन्निषेधंप्रपद्ये ॥ २७

नानाभावैर्लीलयैवोपपन्नैर्देवान् साधून्लोकसेतून्बिभर्षि ।

हंस्युन्मार्गान्स्वेच्छयावर्तमानाञ्जन्मैतत्तेभारहारायभूमेः ॥ २८

---

पञ्चवृत्तिः प्राणः, आत्मा मतिः, विकारः अवस्थाभेदः, तत्सङ्घातश्शरीरम्, बीजरोहप्रवाहः कार्यकारणप्रवाहः, एषा एतत्सर्वं त्वन्माया त्वत्सङ्कल्परूपज्ञानाधीनमित्यर्थः, एषेति सर्वनामत्वात्पर्यायेणोद्देश्यविधेयलिङ्गभाक्त्वात् प्रतिनिर्दिश्यमानमायापेक्षया स्त्रीलिङ्गनिर्देशः,तं त्वां निषेधं 'नेतिनेति' इति प्रकृतिप्राकृतसमस्तवस्तुगतप्रकारो यस्मिन्निषिध्यते, तं त्वां प्रपद्ये इत्यर्थः, निषेधमित्यत्राधिकरणे घञ् ॥ २७ ॥

मु ॥ ननु किमर्थं मां नमस्करोषीत्याशङ्कायां प्रणामस्य साफल्यं वदन् शरणवरणं करोति—काल इत्यादिना ॥ कालः वस्तुपरिणामहेतुः दिवसमासर्तुहायनाद्यात्मकः, दैवं कालाद्यभिमानिदेवता, कर्म सुखदुःखानुभवनिमित्तं पुण्यपापरूपम्, जीवः क्षेत्रज्ञवर्गः, स्वभावः जडत्वाजडत्वपरिणामित्वादितत्तद्वस्तुस्वभावः, द्रव्यं पृथिव्यादि, क्षेत्रं पृथिव्याद्युत्पत्तिभूमिः प्रकृतिः, प्राणः पञ्चवृत्तिः प्राणापानव्यानोदानसमानात्मकः, आत्मा मतिः, विकारः अवस्थाभेदः, तत्संघातः तेषां समष्टिरूपं शरीरम्, बीजरोहप्रवाहः देहाद्बीजरूपं कर्म, ततोऽङ्कुररूपो देहः ततः पुनरेवमिति प्रवाह इत्येषा त्वन्माया त्वत्संकल्परूपज्ञानाधीनं सर्वमित्यर्थः, तन्निषेधं प्रपद्य इति । "नेति नेति" इति श्रुत्या प्रकृतिप्राकृतसमस्तवस्तुगतप्रकारो यस्मिन् निषिध्यते तन्निषेधं त्वामित्यर्थः, अधिकरणार्थे घञ्प्रत्ययः ॥ २७ ॥

वी ॥ ननूक्तविधः परेशोऽन्य एव, अहं तु यदुष्वन्यतम इत्यत आह—नानाभावैरिति ॥ लीलयैव हेतुभूतया उपपन्नैरन्यथा त्वय्यकर्मवश्ये तेषामनुपपन्नत्वादिति भावः, तैर्भावैः प्रकारभूतैर्मत्स्याद्यवतारैरिति यावत्, धर्मसेतून् धर्ममर्यादाश्च बिभर्षि पुष्णासि, उन्मार्गानुत्पथान् हंसि नाशयसि, उन्मार्गानित्यस्यैव विवरणं—स्वेच्छया वर्तमानानिति । यथा मत्स्यकूर्मादिजन्म,तद्वदेतदपि तव जन्म अवतारः भूमेर्भारहाराय भारापनयनार्थम्, अनेन वात्सल्यसौशील्यसौलभ्यादीनि सूचितानि ॥ २८ ॥

मु ॥ ननु देवकीपुत्रस्य मे कथमेवंभूतत्वमित्याशङ्कायामाह—नानेति ॥ लीलयैव उपपन्नैः स्वीकृतैः नानाभावैः मत्स्याद्यवतारैः लोकसेतून् लोकमर्यादास्थापकान् देवान् बिभर्षि तद्रक्षणभारं वहसीत्यर्थः- उन्मार्गान् विधिनिषेधरूपत्वदाज्ञोल्लङ्घिनः अत एव स्वेच्छया वर्तमानान् यथेच्छाचाररतान् "यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचरः । भस्मीभूतस्य देहस्य पुनरागमनं कुतः" इत्यादिदुरागमार्थानुष्ठातॄनित्यर्थः;हंसि संहरसि, ननु ममैव कोऽयंभार इत्यत्राह—जन्मेति । ते एतत् जन्म अवतारः भूमेः भारस्य हाराय निवर्तनायेति, यद्वा त्वं लीलयैवोपपन्नैः नानाभावैः मत्स्यकूर्मादिनानाविधरूपाविर्भावैः देवान् बिभर्षि पालयसि, तदर्थं लोकसेतून् वर्णाश्रमधर्मान् बिभर्षि, तदर्थं च साधून् तदनुष्ठापकान् बिभर्षि, तदङ्गत्वेन उन्मार्गान् दैत्यादीन् हंसि, अतः तव इदं जन्मभूमेर्भारावतरणाय ऐच्छिकमेव, न त्वं कस्यापि तनय इति ॥ २८ ॥

तप्तोऽहंतेतेजसादुस्सहेन शान्तोग्रेणात्युल्बणेनज्वरेण ।
तावत्तापोदेहिनांतेऽङ्घ्रिमूलं नोसेवेरन्यावदाशानुबद्धाः ॥ २९

श्रीभगवानुवाच—
त्रिशिरस्तेप्रसन्नोऽहंव्येतुतेमज्ज्वराद्भयम् ।योनौस्मरतिसंवादं तस्यत्वन्नभवेद्भयम् ॥
इत्युक्तोऽच्युतमानम्यगतोमाहेश्वरज्वरः । बाणस्तुरथमारूढःप्रागाद्योत्स्यञ्जनार्दनम्
ततोबाहुसहस्रेणनानायुधधरोऽसुरः । मुमोचपरिघंक्रुद्धो [१]बाणश्चक्रायुधेनृप ॥ ३२
[२]तस्यास्यतोऽस्त्राणिसकृच्चक्रेणक्षुरनेमिना ।

---

वी ॥ इत्थं शरण्यत्वमाविष्कृत्य स्वकीयामार्तिमावेदयति—तप्त इति ॥ तावच्छान्तेनाप्यन्तत उग्रेणोल्बणेन अत एव सोढुमशक्येन त्वत्तेजसा उपबृंहितेन ज्वरेणाहं तप्तः, ततो मां प्रपन्नं पाहीति भावः, परसन्तापकस्य युक्त एव ताप इत्यत आह—तावदिति । यावदाशया रक्षकान्तरसम्भावनाशयाऽनुबद्धाः तवाङ्घ्रिमूलं न सेवेरन् ,तावदेव देहिनां तापः, सेवायां प्रवृत्तानां त्वनुचित इति भावः ॥ २९ ॥

मु ॥ तस्मादज्ञानतस्त्वदभिभवप्रवृत्तमपि अनुतापशुद्धं मां रक्षेत्याशयवानाह—तप्तोऽहमिति॥'दुस्सहेन शान्तोग्रेण'इत्यत्र च्छन्दोभङ्ग आर्षः, शीतज्वरस्य अन्तर्दुस्सहसन्तापजनकत्वात् शान्तोग्रेणेत्युक्तम् ,अत्युल्बणेन अतिप्रवृद्धेन ज्वरेण ज्वरात्मना परिणतेन दुस्सहेन सोढुमशक्येन ते तेजसा अहं तप्तः, ननु परसंतापकरणप्रवृत्तस्य तव पुनः संतापकरत्वं मम युक्तमेवेति चेत् —अत आह—तावदिति । आशानुबद्धाः क्षुद्रविषयाशापरवशाः जनाः यावत् ते अङ्घ्रिमूलं नो सेवेरन् न भजेरन्, अङ्घ्रिमूलमिति मूलशब्देन महाग्रीष्मतापातुराणां सान्द्रच्छायाशीतलवृक्षमूलमिति ध्वन्यते ॥ २९ ॥

वी ॥ इत्थं संस्तुतः शरण्यो भगवान् तमनुगृह्णन्नाह—त्रिशिर इति ॥ हे त्रिशिरः ते तुभ्यम् अहं प्रसन्नः,तव मज्ज्वराद्भयं व्येतु व्यपैतु,यः पुमानावयोरिमं संवादं स्मरति, तस्य त्वत् त्वत्तः भयं न भवेत् , तं त्वं मा भीषयेत्यर्थः ॥ ३० ॥

मु ॥ त्रिशिर इत्यादि ॥ मज्ज्वरात् भयनिवृत्तिमात्रमेव मया वरत्वेन न दत्तम्, किंतु नौ आवयोः संवादम् उक्तप्रकारमिमं यः स्मरति स्मरेत्, तस्य च त्वत् त्वत्तः भयं न भवेत् त्वत्कृतभयं न भवेदिति ॥ ३० ॥

वी ॥ इतीति ॥ आनम्य प्रणम्य योत्स्यन् योद्धुं जनार्दनं कृष्णं प्रागादभ्यापतत् ॥

मु ॥ इतीति ॥ अच्युतम् आनम्य प्रणम्य माहेश्वरः तत्प्रयुक्तो ज्वरः गतः, बाण इति—योत्स्यन् युद्धं करिष्यन् जनार्दनं प्रागात् प्राप ॥ ३१ ॥

वी ॥ ततइति ॥ नानाविधान्यायुधानि धरतीति तथा सोऽसुरो बाणः क्रुद्धो हे नृप चक्रायुधे कृष्णे परिघं मुमोच प्रायुङ्क्त ॥ ३२ ॥

मु ॥ अत्र मुमोचेति सकर्मकधातुप्रयोगसामर्थ्यात् नानायुधानामार्थिकं कर्मत्वं लभ्यते, चक्रायुधं प्रति आयुधानि मुमोचेत्यर्थः ॥ ३२ ॥

वी ॥ तस्येति ॥ अस्यतः क्षिपतः प्रयुञ्जानस्येति यावत्, तस्य बाणस्यास्त्राणि बाहूंश्च सकृद्युगपत् क्षुरस्येव नेमिर्यस्य तेन चक्रेण सुदर्शनेन चिच्छेद, वनस्पतेः वृक्षस्य

---

१. बाणश्चक्रायुधं. पा ॥ २. तस्यास्यतोऽस्त्राण्यसकृत् . मु. भा. प्र. पा ॥

चिच्छेद भगवान्बाहूञ्शाखामिव वनस्पतेः ॥ ३३

बाहुषु च्छिद्यमानेषु बाणस्य भगवान्भवः । भक्तानुकम्प्युपव्रज्य चक्रायुधमभाषत ॥ ३४

रुद्र उवाच—

त्वं हि ब्रह्म परं ज्योतिर्गूढं ब्रह्मणि वाङ्मये । यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥ ३५

नाभिर्नभोऽग्निर्मुखमम्बु रेतो द्यौः शीर्षमाशाः श्रुतिरङ्घ्रिरुर्वी ।

---

शाखा इव ॥ ३३ ॥

मु ॥ तस्येति ॥ असकृत् बहुवारम् अस्त्राणि अस्यतः क्षिपतः तस्य बाहून् चिच्छेद, क्षुरं रोमखण्डनसाधनं तद्वत् नेमिः अतिनिशितप्रधिः यस्य तेन चक्रेण, वनस्पतिः वृक्षः ॥ ३३ ॥

वी ॥ बाहुष्विति ॥ छिद्यमानेषु सत्सु भगवान्भवो रुद्रः भक्तानुकम्पी, हेतुगर्भमिदम्, तत्त्वादभाषत ॥ ३४ ॥

मु ॥ अथ सर्वज्ञनामा धूर्जटिः यावच्छक्ति शरणागतत्राणाकरणे प्रत्यवायं स्मरन् विक्रमेण तदशक्यस्थले तन्मनोरञ्जकवास्तवस्तुत्या वा तत्प्राणरक्षणं विधेयमिति मन्वानः समागत्यास्तौदित्याह—बाहुष्वित्यादिना ॥ भक्तानुकम्पी भक्तेषु करुणावान् तद्दुःखासहिष्णुरित्यर्थः, चक्रायुधम् उपव्रज्य अनुसृत्य अभाषत ॥ ३४ ॥

वी ॥ भाषणमेवाह—त्वं हीत्यादिभिर्द्वादशभिः ॥ केवलं वेदान्तैकवेद्यं योगपरिशुद्धमनोग्राह्यं त्वत्स्वरूपस्वभावादिकं कथमयं मूर्खो जानीयादित्यभिप्रयन् स्तौति—त्वंहीति॥ वाङ्मये ब्रह्मणि वेदे उपनिषदीति यावत्, गूढं यत्परं ब्रह्म तत् त्वम्, किं तद्ब्रह्मस्वरूपमत आह—ज्योतिरिति । स्वप्रकाशं ज्ञानस्वरूपमित्यर्थः,अमलात्मानः योगविशुद्धान्तःकरणाः यं पश्यन्ति स त्वमिति सम्बन्धः, अथ शरण्यत्वोपयुक्तकल्याणगुणान्विवक्षुः तावद्दृष्टान्तमुखेन निर्दोषत्वमाह—आकाशमिव केवलं निरस्तनिखिलदोषम् ॥ ३५ ॥

मु ॥ तदाह—त्वंहीति ॥ हीति ऐककण्ठ्येन सर्ववेदान्तसमधिगम्यतया प्रसिद्धिर्द्योत्यते. त्वं ब्रह्म हि "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इत्यादिनिर्वचनस्मृत्यादिप्रतिपादितबृहत्त्वबृंहणत्वगुणयोगि च, "कारणं तु ध्येयः" इति सर्वमुमुक्षूपास्यपरतत्त्वं त्वमेवेत्यर्थः, ज्योतिः स्वयंप्रकाशं, यद्वा "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः सूर्यादिज्योतिषामपि प्रकाशकं परमज्योतिरित्यर्थः, वाङ्मये ब्रह्मणि उपनिषदि गूढं सर्ववेदान्तरहस्यार्थभूतमित्यर्थः, तर्हि न केऽपि तदनुभवशालिनो धन्यास्सन्ति किमित्यत्राह—यमिति । अमलात्मानः निर्मलधियः यं परब्रह्मशब्दाभिलप्यं परमात्मानम् आकाशमिव केवलं निर्दोषं पश्यन्ति--इति ॥ ३५ ॥

वी॥ नहि शरीरमात्मनोऽपि प्रियम्, अतस्त्वच्छरीरभूतकृत्स्नजगदन्तर्गतोऽयं मूर्खोऽपि तवानुकम्प्य एवेत्यभिप्रयन्विराड्रूपत्वेन स्तौति—नाभिरिति द्वाभ्याम् ॥ नभोऽग्न्यम्बुद्युदिक्पृथिव्यो यथाक्रमं तव नाभिमुखरेतश्शिरश्श्रोत्रपादाः, चन्द्रो मनइति कार्यकारणभावेन सामानाधिकरण्यं "चन्द्रमा मनसो जातः" इति श्रुतेः, भगवन्मानसात्प्रसूतस्य चन्द्रस्य सर्वदेहिमनोभिमानिदेवतात्वाच्च, एवं दृगर्क इत्यपि "चक्षोस्सूर्योऽजायत" इति श्रुतेः, दृगभिमानिदेवतात्वाच्च, यस्य तवेति सर्वत्र योज्यम्, अहं रुद्रः आत्मा

चन्द्रोमनोयस्यदृगर्कआत्मा अहंसमुद्रोजठरंभुजेन्द्रः ॥ ३६
रोमाणियस्यौषधयोऽम्बुवाहाःकेशाविरिञ्चोधिषणाविसर्गः।
प्रजापतिर्हृदयंयस्यधर्मस्सवैभवान्पुरुषोलोककल्पः ॥ ३७
तवावतारोऽयमकुण्ठधामन्धर्मस्य गुप्त्यैजगतोभवाय ।

---

अन्तःकरणभेदोऽहङ्कारः, अत्रापि पूर्ववदेव सामानाधिकरण्यं द्रष्टव्यम्, जठरं कुक्षिः, भुजात्मक इन्द्रः,इन्द्रादयस्तव भुजा इत्यर्थः,यच्छब्दानां'स वै भवान्'इत्यनेन सम्बन्धः॥

मु ॥ एवं परमयोगिध्यानगम्यं वेदान्तैकसमाधिगम्यं परब्रह्मभूतं भगवन्तं स्तुत्वा "जगत्सर्वं शरीरं ते" "ज्योतींषि विष्णुर्भुवनानि विष्णुः" इत्यादिप्रमाणोक्तं भगवतः सर्वशरीरकत्वमाह—नाभिरित्यादिना पुरुषो लोककल्पः इत्यन्तेन ॥ यस्य नभःप्रभृतयो नाभ्याद्यवयवाः,स भवान् लोककल्पः पुरुष इत्युत्तरेणान्वयः, नभो यस्य ते नाभिः नाभेः कारणात् नभोरूपं कार्यं जातमित्यर्थः, कार्यकारणभावेन सामानाधिकरण्यं द्रष्टव्यम्, "चन्द्रमा मनसो जातः।चक्षोस्सूर्यो अजायत" "नाभ्या आसीदन्तरिक्षम्। शीर्ष्णो द्यौस्समवर्तत" इत्यादिश्रुत्या कार्यकारणभावस्यैव प्रतिपादनात्, तदा 'चन्द्रो मनो यस्य दृगर्क आत्मा अहम्' इत्यस्यायमर्थः—यथा भगवन्मनःप्रसूतश्चन्द्रो देहिनां मनसोऽभिमानी, एवं भवदीयाहंकारप्रसूतो रुद्रो जगत्यहंकाराभिमानिदेवतेति, समुद्रोऽपि जठरं कुक्षिः, भुजेन्द इति—भुजो बाहुः इन्द्र इत्यर्थः, भुज इन्द्र इति प्रयोक्तव्ये भुजेन्द्र इति व्यक्त्यभाव आर्षः, इन्द्र इतीतरलोकपालानां भुज इतीतरभुजानां च उपलक्षणम्, इन्द्रादयश्चत्वारो लोकपालाः चत्वारो भुजा इत्यर्थः ॥ ३६ ॥

वी ॥ रोमाणीति ॥ ओषधयो यस्य रोमाणि, अम्बुवाहाः मेघाः केशाः, विरिञ्चो धिषणा बुद्धिः, प्रजापतिः विसर्गः मेढ्रम्, धर्मो हृदयम्, स वै भवान् इत्थं लोकैः कल्प्यते अवयवत्वेनेति लोककल्पः ॥ ३७ ॥

मु ॥ यस्य ओषधयो रोमाणि, अम्बुवाहाः मेघाः केशाः, विरिञ्चो धिषणा बुद्धितत्त्वमित्यर्थः, प्रजापतिः विसर्गः मेढ्रम्, अत्र विरिञ्चप्रजापत्योः प्रतिनियतकार्यभेदेन भेदो द्रष्टव्यः, यस्य च धर्मो हृदयम्, स वै भवान्, वै प्रसिद्धौ, एवं प्रसिद्धो भवानित्यर्थः, लोककल्पः पुरुषः लोकैः उक्तरीत्या अवयवभूतैः नभःप्रभृतिभिः कल्प्यते अवयवी कल्प्यत इति लोककल्प इति सकलचेतनाचेतनशरीरको भवानेक एव पुरुष इत्यर्थः ॥ ३७ ॥

वी ॥ नन्वेवमप्ययं दुरात्मा निग्राह्य एवेति चेत्—यद्यप्येवं तथाप्यधुना शरणं गतोऽनुग्राह्य एव, युक्तं चैतत् तवावतारस्य प्रपन्नलोकाभ्युदयहेतुत्वादित्यभिप्रयन्नाह—तवेति ॥ हे अकुण्ठधामन् धाम तेजः, स्वभाव इति यावत् अवतारदशायामप्यप्रच्युतसार्वज्ञ्यसर्वशक्त्यादिस्वभावेत्यर्थः, जगतः प्रपन्नलोकस्य भवायाभ्युदयाय अभवायेति वा च्छेदः, अभवाय भवप्रयुक्ततापत्रयनिवृत्तये इत्यर्थः, अनुग्राह्यश्चेत्तर्हि त्वमेवैनमनुगृह्णीष्वेत्यत आह—वयमिति । सर्वे वयं लोकपालास्तावत्त्वया सृष्टाः अनु ततः भाविताः पालिताः सप्त भुवनानि विभावयामः पालयामः, वयं त्वत्परतन्त्रा इति भावः ॥ ३८ ॥

वयंचसर्वेभवतानुभाविता विभावयामोभुवनानिसप्त ॥ ३८
त्वमेकआद्यःपुरुषोऽद्वितीयस्तुर्यस्स्वदृग्घेतुरहेतुरीशः ।

मु ॥ नन्वहमेवंविधश्चेत्—कथं मे देवकीपुत्रत्वमित्याशङ्कायां "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे" इति कृतप्रतिज्ञानुसारेण धर्मरक्षणाय जगदभ्युदयाय एवं कचिदवतार इत्याह—तवेति ॥ अकुण्ठधामन् देहानुबन्धहेतुकर्मभिरप्रच्युतस्वरूप प्रलयेऽपि निरुपद्रववैकुण्ठाख्यदिव्यलोकेति वा, अयं तव अवतारः धर्मस्य गुप्त्यै रक्षणाय च जगतः भवाय अभ्युदयाय च, न केवलमेतावदेव, किंत्वस्मदनुग्रहेण श्रेयोतिशयप्रदानार्थं चेत्याह—वयंचेति । सर्वे वयं लोकपालाः भवता अनुभाविताः संजातप्रभावास्सन्तः " नहि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" इत्युक्तेः, "अनुभावः प्रभावे च सतां च मतिनिश्चये" इति नैघण्टुकाः, सप्तापि भुवनानि विभावयामः पालयाम इति, यद्वा भावः संकल्पः तस्याभिप्रायविशेषत्वात्, अनुगतो भावः अनुभावः, स च मतिनिश्चयः, तद्विषयीकृताः अनुभाविताः एते एवंविधा भवन्त्विति संकल्पितास्सन्त इत्यर्थः ॥ ३८ ॥

वी ॥ आकशमिव केवलमिति निरस्तनिखिलदोषत्वमुक्तम्, विराट्छरीरकत्वोक्त्या सर्वान्तरात्मत्वं फलितम्, 'तवावतारोऽयम्' इत्यनेन निरुपाधिकरक्षकत्ववात्सल्यसौशील्यादिकमाविष्कृतम्, अथ परत्वोपयुक्तकारणत्वादिकमाह—त्वमेकइति ॥ त्वमस्य जगतो हेतुः कारणम्, किं चतुर्मुखादिवन्नेत्याह—अहेतुरिति । स्वयं कारणान्तररहितः किं निमित्तकारणं, नेत्याह—एक इति । अविभक्तनामरूपसूक्ष्मचिदचिद्विशिष्टत्वेनैकत्वव्यपदेशार्हः, आद्यः पुरुषः जगदुपादानकारणभूतपुरुषश्चेत्यर्थः, किमुपादानकारणमेव, नेत्याह—अद्वितीयइति । अधिष्ठात्रन्तररहितः निमित्तकारणं चेत्यर्थः, अत एव, प्रकृतिपुरुषविलक्षण इत्याह—स्वदृक् तुर्यश्चेति । स्वदृक् स्वयं प्रकाशज्ञानस्वरूपः, अनेन प्रकृतिवैलक्षण्यमुक्तं, जडत्वात्तस्याः, तुर्यः जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयसंबन्धरहितः, अनेन जीववैलक्षण्यमुक्तम्, 'आकाशमिव केवलम्' इत्यनेन 'तुर्यः' इत्यनेन च निर्विकारत्वमुक्तम्, एक आद्यः पुरुष इत्यनेन विकाराश्रयत्वरूपोपादानत्वम्, कथमेतदुभयं मिथोविरुद्धमेकस्मिन्नुपपद्यत इत्याशङ्क्य परिहरति—प्रतीयसइति । यद्यपीदं परस्परविरुद्धमथापि सर्वगुणप्रसिद्ध्यै सर्वेषां गुणानां स्वापृथक्सिद्धविशेषणानां प्रकृतिपुरुषादीनां प्रसिद्ध्यै देवमनुष्यत्वाद्याकारसिद्ध्यै स्वमायया आत्मीयसङ्कल्पेन यथाविकारं प्रकृतिपुरुषगतस्वरूपान्यथाभावस्वभावान्यथाभावरूपविकारानुगुणं प्रतीयसे तत्तदन्तरात्मतया तत्तन्नामरूपनिर्वाहकत्वेन प्रतीयसे, प्रमीयसे वेदान्तजन्यप्रमाविषयो भवसीत्यर्थः, अस्मिन्विषये वेदान्तानामेव प्रामाण्यमिति भावः ॥ ३९ ॥

मु ॥ ननु 'भवताऽनुभाविता विभावयामो भुवनानि सप्त च' इति कथमुच्यते, सर्वहेतूनामन्येषामपि महामहिम्नां विद्यमानत्वादित्यत्राह—त्वमिति ॥ एकः त्वमेव आद्यः पुरुषः सर्वशरीरकत्वेन सर्वाकारत्वेन च पुरुषसूक्तादिप्रतिपादित आद्यः पुरुषस्त्वमेक एवेत्यर्थः, अद्वितीयः समाभ्यधिकरहितः " न तत्समश्चाभ्यधिकश्च दृश्यते " इति

प्रतीयसेऽथापियथाविकारंस्वमाययासर्वगुणप्रसिद्धै ॥ ३९
यथैवसूर्योऽपिहितस्स्वछाययाछायांचरूपाणिचसञ्चकास्ति ।

हि श्रूयते, स्तुत्यः स्तोतुमर्हः "यथा स्तुवन्ति राजानं धनवन्तं धनेच्छया । तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात्" इति तत्स्तुतेरेव बन्धनिवर्तकत्वोक्तेः स्वदृक् स्वप्रकाशज्ञानरूपः, यद्वा स्वेज्ञानानन्दमये स्वात्मनि दृक् धर्मभूतज्ञानं यस्य सः ज्ञानानन्दमयस्वस्वरूपानुभवपूर्ण इत्यर्थः, हेतुः जगज्जन्म स्थेमप्रलयरचनाकेलिरसिक इत्यर्थः, अहेतुः स्वस्यैव "जन्माद्यस्य यतः" इति सर्वकारणत्वात् जन्मादिरहितत्वात् स्वयं हेतुरहित इत्यर्थः, ईशः सर्वनियन्ता, नन्वहमेवंविधश्चेत् कथं कदाचित् क्वचिदुत्पत्तिमत्त्वमित्यत्राह—प्रतीयस इति । स्वमायया स्वस्य संकल्परूपज्ञानेन "माया तु वयुनं ज्ञानम्" इत्यभिधानात्, सर्वगुणानां सत्त्वादिगुणप्रचुरद्रव्याणां प्रसिद्धौ प्रकाशनाय यथाविकारं यद्द्रव्यं येन विकारेण यादृशं सत् परिणमते तत्सर्वं तथा प्रतीयसे प्रतीतो भवसीत्यर्थः, अन्तः प्रविश्य तत्तद्वस्तुपरिणामहेतुस्सन् प्रतीयस इति भावः, "तदनु प्रविश्य सच्च त्यच्चाभवत्" इति हि श्रूयते, "अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरणवाणि" इतिच श्रुतिः, यद्वा 'त्वमेकः' इत्याद्युक्तप्रकारोऽपि त्वं सर्वगुणानां जगतोऽनिष्टनिवारणेष्टप्रापणहेतुभूतशौर्यवीर्यशक्तिदयावात्सल्यादीनां प्रसिद्धौ तत्कीर्तनादिना सर्वचेतनानामुत्ताराय प्रतिकूलशिक्षणानुकूलरक्षणादिना तत्प्रकाशनार्थमित्यर्थः, यथाविकारं प्रतीयसे स्वसृष्टस्य जगतो यथा मदोद्धतैः पापिष्ठैः कृतेन उपप्लवेन धर्मविपर्ययादिविकारो जायते तमनतिक्रम्यैव तन्निवर्तनार्थं स्वसंकल्पवशादेव रामकृष्णादिरूपेणाविर्भवसि, न तु जीववत् स्वकृतकर्मफलभोगार्थम्, ततः न पाञ्चभौतिकदेहपरिग्रहरूपोत्पत्तिरित्यर्थः ॥ ३९ ॥

वी ॥ 'सर्वगुण'इत्यनेन प्रकृतिसंबन्धस्सूचितः, तर्हि जीवस्येव प्रकृत्या तिरोहितस्य यथाविकारमन्तरात्मतया प्रकाशो न स्यादित्याशङ्कां दृष्टान्तेन निराकरोति—यथैवेति ॥ अपिहित इति च्छेदः, दार्ष्टान्तिके गुणेनापिहित इति दर्शनात्, अन्यथोपध्मानीयप्रसङ्गाच्च, अपिहित इति नञ्समासः, न तु "वष्टि भागुरिः" इति वचनविहिताकारलोपाभावपक्षे रूपम्, स्वया स्वप्रकाश्यया छायया मेघादिरूपया अपिहितोऽतिरोहितस्वरूपस्वभाव एव सन् नहि मेघादिनासूर्यतत्प्रभयोस्तिरोधिः मेघादीन्भित्त्वा तदन्तर्बहिश्च प्रसरणात्, अन्यथा तद्व्यवहितरूपाग्रहणप्रसङ्गात्, यथैवंभूतस्सूर्यः छायां मेघादीन् रूपाणि तद्व्यवहितानि रूपाणि च, संचकास्ति सम्यक्प्रकाशयति, एवं हे भूमन् गुणेन सत्त्वादिगुणेन गुणमयप्रकृत्येति यावत्, अपिहितः अतिरोहितस्वरूपस्वभाव एव त्वं गुणान् प्रकृतितत्कार्यगतधर्मान् गुणिनः प्रकृत्यादींश्च प्रकाशयसि,आत्मप्रदीपः स्वप्रकाशश्च, यद्यपि दृष्टान्ते छायासूर्ययोर्न संबन्धः, मिथस्तयोः विप्रकृष्टत्वात्, दार्ष्टान्तिके त्वपृथक्सिद्धविशेषणविशेष्यभावस्संबन्ध इति दृष्टान्तो विषमः, तथाऽपि विप्रकृष्टस्येवापृथक्सिद्धाया अपि प्रकृतेरतिरोधायकत्वमन्यप्रकाश्यत्वं तिरोधानप्रतीतेर्भ्रमरूपत्वं चेत्येतदेव दृष्टान्ताभिप्रेतम् ॥ ४० ॥

मु ॥ उक्तार्थस्थेम्ने तस्य सत्त्वादिगुणराहित्यं सर्ववस्तुप्रकाशकत्वं च सदृष्टान्तमाह—यथैवेति ॥ सूर्यः स्वच्छायया स्वस्य च्छायया अनातपेन "छाया त्वनातपे कान्तौ"

एवं गुणेनापिहितोगुणांस्त्वमात्मप्रदीपोगुणिनश्चभूमन् ॥ ४०

यन्मायामोहितधियःपुत्रदारगृहादिषु।उन्मज्जन्तिनिमज्जन्तिप्रसक्ताव्रृजिनार्णवे॥४१

देवदत्तमिमंलब्ध्वानृलोकमजितेन्द्रियः ।

इति नैघण्टुकाः, स्वकीयरश्मिनिवारणप्रभवत्वाच्छायायाः स्वकयीत्वोक्तिः, तया पिहितः आच्छादितो न भवतीत्यपिहितः सन्नेव च्छायां संचकास्ति प्रकाशयति नैशतमसि स्थाण्वादिच्छायाया अदर्शनात् सूर्यालोक एव तत्प्रकाशनाच्च च्छायाया आदित्यप्रकाश्यत्वमित्यभिप्रायः, हे भूमन् विभुस्वरूप आत्मप्रदीपः स्वयंप्रकाशस्त्वम् एवम् उक्तदृष्टान्तप्रकारेणैव गुणेन सत्त्वादिना अपिहितः अनाच्छादितस्सन्नेव गुणिनः पृथिव्यादीन् प्रकाशयसीत्यर्थः ॥ ४० ॥

वी ॥ न केवलमयमेवाज्ञः, किन्तु सर्वेऽपि त्वन्मायामोहितत्वादित्यभिप्रयन्नाह— यन्मायेति॥ यस्य तव मायया मोहिता धीर्येषां ते पुत्रादिषु सक्ताः वृजिनार्णवे दुःखार्णवे उन्मज्जन्ति उत्प्लवन्ते, पुनर्निमज्जन्तिच ॥ ४१ ॥

मु ॥ अथैवंविधमत्यन्तसौलभ्यवात्सल्याद्यनन्तसद्गुणनिधिं त्वामनादृत्य संसृतिभोगपरवशानां दौर्भाग्यं किं वक्तव्यमित्याह त्रयेण—यन्मायेत्यादि ॥ पुत्रदारगृहादिषु यन्मायया मोहितधियः यस्य भगवतो मायया जगन्निर्माणपरिकरभूतत्रिगुणात्मकप्रकृत्या मोहितधियः मोहं प्रापितबुद्धयः अत एव वृजिनार्णवे दुःखसागरे निमज्जन्ति उन्मज्जन्ति च, स्थावरादियोनिषु कदाचिदप्यल्पस्यापि सुखस्याभावात् निमज्जनं देवादिजङ्गमयोनिषु कदाचिदतिक्षुद्रसुखसद्भावादुन्मज्जनं चेति विवेकः, अत्र निदानमाह—प्रसक्ता इति । वृजिनार्णवे पापसागरे प्रसक्ताः प्रकर्षेण सक्ता इति, यद्वा मनुष्ययोनिषु जातस्य कदाचित्सत्सङ्गादिवशात् तत्त्वज्ञानसंभवेन सुगतिसंभवादुन्मज्जनं चेति बोद्धयम् ॥ ४१ ॥

वी ॥ ननु मोहयन् वृजिनार्णवे पातयंश्चाहं किं निर्घृणः? नेत्याह—देवदत्तमिति॥ देवेन निरवधिककृपावता त्वया दत्तं त्वदाराधनोपयुक्तं त्वन्मायातरणसाधनंच इमं मनुष्यदेहं लब्ध्वापि अजितेन्द्रियः इन्द्रियपरवशस्सन् यः पुमान् त्वच्चरणौ नाद्रियेत न सेवेत स शोच्यः 'अहो किमस्य दौर्भाग्यम् 'इत्येवं शोचनीयः, कुतः?हि यस्मात् अयमात्मवञ्चकः आत्मापहरी, ' योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा " इति वचनार्थोऽत्रानुसन्धेयः, स्वदोषेणैव स्वयं दुःख्यतीति न तव दोषप्रसङ्ग इति भावः॥ ४२ ॥

मु ॥☞ अथ सकलफलसाधनभूतं मनुष्यदेहं लब्धाऽपि यः पुमान् अपवर्गसाधने सत्वरं न प्रवर्तते, तमिदानीं निन्दति—नृदेहमिति ॥ सुदुर्लभं बहुसुकृतविशेषैर्लब्धुमशक्यं सुकल्पम् उभयत्राप्यविकलाङ्गतया सुखसाधनं गुरुः ज्ञानप्रदानेनाज्ञाननिवर्तको देशिक एव कर्णधारो नाविको यस्य तं संसारसागरोत्तारकत्वात् गुरोः कर्णधारत्वरूपणम् , अनुकूलेन रक्षणाभिमुखेन त्वयैव अनुकूलेन नभस्वता वातेन ईरितं प्रेरितं दुष्टेन्द्रियाणां दुर्विषयाभिमुख्यनिवर्तनेन त्वत्प्राप्त्युपयोगितामापादनीयमित्यर्थः,नृदेहम् आसाद्य मानुषदेहं प्राप्यापि पुमान् भवाब्धिं न तरेच्चेत्, स आत्महा आत्महन्ता ॥

☞ १. एतद्व्याख्यानानुगुण मूलश्लोको विभावनीयः ॥

योनाद्रियेतत्वत्पादौसशोच्योह्यात्मवञ्चकः॥ ४२

यस्त्वांविसृजतेमर्त्यआत्मानं प्रियमीश्वरम् ।

विपर्ययेन्द्रियार्थार्थो[१]विषमित्यमृतंत्यजन् ॥ ४३

अहंब्रह्माचविबुधामुनयश्चामलाशयाः । सर्वात्मनाप्रपन्नास्त्वामात्मानंप्रेष्ठमीश्वरम्॥

तंत्वाजगत्स्थित्युदयान्तहेतुंसमंप्रशान्तंसुहृदात्मनायकम् ।

मु ॥ उक्तमेव भङ्ग्यन्तरेणाह—देवदत्तमिति ॥ हे देव दत्तं सुकृतपरिपाकविशेषेण सकलफलकारणतया दत्तमित्यर्थः, 'दैवदत्तम्'इति पाठे भाग्यलब्धमित्यर्थः, "दैवं दिष्टं भागधेयं भाग्यम्" इति नैघण्टुकाः, नृदेहं नरशरीरं 'नृलोकम्'इत्येव सम्यक्पाठः, नरशरीरमित्येवार्थः, लब्ध्वापि यः पुमान् अजितेन्द्रियः अवशीकृतेन्द्रियः इन्द्रियपरतन्त्रस्सन्नित्यर्थः, त्वत्पादौ नाद्रियते, आत्मानं वञ्चयति भ्रंशयतीत्यात्मवञ्चकः सः शोच्यः विवेकिभिः शोचनीय इत्यर्थः ॥ ४२ ॥

वी ॥ इतोऽपि शोच्य इत्याह—यस्त्वामिति॥ स्वयं मरणशीलस्सन् आत्मानं प्रियमीश्वरं च त्वां विसृजते त्यजति न सेवते, किंतु विपर्ययेषु अनात्मस्वप्रियेष्वनीश्वरेषु इन्द्रियार्थेषु शब्दादिषु आर्तः दीनः अमृतमपि त्वाम् अमृततुल्यां त्वत्सेवां वा विषबुद्ध्या त्यजन् आस्ते स शोच्य इति संबन्धः ॥ ४३ ॥

मु ॥ एवं शोच्यत्वे हेतुमाह—यस्त्वामिति ॥ यो मर्त्यः आत्मानं सर्वेषाम् अन्तःप्रविश्य धारकतया शास्तृतया च सर्वान्तरात्मानम् "अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा" इति हि श्रूयते प्रियम् आत्मवस्तुव्यतिरेकेण प्रियवस्त्वभावात् "सकलफलप्रदो हि विष्णुः" इति तस्यैव सकलेष्टफलप्रदातृत्वाच्चेति भावः, ईश्वरं सर्वनियन्तारं वशी सर्वस्येशानः"इति हि श्रूयते,त्वां विपर्ययाः विपरीताः इन्द्रियार्थाः शब्दादिविषयाः "सर्वस्यपुत्रदारादयश्च, तदर्थः शब्दादिविषयरूपक्षुद्रप्रयोजनायेत्यर्थः,विसृजते त्यजति, सः अमृतं त्यजन् विषम् अत्ति, स एतादृशो दुर्मतिरित्यर्थः ॥ ४३ ॥

वी ॥ यतस्त्वत्सेवाऽमृततुल्या, अत एव वयं त्वामेव प्रपन्ना इत्याह—अहमिति॥ अहं रुद्रः त्वामेवोक्तविधं सर्वभावेन उपायोपेयभावेन शरणं गताः ॥ ४४ ॥

मु ॥ तर्ह्येवं मत्वा मां को वा भजतीत्यत्राह—अहमिति ॥ आत्मानं प्रेष्ठमीश्वरमिति पदत्रयेण सर्वान्तर्यामित्वं सर्वेश्वरत्वं सर्वेषां प्रियतमवस्तुत्वं च भगवतः प्रतिपाद्यते, सर्वात्मना करणत्रयेण त्वां प्रपन्ना इति ॥ ४४ ॥

वी॥न केवलमात्मत्वानुगुणगुणमात्रयुक्तमेव त्वां प्रपन्नाः, किन्तु शरण्यत्वोपयुक्तासङ्ख्येयगुणान्तरयुक्तं चेत्यभिप्रयन्नाह—तमिति ॥ हे देव तमुक्तविधं किंच जगदुत्पत्तिस्थितिकारणं समं वैषम्यरहितं प्रशान्तमूर्मिषट्ककरहितं भजतामपि शान्त्यावहं च सुहृच्चासावात्मनायकश्च तम् अनन्यं स्वतुल्यसेव्यान्तररहितम् एकं स्वाधिकप्रपदनीयान्तररहितम् आत्मकेतम् आत्मनाम् अस्माकं केतम् आश्रयमाधारमिति यावत्, आत्मैव केतं यस्य तमिति वा, "स्वे महिम्नि प्रतिष्ठितः" इति श्रुतेः, भवाभ्युदयायैहिकसुखाय अपवर्गाय मोक्षाय च भजामः ॥ ४५ ॥

१. विषमत्त्य. मु. भा. प्र. पा ॥

अनन्यमेकं[1]जगदात्मकेतं भवापवर्गायभजाम देव ॥ ४५

अयंममेष्टोदयितोऽनुवर्तीमयाऽभयंदत्तममुष्यदेव ।
सम्पाद्यतां तद्भवतः प्रसादो यथाहि ते दैत्यपतौ प्रसादः ॥ ४६

श्रीभगवानुवाच—

यदात्थभगवंस्त्वन्नःकरवामप्रियंतव ।[2]भवतोयद्व्यवसितंतन्मेसाध्वनुमोदितम् ॥४७

मु ॥ अथ सर्वकारणत्वभूषितसर्वप्राप्यत्वौपयिकभगवद्गुणानुसन्धानपूर्वकं तमभजतेत्याह—तमिति ॥ तं त्वा 'आत्मानं प्रियमीश्वरम्' इति च जगत्स्थित्यादिना च उक्तप्रकारमित्यर्थः, जगत्स्थित्युदयान्तहेतुं जगतामुत्पत्तिस्थितिलयकारणं समं सर्वचेतनानां स्वस्वकृतकर्मानुगुणफलभाक्त्वेन क्वचिदपि तस्य वैषम्यनैर्घृण्याभावात् सर्वसमं, तदुक्तं भगवतैव "समोऽहं सर्वभूतेषु" इति,प्रशान्तं सर्वाश्रयणसौकर्यापादकं चित्तप्रशान्तिशीतलमित्यर्थः,सुहृदात्मदैवं सुहृदं-सर्वभूतसुहृदं सर्वात्मनां भाग्यरूपं चेत्यर्थः,न विद्यते अन्यः अधिकस्समो यस्य तम् अनन्यं निस्समाभ्यधिकमित्यर्थः,एवं सर्वचेतनानां तत्तत्कर्मानुगुणफलप्रदाने स्वयमेक एवेत्यर्थः,जगतामात्मा धारकतया प्रेरकतया च वर्तमानोऽन्तरात्मा स चासौ केवल एकश्च तं त्वां भवापवर्गाय संसारोच्छित्त्यै हे देव भजामेति, 'जगदात्मकेतम्'इति सम्यक् पाठः, एवं च एकादशाक्षरैतद्वृत्तानुगुण्यं च, तदर्थस्तु – जगताम् आत्मनां चेतनानां च केतं निकेतं कुक्षिस्थाखिलभुवनामित्यर्थः, जगदात्मानः केतो निकेतो निवासो यस्येति वा, एवं च अस्य शब्दस्य भगवति नारायणशब्दवत् वृत्तिर्बोध्या ॥ ४५ ॥

वी ॥ प्रकृतं विज्ञापयति—अयमिति॥ अयं बाणः मे त्वां प्रपन्नस्य मम इष्टो भक्तः, अनेन "मम मद्भक्तभक्तेषु प्रीतिरभ्यधिका भवेत्" इति भगवद्वचनं स्मारितम्,अत एव दयितः प्रियः अनुवर्तत इति, तथाच हे देव अमुष्य बाणस्य मया अभयं दत्तम् , किमत इत्यत आह—तन्मया दत्तमभयं संपाद्यतां सफलीक्रियताम्,अयमेव भवतोऽनुग्रहः, यथाहि ते त्वया दैत्यपतौ प्रह्लादे प्रसादः कृत इति शेषः, त्वद्वंशजं न हनिष्यामीति प्रह्लादमनुगृहीतवानित्यर्थः ॥ ४६ ॥

मु ॥ एवं भगवति भक्तिमाशास्य तद्भक्तिफलत्वेन स्वाभीष्टमाशास्ते—अयमिति ॥ हे देव अयं बाणः अनुवर्ती मदनुवर्तनशीलः इष्टो दयितः प्रियतम इत्यर्थः. अत एव अमुष्य अमुष्मै मया अभयं दत्तम् , तर्हि किं कर्तव्यमित्यत आह—संपाद्यतामिति।तत्तस्मात्करणात्ते दैत्यपतौ-प्रह्लादे यथाहि प्रसादोऽनुग्रह आसीदिति शेषः, भवतः प्रसादः संपाद्यताम् अस्मिन् तथा क्रियतामित्यर्थः ॥ ४६ ॥

वी ॥ इत्थं संस्तुतः प्रसन्नः प्राह भगवान्—यदात्थेति॥हे भगवन् रुद्र नः अस्मान्प्रति यदात्थ अवोचः यच्च तव प्रियं तत्करवाम, यद्वा यत्तव प्रियं तन्नोऽस्माकमपि, अतस्तत्करवाम भवता यन्निश्चितमेतत्प्राणसंरक्षणात्मकं तन्मयाऽप्यनुमोदितम् ॥ ४७ ॥

मु ॥ अथ भगवतोक्तमनुवदन्नाह—यदात्थेति॥ हे भगवन् सर्वज्ञ यत् आत्थ अवोचः, तव यत् प्रियम् इष्टम् . नः प्रियं तत् करवामेत्यन्वयः, भवता यत् व्यवसितं कर्तुमुद्युक्तम् , तदेव मे मया साधु सम्यगित्यनुमोदितं सन्तोषितम् साधु यथा तथा

१. जगदात्मकेवलम् . मु. भा. प्र. पा ॥ २. भवता. मु. भा. प्र. पा ॥

अवध्योऽयंमयाऽप्येषवैरोचनसुतोऽसुरः । प्रह्लादायवरोदत्तोनवध्योमेतवान्वयः ॥
दर्पोपशमनायास्यप्रवृक्णाबाहवोमया। [1]नाशितंचबलंभूरियच्चभारायितंभुवः॥ ४९
चत्वारोऽस्यभुजाश्शिष्टाभविष्यत्यजरामरः ।
[2]पार्षदमुख्योभवतोनकुतश्चिद्भयोऽसुरः ॥ ५०
इतिलब्ध्वाऽभयंकृष्णंप्रणम्यशिरसाऽसुरः ।
प्राद्युम्निंरथमारोप्यसहवध्वासमानयत् ॥ ५१

---

अनुमोदितमिति वा, 'भवतो यद्व्यवसितम्' इति पाठे यत् भवतो व्यवसितं निश्चयः, तदेव मे मया अनुमोदितमित्यर्थः ॥ ४७ ॥

वी ॥ वैरोचनसुत इति हेतुगर्भम् तत्त्वादवध्यः, तत्रापि हेत्वन्तरमाह—प्रह्लादायेति । अन्वयः वंशजः ॥ ४८ ॥

मु ॥ तस्यावध्यत्वे हेतुमाह—अवध्योऽयमिति ॥ वैरोचनो बलिः मद्भक्त इत्यर्थः, तत्सुतोऽयमसुरो बाणः, ममाप्यवध्य इत्यन्वयः, उक्तमेव स्फुटमाह—प्रह्लादायेति। तव-अन्वयः मे अवध्य इति प्रह्लादाय वरो दत्त इत्यन्वयः ॥ ४८ ॥

वी ॥ तर्हि किमर्थं बाहूनच्छिनस्तत्राह—दर्पइति॥ प्रवृक्णाश्छिन्नाः, किमर्थं? बहुसैन्यं हतवानसीत्यत आह—नाशितमिति। भूभारापनयनार्थमिति भावः ॥ ४९ ॥

मु ॥ तर्हि किमित्येवं कृतमित्यत आह—दर्पेति ॥ दर्पोपशमनाय गर्वौद्धत्यनिवारणायैव अस्य बाहवो मया वृक्णाः छिन्नाः, "छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्" इत्यमरः, यच्च अस्य भूरि बलं भुवो भारायितम् अतिभारभूतम् अभवत् तच्च बलं सादितं क्षीणं कृतम् ॥ ४९ ॥

वी ॥ रुद्रमुखेन बाणमनुगृह्णाति—चत्वारइति॥ अस्य बाणस्य चत्वारः भुजाः शिष्टाः आज्ञप्ताः अनुगृह्यावशेषिता इत्यर्थः, अयं जरामरणरहितः भविष्यति न कुतश्चिद्भयं यस्य तथाभूतश्च भविष्यतीति संबन्धः ॥ ५० ॥

मु ॥ तर्ह्ययं कथंभूतो भविष्यतीत्यत्रानुगृह्णन्नाह—चत्वार इति ॥ अजरामरः जरामरणरहितः, अस्य भुजाः चत्वार एव अवशिष्टा भविष्यन्ति, अयमप्यजरामरो भविष्यतीत्यर्थः; 'चत्वारोऽस्य भुजाश्शिष्टा भविष्यन्त्यजरामराः' इति पाठे तद्भुजानामजरामरत्वे तस्याप्यजरामरत्वं सिद्धमित्यभिप्रायः, नविद्यते कुतश्चिदपि भयं यस्य अकुतश्चिद्भयः असुरः भवतो हर्षमुख्योऽस्तु हर्षो मुख्यः प्रधानं यस्य सः भवन्मुखोल्लासकरणैकप्रयोजनो भवतु तथाऽनुगृह्यतामित्यर्थः ॥ ५० ॥

वी ॥ इतीति अभयमिति च्छेदः, वध्वा उषया सह प्राद्युम्निमनिरुद्धं समानयत् द्वारकां प्रापयामासेत्यर्थः ॥ ५१ ॥

मु ॥ ततः किमित्यत आह—इतीति ॥ अभयं लब्ध्वा इतः परं कस्माच्चिदपि भयाभावं वरत्वेन लब्ध्वेत्यर्थः, असुरः कृष्णं प्रणम्य प्राद्युम्निम् अनिरुद्धं वध्वा उषया सह रथम् आरोप्य रथे निवेश्य समानयत् आनीतवान् ॥ ५१ ॥

---

१. सादितं. मु. भा. प्र. पा ॥ २. हर्षमुख्यो. मु. भा. प्र. पा ॥

अक्षौहिण्यापरिवृतंसुवाससमलङ्कृतम्। सपत्नीकंपुरस्कृत्ययर्यौरुद्रानुमोदितः ॥ ५२
सराजधानींसमलङ्कृतांध्वजैस्सतोरणैरुक्षितमार्गचत्वराम् ।
विवेशशङ्खानकदुन्दुभिस्वनैरभ्युद्यतःपौरसुहृद्द्विजातिभिः ॥ ५३
यएवंकृष्णविजयंशङ्करेणचसंयुगम् । संस्मरेत्प्रातरुत्थायनतस्यस्यात्पराजयः॥ ५४
इति श्रीभागवते महापुराणे दशमस्कन्धे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

( नृगोपाख्यानम् )

श्रीशुक उवाच—
एकदोपवनंराजञ्जग्मुर्यदुकुमारकाः ।

---

वी ॥ तदेवाह—अक्षौहिण्येति॥शोभने वाससी यस्य तं पत्न्या सहितम् अनिरुद्धं पुरस्कृत्य पुरतो गमयन् रुद्रानुमोदितः स्वयमप्यनुययौ ॥ ५२ ॥

मु ॥ उक्तमेवार्थं भङ्ग्यन्तरेणाह—अक्षौहिण्येति॥ उक्तविशेषणविशिष्टम् अनिरुद्धं पुरस्कृत्येत्यर्थः, रुद्रानुमोदितः रुद्रेण पूर्वोक्तस्तुतिभिस्सन्तोषित इत्यर्थः, स कृष्णः राजधानीं विवेशेत्युत्तरेणान्वयः ॥ ५२ ॥

वी॥ सइति॥ स बाणः कृष्णो वा अन्यतरसहितोऽन्यतरो वा पौरादिभिरभ्युद्यतः, अभिमुखमागत्य सत्कृतः शङ्खादिध्वनिभिः, राजधानीं द्वारकां विवेश, कथंभूताम् ? उक्षिताः सिक्ताः मार्गाः वीथयः चत्वराण्यङ्गणानि च यस्यां ताम् ॥ ५३ ॥

मु ॥ तामेव विशिनष्टि—समलंकृताभित्यादिना ॥ सतोरणैर्ध्वजैरलंकृताम् उत्क्षिप्तचित्रध्वजरत्नतोरणालंकृतामित्यर्थः; उक्षितमार्गचत्वरां कस्तूरीमलयजद्रवस्नपितराजमार्गतत्तद्गृहाङ्कणां राजधानीं द्वारकां पौरैः सुहृद्भिः आप्तबन्धुभिः द्विजातिभिः ब्राह्मणैश्च अभ्युद्यतः अभिमुखमेत्य सत्कृतस्सन् शङ्खानाम् आनकानां पटहानां दुन्दुभीनां भेरीणां च स्वनैः सह विवेश ॥ ५३ ॥

वी ॥ उक्तकथासंस्मरणफलमाह—यइति ॥ यः पुमान् संस्मरेदिति श्रवणाख्यानादीनामप्युपलक्षणम्, तस्य स्मरतः पराजयो न स्यात् ॥ ५४ ॥

मु॥एवं भगवतो बाणासुरविजयरूपं चरित्रमुपवर्ण्य एतच्छ्रोतुस्तदनुगुणफलमाह—य एतदिति॥शङ्करेण संयुगं युद्धं तदनु कृष्णविजयं चेत्येतच्चरित्रमित्यर्थः, प्रातरुत्थाय यः संस्मरेत्, तस्य पराजयः कस्मादपि शात्रवात् अपजयो न स्यादिति ॥ ५४ ॥

इति भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

वी ॥ अथ दत्तापहारप्रयुक्तदुरितनिमित्तकृकलासजन्मनो नृगस्य तज्जन्मविमोचनात्मकं भगवच्चेष्टितमनुवर्णयति चतुष्षष्टितमेन एकदेत्यादिना ॥ तावदुपोद्घातमाह—हे राजन् साम्बादयो यदुकुमारकाः ॥ १ ॥

विहर्तुंसाम्बप्रद्युम्नचारुभानुगदादयः ॥ १

क्रीडित्वासुचिरंतत्रविचिन्वन्तःपिपासिताः। स्थितंनिरुदकेकूपेददृशुस्सत्त्वमद्भुतम्॥

कृकलासंगिरिनिभंवीक्ष्यविस्मितचेतसः। तस्यचोद्धरणेयत्नंचक्रुस्तेकृपयान्विताः॥

चार्मभिस्तान्तवैःपाशैर्बद्ध्वापतितमर्भकाः।

नाशक्नुवन्समुद्धर्तुंकृष्णायाचख्युरुत्सुकाः॥ ४

तत्रगत्वाऽरविन्दाक्षोभगवान्विश्वभावनः। वीक्ष्योज्जहारवामेनतंकरेणसलीलया॥

सउत्तमश्लोककराभिमृष्टोविहायसद्यःकृकलासरूपम्।

---

मु ॥ प ॥ न कदाचिदपि द्युह्येत्प्रमादादपि मानवः।

विप्रायोत्तर्तुकामश्चेदित्यत्राशिक्षि मैनिना ॥

एकदेत्यादि ॥ एकदा कदाचित् साम्बेत्याद्युक्ता यदुकुमारका विहर्तुम् उपवनं जग्मुः ॥

वी ॥ क्रीडित्वेति ॥ तत्रोपवने पिपासितास्तृषिताः जलमन्वेषन्तः क्वचिन्निरुदके निर्जले कूपे महदुन्नतम् अद्भुतं सत्त्वं जन्तुं ददृशुः ॥ २ ॥

मु ॥ तत्र वने सुचिरं क्रीडित्वा पिपासिताः तृषितास्सन्तः निरुदके उदकशून्ये कूपे अद्भुतम् आश्चर्यकरं सत्त्वं जन्तुं ददृशुः ॥ २ ॥

वी ॥ कृकलासं नाम गिरिनिभं गिरितुल्यं विस्मितं चेतो येषां ते तस्य कृकलासस्योद्धरणे निमित्ते यत्नं च चक्रुः ॥ ३ ॥

मु ॥ सत्त्वमिति सामान्येनोक्तं विशेषतो निरूपयन्नाह—कृकलासमिति ॥ गिरिनिभं पर्वताकृतिं कृकलासं सरटाख्यं जन्तुविशेषं वीक्ष्य विस्मितचेतसः अपूर्वतदाकृतिदर्शनादाश्चर्यरसाविष्टचित्तास्सन्तः तस्य च उद्धरणे बहिर्निस्सारणे यत्नं चक्रुः, कोऽयमेषां भार इत्यत्र हेतुमाह—कृपयाऽन्विता इति ॥ ३ ॥

वी ॥ चार्मभिरिति॥ चर्ममयैस्तन्तुमयैश्च पाशैः रज्जुभिः बद्ध्वा पतितं तमुद्धर्तुं न प्रबभूवुः ॥ ४ ॥

मु ॥ चार्मभिः चर्ममयैः तान्तवैः तन्तुमयैश्च पाशैः रज्जुभिः पतितं कूपे पतितं बद्ध्वा समुद्धर्तुं कूपान्निर्गमयितुं नाशक्नुवन् शक्ता न बभूवुः,किंतु अर्भकास्ते कृष्णाय आचख्युः विज्ञापयामासुः ॥ ४ ॥

वी ॥ तत्रेति॥ विश्वं भावयति अभ्यधिकं करोतीति तथा वामेन करेण लीलयैव तमुज्जहार बहिर्निष्कासितवान् ॥ ५ ॥

मु ॥ तत्रेत्यादि ॥ अरविन्दाक्ष इति शीतलकटाक्षेण आपदभितप्तजनाह्लादकत्वं भगवानिति दीनापन्निस्तारणोचितज्ञानशक्त्यादिसंपन्नत्वं विश्वभावन इति सर्वदा सर्वभूतयोगक्षेमपरामर्शकत्वं चोच्यते,स कृष्णः तं वीक्ष्य वामेन करेणैव उज्जहार उद्धृतवान्, अत एव लीलयेत्युक्तिः ॥ ५ ॥

वी ॥ सइति॥ स उद्धृतः उत्तमश्लोकस्य करेणाभिमृष्ट इति हेतुगर्भमिदम्, सन्तप्तं चामीकरं सुवर्णं तद्वद्वर्णो यस्य,सः अद्भुता अलङ्करणादयो यस्य सः स्वर्गी देवो बभूव ॥

सन्तप्तचामीकरचारुवर्णस्स्वर्ग्यद्भुतालङ्करणाम्बरस्रक् ॥ ६

पप्रच्छविद्वानपितस्यदानंजनेषुविख्यापयितुंमुकुन्दः ।

कस्त्वंमहाभागवरेण्यरूपोदेवोत्तमंत्वांगणयामनूनम् ॥ ७

दशामिमांवाकतमेनकर्मणासंप्रापितोह्यतदर्हः [१]सुदीप्तिः ।

आत्मानमाख्याहिविवित्सतांनोयन्मन्यसेनःक्षममत्रवक्तुम् ॥ ८

श्रीशुक उवाच ॥

इतिस्मराजासंपृष्टःकृष्णेनानन्दमूर्तिना। [२]मानुषःप्रणिपत्याहकिरीटेनार्कवर्चसा॥ ९

मु ॥ ततोऽसौ कीदृशोऽभूदित्यत्राह—स इति ॥ उत्तमश्लोकस्य श्रीकृष्णस्य करेण अभिमृष्टः स्पृष्टः अद्भुतानि अलंकरणानि भूषणानि यस्य सः, संतप्तचामीकरेति पदेन स्वाभाविकस्तद्देहवर्ण उक्तः, सद्यः कृकलासदेहं विहायेति शापनिवृत्तिरुक्ता, उत्तमः स्मरणात् अभिवदनाच्च सर्वपापनिवर्तकत्वाच्च उत्कृष्टतमः श्लोको यशो वा तच्चरित्रप्रतिपादकगद्यपद्यात्मककाव्यपुराणादिप्रपञ्चो वा यस्येत्युत्तमश्लोकः श्रीकृष्णः "पद्ये यशसि च श्लोकः" इति निघण्टुः, तस्य करेण अभिमृष्ट इति तच्छापनिवृत्तिहेतूक्तिः, स्वर्गी देवो बभूव ॥ ६ ॥

वी ॥ पप्रच्छेति ॥ तस्य कृकलासस्य जन्मनो निदानं कारणं जानन्नपि मुकुन्दः तज्जनेषु ख्यापयितुं प्रसिद्धीकर्तुं पप्रच्छ, प्रश्नमेवाह—कस्त्वमिति। हे महाभाग वयं तु त्वां देवोत्तमं देवश्रेष्ठं गणयाम ॥ ७ ॥

मु॥ ननु सर्वज्ञस्य भगवतः कथमज्ञस्येव तत्तद्वृत्तान्तप्रश्न इत्यत आह—विद्वानपीति॥ सर्वज्ञोऽपीत्यर्थः, तस्य निदानं जनेषु विख्यापयितुं प्रकटयितुं पप्रच्छेति, हे महाभाग वरेण्यरूपः सर्वजनस्पृहणीयाकारस्त्वं क इति सामान्यप्रश्नः, स्वनिश्चयमाह—देवोत्तममिति । नूनमित्यर्थनिश्चये, त्वां देवोत्तमं गणयाम तर्कयामः ॥ ७ ॥

वी ॥ कतमेन केन वा कर्मणा इमां कृकलासत्वरूपां दशाम् अवस्थां प्रापितोऽसि, तत्र हेतुः—अतदर्हः एतदवस्थानर्हः शोभना दीप्तिर्यस्य सः, आत्मानमिति । विवित्सतां वेत्तुमिच्छतां नोऽस्मभ्यमात्मानमाख्याहि, यत् यदि तद्वक्तुं क्षमं योग्यं तर्ह्याख्याहीति सम्बन्धः ॥ ८ ॥

मु ॥ कतमेन कर्मणा केन दुष्कर्मणा अतदर्हः एवंविधदुर्दशानर्हस्त्वम् इमां दशां कृकलासत्वावस्थां प्रापितः, अतदर्हत्वे हेतूक्तिः—सुभद्र इति । शुभाकारश्शुभचरितो वेत्यर्थः, हीति तादृशप्रसिद्धिद्योतने, अत्र वृत्तान्ते विवित्सतां ज्ञातुम् इच्छतां नः वक्तुं क्षमं योग्यमिति मन्यसे यत् मन्यसे यदि, आत्मानम् आख्याहि त्वत्स्वरूपं कथयेत्यर्थः॥

वी ॥ इतीति ॥ आनन्दमूर्तिना हृद्यमूर्तिना सम्पृष्टो राजा मानुष इति च पूर्वजन्माभिप्रायेणोक्तम्, अर्कस्येव वर्णो यस्य तत्तेन किरीटेन नमस्कृत्याह ॥ ९ ॥

मु ॥ इतीति ॥ आनन्दमूर्तिना हृद्यमूर्तिना कृष्णेन इति एवं सम्पृष्टः मानवः मनुवंशप्रभवः राजा अर्कवर्चसा किरीटेन प्रणिपत्य तादृशकिरीटभूषितेन शिरसा

१. सुभद्रः. मु. भा. प्र. पा ॥ २. मानवः. मु. भा. प्र. पा ॥

नृग उवाच—

नृगोनामनरेन्द्रोऽहमिक्ष्वाकुतनयःप्रभो ।
[१]दानेष्वाख्यायमानेषुयदितेकर्णमस्पृशम् ॥ १०
किंनुतेऽविदितंनाथसर्वभूतात्मसाक्षिणः ।
कालेनाव्याहतदृशोवक्ष्येऽथापितवाज्ञया ॥ ११
यावत्यस्सिकताभूमौयावत्योदिवितारकाः ।
यावत्योवर्षधाराश्चतावतीरददांस्मगाः ॥ १२
पयस्विनीस्तरुणीश्शीलरूपगुणोपपन्नाःकपिलाहेमशृङ्गाः ।

प्रणिपत्येत्यर्थः, आह स्वपूर्ववृत्तान्तं कथयामासेत्यर्थः ॥ ९ ॥

वी ॥ उक्तिमेवाह—नृगइत्यादिना इत्युक्त्वा तमित्यतः प्राक्तनेन ॥ अहं नृगो नाम नरेन्द्रः राजश्रेष्ठः हे प्रभो दानेष्वाख्यायमानेषु दानप्रशंसासु वक्तव्यास्वित्यर्थः, दानेषु दानशीलेषु वा यदि तव कर्णमस्पृशमित्यसन्देहे सन्देहवचनं"यदि वेदाः प्रमाणं स्युः" इतिवत्, कर्णपथं नूनं प्राप्तस्स्यामित्यर्थः ॥ १० ॥

मु ॥ हे प्रभो जगत्पते दानिष्विति ताच्छील्ये णिनिः, दानिषु भुवि दानशीलेषु राजसु आख्यायमानेषु सत्सु ते कर्णम् अस्पृशं यदीति लङुत्तमपुरुषैकवचनम्, त्वया श्रुतश्चेदित्यर्थः, अहम् इक्ष्वाकुतनयः नृगो नाम नरेन्द्रः राजा, सकलदुरितनिवर्तकप्रभावतया प्रभुत्वात् प्रभो इति हरेस्सम्बुद्धिः ॥ १० ॥

वी ॥ किञ्च किन्विति॥ ते त्वया न विदितं किन्तु विदितमेवेत्यर्थः, तत्र हेतुत्वेन विशिनष्टि—सर्वभूतानामात्मनो बुद्धेः साक्षिणः साक्षाद्द्रष्टुः कालेनाव्याहतमविप्लुता दृक् ज्ञानं यस्य तस्य अथापि यद्यप्येवं तथापि वक्ष्ये ॥ ११ ॥

मु ॥ अतः स्वातन्त्र्येण स्ववृत्तकथनदोषं परिहरन् आह—किं न्विति ॥ सर्वेषां भूतानाम् आत्मनो बुद्धेः स्वभावस्य वा साक्षिणः साक्षाद्द्रष्टुः कालेन सर्ववस्तुविकारहेतुनापि अव्याहतदृशः अविकारितनित्यज्ञानस्येत्यर्थः, ते अविदितम् अज्ञातं किं नु न किञ्चिदित्यर्थः, हे नाथ अथापि तथापि वक्ष्ये, एवमभिवदनेऽपि स्वस्वातन्त्र्यनिवृत्तिमभिप्रयन्नाह—तवाज्ञयेति ।एवं तवाज्ञया स्वपूर्वदानाद्युत्कर्षाख्याने स्वेनैव स्वकृतपुण्यकर्मप्रख्यापनं दोषाय न स्यादित्यभिप्रायः ॥ ११ ॥

वी ॥ यावत्यइति ॥ सिकतादयो यावत्यस्तावतीः धेनूः अददां दत्तवानस्मि, मया दत्तानां गवां सङ्ख्या न विद्यत इत्यर्थः ॥ १२ ॥

मु ॥ यावत्य इति ॥ तावतीर्गाः, अददामिति 'डुदाञ् दाने' इत्यस्माद्धातोः लङुत्तमपुरुषैकवचनम् ॥ १२ ॥

वी ॥ ता एव विशिनष्टि पयस्विनीरिति ॥ अत्र भूम्नि मत्वर्थीयः, शीलादिभिर्युक्ताः कपिलवर्णाः हेम स्वर्णालङ्कारः शृङ्गयोर्यासां ताः न्यायतस्सम्पादिताः रौप्यं रजतालङ्कारः खुरेषु यासां ताः वत्सैस्सहिताः दुकूलादीनां द्वन्द्वः, ततो मत्वर्थीयोऽच्, ददामि

१. दानि. मु. भा. प्र. पा ॥

न्यायार्जितारूप्यखुरास्सवत्साःदुकूलमाल्याभरणाददाम्यहम् ॥ १३

स्वलङ्कृतेभ्योगुणशीलवद्भ्यस्सीदत्कुटुम्बेभ्यऋतव्रतेभ्यः ।
तपश्श्रुतब्रह्मवदान्यसद्भ्यःप्रादांयुवभ्योद्विजपुङ्गवेभ्यः ॥ १४

गोभूहिरण्यायतनाश्वहस्तिनःकन्यास्सदासीस्तिलरूप्यशय्याः ।

---

अदामित्यर्थः ॥ १३ ॥

मु ॥ स्वदत्तानां गवां दानयोग्याकारमाह—पयस्विनीरित्यादिना ॥ शीलम् अनौद्धत्यम्, रूपं चक्षुरुत्सवप्रदाकारः, गुणः पुनर्वत्सान्तरप्रसूतिपर्यन्तमप्येकाकारेण बहुक्षीरप्रदत्वादि, एतैरुपपन्नाः, कपिलधेनुप्रदाने महाफलश्रवणात् कपिला इत्युक्तम्, अन्यायार्जितवस्तुदानस्य नैष्फल्यात् न्यायार्जिता इत्युक्तिः, अभूषितगोदाने फललाघवात् अवत्सादानेऽपि तथात्वात्—रौप्यखुरास्सवत्सा दुकूलमाल्याभरणा इति विशेषणोक्तिः ॥ १३ ॥

वी ॥ अथ सत्पात्राणि विशिनष्टि स्वलङ्कृतेभ्यइति ॥ सीदन् क्लिश्यन् कुटुम्बो येषां तेभ्यः ऋतव्रतेभ्यः अदम्भाचारेभ्यः तपसा श्रुताः प्रख्यातास्ते ब्रह्मणि वदान्याः ब्रह्मवादिनः ते च ते सन्तस्तेभ्यः'वदान्यवद्भ्यः' इति पाठे तपआदिविशिष्टेभ्यः एवंविधेभ्यो ब्राह्मणोत्तमेभ्योऽदाम् ॥ १४ ॥

मु ॥ एवं देयवस्तुस्वरूपस्वभावगुणानुक्त्वा सम्प्रति तत्प्रतिग्रहीतॄन् विशिनष्टि-स्वलंकृतेभ्य इत्यादिना ॥ स्वलंकृतेभ्यः सुष्ठु अलंकृतेभ्यः, प्रतिग्रहीतारं प्रथममलंकृत्य ततः तस्मै वस्तुदानस्य उत्कटफलकत्वादित्यर्थः, तथापि दुर्गुणेभ्यो दानस्य वैयर्थ्यादाह—गुणशीलवद्भ्य इति । गुणाः शमदमादयः, शीलं सद्वृत्तम्, तद्वद्भ्यः सीदन्तः असम्पन्नतया भर्तृपुत्रस्वदेहादिपोषणानुगुणवस्तुसामग्र्यभावात् आधिना कृशीभवन्तः कुटुम्बा येषां तेभ्यः, तथाप्यसत्यव्रतेभ्यो दानस्य नैष्फल्यादाह—ऋतव्रतेभ्य इति । ऋतं सत्यवचनमेव व्रतम् अनुष्ठेयसद्धर्माचारो येषां तेभ्य इति एवं प्रतिग्रहीतृविशेषणतया तत्तदुचितगुणानुक्त्वा पुनर्गुणैस्साकं विशेष्यं निर्दिशति—तपश्श्रुतब्रह्मवदान्यसद्भ्य इति।तपसा यमनियमादिना श्रुताः प्रख्याताश्च ते ब्रह्मणि वेदविषये वदान्याः अत्युदाराः उपाधिं विना अध्यापनशीलाश्च ते च ते सन्तश्च तेभ्य इति, यद्वा ब्रह्मवदान्यशब्दो भावप्राधान्येन निर्दिष्टः, तथा च ब्रह्मवदान्यता ब्रह्मोपदेष्टृत्वं परब्रह्मोपदेष्टृत्वमित्यर्थः;तपश्श्रुतब्रह्मवदान्यान्विता ये सन्तः, तेभ्य इति, तत्रापि विशेषमाह—युवभ्य इति । उक्तसद्गुणाधिकरणतायोग्यं विशेष्यमाह—द्विजपुङ्गवेभ्य इति । पुङ्गवशब्दः श्रेष्ठार्थवाचकः, "पुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः" इत्यभिधानात् ॥ १४ ॥

वी ॥ न केवलं गा एवादाम्, अन्यानपीत्याह—गोभिरिति ॥ पुनर्गोग्रहणमितरापेक्षया तद्भूयस्त्वाभिप्रायकम्, गवादीनामितरेतरयोगद्वन्द्वः; तत्रायतनानि गृहाः, दासीभिस्सहिताः कन्याः, तिलादीनां द्वन्द्वः, तत्र रूप्यं रजतम्, परिच्छदान् गृहोपकरणानि, न केवलं प्रादामेव, किन्तु यज्ञैरिष्टं च पूर्तं स्मार्तं कर्म चरितं कृतं च ॥ १५ ॥

वासांसिरत्नानिपरिच्छदान्रथानिष्टंचयज्ञैश्चरितंचपूर्तम् ॥ १५
कस्यचिद्द्विजमुख्यस्यभ्रष्टागौर्ममगोधने। संपृक्ताऽविदुषासाचमयादत्ताद्विजातये॥
तांनीयमानांतत्स्वामीदृष्ट्वोवाचममेतितम्। ममेति[1]प्रतिग्राह्याहनृगोमेदत्तवानिति॥१७
विप्रौविवदमानौमामूचतुस्स्वार्थसाधकौ। भवान्दाताऽपहर्तेतितच्छ्रुत्वामेऽभवद्भ्रमः॥
अनुनीतावुभौविप्रौधर्मकृच्छ्रंगतेनवै। गवांलक्षंप्रकृष्टानांदास्याम्येषाप्रदीयताम्॥१९

---

मु॥ तेभ्यो विशिष्य देयवस्तून्याह—गोभूहिरण्येत्यादिना ॥ आयतनानि सौख्यावहगृहाः, रूप्यं रजतम् ,परिच्छदाः छत्रचामरादयः,गृहोपकरणानि वा, रथांश्च अदामिति पूर्वेणान्वयः, किंच यज्ञैरिष्टं देवतोद्देशेन अग्नौ द्रव्यत्यागः क्रतुकर्माणि कृतानीत्यर्थः पूर्तं वापीकूपतटाकादिकं चरितं कृतं च ॥ १५ ॥

वी ।। एवं वर्तमानस्य मम किञ्चित्सङ्कटमापन्नं शृण्वित्याह—कस्यचिदिति ।। द्विजमुख्यस्य गां प्रतिगृहीतवतो गौर्भ्रष्टा बलात्तद्धस्ताद्विमोचिता सती मम गोधने सम्पृक्ता मिलिता,सा च अविदुषा पूर्वमेव कस्मैचिद्दत्तेत्येवमजानता मया द्विजातये अन्यस्मै ब्राह्मणाय दत्ता ।। १६ ।।

मु ॥ एवं स्वकृतपुण्यकर्माण्युक्त्वा स्वस्य दुर्जन्मप्राप्तिहेतुमाह—कस्यचिद्द्विजमुख्यस्येत्यारभ्य तावदद्राक्षमित्यन्तेन॥ गौः मया दत्तैवेत्यर्थः, नष्टा यत्रकुत्रचित् भ्रंशं गता सतीत्यर्थः, मम गोधने गोव्रज एव संपृक्ता मिलिता सती अविदुषा तदनभिज्ञेन मया द्विजातये अन्यस्मै विप्राय दत्ता ॥ १६ ॥

वी ॥ तामिति ॥ तामन्यस्मै दत्तां गां दृष्ट्वा तस्याः गोः स्वामी पूर्वप्रतिगृहीता तां गां मम मदीयेत्याह, प्रतिग्राही पश्चात्प्रतिग्रहीता मदीयैव अधुनैव मह्यं नृगो दत्तवानित्याह ॥ १७ ॥

मु ॥ नीयमानां तेन स्वगृहं प्रत्याकृष्यमाणां तां दृष्ट्वा तत्स्वामी ममेत्युवाच, अथ तां ममेति प्रतिगृह्य तद्ग्रीवारज्जुं गृहीत्वेत्यर्थः, नृगो मे दत्तवानित्याह ॥ १७ ॥

वी ॥ विप्राविति ॥ भवान् दाता ततोऽपहर्ता चेत्येवमूचतुः, यतस्तौ स्वार्थसाधकौ स्वार्थपरौ, अत एवमूचतुरित्यर्थः, तद्विप्रयोः वचश्श्रुत्वा ममापि भ्रमो जातः ॥

मु ॥ एवं विप्रौ विवदमानौ अन्योन्यविवादं कुर्वन्तौ सन्तौ स्वार्थसाधकौ तस्यामुभयस्यापि स्वार्थत्वभ्रमात्स्वार्थसाधकावित्युक्तम्, माम् ऊचतुः—भवान् दाता भवानेव अपहर्ता च इत्यवदताम्; तद्वचनं श्रुत्वा मे भ्रमोऽभवत्, बह्वीषु गोषु बहुभ्यो विप्रेभ्यो दीयमानासु अस्मै एवंविधैव मया दत्तेति प्रत्यभिज्ञानस्य दुर्लभत्वात् भ्रम इति भावः, ममैतत्कृतस्य बुद्धिपूर्वकत्वाभावात् अवश्यं क्षन्तव्य एवाहमित्याकूतम् ॥ १८॥

वी ॥ तदा धर्मकृच्छ्रं धर्मसङ्कटं प्राप्तेन मया अनुनीतौ उपच्छान्दितौ, अनुनयनप्रकारमेवाह गवामिति सार्धेन—प्रकृष्टानां श्रेष्ठानां गवां लक्षमन्यतरस्मै प्रदीयतां युवयोरन्यतरेणेत्यर्थः ॥ १९ ॥

मु ॥ किं च यथामनोरथं प्रतिप्रदानमपि करिष्यामीत्याह—गवामिति ॥ प्रकृष्टानां योग्यतमानां गवां लक्षं दास्यामि एतत्प्रतिनिधित्वेनेत्यर्थः, एषा प्रदीयताम् ॥ १९ ॥

---

१. प्रतिगृह्य ह. मु. भा. प्र. पा ॥

भवन्तावनुगृह्णीतांकिङ्करस्याविजानतः। [१]समुद्धरतमांकृच्छ्रात्पतन्तंनिरयेऽशुचौ॥
नाहंप्रतीच्छेवैराजन्नित्युक्त्वास्वाम्यपाक्रमत्।
नान्यद्गवामप्ययुतमिच्छामीत्यपरोययौ॥ २१
[२]ततश्चकालयोगेनमृतःपरममायया। देवदेववशान्नीतस्त्वद्वदामितवाग्रतः॥ २२
एतस्मिन्नन्तरेयाम्यैर्दूतैर्नीतोयमक्षयम्। यमेनपृष्टस्तत्राहंदेवदेवजगत्पते॥ २३
पूर्वंत्वमशुभंभुङ्क्षेउताहोनृपतेशुभम्।

---

वी॥ किञ्च—भवन्ताविति॥ किङ्करस्य मम कर्मणः शेषत्वविवक्षयेयं षष्ठी, किङ्करं मामनुगृह्णीतामित्यर्थः, तत्र हेतुत्वेन विशिनष्टि—अविजानतइति। कृच्छ्राद्धर्मसङ्कटादशुचौ निरये पतन्तं मां समुद्धरतेति पूजार्थं बहुवचनम्॥ २०॥

मु॥ भवन्तावनुगृह्णीतामिति॥ भवच्छब्दयोगात् प्रथमपुरुषद्विवचनम्, युवां मय्यनुग्रहं कुरुतमित्यर्थः, किंकरस्याविजानतइति कर्मणि षष्ठी, अविजानन्तं मां भवन्तावनुगृह्णीतामित्यर्थः, कृच्छ्रात् एतत्संकटात् हेतोः अशुचौ अशुद्धे निरये पतितं मां समुद्धरतामिति पूर्ववत् द्विवचनम्, निरये पतितं मां कृच्छ्रात् समुद्धरतामिति वा अन्वयः॥

वी॥ एवमुक्तयोस्तयोरन्यतरः गोस्वामी हेराजन् अहं गवां लक्षमपि न प्रतीच्छे न प्रतिगृह्णामि, किन्तु दत्तामेनामेव नयामीत्युक्त्वा अपाक्रमत् ययौ, तथा अपरोऽपि प्रतिग्राही दुराग्रहः यल्लक्षं त्वया प्रतिश्रुतम्, अन्यदपि गवामयुतं दत्तं यदि तथाप्येनां विहाय नेच्छामीत्युक्त्वा गां त्यक्त्वा ययावित्यर्थः॥ २१॥

मु॥ राज्यं वै राज्यमपि न प्रतीच्छे नापेक्षे न स्वीकरिष्यामीत्यर्थः, इत्युक्त्वा स्वामी अपाक्रमत् अपगतः, गवामयुतमपि नेच्छामीत्यपरो ययौ॥ २१॥

वी॥ ततइति॥ हे परम मायया परमस्य तव मायया वा हेतुभूतेन सङ्कल्पेन कालयोगेन निमित्तेन मृतः हेदेव दैववशाददृष्टवशाद्यत्र नीतस्तत्तवाग्रतो वदामि॥ २२॥

वी॥ एतस्मिन्निति॥ हे देवदेव जगत्पते एतस्मिन्नन्तरे इतः पूर्वं पापाभावान्नेतुमसमर्थैरिति भावः, यमसम्बन्धिभिः यमसदनं प्रापितः तत्र यमसदने यमेनाहं पृष्टश्च॥ २३॥

मु॥अथ शापहतस्य राज्ञो दुर्दशाक्रममाह—एतस्मिन्निति॥अन्तरे अवकाशे याम्यैः यमसंबन्धिभिः दूतैः यमक्षयं यमालयं नीतोऽहम्, तत्र यमालये यमेन पृष्टस्सन् अहं जगत्पते शुभाशुभकर्मानुगुणफलप्रदानेन जगत्पालक अत एव हे देवदेव देवेषु व्यवहारदक्षेत्यर्थः॥ २३॥

वी॥ प्रश्नमेवाह—पूर्वमिति॥ किं पूर्वं पापफलं भुङ्क्षे, उताहो किं शुभं पुण्यफलं भोक्ष्यसे, भवतो दानस्य यो लोकः लोक्यत इति लोकः फलं तस्य भास्वतः प्रकाशमानस्य उपस्थितस्येति यावत्, अन्तम् अवधिं न पश्यामि॥ २४॥

मु॥पूर्वं प्रथमतः त्वम् अशुभं पापफलं वा भुङ्क्षे, उताहो इत्येकं पदम्, अथवेत्यर्थः, शुभं पुण्यफलं वा भुङ्क्षे, दानस्य धर्मस्य दानरूपस्य धर्मस्य पुण्यकर्मण इत्यर्थः, यद्वा दा-

---

१. मांसमुद्धरतामिति. मु-भा-प्र-पा॥ २. अयं. मु. भा. प्रकाशिकाकारैर्न व्याख्यातः॥

नान्तंदानस्यभवतः[1]पश्येलोकस्यभास्वतः ॥ २४

पूर्वमेवाशुभंभुञ्जइतिप्राहपतेतिसः । तावदद्राक्षमात्मानंकृकलासंपतन्प्रभो ॥ २५

ब्रह्मण्यस्यवदान्यस्यतवदासस्यकेशव।स्मृतिर्नाद्यापिविध्वस्ताभवत्सन्दर्शनार्थिनः॥

सत्वंकथंममविभोऽक्षिगतःपरात्मायोगेश्वरैश्श्रुतिदृशाऽमलहृद्विभाव्यः ।

---

नस्य पूर्वोक्तगोदानस्य संबन्धी योऽयं धर्मः त्रिक्षणावस्थायिनां कर्मणां कालान्तरदेशान्तरभाविस्वर्गादिफलप्रदानायोगात् तज्जन्यफलप्राप्तिपर्यन्तावस्थायी तदुद्देश्यदेवतामुखोल्लासहेतुः तद्धृदयवर्तमानः कश्चित् संस्कारविशेष इत्यर्थः, तस्य अन्तम् एतावत्कर्मण एतावत्फलमिति परिच्छित्तिहेतुमवसानं न जानामीति शेषः, स्वोक्ते विश्वसनीयत्वमाह —पश्येति। तेषां लोकानामेतल्लोकवैलक्षण्यमाह—भास्वतइति । स्वयंप्रकाशरूपानित्यर्थः, लोकान्पश्येति ज्ञानविकाससंकोचकपाञ्चभौतिकदेहनिर्मुक्तस्य तादृग्दिव्यदृष्टिसंभवादियमुक्तिः, अत्रायमन्वयक्रमः—हे नृपते दानस्य धर्मस्य अन्तं न पश्यामि, भास्वतः लोकान् पश्य, पूर्वं त्वम् अशुभंवा भुङ्क्षे उताहो शुभं भुङ्क्षे—इति ॥ २४ ॥

वी ॥ पूर्वमेवाशुभं पापफलं भुञ्जे तस्याल्पीयस्त्वादिति भावः, इति मयोक्ते पत निरये इति शेषः, इतीत्थं स यमः मां प्राह, तावदिति। तावत्तदैव हे प्रभो पतन्नहमात्मानं कृकलासमद्राक्षं दृष्टवानस्मि ॥ २५ ॥

मु ॥ अशुभमेव भुञ्जे इति मयोक्ते सतीति शेषः, स यमः पतेति प्राह तर्हि त्वम् अधोलोके पतेति प्राहेति, ततः किम्? अत आह—तावदिति । हेप्रभो पतन् अधः पतन्नहमिति शेषः, तावत् तत्काल एव आत्मानं कृकलासम् अद्राक्षम् अपश्यम् ॥ २५॥

वी ॥ ब्रह्मण्यस्येति ॥ हे केशव ब्रह्मण्यस्येत्यादिविशेषणचतुष्टयं पूर्वजन्मस्मृत्यनपाये हेतुतयोपात्तम् ब्रह्मणि ब्राह्मणकुले साधुः ब्रह्मण्यः॥ २६ ॥

मु॥तर्हि इयं पूर्वस्मृतिः कुतस्तवेत्यत्राह—ब्रह्मण्यस्येति ॥ ब्राह्मणेषु साधोरित्यर्थः, ननु तदुचितवस्तुभिस्तत्प्रीणनाभावे शुष्कसाधुत्वमपि असमञ्जसमेवेत्यत आह—वदान्यस्येति । दानशौण्डस्येत्यर्थः, भगवद्दास्यासंभवे तदपि व्यर्थमेवेत्याशयवानाह—तवेति- स्वस्यौत्सुक्यातिशयं प्रकटयन्नाह—भवत्संदर्शनार्थिन इति । एतत्फलमाह—स्मृतिरिति । अद्यापि न विध्वस्ता न लुप्ता ॥ २६ ॥

वी ॥ अलभ्यलाभेनाधुना कृतार्थोऽभूवमित्याह—सत्वमिति ॥ हे विभो सः यस्याहं सन्दर्शनार्थी स त्वं कथं ममाक्षिगतः लोचनगोचरः, कथमित्यनेन दौर्लभ्यं सूचितम्, तत्र हेतुत्वेन विशिनष्टि—परमात्मा नहि परमात्मा केवलं मांसचक्षुषा-वीक्ष्य इति भावः, किञ्च योगेश्वरैः श्रुतिदृशा उपनिषच्चक्षुर्द्वारेण निर्मले हृदये विभाव्यः केवलं चिन्त्यः, यद्यप्येवमथापि हे अधोक्षज अभक्तेन्द्रियजन्यज्ञानाविषय यस्य भवापवर्गः संसारनाशस्तस्योरुणा व्यसनेनान्धा बुद्धिर्यस्य तथाभूतस्यापि शान्ते सति हृदये त्वं दृश्य एवेत्यर्थः ॥ २७ ॥

मु॥ अथ दुर्लभेन भगवत्संदर्शनेन विस्मितस्सन् आत्मनो भाग्यमहिमानमभिनन्दति —स त्वमिति ॥ योगिनः कालत्रयगतवस्तुसाक्षात्कारशक्तिमन्तः, तेषामपीश्वराः ततो

---

१. पश्य. मु. भा. प्र. पा ॥

साक्षादधोक्षजउरुव्यसनान्धबुद्धेश्शान्तेऽनुदृश्यइहपश्यभवापवर्गः ॥ २७
देवदेवजगन्नाथगोविन्दपुरुषोत्तम । नारायणहृषीकेशपुण्यश्लोकाच्युताव्यय॥ २८
अनुजानीहिमांकृष्णयातुंदेवगतिंप्रभो।यत्रक्वापिसतश्चेतोभूयान्मेत्वत्पदास्पदम्॥२९
नमस्तेसर्वभावायब्रह्मणेऽनन्तशक्तये ।

---

ऽपि सारज्ञतया श्रेष्ठतमाः, तैरपि श्रुतिदृशा उपनिषच्चक्षुषा द्वारेण अमले निर्मले हृदि विभाव्यः ध्येयः,तत्कथमित्यत आह—साक्षादधोक्षज इति।अधःकृतमक्षजम् ऐन्द्रियिकज्ञानं यस्मात् सः परमात्मा सः त्वं मम अक्षिगतः चक्षुर्गोचरस्सन् कथं साक्षात् कथं प्रत्यक्षोऽसीत्यर्थः,तर्हि कस्येत्यत आह—यस्येति। हे विभो यस्य भवापवर्गः संसारनाशः अव्यवहितः स्यादिति शेषः , तस्य पुंसः दृश्यः स्या॥ एव त्वम् , शान्ते हृदि दृश्यो भवसीत्यर्थः , अतो मम भाग्यस्येयत्ता दुर्विभाव्येति भावः ॥ २७ ॥

वी ॥ हर्षातिशयेन बहुधा सम्बोधयन् किञ्चित्प्रार्थयमानश्चानुज्ञां पृच्छति—देवदेवेतिद्वाभ्याम्॥ देवगतिं स्वर्गलोकं प्रति यातुं गन्तुमुद्यतं मामनुजानीहि आज्ञापय, यत्रक्वापि सतो वर्तमानस्य मम चेतः त्वत्पदास्पदं त्वत्पादारविन्दसंश्रयं भूयात्तथानुगृह्णीष्वेत्यर्थः ॥ २८ ॥ २९ ॥

मु ॥ अथ "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः" "कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति येवै त्यज भट दूरतरेण तानपापान् " इत्यादिषु तन्नामोच्चारणस्य सकलानिष्टनिवर्तनेष्टप्राप्तिहेतुत्वश्रवणात् तन्नामोच्चारणपूर्वकं स्वाभीष्टमाशास्ते-देवदेवेत्यादिना ॥ देवानां परिमितजगत्पालकानामिन्द्रादीनां देव स्वामिन् , तदाह—जगन्नाथेति। अविशेषितजगच्छब्दस्य अशेषलोकवाचकत्वात् सकलजगतामधीशेत्यर्थः,अथ स्मरणारूढतया सद्यस्समुच्चारणेन द्रौपद्यार्तिहरणशक्तिस्मरणात् गोविन्देत्युक्तिः , पुरुषशब्दवाच्येषु सर्वेष्वपि तस्यैवोत्तमत्वेन सर्वशास्त्रप्रसिद्धत्वात् पुरुषोत्तमेत्युक्तिः, नारशब्दार्थभूतचेतनाचेतनवर्गान्तर्बहिर्व्याप्तिमतो भगवतो मुख्यनामधेयतया नारायणेत्युक्तिः, हृषीकाणां सर्वेन्द्रियाणाम् ईश प्रेरकतया कर्तः पुण्यश्लोक पुण्ययशः पुण्यप्रचुरस्वगुणप्रतिपादकवाल्मीकिव्यासप्रमुखकविरचितपद्यप्रपञ्चेतिवा, अच्युत आश्रितसंरक्षणव्रतात् कदाचिदपि न च्युत , अव्यय स्वरूपतो गुणतश्च कदाचिदपि व्ययरहित ॥ २८ ॥

मु ॥ कृष्ण "कृषिर्भूवाचकश्शब्दो णश्चनिर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति श्रवणादानन्दस्वरूपेत्यर्थः, हे देव माम् अनुजानीहि अनुगृह्णीष्व, हे देव हे विभो गतिं संगतिं देहि, यद्वा देवानां "सदा पश्यन्ति सूरयः" इत्युक्तसूरीणां गतिं गम्यत इति गतिरिति व्युत्पत्त्या प्राप्यं धाम देहि,,अथ गतिर्याकापि वा स्यान्नाम, मनस्तु सर्वकालमपि त्वत्पादलग्नमेव भूयादिति प्रार्थयते—यत्रेति । यत्रक्वापि यस्मिन्कस्मिंश्चिद्देशेऽपि सर्वतो वर्तमानस्य मे चेतः त्वत्पदास्पदं त्वत्पादावलम्बनमेव भूयादिति ॥ २९ ॥

वी ॥ यास्यन्नमस्करोति—नमस्तइति ॥ ते तुभ्यं सर्वभावाय सर्वः भावः पदार्थो

कृष्णायवासुदेवाययोगानांपतयेनमः ॥ ३०
इत्युक्त्वातंपरिक्रम्यपादौस्पृष्ट्वास्वमौलिना।अनुज्ञातोविमानाग्र्यमारुहत्पश्यतांनृणाम्
कृष्णःपरिजनंप्राहभगवान्देवकीसुतः।ब्रह्मण्यदेवोधर्मात्माराजन्याननुशिक्षयन्॥३२
दुर्जरंबतब्रह्मस्वंभुक्तमग्नेर्मनागपि ।

---

यस्य शरीरत्वेनेति स तथा तस्मै तत्र हेतुः ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहत्त्वाय अनन्ताश्शक्तयः कार्योपयुक्तापृथक्सिद्धपुरुषकालसार्वज्ञसर्वशक्तित्वादयो यस्य तस्मै योगानां पतये निर्वाहकाय ॥ ३० ॥

मु ॥ इति स्वाभिलषितं प्रार्थ्य यास्यन्नमस्करोति—नमस्त इति ॥ सर्वस्य भावो भवनम् उत्पत्तिः यस्मात् तस्मै, यद्वा सर्वे पदार्थाः यस्य तस्मै सर्वपदार्थशरीरकायेत्यर्थः "यस्य पृथिवी शरीरम्" इत्यादिश्रुतेः, 'सर्वबोधाय' इति पाठे स्वरूपे कचिदपि जडत्वरहितायेत्यर्थः, ब्रह्मणे बृहत्त्वबृंहणत्वगुणयोगात् ब्रह्मशब्दाभिलप्याय, "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते" इति हि निरुक्तम्, अनन्तशक्तये अपरिच्छिन्नजगन्निर्माणाद्यनुगुणशक्तिमते वासुदेवाय "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। तस्मात्स वासुदेवेति विद्वद्भिः परिपठ्यते" इत्युक्तव्युत्पत्तिद्वयलब्धसर्वान्तर्यामित्वसर्वाधारत्वरूपानन्यसाधारणमहिम्न इत्यर्थः, किंच योगानाम् इष्टापूर्तादितत्तत्फलोपायानां, यद्वा योगाः ध्यातॄणां तत्तत्फलोद्देशप्रवृत्ता ध्यानविशेषाः, तेषां पतये पातीति पतिरिति व्युत्पत्त्या तत्तदनुगुणफलप्रदानेन रक्षकायेत्यर्थः, 'योगिनाम्' इति च पाठः, अर्थः स्पष्टः ॥ ३० ॥

वी ॥ इतीति ॥ स्वमौलिना स्वकिरीटेन विमानाग्र्यं विमानश्रेष्ठम् आरुरोह नृणां पश्यतां सताम् ॥ ३१ ॥

मु ॥ इतीति॥ तं परिक्रम्य प्रदक्षिणीकृत्य मौलिना पादौ स्पृष्ट्वा प्रणम्येत्यर्थः, अनुज्ञातः गच्छेत्यनुज्ञापितः नृणां पश्यतां सतां विमानाग्र्यं विमानश्रेष्ठम् आरुहत् अध्यतिष्ठत् ॥ ३१ ॥

वी ॥ कृष्णइति॥ ब्रह्मण्यदेवो धर्मात्मेति च हेतुगर्भम्,तत्त्वात्, राजन्याननुशिक्षयन्नित्यत्र "लक्षणहेत्वोः" इति शत्रादेशः, अनुशिक्षयितुमित्यर्थः, परिजनं परितो विद्यमानं प्रति प्राह ॥ ३२ ॥

मु ॥ अथ भगवांस्तच्छापविमुक्तिप्रसङ्गेन लोकशिक्षां करोतीत्याह—कृष्ण इत्यादिना॥ परिजनं प्राहेत्यनेन स्वपरिजनं व्याजीकृत्य ब्रह्मस्वहरणस्य सर्वपापेभ्योऽत्यतिक्रूरत्वं लोकायाख्यापयदिति स्फोर्यते, 'राजन्याननुशिक्षयन्' इत्यनेन प्रायशो यजनादिषट्कर्मसु क्षत्रियाणामेव दानप्राशस्त्यात् मुख्यतः तान् प्रति शिक्षा कार्येति प्रकाश्यते, 'भगवान्' इत्यारभ्य 'धर्मात्मा' इत्यन्तेन पदचतुष्टयेन क्रमात् कृष्णस्य ज्ञानादिषाड्गुण्यपूर्तिः सौलभ्यं ब्राह्मणवत्सलतया तदसाधारणदैवत्वं धर्मप्रवर्तनैकस्वभावत्वात् धर्मात्मकत्वं च ज्ञाप्यत इति ज्ञेयम् ॥ ३२ ॥

वी ॥ उक्तिमेवाह—दुर्जरमित्यादिनैतद्विश्राव्येत्यतः प्राक्तनेन॥ बतेत्याश्चर्ये, ब्रह्मस्वं मनागीषदपि भुक्तं सत् अग्नेरग्निसदृशस्य अतितेजस्विनोऽपि दुर्जरं दुःखेनापि न जीर्य-

तेजीयसोऽपिकिमुतराज्ञामीश्वरमानिनाम् ॥ ३३
नाहंहालाहलंमन्येविषंयस्यप्रतिक्रिया। ब्रह्मस्वंहिविषंप्रोक्तंनास्यप्रतिविधिर्भुवि॥३४
हिनस्तिविषमत्तारमग्निरद्भिःप्रशाम्यति । कुलंसमूलंदहतिब्रह्मस्वारणिपावकः ॥
ब्रह्मस्वंदुरनुज्ञातंभुक्तंहन्तित्रिपूरुषम् । प्रसह्यतुबलाद्भुक्तंदशपूर्वान्दशापरान् ॥ ३६
राजानोराज्यलक्ष्म्याचनात्मपातंप्रचक्षते ।

---

तीति तथा, किं वक्तव्यम् ईश्वरंमन्यानां राज्ञां दुर्जरमिति ॥ ३३ ॥

मु ॥ मनाक् ईषदपि दुर्जरं जीर्णतां नेतुमशक्यम्, ईश्वरमानिनाम् ईश्वरा वयमेवेत्यभिमानवतां नास्तिकानामित्यर्थः, किमुत दुर्जरमिति वक्तव्यमित्यर्थः ॥ ३३ ॥

वी ॥ किञ्च—नाहमिति ॥ हालाहलं न विषं मन्ये, कुतः? यस्य हालाहलस्य प्रतिक्रिया प्रतीकारः, वर्तत इतिशेषः, किन्तु ब्रह्मस्वमेव विषं प्रोक्तम्, हि यस्मादस्य ब्रह्मस्वस्य भूमौ प्रतिक्रिया नास्ति ॥ ३४ ॥

मु ॥ किंच विषादपि ब्रह्मस्वमतिघोरमित्याह—नाहमिति ॥ अहं हालाहलं विषं न मन्ये, तत्कुत इत्यत्राह—यस्य प्रतिक्रियेति । अस्तीति शेषः, तर्हि "ब्रह्मस्वं विषमुच्यते" इत्यादिषु कथं साम्योक्तिरित्यत्राह—ब्रह्मस्वं हीति । अस्य ब्रह्मस्वस्य भुवि प्रतिविधिः नास्ति, प्रतिक्रिया नास्तीत्यर्थः, पूर्वार्धे विषस्य प्रतिक्रियासद्भावोक्तिः उत्तरार्धे ब्रह्मस्वस्य प्रतिविध्यभावोक्तिश्चेत्यनयोरपौनरुक्त्यम् ॥ ३४ ॥

वी ॥ किञ्च—हिनस्तीति ॥ विषंतु अत्तारं भक्षयितारमेव हन्ति, अग्निस्त्वद्भिर्जलैः प्रशाम्यति, अनेन संसर्गिसंसर्गेण मारकत्वादग्नितुल्यता स्यादित्येतदपि नास्तीत्युक्तम्, अपिच समूलमिति वह्निर्हि मूलान्यविशेषयति, ब्रह्मस्वलक्षणारणिजः पावकस्तु कुलं तदपि समूलं दहति ॥ ३५ ॥

मु ॥ विषाग्न्योः ब्रह्मस्वस्य च कार्यतारतम्यमाह—हिनस्तीति ॥ विषम् अत्तारं भक्षकमेव हिनस्ति. अग्निस्तु अद्भिः जलैः प्रशाम्यति, अरणिः मथनेनाग्निजनकः काष्ठविशेषः, ब्रह्मस्वमेव अरणिपावकः समूलं पुत्रपौत्रादिसहितं कुलं दहति ॥ ३५ ॥

वी ॥ किञ्च—ब्रह्मस्वमिति ॥ दुरनुज्ञातं सम्यगननुज्ञातं सद्भुक्तं स्वं पुत्रं पौत्रं चेति त्रीन् पुरुषान् दहति, बलाद्राजाद्याश्रयबलात्प्रसह्य बलात्कृत्य भुक्तं तु दश पूर्वान् पितृपितामहादीन् हन्ति नरके पातयति, अपरान् पुत्रपौत्रादीन् दश नाशयति ॥ ३६ ॥

मु ॥ अथ तस्यैव स्वीकारविशेषेण फलविशेषमाह—ब्रह्मस्वमिति ॥ दुरनुज्ञातं सम्यगनुज्ञारहितमेव भुक्तं सत् त्रिपुरुषान् पुत्रपौत्रसहितमात्मानं पितृपितामहसहितमात्मानं वेत्यर्थः, हन्ति, तदेव बलात् भुक्तंतु सत् प्रसह्य हठात् पूर्वान् स्वस्मादर्वाचीनान् दश पुरुषान् अपरान् स्वस्मादुपरि उत्पत्स्यमानान् दश पुरुषांश्च हन्तीत्यर्थः॥ ३६ ॥

वी ॥ तर्हि राजानः किमिति ब्रह्मस्वं भुञ्जत इत्यत्राह—राजानइति ॥ ये राजानस्साधु यथा तथा ब्रह्मस्वमभिमन्यन्ते आकाङ्क्षन्ति, ते राज्यलक्ष्म्या अन्धा इति शेषः, आत्मा पतत्यस्मिन्निति तथा तन्निरयं न प्रचक्षते न विचारयन्ति, अतस्ते केवलं बालिशाः मूढाः ॥ ३७ ॥

निरयंयेऽभिमन्यन्तेब्रह्मस्वंसाधुबालिशाः ॥ ३७

गृह्णन्तियावतःपांसून्रुदतामश्रुबिन्दवः।विप्राणांहृतवित्तानांवदान्यानांकुडुम्बिनाम्।

राजानोराजकुल्याश्चतावतोऽब्दान्निरङ्कुशाः ।

कुम्भीपाकेनपच्यन्तेब्रह्मदायापहारिणः ॥ ३९

स्वदत्तांपरदत्तांवा ब्रह्मवृत्तिंहरेतयः । षष्टिवर्षसहस्राणि विष्ठायांजायतेक्रिमिः ॥

नमेब्रह्मधनंभूयाद्यद्गृद्ध्वाल्पायुषोनृपाः।पराजिताश्च्युतास्थानाद्भवन्त्युद्वेजि[1]नोवयम्

विप्रंकृतागसमपि नैवद्रुह्यतमामकाः ।

---

मु ॥ ये बालिशाः मूर्खाः ब्रह्मस्वं साधु हितम् अभिमन्यन्ते इच्छन्ति, ते निरयमेव अभिमन्यन्ते इच्छन्ति ॥ ३७ ॥

वी ॥ गृह्णन्तीत्यादिश्लोकद्वयमेकान्वयम् , हृतं वित्तं येषां तेषाम् अत एव रुदतां विप्राणाम् अश्रुबिन्दवः यावतः पांसून् गृह्णन्ति आर्द्रान्कुर्वन्ति, तावतोऽब्दान्वत्सरान् कुम्भीपाकेन निरयेण पच्यन्ते,ब्रह्मदायापहारिणः ब्रह्मस्वापहारिणः निरङ्कुशाः दुर्निवाराः राजादिविशेषणमिदं द्वयम् ॥ ३८ ॥ ३९ ॥

मु॥ अथ सर्वपापेभ्योऽपि ब्रह्मस्वापहरणपापस्य दुरन्तदुःखदुर्दशाजनकत्वात् पुनः पुनः तद्दौष्ट्यमेवाह—गृह्णन्तीत्यादिना॥हृतवित्तानां राजभिरपहृतधनानां वदान्यानां स्वयमपि सत्पात्रेषु धनप्रदातॄणां तत्रापि कुटुम्बिनां पुत्रदारादिबहुकुटुम्बभृतां तत्पोषकाणां रुदतां दुःखातिशयेन अश्रूणि मुञ्चतां विप्राणाम् अश्रुबिन्दवः यावतः पांसून् भूरेणून् गृह्णन्ति स्नपयन्तीत्यर्थः, तावतोऽब्दान् तदश्रुस्नपितभूरेणुसंख्याकान् वत्सरान् निरङ्कुशाः निवारकरहिताः पुनरुत्तारकरहिताः सन्त इत्यर्थः, ब्रह्मदायापहारिणः ब्रह्मस्वापहारिणः कुम्भीपाकेन नरकविशेषेण पच्यन्ते ॥ ३८ ॥ ६९ ॥

वी ॥ स्वदत्तामिति ॥ ब्रह्मवृत्तिं ब्राह्मणस्य जीविकाम् ॥ ४० ॥

मु ॥ न केवलं स्वदत्तापहरणस्यैव पापावहत्वं, किन्तु परदत्तापहरणस्यापीत्याह —स्वदत्तमिति ॥ ब्रह्मवृत्तिं ब्रह्मजीवनहेतुं गोभूहिरण्यादिकमित्यर्थः, हरेत अपहरेत्, षष्टिं वर्षसहस्राणि षष्टिसंख्याकान्यब्दसहस्राणीत्यर्थः ॥ ४० ॥

वी ॥ ब्रह्मस्वं न मां स्पृशेदित्याशास्ते—नमइति ॥ विपर्ययेऽनर्थमाह—यदिति । यद्ब्रह्मधनं गृद्ध्वा अभिकाङ्क्ष्य अल्पायुषः पराजिताश्च राज्याद्भ्रष्टाश्च भवन्ति,अतो वयमुद्वेजिनः भीतिमन्तो भवेम ॥ ४१ ॥

मु ॥ इत्थं ब्रह्मस्वापहारस्य दुरन्तानर्थमूलत्वमुक्त्वा स्वस्य कदाचिदपि प्रमादेनापि मा भूदिति तद्दुष्टफलोक्तिपूर्वकमाह—नेति ॥ यत् ब्रह्मस्वं हृत्वा नृपाः अल्पायुषः सन्तः पराजिताः तत्पापेन हताः राज्यात् च्युताः भ्रष्टाः अहयो बिलेशया भवन्ति, उद्वेजिनः सर्वप्राणिभयङ्करा इत्यहिविशेषणम् ॥ ४१ ॥

वी ॥ विप्रमिति ॥मामका यदि यूयं मदीयास्तर्हि कृतापराधमपि विप्रं नैव द्रुह्यत, आर्षत्वात् "क्रुधद्रुह" इति चतुर्थ्यभावः, किन्तु बहु यथा तथा शपन्तमपि नित्यं

[1] नोह्ययः. मु-भा-प्र-पा ॥

घ्नन्तंबहुशपन्तंवा नमस्कुरुतनित्यशः ॥ ४२

यथाऽहंप्रणमेविप्राननुकालंसमाहितः । तथानमतयूयंच योऽन्यथामेसदण्डभाक्॥

ब्राह्मणार्थोह्यपहृतो हर्तारंपातयत्यधः । अजानन्तमपिह्येनं नृगंब्राह्मणगौरिव ॥४४

एतद्विश्राव्यभगवान्मुकुन्दोद्वारकौकसः । पावनस्सर्वभूतानां विवेशनिजमन्दिरम् ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

नमस्कुरुत ॥ ४२ ॥

मु॥अथ स्वजनोद्देशेनाह—विप्रमिति॥हे मामकाः घ्नन्तं युष्मांस्ताडयन्तमपि बहु शपन्तमपि श्रवणकटुभिः अनिष्टार्थकैः दुरालापैः मर्मोद्घाटनं कुर्वन्तमपीत्यर्थः, कृतागसमपि अपराधकारिणमपि वा विप्रं नैव द्रुह्यत विप्राय द्रोहं नैव कुरुतेत्यर्थः, तर्हि किं कर्तव्यम् ? अत आह—नमस्कुरुत नित्यश इति ॥ ४२ ॥

वी॥ इदमेव स्वदृष्टान्तेन द्रढयति—यथेति॥अनुकालं त्रिसन्ध्यं प्रणमे नमस्करोमि, योऽन्यथा न नमेत् स दण्डभाक् मे मत्तः ॥ ४३ ॥

मु ॥ धर्मसंस्थापनार्थमवतीर्णस्य स्वानुष्ठानमुखेन लोकमर्यादास्थापकस्य स्वस्य दृष्टान्तेनताननुशासदाह—यथाऽहमिति ॥ समाहितः चित्तसमाधानसहितः, नतु वञ्चनार्थमित्यर्थः, अहं यथा विप्रान् प्रणमे नमस्करोमि, तथा यूयं च यूयमपि नमत, यः अन्यथा तेषूक्तप्रकारवैपरीत्येन वर्तते, सः मे दण्डभाक् मया दण्डयो भवेदित्यर्थः ॥

वी ॥ न केवलमर्थवाद इति बिभीषिकेयम्, किंतु प्रत्यक्षमित्याह—ब्राह्मणार्थइति ॥ ब्राह्मणार्थो विप्रधनं हर्तारम् अधो नरके पातयति, यथा अजानन्तमेनं नृगं ब्राह्मणस्य गौरपातयत्, तद्वत, अजानन्तमपीत्यनेन किमु वक्तव्यं जानन्तं पातयतीति कैमुत्यन्यायोऽभिप्रेतः ॥ ४४ ॥

मु ॥ ननु भवेदेवं स्वार्थं विप्रद्रव्यापहरणे दण्डः, तद्विप्रार्थं चेत् कथमित्यत्राह—ब्राह्मणार्थोऽपीति ॥ अज्ञानस्वीकृतमपि ब्रह्मस्वमनर्थपर्यवसाय्येवेत्याह—अजानन्तमपीति । प्रस्तुतमेवं दृष्टान्तीकृत्याह—नृगमिति ॥ ४४ ॥

वी॥ एतदिति॥ द्वारकौकसः प्रति एतत् उक्तं श्रावयित्वा,तत्र हेतुः—सर्वलोकानां पावनः ॥ ४५ ॥

मु ॥ मुकुन्दः ऐहिकामुष्मिकभोगप्रदः भगवान् षाड्गुण्यनिधिः सर्वलोकानां पावनः समस्तवस्तुकलुषनिवर्तनेन पवित्रतापादकः श्रीकृष्णः एतत् नृगवृत्तान्तं द्वारकौकसो जनान् विश्राव्य श्रावयित्वा निजमन्दिरं विवेशेति ॥ ४५ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

(बलरामस्य पुनर्नन्दव्रजागमनकथा)

श्रीशुक उवाच—

बलभद्रःकुरुश्रेष्ठ भगवान्रथमाश्रितः । सुहृद्दिदृक्षुरुत्कण्ठः प्रययौनन्दगोकुलम् ॥ १
परिष्वक्तश्चिरोत्कण्ठैर्गोपैर्गोपीभिरेवच।रामोऽभिवाद्यपितरावाशीर्भिरभिनन्दितः॥
चिरंनःपाहिदाशार्ह सानुजोजगदीश्वर।[१]इत्यारोप्याङ्कमालिङ्ग्यनेत्रैस्सिषिचतुर्जलैः
गोपवृद्धांश्चविधिवद्यविष्ठैरभिवन्दितः । यथावयोयथासख्यं यथासंबन्धमात्मनः ॥
समुपेत्याथगोपालान्हास्यहस्तग्रहादिभिः ॥ ४.

---

वी ॥ अथ प्रत्येकं रामकृष्णयोश्चेष्टितानि वर्णयति—बलभद्रइति॥ हे कुरुश्रेष्ठ सुहृद्दिदृक्षुरिति समस्तं पदम्, सुहृदो बन्धून् द्रष्टुमिच्छुः, तत्र हेतुरुत्कण्ठः प्रेमयुतः तद्विषयाभिलाषयुतो वा ॥ १ ॥

मु ॥ प ॥ महात्मभिः परिचयः श्रेयान् भीविनयान्वितः ।
अन्यथाऽनर्थदः स्यादित्यत्र शापायुधाशयः ॥
जगत्यकर्मवश्यानामकुण्ठोज्ज्वलतेजसाम् ।
न दोषायोत्पथाचार इति चासूचि मौनिना ॥

बलभद्र इत्यादि ॥ सुहृद्दिदृक्षुः सुहृदो मित्राणि दिदृक्षुः द्रष्टुमिच्छुः उत्कण्ठः उत्कण्ठावान् उत्कण्ठस्सन्नित्यर्थः, नन्दगोकुलं नन्दव्रजं ययौ ॥ १ ॥

वी ॥ परिष्वक्तइति ॥ आलिङ्गितः पितरौ यशोदानन्दगोपौ अभिवाद्य प्रणम्य ताभ्यामाशीर्भिरभिनन्दितश्च ॥ २ ॥

मु॥ चिरोत्कण्ठैः चिरकालादारभ्य तद्दर्शनलोलुपैः गोपैः तद्दर्शनोत्कण्ठिताभिर्गोपीभिश्च परिष्वक्तः आलिङ्गितः रामः पितरौ यशोदानन्दगोपौ अभिवाद्य गोत्रनामोक्तिपूर्वकं पादावुपस्पृश्येत्यर्थः, आशीर्भिरभिनन्दितः ताभ्यामाशीर्वादैरानन्दितो बभूव॥ २॥

वी ॥ तदेवाह—चिरमिति ॥ हेदाशार्ह हे जगदीश्वर इदं संबोधनद्वयं हेतुगर्भम्, जगदीश्वरत्वात्स्वाश्रितसंरक्षणार्थं दाशार्हेष्ववतीर्णत्वाच्च सानुजस्त्वं नोऽस्मान् चिरं पाहि चिरमात्मरक्षाप्रर्थनेनैव तयोर्दीर्घायुष्ट्वादिकं सर्वं पार्थितप्रायमेव तेन विना तदनुपपत्तेरित्याशयेन चिरं पाहीत्युक्तम्, इतीति। आदिश्याशास्य नेत्रैः नेत्रजैर्जलैः हर्षजलैस्सिषिचतुः स्नपयामासतुः ॥ ३॥

मु ॥ हे दाशार्ह हे जगदीश्वर सानुजः श्रीकृष्णसहितः सन् नः चिरं पाहि उपप्लवेभ्यो रक्ष,इत्यालिङ्ग्य इत्युक्त्वा परिष्वज्य अङ्कमारोप्य नेत्रैः जलैः नेत्रसंबन्धिजलैः आनन्दबाष्पैरित्यर्थः, सिषिचतुः स्नपयतः स्म ॥ ३ ॥

वी ॥ गोपवृद्धानिति ॥ गोपवृद्धांश्चाभिवाद्येति शेषः, यविष्ठैः न्यूनवयस्कैः अभिवान्दितः, किंच—यथावय इति आत्मानः स्वस्य वयस्सख्यसंबन्धानुरूपं गोपान् समुपेत्य उपविवेशेति शेषः ॥ ४ ॥

---

१. अत्र वीरराघवाचार्यैः 'आदिश्य आशास्य' इति व्याख्यायते; तदनुगुणः पाठो विभावनीयः ॥

विश्रान्तंसुखमासीनंपप्रच्छुःपर्युपागताः। [1]पृष्ट्वाचानामयंस्वेषुप्रेमगद्गदयागिरा ॥
कृष्णे कमलपत्राक्षे संन्यस्ताखिलराधसः ॥ ५
कच्चिन्नोबान्धवाराम[2]सर्वेकुशलमासते। कच्चित्स्मरथनोरामयूयंदारसुतान्विताः॥ ६
दिष्ट्या कंसो हतः पापो दिष्ट्या मुक्तास्सुहृज्जनाः ।
निहत्य निर्जित्य रिपून्दिष्ट्या दुर्गं समाश्रिताः ॥ ७
गोप्योहसन्त्यःपप्रच्छूरामसन्दर्शनादृताः।कच्चिदास्तेसुखंकृष्णःपुरस्त्रीजनवल्लभः॥ ८

वी ॥ विश्रान्तमिति ॥ सार्धमेकान्वयम् , अनामयमारोग्यं पृष्ट्वा कमलपत्राक्षे कृष्णे संन्यस्ताः सम्यङ्निहिताः सकला राधसः बुद्धयो यैस्ते कृष्णैकप्रवणचित्ताइत्यर्थः, प्रेम्णा गद्गदया गिरा परिपप्रच्छु ॥ ५ ॥

मु ॥ 'गोपवृद्धैश्च' इति पाठे 'आशीर्भिरभिनन्दितः' इति पूर्वेणान्वयः, 'गोपवृद्धांश्च' इति पाठे विधिवत् अभिवन्द्य यविष्ठैः न्यूनवयोभिः अभिवन्दितो बभूवेत्यर्थः, ततो गोपाः किमकुर्वतेत्यत आह—यथावय इति । आत्मनो वयस्तारतम्योचितं सख्योचितं संबन्धोचितं चेत्यर्थः, हास्यहस्तग्रहादिभिः हास्यपूर्वकं हस्तग्रहणपूर्वकम् , आदिशब्देन उचितसम्भाषणादिसम्भावनापूर्वकं चेत्यर्थः, समुपेत्य अन्योन्यं मिलित्वा, अथ मेलनानन्तरं विश्रान्तं तदुचितोपचारैर्विगतश्रमं कृतमित्यर्थः, ततः सुखमासीनं तं पर्युपागताः परिवार्य स्थिताः सन्तः कमलपत्राक्षे पुण्डरीकदलसदृशनेत्रश्रियैव सकलसंतापहारिणीत्यर्थः, कृष्णे निमित्त इत्यर्थः, संन्यस्ताखिलराधसः त्यक्तसर्वविषयाः, कृष्ण इति कृष्णप्राप्त्यर्थमित्यर्थः:,प्रेमगद्गदया गिरा स्वेषु बन्धुषु अनामयम् आरोग्यं च क्षेममित्यर्थः, पृष्ट्वा प्रपच्छुरिति पूर्वेणान्वयः ॥ ४ ॥ ५ ॥

वी॥प्रश्नमेवाऽऽह —कच्चिदित्यादिना॥ हे राम नोऽस्माकं सर्वे बान्धवाः कुशलमासते, कच्चिद्दारैस्सुतैरन्विताः, इदं विस्मृत्यभावसूचकं विशेषणम् , यूयं नोऽस्मान् स्मरथ कच्चित्? ॥ ६ ॥

मु ॥ तत्किं पप्रच्छुरित्यत्राह—कच्चिदित्यादिना श्लोकद्वयेन ॥ कुशलमासते कुशलेन वर्तन्ते किमु ?, हे राम दारसुतान्विताः सन्तः यूयं नः स्मरथ कच्चित् ? ॥ ६ ॥

वी ॥ दिष्ट्येत्यानन्दे, अयमस्माकमानन्द इत्यर्थः, सुहृज्जनाः वसुदेवदेवक्यादयः मुक्ताः कंसनिर्बन्धात् मोचिताः, कांश्चिद्रिपून्निहत्य कांश्चिन्निर्जित्य च दुर्गं जलदुर्गं द्वारकामित्यर्थः ॥ ७ ॥

मु ॥ अथ तेषां क्षेमाभिनन्दनव्याजेन श्रीकृष्णमाहात्म्यं प्रकटयन्ति—दिष्ट्येत्यादिना ॥ निहत्य निर्जित्य रिपूनिति—कांश्चित् निहत्य मारयित्वा कांश्चित् निर्जित्य पराजितान् कृत्वा चेत्यर्थः, दुर्गं द्वारकाख्यं समाश्रिताः आक्रम्य स्थिता इत्यर्थः ॥ ७ ॥

वी॥गोप्यइति॥ रामस्य सन्दर्शने पुनःपुनर्वीक्षणे आदृता पप्रच्छुः,प्रश्नमेवाऽऽह—कच्चिदास्तइति । पुरस्त्रीजनवल्लभ इत्यनेन ग्राम्यस्त्रीष्वात्मसु तस्य प्रीत्यभावो हेतुगर्भितः॥

मु ॥ एवं रामे गोपैः कर्तव्यमुपचारादिकमुक्त्वा अथ श्रीकृष्णे चिरविरहोत्सुकानां गोपीनां तद्विजयकुशलादिप्रश्नप्रकारमाह—गोप्य इत्यादिना॥ रामसंदर्शनेन आदृताः

१. पृष्टाश्चेति. पा ॥ २. सर्वमिति. पा ॥

कच्चित्स्मरतिवाबन्धून्पितरंमातरंचसः । [१]अपिवास्मरतेऽस्माकमनुसेवांमहाभुजः॥
मातरंपितरंभ्रातॄन्पतीन्पुत्रान्स्वसॄरपि।[२]यदर्थेऽत्याक्ष्मदाशार्हदुस्त्यजान्स्वजनान्प्रभो
तानस्सद्यःपरित्यज्यगतस्संछिन्नसौहृदः। कथन्नुतादृशंस्त्रीभिर्नश्रद्धीयेतभाषितम् ॥
कथन्नुगृह्णन्त्यनवस्थितात्मनो वाचः कृतघ्नस्य बुधाः पुरस्त्रियः ।

आदरसहिताः सत्यः अतिप्रसन्नतद्दर्शनविगलितसंकोचतया निश्शङ्कं श्रीकृष्णविषयस्वोद्वेलानुरागानुगुणं च पप्रच्छुरित्यर्थः, आबाल्यं रतिपरिचयसंमोहितस्वपरित्यागेन अद्य मधुराविहारलोलतया श्रीकृष्णस्य तत्पुरस्त्रीरत्यासक्त्या स्वविस्मरणमुत्प्रेक्ष्याहुः—कच्चिदिति । पुरस्त्रीजनानां वल्लभस्सन् सुखमास्ते कच्चित् सुखेन वर्तते किमित्यर्थः, तत्र वक्तृबहुत्वात् वाक्यानां नानाविधत्वं बोध्यम् ॥ ८ ॥

वी ॥ स कृष्णः पितरं नन्दं मातरं यशोदां च स्मरति कच्चित्? अपिवेति—अस्माकमनुसेवामनुवर्तनं स्मरते किं वा? न स्मरत्येवेति भावः ॥ ९ ॥

मु ॥ बन्धून् गोपान् पितरं मातरं यशोदानन्दगोपौ च कृष्णः स्मरति कच्चित्? एवं पुरतो लोकरीत्या पृष्ट्वा स्वमनस्तापाप्यायकरहस्यं पृच्छन्ति—अपिवेति। अस्माकम् अनुसेवाम् अस्मत्पत्यादीन् वञ्चयित्वा बृन्दावनादौ यथामनोरथमनुसृत्य कृतां सेवामित्यर्थः, अपि वा स्मरते स्मरति वा कच्चित्? ॥ ९ ॥

वी ॥ एतदेव स्पष्टयितुं तस्य सौहार्दाभावमाहुः—मातरमिति सार्धेन ॥ हे दाशार्ह हे प्रभो मात्रादीनन्यांश्च स्वजनान् यदर्थे यन्निमित्तम् अत्याक्ष्म त्यक्तवत्यः, ताः नोऽस्मान् सद्य एव परित्यज्य गतः, अत एव संछिन्नं सौहृदं येन तथाभूतः तर्हि तद्गमने युष्माभिः प्रतिबन्धः किं न कृतः,तद्वाक्यविश्वासादिति चेत्—विश्वासः किमिति कृतः,तत्राऽऽहुः कथंन्विति अर्धेन । तादृशमित्यनेन वञ्चनशीलत्वं विवक्षितम् स्त्रीभिरित्यनेन मौढ्यमभिप्रेतम्, कथं न श्रद्धीयेत न विश्वस्येत अज्ञत्वाद्विश्वसितवत्यस्स्मेति भावः ॥ १० ॥ ११ ॥

मु ॥ किंच तस्य कृते अतिसाहसकर्माण्याचरितमस्माभिरित्याहुः—मातरमित्यादि ॥ लोके पुत्रादेः पितृत्यागादपि मातृत्यागस्य अमिदुष्करत्वात् प्रथमं तद्ग्रहणं कृतम्, अन्यत्राप्युत्तरोत्तरं प्रति पूर्वपूर्वस्य तथात्वं द्रष्टव्यम्, दुस्त्यजान् सांसारिकैस्त्यक्तुमशक्यानित्यर्थः, स्वजनान् जहिम वयं त्यक्तवत्यः ॥ १० ॥

मु ॥ ता इति॥ लोकगर्हां विहितवृत्तिमप्यविगणय्य तस्य कृते तथाविधसाहसकारिणीरित्यर्थः, नः अस्मान् सुखापेक्षया सुव्रतभ्रंशे कृतेऽपि तत् स्वप्नलब्धवदेवाभवदिति निर्वेदादाहुः—सद्यः परित्यज्य गत इति। तत्र हेतुमाहुः—संछिन्नसौहृद इति। त्यक्तसौहार्द इत्यर्थः, तर्ह्येवं विवेके सत्यति पूर्वं कथं विश्वस्तवचनोऽयं युष्माभिरित्यत आहुः—कथंन्विति।स्त्रीभिः सदसद्विवेकरहिताभिरित्यर्थः, तादृशम् अन्तर्विषमयमपि बहिर्मधुरतया प्रतीयमानमित्यर्थः, भाषितं कथं न श्रद्धीयेत मुग्धानां तादृशवचनं विश्वासजनकमेवेति भावः ॥ ११ ॥

वी ॥ वक्तृबहुत्वान्नानाविधानि वाक्यानि तत्रान्या ऊचुः—कथमिति ॥ अनवस्थितः चञ्चलः आत्मा मनो यस्य तस्य कृतघ्नस्य च कथन्नु बुधाः कुशलाः पुरस्त्रियो गृह्ण-

१ 'अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति' इत्यधिकमर्धं कचिद्दृश्यते ॥ २. यदर्थे जहिम. पा ॥

गृह्णन्ति वै चित्रकथस्य सुन्दरस्मितावलोकोच्छ्वसितस्मरातुराः ॥ १२
किंनस्तत्कथयागोप्यःकथाःकथयतापराः। यात्यस्माभिर्विनाकालोयदितस्यतथैवनः
इतिप्रहसितंशौरेर्जल्पितंचारुवीक्षितम् । गतिंप्रेमपरिष्वङ्गंस्मरन्त्योरुरुदुःस्त्रियः॥१४
सङ्कर्षणस्ताःकृष्णस्यसन्देशैर्हृदयङ्गमैः।सान्त्वयामासभगवान्नानानुनयकोविदः ॥
द्वौ मासौ तत्र चावात्सीन्मधुं माधवमेव च ।

---

न्ति विश्वसन्ति, अन्या ऊचुः—गृह्णन्ति वा इति । विचित्राः कथाः भाषणानि यस्य तस्य, हेतुगर्भमिदम्, भाषणेनैव व्यामोहयितुरित्यर्थः, सुन्दरं स्मितं यस्मिन् तेनावलोकनेन उच्छ्वसित उद्दीपितो यः स्मरः कामः तेनातुराः आकुलाः, इदमपि हेतुगर्भम्, तत्त्वात्ताः गृह्णन्ति, वै इति निश्चये ॥ १२॥

मु॥ननु मुग्धानानामस्माकं तद्वचनमन्तर्विषमयमपि बहिर्मधुरतया तावद्विश्वसनीयं भवेन्नाम, विदुष्यः पुरस्त्रियः कथंबभ्रमुरित्याश्चर्येणाहुः—कथन्न्विति॥ अनवस्थितात्मनः अव्यवस्थितचित्तस्य कृतघ्नस्य इतरत् सर्वं विहाय अस्मद्देहसमर्पणोपकारविस्मरणशीलस्येत्यर्थः,तस्य वचः कथं गृह्णन्ति,तथाच तादृशप्रौढपौराङ्गनावञ्चकस्य तस्य वयं कियत्य इति हृदयम्, एवमुक्त्वापि तासां तद्वचनविश्वासहेतुं प्रकटयन्त्य आहुः—गृह्णन्तीति। चित्रकथस्य आश्चर्यकरचरित्रस्य तस्य स्मितावलोकाभ्यां दरस्मितकटाक्षाभ्याम् उत्कलितेन उत्साहितेन स्मरेण आतुराः पीडिताः सत्यः वचः गृह्णन्ति वै अनुकूलतया स्वीकृत्य सर्वथा तद्विधेयतां भजन्त इत्यर्थः ॥ १२ ॥

वी ॥ अपरा ऊचुः—किंनइति ॥ हे गोप्यः तस्य कथया वार्तया नोऽस्माकं किं को वा पुरुषार्थः, अतोऽन्याः कथाः कथयत,तस्य श्रीकृष्णस्यास्माभिर्विना यदि कालो याति, तर्हि तथैव नोऽस्माकमपि यात्येव, किन्तु तस्य सुखेन अस्माकं तु दुःखेनेत्येतावानेव विशेष इत्यनेन ध्वनितम् ॥ १३ ॥

मु ॥ एवं तस्यान्यकान्तासङ्गप्रसङ्गोद्घाटनोदीर्णमाना आहुः—किंन इति ॥ हे गोप्यः तत्कथया नः किं न किंचित् साध्यमित्यर्थः, अत एव अपराः अन्यविषयाः कथाः कथयत,ननु नित्यं तत्कथाप्रसङ्गाभावेन कथं कालो गमिष्यतीत्यत्राहुः—यदीति। अस्माभिर्विना तस्य कालो याति यदि, नः अस्माकमपि तथैवेति ॥ १३ ॥

वी ॥ इतीति ॥ प्रेम्णा परिष्वङ्गमालिङ्गनं च स्मरन्त्यः ॥ १४ ॥

मु॥इतीति॥ इति अन्योन्यमुक्त्वेर्थः,स्त्रियः रुरुदुः,तत्र हेतुगर्भविशेषणं—स्मरन्त्य- इति । प्रेमपरिष्वङ्गं प्रेम्णा कृतमालिङ्गनम् ॥ १४ ॥

वी ॥ सङ्कर्षणइति ॥ नानाविधेष्वनुनयेषु सान्त्वनेषु कोविदो निपुणः ताः गोपीस्सान्त्वयामास ॥ १५ ॥

मु ॥ नानाविधेष्वनुनयेषु आश्वासवचनेषु कोविदः चतुरः भगवान् सर्वज्ञः संकर्षणो रामः हृदयंगमैः मनोरञ्जकैः कृष्णस्य संदेशैः वाचिकैः ताः गोपीः सान्त्वयामास आश्वासयामास ॥ १५ ॥

वी ॥ द्वाविति ॥ मधुं चैत्रं माधवं वैशाखं चेत्येतौ द्वौ मासाववात्सीदुषितवान्,

रामः क्षपासु भगवान्गोपीनां [१]रतिमावहन् ॥ १६
पूर्णचन्द्रकलामृष्टे कौमदीगन्धवायुना । यमुनोपवने रेमे सेविते स्त्रीगणैर्वृतः॥ १७
वरुणप्रेषितादेवीवारुणीवृक्षकोटरात्। पतन्तीतद्वनंसर्वंस्वगन्धेनाध्यवासयत् ॥ १८
तंगन्धंमधुधारायावायुनोपहृतंबलः। आघ्रायोपागतस्तत्रललनाभिःपपौसमम्॥१९

---

अत्यन्तसंयोगे द्वितीया, कथंभूतस्सन् तासु मधुमाधवयोस्संबन्धिनीषु क्षपासु रात्रिषु गोपीनां पूर्वं स्वपरिगृहीतगोपीनां व्रजान्निष्क्रमणानन्तरमुत्पन्नानां वा रतिमनुरागमावहन् उद्रेचयन् ॥ १६ ॥

मु ॥ अथ रामः कंचित् कालं तत्र स्थित्वा विजहारेत्याह--द्वाविति ॥ मधुं चैत्रं च माधवं वैशाखं चेति द्वौ मासौ तासु तन्मासरात्रीषु गोपीनां रतिमावहन् कृष्णक्रीडासमये अनुद्भूतयौवनाङ्कुराणां ततोऽन्यासामबलानां चेत्यर्थः, तत्र अवात्सीच्च उवास च ॥ १६ ॥

वी ॥ किञ्च—पूर्णेति ॥ पूर्णचन्द्रस्य कलाभिः मरीचिभिः आमृष्टे उज्ज्वले कौमुदीगन्धवायुना कुमुद्वतीनां गन्धवातेन सेविते,यद्वा कौमुदीशब्देन तद्विकासितानि कुमुदानि लक्ष्यन्ते,कुमुदगन्धवायुनेत्यर्थः, यमुनायाः उपवने स्त्रीसमूहैः परिवृतो रेमे क्रीडितवान् ॥

मु ॥ अथ तत्र रिरंसोस्तस्य तदुत्साहवर्धकवस्तुसामग्री च संपन्नेत्याह—पूर्णेति ॥ पूर्णचन्द्रस्य कलाभिः आमृष्टे सर्वतो व्याप्ते कौमुदीनां कुमुदसंबन्धवतीनां सरसीनामित्यर्थः, गन्धवारिणा तत्रत्यकुमुदगन्धहारिणा वायुनेत्यर्थः, यद्वा कौमुदीशब्देन तद्विकसितानि कुमुदानि लक्ष्यन्ते, तद्गन्धहारिणा वायुनेत्यर्थः, सेविते यमुनोपवने यमुनाकूलोपवने रेमे चिक्रीड, क्रीडायां मुख्यसामग्रीमाह—स्त्रीगणैर्वृत इति ॥ १७ ॥

वी॥ वरुणेति॥ वारुणी सुधया सहोत्पन्ना मदिरा, सा च वरुणप्रेरिता सती इदमेव तस्यां वारुणीशब्दप्रवृत्तौ निमित्तम् , वृक्षकोटरादापतन्तीम् अधस्स्रवन्तीं स्वगन्धेन तद्वनमध्यवासयत् परिमलयांचकारेत्यर्थः ॥ १८ ॥

मु ॥ अथ''सुरा हलिप्रिया हाला'' इति सुरायाः तत्प्रियवस्तुत्वादेव तन्नाम्ना लोकव्यवहारप्रसिद्धेः ''परिस्रुद्वरुणात्मजा'' इत्यस्या एव वरुणात्मजाख्याप्रसिद्धेश्च बलविहारकालं विज्ञाय वरुणेन प्रेरिता सती सा तदुपभोगानुगुणं कस्माच्चिद्वृक्षकोटरादाविरासीत् , स च तां यथोचितं स्त्रीभिस्सहोपयुज्य विजहारेत्याह—वरुणेत्यादिना ॥ वरुणेन प्रेरिता तत्र विहर्तुर्बलरामस्योपभोगार्थं त्वं तत्राविर्भवेति नियुक्ता सतीत्यर्थः,देवी क्रीडापरिकरभूता,दिव्धातोः क्रीडार्थत्वात्,वारुणी सुधया सख्या उत्पन्ना मदिरा वृक्षकोटरात् कस्यचित् वृक्षस्य कोटरात् रन्ध्रात् पतन्ती प्रसरन्ती तद्वनम् अध्यवासयत् सर्वतः सुरभितमकरोत् ॥ १८ ॥

वी ॥ तमिति॥ तं वायुनोपहृतं घ्राणं प्रत्यानीतं मधुधारायाः गन्धमाघ्राय तत्रागतो बलो रामः स्त्रीभिस्सह पपौ पीतवान् ॥ १९ ॥

मु ॥ तं गन्धमिति ॥ अयं स्पष्टार्थः ॥ १९ ॥

---

१. मुदमा. पा ॥

उपगीयमानउद्गायन्वनिताशोभिमण्डले। रेमेकरेणुयूथेषुमाहेन्द्रइववारणः॥ २०
नेदुर्दुन्दुभयोव्योम्निववृषुःकुसुमैर्मुदा। गन्धर्वामुनयोरामंतद्वीर्यैरीडिरेमुदा॥ २१
उपगीयमानचरितोवनिताभिर्हलायुधः। वनेषुव्यचरत्क्षीबोमदविह्वललोचनः॥ २२
स्रग्व्येककुण्डलोमत्तोवैजयन्त्याचमालया।बिभ्रत्स्मितमुखाम्भोजंस्वेदप्रालेयभूषितम्
सआजुहावयमुनाञ्जलक्रीडार्थमीश्वरः। निजंवाक्यमनादृत्यमत्तइत्यापगांबलः॥
अनागतां हलाग्रेण कुपितो विचकर्षह॥ २४
पापे त्वं मामवज्ञाय यन्नायासि मयाऽऽहुता।

---

वी॥ वनितानां शोभिनि मण्डले उपगीयमानः स्वयं चोद्गायन् रेमे,यथा करेणूनाम् इभीनां यूथेषु माहेन्द्रो वारणो गजः ऐरावतः, तद्वत्॥ २०॥

मु॥ उपगीयमान इति॥ वनिताभिश्शोभत इति वानिताशोभि तच्च तन्मण्डलं च तस्मिन् स्वस्य परितो मण्डलाकारेण स्थितासु वनितास्वित्यर्थः, उपगीयमानः ताभिः उप समीपे गीयमानः उद्गायन् स्वयञ्च उच्चैर्गायन् करेणुयूथेषु इभीमण्डलेषु माहेन्द्रो वारण इव ऐरावत इव रेमे चिक्रीड॥ २०॥

वी॥ नेदुरिति॥ ववृषुः देवा इत्यध्याहारः, मुदा हर्षेण तस्य रामस्य वीर्यैः वीर्यप्रकाशकैः वचोभिरीडिरे तुष्टुवुः॥ २१॥

मु॥ नेदुरिति॥ तद्वीर्यैः स्तुतिकरणहेतुभिः ईडिरे तुष्टुवुः॥ २१॥

वी॥ इत्थमुपगीयमानानि चरितानि यस्य सः क्षीबो मत्तः मदेन विह्वले चञ्चले लोचने यस्य सः वनिताभिस्सह वनेषु चचार॥ २२॥

मु॥ उक्तमेवार्थं प्रकारान्तरेण आह—उपगीयमानचरित इति॥ क्षीबः मधुमत्तः अत एव मदेन विह्वले पुरुषप्रयत्नमन्तरेण स्वत एव मुकुलीभवन्ती लोचने यस्य सः वनिताभिस्समं वनेषु व्यचरत्॥ २२॥

वी॥ तमेव विशिनष्टि—स्रग्वीति॥ स्रगस्यास्तीति तथा एकं कुण्डलं यस्य सः वनमालया अलंकृत इति शेषः, स्वेद एव प्रालेयं हिमं तेन भूषितं स्मितयुक्तं मुखाम्भोजं बिभ्राणः॥ २३॥

मु॥ तमेव विशिनष्टि—स्रग्वीति॥ एककुण्डलत्वं तस्य प्रसिद्धमेव, वैजयन्त्या मालया स्रग्वीत्यन्वयः, स्वेद एव प्रालेयं हिमं तेन भूषितं मुखमेव अम्भोजं बिभ्रत्॥

वी॥तस्यैव चरित्रान्तरमाह—सइत्यादिना॥ईश्वरः प्रभुः स रामः यमुनाम् आजुहाव आहूतवान्; ततो मत्तोऽयमित्यात्मवाक्यमनादृत्यानागतामापगां यमुनां कुपितो बलरामः हलाग्रेण विचकर्ष आकृष्टवान् हेति विस्मये॥ २४॥

मु॥ ईश्वरः निग्रहानुग्रहशक्तः सः जलक्रीडार्थं यमुनामाजुहाव इत एहीत्याहूतवान्, मत्तः अयं मधुपानक्षीब इति मत्वेत्यर्थः, निजवाक्यम् अनादृत्य अनागताम् आपगां यमुनां कुपितः क्रोधाविष्टस्सन् हलाग्रेण विचकर्ष आकृष्टवान्, हेत्याश्चर्ये॥ २४॥

वी॥ पापेइति॥आहुतेति च्छेदः,हे पापे यद्यतो मया त्वमाहूता मामवज्ञाय अवहेल्य

नेष्ये त्वां लाङ्गलाग्रेण शतधा कामचारिणीम् ॥ २
एवंनिर्भर्त्सिताभीतायमुनायदुनन्दनम्। उवाचचकितावाचंपतितापादयोर्नृप॥ २६
रामराममहाबाहोनजानेतवविक्रमम् । यस्यैकांशेनविधृताजगतीजगतःपते ॥ २७
परंभावंभगवतोभगवन्मामजानतीम्। मोक्तुमर्हसिविश्वात्मन्प्रपन्नांभक्तवत्सल॥२८
ततोव्यमुञ्चद्यमुनांयाचितोभगवान्बलः। विजगाहेजलंस्त्रीभिःकरेणुभिरिवेभराट् ॥

---

नागताऽसि,अतस्त्वां स्वैरचारिणीं शतधा नेष्यामि शतकुल्यावर्तीं करिष्ये ॥ २५ ॥

मु ॥ अथ बलरामोक्तिप्रकारं तस्यास्तत्स्तुतिपूर्वकं तदनुवृत्तिप्रकारं चाह—पाप इत्यादिना ॥ हे पापे पापकारिणि यत् यतः कारणात् आहुता आहूता सती माम् अवज्ञाय अवमन्यमाना नायासि नागच्छसि, अतः कामचारिणीम् अनाज्ञापरतन्त्रतया यथेष्टचारिणीं त्वां लाङ्गलाग्रेण शतधा नेष्ये गमयिष्यामि ॥ २५ ॥

वी ॥ इत्येवं निर्भर्त्सिता अत एव भीता यमुना तथैव कर्तुम् अयं प्रभुरिति शङ्किता हे नृप पादयोः पतित्वा यदुनन्दनं रामं प्रति उवाच ॥ २६ ॥

मु ॥ एवमिति ॥ निर्भर्त्सिता नीता हलेन किञ्चिदाकृष्टा यमुना शङ्किता भीता 'चलिता' इति पाठे कम्पितेत्यर्थः, सती पादयोः पतित्वा यदुनन्दनं वाचम् उवाच ॥

वी॥वाचमेवाऽऽह—रामेति द्वाभ्याम्॥तव विक्रमं महिमानं न जाने अपारत्वादिति भावः,तदेव स्पष्टयितुमाह—यस्येति । हे जगतां पते षष्ठ्यन्तपाठे तस्य यस्य एकांशेन सहस्रतममूर्धैकदेशेन जगती पृथ्वी विधृता विशेषेण धृता,तस्य तवेति संबन्धः॥ २७॥

मु ॥ तदाह—रामरामेति ॥ महाबाहो इति सम्बुद्ध्या सकलजगद्धरणसमर्थस्य तव बाहुबलस्य मदाकर्षणं कियदिति स्फोर्यते, तव विक्रमं न जाने, ज्ञातुमशक्यत्वे हेतुमाह—यस्येति । जगतांपते तद्धारणादिना पालक यस्य तव एकांशेन शेषांशेन जगती विधृता निरुपद्रवं धृता ॥ २७ ॥

वी ॥ भगवतस्तव परं निरवधिकं भावं प्रभावं हे भगवन् अजानतीम् अधुना प्रपन्नां च मां मोक्तुमर्हसि, तदुपयुक्तं संबोधयति—भक्तवत्सलेति । मुञ्चेत्यस्य यथापूर्वं गमयेत्यर्थः ॥ २८ ॥

मु ॥ तथाच हे भगवान् भगवतः ज्ञानशक्त्यादिषाड्गुण्यनिधेः तव परं भावं परमं माहात्म्यम् अजानतीम् अत एव प्रपन्नां शरणागतां विश्वात्मन् विश्वम् आत्मा देहो यस्येति वा विश्वस्यात्मा अन्तरात्मेति वा विश्वत्मन् भक्तवत्सल भक्तानां दोषान् भोग्यतयाङ्गीकृत्य रक्षकेत्यर्थः, 'वात्सल्यं दोषभोग्यत्वम्' इत्याहुरार्याः. मां मोक्तुमर्हसि ॥ २८ ॥

वी ॥ ततइति ॥ बलो रामः इत्थं याचितः तां यमुनां व्यमुञ्चत् . ततः स्त्रीभिस्सह जलं विजगाहे च, यथा करेणुभिस्सह इभराट् ऐरावतः, तद्वत् ॥ २९ ॥

मु ॥ तत इति ॥ अत्र यामुनाप्रार्थनाफलं लाङ्गलमुखपीडनाद्विमुक्तिः, तत्प्रार्थ्यस्य बलरामस्यानुग्रहफलं स्त्रीभिस्सह पुनस्तस्यां प्रविश्य विहरणमिति विवेकः, इभराट् ऐरावतः ॥ २९॥

कामंविहृत्यसलिलादुत्तीर्णायासिताम्बरे।भूषणानिमहार्हाणिददौकान्तिमतींस्रजम्॥
वसित्वावाससीनीलेमालामामुच्यकाञ्चनीम्। रेजेस्वलङ्कृतोलिप्तोमाहेन्द्रइववारणः॥
अद्यापिदृश्यतेराजन्यमुना[1]कृष्टवर्त्मना।बलस्यानन्तवीर्यस्यवीर्यंसूचयतीवहि॥ ३२
एवंसर्वानिशायाताएकेवरमतोव्रजे।रामस्याक्षिप्तचित्तस्यमाधुर्यैर्व्रजयोषिताम् ॥३३

इति श्रीभागवते महापुराणे दशमस्कन्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

वी ॥ काममिति ॥ कामं यथेच्छं विहृत्योत्तीर्णाय निर्गताय रामाय असिताम्बरे नीलाम्बरे महार्हाणि अनर्घाणि भूषणानि कान्तिमतीमम्लानश्रियं स्रजं मालां च ददौ, यमुनेति कर्तृपदाध्याहारः, यत्तु "वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम् । समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत" इति वैष्णवं वचनम्, तत्रापि लक्ष्मीः दर्शनीयरूपा मूर्तिधरा यमुनेति व्याख्येयम् ॥ ३० ॥

मु ॥ देहवर्णसाम्यात्तत्समर्पितानि पारितोषिकवस्तून्याह—काममिति॥ यथेच्छमित्यर्थः, समर्हाणि सम्यगर्हाणि तद्धारणयोग्यानीत्यर्थः, असिताम्बरे नीलाम्बरे द्वे. कान्तिमतीमिति नित्ययोगे मतुप्, सर्वकालमप्यम्लानश्रियमित्यर्थः, स्रजं पुष्पमालिकां ददौ, यद्वा 'मालामाबध्य काञ्चनीम्' इत्युक्तत्वात् कान्तिमतीं स्रजमिति सौवर्णीं स्रजमित्यर्थः ॥ ३० ॥

वी ॥ वसित्वेति ॥ वसित्वा परिधाय काञ्चनीं स्वर्णमयीं मालामाबध्य कण्ठे निधाय काञ्चनीं मालामित्यनुक्तभूषणोपलक्षणम्, इत्थं सुष्ठु अलंकृतः स्त्रीभिस्सह रेजे यथा माहेन्द्रो वारणस्तद्वत् ॥ ३१ ॥

मु ॥ नीले वाससी द्वे वासित्वा परिधाय स्त्रीभिः स्वलंकृतस्सन् माहेन्द्रो वारण इव रेजे, यद्वा स्वलंकृतः वस्त्रादिभिः भूषितोऽयं स्त्रीभिः करेणुभिः माहेन्द्रो वारण इव रेजे ॥ ३१ ॥

वी ॥ हलेन कृष्टा यमुनेत्येतदसंभावितं मन्वानस्य राज्ञस्संशयनिराचिकीर्षयाऽऽह—अद्यापीति ॥ हे राजन्ननन्तं वीर्यं यस्य तस्य बलस्य रामस्य वीर्यं सूचयती "लक्षणहेत्वोः" इति शत्रन्तात् ङीप्, सूचयितुमित्यर्थः, आकृष्टवर्त्मना हलाकृष्टमार्गेण यमुना स्यन्दमानेति शेषः ॥ ३२ ॥

मु ॥ अद्यापि तद्वीर्यचिह्नं स्फुटमेवेत्याह—अद्यापीति ॥ कृष्णवर्त्मना बलस्य लाङ्गलमुखकृष्णमार्गेण हेतुना यमुना अनन्तवीर्यस्य अपारबलस्य वीर्यम् अद्यापि सूचयतीव, हिः प्रसिद्धौ ॥ ३२ ॥

वी ॥ एवमिति ॥ आक्षिप्तं रिरंसाप्रवणं चित्तं यस्य तस्य व्रजे रमतो रामस्य माधुर्यैः विलासैस्सर्वा निशाः रात्रयः योषितामेकेव निशा याताः, एकनिशाप्राया बभूवुरित्यर्थः ॥ ३३ ॥

मु ॥ एवमिति ॥ व्रजे रमतः स्त्रीभिस्सह विहरतः योषितां माधुर्यैः मनोहरविलासैः आक्षिप्तचित्तस्य आकृष्टचित्तस्य रामस्य सर्वा निशाः एकेव एकनिशेव याताः तद्वि-

---

[1]. कृष्णवर्त्मना. मु-भा-प्र. पा ॥

••◆( श्रीकृष्णकृतपौण्ड्रककाशीराजवधादिकथारम्भः )◆••

श्रीशुक उवाच—

नन्दव्रजंगतेरामेकरूशाधिपतिर्नृप । वासुदेवोऽहमित्यज्ञोदूतंकृष्णायप्राहिणोत् ॥ १
त्वंवासुदेवोभगवानवतीर्णोजगत्पतिः।इतिप्रस्तोभितोबालैर्मेनेस्वात्मानमच्युतम्॥ २
दूतंचप्राहिणोन्मन्दःकृष्णायाव्यक्तवर्त्मने।द्वारकायांयथाबालोनृपोबालैःकृतोऽबुधः

---

हारसुखपारवश्येन बह्वो निशा अविदितगतयामास्सत्यः एकनिशेव व्यतीता इत्यर्थः ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

वी॥अथ श्रीकृष्णचरितं पौण्ड्रकवधकाशीपुरदहनात्मकमनुवर्णयति—नन्दव्रजमित्यादिना॥ हे नृप करूशानां देशानामधिपतिरहमेव वासुदेव इत्यभिमन्यमानः अत एव अज्ञः श्रीकृष्णाय दूतं प्राहिणोत् प्रेषयामास दूतमुखेन वक्ष्यमाणं वचः प्राहिणोदित्यर्थः॥

मु ॥ प ॥ मत्सरेणापिभगवल्लाञ्छनाख्यादिधारिणः ।
भवेन्निश्श्रेयसं नूनमित्यत्र हृदयं मुनेः ॥
*तमोलिप्तहृदा पुंसा कदाप्याचरिताहितम् ।
महात्मने स्वापदेशादित्याकूतं च मौनिनः ॥

नन्दव्रजमित्यादि ॥ करूशानां देशविशेषाणाम् अधिपतिः कश्चिद्राजा अज्ञस्सन् अहमेव वासुदेव इति कृष्णाय दूतं प्राहिणोत् ॥ १ ॥

वी ॥ तदेवाह—त्वमिति ॥ इतीत्थं बालैरज्ञैस्त्वं प्रस्तोभितः स्तुत्या मुधा प्रोत्साहितः अहं तु आत्मानमेवाच्युतं वासुदेवं मेने मनवै ॥ २ ॥

मु॥ एवं तद्भ्रमे हेतुमाह—त्वमिति॥ भगवान् ज्ञानशक्त्यादिषड्गुणपूर्णः इहावतीर्णः जगत्पतिः वासुदेवः त्वमिति बालैः प्रस्तोभितः स्तुत्या प्रोत्साहितः आत्मानम् अच्युतं मेने तथा भ्रान्त्या दुरहंकारग्रस्तोऽभूदित्यर्थः ॥ २ ॥

वी ॥ दूतमिति ॥ अस्यैतद्वक्तुमित्यादिः, न व्यक्तं वर्त्म याथात्म्यं यस्य तस्मै, किं वक्तुमित्यत आह—द्वारकायामिति । बालैरज्ञैः यथा बालः क्रीडायां नृपः कृतः नृपत्वेन कल्प्यते, तथा त्वमप्यबुधोऽज्ञो द्वारकायां नृपत्वेन कल्पित इति, अतस्त्वं न वासुदेव इति पूर्वोक्तं च वक्तुमित्यर्थः ॥ ३ ॥

मु ॥ ततः किमकरोदित्यत्राहुः—दूतं चेति ॥ चकारः समुच्चयार्थः, आत्मानम् अच्युतं मेने, तथा मत्वा दूतं च प्राहिणोत् प्रेषयामासेत्यर्थः, तन्मननस्य भ्रान्तित्वं स्थापयन्नाह—मन्दः कृष्णायाव्यक्तवर्त्मने इति । महायोगिनामपि तद्योगाक्षुण्णस्वरूपरूपगुणादिमाहिम्न इत्यर्थः, अत एवंविधाय दूतप्रेषणात् तस्य मूढत्वं मन्दशब्देनोच्यते, बालकृतः क्रीडायां बालैः कृतः स्वेषां मध्ये नृपः अयं राजेति कल्पित इत्यर्थः,बालो यथा तेषु कश्चित् बाल इव अबुधः अज्ञः कल्पित इत्यर्थः, कश्चिदिति शेषः, द्वारकायां वर्तत इत्यध्याहारः, इत्युक्त्वा दूतं प्राहिणोदित्यन्वयः ॥ ३ ॥

---

* अयं श्लोको यथोपलम्भं संयोजितः ॥

दूतस्तद्द्वारकामेत्यसभायामास्थितंप्रभुम्।कृष्णंकमलपत्राक्षंराजसन्देशमब्रवीत्॥ ४
वासुदेवोऽवतीर्णोऽहमेकएवनचापरः।भूतानामनुकम्पार्थंत्वंतुमिथ्याभिधान्त्यज॥ ५
यानि त्वमस्मच्चिह्नानि मौढ्याद्बिभर्षि सात्वत ।
त्यक्त्वैहि मां त्वं शरणं नोचेद्देहि ममाऽहवम् ॥ ६

श्रीशुकउवाच—

विकत्थनन्तदाकर्ण्यपौण्ड्रकस्याल्पमेधसः। उग्रसेनादयस्सभ्याउच्चकैर्जहसुस्तदा॥ ७
उवाचदूतम्भगवान्परिहासकथामनु। उत्स्रक्ष्येमूढचिह्नानियैस्त्वमेवंविकत्थसे॥ ८

---

वी ॥ दूतइति ॥ तत् ततः राजसन्देशं राज्ञः पौण्ड्रकस्य सन्देशम् ॥ ४ ॥

मु ॥ दूत इति ॥ तद्द्वारकां तां द्वारकामित्यर्थः, सा च सा द्वारकेति विग्रहः, यद्वा तदित्यव्ययम्, तत इत्यर्थः, 'प्रभुं' 'कमलपत्राक्षम्' इत्याभ्यां तादृशप्राभवं पुण्डरीकाक्षत्वं च कस्यापि दुर्लभमिति स्फोर्यते ॥ ४ ॥

वी ॥ तदेवाह—वासुदेव इति ॥ नचापरः न त्वं वासुदेव इति भावः, किन्तु त्वं भूतानां स्वसम्बन्धविषयभूतानामनुकम्पार्थं मिथ्या वासुदेवः, अतस्तामभिधामाख्यां त्यज ॥ ५ ॥

मु ॥ दूतोक्तिप्रकारमाह—वासुदेव इत्यादिना ॥ भूतानामनुकम्पार्थम् अनुकम्पया भूतानां रक्षणार्थमित्यर्थः, "कृपा दयाऽनुकम्पा स्यात्" इत्यमरः, मिथ्याभिधां वासुदेव इति मिथ्याकल्पितसंज्ञां त्यज ॥ ५ ॥

वी ॥ यानीति ॥ हे सात्वत अस्मदसाधारणानि यानि चिह्नानि शङ्खचक्रादीनि त्वं मौढ्याद्बिभर्षि, तानि त्यक्त्वा मां शरणमेह्यागच्छ, नोचेत् शरणं नाभ्येषि तर्हि आहवं युद्धं देहि युध्यस्वेत्यर्थः ॥ ६ ॥

मु ॥ यानि अस्मच्चिह्नानि बिभर्षि, तानीति शेषः, त्यक्त्वा मां शरणमेहि रक्षकं भज, नो चेत् शरणं गतो न स्याश्चेत मम आहवं युद्धं देहि मया सह युद्धं कुर्वित्यर्थः ॥

वी ॥ विकत्थनमिति ॥ तद्दूतोक्तमल्पबुद्धेः पौण्ड्रकस्य विकत्थनमाकर्ण्य सभ्यास्सभायां स्थिताः जहसुः हसितवन्तः ॥ ७ ॥

मु ॥ अल्पमेधसः क्षुद्रबुद्धेः पौण्ड्रकस्य तद्विकत्थनं दुष्प्रलापमाकर्ण्य सभ्याः सभासदः उच्चकैः जहसुः अट्टहासं चक्रुः ॥ ७ ॥

वी ॥ उवाचेति ॥ परिहासकथामनु उग्रसेनादीनां परिहासकथनानन्तरं प्राह, तदेवाह—उत्स्रक्ष्य इति । हे मूढ चिह्नानि त्वया धृतानि उत्स्रक्ष्ये त्याजयिष्यामि, तत्र हेतुत्वेन विशिनष्टि—यैश्चिह्नैः त्वमेवं विकत्थसे ॥ ८ ॥

मु ॥ एवं सभ्यकृत्यमुक्त्वा श्रीकृष्णोक्तिमाह—उवाचेति ॥ परिहासकथमनु उवाच परिहासवार्तानुसारेणैव जगादेत्यर्थः, तदाह—उत्स्रक्ष्य इति । हे मूढ चिह्नानि त्वया धृतानि मदसाधारणचिह्नानि उत्स्रक्ष्ये त्याजयिष्यामीत्यर्थः, यैश्चिह्नैः त्वम् एवं विकत्थसे दुष्टं प्रलपसि ॥ ८ ॥

---

१. कत्थनन्तदुपाकर्ण्य. पा ॥

मुखन्तदपिधायाज्ञकङ्क[1]गृध्रवटैर्वृतः । शयिष्यसेहतस्तत्रभविताशरणंशुनाम् ॥ ९
इतिदूत[2]स्तमाक्षेपंस्वामिनेसर्वमाहरत्।कृष्णोऽपिरथमास्थायकाशीमुपजगामह॥ १०
पौण्ड्रकोऽपितदुद्योगमुपलभ्यमहारथः।अक्षौहिणीभिस्सहितोनिश्चक्रामपुराद्द्रुतः॥
तस्य काशीपतिर्मित्रं पार्ष्णिग्राहोऽन्वयान्नृपः ।
[3]अक्षौहिणीभिस्तिसृभिरपश्यत्पौण्ड्रकं हरिः ॥ १२
[4]शङ्खार्यसिगदाशार्ङ्गश्रीवत्साद्युपलक्षितम् ।

---

वी ॥ मां शरणमेहीत्यस्योत्तरमाह—मुखमिति ॥ हे अज्ञ तत् येनेत्थं विकत्थितं तन्मुखमपिधायाच्छाद्य कङ्कादिभिः वृतः शयिष्यसे, वटाः कङ्कादिवत् पक्षिविशेषाः, ततस्तत्र शयनस्थले भवान् शुनां शरणं भविता भविष्यति, मया हतं शयितं च त्वां श्वसृगालादयः खादिष्यन्तीति भावः ॥ ९ ॥

मु ॥ 'मां शरणमेहि' इत्यस्योत्तरमाह—मुखमिति ॥ हे अज्ञ कङ्कादयः पक्षिविशेषाः मांसभक्षकाः, तेषां चयैः वृतः मया हतः तन्मुखं तादृशप्रलापयुक्तं मुखं पिधाय आच्छाद्य यदा शयिष्यसे दीर्घनिद्रां यास्यसीत्यर्थः, तदा तत्र स्थले शुनां शरणं भविता आश्रयो भवितासीत्यर्थः ॥ ९ ॥

वी ॥ इतीति ॥ आक्षेपमधिक्षेपं स्वामिने पौण्ड्रकाय समाहरत् आगत्य न्यवेदयदित्यर्थः, कृष्णोऽपीति । रथमास्थाय अधिष्ठाय काशीमुपजगाम तत्समीपमुपजगामेत्यर्थः ॥ १० ॥

मु ॥ तमाक्षेपं श्रीकृष्णोक्तमाक्षेपवचनं सर्वं स्वामिने आहरत् आनिनाय तस्मै न्यवेदयदित्यर्थः, अथ श्रीकृष्णयात्रामाह—कृष्णोऽपीत्यादिना । रथम् आस्थाय आरुह्य काशीं पुरीं प्रति उपजगाम ॥ १० ॥

वी ॥ पौण्ड्रकोऽपीति ॥ तस्य कृष्णस्योद्योगमुपगम्य उपलभ्य ज्ञात्वा द्रुतं शीघ्रं पुरात्कारूषपुरान्निश्चक्राम,यद्वा पौण्ड्रकस्य तदा मित्रपुरेऽवस्थानात्काशीपुरादित्यर्थः ॥

मु ॥ पौण्ड्रकोऽपि तम् उद्योगम् उपलभ्य ज्ञात्वा 'तदुद्योगम्' इति पाठे तस्य कृष्णस्य उद्योगम् ॥ ११ ॥

वी ॥ तस्येति ॥ तस्य पौण्ड्रकस्य मित्रं सखा काशीपतिः काशीराजः पार्ष्णिग्राहः पृष्ठतोरक्षकः सहायभूतस्सन् तिसृभिरक्षौहिणीभिस्सह अन्वयात् अनुजगाम, तदा हरिः कृष्णः पौण्ड्रकं ददर्श ॥ १२ ॥

मु ॥ तस्येति ॥ तस्य मित्रं सखा काशीपतिः पार्ष्णिग्राहः पृष्ठतोरक्षकस्सन् अन्वयात् अन्वगच्छत् , तस्य सैन्यसंख्यामाह—अक्षौहिणीभिस्तिसृभिरिति । ताभिरुपलक्षितस्सन्नित्यर्थः, हरिः पौण्ड्रकम् अपश्यत्, यद्वा तिसृभिरक्षौहिणीभिस्सहितं पौण्डकम् अपश्यदिति वा ॥ १२ ॥

वी ॥ कथंभूतं?शङ्खादिभिरुपलक्षितं तत्र अरि अरयुक्तं चक्रं कौस्तुभमणिं बिभ्राणं

१. गृध्रचयैर्वृतः. मु-भा-प्र-पाठः ॥ २. तदाक्षेपम्. पा ॥ ३. एतच्छ्लोकानन्तरं 'तमयान्तं रथोपस्थे' इति पादमात्रं कचिदुपलभ्यते॥ नचेदं व्याख्यातृभिः परामृष्टम् ॥ ४. शङ्खाद्यसि. मु-भा-प्र. पा॥

बिभ्राणं कौस्तुभमणिं वनमालाविभूषितम् ॥ १३

कौशेयवाससीपीतेवसानंगरुडध्वजम्।अमूल्यमौल्याभरणंस्फुरन्मकरकुण्डलम्॥१४

दृष्ट्वातमात्मनातुल्यवेषंकृत्रिममास्थितम् । यथानटंरङ्गगतंविजहासभृशंहरिः ॥ १५

शूलैर्गदाभिःपरिघैश्शक्तिभिःप्रासतोमरैः। असिभिःपट्टसैर्बाणैःप्राहरन्नरयोहरिम्॥

कृष्णस्तु तत्पौण्ड्रककाशिराजयोर्बलं गजस्यन्दनवाजिपत्तिमत् ।

गदासिचक्रेषुभिरार्दयद्भृशं यथा युगान्ते हुतभुक्पृथक्प्रजाः ॥ १७

आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणा च खण्डितैः ।

---

वनमालया विराजितम् ॥ १३ ॥

मु ॥ तस्य कृत्रिमभगवच्चिह्नवैशिष्ट्यमाह—शङ्खेति ॥ अत्र प्रथमादिशब्देन चक्रं च द्वितीयादिशब्देन किरीटं चोच्यते ॥ १३ ॥

वी॥ पीते पिशङ्गे कौशेयवस्त्रे वसानं परिदधानं गरुडः कृत्रिमो ध्वजे यस्य तम् अमूल्यमनर्घं मौल्याभरणं यस्य स्फुरन्ती मकराकारे कुण्डले यस्य ॥ १४ ॥

मु ॥ 'अमूल्यमौल्याभरणम्' इति पाठे अमूल्यो मौलिः किरीटम् आभरणं यस्येत्यर्थः, अमूल्यशब्दोऽनर्घवाचकः ॥ १४ ॥

वी ॥ आत्मना कृष्णेन तुल्यो वेषो यस्य तम् अथापि कृत्रिमं वेषमास्थितमाश्रितं, तत्र दृष्टान्तः –यथा नटं रङ्गगतमिति । रङ्गे नृत्यस्थले गतं नटमिव स्थितमित्यर्थः, तमेवंविधं दृष्ट्वा हरिर्भृशं प्रहसितवान् ॥ १५ ॥

मु ॥ कौशेयवाससी परिधानोत्तरीये इत्यर्थः, कृत्रिमं कल्पितम् आत्मना तुल्यं वेषम् आत्मवेषतुल्यं वेषम् आस्थितं प्राप्तवन्तं रङ्गगतं नाट्यस्थलगतं नटं यथा रामादिवेषधारिणं नटमिव स्थितं दृष्ट्वा भृशं जहास अट्टहासं कृतवान् ॥ १५ ॥

वी ॥ शूलैरिति ॥ तदा अरयः शत्रवः कृष्णं शूलादिभिः प्राहरन् प्रत्याहतवन्तः ॥

मु ॥ अथ त्रिभिरन्योन्ययुद्धमाह—शूलैरित्यादिभिः भूतपतेरिवोल्बणमित्यन्तैः श्लोकैः॥ 'शक्त्यृष्टिप्रासतोमरैः' इत्यत्र अष्टिप्रासावपि युद्धसाधनविशेषौ द्रष्टव्यौ, अरयः शूलाद्यायुधविशेषैः हरिं प्राहरन् जघ्नुः ॥ १६ ॥

वी ॥ कृष्णस्त्विति ॥ गजादयोऽस्य सन्तीति तथा चतुरङ्गमित्यर्थः, तत्पौण्ड्रककाशिराजयोः बलं गदादिभिः भृशम् आर्दयत् पीडयामास आजघ्न इति यावत्, यथा युगान्ताग्निः पृथक्प्रजाः चतुर्विधभूतग्रामान् अर्दयिष्यति, तद्वत् ॥ १७ ॥

मु ॥ श्रीकृष्णयुद्धक्रममाह—कृष्णस्त्विति ॥ आर्दयत् अपीडयत्,अत्रानुगुणं दृष्टान्तमाह—यथेति । युगान्ते हुतभुक् प्रलयाग्निः पृथक्प्रजा यथा ब्राह्मण्यादिजातिविभक्ताः प्रजा इवेति ॥ १७ ॥

वी॥अयोधनमिति॥ अरिणा चक्रेण चकाराद्गदादिभिश्च खण्डितैः रथादिभिः तदायोधनं युद्धस्थलं मनस्विनां शूराणां चिरं सन्तोषावहं सत् रेजे, भूतपतेः आक्रीडनमिव कल्पान्ते रुद्रस्य क्रीडास्थानमिव उल्बणं दारुणं सत् बभाविति संबन्धः ॥ १८ ॥

बभौ [1]चिरं मोदवहं मनस्विनामाक्रीडनं भूतपतेरिवोल्बणम् ॥ १८

अथाऽऽह पौण्ड्रकं शौरिर्भोभो पौण्ड्रक यद्भवान् ।
दूतवाक्येन मामाह तान्यस्त्राण्युत्सृजामि ते ॥ १९

त्याजयिष्येऽभिधानं मे यत्त्वयाऽज्ञ मृषा धृतम् ।
व्रजामि शरणं तेऽद्य यदि नेच्छामि संयुगम् ॥ २०

इति क्षिप्त्वा शितैर्बाणैर्विरथीकृत्य पौण्ड्रकम् ।
शिरोऽवृश्चद्रथाङ्गेन वज्रेणेन्द्रो यथा गिरेः ॥ २१

तथा काशिपतेः कायाच्छिर उत्कृत्य पत्रिभिः ।

---

मु ॥ तद्युद्धं सोपमानं वर्णयति—आयोधनमिति ॥ अरिणा चक्रेण खण्डितैः रथैः वाजिभिः कुञ्जरैः द्वौ पादौ येषां ते द्विपदो मनुष्याः खराः गर्दभविशेषाः उष्ट्राः क्रमेलकाः तैश्च चितं व्याप्तं मनस्विनां धैर्यवतां मोदवहं सन्तोषावहं तदायोधनं युद्धं भूतपतेः आक्रीडनमिव कल्पान्ते शिवस्य क्रीडास्थानमिव उल्बणं प्रवृद्धं बभूव ॥ १८ ॥

वी ॥ अथेति॥ उक्तिमेवाह—भोभोइत्यादिना संयुगमित्यन्तेन ॥ भोभोः पौण्ड्रक दूतवाक्यमुखेन भवान्मां प्रति यदाह—' यानि त्वमस्मच्चिह्नानि ' इत्यादि, तान्येवास्त्राण्युत्सृजामि प्रयोक्ष्यामि ॥ १९ ॥

मु ॥ अथेति ॥ किमित्याहेत्यत्राह—भोभो इति, भवच्छब्दयोगादाहेति प्रथमपुरुषः आत्थेत्यर्थः, दूतवाक्येन दूतोक्तिद्वरा यद्भवानाह यानि दुर्वचनानि त्वमात्थेत्यर्थः, तानि तावन्त्यस्त्राणि ते तुभ्यम् उत्सृजामि ॥ १९ ॥

वी ॥ हे अज्ञ मे मत्संबन्धि मदसाधारणमित्यर्थः, अभिधानं नाम ते त्वया मृषा धृतं तत्त्याजयिष्ये, यदि संयुगं नेच्छामि संयुगाद्भीतोऽस्मि चेत् त्वां शरणं व्रजामि नाहं भीत इत्यर्थः ॥ २० ॥

मु ॥ हे अज्ञ यन्मे अभिधानं त्वया मृषा मिथ्या धृतम्, '' सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते '' इत्यादिनिर्वचनसिद्धान्वर्थवासुदेवनामेत्यर्थः, तत् त्याजयिष्ये मोक्षयिष्यामि, एवमकरणे स्वकर्तव्यं प्रतिजानीते—व्रजामीति।संयुगं युद्धं यदि नेच्छामि,तर्हि अद्यैव ते शरणं यामि तव शरणागतो भवामीत्यर्थः ॥ २० ॥

वी ॥ इतीति ॥ उक्त्वेति शेषः, रथाङ्गेन चक्रेण शिरोऽवृश्चत् चिच्छेद, यथेन्द्रो वज्रेण गिरेश्शृङ्गं तद्वत् ॥ २१ ॥

मु ॥ इति क्षिप्त्वा वचनैराक्षिप्य पौण्ड्रकं शितैः तीक्ष्णैः बाणैः विरथीकृत्य रथाङ्गेन सुदर्शनेन शिरः अवृश्चत् अच्छिनत्, '' ओ व्रश्चू च्छेदने '' इति धातोर्लङ्, अत्रानुगुणदृष्टान्तमाह—वज्रेणेति । गिरेश्शिर इति योज्यम्, शृङ्गमिवेत्यर्थः ॥ २१ ॥

वी ॥ तथेति ॥ पत्रिभिः बाणैः काशिपतेः कायाच्छिरः उत्कृत्य उत्प्लुतं यथा तथा छित्वा काशीपुर्यां न्यपातयत् अनिलो वायुः पद्मकोशमिव ॥ २२ ॥

---

१. चितम् . मु. भा. प्र. पा ॥

न्यपातयत्काशिपुर्यां पद्मकोशमिवानिलः ॥ २२

एवं मत्सरिणं हत्वा पौण्ड्रकं ससखं हरिः। द्वारकामाविशत्सिद्धैर्गीयमानकथामृतः॥
स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः। बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवत्॥
शिरः पतितमालोक्य राजद्वारि सकुण्डलम्। किमिदं कस्य वा वक्त्रमिति संशिशियिरे जनाः
राज्ञः काशिपतेर्ज्ञात्वा महिष्यः पुत्रबान्धवाः। पौराश्च हत राजानो नाथ नाथेति प्रारुदन्॥

सुदक्षिणस्तस्य सुतः कृत्वा संस्थाविधिं पितुः।

---

मु ॥ पतत्रिभिः बाणैः काशीपतेः पौण्ड्रकस्य कायात् शिरः उत्कृत्य छित्त्वा काशिपुर्यां न्यपातयत्, ह्रस्व आर्षः, तस्य हेलया छेदने दूरपातने च अनुगुणमुपमानमाह—पद्मेति ॥ २२ ॥

वी ॥ एवमिति ॥ ससखं सकाशिराजं मत्सरिणं शत्रुं पौण्ड्रकं हत्वा सिद्धैर्गीयमाना कथैवामृतं यस्य स हरिः द्वारकां विवेश ॥ २३ ॥

मु ॥ ततो हरिः किमकरोदित्यत्राह—एवमिति ॥ कथाया अमृतत्वरूपणमतिभोग्यस्वभावत्वादमृताख्यमोक्षप्रदायित्वाच्च ॥ २३ ॥

वी ॥ सइति॥ स पौण्ड्रकः भगवतः श्रीकृष्णस्य ध्यानेन ध्वस्तान्यखिलानि बन्धनानि कर्मबन्धनानि यस्य सः, हेतुगर्भमिदम्, तथा हरेः कृष्णस्य रूपं रूपतुल्यं रूपं स्ववेषं बिभ्राण इत्यपि तत्त्वात्तन्मयस्तदीयवेषप्रचुरो बभूव साधर्म्यं गत इत्यर्थः, शिरश्छेदेन दोषस्य प्रायश्चित्तं कृतम्, अतो भगवद्ध्यानस्य फलं तत्साधर्म्यं लब्धमिति भावः ॥ २४ ॥

मु॥ नन्वेवंविधभगवद्द्वेषिणः का गतिरित्यत्राह—स इति॥ भगवद्ध्यानेन भयप्रसक्तभगवच्चिन्तनेन प्रध्वस्ताखिलबन्धनः निरस्तदेहान्तरभूतकर्मरूपबन्धनः अतएव हरेः स्वरूपं बिभ्राणइति तद्देहसदृशाप्राकृतदेहधारणोक्तिः, तन्मयोऽभवदिति ''भोगमात्रसाम्यलिङ्गाच्च'' इति सूत्रोक्तनिरतिशयानन्दानुभवादिभोगप्राचुर्यसाम्योक्तिः, यद्वा स्वरूपं वेषं बिभ्राणः तन्मयोऽभवत्, शरीरभेदेन द्वेषस्य प्रायश्चित्तं कृतम्, अतो भगवद्ध्यानस्य फलमनन्तरं लब्धमित्यभिप्राय इति ॥ २४ ॥

वी ॥ शिरइति ॥ प्रथमं किमिदमिति, पश्चात्सकुण्डलत्वाच्छिर इति, ततः कस्येदं मुखमिति संशिशियिरे संशयं चक्रुः ॥ २५ ॥

मु ॥ ततः किम्?, अत आह—शिर इति ॥ जनाः सकुण्डलं राजद्वारि पतितं शिर आलोक्य प्रथमं किमिदमिति सामान्यतः संशय्य तदनु वक्त्रमिति विभाव्य तदनु तच्च कस्य वेति संशिशियिरे संशयं चक्रुः ॥ २५ ॥

वी ॥ राज्ञइति ॥ ततः क्रमेण काशीपतेः राज्ञ एवेदं शिरः इति ज्ञात्वा निश्चित्य महिष्यस्तस्य भार्याः पुत्रादयश्चेत्थं रुरुदुः ॥ २६ ॥

मु ॥ अथ निश्चित्य विलेपुरित्याह— राज्ञ इति ॥ प्रारुदन् प्रकर्षेण अरुदन्॥ २६ ॥

वी ॥ पुत्रइति॥ तस्य काशिराजस्य,सुदक्षिणो नाम पुत्र आसीदिति वाक्यान्तरम्, स च सुदक्षिणः पितुः संस्थाविधिमुत्तरक्रियां कृत्वा मत्पितृहन्तारं हत्वा पितुरपचितिम्

निहत्य पितृहन्तारं यास्याम्यपचितिं पितुः ॥ २७

इत्यात्मनाभिसन्धायसोपाध्यायोमहेश्वरम्। सुदक्षिणोऽर्चयामासपरमेणसमाधिना॥
पितृहन्तृवधोपायं सवव्रे[1]परमेश्वरम्। प्रीतोविविक्ते भगवांस्तस्मै वरमदाद्भवः॥२९

रुद्र उवाच—

त्वंदक्षिणाग्निंपरिचरब्राह्मणैस्सम्यगृत्विजम्।अभिचारविधानेनसचाग्निःप्रमथैर्वृतः॥
साधयिष्यतिसङ्कल्पमब्रह्मण्ये प्रयोजितः।इत्यादिष्टस्तथाचक्रे कृष्णायाभिचरन्कुधीः

---

ऋणापनयनात्मिकां निष्कृतिं यास्यामि ॥ २७ ॥

मु ॥ अथ सुदक्षिणाख्यस्य तत्पुत्रस्य कृत्यमाह—सुदक्षिण इत्यादिना ॥ पितुः संस्थाविधिम् उत्तरक्रियां कृत्वा पितृहन्तारं कृष्णं निहत्य पितुरपचितिं निष्कृतिं यास्यामि प्राप्स्यामि ॥ २७ ॥

वी ॥ इतीत्थम् अभिसन्धायोपाध्यायेन सहितः परमेण समाधिना ध्यानयोगेन महेश्वरं रुद्रमाराधयामासेति संबन्धः ॥ २८ ॥

मु ॥ इत्यात्मना अभिसंधाय बुद्ध्या निश्चित्य सोपाध्यायः विपश्चिता याजकेन सहितः परमेण निश्चलेन समाधिना ध्यानेन महेश्वरमुग्रफलप्रदातारं शिवम् अर्चयामास ॥ २८ ॥

वी॥ पितृहन्तुरिति॥सः सुदक्षिणः प्रसन्नं परमेश्वरं रुद्रं पितृहन्तृवधोपायमेव वरं वव्रे "शास्त्रदृष्ट्या तूपदेशो वामदेववत्"इति न्यायेन महेश्वरंपरमेश्वरमिति च मुनिप्रयोगः, प्रीतइति—विविक्ते एकान्ते प्रीतः प्रसन्नो भवः रुद्रः तस्मै वरं ददौ ॥ २९ ॥

मु ॥ पितृहन्तुः श्रीकृष्णस्य वधोपायमेव वरम् ईश्वरं वव्रे ॥ २९ ॥

वी ॥ वरमेवाह—त्वमिति ॥ सम्यगृत्विजो यस्य तं दक्षिणाग्निमभिचारहोमेन परिचर आराधय, स च परिचरितोऽग्निः प्रमथैः परिवृतः अब्रह्मण्ये प्रयुक्तः सङ्कल्पं त्वदभिसन्धिं साधयिष्यति, ब्रह्मण्ये प्रयोक्तातु स्वयमेव हन्यत इति भावः , इतीति—इतीत्थम् आदिष्टः कुबुद्धिः सुदक्षिणः तथा यथोक्तं कृष्णायाभिचरन् द्रुह्यन् चक्रे॥३०॥३१॥

मु॥ एवं वरणानन्तरं प्रसन्नेनेश्वरेणोक्तप्रकारमाह—त्वमिति॥दक्षिणाग्निम् अग्नित्रयेऽपि दक्षिणाग्नेरन्तकदिगवस्थितत्वेन मारणकर्मसु प्रशस्तत्वात् तद्ग्रहणम् , तं विशिनष्टि—सम्यगृत्विजमिति । सम्यञ्चः तद्विधानकोविदाः ऋत्विजो यस्मिंस्तं ब्राह्मणैस्सह परिचर जुहुधि, अभिचारविधानेन मारणकर्मविधिना परिचरेत्यन्वयः, तत्फलमाह—सचेति । प्रमथैः मत्पार्षदैः गणाधिपैः वृतस्सन् सचाग्निः ते संकल्पं साधयिष्यति सफलीकरिष्यति, अब्रह्मण्ये ब्राह्मणेष्वसाधौ प्रयोजितस्साधयिष्यतीत्यन्वयः, ब्रह्मण्ये कृष्णे प्रयोजितस्तु विपरीतो भविष्यतीति सूचितम्, इति एवम् आदेष्टः उपदिष्टः सः कृष्णाय अभिचरन् कृष्णमरणाय मारणहोमं कुर्वन्नित्यर्थः, प्रतिगृहीतनियमस्सन् तथा चक्रे ईश्वरोक्तप्रकारेणैव मारणहोमं चकारेत्यर्थः, यद्वा सम्यगिति छेदः, "यज्ञस्य देवमृत्विजम्" इति श्रुतेः ऋत्विज इव स्वनियोगकारिणमग्निं ब्राह्मणैस्सह सम्यक्परिचरेत्यर्थः॥

---

१. वरमीश्वरम्, मु-भा-प्र. पा ॥

ततोऽग्निरुत्थितःकुण्डान्मूर्तिमानतिभीषणः ।तप्तताम्रशिखाश्मश्रुरङ्गारोद्गारिलोचनः
दंष्ट्रोग्रभ्रुकुटीदन्तकठोरास्यस्स्वजिह्वया। आलिहन्सृक्किणीनग्नोविधून्वंस्त्रिशिखंज्वलन्
पद्भ्यांतालप्रमाणाभ्यांकम्पयन्धरणीतलम्। सोऽभ्यधावद्वृतोभूतैर्द्वारकांप्रदहन्दिशः
तमाभिचारदहनमायान्तं द्वारकौकसः।विलोक्यतत्रसुस्सर्वे वनदाहे यथामृगाः।।३५
अक्षैस्सभायां क्रीडन्तं भगवन्तंभयातुराः। त्राहित्राहित्रिलोकेशवह्नेःप्रदहतःपुरम्।।
श्रुत्वा तज्जनवैक्लब्यं दृष्ट्वा स्वानांच साध्वसम् ।

---

वी॥ततइति॥कथम्भूतोऽग्निः? मूर्तिमान् विग्रहधारी अतिदारुणः तप्तं यत्ताम्रं तद्व-च्छिखा श्मश्रूणि च यस्य अङ्गारोद्गारिणी लोचने यस्य दंष्ट्राभिरुग्रैश्च भ्रुकुट्या दन्तैः कठोरम् आस्यं यस्य सः स्वजिह्वया सृक्किणीमुत्तरोष्ठोर्ध्वदेशमालिहन् आस्वादयमानः तिस्रः शिखाः यस्य तत् शूलं धून्वन् कम्पयन् ॥ ३२ ॥ ३३ ॥

मु ॥ ततः 'तथा चक्रे' इत्युक्तयज्ञकरणानन्तरं कुण्डात् होमकुण्डात् मूर्तिमान् विग्रहवान् अग्निरुत्थितः, तं विशिनष्टि—अतिदारुण इत्यादिना । अतिभयंकरइत्यर्थः, तप्तताम्रमिव शिखाच श्मश्रूणि च यस्य सः, अङ्गारान् उद्गिरत इति अङ्गारोद्गारिणी लोचने यस्य सः ॥ ३२ ॥

मु ॥ दंष्ट्राभिः उग्रैः भ्रुकुटीदण्डैश्च कठोरं भयानकम् आस्यं यस्य सः सृक्किणी ओष्ठप्रान्तौ जिह्वया आलिहन् नग्नः दिगम्बरः तिस्रः शिखाः यस्य तत् त्रिशिखं शूलं धून्वन् हस्तेन कम्पयन् ज्वलन् मुखोद्गताभिः ज्वालाभिः जाज्वल्यमान इत्यर्थः ॥ ३३ ॥

वी ॥ सइति ॥ सोऽग्निः भूतैः प्रमथैः वृतः ॥ ३४ ॥

मु ॥ तालप्रमाणाभ्यां तालवृक्षप्रमाणाभ्यां पद्भ्याम् अवनीतलं कम्पयन्निव उत्थित इत्यन्वयः, स इति—दिशः प्रदहन्निव उत्थित इत्यन्वयः, यद्वा—एवंविधः सः भूतैः भयंकराकारैः देवयोनिविशेषैः वृतस्सन् द्वारकां प्रत्यभ्यधावत् ॥ ३४ ॥

वी ॥ तमिति ॥ आयान्तम् आगच्छन्तं विलोक्य तत्रसुः, वनदाहे सति यथा मृगास्त्रस्यन्ति, तद्वत् ॥ ३५ ॥

मु ॥ तमिति ॥ आयान्तम् अभिचारदहनम् अभिचरतीत्यभिचारः कृत्या तत्संबन्धिनम् आभिचारिकम् अभिचारकर्मोत्थम् अग्निं द्वारकौकसः द्वारवतीवासिनः विलोक्य तत्रसुः बिभ्युः ॥ ३५ ॥

वी ॥ अक्षैरिति ॥ पुरं द्वारकां प्रदहतो वह्नेस्सकाशादस्मान् त्राहीत्याहुरिति शेषः ॥ ३६ ॥

मु ॥ अक्षैरिति ॥ पाशकैः क्रीडन्तं हेयप्रतिभटस्य तस्य एवं दुर्व्यसनासक्तिर्मनुष्यसाजात्यविडम्बनामात्रम्, हेलयैव शत्रुसंहारशक्त्यादिसंपत्ति च स्फोरयन्नाह—भगवन्तमिति । वह्नेरिति पञ्चमी, त्राहित्राहीति द्विरुक्तिर्भयप्रयुक्ता, त्रिलोकेशेति रक्षकान्तरव्यावृत्तिद्योतकसंबुद्धिः ॥ ३६ ॥

वी ॥ श्रुत्वेति॥ तज्जनानां वैक्लब्यमधैर्यं श्रुत्वा स्वानां साध्वसं भयं च दृष्ट्वा प्रहस्योवाच, तदेवाह—शरण्योऽहमविता चास्मि, भयं मा कुरुत दुष्टजनात्संसाराच्च संभवद्भयं वो न विद्यत इति ॥ ३७ ॥

---

१. भ्रुकुटीदण्ड. मु-भा-प्र. पा ॥ २. सृक्किणी. मु-भा-प्र. पा॥ ३. अवनीतलम् . मु-भा-प्र. पा ॥

शरण्यस्संप्रहस्याऽऽह माभैष्टेत्यविताऽस्म्यहम् ॥ ३७

सर्वस्यान्तर्बहिस्साक्षी कृत्यांमाहेश्वरींविभुः।विज्ञायतद्विघातार्थंपार्श्वस्थंचक्रमादिशत्

तत्सूर्यकोटिप्रतिमं सुदर्शनं जाज्वल्यमानं प्रलयानलप्रभम् ।
स्वतेजसा खं ककुभोऽथ रोदसी ग्रसन्मुकुन्दास्त्रमथाग्निमार्दयत् ॥ ३९

कृत्यानलः प्रतिहतस्सरथाङ्गपाणे[१]स्तत्तेजसा नृप विभग्नमुखो निवृत्तः ।
वारणासीं प्रति समेत्य सुदक्षिणन्तं सर्त्विग्जनं समदहत्स्वकृतोऽभिचारः॥

मु ॥ तत् पूर्वोक्तं जनस्य वैक्लब्यं भयविह्वलत्वं श्रुत्वा स्वानां स्वकीयानां साध्वसं भयं च दृष्ट्वा शरण्यः शरणसमर्थः विभुः तेषां प्रभुः, रक्षणसमर्थस्य प्रभोः स्वकीयापन्निस्तार उचित एवेति भावः, प्रहस्य मा भैष्ट भयं मा भजत इति तान् प्राह ॥ ३७ ॥

वी ॥ सर्वस्येति ॥ सर्वस्य लोकस्यान्तर्बहिश्च साक्षाद्द्रष्टा,हेतुगर्भमिदम्, अतो माहेश्वरीं कृत्यां विज्ञाय तद्विघातार्थं कृत्यानाशनार्थं पार्श्वस्थं चक्रं सुदर्शनमाज्ञापयामास ॥

मु ॥ माहेश्वरीं महेश्वरप्रयुक्तां कृत्यां कांचिद्देवतां "कृत्या क्रियादेवतयोः" इति नानार्थपाठात्, विज्ञायेति स्वयमेव तद्विवेके हेतुः—सर्वस्यान्तर्बहिस्साक्षीति । सर्वलोकस्य मानसिकवाचिककर्मसाक्षाद्द्रष्टेत्यर्थः, विभुरिति सर्ववस्तुबाह्याभ्यन्तरव्यापीति वार्थः, तद्विघातार्थं दक्षिणभागस्थितं चक्रम् आदिशत् आज्ञापयामास ॥ ३८ ॥

वी ॥ तदिति ॥ तद्भगवता आदिष्टं चक्रं कर्तृ अग्निम् आर्दयत् , चक्रं कथंभूतं? सूर्याणां कोटिः प्रतिमा तुला यस्य तत् सुदर्शनाख्यम् अतिशयेन ज्वलत् प्रलयाग्नेरिव प्रभा यस्य तत् स्वतेजसा खमन्तरिक्षं रोदसी द्यावापृथिव्यौ ककुभो दिशश्च प्रकाशयदिति शेषः, मुकुन्दस्यैव असाधारणमस्त्रम् ॥ ३९ ॥

मु ॥ तदिति ॥ सूर्यकोटिप्रतिममित्यनेन कोटिसूर्याणां हेलया बाह्यान्धकारनिरसनमुच्यते, प्रभया जाज्वल्यमानमिति तत्स्वरूपकथनम् , अनलप्रभमिति अहितभस्मीकरणमहिमोक्तिः सुदर्शनं नाम मुकुन्दस्य अस्त्रं चक्रं द्रष्टॄणां खं नेत्रेन्द्रियं चेति जातावेकवचनम्,ककुभो दिशश्च रोदसी द्यावापृथिव्यौ च आर्दयत् लक्ष्यप्राप्तिपर्यन्तं मध्ये अपीडयदित्यर्थः, अथानन्तरम् अग्निं कृत्यानलम् आर्दयदिति ॥ ३९ ॥

वी ॥ अर्दितस्सन् किमकरोदित्यत आह—कृत्यानलइति ॥ रथाङ्गपाणेः तेन प्रसिद्धेन तेजसा तेजःप्रचुरेण सुदर्शनेन भग्नं मुखं यस्य सः प्रतिहतश्च अत एव निवृत्तः सः प्रसिद्धः कृत्यानलो हेनृप वाराणसीं प्रत्यागत्य स्वेन कृतः अभिचारो येन तम् ऋत्विग्भिः जनैश्च वर्तमानम् अभिचरति मारयतीति तथा स कृत्यानलः तं सुदक्षिणमदहत् ॥ ४० ॥

मु ॥ एवं भगवत्सुदर्शनप्रतिहतस्य कृत्यानलस्य कृत्यमाह—कृत्येति ॥ रथाङ्गपाणेः श्रीकृष्णस्य अस्त्रौजसा सुदर्शनबलेन तेजसा वा सकृदवभग्नमुखः स्वानुवर्तिभिः नृपैस्सहितं यथा तथा भग्नमुखस्सन् स्वकृताभिचारः स्वप्रयुक्तमारणकर्मोत्थः कृत्यानलः वाराणसीं प्रति समेत्य गत्वा सर्त्विग्जनम् ऋत्विग्जनैः इतरैश्च सह वर्तमानं तं सुदक्षिणं समदहत् भस्मीचकार ॥ ४० ॥

१. अस्त्रौजसा. मु-भा-प्र. पा ॥

चक्रं च विष्णोस्तदनु प्रविष्टं वाराणसीं साट्टसभालयापणाम् ।
सगोपुराट्टालककोष्ठ[1]संकुलां सकोशहस्त्यश्वरथान्नशालाम् ॥ ४१

दग्ध्वावाराणसींसर्वां[2]विष्णुचक्रंसुदर्शनम्।भूयःपार्श्वमुपातिष्ठत्कृष्णस्याक्लिष्टकर्मणः
यएतच्छ्रावयेन्मर्त्यउत्तमश्लोकचेष्टितम्।समाहितोऽनुशृणुयात्सर्वपापैःप्रमुच्यते॥४३

इति श्रीभागवते महापुराणे दशमस्कन्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

वी ॥ किञ्च—चक्रमिति ॥ तद्विष्णोश्चक्रं वाराणसीम् अनु कृत्यानलमनुसृत्य प्रविष्टं सत् अदहदिति पूर्वेण संबन्धः, कथंभूताम्?, अट्टादिभिस्सहितां, तत्र सभालयाः सभागृहाणि सभा आलयाश्चेति वा,अट्टालकाः उपरितनप्रदेशाः, गोपुरादिसहितैः *कोष्ठैः संकुलां व्याप्तां कोशादीनां शालाभिस्सहितां, तत्र कोशो धनम् ॥ ४१ ॥

मु ॥ तदनु भस्मीकरणानन्तरं विष्णोश्चक्रं च प्रविष्टं सत् वाराणसीं गत्वा कृष्णस्य पार्श्वं भूय उपातिष्ठदित्यन्वयः, तामेव विशिनष्टि— साट्टेति । अट्टाः मञ्चविशेषाः, सभालयाः सदोगृहाः, आपणाः पण्यवीथयः,तैः सहितां,गोपुराणि पुरद्वाराणि, अट्टालकाः वीथ्युभयपार्श्वबद्धगृहविशेषपङ्क्तयः, कोष्ठानि आयुधादिगृहाः, गोकुलानि गोनिलयाः, तैः सहितां, कोशाः अर्थौघाः, हस्तिनोऽश्वा रथाश्च तैः सहिताम् अदहदिति पूर्वेणान्वयः ॥ ४१ ॥

वी ॥ दग्ध्वेति ॥ भूयः पुनः अक्लिष्टकर्मणः उदारचेष्टितस्य श्रीकृष्णस्य पार्श्वम् उपातिष्ठत् पार्श्वसमीपे तस्थावित्यर्थः ॥ ४२ ॥

मु ॥ दग्ध्वेति॥अक्लिष्टकर्मणः सङ्कल्पमात्रावक्लृप्तजगन्निर्माणादिकर्मण इत्यर्थः, कृष्णस्य पार्श्वं भूयः उपातिष्ठत् उपागमत् ॥ ४२ ॥

वी ॥ उक्तकथाश्रवणादिफलमाह—यइति ॥ यः पुमान् एतदुत्तमश्लोकस्य चेष्टितं मर्त्यान्प्रति श्रावयेत्, यद्वा समाहितः शृणुयात्, स सर्वैः पापैः मुक्तो भवेत् ॥ ४३ ॥

मु ॥ अथैतद्वृत्तान्तश्रवणफलमाह—य इति ॥ यः एतत् भगवत्कृत्यं श्रावयेत् अन्यानिति शेषः, समाहितः सन् शृणुयात् स्वयमिति शेषः, सः सर्वपापैः प्रमुच्यत इति ॥ ४३ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

इति मुनिभावप्रकाशिकासमाख्यायां दशमव्याख्यायाम् अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

१. गोकुलां. मु. भा. प्र. पा ॥ २. विष्णोश्चक्रं. पा ॥

* गोकुलैः संकुलां व्याप्ताम्, इति कोशान्तरे पाठः ॥

(बलरामकृतद्विविदवधकथारम्भघट्टः)

राजोवाच—
भूयोऽहंश्रोतुमिच्छामिरामस्याद्भुतकर्मणः।अनन्तस्याप्रमेयस्ययदन्यत्कृतवान्विभुः॥
श्रीशुक उवाच—
नरकस्यसखाकश्चिद्द्विविदोनामवानरः।सुग्रीवसचिवस्सोऽथभ्रातामैन्दस्यवीर्यवान्
सख्युस्सोऽपचितिंकुर्वन्वानरोराष्ट्रविप्लवम्।पुरग्रामाकरान्घोषानदहद्वह्निमुत्सृजन्॥
क्वचित्सशैलानुत्पाट्यतैर्देशान्समचूर्णयत्।आनर्तान्सुतरामेवंयत्रास्तेमित्रहाहरिः॥४

वी॥एवम् "अन्तरा गर्भिणी" इति न्यायेन श्रुतकृष्णचरित्रः पुनर्बलभद्रचेष्टितबुभुत्सया पृच्छति राजा—भूयइति॥ अद्भुतं कर्म चेष्टितं यस्य तस्य अनन्तस्य अनन्तावताररूपस्य अप्रमेयस्य अपारमहिम्नो रामस्य चेष्टितं श्रोतुमिच्छामि, किं पूर्वोक्तं नेत्याह—यदन्यदिति । विभुः रामः यदन्यत्कृतवान्, तच्चेष्टितम् ॥ १ ॥

मु ॥ प ॥ हरौ भक्तोऽपि यःकश्चित्स्याच्चेद्दुर्मददूषितः ।

स दण्डच एव तस्येति निरणाय्यत्र मौनिना ॥

भूय इत्यादि ॥ यमुनानिवारणानन्तरं द्विविदवधादि रामचरितं सङ्गतमपि अनुक्त्वा तत्पूर्वभावित्वेन पौण्ड्रकवधादिकं निरूप्य अथेदानीं तदेव प्रस्तौतीति बोद्धयम्, रामचरितस्य भूयः श्रवणेच्छायाम् अद्भुतकर्मत्वं हेतुः, तत्राप्यनन्तत्वम्, तत्राप्यप्रमेयत्वमिति विवेकः ॥ १ ॥

वी ॥ द्विविदवधात्मकं कर्माख्यातुं तावत् द्विविदस्य दुश्चेष्टितमाचष्टे—नरकस्येत्यादिना ॥ द्विविदो नाम कश्चिद्वानरः, स च नरकस्य सखा सुग्रीवस्य सचिवो मन्त्री मैन्दस्य भ्राता च वीर्यवांश्चेति रामायणादौ प्रसिद्ध इति तात्पर्यम् ॥ २ ॥

मु ॥ नरकस्य सखेति तस्य वध्यत्वे कारणमुक्तम्, सुग्रीवसचिव इति तन्मन्त्रित्वान्मन्त्रबलमुक्तम्, तस्य मैन्दभ्रातृत्वं च रामायणप्रसिद्धम्, तेन तस्य वीर्याधिक्यमुक्तम्, तदाह—वीर्यवानिति ॥ २ ॥

वी॥ सख्युरिति॥ स द्विविदः सख्युर्नरकस्यापचितिमानृण्यं कुर्वन् "लक्षणहेत्वोः" इति शता, कर्तुं राष्ट्रस्य विप्लवो नाशो यथा तथा पुरादीन्वह्निमुत्सृजन् ददाह ॥ ३ ॥

मु ॥ सः सख्युः स्वमित्रनरकस्य अपचितिं कुर्वन् मित्रत्वेन तत्कृतोपकारस्य आनृण्यं कुर्वन्नित्यर्थः, राष्ट्रस्य विप्लवो नाशो यस्मिन् कर्मणि तद्यथा भवति तथा वह्निम् उत्सृजन् निक्षिपन्, पुराणि पट्टणानि ग्रामांश्च मध्ये मध्ये स्थिता घोषादयः आकराः तान् अदहत् भस्मीचकार ॥ ३ ॥

वी ॥ क्वचिदिति ॥ स द्विविदः तैरुत्पाटितैश्शैलैः देशान् तत्राप्यानर्तान् सुतराम् अचूर्णयत्, तत्र हेतुत्वेन तान्विशिनष्टि—यत्र येष्वानर्तेषु मित्रहा नरकघ्नो हरिरास्ते॥ ४ ॥

मु ॥ तत्कृतपीडान्तरमाह—क्वचिदिति ॥ अमित्रहा शत्रुसंहारको हरिः यत्रास्ते येषां पालकस्सन् वर्तत इत्यर्थः, तान् आनर्तान् देशान् सुतराम् अचूर्णयत् ॥ ४ ॥

क्वचित्समुद्रमध्यस्थो दोर्भ्यामुद्धृत्य तज्जलम्। देशान्नागायुतप्राणो वेलाकूलेन्यमज्जयत्

[1]आश्रयानृषिमुख्यानां कृत्वा भस्म वनस्पतीन्।
अदूषयच्छकृन्मूत्रैरग्नीन्वैतानिकान्खलः॥ ६
पुरुषान्योषितो दृप्तः क्ष्माभृद्द्रोणीगुहासु सः।
निक्षिप्य चाप्यधाच्छृङ्गैः पेशस्कारीव कीटकम्॥ ७
एवं देशान्विप्रकुर्वन्दूषयंश्च कुलस्त्रियः। श्रुत्वा सुललितं गीतं गिरिं रैवतकं ययौ॥ ८

वी॥ क्वचिदिति॥ दोर्भ्यां बाहुभ्यां तत्सामुद्रं जलम् उद्धृत्योत्क्षिप्य वेलायाः कूले वर्तमानान् देशान् अमज्जयत्, तत्र हेतुत्वेन तं विशिनष्टि—नागायुतप्राणः नागानां गजानाम् अयुतस्य दशसहस्रस्य प्राणो बलं यस्य सः॥ ५॥

मु॥ प्रकारान्तरेण तत्कृतदेशोपप्लवमाह—क्वचिदिति॥ नागायुतप्राणः दशसहस्रगजतुल्यशक्तिः सः क्वचित् प्रदेशे समुद्रस्थस्सन् तज्जलं दोर्भ्याम् उद्धृत्य समुद्रजलम् अञ्जलिभिरुद्धृत्योद्धृत्येत्यर्थः, वेला नाम कस्मिंश्चित्कालविशेषे समुद्रस्योत्सर्पणजलम्, तदेव नीरविकार उच्यते. "वेला कालेच जलधेस्तीरनीरविकारयोः" इति नैघण्टुकाः, तस्याः कूलं तटभूमिर्येषु तान् देशान् अमज्जयत् अञ्जलिप्रक्षिप्तागाधजलप्रवाहे निमज्जयामासेत्यर्थः॥ ५॥

वी॥ आश्रयानिति॥ ऋषिमुख्यानामाश्रयभूतान्वनस्पतीन् भस्म कृत्वा दग्ध्वेत्यर्थः, 'भग्नवनस्पतीन्' इति पाठे भग्नाः वनस्पतयो येषु तथाभूतान् कृत्वा शकृन्मूत्रैर्मलमूत्रैर्वैतानिकान् यज्ञियान् आहवनीयादीनग्नीनदूषयत्, यतः सः खलः दुरात्मा॥ ६॥

मु॥ उपप्लवान्तरमाह—आश्रमानिति॥ खलः दुष्टः सः आश्रमान् भग्नाः वनस्पतयः फलवृक्षाः येषां तान् कृत्वा वैतानिकान् आहवनीयादीन् अग्नीन् शकृन्मूत्रैः अदूषयत् दुष्टान् अकरोत्॥ ६॥

वी॥ पुरुषानिति॥ दुष्टो द्विविदो गिरेः कन्दरेषु गुहासु च निक्षिप्य शृङ्गैः, गिरिशृङ्गैः अप्यधात् पिहितवान् पेशस्कारी भ्रमरः कीटमिव॥ ७॥

मु॥ बाधान्तरमाह—पुरुषानिति॥ क्ष्माभृतां पर्वतानां द्रोणीषु अतिदीर्घातिनिम्नस्थलीषु गुहासु गह्वरेषु च योषितः पुरुषांश्च निक्षिप्य, पेशस्कारी नाम कंचित्कीटमानीय क्वचित् स्थले मृदा निगुह्य स्वयमुपरि गुञ्जन् तस्य स्वरूपापादको भ्रमरविशेषः, सः कीटमिव शृङ्गैः गिरिशृङ्गैः अप्यधात् पिदधे तद्गिरिगुहामुखं पिहितवानित्यर्थः॥ ७॥

वी॥ एवमिति॥ विप्रकुर्वन् पीडयन् तत्रतत्र कुलस्त्रीः दूषयंश्च सुललितं मधुरं गीतं श्रुत्वा रैवतकं पर्वतं ययौ॥ ८॥

मु॥ एवमिति॥ देशान् विप्रकुर्वन् पीडयन् कुलस्त्रियः साध्वीः दूषयन् भग्नव्रताः कुर्वन् रैवतकं रैवतकाख्यं गिरिं यादवानां क्रीडाशैलं ययौ, तद्गमने हेतुमाह—श्रुत्वेति। सुललितं मनोरञ्जकं गीतं तत्र विहरतः सस्त्रीकस्य रामस्य मधुरगानं श्रुत्वेति॥

1. आश्रमानृषिमुख्यानां कृत्वा भग्नवनस्पतीन्. मु. भा. प्र. पा॥

तत्रापश्यद्यदुपतिंरामंपुष्करमालिनम् । सुदर्शनीयसर्वाङ्गंललनायूथमध्यगम् ॥ ९
गायन्तंवारुणींपीत्वामदविह्वललोचनम्।विभ्राजमानंवपुषाप्रभिन्नमिववारणम् ॥

दुष्टशाखामृगश्शाखामारूढः कम्पयन्द्रुमान् ।
चक्रे किलकिलाशब्दमात्मानं सम्प्रदर्शयन् ॥ ११

तस्यधाष्टर्यंकपेर्वीक्ष्यतरुण्योजातिचापलाः।हास्यप्रियाविजहसुर्बलदेवपरिग्रहाः ॥
ताहेलयामासकपिर्भ्रूक्षेपैस्सम्मुखादिभिः।दर्शयन्स्वगुदंतासांरामस्यचनिरीक्षतः।१३

---

वी ॥ तत्रेति॥ तत्र रैवतकोपवने पुष्करमाला पद्ममालाऽस्यास्तीति तथा तं व्रीह्यादित्वान्मत्वर्थीय इनिः, सुष्ठु दर्शनीयानि सर्वाण्यङ्गानि यस्य तं योषित्समूहमध्यगतम् ॥ गायन्तमिति ॥ वारुणीं मदिरां पीत्वा मदेन विह्वले घूर्णिते लोचने यस्य तं प्रभिन्नं मत्तं वारणमैरावतमिव स्थितं राममपश्यदिति संबन्धः ॥ ९ ॥ १० ॥

मु ॥ तत्रेत्यादिना द्वयेन रामं विशिंषन्नाह—पुष्करमालिनं पद्ममालिनं सुष्ठु दर्शनीयानि अतिसुन्दरतया पुनःपुनः द्रष्टुं योग्यानि सर्वाङ्गाणि यस्य तं प्रभिन्नं मदोत्कटं वारणमिव वपुषा विभ्राजमानमिति, अन्यत्सुगमम् ॥ ९ ॥ १० ॥

वी ॥ दुष्टइति ॥ दुष्टश्चासौ शाखामृगश्च, शाखामृग इत्यनेन स्वभावत एव दौष्ट्यं व्यज्यते, दुष्ट इत्यनेन तत्रापि,किलकिलेत्यनुकरणम् , आत्मानं स्वशरीरं दर्शयन् चक्रे॥

मु ॥ आत्मानं स्वदेहं मर्कटजातिस्वभावं वा, संप्रदर्शयन् किलकिलाशब्दं मर्कटजात्यनुगुणं शब्दं चक्रे॥ ११ ॥

वी ॥ तस्येति ॥ तस्य द्विविदस्य धार्ष्ट्यं दौष्ट्यं प्रागल्भ्यं दृष्ट्वा जात्या स्वभावेनैव चापलं यासां हास्यं प्रियं यासां ताः परिगृह्यन्त इति परिग्रहाः बलदेवस्य परिग्रहाः तत्परिगृहीता इत्यर्थः, हेतुगर्भाण्येतानि, अतो विजहसुः प्रहसितवत्यः ॥ १२ ॥

मु॥ तस्येति॥ तरुण्यः तस्य कपेः धार्ष्ट्यं धृष्टत्वं निर्भीकतया दुर्वृत्तमित्यर्थः, वीक्ष्य जातं चापलं चपलत्वं यासां तास्सत्यः 'जातिचापलाः' इति पाठे जात्या स्वभावेनैव चापलं यासां तास्सत्यः हास्यं प्रियं यासां ताः, तं दृष्ट्वा निर्भीकतया हास्यकरणे हेतुमाह—बलदेवपरिग्रहा इति । बलदेवस्य परिग्रहः परिग्रहणं यासां ताः इत्यर्थः, तस्यावरोधस्त्रिय इति वार्थः, विजहसुः हसन्तिस्म ॥ १२ ॥

वी ॥ ताइति ॥ कपिः द्विविदः भ्रूविक्षेपैः सम्मुखागमनादिभिः, आदिशब्देन दन्तप्रदर्शनादिसङ्ग्रहः, स्वगुदं तासां दर्शयन् रामस्य पश्यतस्सत एव ताः हेलयामास अवजज्ञे ॥ १३ ॥

मु ॥ ता इति ॥ रामस्य च निरीक्षत इति "षष्ठी चानादरे" इत्यनादरे षष्ठी, निरीक्षमाणं तमनादृत्येत्यर्थः, तासां स्वगुदम् अपानं दर्शयन् भ्रूक्षेपैः भ्रूविकारैः सम्मुखम् अभिमुखस्थित्या मुखेन हुङ्करणं दन्तदर्शनं तदादिभिः चेष्टाविशेषैरित्यर्थः, ताः स्त्रीः हेलयामास अवजज्ञे ॥ १३ ॥

तंग्राव्णाप्राहरत्क्रुद्धोबलःप्रहरतांवरः।सवञ्चयित्वाग्रावाणंमदिराकलशंकपिः ॥ १४
गृहीत्वा हेलयामास धूर्तस्तंकोपयन्हसन् ॥
निर्भिद्य कलशं दृप्तो [1]वासांस्याकृष्य योषिताम् ।
कदर्थीकृत्य बलवान्विप्रचक्रे मदोद्धतः ॥ १५
ततस्याविनयंदृष्ट्वादेशांश्चतदुपद्रुतान्।क्रुद्धोमुसलमादत्तहलंचारिजिघांसया ॥ १६
द्विविदोऽपिमहावीर्यस्सालमुत्पाट्यपाणिना। अभ्येत्यतरसातेनबलंमूर्धन्यताडयत् ॥
तंतुसङ्कर्षणोमूर्ध्निपतन्तमचलोयथा।प्रतिजग्राहभगवा[2]न्सुनन्देनाहनद्धरिम् ॥ १८

वी ॥ तमिति ॥ ग्राव्णा पाषाणेन तं कपिं प्राहरत्, स कपिः तं रामं कोपयन् हसंश्च हेलयामास अवमतवान् ॥ १४ ॥

मु ॥ तमिति ॥ प्रहरतां शत्रुं संहरतां वरः श्रेष्ठो रामः क्रुद्धः क्रोधाविष्टस्सन् तं कपिं ग्राव्णा पाषाणेन प्राहरत् प्रहृतवान्, तं ग्रावाणं पाषाणं वञ्चयित्वा अन्यत उत्प्लवनेन व्यर्थीकृत्येत्यर्थः, धूर्तः स कपिः हसन् अत एव तं बलं कोपयन् कुपितं कुर्वन् मदिराकलशं गृहीत्वा हेलयामास अपराधेन कलुषीचकार ॥ १४ ॥

वी ॥ किञ्च—निर्भिद्येति ॥ दृप्तो गर्वितः कलशं मदिरापात्रं निर्भिद्य योषितां वासांसि आकृष्य (आत्मानं प्रापितवान्)मदेनोद्धतो बलवांश्च कपिः एवं बलं रामं कदर्थीकृत्य तुच्छीकृत्य विप्रचक्रे अपचकार ॥ १५ ॥

मु ॥ निर्भिद्येति ॥ दृप्तो मदोद्धतः सः कलशं मद्यघटं निर्भिद्य कपिः मदेन उद्धतः सन् बलरामं कदर्थीकृत्य अनादृत्य वासांसि स्त्रीणां वस्त्राणि आस्फोटयत् आकृष्य शतधा बिभेदेत्यर्थः, एवं मदोद्धतः सन् बलवान् सः विप्रचक्रे, विप्रकारः अनिष्टाचरणम्, अपकृतवानित्यर्थः ॥ १५ ॥

वी ॥ तमिति ॥ तं कपिं तस्याविनयं धार्ष्ट्यं दौष्ट्यं तेनोपद्रुतान् देशांश्च विलोक्य क्रुद्धो रामः हलं मुसलं चाददे ॥ १६ ॥

मु ॥ ततः किमिति—तस्य कपेः अविनयम् औद्धत्यं च तदुपद्रुतान् तेन पीडितान् देशांश्च दृष्ट्वा क्रुद्धो बलः अरिजिघांसया शत्रोस्तस्य संहारेच्छया हलं मुसलं चेति स्वीयमायुधद्वयम् आदत्त जग्राह ॥ १६ ॥

वी॥ द्विविदोऽपीति ॥ महद्वीर्यं यस्य सः द्विविदोऽपि सालवृक्षमुत्पाट्य बलमूर्धनि राममूर्धनि तेन सालेनाताडयत् ॥ १७ ॥

मु ॥ द्विविदोऽपीति ॥ सालः अश्वकर्णाख्यो वृक्षविशेषः, तं पाणिना उत्पाट्य एकेन पाणिना ग्रहणात् अपारतच्छक्तिरुच्यते,अभ्येत्य अभिमुखम् आगत्य तरसा बलेन वेगेन वा, "तरसी बलरंहसी" इति नैघण्टुकाः, तेन सालेन बलरामं मूर्धन्यताडयदिति ताडनाधिकरणत्वविवक्षया सप्तमी ॥ १७ ॥

वी॥ तमिति ॥ पतन्तं तं सालं प्रतिजग्राह गृहीतवान् तत्प्रहारमङ्गीकृतवानित्यर्थः, यथा पर्वतः तद्वत्, ततस्सुनन्देन मुसलेन हरिं कपिम् अहनत्ताडयामास ॥ १८ ॥

१. वासांस्यास्फोटयद्बलम्. मु. भा. प्र. पा ॥ २. सुनन्देनाहनच्च तम्. मु. भा. प्र. पा॥

मुसलाहतमस्तिष्कोविरेजेरक्तधारया।गिरिर्यथागैरिकयाप्रहारंनानुचिन्तयन्।।१९।।
पुनरन्यंसमुत्क्षिप्यकृत्वानिष्पत्रमोजसा।तेनाहनत्सुसंक्रुद्धस्तंबलश्शतधाऽच्छिनत् ।।
ततोऽन्यं तरुमुत्पाट्य जघ्ने तं शतधाऽच्छिनत् ।।
एवंयुध्यन्भगवताभग्नेभग्नेपुनःपुनः।आकृष्यसर्वतोवृक्षान्निर्वृक्षमकरोद्वनम् ।। २१
ततोऽमुञ्चच्छिलावर्षंबलस्योपर्यमर्षितः।तत्सर्वंचूर्णयामासलीलयामुसलायुधः ।।
स्वबाहूतालसङ्काशौमुष्टीकृत्यकपीश्वरः।आसाद्यरोहिणीपुत्रंताभ्यांवक्षस्यरूरुजत् ।।

---

मु ॥ तंत्विति ॥ भगवान् अपारशक्तिः संकर्षणो रामः अचलो यथा पर्वत इव मूर्ध्नि तं पतन्तं सालं प्रतिजग्राह अभिमुखमेत्य गृहीतवान्, तं शत्रुं सुनन्देन सुनन्दाख्येन मुसलेन अहनत् अताडयत् ॥ १८ ॥

वी ॥ मुसलेति ॥ मुसलेनाहतो मस्तिष्को मस्तकावयवविशेषो यस्य सः अत एव रक्तधारया रेजे, यथा गिरिर्गैरिकधारया राजते तद्वत्,ततस्तं प्रहारमननुचिन्तयन् पुनरन्यं सालम् ओजसा बलेन उत्पाट्य पर्णरहितं कृत्वा तेन सालेनाहनत्, तं सालं बलो रामः शतधा चिच्छेद, ततोऽन्यमुत्पाट्य प्रयुक्तं तथा चिच्छेद ॥ १९ ॥ २० ॥

मु ॥ मुसलेति ॥ मुसलेन आहतं मस्तिष्कं शिरोन्तर्मांसं यस्य सः प्रहारं मुसलप्रहारं नानुचिन्तयन् अगणयन्, अत्र मुसलाहतमस्तिष्कः सः गैरिकया गिरिर्यथा रक्तधारया रेज इत्यन्वयः, गैरिका नाम लोहितधातुविशेषः, प्रहारं नानुचिन्तयन्नित्युत्तरेणान्वयः ॥ १९ ॥

मु ॥ पुनः अन्यं सालम् उत्पाट्य तं निष्पत्रं कृत्वा, पत्रबाहुल्ये ताडनस्य तदाच्छादनेन निरन्तरत्वाभावादिति भावः, तेन वृक्षेण तं बलम् अहनत् अताडयत्, अथ बलः शतधा अच्छिनत् चिच्छेद, तं वृक्षमिति शेषः, ततोऽन्यं वृक्षम् उत्पाट्य जघ्ने बलमिति शेषः, तं वृक्षं चापि शतधा अच्छिनत् शतं शकलान्यकरोत् ॥ २० ॥

वी ॥ एवमिति ॥ प्रयुक्ते साले भग्ने सति सर्वतो वृक्षानाकृष्य तद्वनं वृक्षरहितं चकार ॥ २१ ॥

मु ॥ एवमिति ॥ भग्नेभग्ने पूर्वपूर्ववृक्षेषु भग्नेषुभग्नेषु सत्स्वित्यर्थः, पुनः सर्वतो वृक्षानाकृष्य उत्पाट्योत्पाट्यानीय किं बहुना वनमेव निर्वृक्षम् अकरोत् वृक्षशून्यं चकार ॥ २१ ॥

वी ॥ ततइति ॥ बलस्य रामस्योपरि तत् शिलाजालं सर्वम् ॥ २२ ॥

मु ॥ तत इति ॥ अमर्षितः संजातामर्षः, मुसलायुध इत्युक्तेः स्वायुधेन मुसलेनैव चूर्णयामासेत्यर्थः ॥ २२ ॥

वी ॥ स्वबाहूइति ॥ ताभ्यां मुष्टीकृताभ्यां बाहुभ्याम् अरूरुजत् अताडयत् ॥ २३ ॥

मु॥ एवं निस्साधनस्य पुनर्युद्धकरणक्रममाह—स्वबाहू इति ॥ तालसंकाशौ तालवृक्षप्रमाणकौ स्वबाहू मुष्टीकृत्य बद्धमुष्टिकौ विधायेत्यर्थः, कपीश्वरः द्विविदः रोहिणीपुत्रम् आसाद्य ताभ्यां वक्षसि अरूरुजत् अबाधत वक्षस्ताडयामासेत्यर्थः ॥ २३ ॥

यादवेन्द्रोऽपि तं दोर्भ्यां त्यक्त्वा मुसललाङ्गले ।
जत्रावभ्यार्दयत्क्रुद्धस्सोऽपतद्रुधिरं वमन् ॥ २४
चकम्पेतेनपतता१सकण्टकवनस्पतिः।सर्वतःकुरुशार्दूलवायुनानौरिवाम्भसि॥ २५
जयशब्दो नमश्शब्दस्साधुसाध्वितिचाम्बरे ।
सुरसिद्धमुनीन्द्राणामासीत्कुसुमवर्षिणाम् ॥ २६
एवंनिहत्यद्विविदंजगद्व्यतिकरावहम्। संस्तूयमानोभगवाञ्जनैस्स्वपुरमाविशत् ॥ २७

इति श्रीभागवते महापुराणे दशमस्कन्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

वी ॥ यादवेन्द्रो रामोऽपि मुसललाङ्गले त्यक्त्वा दोर्भ्यामेव तं कपिं जत्रौ कण्ठबाहुमूले अभ्यार्दयदताडयत् , स कपिः रुधिरं वमन् उद्गिरन् पपात ॥ २४ ॥

मु ॥ यादवेन्द्रोऽपीति॥ मुसललाङ्गले त्यक्त्वा क्रुद्धस्सन् तं कपिं दोर्भ्यां जत्रौ कण्ठबाहुमूले अभ्यार्दयत् अपीडयत्, सः द्विविदः रुधिरं रक्तं वमन् अपतत् पपात ॥ २४ ॥

वी॥ चकम्पइति॥ पतता तेन द्विविदेन कण्टकादिसहितो गिरिः चकम्पे चचाल, हे कुरुशार्दूल यथा वायुना नौः अम्भसि कम्पते तद्वत् ॥ २५ ॥

मु ॥तदा तेन वानरेण, टङ्काः सतोयविवराणि, वनस्पतयो वृक्षविशेषाः, तैः तैश्च सहितः पर्वतः वायुना अम्भसि नौरिव चकम्पे चचाल ॥ २५ ॥

वी॥ जयशब्द इति ॥ कुसुमानि वर्षन्तीति तथा तेषां सुरादीनां यथायोग्यं जयशब्दादिरासीत् ॥ २६ ॥

मु ॥ जयशब्दइति ॥ अम्बरे जयादिशब्दत्रयम् आसीत्, सुरसिद्धमुनीन्द्राणामिति वक्तृवर्गत्रितयोक्तेः क्रमात् जयादिशब्दत्रितयस्य तत्कर्तृकत्वम्बोध्यम् ॥ २६ ॥

वी ॥ एवमिति॥जगतो व्यतिकरं नाशमावहति आपादयतीति तथाभूतं द्विविदमेव निहत्य जनैः संस्तूयमानो भगवान् रामः स्वपुरं द्वारकां प्रविवेश॥ २७ ॥

मु ॥ अध्यायं निगमयन् आह—एवमिति॥जगतो व्यतिकरं नाशम् आवहति आचरति तं द्विविदं कपिम् एवम् उक्तप्रकारेण निहत्य हत्वा भगवान् रामः जनैः संस्तूयमानः सन् पुरं द्वारकाम् आविशदिति ॥ २७॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम्
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

१. सटङ्कस्सवनस्पतिः. मु-भा-प्र. पा ॥

( बलरामकृतहास्तिनपुराकर्षणादि घट्टः )

श्रीशुक उवाच—

दुर्योधनसुतां राजल्लँक्ष्मणांसमितिञ्जयः।[1]स्वयंवरस्थामहरत्साम्बोजाम्बवतीसुतः॥
कौरवाःकुपिताऊचुर्दुर्विनीतोऽयमर्भकः।कदर्थीकृत्यनःकन्यामकामामहरद्बलात्॥ २
बध्नीतैनंदुर्विनीतंकिंकरिष्यन्तिवृष्णयः।[2]येऽस्मत्प्रतापोपचितांदत्तांनोभुञ्जतेमहीम्
निगृहीतं सुतं श्रुत्वायद्येष्यन्तीह वृष्णयः।

---

वी॥रामस्यैव चेष्टितान्तरमनुवर्णयितुमुपोद्घातमाहाष्टषष्टितमेन दुर्योधनसुतामित्यादिना॥समितौ सङ्ग्रामे जयतीति तथा समितिश्शत्रुः,तं जयतीति वा, स जाम्बवत्यास्सुतः साम्बो लक्ष्मणां नाम दुर्योधनस्य सुतां स्वयंवरस्थां हृतवान् ॥ १ ॥

मु ॥ प ॥ हरिसंबन्धिने कर्तुमनिष्टं येऽभिमन्वते ।
तेषामुपद्रवोऽवश्यंभावीत्यत्राऽशयो मुनेः ॥
"श्रुतिस्मृतिभ्यां सुजनो नियम्यते
परापवादेनच मध्यमो जनः ।
कषायकुण्डोत्थितशुष्कचर्मव-
द्वधेन नीचस्समुपैति मार्दवम् ॥ "
इत्युक्तरीत्यावा दुष्टस्वभावाल्लुप्तबुद्धयः ।
दण्डेनोपशमं यान्तीत्यत्र वाचंयमाशयः ॥

दुर्योधनसुतामित्यादि॥समितिञ्जयः सङ्ग्रामजित् युद्धेषु शत्रुविजेतेत्यर्थः,जाम्बवतीसुतः साम्बः स्वयंवरस्थां स्वेच्छया इष्टं राजकुमारं वरीतुं स्वयंवरस्थले वर्तमानामित्यर्थः, लक्ष्मणां नाम दुर्योधनसुताम् अहरत् जहार ॥ १ ॥

वी ॥ कौरवा इति ॥ उक्तिमेवाह—दुर्विनीतोऽयमित्यादिना सुसंयता इत्यन्तेन । नोऽस्मान् कदर्थीकृत्य तुच्छीकृत्य बलात् अकामयमानामपि कन्याम् अहरत् ॥ २ ॥

मु ॥ ततः किमासीदित्यत्राह—कौरवाइति ॥ नः अस्मान् कदर्थीकृत्य अवज्ञाय अकामां स्वस्मिन्नभिलाषरहिताम् एनां कन्यां बलादहरत् ॥ २ ॥

वी॥अतएव दुर्विनीतं मूर्खं बध्नीत बन्धयत,वृष्णयः किङ्करिष्यन्ति न किमपीत्यर्थः, तत्र हेतुर्य इति। ये वृष्णयः अस्माकं प्रतापेन पराक्रमेणोपचिताम् एधितां समृद्धामिति यावत् ,नोऽस्माभिः दत्तांच महीं भुञ्जते अनुभवन्ति,तेन भूमिपतयो बभूवुरिति भावः॥

मु ॥ अतः दुर्विनीतमेनं बध्नीत शृङ्खलादिभिर्बद्धं कुरुत, ननु वृष्णयो महाबलाः, कथमेवं कर्तुं शक्यमित्यत्राहुः—किं करिष्यन्तीति । उक्तार्थं सोपपत्तिकं स्थापयन्त आहुः—यइति । अस्मत्प्रसादेन अस्मदनुग्रहेण उपचितां निस्सपत्नीकरणेन वर्धितां दत्ताम् अस्माभिरेवेति शेषः,महीं ये भुञ्जते इति स्वोत्कर्षोक्तिपूर्वकं तदाधम्योद्घाटनोक्तिः॥

वी ॥ निगृहीतमिति॥ निगृहीतं बद्धं सुतं श्रुत्वा यदि वृष्णयः आगमिष्यन्ति, तर्हि भग्नो गर्वो येषां तथाभूताः शमं शान्तिं यास्यन्ति सुसंयताः प्राणायामादिभिर्दमिताः प्राणाः इन्द्रियाणीव ॥ ४ ॥

---

१. स्वयंवरे जहारैकः. पा ॥ २. येऽस्मत्प्रसादोप. मु-भा-प्र. पा ॥

भग्नदर्पाश्शमंयान्तिप्राणाइवसुसंयताः ॥ ४

श्रीशुक उवाच—

इतिकर्णश्शलोभूरिर्यज्ञकेतुस्सुयोधनः।[१]साम्बमारेभिरेबन्धुंकुरुवृद्धानुमोदिताः॥ ५

दृष्ट्वाऽनुधावतस्साम्बोधार्तराष्ट्रान्महारथः।प्रगृह्यरुचिरंचापंतस्थौसिंहइवैकलः॥ ६

तेतंजिघृक्षवःक्रुद्धास्तिष्ठतिष्ठेतिवादिनः।आसाद्यधन्विनोबाणैःकर्णाग्रण्यस्समाकिरन्

सोऽभिविद्धःकुरुश्रेष्ठकुरुभिर्यदुनन्दनः।नामृष्यत्तदचिन्त्यार्भस्सिंहःक्षुद्रमृगैरिव॥ ८

विस्फूर्ज्यसुमहच्चापंसर्वान्विव्याध सायकैः।

---

मु ॥ तर्ह्येतन्निग्रहमात्रेण किं छिन्नं तेषामित्यत्राहुः—निगृहीतमिति ॥ सुतं निगृहीतम् अस्माभिः बद्धं श्रुत्वा वृष्णयः इह एष्यन्ति यदि, तदा भग्नदर्पाः अस्माभिर्हतगर्वास्सन्तः सुसंयताः प्राणायामादिभिः नियमितोच्छृङ्खलवृत्तयः प्राणाः इन्द्रियाणीव शमं यान्ति यास्यन्ति ॥ ४ ॥

वी॥ इतीति ॥ इति इत्थं निश्चित्य कर्णादयः कुरुवृद्धैः धृतराष्ट्रादिभिः अनुमोदिताः साम्बं बन्धुम् आरेभिरे आरब्धवन्तः ॥ ५ ॥

मु॥इतीति ॥ साम्बं बन्धुं बद्धं कर्तुम् आरेभिरे, भूरिः भूरिश्रवाः, कुरुवृद्धः भीष्मः, तेन अनुमोदिताः तथैव कर्तुं युक्तमिति सन्तोषितास्सन्तः, यद्वा तत्सहिताः षडेते इत्यर्थः ॥ ५ ॥

वी ॥ दृष्ट्वेति॥ अनुधावतः पृष्ठत आगन्तॄन् दृष्ट्वा एकलोऽसहायः सिंहइव तस्थौ॥६॥

मु ॥ ततः किम्, अत आह—दृष्ट्वेति ॥ अनुधावतः अनुसृत्य धावतः धार्तराष्ट्रान् धृतराष्ट्रसुतान् दृष्ट्वा सः महारथः रथिकाग्रणीः साम्बः रुचिरं शत्रुदृग्विलोपिरुचिमत् चापं प्रगृह्य एकलः एक एव सन् सिंह इव तस्थौ ॥ ६ ॥

वी ॥ तइति ॥ ते धार्तराष्ट्राः तं साम्बं जिघृक्षवः ग्रहीतुमिच्छवः कर्णोऽग्रणीः पुरतोनायको येषां तथाभूताः आसाद्य समीपमेत्य बाणैस्समाकिरन् पिदधुः ॥ ७ ॥

मु ॥ तइति ॥ कर्णः अग्रणीः येषां ते कर्णाग्रण्यः ते कौरवाः जिघृक्षवः ग्रहीतुमिच्छवः आसाद्य समीपं प्राप्य बाणैः तं समाकिरन् तस्मिन् शरांश्चिक्षिपुरित्यर्थः ॥ ७ ॥

वी ॥ स इति ॥ हे कुरुश्रेष्ठ कुरुभिरभितो विद्धः ताडितः सः यदुनन्दनः साम्बः अचिन्त्यस्य भगवतोऽर्भकः,हेतुगर्भमिदम्, अतस्तद्वेधनं नामृष्यत् न सेहे, तत्र दृष्टान्तः क्षुद्रमृगैर्विद्धस्सिंह इव ॥ ८ ॥

मु॥कुरुश्रेष्ठेति परीक्षितं प्रति वक्त्रा श्रीशुकेन कृता सम्बुद्धिः, सः यदुनन्दनः साम्बः कुरुभिः अभिविद्धः प्रहृतस्सन् तत् शत्रुबाणप्रहरणं नामृष्यत्, तत्र हेतुगर्भविशेषणमाह—अचिन्त्यार्भ इति । लोकातिशायिशक्त्यादिमत्तया अचिन्त्यः एतादृश इति चिन्तयितुमशक्यश्चासौ अर्भोऽर्भकश्चेतिवा अचिन्त्यस्य भगवतोऽर्भक इति वाऽर्थः, अत्रानुगुणमुपमिनोति—सिंह इति । क्षुद्रमृगैः अभिविद्धः अधिक्षिप्तः सिंह इव नासहतेत्यर्थः ॥ ८ ॥

वी ॥ विस्फूर्ज्येति॥ आरोपितज्यं चापं विस्फूर्ज्य वज्रनिर्घोषवत् ध्वनयित्वा वीरः

---

१. इह मध्ये. 'सुदुश्शासनगान्धारौ दुर्मत्रैकान्तशीलिनौ । एतेऽतिक्रम्य विदुरं गान्धारीं च यशस्विनीम्' इत्यधिकं क्वचिद् दृश्यते. पा ॥

कर्णादीन्षड्रथान्वीरस्तावद्भिर्युगपत्पृथक् ॥ ९
चतुर्भिश्चतुरोवाहानेकैकेनचसारथीन्। रथिनश्च[1] महेष्वासास्तस्य[2] तत्तेऽभ्यपूजयन्॥
तंतुतेविरथंचक्रुश्चत्वारश्चतुरोहयान्।एकस्तुसारथिंजघ्नेचिच्छेदान्यश्शरासनम् ॥
[3]तंतथाविरथीकृत्यकृच्छ्रेणकुरवोयुधि। कुमारंस्वस्यकन्यांचस्वपुरञ्जयिनोऽविशन्॥
तच्छ्रुत्वानारदोक्तेनराजन्सञ्जातमन्यवः।कुरून्प्रत्युद्यमंचक्रुरुग्रसेनप्रचोदिताः ॥ १३

साम्बः कर्णादीन्पूर्वोक्तान् षट्सङ्ख्याकान् तावतो रथांश्च तावद्भिस्सायकैः बाणैः युगपत् पृथक् प्रत्येकं विव्याध ॥ ९ ॥

मु॥ तर्हि किमकरोदित्यत्राह—विस्फूर्ज्येति॥ चापं विस्फूर्ज्य टङ्कारयुक्तं कृत्वा षट् रथाः येषां तान् कर्णादीन् सर्वान्योधानित्यर्थः, तावद्भिः षड्भिष्षड्भिरेव सायकैरिति वीप्साऽनुसन्धेया, पृथक् युगपदेव विव्याधेति शरसन्धानकौशल्योक्तिः ॥ ९ ॥

वी ॥ तथा चतुर्भिश्चतुर्भिस्सायकैः चतुरो वाहानश्वान् एकैकेन सारथींश्च विव्याध, रथिनश्चेति । ते रथिनः कर्णादयः तस्य साम्बस्य तत्कर्म अपूजयन् अभ्यनन्दन् ॥

मु ॥ महेष्वासः धन्विनां श्रेष्ठः सः चतुर्भिर्बाणैः चतुरो वाहान् एकैकेन बाणेन सारथीन्रथिनश्च विव्याध जघान, तेच योधाः तस्य साम्बस्य तद्युद्धम् अपूजयन् तुष्टुवुरित्यर्थः ॥ १० ॥

वी ॥ तमिति ॥ ते कर्णादयः तं साम्बं विरथं चक्रुः, तदेवाह—चत्वारइति । आजघ्नुरिति वचनविपरिणामेन चत्वार इत्यस्य संबन्धः ॥ ११ ॥

मु॥ एवमाश्चर्येण प्रतियोद्धुः पराक्रमातिशयाभिनन्दनस्य वीरधर्मत्वात्‘तस्य तत्तेऽभ्यपूजयन्’ इत्युक्त्वा ततस्ते मत्सरेण किमकुर्वन्नित्यत्राह—तमिति ॥ धर्मयुद्धेन तज्जयस्याशक्यत्वात् अधर्मयुद्धे ते प्रावर्तन्तेत्युच्यते, ‘तं तु ते विरथं चक्रुः’ इति सामान्यत उक्त्वा विविच्याह—चत्वार इत्यादिना । चत्वारो रथिका इत्यर्थः ॥ ११ ॥

वी ॥ तमिति ॥ एवं युद्धे साम्बं कृच्छ्रेण प्रयासेन विरथीकृत्य जयिनः प्राप्तजयाः कुमारं साम्बं स्वकन्यां स्वस्य दुर्योधनस्य कन्यांचादायेति शेषः, पुरं हास्तिनपुरम् अविशन्॥ १२ ॥

मु ॥ तमिति ॥ कृच्छ्रेण दुष्टकार्येण कुरवः युधि अन्यायप्रवृत्तयुद्धे तं कुमारं विरथीकृत्य बद्ध्वा तं कुमारं च स्वस्य कन्यां च बद्ध्वा जयिनस्सन्तः पुरमविशन्, तं बद्ध्वा तेन तया च सह स्वपुरमाविशन्नित्यर्थः, तस्यास्तस्मिन्कुमारे दुस्त्यजप्रेमाविलमनस्कतया तद्बन्धेनैव बद्धामिव दुस्सहदुःखाकुलां तां च गृहीत्वा पुरमविशन्निति भावः ॥

वी ॥ तदिति ॥ हेराजन् नारदोक्त्या तद्वृत्तान्तं श्रुत्वा संजातो मन्युर्येषां ते उग्रसेनेन प्रचोदिताश्च यदवः कुरून्प्रत्युद्यमं प्रतिचिकीर्षां चक्रुः ॥ १३ ॥

मु ॥ तदिति ॥ नारदोक्तेन—नारदवचनेन तत् कुमारबन्धनं श्रुत्वा सञ्जातमन्यवः उत्पन्नक्रोधाः वृष्णिपुङ्गवा इति शेषः, उग्रसेनेन प्रचोदिताः प्रेरितास्सन्तः कुरून्प्रति उद्यमं युद्धकरणोद्योगं चक्रुः ॥ १३ ॥

१. महेष्वासः. मु. भा. प्र. पा ॥ २. तत्तेऽप्यपूजयन्. मु. भा. प्र. पा॥ ३. तं बद्ध्वा. मु. भा.प्र. पा ॥

सान्त्वयित्वा तु तान्रामस्संनद्धान्वृष्णिपुङ्गवान् ।
नैच्छत्कुरूणां वृष्णीनां कलिंकलिमलापहः ॥ १४
जगामहास्तिनपुरंरथेनादित्यवर्चसा।ब्राह्मणैःकुलवृद्धैश्चवृतश्चन्द्रइवग्रहैः ॥ १५
गत्वा गजाह्वयं रामो [१]बाह्योपवनमाश्रितः ।
उद्धवं प्रेषयामास राजंस्तेषां बुभुत्सया ॥ १६
सोऽभिवन्द्याम्बिकापुत्रं भीष्मं [२]द्रोणञ्च बाह्लिकम् ।
दुर्योधनंच विधिवदब्रवीद्राममागतम् ॥ १७
तेऽपिप्रीतास्समाकर्ण्य प्राप्तं रामं[३]सुहृत्तमम् ।
तमर्चयित्वाऽभिययुस्सर्वे मङ्गलपाणयः ॥ १८
तंसङ्गम्य यथान्यायं गामर्घ्यंच न्यवेदयन् ।

वी ॥ सान्त्वयित्वेति ॥ सन्नद्धान् गन्तुमायत्तान् आशु सान्त्वयित्वा रामः कुरूणां वृष्णीनाञ्च मिथः कलिं कलहं नैच्छत् , यतस्स कलिमलं कलहात्मकं मलमपहन्तीति तथा ॥ १४ ॥

मु ॥ रामः तान् सान्त्वयित्वा नयप्रियवचनैः अनुनीय कुरूणां वृष्णीनांच कलिं कलहं नैच्छत्, तत्र हेतुः—कलिमलापहइति । कलिमलं रागद्वेषादिप्रयुक्तं कालुष्यम् अपहन्तीति तथोक्तः ॥ १४ ॥

वी ॥ किन्तु आदित्यस्येव वर्चो यस्य तेन रथेन गमनसाधनेन ग्रहैः गुरुशुक्रादिभिः चन्द्र इव ब्राह्मणादिभिः परिवृतो हास्तिनपुरं जगाम ॥ १५ ॥

मु ॥ तर्हि किमकरोदित्यत्राऽह—जगामेति ॥ १५ ॥

वी ॥ गत्वेति ॥ गजाह्वयं हास्तिनपुरं हेराजन् तेषां कुरूणां बुभुत्सया अभिप्रायजिज्ञासया उद्धवं प्रेषयामास ॥ १६ ॥

मु ॥ तेषां बुभुत्सया अभिप्रायजिज्ञासया उद्धवं प्रेषयामास ॥ १६ ॥

वी ॥ सइति ॥ उद्धवः अम्बिकायाः पुत्रं भीष्मं बाह्लिकसहितं दुर्योधनञ्च विधिवदभिवन्द्य ॥ १७ ॥

मु ॥ सबाह्लिकं बाह्लिकसहितं दुर्योधनं च अभिवन्द्य आगतं रामम् अब्रवीत् रामस्समागत इति जगादेत्यर्थः, विधिवदभिवन्द्येति—अर्घ्यादिपूर्वकं यथाशास्त्रार्थमभिवन्द्येत्यर्थः ॥ १७ ॥

वी ॥ तेऽपीति ॥ तेऽपि भीष्मादयोऽपि राममागतं श्रुत्वा प्रीतास्तमुद्धवं सुहृद्भिः वृतमर्चयित्वा सर्वे मङ्गलद्रव्याणि पाणिषु येषां तथाभूताः राममभिजग्मुः ॥

मु ॥ त इति ॥ सुहृद्वृतं प्राप्तम् आगतं रामम् आकर्ण्य तेऽपि प्रीतास्सन्तः सर्वेऽपि मङ्गलपाणयः उपायनहस्ताः तमर्चयित्वा अभिययुः ॥ १८ ॥

वी ॥ तमिति ॥ तं रामं यथान्यायं स्वस्ववयस्थानाद्यनुरूपमालिङ्गनादिभिरालिङ्ग्य सम्यक् गां धेनुम् अर्घ्यंच तस्मै न्यवेदयन्, तेषां मध्ये ये तत्प्रभावज्ञा रामप्रभावविदः, ते बलं रामं शिरसा प्रणेमुः ॥ १९ ॥

१. बाह्योपवनमास्थितः-पा॥ २. द्रोणं सबाह्लिकम्. मु-भा-प्र-पा ॥ ३. सुहृद्वृतम् .मु-भा-प्र-पा॥

तेषांयेतत्प्रभावज्ञाःप्रणेमुश्शिरसाबलम् ॥ १९
बन्धूनकुशलिनश्श्रुत्वापृष्ट्वाशिवमनामयम्।परस्परमथोरामोबभाषेऽविक्लबंवचः॥
उग्रसेनः[१]क्षितीशेशोयद्वआज्ञापयत्प्रभुः।तद्व्यग्रधियश्श्रुत्वाकुरुध्वं[२]माविलम्बितत्॥
यद्यूयंबहवस्त्वेकंजित्वाऽधर्मेणधार्मिकम्।अबध्नीताथतन्मृष्येबन्धूनामैक्यकाम्यया॥
श्रीशुक उवाच—
वीर्यशौर्यबलोन्नद्धमात्मशक्तिसमंवचः।कुरवोबलदेवस्यनिशम्योचुःप्रकोपिताः॥२३

मु ॥ यथान्यायं यथाशास्त्रार्थं सङ्गम्य मिलित्वा गां बहुक्षीरदुघां सवत्साश्चेत्यर्थः, अर्घ्यम् अर्घार्थं द्रव्यं च न्यवेदयन् समार्पयन्, तेषां मध्ये ये तस्य प्रभावज्ञाः माहात्म्यविदः वृद्धा अपीति भावः, बलं शिरसा प्रणेमुः दण्डवत्प्रणामं चक्रुः ॥ १९ ॥

वी ॥ बन्धूनिति ॥ रामः परस्परं बन्धून् कुशलिनः श्रुत्वा अनामयमारोग्यं शिवं शुभंच पृष्ट्वा, अविक्लबमिति च्छेदः, अदीनं वचो बभाषे ॥ २० ॥

मु ॥ शिवं क्षेमम् अनामयम् आरोग्यं च पृष्ट्वा स्वबन्धूनामिति शेषः, बन्धून् कुशलिनः श्रुत्वा स्वयं तेभ्य इत्यर्थः,अन्योन्यं परस्परमित्यर्थः,अस्य यथायोगमन्वयो द्रष्टव्यः, अविक्लबं प्रौढं वचो बभाषे ॥ २० ॥

वी॥ तदेवाह—उग्रसेनइति द्वाभ्याम्॥ तदाज्ञापितम् अव्यग्रधियः अवहितचित्तास्सन्तः श्रुत्वा कुरुध्वम्, तन्मा विलम्बि, चिणन्तमिदम्, न विलम्बितव्यमित्यर्थः॥२१ ॥

मु ॥ तदाह—उग्रसेन इति ॥ क्षितीशः क्षितिपालः, प्रभुः अस्माकमधीशः, वै प्रसिद्धौ, उग्रसेनः यत् आज्ञापयत्,तत् अव्यग्रधियः असमाकुलचित्तास्सन्तः श्रुत्वा तदेव कुरुध्वम् ,विलम्बितं विलम्बो मास्तु,भावे क्तः,'अविलम्बितम्' इति पाठे शीघ्रमित्यर्थः, 'कुरुध्वं मा विलम्बि तत्' इति पाठे तद्वचनं कुरुध्वम्, मा विलम्बि विलम्बो जाड्यं न क्रियतामित्यर्थः, कर्मणि लुङ् ॥ २१ ॥

वी॥ किंच—यदिति॥ एकमसहायं धार्मिकंच बालं बहवो यूयम् अधर्मेण जित्वा अबध्नीत बद्धवन्त इति यत्, तदहं मृष्ये सोढवानस्मि, कुतः? बन्धूनामैक्यकाम्यया मिथस्सौहार्दकामनया, अथाशु तमानीय समर्पयतेति शेषः ॥ २२ ॥

मु ॥ यत् बहवो यूयं धार्मिकम् एकम् अधर्मेण अधर्मयुद्धेन जित्वा अबध्नीत पाशैर्बद्धमकुरुत, अतएव तदनन्तरं तत् बन्धनकरणं मृष्ये सहे, सोढुमशक्यं कर्म कथं सोढव्यमित्यत्र हेतुमाह—बन्धूनामैक्यकाम्ययेति । ऐक्यकाम्यया सामरस्येन अन्योन्यमैत्रीकामनयेत्यर्थः ॥ २२ ॥

वी ॥ वीर्येति ॥ वीर्यं युद्धे ग्लान्यभावः, शौर्यं तत्र स्वगृह इव प्रवेशसामर्थ्यम्, बलं धारणसामर्थ्यम्, एभिरुन्नद्धमुच्छृङ्खलं बलदेवस्य वचो निशम्याकर्ण्य कुरवः प्रकोपिताः प्रोचुः ॥ २३ ॥

मु ॥ एवं बलेनोक्ते सति कुरवः किमकुर्वन्नित्यत्राह—वीर्येति ॥ वीर्यं प्रभावः, शौर्यमुत्साहः, बलं सत्त्वम् , तैः उन्नद्धम् उच्छृङ्खलम्, यद्वा वीर्यम् अविकृतिः, शौर्यं पराभिभवनहेतुभूतं तेजः,बलं धारणासामर्थ्यम् , तैः उन्नद्धमिति, आत्मशक्तेः स्वसामर्थ्यस्य समम् अनुरूपं च बलदेवस्य वचो निशम्य श्रुत्वा प्रकोपिताः प्रकर्षेण संजातकोपाः

१. क्षितीशोवै. मु-भा-प्र-पा ॥ २. मा विलम्बितम् . मु-भा-प्र पा ॥

अहोमहच्चित्रमिदंकालगत्यादुरत्यया। आरुरुक्षत्युपानद्वैशिरोमकुटभूषितम्॥ २४
एतेयौनेनसम्बन्धास्सहशय्यासनाशनाः।वृष्णयस्तुल्यतांनीताअस्मद्दत्तनृपासनाः॥
चामरव्यजनेशङ्खमातपत्रंचपाण्डरम्। किरीटमासनंशय्यांभुञ्जन्त्यस्मदुपेक्षया॥ २६
अलं यदूनां नरदेवलाञ्छनैर्दातुः प्रतीपैः फणिनामिवामृतम्।

प्रकृष्टं कोपं प्रापिता इतिवा, ऊचुः ॥ २३ ॥

वी ॥ उक्तिमेवाह—अहोइति षड्भिः ॥ दुरत्यया दुरतिक्रमया कालगत्या अहो महदिदं चित्रं जातम्,किंतदित्यत आहुः—आरुरुक्षतीति। उपानत् पादरक्षा मकुटेन भूषितं शिरो मूर्धानम् आरोढुमिच्छति, उपानत्स्थानीया यदवः किरीटालङ्कृतशिरस्थानीयानस्मानाज्ञापयन्तीत्येतदतिचित्रमिति भावः ॥ २४ ॥

मु ॥ अहो इति ॥ दुरत्यया अत्येतुमशक्यया कालगत्या हेतुना उपानत् चर्ममयी पादरक्षा मकुटभूषितं रत्नकिरीटालंकृतं शिरः आरुरुक्षति आरोढुमिच्छति, इदमहो महच्चित्रं महदाश्चर्यमाश्चर्यमित्यर्थः, क्रोधावेशेन संभ्रमाद्द्विरुक्तिः. अत्र आरुरुक्षतीति निर्जीवायाश्चर्ममयपादरक्षायाः पुरुषप्रयत्नमन्तरेण स्वतएव शीर्षारोहणोक्तेः इदमप्यपरमाश्चर्यमिति भावो बोद्धव्यः, 'मकुटशोभितम्' इति च पाठः, अर्थस्स्फुटः, हीना इमे अस्मानाज्ञापयन्तीति भावः॥ २४॥

वी ॥ एतदेव प्रपञ्चयति—चतुर्भिः ॥ एते वृष्णयः यौनेन पृथाविवाहेन सम्बन्धाः सम्बन्धिनः, सम्बन्धशब्दोऽत्र अर्शआद्यजन्तः, अतस्सहास्माभिस्सह शय्यासनभोजनानि येषां ते अस्माभिर्दत्तं नृपासनं येषां ते अतएव तुल्यताम् अस्माभिस्साम्यं प्रापिताः वस्तुतो न समा इति भावः ॥ २५ ॥

मु ॥ एत इत्यादिभिश्चतुर्भिः उक्तमेव प्रपञ्चयति—एतइति ॥ यौनेन पृथाविवाहेन सम्यक् बन्धस्संबन्धो घटना येषां ते संबन्धाः तदारभ्य प्राप्तसंबन्धा इत्यर्थः, अतएव सहशय्यासनाशनाः—शय्या शयनम्, आसनम्, एकासने स्थितिः, अशनम् एकस्मिन्पात्रे भोजनम्, एतानि सहैवाचरितानि यैस्ते अस्माभिरेव दत्तं नृपासनं सिंहासनं येषान्ते तथाभूता अपि ॥ २५ ॥

वी ॥ किंच—चामरेति ॥ अस्मदुपेक्षया हेतुभूतया चामरादीन् भुञ्जते उपयुञ्जत इत्यर्थः, तत्रासनं नृपासनम् ॥ २६ ॥

मु ॥ चामरं व्यजनंच चामरव्यजने, व्यजनं नाम राज्ञः श्रमनिवर्तनार्थं सुवर्णरेखादिभिश्चित्रितं तालवृन्तकम्, आसनं च भद्रासनम्, शय्याच काचन कुलाभिषिक्तशयनार्हा विलक्षणैवेति बोद्धव्यम्, अस्मदुपेक्षया भुञ्जन्ति उपयुञ्जते इत्यर्थः, तत्र हेतुः—अस्मदुपेक्षयेति। उपेक्षां विना अस्माभिर्विक्रम एव कृतश्चेत्-न ते भोक्तुं शक्ता इति भावः ॥ २६ ॥

वी ॥ अलमिति ॥ यदूनां नरदेवलाञ्छनैः चामरादिभिरलम् अतःपरं तान्यपहरिष्याम इति भावः,अत्र हेतुत्वेन तानि विशिंषन्ति—दातुः प्रतीपैरिति।दातॄणामस्माकमेव प्रतीपैः प्रतिकूलैः, तत्र दृष्टान्तः—फणिनामिवामृतमिति। सर्पाणां पोषणाय दत्तममृतं

ये नः प्रसादोपचिता हि यादवा आज्ञापयन्त्यद्य गतत्रपा बत ॥ २७
कथमिन्द्रोऽपि कुरुभिर्भीष्मद्रोणार्जुनादिभिः।अदत्तमुपयुञ्जीत सिंहग्रस्तमिवोरणः॥
श्रीशुक उवाच—
[१]जन्मबन्धुश्रियालब्धमदास्ते भरतर्षभ।आश्राव्य रामं दुर्वाच्यमसभ्याः पुरमाविशन्
दृष्ट्वा कुरूणां दौःशील्यं श्रुत्वाऽवाच्यानि चाच्युतः ।
अवोचत्कोपसंरब्धो दुष्प्रेक्षः प्रहसन्मुहुः ॥ ३०

---

क्षीरं दातुरेव प्रतीपं, तद्वत्, एतदेव दार्ष्टान्तिके अनुगमयति —यइति । ये यादवाः अस्मदनुग्रहेणोपचिता एधिता नोऽस्मानेवाधुना आज्ञापयन्ति,अहो बत,ते निर्लज्जाः खलु, यद्वा गतत्रपास्सन्त आज्ञापयन्ति, बतेत्याश्चर्ये ॥ २७ ॥

मु ॥ सर्वथा यदूनां राज्यप्राप्तिरनर्हैवेत्याह —अलमिति ॥ अतः परं तान्यपहारयिष्याम इति हार्दो भावः, अत्रानुगुणदृष्टान्तमाह—फणिनामिति । यथा फणिनः क्षीरप्रदानेन स्वपोषकमेव कदाचिद्रन्ध्रे मारयन्तीति भावः, तदेवाह —यइति । नः अस्माकं प्रसादेन अनुग्रहेण उपचिताः वर्धिताः, हीति प्रसिद्धौ, अस्माकं तत्पोषणं जगति प्रसिद्धमेवेति भावः, यादवाः अद्य गतत्रपाः निर्लज्जास्सन्तः आज्ञापयन्ति, बतेति सर्वथा तदनर्हस्य तत्प्राप्त्यर्हतासम्भवप्रयुक्तमनोनिर्वेदवाचकः ॥ २७ ॥

वी ॥ कथमिति ॥ इन्द्रोऽपि भीष्मादिभिः कुरुभिरदत्तं कथमुपयुञ्जीत, सिंहग्रस्तम् उरणो मेषइव ॥ २८ ॥

मु ॥ उक्तमेव सदृष्टान्तमाह—कथमिति ॥ सिंहग्रस्तम् आमिषम् उरणो मेष इव भीष्मादिभिः कुरुभिः अदत्तं राज्यमित्यर्थः, इन्द्रोऽपि कथम् उपयुञ्जीत अनुभवेत्, 'अनुरुन्धेत' इति पाठे स्वीकुर्यादित्यर्थः, आक्रमणवाचकस्यानुरोधशब्दस्यात्र स्वीकारपर्यवसानात् ॥ २८ ॥

वी ॥ जन्मेति ॥ हेभरतर्षभ अभिजनबन्धुसम्पद्भिः प्राप्तः मदो येषां ते अतएवासभ्याः कुरवः इत्थं रामं प्रति दुर्वाच्यं परुषं वाक्यं श्रावयित्वा पुरं हास्तिनं विविशुः॥

मु ॥ ततः किम्? अत आह—जन्मेति ॥ जन्मनाच बन्धुभिश्च उपलक्षितया श्रिया निरवद्यजन्मना बन्धुबलेनच उपलक्षितया राज्यलक्ष्म्येत्यर्थः, उन्नद्धः उत्कटः मदो येषां ते, 'लब्धमदाः' इति च पाठः, ते भरतर्षभाः कुरवः दुर्वाच्यं तत् परुषं वाक्यं रामम् आश्राव्य श्रावयित्वा, तत्र हेतुगर्भविशेषणमाह— असभ्या इति । पुरमाविशन् ॥

वी ॥ दृष्ट्वेति ॥ दौःशील्यं दौर्जन्यं दृष्ट्वा अवाच्यानि वचांसि श्रुत्वाच्च अच्युतः स्वासाधारणकल्याणगुणजातान्न च्यवत इत्यच्युतः रामः कोपेन संरब्धो ऽतएव दुष्प्रेक्षः पुनःपुनः प्रहसन्नवाच ॥ ३० ॥

मु ॥ एवं च सति हरिः किमुवाचेत्यत आह—दृष्ट्वेति ॥ कुरूणां दौःशील्यं दुर्वृत्तत्वमित्यर्थः,दृष्ट्वा अथ अवाच्यानि दुर्वाक्यानि परुषोक्तीश्चेत्यर्थः, श्रुत्वा अच्युतः कोपसंरब्धः अतिकुपितः अत एव दुष्प्रेक्षः केनापि द्रष्टुम् अशक्यः मुहुः प्रहसन् क्रोधा-

---

१. जन्मबन्धुश्रियोन्नद्ध. मु-भा-प्र-पा॥

नूनंनानामदोन्नद्धाश्शान्तिंनेच्छन्त्यसाधवः। तेषांहिप्रशमोदण्डःपशूनांलगुडोयथा॥।
अहोयदून्सुसंरब्धान्कृष्णंचकुपितंशनैः। सान्त्वयित्वाऽहमेतेषांशममिच्छन्निहागतः
तइमेमन्दमतयःकलहाभिरताःखलाः। [१]तस्मात्तंमामवज्ञायदुर्भाषान्मानिनोऽब्रुवन्॥
नोग्रसेनःकिलविभुर्भोजवृष्ण्यन्धकेश्वरः। शक्रादयोलोकपालायस्यादेशानुवर्तिनः॥
सुधर्माऽऽक्रम्यते येन पारिजातोऽमराङ्घ्रिपः।

---

वेशप्रयुक्तकुटिलहासं कुर्वन् अवोचत्॥ ३०॥

वी॥ उक्तिमेवाह—नूनमिति॥ नानाधनादिमदैरुन्नद्धाः असाधवो दुरात्मान एते नूनं शान्तिं नेच्छन्ति, अतस्तेषां दण्डएव प्रशमश्शान्तिकरः, यथा पशूनाम् उद्वृत्तानां लगुडो यष्टिविशेषश्शमस्तद्वत्॥ ३१॥

मु॥ तदाह नूनमित्यादिना॥ नानामदः स्वभुजबलबन्धुबलसंपद्बलादिजन्यतया बहुप्रकारो मदः, तेन उन्नद्धाः उत्कर्षं प्रापिताः असाधवः शान्तिं नेच्छन्ति औद्धत्यं विना शान्तिं न भजन्त इत्यर्थः, तर्हि तेषु किमाचरणीयमित्यत आह—तेषां हीति। दण्ड एव प्रशमः प्रकर्षेण शमयतीति प्रशमः गर्वशान्तिहेतुः, कथमिव—पशूनां लगुडो यष्टिविशेषः, इति अवोचदिति पूर्वेणान्वयः॥ ३१॥

वी॥ अहोइति॥ सुसंरब्धान् क्रुद्धान् हरिं कृष्णंच सान्त्वयित्वा शमं शान्तिपूर्वकं सन्धिमिच्छन् इहागतोऽस्मि॥ ३२॥

मु॥ एवमुक्त्वा रामस्सर्वहितं स्वागमनप्रयोजनं वदन् भगवतस्सर्वशक्तेस्सर्वकारणस्य श्रीकृष्णस्य महामाहिमप्रकटनोक्तिपूर्वकं समिन्धानो दुर्मदेनोज्जृम्भमाणानां परेषां गर्वं निर्वापयितुं तदुरुक्तिस्मरणोत्थदुस्सहक्रोधावेशात् प्रवृत्त इत्याह—अहो इत्यादिना॥ सुसंरब्धान् अतिकुपितान् यदूंश्च कुपितं हरिं च शनैः सान्त्वयित्वा अनुनीय एतेषां शमम् अनर्थशान्तिम् इच्छन् अहमिहागतः॥ ३२॥

वी॥ त इमइति॥ खलाः मूर्खाश्च मामवज्ञाय अवहेल्य मानिनो दुरहङ्कारिणो दुर्भाषान् दुर्वाक्यान्यूचुः॥ ३३॥

मु॥ मन्दमतयः दुर्बुद्धयः त इमे खलाः दुर्जनाः मानिनः दुरभिमानवन्तः कलहाभिरताः तं सान्त्वनेच्छया आगतं मां मुहुः दुर्भाषान् अवाच्यान् शब्दान् अब्रुवन्॥ ३३॥

वी॥ दुर्भाषणमेवानुस्मरति—नोग्रसेनइति॥ उग्रसेनो विभुः न प्रभुः किलेति काकुः, काका सूचितमनुशयमेव व्यञ्जयितुं विशिनष्टि—भोजवृष्ण्यन्धकेश्वरइति। एवमग्रेऽपि, शक्रादयो यस्य यदुराजस्याऽऽज्ञानुवर्तिनः, पूर्ववद्विशिनष्टि—लोकपालाइति॥३४॥

मु॥ दुर्भाषणमनुस्मरति षड्भिः नोग्रसेन इत्यादिभिः॥ भोजानां वृष्णीनाम् अन्धकानां च देशाधिपतीनाम् ईश्वरः स्वामी विभुः दण्डनीत्या प्रजापालनसमर्थः भोजवृष्ण्यन्धकेश्वरः उग्रसेनः विभुः न किलेत्यन्वयः॥ ३४॥

वी॥ सुधर्मेति॥ सुधर्मा नाम सभा येनाक्रम्यते अधिष्ठीयते, सोऽसौ कृष्णः सिंहासनार्हो न किल॥ ३५॥

---

१. तं मामवज्ञाय मुहुः. मु. भा. प्र पा॥

आनीय भुज्यते सोऽसौ न किलाध्यासनार्हणः ॥ ३५

यस्यपादयुगंसाक्षाच्छ्रीरुपास्तेऽखिलेश्वरी॥सनार्हतिकिलश्रीशोनरदेवपरिच्छदान्॥

यस्याङ्घ्रिपङ्कजरजोऽखिललोकपालमौल्युत्तमैर्धृतमुपासिततीर्थतीर्थम् ।
ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः श्रीश्चोद्वहेम चिरमस्य नृपासनं क॥ ३७

---

मु ॥ एवमुक्त्वा हरिं प्रत्युक्तदूषणमनुस्मरन्नाह --सुधर्मेत्यादिना ॥ यद्वा शक्रादय इत्यर्धमपि हरिवैभवपरत्वेनैव योज्यम्, तदारभ्यापि यत्तदोरन्वयस्वारस्यात्, अर्थो व्याख्यातः, येन सुधर्मा सभा आक्रम्यते. येन अमराङ्घ्रिपः देवतरुः पारिजातः आनीय भुज्यते, तत्कालेषु तत्सङ्कल्पानुगुणप्रसूनतत्फलानि तेनानुभूयन्त इति भावः, अत्र 'पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः' इत्यमरसिंहेन क्षुद्रभौमवृक्षपरतया पारिजातशब्दप्रयोगदर्शनात् भ्रमनिवर्तकम् अत्र'अमराङ्घ्रिपः' इति विशेषणं बोद्धव्यम्. अत्र स इति पूर्वोक्तयच्छब्दप्रतिनिर्देशः, असाविति हस्तेन प्रदर्शनम्, अध्यासनार्हणः सिंहासनाधिष्ठानयोग्यः, न किलेति तद्वचनहेलनप्रकारः ॥ ३५ ॥

वी ॥ पुनस्तमेव विशिंषन्नेतदेवाह --यस्येतिद्वाभ्याम् ॥ अखिलानां ब्रह्मादीनामीश्वरी श्रीर्लक्ष्मीः साक्षाद्यस्य पादयुग्ममुपास्ते,सोऽसौ भगवान् श्रियःपतिः नरदेवचिह्नानि नार्हति किल, त्रीश इति पाठे त्रिलोकेशः ॥ ३६ ॥

मु ॥ लोके यस्याः श्रियः कटाक्षलेशविषयीकृतस्य नरस्य नरदेवत्वं स्यात्, तस्याः साक्षाद्भर्तुः तया नित्यमुपासितस्य च भगवतः कथं राजपरिच्छदार्हता नास्तीति साधिमनस्क आह—यस्येति ॥ अखिलस्य जगतः ईश्वरी नियन्त्री सर्वदा सकलश्रेयःप्रदानेन पालयित्रीति वा, श्रीः लक्ष्मीः यस्य पादयुगं साक्षादुपास्ते, अन्येषांतु समाधिसन्निधापिततदङ्घ्र्युपासनमेव, तदपि पुण्यपरिपाकवशात् कस्यचित् कादाचित्कमेवेति भावः, स श्रीशः सर्वदा स्वैश्वर्यरूप्येण तदनुभवलोलुप इत्यर्थः, नरदेवपरिच्छदान् पट्टबन्धार्हरत्नसिंहासनच्छत्रचामरादिपरिकरान् नार्हति किलेति ॥ ३६ ॥

वी ॥ यस्येति॥ अखिलैर्लोकपालैः कर्तृभिः मौल्युत्तमैः मौलियुक्तैः उत्तमैः उत्तमाङ्गैःशिरोभिः अङ्घ्रिरजो धृतम्, कथम्भूतम्?उपासिततीर्थतीर्थम्-उपासितानि तीर्थानि गङ्गादीनि यैर्योगिभिः तेषामपि तीर्थं पावनम्, यद्वा उपासितगुरूणां सतामपि पावनम् उपासितानां गङ्गादितीर्थानामपि पावनं वा, यस्यच कलायाः कला अंशांशभूताः अहमनन्तः श्रीः लक्ष्मीः उद्वहेम बिभृमः, अङ्घ्रिरज इत्यनुषज्यते, अस्यैवंभूतस्य नृपासनं क कथंवा तदधिकार इति काकुः॥ ३७ ॥

मु॥ अथ रामो भगवतो लोकातिशायिमहिमानमनुसन्दधानः तंच तदीयान् स्वान् प्रतिच तदुक्तसर्वहेलनोद्घाटनं कुर्वन् उन्मत्तकक्रोधावेशेन समूलोन्मूलनं तत्संहारप्रवृत्त इत्याह --यस्येत्यादिना ॥ उपासितानि तीर्थानि यैः योगिभिः तेषामपि पवित्रीकरणसाधनम्, यद्वा उपासितं सर्वैः सेवितं तीर्थं गङ्गादि तस्य तीर्थत्वनिमित्तं पावनत्वनिमित्तमित्यर्थः, यद्वा उपासिततीर्थानाम् उपासितगुरुमन्त्राणां सतामपि तीर्थं पावनं यस्य भगवतः अङ्घ्रिपङ्कजरजः पदाब्जपरागः अखिललोकपालैः कर्तृभिः मौल्युत्तमैः किरीटयुक्तैरुत्तमाङ्गैः उत्तमैर्मौलिभिरितिवा, करणैः धृतम्, किञ्च ब्रह्मा समस्तसृष्टिकर्ता चतुर्मुखः

भुञ्जतेकुरुभिर्दत्तंभूखण्डंवृष्णयःकिल। उपानहःकिलवयंस्वयंतुकुरवश्शिरः॥ ३८
अहोऐश्वर्यमत्तानांमत्तानामिवमानिनाम्। असम्बद्धागिरोरूक्षाःकस्सहेतानुशासिता
अद्यानिष्कौरवांपृथ्वीं[1]करिष्याम्यत्यमर्षितः। गृहीत्वाहलमुत्तस्थौदहन्निवजगत्त्रयम्
लाङ्गलाग्रेणनगरमुद्विदार्यगजाह्वयम्। विचकर्षसगङ्गायांप्रहरिष्यन्नमर्षितः॥ ४१
[2]जलयानमिवाघूर्णगङ्गायांनगरंपतत्। आकृष्यमाणमालोक्यकौरवाजातसंभ्रमाः॥
तमेवशरणंजग्मुस्सकुटुम्बाजिजीविषवः।

---

भवः संहारकर्ता रुद्रः अहं समस्तजगद्धारकशेषरूपः श्रीः सृष्टसर्वजगत्सर्वसंपत्तिमूलकटाक्षा लक्ष्मीश्च यस्य भगवतः कलायाः प्रभावषोडशांशकस्य कलाः तत्षोडशांशलेशान् चिरम् उद्वहेम वहामः, अस्य एतादृशमहिम्नः श्रीकृष्णस्य नृपासनं सिंहासनं क सिंहासनार्हता नास्त्येवेत्यर्थः ॥ ३७ ॥

वी ॥ भुञ्जतइति ॥ भुञ्जते किल ॥ ३८ ॥

मु ॥ तर्हि कथमद्य सिंहासनप्राप्तिरित्यत्राहुः—भुञ्जतइति ॥ कुरुभिर्दत्तम् अनर्हाणामपि दयया स्नेहेनच कौरवैर्दत्तमित्यर्थः, भूखण्डं वृष्णयो भुञ्जतइति, उपानहइति। वयमुपानहः किल, कुरवस्तु स्वयं शिरः उत्तमाङ्गं किल ॥ ३८ ॥

वी ॥ अहोइति ॥ मत्तानां मद्यादिना मत्तानां मानिनां स्वैरिणामिव एषाम् ऐश्वर्येण मत्तानाम् असंबद्धाः रूक्षाः परुषाश्च गिरः कोवा अनुशासिता दण्डयितुं समर्थश्चेत् सहेत ॥ ३९ ॥

मु ॥ तदुर्वाक्यान्यनूद्य क्रोधावेशेन स्वयमाह—अहोइति ॥ मत्तानां मधुमत्तानामिव ऐश्वर्यमत्तानामिति तयोर्विशेषाभाव उक्तः, मानिनां दुरभिमानग्रस्तानां रूक्षाः अतिपरुषाः असंबद्धा गिरः विरुद्धार्थकवचनानि अनुशासिता स्वयं दुष्टशिक्षकः कः पुमान् सहेत ॥

वी ॥ अतोऽद्य भूमिं निष्कौरवां करिष्यामि इत्यभिसन्धायेति शेषः, अतिक्रुद्धो जगत्त्रयं दहन्निव हलं गृहीत्वा उदतिष्ठत् ॥ ४० ॥

मु॥तर्हि किं कर्तव्यम्? अत आह—अद्येति॥अधुना निष्कौरवां निश्शेषितकौरवां करिष्यामीति अमर्षितः कुपितस्सन् उत्तस्थौ उत्थितः ॥ ४० ॥

वी ॥ लाङ्गलाग्रेणेति ॥ स रामः गजाह्वयं नगरम् उद्विदार्य दक्षिणतः प्राकारमूले निखातेनोत्पाट्य गङ्गायां प्रहरिष्यन् पातयितुमित्यर्थः, विचकर्ष आकृष्टवान्, यतोऽमर्षितः॥

मु ॥ लाङ्गलाग्रेण दक्षिणतः प्राकारमूले निखातेन हलाग्रेण उद्विदार्य उत्पाट्य गङ्गायां प्रहरिष्यन् अधोमुखं पातयिष्यन् विचकर्ष आकृष्टवान् ॥ ४१ ॥

वी॥ जलयानमिवेति ॥ आकृष्यमाणम् अत एव जलयानं प्लवमिव आघूर्णं भ्रमत् गङ्गायां पतच्च नगरमालोक्य जातस्संभ्रमस्सम्यग्भ्रमः कम्पो येषां ते जिजीविषवः जीवितुमिच्छवः कुटुम्बैस्सहिताः तं राममेव शरणं प्रापुः, सलक्ष्मणं लक्ष्मणया सहितं साम्बं पुरस्कृत्य पुरतो निधाय बद्धाञ्जलयः प्रोचुश्च ॥ ४२ ॥ ४३ ॥

मु ॥ ततः कौरवाः किमकुर्वन्नित्यत्राह—जलयानमिति ॥ आपूर्णं जलेन समन्ता-

---

१. करिष्यामीत्यमर्षितः. मु. भा. प्र. पा ॥ २. जलयानमिवापूर्णम् मु-भा-प्र. पा ॥

सलक्ष्मणंपुरस्कृत्यसाम्बं[1]प्राञ्जलयोऽब्रुवन् ॥ ४३
रामरामाखिलाधारप्रभावंन[2]विदामते। मूढानांनःकुबुद्धीनांक्षन्तुमर्हस्यधीश्वर ॥४४
स्थित्युत्पत्त्यप्ययानांत्वमेकोहेतुर्निजाश्रयः।लोकान्क्रीडनकानीशक्रीडतस्तेवदन्तिहि
त्वमेव मूर्ध्नीदमनन्तलीलया भूमण्डलं बिभर्षि सहस्रमूर्धन् ।
अन्ते च यस्स्वात्मनि रुद्धविश्वश्शेषेऽद्वितीयः परिशिष्यमाणः ॥ ४६

---

त्पूरितं जलयानम् उडुपमिव आकृष्यमाणं बलरामेण लाङ्गलाग्रेण आनीयमानं सत् गङ्गायां पतत् तत् नगरम् आलोक्य कौरवाः जिजीविषवः जीवितुमिच्छवः, अत्राक्षराधिक्यमार्षत्वात् सोढव्यम्, सकुटुम्बाः दारापत्यादिसहितास्सन्तः प्राञ्जलयः बद्धाञ्जलयश्च सलक्ष्मणं लक्ष्मणाख्यया भार्यया सहितं साम्बं पुरस्कृत्य स्वापराधक्षामणार्थं तमेव उपायनीकृत्येति भावः, प्रभुं निग्रहानुग्रहसमर्थं तं राममेव शरणं जग्मुः ॥ ४२ ॥ ४३ ॥

वी ॥ उक्तिमेवाह—रामरामेति ॥ कुबुद्धीनां नोऽस्माकम् अपराधमिति शेषः ॥

मु ॥ अथ स्वाज्ञानप्रकटनपूर्वकं नः क्षमस्वेत्याहुः—रामेति ॥ अखिलाधार अधः-समस्तब्रह्माण्डाधारतया शेषरूपेण वर्तमानेत्यर्थः, प्रभावम् अन्तर्महिमानं न विदामहे न जानीमः, मूढानाम् अज्ञानां कुबुद्धीनां कुत्सितबुद्धीनां, लोके स्वभावतो मूढाः कथंचित् क्षन्तव्याः, तत्र कुबुद्धयश्चेत् क्षन्तुमर्हा एवेति भावः. तथाऽपि हे अधीश्वर सर्वजगत्स्वामिन् क्षन्तुमर्हसि, 'प्रभावं न विदामहे' इति पूर्वार्धेनोक्तत्वात् तदज्ञानमेवात्र क्षमाकर्मभूतं बोध्यम्, ईश्वरस्य ईशितव्यापराधक्षमा युक्तेति भावः ॥ ४४ ॥

वी ॥ स्थितीति ॥ अप्ययः प्रलयः, तेषां त्वम् एकएव हेतुः आधारतयेति भावः, कस्तर्हि मम हेतुस्तत्राहुः—निजाश्रयइति । निज आत्मा आधारो यस्य सः, हेईश क्रीडतः ते तव क्रीडनकान् क्रीडोपकरणभूतान् वदन्ति त्वद्याथात्म्यविदः ॥ ४५ ॥

मु ॥ तर्हि कथं ममेश्वरत्वमित्यत्राहुः—स्थितीति ॥ अप्ययो नाशः, स्थित्यादीनां त्वम्, एक एव हेतुः कारणं सर्वकारणतया सर्वकार्याश्रयस्त्वमेवेत्यर्थः, तर्हि ममाश्रयः क इत्यत्राहुः—निजाश्रयइति । निजम् अनादिनिधनस्वरूपमेव आश्रयो यस्य सः स्वपरनिर्वाहकस्वरूप इत्यर्थः, नन्वात्मारामस्य मम किमेभिः लोकनिर्माणादिभिरित्यत्राहुः—लोकानिति। क्रीडतः विहरतः ते लोकानेतान् क्रीडनकानीव क्रीडासाधनवस्तूनि वदन्ति पुराविद इति शेषः ॥ ४५ ॥

वी ॥ त्वमेको हेतुरित्येतदेव प्रपञ्चयति—त्वमिति ॥ हे अनन्त मूर्ध्नीत्यस्य सहस्रेत्यादिः, सहस्रमूर्धा त्वमेकएवेदं कृत्स्नं भूमण्डलं मूर्ध्नि लीलयैव बिभर्षि, 'अन्ते प्रलये स्वात्मनि रुद्धं लीनं विश्वं यस्य सः, अतएवावशिष्यमाणोऽतएव चाद्वितीयः समाभ्यधिकरहितः शेषे शायिष्यसे, परमात्मदृष्ट्येदमुक्तम् ॥ ४६ ॥

मु ॥ किं च त्वमेव तत्तदुचितसमये बहिरभ्यन्तरेच महीं बिभर्षीत्याहुः—त्वमेवेति ॥ सहस्रमूर्धन्निति बहिर्भूमण्डलधारणहेतुगर्भसम्बुद्धिः, सहस्रं मूर्धानो यस्येति विग्रहः, अनन्तलीलया शेषलीलया त्वमेव मूर्ध्नि इदं भूमण्डलं बिभर्षि, यः त्वम् अन्ते

---

१. प्राञ्जलयः प्रभुम्. मु भा-प्र-पं॥ २. विदामहे. मु-भा-प्र. पा ॥

कोपस्तेबलशिक्षार्थनद्वेषान्नचमत्सरात् । बिभ्रतोभगवन्सत्त्वंक्षितिपालनतत्पर॥ ४७
नमस्तेसर्वभूतात्मन्सर्वशक्तिधराव्यय।विश्वकर्मन्नमस्तेऽस्तुत्वांवयंशरणंगताः॥ ४८

श्रीशुक उवाच—

एवं प्रपन्नैस्संविग्नैर्वेपमानैर्हलायुधः ।

---

संहारकालेच स्वात्मनि स्वदेहे रुद्धविश्वः निरुद्धसर्वचराचरप्रपञ्चः अतएव अद्वितीयः परिशिष्यमाणः अवशिष्टस्सन् शेषे शयनं करोषि,शीङो लण्मध्यमपुरुषैकवचनम् ,यद्वा शेषपर्यङ्के परिशिष्यमाणो यः सच त्वमेवेति,'स्वात्मनि रुद्धवीर्यः'इति पाठे स्वस्य आत्मनि रुद्धं वीर्यं नानाविधचेतनाचेतनस्वभावो यस्य सः तत्तत्स्वभावादिकं कार्योन्मुखं कुर्वन्नित्यर्थः, अद्वितीयः समाभ्यधिकरहित इतिवा ॥ ४६ ॥

वी ॥ कोपइति ॥ हे क्षितिपालनतत्पर हेभगवन् हेबल सत्त्वं शुद्धसत्त्वमयं शरीरं बिभ्रतः तव कोपः केवलं शिक्षार्थमेव,नतु द्वेषात् ,नापि मत्सराच्च,द्वेषः अप्रीतिः,मत्सरः कौटिल्यम् ॥ ४७ ॥

मु ॥ अथ दुष्टव्रणपीडितपुत्रादेः शस्त्रक्षाराग्निकर्मकारयितृपितृन्यायेन त्वत्कृतशिक्षापि हितायैवेत्याहुः—कोपइति ॥ शिक्षार्थम् अहंमत्या अकृत्ये वर्तमानानां तद्विनिवर्तनेन त्वदाज्ञानुगुणप्रवर्तनार्थमित्यर्थः, द्वेषाच्च न,मत्सराच्च न, द्वेषमत्सरयोः हेतुभेदकृतबुद्धिदशाभेदो द्रष्टव्यः, "वैषम्यनैर्घृण्ये न सापेक्षत्वात्"इति सूत्रकारैः तस्य द्वेषमत्सरहेतुभूतनैर्घृण्याभावोक्तेः, हे भगवन् सत्त्वं रजस्तमोभ्याममिश्रं शुद्धसत्त्वं बिभ्रतः ते कोपः शिक्षार्थं खलु,द्वेषाच्च न, मत्सराच्च नेत्यन्वयः, अहं कीदृश इत्यत्राहुः—क्षितिपालनतत्परेति । केवलरजोगुणप्रधानचतुर्मुखान्तर्यामी संहारहेतुः, केवलशुद्धसत्त्वमयद्रव्याधिष्ठाता विष्णुस्त्वं क्षितिरक्षक इत्यर्थः, अत्र क्षितिरिति जगतामुपलक्षणम्॥४७॥

वी ॥ शरण्यत्वोपयुक्तगुणैस्संबोधयन्तश्शरणं व्रजन्ति ॥ सर्वभूतात्मन्नित्यनेन सार्वज्ञं,सर्वशक्तिधरेत्यनेन सर्वशक्तित्वम्, अव्ययेत्यनेन रागद्वेषादिविकाररराहित्यम् अतएव सर्वसुहृत्त्वं विश्वकर्मन्नित्यनेन परत्वंचोक्तं भवति, क्रियतइति कर्म कार्यं, विश्वं यस्य कार्यं, तथाभूतेत्यर्थः, सर्वमिदं परमात्मदृष्ट्योक्तम् ॥ ४८ ॥

मु ॥ अथ संबुद्धित्रयेण उक्तार्थं स्थापयन्तः तन्महिमानुसन्धानजनितभक्तिप्रकर्षेण नमस्यन्तीत्याह—नमस्तइति ॥ सर्वभूतानि आत्मा देहो यस्येतिवा सर्वभूतानाम् आत्मा अन्तरात्मेतिवा सर्वभूतात्मा, ततस्संबुद्धिः, सर्वशक्तिधर सर्वजगन्निर्माणशक्तिधर, तथापि पृथिव्यादिभूतानामिव स्वस्वरूपविकाररूपव्ययोवा जीवात्मनामिव स्वभावविकाररूपव्ययोवा तव नास्तीत्याहुः—अव्ययेति।स्वरूपतः स्वभावतोवा न व्येतीत्यव्ययेति, विश्वस्य प्रपञ्चस्य कर्म पालनादिरूपं यस्मात् विश्वकर्मन्, एवं नमस्कृत्य सर्वथा त्वच्छरणागतिमन्तरेण रक्षणोपायान्तरं सुलभं न जानीम इत्यभिप्रायेणाहुः—त्वामिति। त्वां रक्षकं शरणं गताः ॥ ४८ ॥

वी ॥ एवमिति ॥ संविग्नैर्भीतैः अतएव कम्पमानैः अतएवच प्रपन्नैः प्रसादितः

प्रसादितः [1]प्रसन्नोऽसौ माभैष्टेत्यभयं ददौ॥ ४९

दुर्योधनःपारिबर्हंकुञ्जरान्षष्टिहायनान्।ददौ द्विशतसाहस्रंनियुतानितुरङ्गमान्॥ ५०

रथानां षट्सहस्राणि रौक्माणां सूर्यवर्चसाम् ।
दासीनां निष्ककण्ठीनां सहस्रं दुहितृवत्सलः ॥ ५१

प्रतिगृह्यतुतत्सर्वंभगवान्सात्वतर्षभः।ससुतस्सस्नुषःप्रागात्सुहृद्भिरभिनन्दितः॥५२

ततः प्रविष्टस्स्वपुरीं हलायुधस्समेत्य बन्धूननुरक्तचेतसः ।
शशंस सर्वं यदुपुङ्गवानां मध्येसभायां कुरुषु स्वचेष्टितम् ॥ ५३

---

प्रसन्नश्च असौ हलायुधः भयं माकार्ष्टेत्येवमभयं ददौ ॥ ४९ ॥

मु ॥ एवमिति ॥ संविग्नैः भीतैः अतएव वेपमानैः कम्पमानैः प्रपन्नैः शरणागतैः हलायुधः एवं प्रसादितः प्रसादम् अनुग्रहं प्रापित इत्यर्थः, ततः किमकरोदित्यत्राह—प्रसन्नाऽहमिति । माभैष्ट भयं मा भजत, इति अभयं ददाविति ॥ ४९ ॥

वी॥ दुर्योधन इति ॥ पारिबर्हमुपायनं ददौ इति संबन्धः, तदेव प्रपञ्चयति द्वितीयान्तैः, षष्टिः हायनाः वत्सराः येषा तान् द्विशतंच साहस्रंच तयोस्समाहारः, तावतो गजान् ददौ,'द्वादशसाहस्रम्'इति पाठान्तरेतु स्पष्टोऽर्थः, तुरङ्गमांश्च द्वादश नियुतानि॥

मु ॥ ततः किमत आह—दुर्योधनइति ॥ षष्टिहायनान् षष्टिवर्षवयस्कान् विंशोत्तरशतजीविना कुञ्जराणा तदर्धवयस्कत्वोक्तिरतिबलाधिक्यद्योतनार्था, द्विशतसाहस्रं कुञ्जरान् नियुतानि तुरङ्गमान् ॥ ५० ॥

वी॥रथानामिति॥ रौक्माणा स्वर्णालङ्कृताना सूर्यस्येव वर्चो येषा तेषां रथानां निष्कं पतकाख्यभूषणं कण्ठे यासा तासां दासीना सहस्रं ददौ,तत्र हेतुः—दुहितृवत्सलइति ॥

मु ॥ रौक्माणा रुक्ममयानाम् अत एव सूर्यवर्चसाम् रथाना षट्सहस्राणि च निष्ककण्ठीना स्वर्णाभरणालंकृतकण्ठाना दासीना सहस्रंचेति पारिबर्हं कन्यावरयोर्देयं वस्तु दुर्योधनः ददौ, तत्र हेतुगर्भाविशेषणं—दुहितृवत्सलइति । तत्राक्षराधिक्यमार्षत्वात् साढव्यम् ॥ ५१ ॥

वी ॥ प्रतिगृह्येति ॥ तत्सर्वमुपायनं प्रतिगृह्य सात्वतर्षभो रामः सुतेन स्नुषयाच सहितः सुहृद्भिः कौरवैः अभिनन्दितो ययौ ॥ ५२ ॥

मु ॥ ससुतइति ॥ ससुतः सस्नुषः, स्नुषा पुत्रभार्या, भगवान् सात्वतर्षभः यादवश्रेष्ठः रामः ससुतः सस्नुषस्सन् तत्सर्वं परिगृह्य सुहृद्भिः अभिनन्दितः प्रागादित्यन्वयः॥

वी॥ततइति॥स्वपुरीं द्वारकाम् अनुरक्तं चेतो येषा तान् बन्धून् यदून् समेत्य यदुपुङ्गवाना मध्येसभाया सभायाः मध्ये यत्कुरुषु स्वचेष्टितं तत्सर्वं शशंस कथयामास॥५३॥

मु ॥ ततइति ॥ अनुरक्तचेतसः सानुरागचित्तान् बन्धून् समेत्य यदुपुङ्गवाना मध्येसभाया सभामध्ये कुरुषु विषये स्वचेष्टितं पूर्वोक्तं सर्वं शशंसेति ॥ ५३ ॥

---

१. प्रसन्नोऽहम्. मु-मा-प्र. पा ॥

अद्यापिवःपुरंह्येतत्सूचयद्रामविक्रमम्।समुन्नतंदक्षिणतोगङ्गायांनुदृश्यते ॥ ५४

इति श्रीभागवते महापुराणे दशमस्कन्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

(श्रीकृष्णं प्रति नारदागमनकथा)

श्रीशुक उवाच—

नरकंनिहतंश्रुत्वातथोद्वाहंचयोषिताम्।कृष्णेनैकेनबह्वीनांतंदिदृक्षुस्स्मनारदः ॥ १

चित्रंबतैतदेकेनवपुषायुगपत्पृथक् ।

---

वी ॥ यद्बलेन गङ्गायां पुरपातनं तदसम्भावितं मन्वानं राजानं प्रत्याह मुनिः— अद्यापीति॥ वो युष्माकं पुरं हास्तिनम् अद्यापि रामविक्रमं सूचयद्वर्तते,तत्र लिङ्गमाह— समुन्नतमिति । गङ्गायां दक्षिणतः समुन्नतं सत् दृश्यते ननु ॥ ५४ ॥

मु ॥ अत्र श्रीशुकः परीक्षितं प्रति युष्मत्पुरस्य तद्विक्रमचिह्नम् अद्यापि दृश्यत इत्याह—अद्येति ॥ गङ्गायां गङ्गास्रोतःप्रान्तएव दक्षिणतो दक्षिणभागे समुन्नतं सत् अपरभागस्य स्रोतसि पतत इव नतत्वादित्यर्थः, एतत् वः पुरम् अद्यापि रामविक्रमं सूचयदिव दृश्यते नन्विति ॥ ५४ ॥

इतिश्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

इति मुनिभावप्रकाशिकासमाख्यायां दशमव्याख्यायां
सप्ततितमोऽध्यायः ॥ ७० ॥

---

वी॥अथैको भगवानष्टाधिकषोडशसहस्रपत्नीभिस्सह कथं रमत इति दिदृक्षयाऽऽगताय नारदाय प्रदर्शितं भगवतश्चेष्टितमनुवर्णयति—नरकमित्यादिना॥ एकेन कृष्णेन सह कर्त्रा वा बह्वीनां योषितां विवाहं च श्रुत्वा नारदस्तं कृष्णं दिदृक्षुरासीदिति शेषः, अत्रोद्वाहशब्देन तत्पूर्वकक्रीडाच विवक्षिता ॥ १॥

मु ॥ प ॥ अकर्मवश्योऽपि हरिर्हि लोकोत्तराणि संकल्प्य तथा विभक्तान् ।
स्वेनैव धर्मान् स्वयमाचचार तच्छिक्षणायेति सतोऽत्र भावः ॥
देवर्षेरागमेनापि तत्संभाषणसारतः ।
नृताच्छन्नहरेस्तत्त्वं मुनिनाऽत्र प्रकाश्यते ॥
शृङ्गाररसमग्नोऽपि नरलीलानुसारतः ।
स्वैश्वरूप्यं पिदध्ने हरिर्नेत्यत्र कथ्यते ॥

नरकमिति ॥ कृष्णेन नरकं निहतं श्रुत्वा देवर्षिः नारदः एकेनैव तेन बह्वीनां योषिताम् उद्वाहम् एकस्मिन्नेव मुहूर्ते पाणिग्रहणं कृत्वा तत् कृष्णकृत्यं दिदृक्षुः सन् ॥ १ ॥

वी ॥ दिदृक्षामेवाभिनयति—चित्रमिति ॥ एतच्चित्रंबत अतिचित्रमित्यर्थः, किं-

गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥ २

इत्युत्सुको द्वारवतीं देवर्षिर्द्रष्टुमागमत्। [1] पुष्पितोपवनारामद्विजालिकुलनादिताम् ॥ ३

उत्फुल्लेन्दीवराम्भोजकह्लारकुमुदोत्पलैः। छुरितेषु सरस्सूच्चैः [2] कूजितां हंससारसैः॥ ४

प्रासादलक्षैर्नवभिर्जुष्टां स्फाटिकराजतैः। महामरकतप्रख्यैस्स्वर्णरत्नपरिच्छदैः॥ ५

विभक्तरथ्यापथचत्वरापणैश्शालासभाभी रुचिरां सुरालयैः।

---

तत्! यदेकेन वपुषा विग्रहेण युगपदेव पृथग्गृहेषु बहुषु गृहेषु योषित्समानसङ्ख्याकगृहेष्वित्यर्थः, द्व्यष्टसाहस्रं षोडशसहस्रसङ्ख्याकाः स्त्रियः स्त्रीः एक उपयेमे इत्येतत् ॥

मु ॥ एकेनैव वपुषा युगपदेव पृथक् प्रत्येकम् एक एव कृष्णः द्व्यष्टसाहस्रं स्त्रियः गृहेषु तावत् उदावहत् परिणीतवान्, तत् चित्रं, बतेति मनसाऽविचिन्त्यताप्रयुक्तखेदे ॥ २ ॥

वी ॥ इतीति ॥ इत्थं द्रष्टुमुत्सुको देवर्षिर्नारदः द्वारकां ययौ, सार्धत्रयेण तामेव वर्णयति—पुष्पितेति। पुष्पितेषूपवनेष्वारामेषु उद्यानवनेषु च द्विजानां पक्षिणाम् अलीनां च कुलैर्नादिताम् ॥ ३ ॥

मु ॥ इत्युत्सुकस्सन्नित्यर्थः, तेन पूर्वेण दिदृक्षाप्रयुक्तासिनयोक्तिः, अत एवाह—द्वारवतीं देवर्षिर्द्रष्टुमागमदिति। द्वारवतीमेव वर्णयति—पुष्पितेत्यादिना पतत्पताकध्वजवारितातपामित्यन्तेन सार्धत्रयेण। पुष्पितानि सर्वकालं संजातपुष्पाणि उपवनानि नगरप्रान्तवनानि आरामा गृहोद्यानानि च यस्यां ताम् अतएव द्विजानां शुकादिपक्षिविशेषाणाम् अलीनां भ्रमराणां च कुलैः नादितां संजातमधुरनादां 'पुष्पितोपवनारामद्विजालिकुलनादिताम्'इति समस्तपदपाठे पुष्पितोपवनेषु आरामेषु द्विजानामलीनां च कुलैः नादितामित्यर्थः ॥ ३ ॥

वी ॥ उत्फुल्लैरिन्दीवरादिभिः छुरितेषु व्याप्तेषु सरस्सु हंसैस्सारसैश्चोच्चैर्नादिताम् ॥ ४ ॥

मु ॥ उत्फुल्लैः विकासिभिः इन्दीवरैः अतिनीलोत्पलैः अम्भोजैः पद्मैः कह्लारैः रक्तोत्पलैः कुमुदैः नवैः उत्पलैः अनतिनीलैः कुवलयैः छुरितेषु व्याप्तेषु उच्चैस्सरस्सु महासरस्सु अधिकरणेषु हंसैस्सारसैश्च नोज्झितां सर्वदा अत्यक्ताम् ॥ ४ ॥

वी ॥ नवभिः प्रासादानां लक्षैर्जुष्टां युक्तामित्यर्थः, कथम्भूतैः? स्फटिकमयैः रजतमयैश्च महामरकतस्येन्द्रनीलस्य स्वर्णश्रेष्ठस्य रत्नानां च परिच्छदाः उपकरणानि येषु तैः, 'महामरकतप्रख्यैः' इति पाठे महामरकतैः प्रख्यान्ति प्रकाशन्त इति तथा, तैः स्वर्णरत्नमयाः परिकरा येषु तैः ॥ ५ ॥

मु॥ महामरकतैः अतिश्रेष्ठहरिन्मणिभिः प्रकर्षेण ख्यान्ति प्रकाशन्त इति महामरकतप्रख्यैः स्वर्णरत्नमयाः परिच्छदाः परिकराः येषु तैः ॥ ५ ॥

वी॥किंच— विभक्तेति॥विभक्तैः रथ्यापथादिभिः शालादिभिस्सभाभिस्सुराणां देवताप्रतिमानाम् आलयैश्च रुचिरां शोभमानां रथ्यापथाः राजवीथयः संसिक्ताः मार्गादयो

---

१. पुष्पितोपवनारामां-मु-भा-प्र-पा ॥ २. नोज्झितां-मु-भा-प्र-पा ॥

संसिक्तमार्गाङ्गण[1]वीथिदेहलीं [2]पतत्पताकाध्वजवारितातपाम् ॥ ६
तस्यामन्तःपुरंश्रीमदर्चितंसर्वधिष्ण्यपैः।हरेस्स्वकौशलंयत्रत्वष्ट्राकात्स्न्येनदर्शितम् ॥
तत्रषोडशभिस्सद्मसहस्रैस्समलङ्कृतम्।विवेशैकतमंशौरेःपत्नीनांभवनंमहत् ॥ ८
विष्टब्धंविद्रुमस्तम्भैर्वैडूर्यफलकोत्तमैः।इन्द्रनीलमयैर्जालैस्स्तम्भैर्मरकतोत्तमैः ॥ ९
वितानैर्निर्मितैस्त्वष्ट्रा मुक्तादामविलम्बिभिः ।

---

यस्यां तां पतन्तीभिश्चलन्तीभिः पताकादिभिः ध्वजैश्च वारित आतपो यस्यां ताम्॥ ३॥

मु॥ चत्वराणि गृहाङ्कणानि पण्यवीथयश्च तैः शालाः विशालानां जनानां द्यूतादिस्थानभूतगृहविशेषाः, सभाः धर्माधर्मादिपरिपालनार्थं समवेतानां प्रभुवराणां धर्मासनस्थानानि, ताभिश्च सुरालयैः देवतायतनैश्च मधुरमधुविक्रयस्थानैर्वा रुचिरां रम्यां संसिक्ताः कस्तूर्यादिद्रवसिक्ताः मार्गाः राजपथाः अङ्गणानि तत्तद्गृहाजिराणि वेदयः विश्रमवेदिकाः गेहाग्रभागाश्च यस्यां सन्तीति तां पतन्त्यः वायुना इतस्ततश्चलन्त्यः पताकाः चित्रपटरूपा वैजयन्त्यः येषु तैः ध्वजैः केतनैः वारितः आतपो यस्यां तां द्वारवतीं द्रष्टुमागमदिति पूर्वेणान्वयः ॥ ६ ॥

वी ॥ तस्यामिति॥ तस्यां द्वारकायाम् अन्तःपुरं तत्रापि शौरेरेकतमं भवनं गृहं विवेशेति संबन्धः, अन्तःपुरं विशिनष्टि—श्रीमद्भोग्यभोगोपकरणादिसमृद्धिमत् सर्वैः धिष्ण्यपैः लोकाधिपतिभिः अर्चितं बहुमतं, किं बहुना! यत्र यस्मिन्नन्तःपुरे हरेः हरये त्वष्ट्रा स्वकौशलं स्वशिल्पनैपुण्यं कात्स्न्येन प्रदर्शितम् , किं च षोडशभिः शौरेः पत्नीनां गृहसहस्रैस्समलङ्कृतम् ॥ ७ ॥ ८ ॥

मु ॥ तत्र किमकरोदित्यत आह —तस्यामिति ॥ यत्र त्वष्ट्रा विश्वकर्मणा स्वकौशलं स्वाभ्यस्तशिल्पविद्यानैपुणं कात्स्न्येन सामस्त्येन दर्शितं प्रकटीकृतं, सर्वधिष्ण्यपैः सर्वलोकपालैः अर्चितं पूजितं श्रीमत् सर्ववस्तुसमृद्धिमत् तस्यां द्वारवत्यां हरेः अन्तःपुरं विवेश ॥ ७ ॥

मु ॥ तत्र च अन्तःपुरे षोडशभिः सद्मसहस्रैः षोडशसहस्रतत्तन्मन्दिरैः समलङ्कृतं शौरेः पत्नीनां महत् एकतमं भवनं गृहमण्डलं विवेश ॥ ८ ॥

वी॥पुरं भवनं चैव विशिनष्टि—विष्टब्धमितिचतुर्भिः॥ विद्रुमस्तम्भैः वैडूर्यमयानि फलकोत्तमानि स्तम्भाश्रयाणि च्छादनानि तैश्च विष्टब्धं प्रतिबद्धम् इन्द्रनीलमयैः जालैः गवाक्षैः मरकतमयैरुत्तमैश्च स्तम्भैर्विष्टब्धं त्वष्ट्रा विश्वकर्मणा निर्मितैः मुक्तादामानि विलम्बयन्तीति तथा तैः वितानैः उल्लोचैः दान्तैः निर्मलैः मणिश्रेष्ठालङ्कृतैश्च आसनैः पर्यङ्कैश्च उपलक्षितमिति शेषः, अलङ्कृतमित्युपरिष्टात्सम्बन्धोवा ॥ ९ ॥ १० ॥

मु ॥ त्रिभिस्तदेव विशिनष्टि—विष्टब्धमिति ॥ वैडूर्यफलकोत्तमैः वैडूर्यमणिमयाग्रफलकातिश्रेष्ठतमैः विद्रुमस्तम्भैः विष्टब्धं धृतं किञ्च इन्द्रनीलमयैः जालैः गवाक्षैः मरक-

---

१. वेदि. मु-भा प्र. पा ॥ २. पतत्पताकध्वज. मु. भा. प्र. पा ॥

दान्तैरासनपर्यङ्कैर्मण्युत्तमपरिष्कृतैः ॥ १०
दासीभिर्निष्ककण्ठीभिस्सुवासोभिरलङ्कृतम् ।
[1]पुम्भिस्सकञ्चकोष्णीषसुवस्त्रमणिकुण्डलैः ॥ ११
रत्नप्रदीपनिकरद्युतिभिर्निरस्तध्वान्तं विचित्रवलभीषु शिखण्डिनोऽङ्ग ।
नृत्यन्ति यत्र विहितागरुधूपमक्षैर्निर्यान्तमीक्ष्य घनबुद्धय उन्नदन्तः॥ १२
तस्मिन्समानगुणरूपवयस्सुवेषदासीसहस्रयुतयाऽनुसवं गृहिण्या ।
विप्रो ददर्श चमरव्यजनेन रुक्मदण्डेन सात्वतपतिं परिवीजयन्त्या॥ १३

---

तोत्तमैः मरकतमणिमयत्वेन श्लाघ्यतमैः स्तम्भैश्च इन्द्रनीलमयैः जालैः गवाक्षैः मरकतोत्तमैश्च ॥ ९ ॥

मु ॥ त्वष्ट्रा विनिर्मितैरिति सर्वत्रान्वयः, मुक्तादामभिः तत्सूत्रैरित्यर्थः,वितानबन्धनहेतुत्वात् तृतीयावा, तदाधारत्वविवक्षया वा सप्तमी, तैर्वा तेषु लम्बन्त इति तैः वितानैः विचित्रोल्लोचैश्च मण्युत्तमपरिष्कृतैः उत्तममणिभिश्चितैः दान्तैः सुखस्पर्शैः आसनैः पर्यङ्कैश्च ॥ १० ॥

वी ॥ शोभनानि वासांसि याभिस्ताभिर्दासीभिः शोभनानि कञ्चुकादीनि येषां तैः पुम्भिश्चालङ्कृतम् ॥ ११ ॥

मु ॥ सुवासोभिः विविधविचित्रमहावस्त्राभिः निष्ककण्ठीभिः सुवर्णमणिमयभूषणालंकृतकण्ठीभिः दासीभिः अलंकृतं सुष्ठुतराणि उष्णीषसुवस्त्रमणिकुण्डलानि येषां तैः पुम्भिश्च अलंकृतमिति ॥ ११ ॥

वी ॥ रत्नप्रदीपानां ये निकरास्समूहास्तेषां द्युतिभिः निरस्तं तमो यस्मिन् तत् किञ्च यत्रान्तःपुरे भवने च वलभीषु स्तम्भाग्रप्रसारितवक्रदारुविशेषेषु शिखण्डिनो मयूराः गवाक्षमार्गैर्निर्यान्तं विहितं कृतम् अगरुधूपं वीक्ष्य घनो नीलाम्बुदोऽयमिति बुद्धिर्येषां तथाभूताः अत एव उन्नदन्तः उच्चैर्नदन्तः नृत्यन्ति, तथाभूतं च ॥ १२ ॥

मु ॥ किञ्च —रत्नप्रदीपानाम् उद्गरश्मिमणिमयदीपानां निकरद्युतिभिः समूहप्रभाभिः निरस्तध्वान्तं विवेशेति पूर्वेणान्वयः, किञ्च यत्र अन्तःपुरे विचित्रवलभीषु नवरत्ननिर्मिततया अद्भुतरसावहगृहवलभीषु शिखण्डिनः तेषु स्थितमयूराः अक्षैः गवाक्षैः निर्यान्तं विहितागुरुधूपम् ईक्ष्य घनबुद्धयः मेघभ्रान्तिमन्तः अतएव उन्नदन्तः उच्चैः तारं रणन्तः नृत्यन्ति, अङ्गेति राजानं प्रति संबुद्धिः ॥ १२ ॥

वी ॥ तस्मिन्निति ॥ तस्मिन्नेव भवने गृहिण्या भार्यया रुक्मिण्येति भावः, समं सहितमित्यर्थः, सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्श, कथम्भूतया ? अनुसवं सर्वकालम् आत्मना समानानि गुणरूपवयांसि सुवेषः अलङ्कारश्च यस्य तेन दासीनां सहस्रेण युतया रुक्मिण्या रुक्ममयो दण्डो यस्य तेन चामरव्यजनेन वीजयन्त्या च ॥ १३ ॥

मु ॥ एवं भगवतो नगरं गृहमण्डलं च यथावस्थितवस्तुवर्णनपूर्वकं नारदो ददर्शेत्युक्त्वा तत्र भगवन्तं ददर्शेत्याह—तस्मिन्निति॥ तस्मिन् भवने समानाः तुल्याः गुण-

---

१. पुम्भिस्सुष्ठुतरोष्णीष. मु. मा. प्र. पा ॥

तं संनिरीक्ष्य भगवान्सहसोत्थितश्श्रीपर्यङ्कतस्सकलधर्मभृतां वरिष्ठः ।
आनम्य पादयुगलं शिरसा किरीटजुष्टेन साञ्जलिरवीविशदासने स्वे ॥
तस्यावनिज्य चरणौ तदपस्स्वमूर्ध्नाबिभ्रज्जगद्गुरुतरोऽपि सतां[1] पतिर्हि ।
ब्रह्मण्यदेव इति यद्गुणनाम युक्तं तस्यैव यच्चरणशौचमशेषतीर्थम् ॥ १५

रूपवयस्सुवेषाः शीलादिगुणसौन्दर्ययौवनशुभालङ्कारा यस्य तेन दासीसहस्रेण युतया यथोचितोपचारनियोगार्हदासीसहस्रसेवितयेत्यर्थः, रुक्मदण्डेन स्वर्णमयदण्डमण्डितेन चामरव्यजनेन चमरीवालव्यजनेन चामरेण वीजयन्त्या चामरान्दोलनेन उपचारं कुर्वत्ये-त्यर्थः, गृहिण्या रुक्मिण्या सह सात्वतपतिं श्रीकृष्णं विप्रो नारदो ददर्शेति, अनुसवं स-र्वकालमित्यर्थः, अनुसवं परिवीजयन्त्येति वा अनुसवं समानगुणरूपवयस्सुवेषदासीस-हस्रयुतयेति वा योज्यम् ॥ १३ ॥

वी ॥ तमिति॥ तं दृष्टवन्तं नारदं सम्यक् निरीक्ष्य भगवान् श्रियो रुक्मिण्याः पर्य-ङ्कादाशूत्थितः, तदिष्टदैवतभूतः किमित्युत्थित इत्यतो विशिनष्टि—सकलधर्मभृतां वरिष्ठः धर्मात्मभिः महत्स्वेवं वर्तितव्यमिति प्रदर्शनार्थमिति भावः, अत एव किरीटालङ्कृतेन शिरसा तस्य पादयुगलं प्रणम्य अञ्जलिना सहितः स्वकीये आसने अवीविशदुपवे-शयामास ॥ १४ ॥

मु ॥ तमिति ॥ अत्र सन्निरीक्ष्येति सम्यङ्निरीक्षणाद्युक्तिर्जगदुदयविभवलयली-लस्यापि भगवतो धर्मसंस्थापनार्थमवतीर्णतया स्वानुष्ठानमुखेन इतरेषां महत्सु कर्तव्यो-चिततद्वृत्तिशिक्षणार्थेत्यमुमर्थं व्यञ्जयति, ततः किमकरोदित्यत्राह—भगवानिति । सक-लधर्मभृतां वरिष्ठ इति—धर्मचारित्वमुक्तम्, अकर्मवश्यस्य एवं सद्धर्मचारित्वं लोक-शिक्षार्थमिति भावः, श्रीपर्यङ्कतः सहसोत्थायेति "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनस्स्थविर आगते । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" इति शास्त्रार्थप्रकटनार्थमिति भावः, श्रियो रुक्मिण्याः पर्यङ्कतः तल्पात्, "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि" इति वचनात् रुक्मिण्यां श्रीशब्दप्रयोगः, सहसोत्थितइति—महाजनदर्शनानन्तरमेव प्रत्यु-त्थानाकरणे प्रत्यवायद्योतनार्थं सहसेत्युक्तम्, किरीटजुष्टेन किरीटभूषितेन शिरसा पा-दयुगलम् आनम्य प्रणम्य स्वे स्वीये आसन एव अवीविशत् निवेशयामास ॥ १४ ॥

वी ॥ तस्येति ॥ स भगवान् जगतां साधुजनानां गुरुतरोऽपि परमगुरुरपि हि यतस्सतां पतिरपि तस्य नारदस्य चरणाववनिज्य प्रक्षाल्य तदपः अवनेजनजलानि मूर्ध्नि बिभ्रत् बिभ्राणः आसेति शेषः, दधारेत्यर्थः, अबिभ्रदिति वा च्छेदः, अबिभ्रत् अबिभरत् दधारेत्यर्थः, युक्तं चैतदित्याह—ब्रह्मण्येति।ब्रह्मणि ब्राह्मणकुले साधवो ब्रह्म-ण्याः तेषां देव इति यद्गुणनाम अन्वर्थं नाम तस्यैव यतो भगवत एवासाधारणमित्यर्थः, अतः युक्तं ब्रह्मण्यदेवत्वाद्विप्राङ्घ्रिजलधारणमित्येतदुचितमेवेत्यर्थः, अन्यथा तु न घटत इत्यभिप्रयन्विशिनष्टि—यच्चरणशौचं यस्य भगवतः चरणसम्बन्धाच्छौचं पवित्रता यस्य तथाभूतम् अशेषं गङ्गादितीर्थम्, तस्यैवंविधस्योक्तादेव हेतोस्तदुचितमित्यर्थः॥१५॥

मु ॥ अथ भगवान् किमकरोदित्यत आह—तस्येति ॥ यच्चरणशौचं यस्य चरणप्र-

१॰ गतिर्हि॰ मु॰ भा॰ प्र-पा॥

संपूज्य [1]देवऋषिवर्यमृषिः पुराणो नारायणो नरसखो विधिनोदितेन।
वाण्याऽभिभाष्य मितयाऽमृतजुष्टयाच प्राह प्रभो भगवते करवाम किं ते॥
नारद उवाच—
नैवाद्भुतं त्वयि विभोऽखिललोकनाथे मैत्री जनेषु सकलेषु दमः खलानाम्।

---

क्षालनजलम् अशेषस्य लोकस्य तीर्थं सकलपापनिर्हरणहेतुभूतं तीर्थं,जगद्गुरुतरोऽपि जगतां सकलधर्मप्रवर्तकतया उपदेष्टृत्वेन च श्रेष्ठगुरुरपि तस्य मुनेः चरणौ अवनिज्य स्वयं प्रक्षाल्य तदपः तत्पादप्रक्षालनोदकानि स्वमूर्ध्ना अबिभ्रत्, 'स्वमूर्ध्नि'इति पाठे अधिकरणत्वविवक्षया सप्तमी, नन्वेवं सर्वकारणभूतसमस्तप्राप्यपरब्रह्मभूतोऽयं पुरुषोत्तमः स्वयमेवं कथमाचचारेत्यत्राह—सतांगतिर्हीति।स्वानुष्ठानमुखेन सतां धर्मविश्वासजनकस्सन् प्राप्तिरूपसद्गतिप्रापक इत्यर्थः, हीति प्रसिद्धौ, कारणेवा, हि यस्मात् कारणात् सतां गतिः तेषां सर्वपूज्यताप्रकटनपर इति वा.अतः स्वमूर्ध्ना दधारेति,ब्रह्मण्यदेव इति यद्गुणकृतं यस्य भगवतो गुणेन विप्रश्रेष्ठेष्वेवंविधविनयादिगुणेन कृतं यत् नाम तत् तस्यैव युक्तम्, ब्रह्मकुले साधुर्देवो ब्रह्मण्यदेवः, तत्प्रभावमाह—यदिति। यस्य चरणशौचं ब्रह्मप्रक्षालितपादोदकं गङ्गारूपमित्यर्थः, अशेषस्य जगतः तीर्थं समस्तलोककल्मषनिर्हरणतया पावनमित्यर्थः॥ १५॥

वी॥ संपूज्येति॥ नरस्य सखा नारायणः पुराण ऋषिरपि उक्तादेव हेतोः देवऋषिवर्यं नारदं शास्त्रोक्तेन विधिना संपूज्य अमृतेन जुष्टया अमृतवर्षिण्येत्यर्थः, मितया च वाण्या अभिभाष्य संबोध्य प्राह, उक्तिमेवाह—प्रभो भगवते करवाम किन्ते हे प्रभो भगवते तुभ्यं किङ्करवाम किङ्करा वयमित्यर्थः, किमिष्टं करवामेति वा, किं यत्किंचिदिष्टमस्ति तत्करवामेति वा॥ १६॥

मु॥ ततो भगवान् किमकरोदित्यत्राह—संपूज्येति॥ अत्र आद्यपादे अक्षरलोपेन च्छन्दोभङ्ग आर्षः,पुरा किल भगवान् नारायणरूपः सन् ऋषिवेषेण तपश्चचारेति पौराणिकी कथा,अत आह—नरसखो नारायणः पुराणऋषिरिति।उदितेन शास्त्रोक्तेन विधिना पूजाविधानेन देवर्षिवर्यं संपूज्य अमृतजुष्टया अमृतस्राविण्या मितया अप्रसक्तभाषणस्य अनर्हत्वादित्यर्थः, वाण्या अभिभाष्य दिष्ट्या त्वदागमनमित्यादि प्रियमुक्त्वा भगवते ज्ञानादिषाड्गुण्यनिधये तुभ्यं हे प्रभो किं करवामेति प्राह.अत्र ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपभगवच्छब्दप्रवृत्तिनिमित्तस्य सत्त्वेन स्वस्मिन्नेव भगवच्छब्दस्य मुख्यवृत्तत्वेऽपि अत्र श्रीकृष्णेन नारदे प्रयोगः कतिपयतद्गुणलेशसत्तावलम्बेन लाक्षणिक इति बोध्यः॥

वी॥ इत्थमुक्तः प्राह नारदः—नैवेति द्वाभ्याम्॥तावदात्मार्हणमनर्हणं मन्यमानस्तत्संभावयन्नाह—नैवेति॥ सर्वेषु जनेषु विषयभूतेषु मैत्रीत्येतल्लोकनाथे त्वयि नैव चित्रं सर्वमित्रत्वादेवमर्हणं,नतु गौरवादिति भावः,कथं तर्हि कंसादिष्वमैत्रीतत्राह—दमइत्यादि। खलानां दमश्च नैवाद्भुतमिति भावः, कुतः? हि यस्मात् उरुगाय जगतः स्थितिः धारणं रक्षणं पालनं ताभ्याम्, चतुर्थ्यन्तमिदम्, निश्श्रेयसाय मोक्षप्रदानाय च ताभ्यां

---

१. देवर्षि. मु. भा. प्र. पा.॥ अत एव 'अत्र आद्यपादे अक्षरलोपेन च्छन्दोभङ्ग आर्षः' इत्युक्तं समन्वेति॥

निश्श्रेयसाय हि जगत्स्थितिरक्षणाभ्यां स्वैरावतार उरुगाय विदाम सुष्ठु ॥ १७ ॥
दृष्टं तवाङ्घ्रियुगलं जनतापवर्गं ब्रह्मादिभिर्हृदि [१]विचिन्त्यमगाधबोधम् ।
संसारकूपपतितोत्तरणावलम्बं ध्यायंश्चराम्यनुगृहाण यथा स्मृतिस्स्यात् ॥
ततोऽन्यदविशद्गेहं कृष्णपत्न्यास्सनारदः। [२]योगीश्वरेश्वरस्याङ्ग योगमायाविवित्सया

सह मोक्षप्रदानायेति वा. स्वैरावतारः स्वेच्छावतार इति वयं सुष्ठु सम्यक् विद्मः, अतः खलदमस्साधुसम्माननं च युक्तमिति भावः ॥ १७ ॥

मु ॥ भगवतैवमुक्तो नारदः किं प्रत्यभाषतेत्यत्राह—नैवाद्भुतमित्यादिना द्वयेन ॥ तत्र भगवता कृष्णेन स्वस्यार्हणमनुमन्यमानः तत्त्वं भावयन्नाहेति मन्तव्यम्, हे विभो स्वामिन् अखिललोकनाथे त्वयि सकलेषु जनेषु मैत्री खलानां दमो दण्डश्चेति द्वयमित्यर्थः, नैवाद्भुतम् इदमाश्चर्यावहं न भवतीत्यर्थः, तवावतारोऽप्येतदर्थ एवेति सविशेषणं प्रकारान्तरेणाह—निश्श्रेयसायेति। जगत्स्थितिरक्षणाभ्यां जगतो धारणपालनाभ्यां सहेत्यर्थः, तस्य निश्श्रेयसाय सर्वातिशायिश्रेयःप्रदानाय तवायं स्वैरावतारः स्वेच्छावतार इति हे उरुगाय सुष्ठु विदाम विद्मः, यद्वा स्थितिः स्थितिकरणम्,रक्षणं विरोधिनिरसनेन स्थिरीकृत्य पालनम्,ताभ्यां च निश्श्रेयसाय मोक्षप्रदानाय च तवायं स्वैरावतार इति विद्म इति ॥ १७ ॥

वी॥ यदुक्तं प्रभो भगवते करवाम किं त इति, तत्राह—दृष्टमिति॥तावत्तवाङ्घ्रियुगलं दृष्टं मयेति शेषः, कथंभूतम्? जनतायाः प्रपन्नजनसमूहस्य अपवर्गम् अपवर्गसाधनं फलभूतं वा किंचातिदुर्लभतया ब्रह्मादिभिर्योगीश्वरैरपि हृदि विचिन्त्यम् अगाधः बोधो विज्ञानं यस्मात्तथाभूतं संसारकूपे पतितानाम् उत्तरणाय अवलम्बमाश्रयम् एवंभूतं दृष्ट्वा कृतार्थोऽस्मीति भावः, अतस्तदेव ध्यायन् चरामि, किन्तु तद्विषया स्मृतिर्यथा स्यात्, तथा अनुगृहाण ॥ १८ ॥

मु ॥ अतो मम तवाङ्घ्रियुगमेव ध्यानावलम्ब इत्याह—दृष्टमिति ॥ जनतायाः भक्तजनवर्गस्य अपवर्गं निश्श्रेयसभूतं, तस्यैव प्राप्यत्वात्तथोक्तिः, ब्रह्मादिभिरपि हृद्येव विचिन्त्यं न वाचा एवंविधमिति वक्तुं शक्यमित्यर्थः, तत्र हेतुमाह—अगाधबोधमिति। केनापि ज्ञातुमशक्यप्रभावमित्यर्थः. संसार एव कूपे पतितानामुत्तरणाय अवलम्बम् एवंभूतं तव अङ्घ्रियुगलं दृष्टं मया साक्षात्कृतम् ,इदमेव मज्जन्मनः फलमिति भावः,तथापि ध्यायन् पादयुगलमेव ध्यानावलम्बं कुर्वन् चरामि, अतः स्मृतिः त्वत्स्मृतिः यथा स्यात् सन्तन्यमाना स्यात्, तथा अनुगृहाणेति "श्रेयांसि बहुविघ्नानि भवन्ति महतामपि" इत्युक्तप्रकारेण श्रेयसो बहुविघ्नपराहतत्वात् त्वमेव त्वत्पादयुगलस्मृतिरूपश्रेयः तत्परिपन्थिविघ्ननिरसनेन अविच्छिन्नं कुर्वित्यर्थः ॥ १८ ॥

वी ॥ ततइति ॥ सः नारदः अन्यत् कृष्णपत्न्याः गृहमविशत्, किं कर्तुमिच्छया? अङ्ग हे राजन् योगीश्वरेश्वरस्य भगवतो योगमायामाश्चर्यशक्तिं वेत्तुमिच्छया ॥ १९ ॥

मु ॥ ततइति ॥ तत् कृष्णपत्न्या गेहमित्यर्थः, योगीश्वराणां योगमहिमवत्सु श्रेष्ठानामपि ईश्वरस्य कृष्णस्य योगमायायाः एकस्मिन्नेव काले बहुरूपधारणोपायभूतसङ्कल्पा.

दीव्यन्तमक्षैस्तत्रापिप्रिययाचोद्धवेनच। पूजितःपरयाभक्त्याप्रत्युत्थानासनादिभिः
पृष्टश्चाविदुषेवासौकदाऽऽयातोभवानिति।क्रियतेकिन्नुपूर्णानामपूर्णैरस्मदादिभिः॥
अथापि ब्रूहिनोब्रह्मञ्जन्मैतच्छोभनंकुरु।सतुविस्मितउत्थायतूष्णीमन्यदगाद्गृहम्॥
तत्राप्यचष्ट गोविन्दं लालयन्तं [१]शिशून्सुतान्।
ततोऽन्यस्मिन्गृहेऽपश्यन्मज्जनाय कृतोद्यमम्॥ २३
जुह्वन्तंचवितानाग्नीन्यजन्तं पञ्चभिर्मखैः।

---

नुगुणविहारस्येत्यर्थः, विवित्सया वेदितुमिच्छया अविशत्॥ १९॥

वी॥ दीव्यन्तमिति॥ तत्रापि गृहे प्रिययोद्धवेन च सहाक्षैः देवनाक्षैः दीव्यन्तं क्रीडन्तं ददर्शेति शेषः, असौ नारदः प्रत्युत्थानादिभिरुत्कृष्टया भक्त्या तत्पूर्वकं पूजितः॥ २०॥

मु॥ तत्रापि प्रियया उद्धवेनच सह अक्षैः पाशकैः दीव्यन्तं क्रीडन्तं तं ददर्शेत्यन्वयः, तत्र भगवता किमकारीत्यत्राह—पूजितइति॥ परया भक्त्या हेतुना प्रत्युत्थानासनादिभिः प्रत्युत्थानेन आसनादिसमर्पणोपचारैश्च पूजितः॥ २०॥

वी॥ अविदुषा अजानतेव भगवता पृष्टश्च, प्रश्नमेवाह—कदेत्यादिना कुर्वित्यन्तेन। इतिशब्दः कुर्वित्यनन्तरं योज्यः, इति पृष्टश्चेत्यन्वयः, आयात इति च्छेदः, अपूर्णैः आगन्तुकपूर्तिरहितैः स्वत एव परिपूर्णैः अवाप्तसमस्तकामैरिति यावत्, तैरप्यस्मदादिभिः पूर्णानां युष्माकं किं क्रियते, निरपेक्षत्वात्किमपि न क्रियत एवेति भावः॥ २१॥

मु॥ किं च—अविदुषेव पूर्वमविज्ञाततदागमनेनेवेत्यर्थः, भवान् कदावा आयात इति पृष्टश्च, भगवानेवं पृष्ट्वा उपचारोक्तिमप्याहेत्याह—क्रियतइति। अपूर्णैः सांसारिकवृत्तिमत्त्वादिषु न्यूनवृत्तिभिरेव अस्मदादिभिः पूर्णानां युष्मादृशां किन्नु क्रियते न किंचित्कर्तव्यमस्तीत्यर्थः॥ २१॥

वी॥ यद्यप्येवमथापि हे ब्रह्मन् ब्रूहि ममैतज्जन्म शोभनं कुरु, सफलं कुर्वित्यर्थः, भागवतकैङ्कर्यमकुर्वतः शरीरमशुभमिति भावः, सत्विति—स तु नारदो विस्मितस्तूष्णीमुत्थायान्यदपि गृहमाजगाम॥ २२॥

मु॥ अथापि तथापि हे ब्रह्मन् ब्रूहि यत्किंचित्प्रयोजनं वद, तत्किमर्थमित्यत्राह—जन्मेति। शोभनं कुरु कृतार्थं कुरु, सतामनुपकारिणां जन्म विफलमेवेतिभावः, ततोऽसौ किमकरोदित्यत्राह—सचेति। तूष्णीं प्रत्युत्तरादिरहित इत्यर्थः, अन्यद्गृहमगमत्॥

वी॥तत्रापि गृहे गोविन्दम् आचष्ट ददर्श, कथंभूतं? लालयन्तम् उपच्छन्दयन्तम्? ततइति—मज्जनाय स्नानाय कृतः उद्यमो यत्नो येन तथाभूतम्॥ २३॥

मु॥ तत्रापि शिशून् सुतान् बालसुतान् लालयन्तम् उपलालनं कुर्वन्तं गोविन्दम् अचष्ट दृष्टवानित्यर्थः, ततइति—मज्जनाय कृतोद्यमं कृतोद्योगं स्नानोपयोगिवेषमित्यर्थः॥

वी॥ जुह्वन्तमित्यादि द्वितीयान्तानां क्वचिदित्यादिः, ददर्शेत्यन्तः, वितानाग्नीन् यज्ञियान् आहवनीयाद्यग्नीन् पञ्चभिर्मखैः महायज्ञैः, अवशेषितं परिवेषणावशेषितम्॥२४॥

---

१. सुतान् शिशून्. पा॥

भोजयन्तं द्विजान्क्वापि भुञ्जानमवशेषितम् ॥ २४

क्वापिसन्ध्यामुपासीनंजपन्तंब्रह्मवाग्यतम्।[१]एकस्मिन्नसिचर्मभ्यांचरन्तमसिवर्त्मसु
[२]अश्वैरथैर्गजैःक्वापिविचरन्तंगदाग्रजम्।कचिच्छयानंपर्यङ्केस्तूयमानंचवन्दिभिः॥
मन्त्रयन्तंचकस्मिंश्चिन्मन्त्रिभिश्चोद्धवादिभिः।जलक्रीडारतंक्वापिवारमुख्याबलावृतम्
कुत्रचिद्द्विजमुख्येभ्योददतंगास्स्वलङ्कृताः।इतिहासपुराणानिशृण्वन्तंमङ्गलानिच॥
हसन्तंहास्यकथयाकदाचित्प्रिययागृहे।क्वापिधर्मंसेवमानमर्थकामौचकुत्रचित्॥ २९

[३]ध्यायन्तमेकमात्मानंपुरुषंप्रकृतेःपरम् ।

---

मु ॥ वितानाग्नीन् आहवनीयादीन् जुह्वन्तम् आज्यादिभिः प्रीणयन्तम्, पञ्चभिर्मखैः गृहस्थानां नियतैः पञ्चमहायज्ञैः यजन्तं देवान् पूजयन्तम्, 'यज देवपूजासङ्गतिकरणदानेषु' इति धातुः, क्वापि कचित् प्रदेशे द्विजान् भोजयन्तम्, अवशेषितं ब्राह्मणदत्तान्नावशिष्टतया स्थितमन्नं भुञ्जानम् ॥ २४ ॥

वी ॥ कचिद्ब्रह्म स्वात्मानं जपन्तम् अवलोकयन्तमित्यर्थः, ब्रह्म प्रणवं वा, यद्वा ब्रह्म वेदं जपन्तं "वेदमेव जपेन्नित्यम्" इति शास्त्रात्, कचित् वाग्यतं मौनीभूतम्, एकस्मिन् क्वचित् असिचर्मभ्यां खड्गखेटाभ्यां सह असिवर्त्मसु खड्गभ्रामणगतिषु चरन्तं गदाग्रजं कृष्णं कचिच्छयानमिति, वन्दिभिः स्तुतिपाठकैः स्तूयमानं च ॥ २५ ॥ २६ ॥

मु ॥ क्वापि क्वचित् स्थाने सन्ध्यामुपासीनं सन्ध्याकालविहितकर्म कुर्वाणं, वाग्यतं वाचिनियतं मौनिनं सन्तमित्यर्थः, ब्रह्म गायत्रीं जपन्तम्, एकस्मिन् स्थले असिचर्मभ्यां खड्गफलकाभ्यां साधनाभ्याम् असिवर्त्मसु असिना युद्धकरणाभ्यासमार्गेषु चरन्तम्॥

मु ॥ अश्वैः गजवरैः महाबलैर्गजश्रेष्ठैश्च क्वापि विचरन्तं तानारुह्य चरन्तमित्यर्थः' क्वचित् पर्यङ्के शयानं सन्तं वन्दिभिः स्तुतिपाठकैः स्तूयमानम् ॥ २६ ॥

वी ॥ कचिदुद्धवादिभिः मन्त्रयन्तं वारमुख्याभिर्गणिकाश्रेष्ठाभिरबलाभिः स्त्रीभिः, परिवृतम् ॥ २७ ॥

मु ॥ मन्त्रिभिः कार्याकार्यनिर्णयनिपुणैः उद्धवादिभिस्सह मन्त्रयन्तम् अस्मिन् प्रयोजने किमस्माभिः कर्तव्यमित्यादिकमालोचयन्तम्, क्वापि वारमुख्याभिः जनैः सत्कृतवारस्त्रीभिः अबलाभिः गृहिणीभिश्च आवृतं सन्तं जलक्रीडारतम्, वारमुख्याबलाभिः वारस्त्रीभिरितिवा ॥ २७ ॥

वी॥ सुष्ठ्वलङ्कृताः गाः धेनूः ददतं प्रयच्छन्तं मङ्गलानि मङ्गलस्तुतीश्च शृण्वन्तम्॥

मु ॥ स्वलंकृताः सौवर्णशृङ्गादिभूषणैः सुष्ठु अलंकृताः गाः द्विजमुख्येभ्यो ददतम् मङ्गलानि श्रवणमात्रेण कृतार्थतापादकानि इतिहासपुराणादीनि शृण्वन्तम् ॥ २८ ॥

वी ॥ कदाचित्क्वचिद्गृहे प्रियया सह हास्यकथया हसन्तम् ॥ २९ ॥

मु ॥ प्रियया सह कस्मिंश्चित् गृहे क्रीडामन्दिरे हास्यकथया निपुणजनोचितहास्यकथया हसन्तम्,क्वापि धर्मार्थकामान् सेवमानं यथोचितकालं त्रिवर्गमनुतिष्ठन्तमित्यर्थः

वी॥ प्रकृतेः "भूमिरापोऽनलो वायुः" इत्यादिश्लोकद्वयोक्तप्रकृतिद्वयात् परं विल-

---

१. एकत्रचासि. पा॥ २. अश्वैर्गजवरैः. मु-भा-प्र-पा ; अश्वैर्गजैरथैः. पा॥
३. ध्यायन्तमेकमासीनं. पा॥

शुश्रूषन्तं गुरून्क्वापि कामैर्भोगैस्सपर्यया ॥ ३०
कुर्वन्तंविग्रहंकैश्चित्सन्धिचान्यत्रकेशवम्।कुत्रापिसहरामेणचिन्तयन्तंसतांशिवम् ॥
पुत्राणांदुहितॄणांचकालेविध्युपयापनम्।दारैर्वरैस्तत्सदृशैःकल्पयन्तंविभूतिभिः ॥
[१]प्रस्थापनोपानयनैरपत्यानांमहोत्सवान्।वीक्ष्ययोगेश्वरेशस्ययेषांलोका[२]विसिष्मिरे
यजन्तं[३]स्वकलान्देवान्[४]क्वचित्क्रतुभिरूर्जितैः ।

क्षणं परमपुरुषभूतं स्वात्मानं ध्यायन्तं सपर्यया पूजया च गुरून् शुश्रूषन्तं परिचरन्तम्॥

मु ॥ एकत्र स्थले प्रकृतेः परं पुरुषम् अस्पृष्टप्राकृतगन्धं परं पुरुषभूतम् आत्मानं ध्यायन्तं स्वानुभवजानन्दपूर्णमित्यर्थः, गुरून् कामैः भोगैः तन्मनोरथानुगुणभोग्यवस्तुभिः करणैः सपर्यया पूजया शुश्रूषन्तं परिचरन्तम्, अत्र सर्वधर्मोपदेष्टृत्वेन सर्वगुरोरपि भगवतो गुरुशुश्रूषादिकथनं स्वाचारमुखेन लोकशिक्षार्थमिति बोध्यम् ॥ ३० ॥

वी ॥ कैश्चिद्विग्रहं विरोधं कुर्वन्तम् अन्यत्र गृहे सन्धिं कुर्वन्तं केशवं सतां साधूनां शिवं योगक्षेमं चिन्तयन्तम् ॥ ३१ ॥

मु ॥ अन्यत्र स्थलान्तरे कैश्चित् पुरुषैः विग्रहं कलहं कैश्चित् संधिंच कुर्वन्तम्, कुत्रापि रामेण सह सतां शिवं क्षेमं चिन्तयन्तं सर्वदा निरुपद्रवक्षेमस्थापनप्रकारमालोचयन्तमित्यर्थः ॥ ३१ ॥

वी ॥ पुत्राणामिति ॥ काले तत्तत्समये पुत्राणां तत्सदृशैर्दारैः दुहितॄणां तु तत्सदृशैर्वरैश्च विधिना शास्त्रोक्तेन उपयापनं प्रापणं विवाहमित्यर्थः, तद्विभवैः कल्पयन्तं घटयन्तम् ॥ ३२ ॥

वी ॥ प्रस्थापनेति ॥ प्रस्थापनं दुहितृस्नुषाजामात्रादीनां स्वगृहात्तद्गृहं प्रति नयनं तद्गृहात्पुनरानयनमुपानयनं तैः अपत्यानां पुत्राणां दुहितॄणां च महोत्सवान् कल्पयन्तम्, तान्विशिनष्टि—योगेश्वरेशस्य भगवतः येषाम् अपत्यादीनां महोत्सवान्वीक्ष्य लोकास्सर्वे विसिष्मिरे विस्मयं चक्रुः, तथाभूतान् उत्सवादीन् कल्पयन्तमिति संबन्धः ॥ ३३ ॥

मु॥पुत्राणामिति॥पुत्राणां कुमाराणां दुहितॄणां पुत्रीणांच तत्सदृशैः पुत्रसदृशैः पुत्रिकासदृशैश्च क्रमात् दारैर्वरैश्च काले तत्तद्योग्यकाले विध्युपयापनम् विधिना शास्त्रोक्तक्रमेण उपयापनम् अन्योन्यप्रापणं विवाहमित्यर्थः, कल्पयन्तम् ॥ ३२ ॥

मु ॥ प्रस्थापनोपयानैः विभूतिभिः महाविभवैश्च अपत्यानां प्रस्थापनोपयानैः तत्तत्प्रस्थापनानि दुहितृजामात्रादीनां स्वस्वगृहं प्रति नयनानि उपानयानानि तत्तद्गृहात् पुनरानयनानि च कल्पयन्तम्, स्वस्य योगेश्वरेशस्य योगमहिमसर्वसाक्षात्कारवतामीश्वराणामपि ईशस्य येषाम् अपत्यानां महोत्सवान् वीक्ष्य लोका विसिष्मिरे विस्मयमभजन्त, तमपश्यदिति पूर्वेणान्वयः ॥ ३३ ॥

वी ॥ स्वकलान् स्वांशभूतान् देवान् इन्द्रादीन ऊर्जितैः बहुदक्षिणैः क्रतुभिः यजन्तं कूपादिनिर्माणैः धर्मं पूर्तयन्तं पूर्तं स्मार्तं धर्मं कुर्वन्तमित्यर्थः, पूर्तशब्दात् " तत्करोति " इति णिजन्ताच्छता, " सविशेषणानां वृत्तिर्न "इत्यादिनिषेधस्य विशे-

१. विसिस्मिरे पा॥ २. प्रस्थापनोपयानैश्च. पा॥ ३. सकलान्. मु-भा प्र-पा॥

[1]पूर्तयन्तं क्वचिद्धर्मं कूपारामालयादिभिः॥ ३४
चरन्तंमृगयांक्वापिहयमारुह्यसैन्धवम्।घ्नन्तं[2]ततःपशून्मेध्यान्परीतंयदुपुङ्गवैः॥ ३५
अव्यक्तलिङ्गंप्रकृतिष्वन्तःपुर[3]चरादिषु।क्वचिच्चरन्तंयोगेशंतत्तद्भावबुभुत्सया ॥३६
अथोवाचहृषीकेशंनारदःप्रहसन्निव।योगमायोदयंवीक्ष्यमानुषीमीयुषोगतिम्॥ ३७
नारद उवाच—
विदाम[4]योगमायां ते दुर्दर्शामपि योगिनाम् ।

ष्यविषयत्वादत्र पूर्तस्य धर्मं प्रति विशेषणत्वात् सापेक्षस्यापि नामधातुवृत्तिरवगन्तव्या ॥ ३४ ॥

मु ॥ किञ्च—ऊर्जितैः सर्ववस्तुसमृद्धिमद्भिः क्रतुभिः सकलान् देवान् यजन्तं प्रीणयन्तम् इष्ट्याख्यदेवताप्रीणनकर्म कुर्वाणमित्यर्थः, क्वचित् कूपैः आरामैः आलयादिभिः देवतायतननिर्माणादिभिश्च धर्मं पूर्तयन्तं धर्ममाचरन्तमित्यर्थः ॥ ३४ ॥

वी ॥ सैन्धवं सिन्धुदेशोद्भवं हयमश्वमारुह्य मृगयां चरन्तं मेध्यान् यागार्हान्पशून् विशसन्तं क्वचित् यदुश्रेष्ठैः परिवृतम् ॥ ३५ ॥

मु ॥ चरन्तमिति॥ सैन्धवं सिन्धुदेशोद्भवं हयम् आरुह्य मृगयां चरन्तम् आखेटविहारं कुर्वन्तम्, यदुपुङ्गवैः परीतं सन्तं मेध्यान् शास्त्रोक्तलक्षणलक्षितत्वेन यागार्थे पवित्रान् पशून् विशसन्तम् एकदेव सर्वद्वारनिरोधेन निघ्नन्तमित्यर्थः ॥ ३५ ॥

वी ॥ प्रकृतिषु अमात्यादिषु अन्तःपुरचरादिषु तत्तदभिप्रायं बोद्धुमिच्छया अव्यक्तं वेषान्तरेण च्छन्नं लिङ्गं स्वासाधारणचिह्नं यस्य तं चरन्तं ददर्श ॥ ३६ ॥

मु ॥ प्रकृतिषु स्वनियुक्तप्रधानपुरुषादिषु अव्यक्तलिङ्गं स्वचिह्नगोपनेन अव्यक्तम् अप्रकटं लिङ्गं चिह्नं यस्य तं सन्तमेव अन्तःपुरचरादिषु मध्ये क्वचित् स्थले चरन्तम्, किमर्थमेवंविधसञ्चार इत्यत आह—तत्तद्भावबुभुत्सयेति। तत्तद्भावानां तत्तत्पुरुषाभिप्रायाणां बुभुत्सया बोद्धुमिच्छया, अपश्यदिति पूर्वेणान्वयः ॥ ३६ ॥

वी ॥ अथेति ॥ मानुषीं गतिं चेष्टां तनुं वा ईयुषः प्राप्तवतः परिगृहीतवत इति यावत्, तस्य भगवतः योगमायोदयम् आश्चर्यशक्तिवैभवमवलोक्य प्रहसन्निव प्राह, अचिन्त्यविविधविचित्रशक्तावस्मिन् नैतच्चित्रमितीवशब्दाभिप्रायः ॥ ३७ ॥

मु ॥ ततः किमकरोदित्यत्राह—अथेति॥ मानुषीं गतिम् ईयुषः मनुष्यलीलां नाटयतः श्रीकृष्णस्य योगमायोदयं सर्वाश्चर्यकरशक्त्युन्मेषं तादृशतत्तदाकारभजनहेतुसङ्कल्पमहिमानं वा,वीक्ष्य नारदः प्रहसन्निवेत्यनेन अद्भुतरसावेशः तादृश आत्मना स्फुटीबभूवेति स्फोर्यते, हृषीकेशमुवाच ॥ ३७ ॥

वी ॥ उक्तिमेवाह—विदामइतिद्वाभ्याम् ॥ हे योगेश्वर योगिनां दुर्दर्शामपि ते तव योगमायाम् आश्चर्यशक्तिं भवत्पादनिषेवाप्रभावेन आत्मन् आत्मनि मनसि निर्भातां नितरां भातां विदामः जानीमः ॥ ३८ ॥

मु ॥ तदाह—विदामेति ॥ योगेश्वरात्मन् योगिवर्याणां ध्यानावलम्बनभूतान्तरात्मन्

१. कूपाराममठादिभिः. पा॥ २. तीर्थे. पा॥ ३. गृहादिषु. पा॥
४. योगमायास्ते दुर्दर्शा अपि मायिनाम्. पा॥

योगेश्वरात्म[1]न्निर्भातां भवत्पादनिषेवया ॥ ३८

अनुजानीहिमांदेवलोकांस्तेयशसाऽऽप्लुतान्। पर्यटामितवोद्गायह्लीलांभुवनपावनीम्।

श्रीभगवानुवाच—

ब्रह्मन्धर्मस्यवक्ताऽहंकर्तातदनुमोदिता। [2]तंशिक्षयल्लोकमिममाश्रितःपुत्रमाखिदः॥

श्रीशुक उवाच—

इत्याचरन्तंसद्धर्मा[3]नादिष्टान्गृहमेथिनाम्।तमेवसर्व[4]देहेषुसन्तमेकंददर्शह ॥ ४१

---

योगिनामपि योगसाक्षात्कारकबलितसर्वतत्त्वानामपि दुर्दर्शां द्रष्टुमशक्यां तथापि भवत्पादनिषेवया सकलाज्ञानभञ्जकत्वच्चरणसेवया हेतुना निर्भातां सम्यक्प्रकटीभूतां ते योगमायां सर्वाश्चर्यावहविविधविचित्रमहिमानं विदाम जानीमः न त्वस्मज्ज्ञानशक्त्या कदाचित् ॥ ३८॥

वी ॥ किन्तु हे देव मामनुजानीहि आज्ञापय, तव यशसा व्याप्तान् लोकान् भुवनपावनीं तव लीलामुद्गायन् परितश्चरामि ॥ ३९ ॥

मु ॥ अनुजानीहि मामाज्ञापय, इतो गमने इतोऽप्यधिकं किमस्ति कार्यमित्यत आह—लोकानिति । ते यशसा कीर्त्या आप्लुतान् शीतलगङ्गाप्रवाहेणेव निरस्तपापानित्यर्थः, भुवनपावनीं तव लीलाम् उद्गायन् लोकान् पर्यटामि परितः सञ्चरामि ॥ ३९ ॥

वी ॥इत्थमुक्तः प्राह भगवान्—ब्रह्मन्निति॥हे ब्रह्मन् वक्ता उपदेष्टा तद्धर्मोपदेशात-दनुष्ठानतदनुमोदनादिकं शिक्षयन् शिक्षयितुं जनान्प्रतीति शेषः, इमं लोकं मनुष्यदेहमाश्रितः परिगृहीतवानस्मि, प्राकृतचेष्टामनुवर्त इति भावः, अतो हे पुत्र मा खिदः स्वयमीश्वरोऽप्यधुना प्राकृतो बभूवेत्येवंविधं मोहं न प्राप्नुहीत्यर्थः ॥ ४० ॥

मु ॥ एवं नारदेनोक्ते सति भगवान् किमकरोदित्यत्राह—ब्रह्मन्निति ॥ धर्मस्य वक्ता इदं कुरु इदं माकार्षीरिति वक्ता धर्मस्य कर्ता "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति न्यायेन तदाचरणशील इत्यर्थः. तदनुमोदिता तस्य स्वाज्ञारूपशास्त्रविहितधर्मानुल्लङ्घिभिराचरितस्य धर्मस्येत्यर्थः, अनुमोदिता चाहम् इमं लोकम् अज्ञानमहिम्ना कर्तव्याकर्तव्यविवेकशून्यं परिदृश्यमानं लोकमित्यर्थः, तद्धर्मं शिक्षयन् आस्थितः अधिष्ठाय स्थित इत्यर्थः. अतो हे पुत्र मा खिदः मोहप्राप्त्या खेदं मा प्राप्नुहीत्यर्थः ॥ ४० ॥

वी ॥ कदाचित् मोहसंभावनामपि निवर्तयितुं भगवता प्रदर्शितं सार्वात्म्यं ददर्श,विस्मितश्च बभूव मुनिरित्याह—इतीति द्वाभ्याम्॥गृहमेथिनामादिष्टान् विहितान् धर्मानेवमाचरन्तं तदैव पुनस्सर्वदेहेषु एकरूपेणात्मतया सन्तं वर्तमानं ददर्श ॥ ४१ ॥

मु ॥ इति गृहमेथिनां गृहस्थानाम् आदिष्टान् शास्त्रोक्तान् सद्धर्मान् आचरन्तं तमेकमेव भगवन्तं सर्वगेहेषु सर्वासां गृहेषु सन्तम् एकदेव तावद्रूपैर्वर्तमानं ददर्श, हेत्याश्चर्ये ॥ ४१ ॥

---

१. निर्भाताः पा ॥

२. तच्छिक्षयन्. पा ॥ ३. प्रदिष्टान्; पावनान्. पा ॥ ४. गेहेषु. पा॥

कृष्णस्यानन्तवीर्यस्ययोगमायामहोदयम्।मुहुर्दृष्ट्वा[1]ऋषिरभूद्विस्मितोजातकौतुकः ॥
इत्यर्थकामधर्मेषुकृष्णेनश्रद्धितात्मना।सम्यक्सभाजितःप्रीतस्तमेवानुस्मरन्ययौ॥
एवं मनुष्यपदवीमनुवर्तमानो नारायणोऽखिलभवायगृहीतशक्तिः ।
रेमेऽङ्ग षोडशसहस्रवराङ्गनानां सव्रीडसौहृदनिरीक्षणहासजुष्टः॥ ४४
यानीहविश्वविलयोद्भववृत्तिहेतुःकर्माण्यनन्यविषयाणिहरिश्चकार ।

---

वी ॥ कृष्णस्येति ॥ अनन्तवीर्यस्य अपरिच्छिन्नकल्याणगुणस्य कृष्णस्याश्चर्यशक्ते र्माहात्म्यं वैभवम् उत्सुकस्सन् मुहुर्मुहुः दृष्ट्वा ऋषिर्नारदो विस्मितो बभूव ॥ ४२ ॥

मु ॥ कृष्णस्येति॥ अनन्तवीर्यस्य अपारशक्तेः कृष्णस्य योगमायामहोदयं बहुभवन सङ्कल्पानुगुणतत्तद्रूपधारणादिमहोदयं मुहुः दृष्ट्वा अतृप्त्या भूयोभूयो दृष्ट्वा विस्मितः आश्चर्यरसाविष्टः जातकौतुकः उत्पन्नहर्षश्चाभूत् ॥ ४२ ॥

वी ॥ इतीति ॥ अर्थादिषु श्रद्धितः लोकशिक्षार्थं सञ्जातश्रद्धः आत्मा मनो यस्य तेन कृष्णेन सभाजितो बहुमतः प्रीतश्च तं कृष्णमेवानुस्मरन् ययौ ॥ ४३ ॥

मु ॥ इतीति ॥ अर्थकामधर्मेषु सद्गृहस्थविहितधर्मार्थकामेषु श्रद्धितः श्रद्धायुक्तः आत्मा यस्य तेन कृष्णेन सम्यक् सभाजितः अत एव प्रीतस्सन् तमेव भगवन्तम् अनुस्मरन् ययाविति ॥ ४३ ॥

वी ॥ नारदाय दर्शितं योगमायोदयं निगमयति एवमिति— स्वयं नारायणस्सन् अखिलानां भवायाभ्युदयाय गृहीता उपात्ता शक्तिः दिव्यतनुर्येन सः मनुष्यचेष्टामनुवर्तमानः अङ्ग हे राजन् सव्रीडं च तत्सौहृदं च तेन निरीक्षणं हासश्च ताभ्यां जुष्टः॥४४॥

मु ॥ अखिलभवाय अखिलस्योद्भवाय गृहीतशक्तिः परिगृहीतरामकृष्णादिमूर्तिः एवमुक्तप्रकारेण मनुष्यपदवीमनुवर्तमानः मनुष्यनाटकमाचरन् नारायणः षोडशसहस्रवराङ्गनानां व्रीडा लज्जा सौहृदं प्रेम ताभ्यां सहितानि तदभिव्यञ्जकानीत्यर्थः,निरीक्षणानि अवलोकनानि हासाश्च तैर्जुष्टः तादृशनिरीक्षणैर्दृष्टः तादृशहासेन प्रीणितस्सन्नित्यर्थः, रेमे चिक्रीड ॥ ४४ ॥

वी॥उक्तविधभगवच्चेष्टितगानादिफलमाह—यानीति॥विश्वस्य विलयः प्रलयः उद्भवः उत्पत्तिः वृत्तिः स्थितिः आसां हेतुः हरिः यानि ईदृशेष्ववतारेषु इह लोके वा अनन्यगानि कर्माणि चकार, तानि अङ्ग हे राजन् यः पुमान् गायति, तस्यापवर्गमार्गे मोक्षप्रापके, "अमृतस्यैष सेतुः" इति श्रुतेर्मार्गशब्दः प्रापकपरः, भगवति भक्तिर्भवेत्॥ ४५॥

मु ॥ यानीति ॥ विश्वस्य विलयोद्भववृत्तिहेतुः उत्पत्तिस्थितिलयकर्ता हरिः इह भूमौ अनन्यविषयाणि अन्येषामसाधारणानि यानि कर्माणि चकार, तानीति शेषः, अङ्ग हेराजन् यस्तु गायति शृणोति अन्यैर्गीतानि शृणोति अनुमोदतेवा तथा गायन्तं शृण्वन्तं

---

१. मुनि. पा.॥

१यस्त्वङ्गगायतिशृणोत्यनुमोदते वा भक्तिर्भवेद्भगवतिह्यपवर्गमार्गे ॥ ४५

इति श्रीभागवते महापुराणे दशमस्कन्धे एकोनसप्ततितमोऽध्यायः ॥ ७९ ॥

---

अथोषस्युपवृत्तायांकुक्कुटान्कूजतोऽशपन्।गृहीतकण्ठ्यःपतिभिर्माधव्योविरहातुराः

---

च दृष्ट्वा यः स्वयमनुमोदतेवा, तस्येति शेषः, अपवर्गमार्गे मोक्षपथे भगवति भक्तिः भवेत्, इदं निश्चितमिति भावः ॥ ४५ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम्
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

वी॥ अथ भगवतो दिनचर्यात्मकं चेष्टितमनुवर्णयन्मागधनिरुद्धराजसंदेशाहर्तृसंनिवेदितवृत्तान्तयुधिष्ठिराभिप्रायाभिज्ञनारदनिवेदिततद्वृत्तान्तान्यतरनिश्चिचीषाप्रयुक्त - मुद्धवोद्देश्यकं भगवत्प्रश्नमाह—अथेत्यादिना ॥ अथ ननु हे राजन् यद्वा अत्र अथशब्दो भगवद्दिनचर्याप्रस्तावद्योतकः,अथ भगवद्दिनचर्या प्रारभ्यतइत्यर्थः,उषसि प्रभातवेलायाम् उपवृत्तायामासन्नायां सत्यां पतिभिः कृष्णैः गृहीताः कण्ठाः यासां ताः माधव्यः श्रीकृष्णस्य स्त्रियः विरहेण भाविना आतुराः कूजतः शब्दायमानान् कुक्कुटानशपन् ॥ १ ॥

प ॥ संसारिवेषः कंसारिः नाटयन्निव तत्स्थितिम् ।
स्वाविर्भावनिमित्तं *नो वितस्तारेति कथ्यते ॥
† सुरकार्यसुहृत्कार्येष्वपरस्य प्रधानतः ।
कर्ता सद्वत्सलश्शौरिरित्यप्यत्राशयो मुनेः ॥

अथेत्यादि ॥ उषस्युपवृत्तायामिति लिङ्गव्यत्ययेन विशेषणविशेष्यभावप्रयोग आर्षः, यद्वा प्रस्तुतत्वात् निशायामित्यध्याहारेण निशायामुपवृत्तायाम् अथ उषसीति निर्वाहः, निशायामुपपन्नायाम् अथ उषसि प्रभाते माधव्यः श्रीकृष्णपत्न्यः पतिभिः तावद्रूपधारिणा श्रीकृष्णेनेत्यर्थः, गृहीतकण्ठ्यः विरहातुराः तदारभ्य पुनरासायं भाविविरहचिन्तया आतुराः व्यथमानमानसास्सत्य इत्यर्थः, कूजतः कुक्कुटान् अशपन् विरहोत्कण्ठया नियतिकृततत्तत्कालावसानादिकं विस्मृत्य तज्ज्ञापककूजंत्कुक्कुटान् अशपन्नित्यर्थः ॥ १ ॥

---

१. यस्तानि. पा ॥

* नः अस्माकं वितस्तार विस्तृतवान् ॥

† सुरकार्यसुहृत्कार्येष्वपरस्य तेष्वन्यतमस्य सुरकार्याणां सुहृत्कार्याणां वा प्रधानतः प्राधान्येन कर्ता ॥

‡ गायत्स्वलिष्वनिद्राणि. मु-भा-प्र-पा ॥

वयांस्यरूरुवन्कृष्णंबोधयन्तीवबन्दिनः। [१]गायत्स्वलिष्वनिद्रेषुमन्दारवनवायुभिः॥ २
मुहूर्ततंतुवैदर्भीनामृष्य[२]दतिशोभनम्।परिरम्भणविश्लेषात्प्रियबाह्वन्तरङ्गता ॥ ३
ब्राह्मेमुहूर्तउत्थायवार्युपस्पृश्यमाधवः। दध्यौप्रसन्नकरणआत्मानंतमसःपरम् ॥
एकं स्वयंज्योतिरनन्य[३]मद्वयं स्वसंस्थया नित्यनिरस्तकल्मषम् ।

वी ॥ वयांसीति ॥ वन्दिन इव श्रीकृष्णं बोधयन्ति सन्ति वयांसि पक्षिणः मन्दारवनवायुभिः अनिद्रेष्वलिषु गायत्सु सत्सु अरूरुवन् *पुनःपुनरकूजन् ॥ २ ॥

मु ॥ मन्दारवनवायुभिरिति अलीनां गानकरणोत्साहसाधनोक्तिः, अलिषु गायत्सु सत्सु अनिद्राणि तद्गानश्रवणेन वीतनिद्राणि वयांसि शुकशारिकादिपक्षिणः वन्दिनः स्तुतिपाठका इव कृष्णं बोधयन्ति सन्ति अरूरुवन् *क्रियासमभिहारेण अकूजन्॥

वी ॥ मुहूर्तमिति ॥ प्रियस्य बाह्वोरन्तरं गता वैदर्भीत्यन्यासामप्युपलक्षणम्, पारम्भविश्लेषाद्धेतोः तं मुहूर्तमतिशोभनमपि नामृष्यत् न सेहे असमीचीनममन्यतेत्यर्थः॥

मु ॥ वैदर्भी रुक्मिणी प्रियस्य बाह्वन्तरं गता सती परिरम्भणविश्लेषात् तदालिङ्गनविश्लेषभियेत्यर्थः, शोभनं सर्वमनोहरमपि तं मुहूर्तं नामृष्यत् न सहतेस्म इतःपरमपि रात्रिरेव कथं नासीदिति उषःकालं निनिन्देत्यर्थः ॥ ३ ॥

वी ॥ ब्राह्मइति ॥ वारि शुद्धं जलम् उपस्पृश्य आचम्य प्रसन्नानि करणानीन्द्रियाणि यस्य सः तमसः प्रकृतेः परं विलक्षणमात्मानं दध्यौ ध्यातवान्,स्वात्मावलोकनपरो बभूवेत्यर्थः॥ ४ ॥

मु ॥ एवं रुक्मिण्यादीनां तत्कालजातदशामुपवर्ण्य ततः श्रीकृष्णकृत्यमाह— ब्राह्मइत्यादिना॥ ब्राह्मे मुहूर्ते अरुणोदयसमये वारि उपस्पृश्य शुद्धाचमनं कृत्वा प्रसन्नकरणः सप्रसादान्तरङ्गादिकस्सन् तमसः परम् अस्पृष्टप्राकृतगन्धम् आत्मानं स्वस्वरूपं दध्यौ, यथा इतरेषां ध्यातॄणां भगवत्स्वरूपमन्तरेण अतिभोग्यतमध्यानावलम्बनान्तरं नास्ति, एवं भगवतोऽपि स्वस्वरूपमन्तरेण तादृशध्येयान्तराभावात् आत्मानमेव दध्याविति भावः ॥ ४ ॥

वी ॥ कोऽसौ तमसः पर आत्मा ? तं विशिनष्टि—एकमिति ॥ एकं समाभ्यधिकरहितं, जीवस्तु विपरीत इति भावः, स्वयंज्योतिः स्वयंप्रकाशस्वरूपम् अनन्यं न विद्यते अन्यत् अशरीरभूतं वस्तु यस्य तम् अद्वयं जात्यादिकल्पनारहितं स्वस्मिन् संस्था सम्यगविकृतत्वेनावस्थितिः तया नित्यं निरस्तं प्रतिक्षिप्तं कल्मषं पुण्यपापात्मकं हेयं यस्य तं ब्रह्मेत्याख्या "बृहति बृंहयति" इति निरुक्ता यस्य तम् अस्य जगतः उत्पत्तिनाशहेतुभिः स्वशक्तिभिः, उद्भवनाशग्रहणं स्थितेरप्युपलक्षणम् , शक्तिरपृथक्सिद्धविशेषणम् , ततश्च उत्पत्तिकारणत्वस्थितिकारणत्वलयकारणत्वरूपैर्धर्मैरित्यर्थः , भावस्सत्ता , सा च मानसंबन्धार्हत्वरूपा, भावशब्दश्चात्र धर्मिपरः , लक्षितो भावः सत्ताविशिष्टं स्वरूपं निर्वृतिरानन्दात्मकं यस्य तथाभूतम् अत्रास्येत्यादिना भावेत्यन्तेन प्रकृतेः परस्यात्मनो लक्षणमभिप्रेतम् . जगज्जन्मादिकारणत्वं हि ब्र-

१. * पुनःपुनरिति क्रियासमभिहारेणेति च तात्पर्योक्तिः, अरूरुवन्निति निवृत्तप्रेषणाद्रौतेर्णौचि लुङि चङि सन्वद्भावे च रूपम् ॥ १. अपि शोभनम् . मु·भा·प्र·पा ॥ ३. अव्ययं. पा ॥

ब्रह्माख्यमस्योद्[1]्भवनाशहेतुभिस्स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥ ५

अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी ।
चकार सन्ध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥ ६

उपस्थायार्कमुद्यन्तं तर्पयित्वाऽऽत्मनः कलाः ।
देवानृषीन्पितॄन्वृद्धान्विप्रानभ्यर्च्य चात्मवान् ॥

ह्मणो लक्षणम्, निर्वृतिपदेनानन्दवाचिना "सत्यं ज्ञानमनन्तं" "विज्ञानमानन्दम्" इति स्वरूपशोधकवाक्यार्थः स्मारितः, अत्र कोऽसौ प्रकृतेः पर आत्मेत्यतो ब्रह्माख्यमित्युक्तम्, ब्रह्मशब्दस्यानेकार्थसाधारण्यात् किं तद्ब्रह्मेत्यपेक्षायाम् अस्येत्यादिना जगत्कारणत्वं लक्षितमिति कारणत्वं चिदचिद्विशिष्टगतमिति विशेष्यभूतब्रह्मस्वरूपजिज्ञासायां निर्वृतिपदं प्रयुक्तम्. जगत्कारणत्वस्य हिरण्यगर्भादेरिव सुकृतविशेषप्रयुक्तत्वशङ्काव्युदासाय स्वसंस्थया नित्यनिरस्तकल्मषमित्युक्तम्, कारणत्वप्रयुक्तविकाराश्रयत्वशङ्काव्युदासायाव्ययमिति , अधिष्ठात्रन्तरशङ्काव्युदासायैकमिति, कारणत्वप्रयुक्तकार्यानन्यत्वं वक्तुम् अनन्यमित्युक्तमिति द्रष्टव्यम्, सच्छब्दापरपर्यायभावशब्देनोक्तार्थे वेदान्तानां प्रमापकत्वं सूचितम् ॥ ५ ॥

मु॥उक्तमेवात्मस्वरूपं विशिनष्टि—एकमिति॥एकं समाभ्यधिकरहितं स्वयञ्ज्योतिः स्वयंप्रकाशम् अनन्यं स्वतः पृथगुपाधिरहितं निरुपाधिकमित्यर्थः,अद्वयं जात्यादिकल्पनारहितं स्वसंस्थया स्वगतशक्त्या नित्यनिरस्तकल्मषम् अपहतपाप्मानं, जीवानां तु अनादिकर्मपरंपराप्राप्तकल्मषनिवृत्तिः एतद्भजनादेव भवति , तस्यतु स्वतएव हेयप्रत्यनीकत्वमित्यर्थः,किंच लक्षिता स्फुटतरा भावनिर्वृतिः स्वभावसिद्धानन्दो यस्य तम् अस्य जगतः उद्भवनादिहेतुभिः स्वशक्तिभिः सृष्ट्यादिशक्तिभिः उपलक्षितम् आत्मानं दध्याविति पूर्वेणान्वयः ॥ ५ ॥

वी ॥ अथेति ॥ अथ सत्तमो भगवान् अम्भसि आप्लुतः स्नातः वाससी परिधाय क्रियाकलापं चकारेति संबन्धः, कोऽसौ क्रियाकलाप इत्यतस्तं प्रपञ्चयति—सन्ध्येत्यादिना॥ सन्ध्योपगमादिक्रियाकलापमित्यर्थः, सन्ध्योपगमस्सन्ध्योपासनम्, आदिशब्दसङ्गृहीतानाह—हुतानलइत्यादिना। हुतः अनलः आहवनीयो येन सः वाग्यतः वाचं यच्छतीति तथा मौनी भूत्वेत्यर्थः, ब्रह्म गायत्रीम् ॥ ६ ॥

मु ॥ ततः किमकरोदित्यत्राह—अथेति ॥ अम्भसि आप्लुतः स्नातः अतएव उत्तरीये धृत्वा यथाविधि यथाशास्त्रं सन्ध्यायाः उपगमः उपासनम् आदि यथा भवति तथा क्रियाकलापं कर्मकलापं चकार, सत्तमः सतां श्रेष्ठः ततः हुतानलस्सन् वाग्यतः वाचि नियतः मौनी सन्नित्यर्थः, ब्रह्म गायत्रीं जजाप तस्य काण्वत्वात् उदयात्पूर्वमेव हुतानलो ब्रह्म जजापेत्यर्थः ॥ ६ ॥

वी ॥ उपस्थायेत्यादिश्लोकत्रयमेकान्वयम्, आत्मनः स्वस्य कलाः अंशभूतान् देवादीन् तर्पयित्वा वृद्धान् कुलवृद्धान् विप्रांश्च आत्मवान् श्रद्धायुक्तस्सन् अभ्यर्च्य दिनेदिने अलङ्कृतेभ्यो विप्रेभ्यः क्षौमकृष्णाजिनतिलैस्सह धेनूनां पद्मंपद्मं ददौ, पद्ममिति

[1]. उद्भवनादि. मु-भा-प्र-पा ॥

धेनूनां रुक्मशृङ्गाणां साध्वीनां मौक्तिकस्रजाम् ।
पयस्विनीनां गृष्टीनां [१]सुवत्सानां सुवाससाम् ॥ ८
ददौ रौप्यखुराग्राणां क्षौमाजिनतिलैस्सह ।
अलंकृतेभ्यो विप्रेभ्यः पद्मंपद्मं दिनेदिने ॥ ९
गोविप्रदेवतावृद्धान्गुरून्भूतानि सर्वशः ।
नमस्कृत्या[२]त्मसम्भूतीर्मङ्गलानि समस्पृशत् ॥ १०
आत्मानं भूषयामास नरलोकविभूषणम् ।

---

महासंख्यायुक्तसङ्घाभिधानम्, कथम्भूतानां? रुक्मं स्वर्णालङ्कारः शृङ्गयोः यासां मौक्तिकानां स्रजो यासां बहुक्षीराणां गृष्टीनां प्रथमप्रसूतानां शोभनो वत्सो यासां शोभनं वासो यासां तासां रौप्यं रजतालङ्कारः खुराग्रेषु यासां तासाम् ॥ ७ ॥ ८ ॥ ९ ॥

मु ॥ एवं सूर्योदयात्पूर्वं कर्तव्यकर्मोक्त्वा तदनन्तरकृत्यमाह —उपस्थायेति॥ उद्यन्तमर्कम् उपस्थाय स्वयमुत्थाय तत्प्रदक्षिणादिकं विधायेत्यर्थः, आत्मनः कलाः स्वांशभूतान् देवादीन् तर्पयित्वा मूर्ध्ना शिरसा तान् अभ्यर्च्य प्रणामपूर्वकं तदर्चनं कृत्वेत्यर्थः, आत्मवान् तदा सफलात्मा सन्नित्यर्थः ॥ ७ ॥

मु॥ धेनूनामिति॥ रुक्मशृङ्गाणां शृङ्गाकाररचितहेममयशृङ्गालंकृतशृङ्गाणामित्यर्थः, साध्वीनां विनीतानां मौक्तिकानां स्रजो यासां तासां मौक्तिकमयग्रीवालंकाराणामित्यर्थः, पयस्विनीनां बहुक्षीरदुहां गृष्टीनां प्रथमप्रसूतानां सवत्सानां वत्ससहितानां सुवाससां नूतनवस्त्रालंकृतानाम् ॥ ८ ॥

मु ॥ रौप्यखुराग्राणां खुराकारविनिर्मितरजतालंकृतखुराग्राणामित्यर्थः, धेनूनां पद्मंपद्ममिति महासंख्यायुक्तसंघाभिधानम्, क्षौमाजिनतिलैस्सह स्वलंकृतेभ्यो ददावित्यन्वयः, दिनेदिने प्रतिदिनम्, 'स्वलंकृतेभ्यो विप्रेभ्यः 'खर्वं खर्वं दिने दिने' इति पाठः, 'बध्नन् बध्नन्दिनेदिने' इति पाठे धेनूनामिति कर्मणि षष्ठी, धेनूः सुवर्णसूत्रादिभिः बध्नन्बध्नन् ददावित्यर्थः ॥ ९ ॥

वी ॥ गोविप्रेति॥ गवादीनां द्वन्द्वः, तत्र वृद्धाः कुलवृद्धाः तान् आत्मनस्स्वस्य संभूतीः विभूतिभूतान्नमस्कृत्य मङ्गलानि कपिलादीनि मङ्गलद्रव्याणि समस्पृशत् ॥ १० ॥

मु॥आत्मा संभूतिः योनिः यस्य सः आत्मसंभूतिः, 'आत्मसंभूतीः' इति पाठे स्वविभूतीरित्यर्थः, गाः विप्रान् देवताश्च वृद्धांश्च गुरून् भूतानि पञ्च भूतानिच नमस्कृत्य मङ्गलानि कपिलादिमङ्गलद्रव्याणि समस्पृशत् स्पृष्टवान् ॥ १० ॥

वी ॥ आत्मानमिति ॥ नरलोकस्य भूषणरूपमात्मानं कौस्तुभपीताम्बरादिभिः भूषयामास ॥ ११ ॥

---

१. सवत्सानां. मु-भा-प्र-पा ॥ २. आत्मसम्भूतिः. मु-भा-प्र-पा ॥

वासोभिर्भूषणैः स्वीयैर्दिव्यस्रगनुलेपनैः ॥ ११

कामांश्च सर्ववर्णानां पौरान्तःपुरचारिणाम्।
प्रदाप्य प्रकृतीः कामैः प्रतोष्य प्रत्यनन्दत ॥ १२

संविभज्याग्रतो विप्रान्स्रक्ताम्बूलानुलेपनैः।
अवेक्ष्याऽज्यं [१]तथाऽऽदर्शं गोवृषाद्विजदेवताः।
सुहृदः प्रकृतीर्दारानुपायुङ्क्त ततस्स्वयम् ॥ १३

तावत्सूतउपानीयस्यन्दनंपरमाद्भुतम्। सुग्रीवाद्यैर्हयैर्युक्तंप्रणम्यावस्थितोऽग्रतः॥

गृहीत्वा पाणिना पाणिं सारथेरथमारुहत्।
सात्यक्युद्धवसंयुक्तः पूर्वाद्रिमिव भास्करः ॥ १५

ईक्षितोऽन्तःपुरस्त्रीणां सव्रीडप्रेमवीक्षितैः।
कृच्छ्राद्विसृष्टो निरगाज्जातहासोऽहरन्मनः ॥ १६

---

मु ॥ नरलोकस्य विभूषणं भूषणभूतम् आत्मानं वासःप्रमुखैः भूषयामास ॥ ११॥

वी ॥ कामानभिलषितार्थान् प्रदाप्य प्रकृतीः अमात्यादीन् प्रतोष्य तोषयित्वा प्रतिनन्दितवान् ॥ १२ ॥

वी ॥ संविभज्येति ॥ अग्रतः पुरतः उपवेशितानिति शेषः, विप्रान् स्रगादिभिः संविभज्य सम्यग्विभागेन प्रीणयित्वा आज्यादीनवलोक्य,तत्र आदर्शो दर्पणं सुहृदो मित्राणि दारान् पत्नीश्च उपायुङ्क्त यथायोग्यमन्ववर्ततेत्यर्थः ॥ १३ ॥

मु॥गोवृषद्विजदेवताः अवेक्ष्य यथादर्शं यथादर्शनं यथाशास्त्रम् आज्यंच अवेक्ष्य अवेक्षणं कृत्वा सर्ववर्णानांच पौराणामन्तःपुरवासिनांच कामान् इष्टार्थान् प्रदाप्य दापयित्वा प्रकृतीः प्रधानपुरुषान् कामैः अभिलषितार्थैः प्रतोष्य सन्तोष्य प्रत्यनन्दत तत्सन्तोषानन्तरं स्वयमानन्देत्यर्थः. अग्रतः प्रथमं विप्रान् सुहृदः ततः प्रकृतीः प्रजाः ततो दारांश्च स्रक्ताम्बूलानुलेपनैः संविभज्य तेभ्यस्तान्विभज्य दत्वेत्यर्थः, ततः स्वयमुपायुङ्क्त उपयुक्तवान् स्वभोगार्थमग्रहीदित्यर्थः ॥ १३ ॥

वी ॥ तावदिति ॥ सुग्रीवाद्यैः, आदिशब्देन मेघपुष्पबलाहकसङ्ग्रहः, तैरश्वैर्युक्तं स्यन्दनं, रथमानीय प्रणम्य अग्रतः अवतस्थे सारथेः पाणिं स्वपाणिना गृहीत्वा पूर्वाद्रिमुदयाद्रिं भास्करः सूर्य इव आरुरोह ॥ १४ १५ ॥

मु ॥ तावदित्यादि ॥ १४ ॥ १५ ॥

वी ॥ ईक्षितइति ॥ व्रीडाप्रेमभ्यां युक्तैः वीक्षितैः ईक्ष्यमाणः ताभिस्तैरेव वीक्षितैः कृच्छ्रात् कथंचिद्विसृष्टः तासां मनो हरन् संजातः हासो यस्य तथाभूतो निर्जगाम ॥ १६ ॥

मु॥अन्तःपुरस्त्रीणाम् अन्तस्थितलज्जाप्रेमाभिव्यञ्जकानीत्यर्थः,यानि वीक्षितानि तै कृच्छ्राद्विसृष्टः कथंचित् तादृशप्रेमाकुलतद्विलोकनलोलस्सन्नित्यर्थः. जातहासः स्व-

---

१. यथादर्शं· मु-भा-प्र-पा ॥

सुधर्माख्यां सभां सर्वैर्वृष्णिभिः परिवारितः।
प्राविशद्यन्निविष्टानां न सन्त्यङ्ग षडूर्मयः॥ १७

तत्रोपविष्टः परमासने विभुर्बभौ स्वभासा ककुभोऽवभासयन्।
वृतो नृसिंहैर्यदुभिर्यदूत्तमो यथोडुराजो दिवि तारकागणैः॥ १८

तत्रोपमन्त्रिणो राजन्नानाहास्यरसैर्विभुम्।
उपतस्थुर्नटाचार्या नर्तक्यस्ताण्डवैः पृथक्॥ १९

मृदङ्गवीणामुरजवेणुतालदरस्वनैः।ननृतुर्जगुस्तुष्टुवुश्च सूतमागधवन्दिनः॥ २०

तत्रस्था ब्राह्मणाः केचिदासीना ब्रह्मवादिनः।
पूर्वेषां पुण्ययशसां राज्ञां चाकथयन्कथाः॥ २१

---

स्मिस्तद्गाढानुरागदर्शनजनितानन्दसंजातस्मितस्सन्नित्यर्थः, अतएव मनः तासां चित्तम् अहरत्॥ १६॥

वी॥सुधर्मामिति॥तां विशिनष्टि—यत् यत्र सभायाम् उपविष्टानां षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवो न सन्ति, तथाभूतामित्यर्थः॥ १७॥

मु॥ एवं स्वगृहेभ्यः पृथक्पृथक् निर्गत्य अनन्तरं सर्वैर्वृष्णिभिः परिवारितस्सन् सुधर्माख्यां सभां स्वयमिन्द्रं जित्वानीतां देवसभां प्राविशत्, सभामहिमानमाह—यन्निविष्टानामिति। अङ्गेति राजानं प्रति संबुद्धिः, यन्निविष्टानां यस्यामुपविष्टानां षडूर्मयः अशनायापिपासाशोकमोहजरामृत्यवः न सन्ति॥ १७॥

वी॥ तत्रेति॥ तत्र सुधर्मायां स्वभासा स्वदीप्त्या ककुभो दिशः भासयन् नृसिंहैर्नरश्रेष्ठैर्यदुभिः परिवृतः बभौ, यथा दिवि आकाशे नक्षत्रगणैः चन्द्रो भाति तद्वत्॥

मु॥ तत्रेति—स्फुटेर्थः॥ १८॥

वी॥ तत्रेति॥ तत्र तदा हे राजन् उपमन्त्रिणः परिहासकाः हास्यरसैर्विभुं श्रीकृष्णम् उपतस्थुः, तथा पृथक् स्वस्वसमुदायैः नटाचार्यास्ताण्डवादिभिः॥ १९॥

मु॥ एवमुपविष्टस्य तस्य तत्तत्सेवकसेवाप्रकारमाह—तत्रेत्यादिना राज्ञां चाकथयन्कथा इत्यन्तेन॥ १९॥

वी॥ मृदङ्गादयः प्रसिद्धाः, दरः शङ्खः, तेषां स्वनैः ननृतुः, जगुश्च, सूतादयः तुष्टुवुः, तत्र मागधाः वंशावलिपाठकाः, वन्दिनः स्तुतिपाठकाः॥ २०॥

मु॥ २०॥

वी॥ तत्रस्थाः सभायां स्थिताः पुण्यं यशो येषां तेषां पूर्वेषां राज्ञां कथाः कथयामासुः॥ २१॥

मु॥ २१॥

तत्रैकः पुरुषो राजन्नागतोऽपूर्वदर्शनः। विज्ञापितोभगवतेप्रतीहारैःप्रवेशितः॥ २२
सनमस्कृत्यकृष्णायपरेशायकृताञ्जलिः।राज्ञामावेदयद्दुःखंजरासन्धनिरोधजम्॥२३
येचदिग्विजयेतस्यसन्नतिंनययुर्नृपाः।प्रसह्यरुद्धास्तेनासन्नयुतेद्वेगिरिव्रजे॥ २४
राजान ऊचुः—
कृष्णकृष्णाप्रमेयात्मन्प्रपन्नभयभञ्जन।वयंत्वांशरणंयामोभवभीताः[१]पृथग्दृशः॥२५
लोकोविकर्मनिरतः कुशले प्रमत्तः कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।

---

वी॥ एवमाह्निकमनुवर्णितम्, अथ जरासन्धनिरुद्धराजसन्देशहरागमनं प्रस्तौति—तत्रेति॥ इत्थं नीयमानदिनानामेकस्मिन्दिने हे राजन् अपूर्वदर्शनः न पूर्वं दर्शनं यस्य सः एकोऽसहायः कश्चित्पुरुष आगतः प्रतीहारैः द्वारपालैर्भगवते ज्ञापितः ततः प्रवेशितश्च॥ २२ ॥

मु॥ अथ कथाप्रसङ्गान्तरमाह—तत्रैक इत्यादिना॥ २२ ॥

वी॥ सइति॥ आगतः कृताञ्जलिः बद्धोऽञ्जलिर्येन सः जरासन्धेन यो निरोधः तत्प्रभवं राज्ञां दुःखमावेदयत्॥ २३ ॥

मु॥ परमाय सर्वोत्तमाय॥ २३ ॥

वी॥ येचेति॥ तस्य जरासन्धस्य दिग्विजये ये नृपाः सन्नतिं नम्रतां न प्रापुः, ते द्वे अयुते नृपाः गिरिव्रजसंज्ञके दुर्गे तेन जरासन्धेन बलान्निरुद्धा आसन्, तेषां राज्ञामिति पूर्वेण संबन्धः॥ २४ ॥

मु॥ राजदुःखनिमित्तमाह—येचेति॥ द्वे अयुते नृपाः गिरिव्रजे गिरिव्रजाख्ये तन्नगरे तेन रुद्धा आसन्, तेषां च दुःखम् आवेदयदित्यन्वयः॥ २४ ॥

वी॥ तेषां विज्ञप्तिमेवाह षड्भिः॥ तावच्छरण्यत्वोपयुक्तगुणविशिष्टं संबोधयन्तश्शरणं व्रजन्ति—कृष्णकृष्णेति॥ "कृषिर्भूवाचकश्शब्दः"इत्यादिना निरुक्तेन कृष्णशब्देन निम्नोन्नतानादरेण सर्वलोकानन्दकरत्वम्, अत एव वैषम्यनैर्घृण्यादिराहित्यं च विवक्षितम्, अप्रमेयात्मन् अपरिच्छेद्यस्वरूप, अनेनास्मदन्तरात्मतया अस्मद्दुःखं जानास्येवेति विवक्षितम्, अत एव सर्वज्ञत्वं च. प्रपन्नभयभञ्जनेत्यनेन वात्सल्यं विवक्षितम्, त्वां शरणं रक्षणोपायं यामः व्रजामः अध्यवस्यामः, यातिरत्र गत्यर्थः, प्रावण्यस्य गतिपूर्वकत्वात् गत्यर्थानां बुद्ध्यर्थत्वात्, कार्पण्यद्योतनायात्मनो विशिषन्ति—भवभीताः, भवशब्दोऽत्र सांसारिकमरणदुःखपरः, भवाद्भीताः पृथग्दृशः पृथग्दर्शिनः भिन्नमतयः अज्ञास्तद्भयनिवर्तनोपायानभिज्ञा इति यावत्॥ २५ ॥

मु॥ अत्र कृष्णकृष्णेत्यादि षट्श्लोकी राज्ञां विज्ञापनरूपा, तत्र प्रथमेन शरणाश्रयणम्, त्रिभिर्भयानुवादः, द्वाभ्यां प्रार्थनमिति विवेकः, पृथग्दृशः युष्मत्कृपया पामरलोकात्पृथग्भूतज्ञानाः अत एवम्भूतास्सन्तः त्वां शरणं रक्षितारं यामः॥ २५ ॥

वी॥ प्रपन्नभयभञ्जनेत्यनेन अप्रपन्नजनमरणभयाभञ्जनत्वं सूचितम्, तदेव विवृण्वन्तः प्रणमन्ति—लोकइति॥तृतीये स्कन्धे ब्रह्मस्तुतौ पठितोऽप्ययं श्लोकः विज्ञप्तिसाम्यादर्थसौष्ठवाच्चात्रापि पठ्यते, यो लोको जनः विकर्मणि विविधे कर्मणि वैषयिकसुखार्थे

यस्तावदस्यबलवानिहजीविताशांसद्यश्छिनत्त्यनिमिषायनमोऽस्तु तस्मै ॥
लोके [1]त्वमीश जगतः कलयाऽवतीर्णस्सद्रक्षणाय खलनिग्रहणाय[2] चाद्य ।
कश्चित्त्वदीयमतियातिनिदेशमीश किंवा जनस्स्वकृतमृच्छतितन्नविद्मः २७
स्वप्नायितं नृपसुखं परतन्त्रमीश शश्वद्भयेन मृतकेन धुरं वहामः ।

---

कर्मणीति यावत्, निरतः त्वदुदिते पञ्चरात्रगीतादिमुखेन भवतोपदिष्टे भवदाराधनात्मके कुशले श्रेयस्साधने स्वानुरूपे च शरणवरणादिरूपधर्मे यावत्प्रमत्तः अनवहितः, तावत् तस्य यो जीविताशां सद्यश्छिनत्ति,तस्मै अनिमिषाय कालात्मने तुभ्यं नमोऽस्तु॥

मु ॥ एवं स्वमतमुक्त्वा लौकिकस्थितिमाहुः—लोकइति ॥ विकर्म निषिद्धकाम्यरूपकर्म, तत्र निरतः नितरामासक्तः कुशले निश्श्रेयसप्रापके त्वदुदिते मातापितृसहस्रेभ्योऽपि वत्सलतरेण त्वया हिततमत्वेन उक्ते स्वे स्ववर्णाश्रमाद्युचिते भवदर्चने भवदाराधनात्मके कर्मणि प्रमत्तः, एवं केवललौकिकानां स्थितिमनुशोच्य भगवतो मोक्षप्रदत्वाद्युपकारानुसंधानपूर्वकं तं नमस्कुर्वन्ति —यइति । बलवान् निग्रहानुग्रहशक्तिसंपन्नः यः तावत् अस्य लोकस्य इह जीविताशां स्वल्पवैषयिकसुखासक्त्या पुनरत्रैव जीवितुमिच्छां सद्यः छिनत्ति भवदीयोऽहमित्यञ्जलिकरणमात्रेणैव निरस्यति, अनिमिषाय देवोत्तमाय ते नमोनम इति ॥ २६ ॥

वी ॥ नह्येतावता लोकहिताचरणैकशीलस्य तव वैषम्यमस्तीत्याहुः—लोकइति॥ भो जगत ईश्वर त्वं सतां रक्षणाय खलानां दुष्टानां निग्रहाय च कलया अंशेन बलभद्रेण सहावतीर्णः जगत आद्यः आदौ भवः कारणभूत इति वा संबन्धः, खलनिग्रहेण विना सद्रक्षणासंभवात्तस्यापि तादर्थ्यात्केवलहितैककारी त्वमिति भावः,यद्वा खलानां निग्रहस्यापि तेषामन्ततो हितत्वे पर्यवसानात्सोऽपि हितएवेति भावः, तर्ह्येवंभूते सति मयि कुतः कश्चिद्दुःख्यतीत्यत्र कारणद्वयं संभावयन्तोऽन्यन्न विद्म इत्याहुः—हे ईश कश्चिज्जनस्त्वदीयं निदेशम् आज्ञाम् अतियाति अतिक्रामति, किं वा स्वकृतं स्वकृतपापफलं प्राप्नोति तत् उभयव्यतिरिक्तं कारणान्तरं न विद्मः, अन्यतरन्निश्चेतुं न शक्नुम इति वा, कर्मानुगुणमीश्वरो नियच्छतीत्यविरोधः ॥ २७ ॥

मु ॥ ननु यूयमेव मामतिवादस्तुत्या प्रीणयथ, इह युष्मासु अहमप्येक एवेत्यत्राहुः—लोकइति ॥ आद्यः जगदिनः जगतां स्वामी भवान् खलनिग्रहणाय दुष्टशिक्षणाय सद्रक्षणाय च इह लोके इह जगति कलया अंशेन अवतीर्णः, एवञ्च सति हे ईश कश्चित् जनः त्वदीयं निदेशम् आज्ञाम् अतियाति किं वा,स्वकृतं स्वकर्म ऋच्छति अनुभवति ज्ञाननिरपेक्ष एव अनुभवति किं वेत्यर्थः, तदुभयं न विद्मः, कर्मानुगुणमेवेश्वरो यच्छति, तथाचायमनुभवतीत्यविरोधः. अतो जरासन्धं निगृह्य आज्ञापयास्मान्विमोचयेति ॥

वी॥ प्रकृतं स्वदुःखं निवेदयिष्यन्तस्तावदधुनैव न क्लिश्यामः, किंतु सदापीत्यभिप्रयन्त आहुः—स्वप्नायितमिति॥हे ईश नृपसुखं यन्नृपाणां सुखं तत् स्वप्नायितं स्वाप्नसुखतुल्यं क्षणिकमतितुच्छं चेत्यर्थः. तत्र हेतुत्वेन विशिंषन्ति—परतन्त्रमिति । कर्मा-

---

१. भवाञ्जगदिनः. मु-भा-प्र-पा ॥ २. चाढ्यः. मु-भा-प्र-पा ॥

हित्वातदात्मनिसुखंत्वदनीहलभ्यंक्लिश्यामहेऽतिकृपणास्तवमाययेह॥ २८
तन्नोभवान्प्रणतशोकहराङ्घ्रि[१]युग्म बद्धान्वियुङ्क्ष्वमगधाह्वयकर्मपाशत् ।
योभूभुजोऽयुतमतङ्गजवीर्यमेकोबिभ्रद्रुरोधभवनेमृगराडिवा[२]वीः ॥ २९

यत्तमित्यर्थः, अतोऽस्माकं बन्धनात्पूर्वमपि न सुखमिति भावः, ननु कल्याणतरनृपदेहसंबन्ध एव सुखरूप इत्यत आहुः—शश्वदिति। शश्वत् सदा भयम् अमित्रेभ्यो यस्य तेन मृतकेन शवतुल्येन देहेन धुरं वहामः. मृतकतुल्यशरीराख्यभारं वहाम इत्यर्थः, मृतकेनेति कर्मणः करणत्वविवक्षया तृतीया, यद्वा लोके मृतकेनोह्यमानेन या धूर्भारः तादृशीं धुरं भारं वहाम इत्यर्थः, नहि शवं वहतां तत्संबन्धः सुखरूपः, किन्तु भारापादकतया दुःखरूप एव. तथा नृपदेहसंबन्धोऽपीति भावः, अतो हे ईश त्वत् त्वत्तः त्वदनुग्रहादित्यर्थः, यत् अनीहैः निष्कामैः लभ्यम् आत्मनि त्वयि विषये सुखं तद्धित्वा अत एव नितरां कृपणास्तव मायया मोहिता इति शेषः, इह लोके क्लिश्यामहे ॥ २८ ॥

मु॥अथैतावत्पर्यन्तं भगवद्वैमुख्येन केवलवैषयिकसुखानुभवासक्त्या हता वयमित्यात्मनो निन्दन्त आहुः—स्वप्नायितमिति ॥ हे ईश नृपसुखं राज्यानुभवजन्यसुखं स्वप्नायितं स्वप्नानुभवतुल्यम्, तदपि परतन्त्रं क्षुद्रविषयसाध्यम्, किञ्च शश्वत् सर्वदा भयं यस्मिन् तेन मृतकेन मृततुल्येन शरीरेण अतिभङ्गुरदेहेनेत्यर्थः, धुरं केवलपुत्रदारादिपोषणभारचिन्तां वहामः केवलं चिन्तामेव वहामः. नतु कर्मानुगुणभवितव्यतां विना तत्रापि सक्ता इत्यर्थः, मोहेन श्रेयसि वञ्चितास्सन्तः हता इत्याहुः—हित्वेति । अनीहैः निष्कामैः लभ्यं त्वदात्मनि " रसो वै सः " इत्युक्तप्रकारेण आनन्दमये त्वत्स्वरूपे विषये यत सुखं तदनुभवजनितानन्दः तद्धित्वा इह लोके तव मायया त्वत्सङ्कल्पानुगुणप्रवर्तमानकर्ममहिम्ना अतिकृपणाः सन्तः संसृत्युत्तरणोपायशून्यास्सन्त इत्यर्थः, इहैव क्लिश्यामहे केवलं क्लेशमेव भजामः ॥ २८ ॥

वी॥ प्रकृतमात्मदुःखं निवेदयन्तस्तन्निराकरणं प्रार्थयन्ते — तन्नइति॥ प्रणतानां शोकहरमङ्घ्रियुग्मं यस्य तथाभूतेति संबोधनम्, तानुक्तविधानधुना बद्धांश्च नोऽस्मान् मगधाह्वयः जरासन्धव्याजरूपो यः कर्मपाशः तस्माद्वियुङ्क्ष्व वियोजय, भवद्भिरेव विक्रम्य ततो निष्क्रम्यतामित्यतो मागधं विशिंषन्ति—यइति। यः अयुतसङ्ख्यानां मतङ्गजानां वीर्यं बलम् एक एव बिभ्राणः भूभुजोऽस्मान् सिंहः अवीः मेषीरिव भवने रुरोध निरुद्धवान्, तथाभूतमगधाह्वयकर्मपाशादिति संबन्धः, न वयं निर्गन्तुं शक्नुम इति भावः ॥ २९ ॥

मु ॥ एवं विज्ञाप्य प्रस्तुतमाहुः—तदिति ॥ तत् तस्मात् उक्तरीत्या क्लेशाकुलत्वादित्यर्थः, प्रणतानां शरणागतानां शोकहरम् अङ्घ्रियुग्मं यस्य सः भवान् मगधाह्वयकर्मपाशात् हेतोः बद्धान् नः अस्मान् मगधाह्वयकर्मपाशात् जरासन्धाह्वयात् कर्मबन्धात् कर्मानुगुणमेव सोऽप्येवं बद्धास्मान् बाधत इति भावः, वियुङ्क्ष्व विमोचय, तत्सामर्थ्यं क्रौर्यं चाहुः —य इति । अयुतमतङ्गजानां वीर्यं बिभ्रत मृगराट् सिंहः अवीन् मेषानिव भूभुजः राज्ञः भवने गृहे रुरोध ॥ २९ ॥

१. युग्मो. मु·भा·प्र·पा ॥ २. अवीन्. मु·भा·प्र·पा ॥

यो वै त्वया द्विनवकृत्व [1]उदात्तचक्र भग्नो मृधे खलु भवन्तमनन्तवीर्यम्।
जित्वा नृलोकनिरतं सकृदूढदर्पो युष्मत्प्रजा रुजति नोऽजित शं विधेहि॥
इतिमागधसंरुद्धा[2]भवद्दर्शनकाङ्क्षिणः।प्रपन्नाःपादमूलंतेदीनानांशंविधीयताम्॥३१
श्रीशुक उवाच—
राजदूतेब्रुवत्येवंदेवर्षिःपरमद्युतिः।बिभ्रत्पिङ्गजटाभारंप्रादुरासीद्यथारविः॥ ३२
[3]प्रियस्यतस्यकृष्णस्यगायन्कर्माणिजन्मच।कृष्णंसंघांश्चलोकांश्चद्रावयन्रमयन्भृशम्
तंदृष्ट्वाभगवान्कृष्णस्सर्वलोकेश्वरेश्वरः।ववन्दउत्थितश्शीर्ष्णाससभ्यस्सानुगोमुदा॥
सभाजयित्वा विधिवत्कृतासनपरिग्रहम्।

वी ॥ किंच भवदीया वयमित्यस्मान् भृशं बाधत इत्याहुः—योवाइति ॥ भो उदात्तचक्र उद्यतसुदर्शन द्विनवकृत्वः अष्टादशवारं त्वया सह मृधे युद्धे प्रवृत्ते सति तत्र सप्तदशकृत्वो भग्नः पराजितः खलु, पश्चात् अनन्तं वीर्यं यस्य तमपि नृलोकनिरतं मनुष्यचेष्टामनुवर्तमानमित्यर्थः, हेतुगर्भमिदम्, अतस्त्वां सकृज्जित्वा प्राप्तदर्पः युष्मत्प्रजाः भवदीयान्नोऽस्मान् रुजति पीडयति, अतः शं सुखं विधेहि कुरु ॥ ३० ॥

मु ॥ ननु युष्मासु तस्यैवं वैरमूलं किमित्यत्राहुः—योवाइति ॥ द्विनवकृत्वः अष्टादश वारान् मृधे युद्धे त्वया उदारेण चक्रेण त्वत्सुदर्शनेन भग्नस्सन् सकृत् एकवारम् अनन्तवीर्यम् अपारशक्तिं त्वां जित्वा हे अजित युष्मत्प्रजाः नः रुजति पीडयति, तर्हि किं कर्तव्यम्? अत आह—न इति। हे अजित नः शं सुखं विधेहीति ॥ ३० ॥

वी ॥ इतीति श्लोको दूतवचनम्, दीनानां तेषां राज्ञां शं विधीयतां क्रियताम् ॥

मु ॥ राजदूतवाक्यं निगमयति—इतीति॥ इति उक्तप्रकारेण, मागधो जरासन्धः, भवद्दर्शनकाङ्क्षया अस्मन्मोचनार्थमित्यर्थः,रक्षणस्यावश्यकत्वे हेतुमाह—प्रपन्नाः पादमूलं त इति। दीनानामित्युपायान्तरशून्यत्वमुक्तम्, शं सुखं विधीयतां क्रियताम् ॥ ३१ ॥

वी ॥ अथ नारदागमनादिकं प्रस्तौति—राजदूतइत्यादिना॥ राज्ञां दूते ब्रुवति सति परमा द्युतिर्यस्य सः बिभ्रद्बिभ्राणः प्रियस्य भगवतः कर्माणि जन्म च गायन् तं कृष्णं संघान् सभ्यसंघांश्च द्रावयन् आर्द्रचित्तान् कुर्वन् भृशमितरलोकान् रमयंश्चाविरासीदिति संबन्धः ॥ ३२ ॥ ३३ ॥

मु ॥ राजेति ॥ एवं राजदूते ब्रुवति सत्येव देवर्षिः नारदः प्रादुरासीत्, यथा रविरित्युक्तदृष्टान्तानुगुणविशेषणमाह—परमद्युतिः बिभ्रत्पिङ्गजटाभारमिति ॥ ३२ ॥

मु ॥ ३३ ॥

वी ॥ तमिति ॥ तं नारदं मुदा हर्षेण ववन्दे ॥ ३४ ॥

मु ॥ लोकशिक्षार्थमवतीर्णो भगवान् स्वयं तत्परिचर्यां चकारेत्याह—ववन्द इति ससभ्यः सभास्थितार्हपुरुषैस्सह उत्थितः सन् ववन्दे ॥ ३४॥

वी ॥ सभाजयित्वेति ॥ यथाविधि सभाजयित्वा पूजयित्वा कृत आसनपरिग्रहो

---

१. उदारचक्रभग्नो मु-भा प्र-पा॥ २. भवद्दर्शनकाङ्क्षया मु-भा-प्र-पा॥
३. गायन् गिरा मधुरया प्रियकर्माणि जन्म च। द्रावयन्नघसंघांश्च लोकांश्च रमयन् भृशम्. पा॥

बभाषे मधुरैर्वाक्यैश्श्रद्धयातर्पयन्मुनिम् ॥ ३५

अपिस्विदद्यलोकानांत्रयाणामकुतोभयम्।ननुभूयान्भगवतोलोकान्पर्यटतोगुणः ॥
नहितेऽविदितंकिंचिल्लोकेष्वीश्वरकर्तृषु।अथपृच्छामहेयुष्मान्पाण्डवानांचिकीर्षितम्

श्रीनारद उवाच—

दृष्टा मया ते बहुशो दुरत्यया माया विभो विश्वसृजश्च मायिनः।

---

येन तं मुनिं श्रद्धया मधुरैर्वाक्यैश्च तर्पयन् बभाषे ॥ ३५ ॥

मु ॥ विधिवत् यथाशास्त्रं सभाजयित्वा पूजयित्वा पूजादिभिः नन्दयित्वेतिवार्थः, "आनन्दनसभाजने" इति निघण्टुः, अथ कृतासनपरिग्रहम् आसने सुखमासीनं मुनिं श्रद्धया सूनृतैर्वाक्यैः सत्यतया हिततमैर्वाक्यैरित्यर्थः, तर्पयन् प्रीणयन् बभाष इति ॥ ३५ ॥

वी॥ तदेवाह—अपिस्विदिति द्वाभ्याम्॥ अधुना लोकानाम् अकुतोभयं न कुतश्चिदपि भयं तत् अपि स्वित् अभयं कच्चिदितीष्टप्रश्नः, ननु हे ब्रह्मन् लोकान्पर्यटतो भगवतस्त्वत्तः अस्माकमयं भूयान् महान् गुणः लाभः, यत्सर्वलोकवृत्तान्तज्ञानमिति वाक्यशेषः ॥ ३६ ॥

मु ॥ भाषणप्रकारमेवाह—अपिस्विदिति ॥ अद्य लोकानां त्रयाणाम् अकुतोभयम् अपिस्वित् कुतोऽपि हेतोः भयाभाव एव खल्वित्यर्थः, अहं किं जान इत्यत आह—नन्विति, लोकान् पर्यटतः सदा संचरतः भगवतः सर्वज्ञस्य ते गुणः ज्ञानाद्यतिशयः भूयान् ननु भूयान् स्मेत्यर्थः ॥ ३६ ॥

वी ॥ नन्विति ॥ ईश्वरकर्तृषु स्वकर्तृकेषु लोकेषु किंचिदपि तवाविदितं न, किंतु सर्वं विदितमेवेत्यर्थः, अथ अतः युष्मान् प्रति पृच्छामहे ॥ ३७ ॥

मु ॥ लोकेषु ते अविदितं किञ्चिदपि नतु नहि, एवं भगवान् तत्सार्वज्ञं स्तुत्वा तत्र स्वेष्टांशं पृच्छति—अथेति। पाण्डवानां चिकीर्षितं तदानीं कर्तुमिष्टं प्रयोजनं पृच्छामहे ॥ ३७ ॥

वी॥ इत्थं सर्वज्ञेनाप्यविदुषेव जरासन्धवधार्थमेव पाण्डवच्चिकीर्षितं पृष्टो नारदः केवलमिदं जनव्यामोहनमिति ज्ञात्वाऽऽह—दृष्टेति त्रिभिः ॥ हे विभो हे भूमन् स्वशक्तितः सर्वज्ञत्वादिस्वशक्तिभिरेव सह भूतेष्वन्तरात्मतया चरतस्तव, अनेन पाण्डवादिचिकीर्षितं तव विदितमेवेत्यभिप्रेतम्, विश्वसृजो ब्रह्मणोऽपि मायिनः व्यामोहकस्य तव पाण्डवानां चिकीर्षितं पृच्छाम इत्येतद्दुरतिक्रमणीया माया दृष्टा व्यामोहनमात्रमेतदिति निश्चितमित्यर्थः, बहुशो दुरत्ययेत्यनेन त्वत्प्रपन्नैस्त्वत्ययैवेति सूचितम्, यद्वा बहुशो दृष्टेति संबन्धः, यथा मह्यं योगमायोदयः प्रदर्शितः, तद्वदयं प्रश्नोऽपीति भावः, ननु भूतेषु चरामि तैः किं न दृश्य इत्यतो विशिनष्टि—भस्मना वह्नेरिति । वह्नेः छन्ना गूढा रुक् प्रकाशो यस्य तवेति संबन्धः, अतस्तवेदं प्रश्नादिकं मम नाद्भुतमित्यर्थः ॥

---

१. ननु. मु·भा-प्र. पा ॥

भूतेषु भूमंश्चरतः स्वशक्तिभिर्वह्नेरिव च्छन्नरुचो न मेऽद्भुतम् ॥ ३८
तवेहितं कोऽर्हति साधु वेदितुं स्वमाययेदं सृजतो नियच्छतः ।
यद्विद्यमानात्मतयाऽवसीयते तस्मै नमस्ते स्वविलक्षणात्मने ॥ ३९
जीवस्य यस्संसरतो विमोक्षणं न जानतोऽनर्थवहाच्छरीरतः ।
लीलावतारैस्स्वयशःप्रदीपकं प्राज्वालयत्त्वां तमहं प्रपद्ये ॥ ४०

---

मु॥ एवं भगवता पृष्टो नारदो यदुक्तवान्, तदाह—दृष्टाइति॥ विश्वसृजः जगन्निर्मातुः मायिनः आश्चर्यावहशक्तियुक्तस्य ते दुरत्ययाः इतरैरत्येतुमशक्याः ते मायाः आश्चर्यशक्तयः मया बहुशो दृष्टाः. अत्रानुगुणदृष्टान्तमाह—भूतेष्विति। हे भूमन् विभुस्वरूप स्वशक्तितः अप्रतिहतस्वसामर्थ्यात् भूतेषु चरतः छन्नरुचः आच्छादितस्वतेजसः वह्नेरिव बहुशो दृष्टाः, अतो मे मम नाद्भुतम् आश्चर्यावहं न भवतीत्यर्थः ॥ ३८ ॥

वी॥पाण्डववृत्तान्तप्रश्नव्याजेन मागधजिघांसैवाभिप्रेतेत्यपि न निश्चेतुं शक्नुम इत्यभिप्रयन्नाह-तवेति॥ ईहितमभिप्रेतं साधु यथावत् वेदितुं को वाऽर्हति न कोऽपीत्यर्थः, तत्र हेतुत्वेन तं विशिनष्टि—स्वमायया स्वसङ्कल्पेन इदं जगत् सृजतः नियच्छतोऽन्तरात्मतया प्रशासितुश्च तवेति संबन्धः,त्वत्सृज्यस्त्वन्नियाम्यश्च अयं जनः कथं वेत्तुमर्हतीति भावः, किंतु यद्विद्यमानात्मतया यस्मिन् त्वयि विद्यमान आत्मा भावोऽभिप्राय इति यावत्, तत्त्वेन अवसीयते निश्चीयते मयेति शेषः, यस्य तवायमेवाभिप्राय इति मया न निश्चीयत इत्यर्थः, स्वेन स्वासाधारणस्वभावेन सर्वस्माद्विलक्षण आत्मा स्वरूपं यस्य तस्मै तुभ्यं नमः केवलं नमस्करोमि, न त्वीहितं निश्चेतुं शक्नोमीति भावः ॥ ३९ ॥

मु॥एवमुक्त्वापि पुनस्तन्महिमापरामर्शेन निर्विण्णचित्तस्सन्नाह—तवेति॥ स्वमायया अचिन्त्यशक्त्या इदं जगत् सृजतः नियच्छतः पालयतश्च तव ईहितम् अमोघसंकल्पं साधु निस्संशयं वेदितुं कोऽर्हति, न कोऽपि समर्थ इत्यर्थः, विद्यमानात्मतया जन्मादिविकाररहिततया यत् वस्तु अवसीयते ज्ञायते यदास्ते, तस्मै तादृशवस्तुभूताय अविलक्षणात्मने इतरवस्तुवैलक्षण्येन निर्णेतुमशक्यस्वरूपाय ते नमोऽस्तु, 'तस्मै नमस्तेऽस्तु विलक्षणात्मने' इति पाठः, सर्वप्राकृतवस्तुविलक्षणात्मने ते नम इत्यर्थः॥ ३९॥

वी॥ यद्यप्येवम्, अथापि त्वदवतारः केवलं साधुपरित्राणाय दुष्कृद्विनाशाय चेत्येतत्तु निश्चिनोमीत्यभिप्रयन् प्रपद्यते—जीवस्येति॥ यो भवान् संसरतः अनर्थवहाद्दुःखावहाच्छरीरान्मोक्षणं मोक्षणोपायमजानतश्च जीवस्य स्वयश एव प्रदीपः तं लीलावतारैः प्राज्वालयत् सन्दीपितवान्,तं त्वाम् अहं शरणं प्रपद्ये, मुक्त्युपायम् अजानतः संसरतो जीवस्य यथा अन्धतमसावृतघटपटादीनजानतस्तज्ज्ञानोपायभूतप्रदीपप्रज्वलनं, तद्वच्छृण्वतोऽनुस्मरतः कथयतश्च मुक्त्युपायभूतं यशो विस्तृतवानित्यर्थः ॥ ४० ॥

मु ॥ किंच अनादिसंसारचक्रे भ्रमतो जीवस्य त्वमेव कृपयेहावतीर्य स्मरणमात्रेण तदुत्तारकं स्वयशः प्रकाशयेति प्रार्थनापूर्वकं तादृशमहिमानं त्वां शरणं प्रपद्य इत्याह—जीवस्येति ॥ यः भगवान् अनर्थवहात् अनर्थप्रापकात् शरीरतः शरीराद्धेतोः शरीरपारंपर्याद्धेतोरित्यर्थः, संसरतः अनादिसंसारं भजतः अतएव विमोक्षणमजानतः जीवस्य

अथाप्याश्रावयेब्रह्मन्नरलोकविडम्बनम्। राज्ञः पैतृष्वसेयस्य भक्तस्य च चिकीर्षितम्॥
यक्ष्यति त्वां मखेन्द्रेण राजसूयेन पाण्डवः। [1]नृपतिः पारमेष्ठ्येप्सुस्तद्भवाननुमोदताम् ॥
[2]दिदृक्षवस्समेष्यन्ति राजानश्च यशस्विनः ॥ ४२
श्रवणात्कीर्तनाद्ध्यानात्पूयन्तेऽन्तेवसायिनः ।
तव ब्रह्ममयस्येश [3]किमुताक्षाभिमर्शिनः ॥ ४३

लीलावतारैः रामकृष्णादिलीलार्थगृहीतावतारैः करणैः प्रदीपकं पापनिर्हरणेन ज्ञानप्रकाशकं स्वयशः प्राज्वालयः प्रकाशितवान्, तं तादृशमहिमानं भगवन्तं त्वाम् अहं प्रपद्य इति, 'नजानतोऽनर्थवहाच्छरीरतः' इति पाठे अनर्थवहात् दुःखावहादित्यर्थः, शरीरतः शरीरात् हेतोः दुष्टनिग्रहशिष्टपरिपालनादिहेतोरित्यर्थः, प्रदीपकं सर्वेषां ज्ञानप्रकाशकं स्वयशः प्राज्वालयः प्राकाशयः, तं त्वाम् एवमुपकर्तारं त्वाम् अहं प्रपद्य इति, 'प्राज्वालयत्त्वां तमहं प्रपद्ये' इति पाठः ॥ ४० ॥

वी ॥ अथापीति ॥ यद्यप्येवम्, अथापि नरलोकं विडम्बयन्ननुवर्तत इति तथा तं त्वां प्रति राज्ञो युधिष्ठिरस्य चिकीर्षितं श्रावये ॥ ४१ ॥

मु ॥ तर्ह्येवंविधं मां लौकिकार्थेषु विनियोक्तुं प्रवृत्ता यूयमित्याशङ्क्य सोपपत्तिकं तत्रोत्तरमाह—अथापीति ॥ नरलोकविडम्बनं नरलोकानुकारिणम्, 'नरदेवविडम्बनम्' इति पाठे तु लौकिकनरपालानुकारिणमित्यर्थः, एवंविधं त्वां पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य भक्तस्य चेत्याभ्याम् अनुल्लङ्घनीयत्वमुक्तम्, चिकीर्षितं कर्तुमिष्टं प्रयोजनम् आश्रावये श्रावयिष्यामि ॥ ४१ ॥

वी ॥ किं तदित्यत आह—यक्ष्यतीति ॥ पाण्डवो युधिष्ठिरः राजसूयाख्येन मखश्रेष्ठेन त्वाम् आराधयिष्यति, तत् तदभिप्रेतं भवाननुमोदतां त्वया निर्वर्त्यतामित्यर्थः, अतस्तत्र गम्यतामिति भावः, तद्व्याजेन शिशुपालादिवधोऽपि भविष्यतीत्यभिप्रयन्नाह—दिदृक्षव इति । यशस्विनः प्रसिद्धा राजानश्चैद्यादयो दिदृक्षवो राजसूयमिति शेषः, समेष्यन्ति आगमिष्यन्ति ॥ ४२ ॥

मु ॥ तत्कृत्यमपि त्वदुद्देशेनैवेत्याह—यक्ष्यतीति ॥ मखेन्द्रेण सकलमखश्रेष्ठेन राजसूयेन त्वां यक्ष्यति त्वत्प्रीणनार्थमेव यक्ष्यतीत्यर्थः, किंफलमुद्दिश्य यक्ष्यतीत्यत्राह—पारमेष्ठ्येति । पारमेष्ठ्यं ब्रह्मत्वम्, तत् तस्मात् कर्मप्रवृत्तत्वात् भवान् अनुमोदतामिति भवच्छब्दप्रयोगात् प्रथमपुरुषत्वम्, अनुमोदं भजेत्यर्थः, एवं धर्मराजप्रीत्या नत्वात्रानुमोदनं कार्यम्, किंतु तत्रागन्तव्यमित्यशयेनाह—तस्मिन्निति ॥ ४२ ॥

वी॥ततः किमत आह—श्रवणादिति ॥ अन्तेवसायिनश्चण्डालादयोऽपि साक्षात्परब्रह्मभूतस्य तव नामश्रवणादिभिरपि कामक्रोधभयादिकृतैः पूयन्ते, किमुत अक्ष्णा अभिमृशन्ति विषयीकुर्वन्तीति तथा ते शिशुपालादयः पूयन्त इति किमु वक्तव्यम्, त्वां पश्यन्तो हठाच्च मुक्ता भवन्तीति भावः ॥ ४३ ॥

मु ॥ तत्रागताश्च सर्वे त्वद्दर्शनात्पूता भविष्यन्तीत्याह—श्रवणादिति ॥ पूयन्ते

१. पारमेष्ठ्यकामो नृपतिः. पा ॥ २. तस्मिन् देवक्रतुवरे भवन्तं वै सुरादयः-इत्यर्धमधिकं क्वचिद्दृश्यते ॥ ३. किमुतेक्षाभिमर्शिनः. मु-भा-प्र-पा ॥

यस्यामलं दिवि यशः प्रथितं रसायां भूमौ च ते भुवनमङ्गल दिग्वितानम् ।
मन्दाकिनीति दिवि भोगवतीति चाधो गङ्गेति चेह चरणाम्बु पुनाति विश्वम्॥
[१]तत्रत्येष्वात्मपक्षेषुप्रगृणत्सुजिगीषया।वाचःपेशैःस्मयन्भृत्यमुद्धवंप्राहकेशवः॥ ४५
त्वंहिनःपरमंचक्षुस्सुहृन्मन्त्रार्थतत्त्ववित्।अतोऽत्रब्रूह्यनुष्ठेयं श्रद्दध्मःकरवामतत्॥४६
श्रीशुक उवाच—
इत्युपामन्त्रितोभर्त्रासर्वज्ञेनापिमुग्धवत्।निदेशंशिरसाऽऽधायउद्धवःप्रत्यभाषत ॥
इति श्रीभागवते महापुराणे दशमस्कन्धे सप्ततितमोऽध्यायः ॥ ७० ॥

---

अन्तेवसायिनः श्वपचा अपि ब्रह्ममयस्य ब्रह्मभूतस्य, स्वार्थे मयट्, ईक्षाच अभिमर्शनंच येषां विद्येत ते ॥ ४३ ॥

वी ॥ कैमुत्यनयेन भङ्ग्यन्तरेणाह— यस्येति॥ हे भुवनानां मङ्गलरूप दिवि पाताले भूमौ च प्रथितं प्रख्यातं यस्य तव यशो विश्वं पुनाति, कथं प्रथितं ? दिग्वितानं दिशां वितानम् उल्लोचः, तद्वदलङ्करणं, तथा चरणाम्बु प्रथितं पुनाति, कथं प्रथितं ? दिवि मन्दाकिनीति, अधः पाताले भोगवतीति, इह लोके गङ्गेति च ॥ ४४ ॥

मु ॥ कैमुत्यमतिशयेनाह—यस्येति ॥ हे भुवनानां मङ्गलस्वरूप दिवि पाताले भूमौच प्रथितं यस्य यशो विश्वं पुनाति, कथं प्रथितम् ? दिग्वितानं दिक्षु वितानवदलंकरणं तथा चरणाम्बु प्रथितं पुनाति, कथं तत् प्रथितम्? दिवि मन्दाकिनीति अधश्च भोगवतीति इह भूमौ गङ्गेति, तस्य तव गमनात् सर्वं मङ्गलं पवित्रं च भविष्यतीति भावः ॥ ४४ ॥

वी ॥ तत्रत्येष्विति ॥ इत्थं श्रुतराजवृत्तान्तयुधिष्ठिरमन्त्रेषु सभास्थेष्वात्मपक्षेषु यदुषु जिगीषया प्रगृणत्सु मागधजिगीषामुत्पादयितुं प्रगृणत्सु तावत् मागधं प्रत्येव गन्तव्यमित्येवं वदत्सु सत्स्वित्यर्थः. वाचःपेशैः मृदुवचोभिः उद्धवं प्राह ॥ ४५ ॥

मु ॥ तत्रैवं नारदेन उक्तेषु वर्तमानेषु आत्मीयपक्षेषु यादवेषु जरासन्धस्य जिगीषया अगृह्णत्सु अमन्यमानेषु राजसूयगमनमनङ्गीकुर्वत्सु वाचःपेशैः पेशलवाग्भिरित्यर्थः ॥ ४५ ॥

वी॥ तदेवाह—त्वंहीति॥हि यस्मात् त्वं नोऽस्माकं चक्षुः तत्स्थानीय इत्यर्थः,सुहृत् मन्त्रार्थानामालोचनसाध्यानामर्थानां तत्त्वं याथात्म्यं वेत्तीति तथा, अतोऽत्राधुना यदनुष्ठेयं कर्तव्यं यत् तद्ब्रूहि तत् भवदुपदिष्टं कर्तव्यमर्थं श्रद्दध्मः विश्वसिमः,करवामच॥

मु ॥ चक्षुष्ट्वे हेतुः—मन्त्रार्थानाम् मन्त्रसाध्यानां तत्त्ववित् परिपाकवेदिता॥ ४६ ॥

वी॥इतीति॥इत्थं सर्वज्ञेनापि भर्त्रा भगवता मुग्धवदज्ञेनेव उपामन्त्रितः मन्त्रार्थं प्रचोदितः उद्धवः संदेशम् आज्ञां शिरसा आधाय ऊढ्वा प्रत्यभाषत प्रत्युत्तरं ददावित्यर्थः॥

मु ॥ इतीति ॥ मुग्धवत् अविदुषेव, निदेशम् आज्ञाम् ॥ ४७ ॥

---

१. तत्र तेष्वात्मपक्षेषु अगृह्णत्सु. मु-भा-प्र-पा ॥

श्रीशुक उवाच—

इत्युदीरितमाकर्ण्य देवर्षेरुद्धवोऽब्रवीत्। सभ्यानां मतमाज्ञाय कृष्णस्य च महामतिः॥ १

उद्धव उवाच—

यदुक्तमृषिणा देव साचिव्यं यक्ष्यतस्त्वया। कार्यं पैतृष्वसेयस्य रक्षा च शरणैषिणाम्॥ २

यष्टव्यं राजसूयेन दिशश्च जयिना विभो। पूर्वं गन्तव्यमस्माभिरिन्द्रप्रस्थमितः प्रभो॥ ३

---

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे सप्ततितमोऽध्यायः ॥ ७० ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
द्वासप्ततितमोऽध्यायः ॥ ७२ ॥

---

वी॥नात्मपक्षवद्भगवदभिप्रायानभिज्ञः प्राह, किन्तु तदभिप्रायं जानन्नेव प्रत्यभाषतेत्याह—इतीति ॥ तावत्सभ्यानां मतं जरासन्धवधार्थमेव गन्तव्यमित्येवंविधमभिमतं ज्ञात्वा ततः कृष्णस्य मतं राजसूययाजनार्थमेव गन्तव्यमित्येवं मतं ज्ञात्वा प्राह, तत्र हेतुत्वेन विशिनष्टि—महतीति श्रेष्ठा सूक्ष्मा मतिर्यस्य सः ॥ १ ॥

मु ॥ प ॥ त्रिसप्ततितमे कृष्ण उद्धवस्य मतानुगः।
इन्द्रप्रस्थं ययौ कुर्वन् पाण्डवानां महोदयम् ॥
तत्र दुर्योधनादीनां पार्थानांच कलिं हरिः।
उत्पाद्य जगतीभारमहरत्पार्थसारथिः ॥

उदीरितं राजसूयगमनं देवर्षेः सभ्यानां कृष्णस्यच मतमिति ज्ञात्वा अब्रवीदिति, यद्वा कृष्णेनोदीरितमाकर्ण्य उद्धवोऽब्रवीत् ,देवर्षेर्मतं राजसूयगमनम् ,सभ्यानां मतं राजरक्षा, कृष्णस्य तूभयम् ॥ १ ॥

वी ॥ उक्तिमेवाह —यदित्यादिना॥ ऋषिणा नारदेन यदुक्तं यागं करिष्यतः पैतृष्वसेयस्य पितृष्वसुः पुत्रस्य साचिव्यं साहाय्यं कर्तव्यमिति, तदपि कार्यं कर्तव्यमेव, तथा शरणार्थिनां राज्ञां च रक्षा कर्तव्या ॥ २ ॥

मु ॥ हे देव यत् ऋषिणा उक्तम् , यक्ष्यतः यागं कुर्वतः पैतृष्वसेयस्य च साचिव्यं साहाय्यम् तच्च कार्यम्, शरणार्थिनां राज्ञां रक्षाच कार्या ॥ २ ॥

वी ॥ तत्र तावद्राजसूयार्थं गन्तव्यं, ततो राजरक्षा कर्तव्येत्याह —यष्टव्यमित्याद्यष्टभिः॥ दिशश्च जयिना चशब्देन यक्ष्यमाणेन चेत्यस्य सङ्ग्रहः, तेन युधिष्ठिरेण कर्त्रा राजसूयेन यष्टव्यम्, तावत्तत्साचिव्यमेव कार्यमिति भावः, दिशश्च जयिनेत्यनेन राजसूयस्य दिग्विजयपूर्वकत्वं तद्दशायामेव राजरक्षा च कृता भवतीत्युभयमभिप्रेतम्. पूर्वं प्रथमम् अस्माभिः इतो द्वारकातः इन्द्रप्रस्थं प्रति गन्तव्यम् ॥ ३ ॥

मु ॥ तत्र प्रथमं राजसूयार्थं गन्तव्यम् , ततो राजरक्षा कर्तव्येत्याह—यष्टव्यमित्यष्टभिः ॥ अतः दिग्विजयहेतोः ॥ ३ ॥

तत्रैवतदनुज्ञातस्तदर्थंजहिमागधम्।ततोजरासुतजयउभयार्थोमतो[१]हिमे ॥ ४
अस्माकंचमहानर्थोह्येतेनैवभविष्यति।यशश्वतवगोविन्दराज्ञो[२]बन्धाद्विमुञ्चतः ॥ ५
सवैदुर्विषहोराजानागायुतसमोबले।बलिनामपिचान्येषांभीम[३]मुग्रबलंविना ॥ ६
द्वैरथेन तु जेतव्यो[४]नतथाऽक्षौहिणीशतैः ।
ब्रह्मण्योऽभ्यर्थितोविप्रैर्नप्रत्याख्यातिकर्हिचित् ॥ ७
ब्रह्मवेषधरो गत्वा तं भिक्षेत वृकोदरः ।

---

वी ॥ दिशश्च जयिनेत्यनेनाभिप्रेतं विशदयति —तत्रैवेति ॥ तत्रेन्द्रप्रस्थे युधिष्ठिरेणानुज्ञात एव तदर्थं युधिष्ठिरप्रयोजनाय मागधं जहि घातय, ततो दिग्विजयहेतोर्जरासुतजयः उभयार्थः राजसूयार्थः शरणागतरक्षार्थश्चेति मया मतः बुद्धः ॥ ४ ॥

मु ॥ उभयार्थः राजसूयार्थः, शरणागतरक्षणार्थश्च ॥ ४ ॥

वी ॥ अनेनैव राजसूयार्थगमनेनैव महान् सर्वोऽपि सिषाधयिषितोऽर्थो भविष्यति, हे गोविन्द राज्ञो नृपान् बन्धात् विमुञ्चतः विमोचयतः तव यशः भविष्यति ॥ ५ ॥

मु ॥ किञ्च यदूनां शत्रुनिग्रहस्तव यशश्च तद्वधेन भविष्यतीत्याह—अस्माकमिति ॥ ५ ॥

वी ॥ अत्युत्सुकतया प्रथममेव जरासन्धेन सह युयुत्सून् यदूनालक्ष्याह—सवा इति ॥ स वै जरासुतः बले गजानामयुतेन तुल्यः उग्रं बलं यस्य तं भीमं विना अन्येषामपि बलिनां दुःखेनापि सोढुमशक्यः,भीमादेव तस्य मृत्युर्विहित इति भावः॥६॥

मु ॥ तर्हि प्रथमं जरासन्धवधोद्योगः कार्य इत्यत्राह —सवै इति॥ बले नागानां गजानाम् अयुतेन समः स राजा बलिनाम् अधिकबलानामपि अन्येषां समबलं भीमं विना दुर्विषहः, अतः प्रथमं राजसूयार्थं गन्तव्यम् . तत्र दिग्विजये भीमेन स घातयितव्य इत्यर्थः ॥ ६ ॥

वी ॥ किञ्च —द्वैरथेनेति॥ द्वैरथेन द्वन्द्वयुद्धेनैव स जेतव्यः, न तथा अक्षौहिणीनां शतैरपि, नन्वपरिमितसैन्यपरिवृतेन सह भीमस्य कथं द्वन्द्वयुद्धं भविष्यतीत्यत आह—ब्रह्मण्यइति । सत्वित्यनुषज्यते, स जरासंधः ब्रह्मण्यः, अतो विप्रैर्याचितो न प्रत्याख्याति ॥ ७ ॥

मु॥ ननु स्वबले साम्येऽपि सेनाबलं तस्याधिकमिति चेत्—अत आह—द्वैरथे द्वन्द्वयुद्धे, शतेन अक्षौहिणीभिः युतो मागधो न जेतव्य इत्यर्थः, नन्वसौ सैन्यमेव युद्धाय नियोजयति, कुतस्तेन द्वैरथमित्यत्राह—ब्रह्मण्यः ब्राह्मणभक्तः, अतो विप्रैरभ्यर्थितः न क्वचित् प्रत्याख्याति निराकरोति ॥ ७ ॥

वी ॥ ततः किमत आह—ब्रह्मवेषधरः वृकोदरः भीमः विप्रवेषं दधत् गत्वा तं जरासुतं भिक्षेत, द्वन्द्वयुद्धमिति शेषः, ततोऽपि किमत आह—हनिष्यतीति ! द्वैरथं द्वन्द्वयोधिनं मागधं हनिष्यति, सोऽप्यतिबलः, तं कथं भीम एव हनिष्यतीत्यत उक्तं —तव संनिधाविति।तव सांनिध्यप्रभावादेव हनिष्यति,नतु स्वबलप्रभावादिति भावः॥

---

१. मम. पा ॥ २. बद्धान्. पा ॥ ३. समबलं-पा ॥ ४. माशताक्षौहिणीयुतः. मु-भा-प्र-पा॥

हनिष्यति न संदेहो द्वैरथं तव संनिधौ ॥ ८

निमित्तं[1]परमीशस्त्वंविश्वसर्गनिरोधयोः। हिरण्यगर्भश्शर्वश्चकालस्यारूपिणस्तव॥
गायन्ति ते विशदकर्मगृहेषु देव्यो राज्ञां स्वशत्रुवधमात्मविमोक्षणं च।
गोप्यश्च कुञ्जरपतेर्जनकात्मजायाः पित्रोश्च लब्धशरणा मुनयोवयंच॥ १०

मु ॥ वृकोदरो भीमः ब्राह्मणवेषधरो गत्वा तं भिक्षेत, द्वन्द्वयुद्धमिति शेषः, तथापि तत्संबद्धत्वात् तत्साम्यमेव स्यात्, अत आह—तव सन्निधाविति। अनेन त्वयापि तेन सह तत्र गन्तव्यमित्यावेदितम् ॥ ८ ॥

वी ॥ नन्वकिंचित्कुर्वतो मम संनिधिना किं स्यादत आह—निमित्तमिति॥विश्वस्य सर्गनिरोधयोः उत्पत्तिप्रलययोः त्वं परं निमित्तम् आदिकारणम्,अतो भीमरूपेण त्वमेव हनिष्यसीति भावः, यद्यहं परं निमित्तं किं तर्ह्यवान्तरं निमित्तमत आह—हिरण्यगर्भइति। कालस्य कालशरीरकस्य अरूपिणः प्राकृतरूपरहितस्य सर्वस्रष्टुः सर्वसंहर्तुश्च तव हिरण्यगर्भः ब्रह्मा शर्वः भवश्च, तवेत्यंशांशिभावसंबन्धे षष्ठी, विश्वसर्गनिरोधयारवान्तरकारणमिति शेषः ॥ ९ ॥

मु ॥ त्वत्सान्निध्याल्लब्धबलस्सन् हनिष्यतीत्येतत् दृष्टान्तेन साधयति, यद्वा—किञ्चित्कुर्वतो मम सन्निधानात् किं स्यात्? अत आह—निमित्तमिति ॥ कालस्य कालात्मनः अरूपिणः ईशस्य तव संबन्धिनो व्यापारभूतयोः विश्वसर्गनिरोधयोः हिरण्यगर्भः शर्वश्च निमित्तं परम्, तथा जरासन्धवधे भीमो निमित्तमात्रम्, त्वमेव साक्षाद्धेतुरित्यर्थः, यद्वा यथा तव अरूपस्य कालात्मनो विश्वसर्गे निमित्तं केवलं हिरण्यगर्भः, तथा शर्वश्च, तथा तन्निरोधे, तथा त्वमेव सन्निधिमात्रेण हन्ता, भीमो निमित्तमात्रमिति ॥ ९ ॥

वी ॥ कोऽसौ तद्वधादस्माकं लाभस्तत्राह—गायन्तीति ॥ राज्ञां मगधरुद्धानां देव्यः पत्न्यः स्वगृहेषु बालकलालनादौ स्वशत्रोः जरासंधस्य वधम् आत्मनाम् आत्मवज्जीवनहेतुभूतानां पतीनां विमोक्षणं चेत्येवंविधं तव विशदं निर्मलं कर्म चेष्टितं गायन्ति गास्यन्ति, तत्र दृष्टान्तमाह—गोप्यश्चेति। अस्य यथेत्यादिः यथा गोप्यः शङ्खचूडवधं स्वमोक्षणं च गायन्ति, यथाचावतारान्तरगतं नक्रात्कुञ्जरपतेर्गजेन्द्रस्य विमोक्षणं यथा वा रावणाज्जनकात्मजायाः विमोक्षणं यथा च पित्रोः देवकीवसुदेवयोः कंसाद्विमोक्षणं लब्धशरणाः प्रपन्नाः मुनयः अस्मदादयश्च गायन्ति, तद्वदित्यर्थः ॥ १० ॥

मु ॥ अतः अनेनैवोपायेन त्वया शीघ्रं गन्तव्यमित्याशयेनाह—गायन्तीति ॥ जरासन्धनिरुद्धानां राज्ञां देव्यः पत्न्यः ते विशदं कर्म बाललालनाद्यैः गायन्ति, किं तत् कर्म? स्वशत्रोः जरासन्धस्य वधम् आत्मनां पतीनां विमोक्षणं च भर्तृविमोक्षणात् स्वविमोक्षणमित्यर्थः, वत्स मा रोदीः कृष्ण एवं करिष्यतीति, यद्वा शत्रुवधादिके कृते तव विशदं कर्म गायन्ति, गायन्तीति वर्तमानसामीप्ये वर्तमाननिर्देशः, अत्र दृष्टान्तः—गोप्यश्चेत्यादयः, त्वया लब्धशरणाः सनाथा गोप्यश्च शङ्खचूडवधं ततो मोक्षणं चकारादन्येऽपि गायन्ति, अवतारान्तरगतं च कुञ्जरपतेः नक्रात् जनकात्मजायाश्च

१. परमीशस्य. मु-भा-प्र-पा ॥

जरासन्धवधःकृष्णभूर्यर्थायोपकल्पते।प्रायः[1]कर्मविपाकेनतवचाभिमतःक्रतुः ॥११
श्रीशुक उवाच—
इत्युद्धववचोराजन्सर्वतोभद्रमच्युतः।देवर्षिर्यदुवृद्धाश्चरामश्चप्रत्यपूजयन् ॥ १२
अथादिशत्प्रयाणायभगवान्देवकीसुतः।भृत्यान्दारुकजैत्रादीननुज्ञाप्यगुरून्विभुः॥
निर्गमय्यावरोधान्स्वान्ससुतान्सपरिच्छदान्। सङ्कर्षणमनुज्ञाप्ययदुराजंचशत्रुहन्॥
सूतोपनीतं स्वरथमारोहद्गरुडध्वजम् ॥ १४

रावणात् पित्रोश्च कंसग्रहात् मोक्षं मुनयो वयं यादवाश्च गायामः, नक्रादेः कुञ्जरादिभ्यो मोक्षणवत् राज्ञां जरासन्धात् विमोक्षणमपि त्वत्कर्मेति गायन्तीत्यर्थः, अत एवंभूतानां तासां कृपया त्वया तथैव कर्तव्यमिति भावः ॥ १० ॥

वी ॥ किञ्च—जरासन्धवधइति ॥ हे कृष्ण भूर्यर्थाय अनेकप्रयोजनाय कल्पते, ततश्चैद्यादयोऽपि सुखसाध्या भविष्यन्तीति भावः, ततश्च राजसूयार्थगमनेनैव सर्वं संपत्स्यत इत्यभिप्रयन्नाह—प्रायइत्यादि । कर्मविपाकेनेत्यस्य राज्ञामित्यादिः, विपच्यत इति विपाकः फलम्, प्रायशो जरासन्धनिरुद्धानां राज्ञां कर्मणः पुण्यस्य फलेन हेतुना क्रतुः राजसूयस्तव च, चशब्दाद्युधिष्ठिरस्याप्यभिमतः, अतस्तावत्तत्रैव गन्तव्यमिति भावः ॥ ११ ॥

मु॥ हे कृष्ण जरासन्धवधो भूर्यर्थायोपकल्पते,राज्ञां रक्षार्थमस्माकं शत्रुनिग्रहार्थं धर्मराजस्य क्रत्वर्थं च भवतीत्यर्थः, क्रतुश्च न केवलं धर्मराजस्यैव अभिमतसिद्धिहेतुः, अपितु भवतोऽपि शिशुपालवधप्रापकत्वात् भूभारसंहारबीजत्वाच्चेत्याह—प्राय इति । कालविपाकेन कालक्रमेण अभिमतः, 'पाकविपाकेन तव चेष्टार्थसाधकः'इति पाठान्तरे जरासन्धवध इति, भूर्यर्थाय ततः शिशुपालवधादयोऽपि सुखसाध्या भविष्यन्तीति भावः, एतच्च सर्वं भविष्यत्येवेति सम्भावयन्नाह—प्राय इति । पच्यत इति पाकः कर्म, तस्य विपाकः फलम्. तेन राज्ञां पुण्यविपाकेन जरासन्धादीनां पापविपाकेन, तेनायं क्रतुः तवाभिप्रेतः, तत्र गते त्वयि सर्वं भविष्यतीत्यर्थः ॥ ११ ॥

वी ॥ इतीति ॥ सर्वतः भद्रं शुभावहम् उद्धवस्य वचः श्रुत्वा अच्युतादयस्सर्वे प्रत्यपूजयन् अन्वमोदन्त ॥ १२ ॥

मु ॥ सर्वतोभद्रं सर्वजनस्यापि क्षेमावहम्, यदुवृद्धा इति—अनिरुद्धादयस्तथा न पूजयन्तीति सूचितम् ॥ १२ ॥

वी ॥अथेति॥ दारुकः जैत्र एवादिः (दारुकजैत्रावादी) येषां तान् भृत्यान् आदिशत् आज्ञापयामास, गुरून् वसुदेवादीन् प्रति अनुज्ञाप्य अनुज्ञां प्रार्थ्य निर्गमय्येत्युत्तरेण संबन्धः ॥ १३ ॥

मु ॥ अथ विभुः गुरून् वसुदेवादीन् अनुज्ञाप्य अनुज्ञां कारयित्वा दारुकजैत्रादीन् भृत्यान् प्रयाणाय प्रयाणसाधनान्यापादयितुम् आदिशत् नियुक्तवान् ॥ १३ ॥

वी ॥निर्गमय्येति॥ सुतैस्सहितान् परिच्छदैः परिकरैः सहितान् स्वान् अवरोधान् दारान् निर्गमय्य पुराद्बहिर्गमयित्वा हे शत्रुहन् सूतेन उपनीतम् आनीतं रथम् आरुरोह॥

१. कालविपाकेन मु-भा-प्र-पा ॥

ततो रथद्विपभटसादिनायकैः करालया परिवृत आत्मसेनया ।
मृदङ्गभेर्यानकशङ्खगोमुखैः प्रघोष[1]घोषिताःककुभो निराक्रमत् ॥ १५
[2]स्ववाजिकाञ्चनशिबिकाभिरच्युतं सहात्मजाः पतिमनुसुव्रता ययुः ।
वराम्बराभरणविलेपनस्रजस्सुसंवृता नृभिरसिचर्मपाणिभिः ॥ १६
नरोष्ट्रगोमहिषखराश्वतर्यनःकरेणुभिः परिजनवारयोषितः ।
स्वलङ्कृताःकटकुटिकम्बलाम्बराद्युपस्कराययुरधियुज्य सर्वशः ॥ १७

वी ॥ ततइति ॥ द्विपा गजाः भटाः पदातयः सादिनः अश्वारूढाः तेषां नायकैः करालया परभयंकरया स्वस्य सेनया परिवृतः मृदङ्गादिभिः वाद्यैः यः प्रघोषः तेन घोषिताः ककुभः कुर्वन्नित्यध्याहारः, निराक्रमत् निष्क्रान्तवान्, 'प्रघोषघोषी'इति पाठे दिशः प्रति मृदङ्गादिभिः यो घोषः तेन घोषयन् ॥ १५ ॥

मु ॥ हे शत्रुहन् स्वान् अवरोधान् स्वपत्नीगणान् निर्गमय्य प्रयाणं कारयित्वा सङ्कर्षणं यदुराजञ्च अनुज्ञाप्य ताभ्याम् अनुज्ञां गृहीत्वा रथम् आरुह्य च ततः स्वपुरात् निराक्रमत्, कथंभूतात्? मृदङ्गभेर्यानकशङ्खगोमुखैः हेतुभिः प्रकृष्टो महान् घोषः तेन घोषिताः ककुभः दिशो यस्मिन् तस्मात्, कथंभूतः? रथाः द्विपाः भटाः पदातयः सादिनः अश्वारोहाः, रथादीनां नायकाश्च तैः करालया भयङ्करया आत्मसेनया परिवृतः ॥ १४ ॥ १५ ॥

वी ॥ स्ववाजीति ॥ सुव्रताः पतिव्रताः वैदर्भ्यादयः पतिमच्युतं यान्तं स्वस्ववाजिकाञ्चनशिबिकादिभिः अनुययुः, कथंभूताः?, असिचर्मणी खड्गखेटौ पाण्योर्येषां तैर्नृभिः भृत्यैः संवृताः वराः श्रेष्ठाः अम्बरादयो यासां ताः ॥ १६ ॥

मु ॥ अच्युतं पतिं सुव्रताः पतिव्रताः पत्न्यश्च अनुययुः, कथम्? नृवाजिकाञ्चनशिबिकाभिः नरयानैः वाजिभिः अश्वैः काञ्चनशिबिकाभिश्च, कथंभूताः? सहात्मजाः आत्मजैस्सहिताः वराणि अम्बराणि आभरणानि विलेपनानि स्रजश्च यासां ताः असिचर्मपाणिभिः नृभिः सुसंवृताः सर्वतः परिवृताः ॥ १६ ॥

वी ॥ नरेति ॥ तथा परिजनयोषितः वारयोषितश्च कटकुट्यादयः उपस्कराः कुटीशिबिरादिसाधनभूताः यासां ताः,अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य नरादिभिर्यानैः ययुरिति संबन्धः, तत्र नरो नरवाह्यं यानम्, गर्दभ्यामश्वाज्जाता अश्वतरी, अनश्शकटम्, करेणुर्गजी, कटकुटयः उशीरादितृणनिर्मिताः गृहाः ॥ १७ ॥

मु ॥ परिजनाः दासजनाः वारयोषितश्च परिजनवारयोषितः, परिजनयोषितो वारयोषितश्चेति वा, सर्वशः संघशः नरा उष्ट्रा गावो बलीवर्दा महिषाः खराः अश्वतर्यः गर्दभ्यामश्वाज्जाताः अनांसि शकटानि करेणवः करिण्यश्च ताभिः नरोष्ट्रादिभिः यानैः ययुः, कथंभूताः? स्वलंकृताः कटकुटयः वेणुकेतक्युशीरादितृणमयैः कृताः गृहाः कम्बलाम्बरादयश्च उपस्कराः आढ्यादिरूपा यासां ताः, आदिपदेन नानाविधपात्रादिसाधनान्तरग्रहणम्, अधियुज्य बलीवर्दादिषु तानुपस्करान् दृढं सन्नह्य ॥ १७ ॥

१. घोषितककुभः. मु भा-प्र-पा; घोषाः ककुभः-पा ॥ २. नृ. मु-भा-प्र-पा ॥

बलं बृहद्ध्वजपटछत्रचामरैर्वरायुधाभरणकिरीटवर्मभिः ।
दिवांशुभिस्तुमुलरवं बभौ रवेर्यथाऽर्णवः क्षुभिततिमिङ्गिलोर्मिभिः ॥ १८

अथो मुनिर्यदुपतिना सभाजितः प्रणम्य तं हृदि [१]निरगाद्विहायसा ।
निशम्य तद्व्यवसितमाहृतार्हणो मुकुन्दसंदर्शननिर्वृतेन्द्रियः ॥ १९

राजदूतमुवाचेदं[२]भगवान्देवकीसुतः।माभैष्टदूतभद्रंवोघातयिष्यामिमागधम् ॥ २०

इत्युक्तः[३]प्रहितोदूतो यथावदवदन्नृपान्।तेऽपिसन्दर्शनंशौरेः[४]प्रत्यैक्षन्तमुमुक्षवः ॥

आनर्तसौवीरमरूंस्तीर्त्वाविनशनंहरिः । गिरीन्नदी[५]रतीयायपुरग्रामव्रजाकरान् ॥

ततो[६]वृषद्वतीं तीर्त्वा मुकुन्दोऽथ सरस्वतीम् ।

---

वी ॥ बलमिति॥ तद्बलं ध्वजादिभिः दिवा बभाविति संबन्धः, कथंभूतं? तुमुलो रवस्स्वनो यस्मिन् तत्, यथा रवेस्सूर्यस्यांशुभिः क्षुभितास्तिमिङ्गिलादयः तैर्ये महान्तः ऊर्मयस्तैरर्णवो भाति, तद्वत् ॥ १८ ॥

मु॥ रवेरंशुभिः तद्बलं दिवा बभौ, कथंभूतम्? तुमुलरवम् आकुलस्वनं नानावाद्यादिघोषयुक्तंच बृहत् अनेकसहस्रस्त्रीपुरुषहस्तिवाजिरथसेनापतिमयं ध्वजादिभिः वरायुधादिभिश्च सहितं बभाविति वा, क्षुभितैः तिमिङ्गिलैः ऊर्मिभिः अर्णवो यथा ॥

वी ॥ अथो इति ॥ यदुपतिना कृष्णेन सभाजितो बहुमतो मुनिर्नारदः तं हृदि प्रणम्य मनसा प्रणम्येत्यर्थः, तस्य कृष्णस्य व्यवसितं वचो निशम्य आहृतं समर्पितमर्हणं यस्य मुकुन्दस्य सन्दर्शनेन निर्वृतानि सुखितानीन्द्रियाणि यस्य सः विहायसा आकाशमार्गेण निरगात् ययौ ॥ १९ ॥

मु ॥ निर्गमनानन्तरं यदुपतिना सभाजितः स्वागताभ्युत्थानादिना पूजितः मुनिः तद्व्यवसितं तस्याभिप्रायं निशम्य तं प्रणम्य हृदि विदधत् मुकुन्दसन्दर्शननिर्वृतेन्द्रियः आहृतार्हणः यथाविधि कृतसत्कारश्च विहायसा वैहायसगत्या ययाविति शेषः ॥ १९ ॥

वी ॥ राजेति ॥ भगवान् राजदूतम् उवाच, उक्तिमेवाह —माभैष्टेति ॥ २० ॥

मु ॥ मा भैष्टेति बहुवचनं राजाभिप्रायेण ॥ २० ॥

वी ॥ इतीति ॥ प्रहितः प्रेषितः नृपान्प्रति यथावद्भगवदुक्तं सर्वमवदत् उवाच, तेऽपि नृपा अपि शौरेः दर्शनं प्रतीक्षितवन्तः, कथंभूताः ? मुमुक्षवः, मागधबन्धनादिति शेषः ॥ २१ ॥

मु ॥ प्रत्यैक्षन् प्रत्यैक्षिषत, यत् यस्मात् मुमुक्षवः ॥ २१ ॥

वी ॥ आनर्तेति ॥ आनर्तादयो मार्गस्थाः देशाः, तान् तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रम् अतीयाय अतिचक्राम ॥ २२ ॥

मु ॥ आनर्तादयो मार्गदेशाः, तीर्त्वा अतिक्रम्य विनशनं कुरुक्षेत्रम्, अतिययौ अतिक्रम्य ययौ, पुराणि क्षत्रभूयिष्ठानि, ग्रामाः ब्राह्मणभूयिष्ठाः ॥ २२ ॥

वी॥वृषद्वतीं नदीं तथा सरस्वतीं च तीर्त्वा मत्स्यांश्च देशानतिक्रम्य शक्रप्रस्थमिन्द्रप्रस्थम् उप समीपं जगाम, तत्र पुरं प्राकारयुक्तम्, ग्रामः तद्रहितः, व्रजः आभीराणामावा-

---

१. विदधद्धि. मु-भा-प्र-पा॥ २. भगवान् प्रीणयन्गिरा. पा॥ ३ प्रस्थितो. पा ॥
४. प्रत्यैक्षन्यन्मुमुक्षवः. मु-भा-प्र-पा॥ ५. अतिययौ. मु-भा-प्र-पा॥ ६. दृषद्वतीं. पा ॥

पञ्चालानथ मत्स्यांश्च शक्रप्रस्थमुपागमत् ॥ २३

तमुपागतमाकर्ण्यप्रीतोदुर्दशनंनृणाम्।अजातशत्रुर्निरगात्सोपाध्यायस्सुहृद्वृतः॥ २४

गीतवादित्रघोषेणब्रह्मघोषेणभूयसा। अभ्यगात्सहृषीकेशंप्राणः[1]प्राणमिवागतम् ॥

दृष्ट्वाविक्लिन्नहृदयः[2]कृष्णस्नेहेनपाण्डवः।चिराद्दृष्टंप्रियतमंसस्वजे[3]सपुनःपुनः॥ २६

दोर्भ्यां परिष्वज्य रमामलालयं मुकुन्दगात्रं नृपतिर्हताशुभः ।

लेभे परां निर्वृतिमश्रुलोचनो हृष्यत्तनुर्विस्मृतलोकविभ्रमः ॥ २७

तं मातुलेयं परिरभ्य निर्वृतो भीमस्स्मयन्प्रेमजलाकुलेन्द्रियः ।

यमौ किरीटी च सुहृत्तमं मुदा प्रवृद्धबाष्पाः परिरेभिरेऽच्युतम् ॥ २८

---

सः, आकरः खनिः, मत्स्यांश्चेत्यनन्तरमनुषक्तस्य तीर्त्वेत्यस्यातिक्रम्येत्यर्थः, योग्यत्वात्॥

मु ॥ शक्रप्रस्थम् इन्द्रप्रस्थम् ॥ २३ ॥

वी॥ तमिति॥ नृणां दुर्लभं दर्शनं यस्य तं कृष्णमागतं श्रुत्वा अजातशत्रुः युधिष्ठिरः निरगात्, पुरादिति शेषः ॥ २४ ॥

मु ॥ तत्प्रवेशकर्माह—अजातेति नवभिः॥ (द्वितीयो द्विपात् यदा इन्द्रप्रस्थमुपागमत् तदा ससभूः भ्रातृभिस्समेतः) सोपाध्यायः सुहृद्भिः कौरवादिभिः वृतश्च अजातशत्रुः भूयसा गीतवादित्रघोषेण ब्रह्मघोषेण च सह पुरात् निरगात् ॥ २४ ॥

वी ॥ गीतेति ॥ वादित्राणि वाद्यानि तेषां घोषेण ब्रह्मघोषेण वेदघोषेणच स युधिष्ठिरः कृष्णमभ्यगात् अभिमुखं जगाम, प्राणः इन्द्रियगणः आगतं प्राणं पञ्चवृत्तिप्राणमिवेत्याभिमुख्ये दृष्टान्तः ॥ २५ ॥

वी॥ दृष्ट्वेति ॥ कृष्णे यः स्नेहः तेन विक्लिन्नम् आर्द्रं हृदयं यस्य सः पाण्डवः युधिष्ठिरः सस्वजे आलिङ्गितवान् ॥ २६ ॥

मु ॥ निर्गम्यच हृषीकेशम् अभ्यगात्, प्राणः इन्द्रियगणः प्राणं पञ्चवृत्तिम्, यद्वा प्राणो जीवः प्राणं परमात्मानमिव प्रियतमं कृष्णं दृष्ट्वा स्नेहेन स्नेहरसेन विक्लिन्नहृदयः पाण्डवः चिरात् दृष्टं महता कालेन दृष्टं तं पुनःपुनः सस्वजे परिरेभे॥२५॥२६॥

वी ॥ दोर्भ्यामिति ॥ रमाया अमलं निर्दोषम् आलयं मुकुन्दस्य गात्रं भुजाभ्यामालिङ्ग्य हतमशुभं यस्य सः परां निर्वृतिमानन्दं प्राप, तदेव वक्तुं विशिनष्टि—अश्रूण्यानन्दजानि लोचनयोर्यस्य हृष्यन्त्युदञ्चितलोमा तनुर्यस्य विस्मृतः लोकविभ्रमो लोकव्यवहारो येन सः ॥ २७ ॥

मु॥ रमाया अमलं निर्दोषम् आलयं मुकुन्दगात्रं दोर्भ्यां परिष्वज्य हताशुभस्सन् परां निर्वृतिं लेभे, अतएव अश्रुपूर्णे लोचने यस्य सः हृष्यत्तनुः पुलकितगात्रः विस्मृतो लोकविभ्रमो लोकव्यवहारो येन सः ॥ २७ ॥

वी ॥ तमिति ॥ मातुलस्यापत्यं कृष्णं परिरभ्य प्रेमजलैः आनन्दाश्रुभिराकुले व्याप्ते पिहिते इन्द्रिये लोचने यस्य सः बभूवेति शेषः, यमौ नकुलसहदेवौ किरीटी अर्जुनश्च मुदा हर्षेण प्रवृद्धानि बाष्पाणि आनन्दाश्रूणि येषां ते परिरेभिरे परिष्वक्तवन्तः ॥ २८ ॥

मु ॥ प्रेमजलाकुलेन्द्रियः आनन्दाश्रुपिहिताक्षः ॥ २८ ॥

---

१. प्राणमिवाहृतः.पा॥ २. कृष्णं. मु-भा-प्र-पा॥ ३.ऽथ.पा॥ ( ) कुण्डलितग्रन्थस्य मूलं नोपलभ्यते॥

युधिष्ठिरस्य भीमस्य कृत्वा पादाभिवन्दनम् ।
अर्जुनेन परिष्वक्तोयमाभ्यां चाभिवादितः ॥ २९
ब्राह्मणेभ्योनमस्कृत्यवृद्धेभ्यश्चयथार्हतः। मानितोमानयामासकुरुसृञ्जयकेकयान्॥
सूतमागधगन्धर्वावन्दिनश्चोपमन्त्रिणः।मृदङ्गशङ्खपटहवीणापणव[1]वेणुभिः ॥ ३१
ब्राह्मणाश्चारविन्दाक्षंतुष्टुवुर्ननृतुर्जगुः । एवंसुहृद्भिःपर्यस्तःपुण्यश्लोकशिखामणिः॥
संस्तूयमानो भगवान्विवेशालङ्कृतं पुरम् ॥ ३२
संसिक्तवर्त्म करिणां मदगन्धतोयैश्चित्रध्वजैः कनकतोरणपूर्णकुम्भैः ।
मृष्टात्मभिर्नवदुकूलविभूषणस्रग्गन्धैर्नृभिर्युवतिभिश्च विराजमानम् ॥ ३३
उद्दीप्तदीपबलिभिः प्रतिसद्म जालनिर्यातधूपरुचिरं विलसत्पताकम् ।

---

वी॥ अर्जुनेन केवलं परिष्वक्त एव समवयस्कत्वात् यमाभ्यां तु अभिवादितश्च भगवान्ब्राह्मणेभ्यो वयोवृद्धेभ्यो युधिष्ठिरादिभ्यः यथायोग्यं नमस्कृत्य स्वयं च तैः बहुमतः कुर्वादीन्बहुमन्यत ॥ २९ ॥ ३० ॥

मु॥ अथ कृष्णस्य वयआद्यनुरूपं चेष्टितमाह—अर्जुनेनेति॥ ब्राह्मणेभ्यः वृद्धेभ्यश्च यथार्हतो नमस्कृत्य तैर्मानितः अशीर्भिर्मानितः कृष्णः अर्जुनेन समत्वात्परिष्वक्तः यमाभ्यामभिवादितश्च कुरुप्रभृतीन् मानयामास, 'यथार्हतः' इति अत्राप्यनुसंधेयम् ॥

वी॥ सूतेति॥ सूतादयो ब्राह्मणाश्च मृदङ्गादिभिः तुष्टुवुः, ननृतुः,जगुश्च.तत्र सूताः मागधाः ब्राह्मणाः उपमन्त्रिणश्च तुष्टुवुः, इतरे ननृतुर्जगुश्च, उपमन्त्रिणः परिहासकाः, एवमिति—पर्यस्तः परिवृत्तः पुण्यश्लोकश्रेष्ठः पुरम् इन्द्रप्रस्थं विवेश ॥ ३१ ॥ ३२॥

मु॥ सूताः पौराणिकाः, मागधा वंशशंसिनः. गन्धर्वा गायकाः, वन्दिनः स्तावकाः, उपमन्त्रिणः परिहासकाः,एते ब्राह्मणाश्च अरविन्दाक्षं मृदङ्गादिस्वनैः सह तुष्टुवुः ननृतुः जगुश्च, पर्यस्तः परितो वृतः ॥ ३१ ॥ ३२ ॥

वी॥तद्विशिनष्टि—संसिक्तवर्त्मेति द्वयेन॥करिणां मदगन्धजलैः संसिक्तानि वर्त्मानि पुरवीथयो यस्मिन् तत् कनकतोरणैः पूर्णकुम्भैश्च मृष्टः स्नापितः आत्मा शरीरं यैः नवाः दुकूलादयो येषां तैः नृभिः पुम्भिः तथाभूताभिर्युवतिभिः स्त्रीभिश्च विराजमानम्॥

मु॥पुरं वर्णयति—संसिक्तेति द्वाभ्याम्॥सः कुरुराजस्य धाम पुरं ददर्श,कथंभूतम्? करिणां मदगन्धतोयैः मदजलैः गन्धतोयैश्च संसिक्तानि वर्त्मानि मार्गा यस्मिन् तत् चित्रध्वजैः कनकतोरणैः पूर्णकुम्भैः नृभिः युवतिभिश्च विराजमानम्, कथंभूतैः? मृष्टात्मभिः संशोधिताकारैः नवानि दुकूलानि विभूषणानि स्रजो गन्धाश्च येषां तैः ॥३३॥

वी ॥ किंच—उद्दीप्तेति ॥ प्रतिगृहमुद्दीप्तैः दीपैः बलिभिः पुष्पादिभिश्च जुष्टं जालभ्यो गवाक्षेभ्यो निर्यातैः धूपैः रुचिरं विलसन्त्यः पताकाः यस्मिन् तत् मूर्धन्याः मूर्धनि भवास्ते हेमकलशाः येषां तैः रजतमयानि उरूणि स्थूलानि शृङ्गाणि कलधौतस्तम्भभूमिकाः येषां तैश्च गृहैः जुष्टम् एवंभूतं कुरुराजधाम इन्द्रप्रस्थपुरं ददर्श ॥ ३४ ॥

---

१. गोमुखैः. पा ॥

मूर्धन्यहेमकलशैरजतोरुशृङ्गैर्जुष्टं ददर्श भवनैः कुरुराजधाम ॥ ३४

प्राप्तं निशम्य नरलोचनपानपात्रमौत्सुक्यविश्लथितकेशदुकूलबन्धाः।
सद्यो विसृज्य गृहकर्म पतींश्च तल्पे द्रष्टुं ययुर्युवतय[१]श्च नरेन्द्र[२]मार्गम्॥३५

तस्मिन्सुसङ्कुल इभाश्वरथद्विपद्भिः कृष्णं सभार्यमुपलभ्य गृहाधिरूढाः।
नार्यो विकीर्य कुसुमैर्मनसोपगुह्य सुस्वागतं विदधुरुत्स्मयवीक्षितेन ॥ ३६

ऊचुः स्त्रियः पथि निरीक्ष्य मुकुन्दपत्नीस्तारा यथोडुपसहाः किमकार्यमूभिः
यच्चक्षुषां पुरुषमौलिरुदारहासलीलावलोककलयोत्सवमातनोति ॥ ३७

---

मु॥ प्रतिसद्म उद्दीप्तैः दीपैः बलिभिः पुष्पादिप्रकारैः सह विलसन्त्यः पताका यस्मिन् जालेन गवाक्षमार्गेण निर्यातैः भवनात् बहिः प्रसृतैः धूपैः रुचिरं भवनैः प्रासादैः जुष्टम्, कथंभूतैः? मूर्धन्यहेमकलशैः मूर्ध्नि स्थितैः हेमकुम्भैः रजतमयानि उरूणि च शृङ्गाणि येषां तैः. पाठान्तरे रजतमयानि उरूणि स्थूलानि रूपाणि कलशाधस्तनभूमिका येषां तैः भवनैः जुष्टम् ॥ ३४ ॥

वी॥ प्राप्तमिति॥ नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयं किंपुनर्नारीणामित्यर्थः, तं कृष्णं प्राप्तमागतं श्रुत्वा युवतयः पौरस्त्रियः सद्य एव गृहव्यापारं तल्पे पर्यङ्के पतींश्च विसृज्य औत्सुक्याद्विश्लथिताः केशानां दुकूलानां च बन्धाः ग्रन्थयो यासां ताः द्रष्टुं नरेन्द्रमार्गं राजवीथीं ययुः ॥ ३५ ॥

मु॥ पुरस्त्रीणां तत्सत्कारमाह—प्राप्तमिति त्रिभिः॥ युवतयः नराणां लोचनानि तेषां पानस्य सादरवीक्षणस्य पात्रं विषयः, किं पुनर्नारीणामित्यर्थः, नरेन्द्रमार्गे कृष्णं प्राप्तं निशम्य सद्यो गृहकर्म तल्पं पतिं च विसृज्य तं द्रष्टुं ययुः स्म, कथंभूताः? औत्सुक्येन संभ्रमेण विश्लथिताः श्लथीभूताः केशानां दुकूलानां च बन्धाः यासां ताः॥ ३५ ॥

वी॥ तस्मिन्निति॥ गृहेषु प्रासादेष्वधिरूढाः युवतयः इभादिभिश्चतुर्भिः सेनाङ्गैः सुसङ्कुले सङ्कीर्णे तस्मिन्नरेन्द्रमार्गे सभार्यं श्रीकृष्णम् उपलभ्य दृष्ट्वा कुसुमैर्विकीर्य मनसा उपगुह्यालिङ्ग्य स्मययुक्तवीक्षितेनैव सुस्वागतं स्वागतप्रश्नं विदधुश्चक्रुः तासामुत्स्मयवीक्षितं स्वागतप्रश्नं विदधदिवासेत्यर्थः ॥ ३६ ॥

मु ॥ इभाश्वरथद्विपद्भिः सुसंकुले तस्मिन् राजमार्गे सभार्यं कृष्णम् उपलभ्य गृहाधिरूढा नार्यः कुसुमैः विकीर्य मनसा उपगुह्य उत्स्मयवीक्षितेन स्मितसहितेन वीक्षितेन सुस्वागतं शोभनं स्वागतवचनं विदधुः ॥ ३६॥

वी॥ऊचुरिति॥उडुपेन चन्द्रेण सहितास्तारा इव स्थिताः कृष्णपत्नीः पथि निरीक्ष्य स्त्रियः प्रोचुः, उक्तिमेवाह—किमित्यादिना । अमूभिः कृष्णपत्नीभिः किमकारि किं सुकृतमाचरितम्, तत्र हेतुत्वेन विशिंषन्ति—यदासां चक्षुषां पुरुषमौलिः पुरुषोत्तमः उदारो गम्भीरो यो हासस्तद्युक्तो लीलया अवलोकस्तस्य कलया लेशेनैव सुखं वितनोति, तथाभूताभिरमूभिरिति संबन्धः ॥ ३७ ॥

मु॥ उडुपसहाः उडुपसहिताः तारा यथा गगनमार्गे, तथा पथि राजमार्गे मुकु-

---

१. स्म. मु-भा-प्र-पा ॥ २. मार्गे. मु-भा-प्र-पा ॥

तत्रतत्रोपसङ्गम्य पौरामङ्गलपाणयः।चक्रुस्सपर्यांकृष्णायश्रेणिमुख्याहतैनसः॥ ३८
अन्तःपुरजनैःप्रीत्या मुकुन्दःफुल्ललोचनैः।ससंभ्रमैरभ्युपेतःप्राविशद्राजमन्दिरम् ॥
पृथाविलोक्यभ्रात्रेयंकृष्णंत्रिभुवनेश्वरम्।प्रीतात्मोत्थायपर्यङ्कात्सस्नुषापरिषस्वजे।
गोविन्दंगृहमानीयदेवदेवेशमादृतः।पूजायांनाविदत्कृत्यंप्रमोदोपहतोनृपः ॥ ४१

पितृष्वसुर्गुरुस्त्रीणांकृष्णश्चक्रेऽभिवादनम् ।
स्वयंच-कृष्णया राजन्भगिन्या चाभिवादितः ॥ ४२
श्वश्वासंचोदिता कृष्णा कृष्णपत्नीश्च सर्वशः ।

---

न्दपत्नीः मुकुन्देन सहिताः तस्य पत्नीः निरीक्ष्य ताः स्त्रियः परस्परमूचुः, कथम् अमूभिः किं सुकृतम् अकारि ? यच्चक्षुषां यासां चक्षुषां पुरुषमौलिः पुरुषोत्तमो लीला? सहितया अवलोककलया कटाक्षवीक्षणेन सुखमातनोतीति ॥ ३७ ॥

वी ॥ तत्रतत्रेति ॥ उपसङ्गम्य समीपमागत्य पौराः श्रेणयः एकशिल्पोपजीविनां सङ्घाः तेषु मुख्याश्च मङ्गलानि गन्धपुष्पताम्बूलादिशुभद्रव्याणि पाण्योर्येषां ते कृष्णाय पूजां चक्रुः, अतो हतं निरस्तमेनः पापं येषां तथाभूताः बभूवुरिति शेषः ॥ ३८ ॥

मु ॥ पौराणां सत्कारमाह—तत्रेति ॥ मङ्गलद्रव्याणि पाण्योः येषां ते श्रेणयः एकशिल्पोपजीविनां संघाः तेषु मुख्याश्च कृष्णाय सपर्यां चक्रुः,अत एव हतैनसश्च अभूवन्॥

वी ॥अन्तरिति॥ संभ्रमेण सहितैः अतएव फुल्ले विकसिते लोचने येषां तैः अन्तःपुरजनैः अभ्युपेतः अभिसङ्गतः राजमन्दिरं प्रविवेश ॥ ३९ ॥

मु॥ तस्य राजभवनप्रवेशमाह—अन्तःपुरेति॥अभ्युपेतः अभिगमनेन सत्कृतः॥३९॥

वी॥ पृथेति ॥ पृथा कुन्ती भ्रात्रेयं भ्रातृपुत्रं श्रीकृष्णमवलोक्य प्रीतः आत्मा मनो यस्यास्सा पर्यङ्कादुत्थाय स्नुषया द्रौपद्या सह परिषस्वजे आलिङ्गितवती ॥ ४० ॥

मु ॥ द्रौपदीसुभद्रासहितायाः कुन्त्याः कृष्णसत्कारमाह—पृथेति ॥ प्रीत आत्मा मनो यस्याः सा स्नुषाभ्यां सहिता ॥ ४० ॥

वी ॥ गोविन्दमिति ॥ देवानां देवो ब्रह्मा तस्यापीशं गोविन्दं गृहं प्रत्यानीय नृपो युधिष्ठिरः प्रमोदेनोपहतः अभिभूतः परवश इति यावत्, पूजायां कृत्यं क्रमविशेषं नाविदत् ॥ ४१ ॥

मु ॥ आदृतः सादरः पूजायां कृत्यं प्रकारविशेषं नाविदत्, तत्र हेतुः—प्रमोदेन उपहतोऽभिभूतः ॥ ४१ ॥

वी ॥ पितृष्वसुरिति॥ श्रीकृष्णो भगवान् पितृष्वसुः पृथायाः गुरुस्त्रीणां पूज्यस्त्रीणां चाभिवादनं चक्रे, स्वयं कृष्णया द्रौपद्या भगिन्या सुभद्रया चाभिवादितश्च ॥ ४२ ॥

मु॥कृष्णस्य प्रतिसत्कारमाह—पितृष्वसुः गुरुस्त्रीणांच,कृष्णया द्रौपद्या भगिन्या सुभद्रया स्वयमभिवादितश्च ॥ ४२ ॥

वी ॥ श्वश्वेति ॥ श्वश्वा श्वशुरस्य स्त्रिया पृथया संचोदिता कृष्णा द्रौपदी कृष्ण-

आनर्च रुक्मिणीं सत्यां भद्रां जाम्बवतीं तथा॥ ४३
कालिन्दीं मित्रविन्दांच शैब्यां नाग्नजितीं सतीम् ।
अन्याश्चाभ्यागता यास्ता वासस्स्रङ्मण्डनादिभिः ॥ ४४
सुखं निवासयामास धर्मराजो जनार्दनम् ।
ससैन्यं सानुगामात्यं सभार्यं च नवंनवम् ॥ ४५
तर्पयित्वाखाण्डवेनवह्निंफल्गुनसंयुतः।मोचयित्वामयंयेनराज्ञेदिव्यासभाऽऽहृता॥
उवासकतिचिन्मासात्राज्ञःप्रियचिकीर्षया।विहरन्रथमारुह्यफल्गुनेन[१]रथैर्वृतः॥४७
इति श्रीभागवते महापुराणे दशमस्कन्धे एकसप्ततितमोऽध्यायः ॥७१॥

---

स्य पत्नीः सर्वप्रकारैः आनर्च पूजितवती, कृष्णपत्नीरेव निर्दिशति—रुक्मिणीमित्यादिना। शैब्यां लक्ष्मणाम्, अन्याश्चेति । एता अन्याश्चागताः स्त्रियः वस्त्रादिभिरानर्चेति संबन्धः, मण्डनमलङ्कारः ॥ ४३ ॥ ४४ ॥

मु ॥ द्रौपद्याः कृष्णपत्नीसत्कारमाह—द्वाभ्याम्। श्वश्र्वा पृथया संचोदिता कृष्णा द्रौपदी वासस्स्रगादिभिः कृष्णपत्नीः आनर्च अर्चितवती, ता एवाह—रुक्मिणीमिति। सत्यां सत्यभामाम् , अन्याश्च याः कृष्णपत्न्योऽभ्यागताः, ता अपि ॥ ४३ ॥ ४४ ॥

वी ॥ सुखमिति ॥ प्रत्यहं नवंनवं यथा भवति तथा सुखं निवासयामास ॥ ४५ ॥

मु ॥ प्रत्यहं नवंनवं यथा भवति तथा सुखं निवासयामास ॥ ४५ ॥

वी ॥ कथंभूतं?यः प्रेम्णा नित्यं फल्गुनेन अर्जुनेन संयुतः,अत एव तस्य साहाय्येन खाण्डवेनाग्निं प्रीणयित्वा तत्र मयं मोचयित्वा तं मयं प्रयुज्य राज्ञे युधिष्ठिराय दिव्या सभा आहृता आनीता येन, तथाभूतं जनार्दनमिति संबन्धः ॥ ४६ ॥

मु॥ यः फल्गुनेन संयुतः तस्य सारथिः, येन च अतएव खाण्डवेन वह्निं तर्पयित्वा ततो मयं मोचयित्वा राज्ञे दिव्या सभा आहृता उपहृता ॥ ४६ ॥

वी ॥ उवासेति ॥ मासानित्यत्यन्तसंयोगे द्वितीया, राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छया फल्गुनेन सह रथमारुह्य रथैः परिवृतो विहरन्कतिचिन्मासानुवास उषितवान् ॥ ४७ ॥

मु ॥ स फल्गुनेन सह रथम् आरुह्य भटैर्वृतो विहरन् कतिचिन्मासान् राज्ञः प्रियचिकीर्षया उवास ॥ ४७ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

१. भटैः. मु. भा. प्र. पा ॥

(दिग्विजय जरासन्धवधादिघट्टः)

श्रीशुकउवाच—

एकदातुसभामध्यआस्थितोमुनिभिर्वृतः।ब्राह्मणैःक्षत्रियैर्वैश्यैर्भ्रातृभिश्चयुधिष्ठिरः॥

आचार्यैःकुलवृद्धैश्चज्ञातिसंबन्धबान्धवैः।शृण्वतामेवचैतेषामाभाष्येदमुवाचह ॥ २

युधिष्ठिर उवाच—

क्रतुराजेनगोविन्दराजसूयेनपावनीः।यक्ष्येविभूतीर्भवतस्तत्संपादयनःप्रभो ॥ ३

त्वत्पादुके अविरतं परि ये चरन्ति ध्यायन्त्यभद्र[१]शमने सुधियो गृणन्ति।
विन्दन्ति ते कमलनाभ भवापवर्गमाशासते यदि त आशिष ईश नान्ये॥४

---

वी ॥ अथ जरासन्धवधात्मकं भगवतश्चेष्टितं वक्तुं प्रस्तौति —एकदेति ॥ तृतीयान्तानां वृत इत्यनेनान्वयः, एतेषां मुनिप्रभृतीनां शृण्वतां सतामेवाभाष्य संबोध्य कृष्णमिति शेषः, इदं वक्ष्यमाणमुवाच ॥ १ ॥ २ ॥

मु ॥ एकदा भ्रातृभिः ब्राह्मणादिभिश्च वृतः सभामध्ये आस्थितः आसनमिति शेषः ॥ १ ॥

मु ॥ शृण्वतामेवेति ॥ यत् कृष्णः करोति न तत् अन्यः कश्चिदपि कर्तुं समर्थ इति निश्चित्य सर्वानेव तान् अनादृत्य कृष्णमुवाचेत्यर्थः, आभाष्य कृष्ण भक्तवत्सलेत्येवं संबोध्य ॥ २ ॥

वी ॥ तदेवाह—क्रतुराजेनेत्यादिना॥पावनीस्तव विभूतीर्विभूतिभूतान्देवान् यक्ष्ये आराधयिष्यामि, तत् मदभिप्रेतं यजनं नोऽस्माकं संपादय निर्वर्तय ॥ ३ ॥

मु ॥ भवतो विभूतीः नियाम्यान् शेषभूतांश्च देवान् क्रतुराजेन राजसूयेन यक्ष्ये यष्टुकामोऽस्मि, तत्र यत् संपादनीयं तत् नः संपादय ॥ ३ ॥

वी ॥ नन्वयं चक्रवर्तिनां मनोरथः कथं त्वया क्रियत इत्यत आह—त्वत्पादुके इति ॥ अभद्रं शमयतीति तथा ते तव पादुके ये जनाः परिचरन्ति देहेन, ध्यायन्ति मनसा, गृणन्ति वाचा, ते शुचयः परिशुद्धान्तःकरणाः भवस्यापवर्गं नाशं मोक्षमिति यावत्, विन्दन्ति, हे ईश हे कमलनाभ ते यद्याशिषः कामानाशंसते, तर्हि ता अपि विन्दन्ति, अन्ये परिचर्यादिरहिताश्चक्रवर्तिनोऽपि न विन्दन्तीत्यर्थः, अतो भक्तपक्षपातिनस्तव चरणारविन्दं समाश्रितानां नस्सर्वमनोरथपूर्तिस्सुकरैवेति भावः ॥ ४ ॥

मु॥एष चक्रवर्तिनां मनोरथःकथं क्रियत इतिचेदत आह—त्वत्पादुके इति॥ 'परि ये चरन्ति' इति यच्छब्दव्यवधानमार्षम्, ये परिचरन्ति देहेन, ध्यायन्ति मनसा, अभद्रस्य नशने नाशिके गृणन्ति वचसा, ते भवापवर्गं मोक्षं विन्दन्ति, यद्याशासते तर्ह्याशिषोऽपि तएव विन्दन्ति, नान्ये चक्रवर्तिनोऽपि, यद्वा आशिषो नाशासते यदि अपवर्गं विन्दन्ति, अन्ये अपवर्गाद्बहिर्भूताः केवलमाशिषो विन्दन्तीति ॥ ४ ॥

---

१. नशने. सु-भा-प्र-पा ॥

तद्देवदेव भवतश्चरणारविन्दसेवानुभावमिह पश्यतु लोक एषः ।
ये त्वां भजन्ति नभजन्त्युत चोभयेषां निष्ठां प्रदर्शयविभोकुरुसृञ्जयानाम्॥
न ब्रह्मणस्स्वपरभेदमतिस्तव स्यात्सर्वात्मनस्समदृशस्स्वसुखानुभूतेः ।
संसेवतां सुरतरोरिव ते प्रसादस्सेवानुरूपमुदयो न विपर्ययोऽत्र ॥ ६

---

वी ॥ एतदेव निदर्शयेत्याह—तदिति॥ तत्तस्मात् देवानामपि देव एष लोकस्तव भवतः चरणारविन्दसेवाप्रभावं पश्यतु, भवतश्चरणारविन्दसेवाप्रभावं दृष्ट्वा त्वत्पादुके इत्यादिनोक्तमर्थं निश्चिनोत्वित्यर्थः,तन्निश्चेतुं भक्तानामभक्तानां च स्थितिं लोकस्य दर्शयेत्याह—ये इति । कुरूणां सृञ्जयानां च मध्ये ये अस्मदादयस्त्वां भजन्ति, उत वा ये वा दुर्योधनादयः त्वां न भजन्ति, तेषामुभयेषां निष्ठां स्थितिं प्रदर्शय अभ्युदयतदभावौ दर्शयेत्यर्थः ॥ ५ ॥

मु ॥ भगवतो भक्तपक्षपातमवधारयन्नाह—तत् तस्मात् इह राजसूये भवतः चरणारविन्दसेवायाः अनुभावम् एष लोकः पश्यतु साक्षात्करोतु, एवं निश्चितेऽपि ये कर्मादिप्रधानाः केचित् कुरुसृञ्जयादयः तव भक्तिं न बहुमत्यन्ते, तेषां मोहनिवृत्तये त्वां ये भजन्ति नभजन्ति वा, तेषामुभयेषां निष्ठाम् अभिमतफलप्राप्तिं प्रदर्शय ॥ ५ ॥

वी ॥ ननु वैषम्यनैर्घृण्यादिरहितं मां किमिति विषमकृत्ये चोदयसीत्यत आह—नेति ॥ ब्रह्मणः हेयप्रत्यनीककल्याणगुणगणपरिपूर्णस्य तव स्वः पर इति च भेदमतिः न स्यात् यद्यपि नास्त्येव, तत्र हेतुत्वेन विशिनष्टि—सर्वात्मनः सर्वेषामन्तरात्मनः स्वशरीरेष्वेव केषुचिदवयवेषु स्वीयमतिः केषुचित्परकीयमतिर्न दृष्टेति भावः, अत एव समदृशः समा दृक् स्वशरीरेषु सर्वेष्वात्मीयत्वबुद्धिर्यस्य तस्य किंच वैषम्यनिमित्तं रागद्वेषादिकं तदपि तव नास्तीत्यभिप्रयन्विशिनष्टि—स्वसुखानुभूतेरिति । स्वसुखस्य स्वासाधारणापरिच्छिन्नानन्दस्यानुभूतिः अनुभवो यस्य तस्य केवलं स्वानन्दजुषो न तु रागादिजुष इत्यर्थः, तथापि संसेवमानानामेव विषयभूतानां तव प्रसादोऽनुग्रहः, तत्रापि सेवानुरूपमेव उदयः फलं यथा, सुरतरोः कल्पद्रुमस्य संसेवमानेष्वेव फलप्रदत्वं, नह्येतावतात्र कल्पतरौ विपर्ययो वैषम्यमस्ति, तद्वत् ॥ ६ ॥

मु ॥ यद्यपि भवतो न वैषम्यं, तथापि त्वत्सेवावैभवेन केषाञ्चिदुदयः केषाञ्चिन्नास्तीत्याह—नेति ॥ स्वः पर इति भेदविषया मतिः तव न स्यात्, कुतः ? सर्वात्मनः सर्वान्तर्यामिणः, कुतः ? ब्रह्मणः, कुतः ? समदृशः त्रिविधचिदचिच्छरीरकत्वेन सर्वमपि वस्तुजातं समं पश्यतः, किञ्च स्वसुखानुभूतेः स्वस्य सुखरूपा अनुकूल ज्ञानरूपा अनुभूतिर्यस्य तस्य स्वस्यानन्दरूपज्ञानं यस्येति वा. अतो न वैषम्यमस्तीति भावः, तथापि संसेवतां सुरतरोरिव ते तव प्रसादः स्यात्, अतः सेवानुरूपमुदय इत्यत्र न विपर्ययः नान्यथाभावः, यथा कल्पद्रुमस्य वैषम्याभावेऽपि सेवकेष्वेव फलजनकत्वम् नान्येषु, तथा तवापीति, तावता स्वपरभेदमतिस्त्व न स्यात् सर्वसुहृत्त्वादित्यर्थः, भक्तानामेवापवर्गो नान्येषामिति भावः ॥ ६ ॥

श्रीभगवानुवाच—
सम्यग्व्यवसितंराजन्भवताशत्रुकर्शन।कल्याणीयेनतेकीर्तिः[1]लोकाननुचरिष्यति॥७
ऋषीणांपितृदेवानांसुहृदामपिनःप्रभो।सर्वेषामपिभूतानामीप्सितःक्रतुराडयम्॥ ८
[2]निर्जित्यनृपतीन्सर्वान्कृत्वाचजगतींवशे।संभृत्यसर्वसंभारानाहरस्व महाक्रतुम्॥ ९
एते तेभ्रातरोराजल्लोकपालांशसंभवाः।
जितोऽस्म्यात्मवता तेऽहंदुर्जयोयोऽकृतात्मभिः॥ १०

वी॥ एवमुक्तस्तद्वचोऽनुमोदमानः प्राह श्रीभगवान्—सम्यगिति पञ्चभिः॥ हे राजन् हे शत्रुकर्शन सम्यग्व्यवसितं निश्चितम्, कुतः? एवं व्यवसितविधानेन कल्याणी तव कीर्तिः लोकाननुचरिष्यति व्याप्ता भविष्यतीत्यर्थः॥ ७॥

मु॥ एवमुक्तो भगवांस्तदनुमोदमान आह—सम्यगिति॥ शत्रुकर्शनेति सम्बुद्ध्या सर्वराजन्यजयशक्तिं सम्पादयति, येन व्यवसितेन, अनुभविष्यति सर्वलोकव्याप्ता भविष्यतीत्यर्थः॥ ७॥

वी॥ ऋषीणामिति॥ पितृणां देवानां च सुहृदां नोऽस्माकं किं बहुना सर्वेषामपि भूतानामयं क्रतुश्रेष्ठ ईप्सितः इष्टः॥ ८॥

मु॥ स्वविभूतीरेवाविष्कुर्वन् तत्प्रीतिहेतुत्वेन क्रतुं प्रशंसति—ऋषीणामिति॥ हे प्रभो अयं क्रतुराट् क्रतुवरः ऋषीणां पितॄणां देवतानां च सुहृदां नः अस्माकमपि ईप्सितो भवति॥ ८॥

वी॥ निर्जित्येति॥ जगतीं सर्वां पृथ्वीं वशे कृत्वा स्वाधीनां कृत्वेत्यर्थः, सर्वान्सम्भारान् यागार्थपदार्थान् संभृत्य संपाद्य महाक्रतुं राजसूयम् आहरस्व अनुतिष्ठस्वेत्यर्थः॥

मु॥ एवं राजानं क्रतुंच प्रशस्य तदुपायमाह—विजित्येति॥ जगतीं सर्वां पृथ्वीं सर्वसम्भारान् यज्ञोपस्करान् सम्भृत्य सम्पाद्य आहरस्व आहर अनुतिष्ठेत्यर्थः॥ ९॥

वी॥कथमहं जेतुं प्रभुरित्यत आह—एतेइति॥एते ते तव भ्रातरो भीमादयः लोकपालानां वाय्विन्द्रादीनाम् अंशसंभवाः, अत एभिस्सर्वे नृपास्सुजया इति भावः, किंच अकृतात्मभिः अजितेन्द्रियैः दुःखेनापि जेतुं वशीकर्तुमशक्योऽहम् आत्मवता मद्भक्तिप्रवणचित्तवता ते त्वया जितोऽस्मि वशीकृतोऽस्मि, अतः किं तव दुस्साधमिति भावः॥ १०॥

मु॥ सर्वनृपतिजयः कैस्साध्य इत्यत्राह—एत इति॥ हे राजन् एते भीमार्जुनादयः ते भ्रातरः लोकपालानां वायुप्रभृतीनाम् अंशैः सम्भवो येषां ते तथा, अतस्त एव तत्साधका भविष्यन्तीति शेषः, किञ्च मां जितवतस्तव नाजेयः कश्चिदित्याह—जितोऽस्मीति। यः अकृतात्मभिः मय्यनिवेशितचित्तैः अजितेन्द्रियैर्वा दुर्जयः, सोऽहम् आत्मवता मय्येव निक्षिप्तमनस्केन जितेन्द्रियेण वा त्वया जितोऽस्मि, आस्तां तावदेवम्भूतस्य तव परैरभिभवशङ्का॥ १०॥

१. लोकाननुभविष्यति. मु. भा. प्र. पा॥ २. विजित्य. मु.भा.प्र.पा॥

न कश्चिन्मत्परंलोकेतेजसायशसाश्रिया। विभूतिभिर्वाऽभिभवेद्देवोऽपिकिमुपार्थिवाः

श्रीशुक उवाच—

निशम्यभगवद्गीतंप्रीतःफुल्लमुखाम्बुजः। भ्रातॄन्दिग्विजयेऽयुङ्क्तविष्णुतेजोपबृंहितान्

सहदेवंदक्षिणस्यामादिशत्सहसृञ्जयैः।दिशिप्रतीच्यांनकुलमुदीच्यांसव्यसाचिनम्॥

प्राच्यां वृकोदरं मत्स्यैः केकयैस्सह मद्रकैः ॥ १३

तेविजित्यनृपान्वीरानाजह्रुर्दिग्भ्यओजसा।अजातशत्रवेभूरिद्रविणंनृपयक्ष्यते॥ १४

श्रुत्वाऽजितंजरासन्धंनृपतेर्ध्यायतोहरिः।आहोपायंतमेवाद्यउद्धवोयमुवाचह॥ १५

---

वी ॥ आस्तां तावदेवंभूतस्य तव परैरभिभवशङ्का,यतोऽकिञ्चनमपि मत्परं कोऽपि नाभिभवितुं प्रभुरित्याह --नकश्चिदिति ॥ मत्परम् अहमेव परो यस्य तं मय्यासक्तचित्त मित्यर्थः, देवोऽपि तेजआदिभिः नाभिभवेत्,किमुत पार्थिवा नाभिभवेयुरिति,तत्र तेजः प्रभावः, श्रीः संपत्, विभूतयः सैन्यादिसमृद्धयः ॥ ११ ॥

मु ॥ किञ्च मत्परं कोऽपि नाभिभवितुं प्रभवतीत्याह—न कश्चिदिति ॥ मत्परम् अहमेव प्राप्यतया उपास्यतया च उत्कृष्टं यस्य तं मद्भक्तं कश्चिदपि अस्मिन् लोके तेज आदिना, तेजः प्रभावः, विभूतिः ऐश्वर्यम्, नाभिभवेत् नाधः कुर्यात्, यदा देवोऽपि नाभिभवेत् तदा पार्थिवा नाभिभवन्तीति किमु वक्तव्यम् ॥ ११ ॥

वी ॥ निशम्येति ॥ प्रीतः अतएव फुल्लं विकसितं मुखाम्बुजं यस्य सः युधिष्ठिरः दिग्विजये निमित्ते विष्णोस्तेजसा उपबृंहितान् वर्धितान् भ्रातॄन् भीमादीन् प्रायुङ्क्त ॥

मु ॥ दिग्विजये दिग्विजयार्थम्, अयुङ्क्त नियुक्तवान्, विष्णोः तेजसा उपबृंहितान् वर्धितबलान्, सन्धिश्छान्दसः ॥ १२ ॥

वी ॥ सहदेवमिति ॥ सृञ्जयैस्सह दक्षिणस्यां दिश्याज्ञापयामास, सव्यसाचिनमर्जुनं वृकोदरं भीमं मत्स्यादिभिस्सह ॥ १३ ॥

मु ॥ कस्या दिशो विजये कमयुङ्क्तेत्यत्राह—सहदेवमिति ॥ मत्स्यैस्सह नकुलं केकयैस्सह सव्यसाचिनं मद्रकैस्सह वृकोदरम् ॥ १२ ॥ १३ ॥

वी ॥ तइति॥ हे नृप यक्ष्यते यागं करिष्यमाणायाजातशत्रवे धर्मराजाय ते भ्रातरः भूरि बहु द्रविणं वित्तमाजह्रुः आहृत्य समर्पयामासुः ॥ १४॥

मु ॥ तेजसा बलेन नृपान् विजित्य यक्ष्यते यष्टुकामाय ॥ १४ ॥

वी॥ श्रुत्वेति॥ जरासन्धमजितं श्रुत्वा नृपतेर्युधिष्ठिरस्य ध्यायतश्चिन्तयतस्ततः हरिः श्रीकृष्णो यमुपायमुद्धवो "बलिनामपि चान्येषाम्" इत्यादिना प्राह तमेवोपायं प्राह ॥ १५॥

मु ॥ अजितमिति पदम्, ध्यायतः चिन्ताविष्टस्य आद्यः आदिपुरुषः हरिः तमेवोपायमाह—यं प्राक् उद्धव उवाच आहस्म ॥ १५ ॥

भीमसेनोऽर्जुनःकृष्णोब्रह्मलिङ्गधरा[1]स्ततः।जग्मुर्गिरिव्रजंतातबृहद्रथसुतोयतः॥ १६
तंगत्वाऽऽतिथ्यवेलायांगृहेषुगृहमेधिनम्।ब्रह्मण्यंसमयाचन्तराजन्याब्रह्मलिङ्गिनः॥
राजन्विद्ध्यतिथीनस्मानर्थिनो[2]गृहमागतान्। तन्नःप्रयच्छभद्रंतेयद्वयंकामयामहे॥
किं[3]दुर्मर्षंतितिक्षूणांकिमकार्यमसाधुभिः।किमदेयंवदान्यानांकःपरस्समदर्शिनाम्॥
योऽनित्येन शरीरेण सतां गेयं यशो ध्रुवम्।

---

वी॥ भीमसेनइति॥ ब्रह्मरूपधरा विप्रवेषधराः ततः इन्द्रप्रस्थाद्गिरिव्रजं जग्मुः, हे तात यतो यत्र बृहद्रथसुतो जरासन्ध आस्ते, तद्गिरिव्रजमिति संबन्धः॥ १६॥

मु॥ हे तात भीमादयः त्रयः॥ १६॥

वी॥ तमिति॥ ब्रह्मलिङ्गिनः विप्रवेषिणः राजन्याः भीमादयो गृहेषु वर्तमानं तं जरासन्धमयाचन्त॥ १७॥

मु॥ ब्रह्मलिङ्गधरत्वे हेतुः—ब्रह्मण्यमिति॥ १७॥

वी॥ याच्ञाप्रकारमेवाह—राजन्निति चतुर्भिः॥ गृहं प्रत्यागतानस्मानर्थिनो विद्धि जानीहि, तत् नः अस्मभ्यं प्रयच्छ देहि, किं तत्? यद्वयं कामयामहे ते तुभ्यं भद्रं मङ्गलम् अस्तु॥ १८॥

मु॥ हे राजन् अस्मान् दूरमागतान् अर्थिनः अतिथीन् विद्धि, ते तव भद्रम् अस्तु यत् वयं कामयामहे तत् नः प्रयच्छ॥ १८॥

वी॥ ननु यत्कामयामह इति सामान्यतो निर्दिष्टं, न विशेषतः, तद्यदि दुस्सहमदेयं च तत्कथं कामयध्वमित्यत आहुः—किमिति॥ दुर्मर्षं दुस्सहं किं न किमपीत्यर्थः, किमकार्यमसाधुभिः कः परः समदर्शिनामितिच दृष्टान्तार्थम्, यथा असाधूनामकार्यं नास्ति, तथा तितिक्षूणां दुर्मर्षं नास्ति, यथा समदर्शिनां सर्वं ब्रह्मात्मकं पश्यतां परोऽन्यः अब्रह्मात्मकस्वतन्त्रपदार्थो नास्ति, तथा अत्युदाराणामदेयं नास्तीत्यर्थः, किं विशेषनिर्देशेनेति भावः, वदान्यानामर्थिने देहोऽपि देय एवेत्यभिप्रेतम्॥ १९॥

मु॥ ननु 'इदं कामयामहे' इति विशेषो निर्दिश्यताम्, अन्यथा—पुत्रादेर्वियोगो दुस्सहः, स कथं देयः? तथा राजमण्डनकिरीटाद्यदेयं भिक्षुभ्यः कथं देयम्? तथा रम्यं रत्नाभरणादि पुत्रादियोग्यं परस्मै कथं देयमिति चेत्—अत आहुः—किं दुर्धर्षमिति॥ अत्र दृष्टान्तत्वेन अर्थान्तरमाहुः—किमकार्यमिति। असाधूनाम् अकार्यं नास्ति, तथा तितिक्षूणां दुर्धर्षं दुस्सहं नास्ति असह्यं पुत्रवियोगादिकमपि सह्यमेव, अतः सोऽपि देय एवेति, वदान्यानाम् अत्युदाराणाम् अदेयं नास्ति, समदर्शिनां परश्च नास्ति, अतः किं विशेषनिर्देशेनेत्यर्थः;यद्वा अत्र वदान्यानां किं न देयमित्यत्र दृष्टान्तः—तितिक्षूणां किं दुर्धर्षमित्यादि॥ १९॥

वी॥ तदेव सहेतुकं व्यञ्जयन्तो विपर्यये निन्द्यतामाहुः—यइति॥ सतामिति कर्तरि षष्ठी, सद्भिः गेयं ध्रुवं शाश्वतं यशो यस्स्वयं समर्थस्सन् न चिनोति न संपादयति, स वाच्यः निन्द्य एव, अत एव शोच्यः, अहो किमस्य दौर्भाग्यमिति कृपालुभिश्शोच्य इत्यर्थः॥ २०॥

---

१. स्त्रयः. मु-भा-प्र-पा॥ २. दूरमा. मु-भा-प्र पा॥ ३. दुर्धर्षं. मु. भा. प्र. पा॥

न चिनोति स्वयं कल्यस्सवाच्यश्शोच्य एव हि ॥ २०

हरिश्चन्द्रोरन्तिदेवउञ्छवृत्तिश्शिबिर्बलिः।व्याधःकपोतोबहवोह्यध्रुवेणध्रुवंगताः॥

श्रीशुक उवाच—

स्वैराकृतिभिस्तांस्तुप्रकोष्ठैर्ज्याहतैरपि।राजन्यबन्धून्विज्ञायदृष्टपूर्वानचिन्तयत् ॥

---

मु ॥ ननु वदान्यानामपि स्वप्राणा न देया इत्यत्राहुः—य इति ॥ यः स्वयं कल्यः समर्थोऽपि अनित्येन शरीरेण सतां गेयं ध्रुवं नित्यं यशो न चिनोति न संपादयति, सः हि यस्मात् शोच्यः कृपणः तस्मात् वाच्यः निन्द्य एव ॥ २० ॥

वी ॥ अनित्यशरीरेण नित्ययशस्सम्पादनं किं क्वचित्प्रसिद्धं ? तत्राहुः—हरिश्चन्द्रइति ॥ विश्वामित्रानृण्याय हरिश्चन्द्रो भार्यात्मजादि सर्वं विक्रीय स्वयं चण्डालतां प्राप्तोऽपि अनिर्विण्णस्सहायोध्यावासिभिर्जनैस्स्वर्गं गतः, रन्तिदेवस्सकुटुम्बोऽष्टचत्वारिंशदहान्यलब्धान्नोदकोऽपि कथंचिल्लब्धान्नोदकादि अर्थिभ्यो दत्वा ब्रह्मलोकं गतः, उञ्छवृत्तिर्मुद्गलष्षण्मासं सीदत्कुटुम्बोऽप्यातिथ्यदानेन ब्रह्मलोकं गतः,शिबिः शरणागतकपोतरक्षणार्थं स्वमांसं श्येनाय दत्वा दिवं गतः, बलिर्विप्रवेषाय विष्णवे सर्वस्वं दत्वा तमेवात्मसाच्चकार, कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा विमानेन दिवं गतः, व्याधस्तयोस्सत्त्वं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थाने वनाग्निनिर्दग्धदेहो निष्कल्मषो दिवमारुरोह, एवमन्ये च बहवोऽध्रुवेण शरीरेण ध्रुवं यशस्सञ्चितवन्तः ॥

मु ॥ अन्ये तु न तथेत्याहुः—हरिश्चन्द्र इति ॥ हरिश्चन्द्रो विश्वामित्राय वागुक्तानृण्याय भार्यात्मजादि सर्वं विक्रीय स्वयं चण्डालतां गतोऽप्यनिर्विण्णः सहायोध्यावासिभिः स्वर्गं गतः, रन्तिदेवः सकुटुम्बोऽष्टाचत्वारिंशदहानि अलब्धान्नादिकोऽपि कथञ्चिल्लब्धान्नादिकः तत्सर्वम् अर्थिभ्यो दत्वा ब्रह्मलोकं गतः, उञ्छवृत्तिर्मुद्गलः षण्मासं सीदत्कुटुम्बोऽपि आतिथ्यदानेन कुटुम्बेन सह ब्रह्मलोकं प्राप्तः, शिबिः कपोतं शरणागतं रक्षितुमात्ममांसं श्येनाय दत्वा दिवं प्रपेदे, बलिः सर्वस्वं ब्राह्मणवेषाय हरये दत्वा तमेव साक्षाच्चकार, कपोतश्चातिथये व्याधाय कपोत्या सहात्ममांसं दत्वा सभार्यो विमानेन नाकं जगाम, व्याधस्तयोर्देहनैराश्यं वीक्ष्य स्वयमतिनिर्विण्णो महाप्रस्थानेन दावदग्धकल्मषो दिवमारुरोह, एवमन्येऽपि बहवो वदान्या अध्रुवेण शरीरेण ध्रुवं लोकं गताः ॥ २१ ॥

वी ॥ स्वैरिरिति॥ इत्थमुक्तो जरासुतः ज्याहतैः ज्याघातकिणाङ्कितैः प्रकोष्ठैः स्वैर्लिङ्गैः आकृतिभिश्च तान् अर्थिनः राजन्यबन्धून् विज्ञाय अनुमाय दृष्टपूर्वान् पूर्वं द्रौपदीस्वयंवरादिषु दृष्टान्विज्ञायाचिन्तयत् ॥ २२ ॥

मु ॥ जरासंधस्य कामितार्थवितरणप्रतिज्ञामाह—स्वैरिति षड्भिः॥ ज्याहतैः ज्याघातकिणाङ्कितैः, दृष्टपूर्वान् द्रौपदीस्वयंवरादिषु ॥ २२ ॥

राजन्यबन्धवोह्येतेब्रह्मलिङ्गानिबिभ्रति।ददामिभिक्षितंतेभ्यआत्मानमपिदुस्त्यजम्
बलेर्नश्रूयतेकीर्तिर्विततादिक्ष्वकल्मषा। ऐश्वर्याद्भ्रंशितस्यापिविप्रव्याजेनविष्णुना ॥
श्रियं[1]जिहीर्षतेन्द्रस्यविष्णवेद्विजरूपिणे। जानन्नपिमहींप्रादाद्वार्यमाणोऽपिदैत्यराट्
जीवताब्राह्मणार्थायकोन्वर्थःक्षत्रबन्धुना। देहेनपतमानेननेहता[2]विमलंयशः ॥ २६
इत्युदारमतिःप्राहकृष्णार्जुनवृकोदरान्।हेविप्राव्रियतांकामोददाम्यात्मशिरोऽपिवः॥
श्रीभगवानुवाच—
युद्धंनोदेहिराजेन्द्रद्वन्द्वशोयदिमन्यसे। युद्धार्थिनोवयंप्राप्ताराजन्यानान्नकाङ्क्षिणः ॥

वी ॥ चिन्ताप्रकारमेवाह—राजन्यबन्धव इति चतुर्भिः ॥ ब्रह्मलिङ्गानि विप्रवेषान् बिभ्रति दधति तथापि एतेभ्यः दुस्त्यजमात्मानं देहमपि भिक्षितं याचितं ददामि॥२३॥

मु ॥ तद्दर्शयति—राजन्येति ॥ किं तर्हि भिक्षितोऽर्थो न देय इत्यत्राह—ददामीति ॥ २३ ॥

वी ॥ बलेरिति ॥ इन्द्रस्येन्द्रार्थे श्रियं हर्तुमिच्छता विप्रव्याजेन विष्णुनैश्वर्याद्भ्रंशितस्य त्याजितस्यापि बलेर्वैरोचनस्य कीर्तिर्निर्दुष्टा दिक्षु व्याप्ताच न श्रूयते किम् अधुनाऽपि श्रूयत एवेत्यर्थः, तं श्लाघते—विष्णवइति । जानन्नपि वार्यमाणोऽपि शुक्रेणेति शेषः, दैत्यराट् बलिः महीं ददौ ॥ २४ ॥ २५ ॥

मु ॥ दुस्त्यजत्यागो दुःखोदर्कत्वान्न कार्य इत्यत्राह—बलेरिति॥ विप्रव्याजेन विष्णुना ऐश्वर्यात् भ्रंशितस्यापि बलेः दिक्षु अकल्मषा कीर्तिः न श्रूयते किं श्रूयत एव॥

मु ॥ कथं तस्यैश्वर्यभ्रंशोऽभूदित्यत्राह—श्रियमिति ॥ इन्द्रस्य इन्द्रार्थे श्रियं जिहीर्षते हर्तुमिच्छते द्विजरूपिणे विष्णवे शुक्रेण वार्यमाणः अत एव विष्णुरिति जानन्नपि दैत्यराट् महीं त्रैलोक्यं प्रादात् ॥ २५ ॥

वी ॥ जीवतेति ॥ पतमानेन विनङ्क्ष्यता क्षत्रबन्धुना देहेन ब्राह्मणार्थाय विमलं विपुलमिति पाठान्तरम्, यशः कीर्तिं नेहता नेहमानेन असंपादयता को न्वर्थः किं प्रयोजनं न किमपीत्यर्थः ॥ २६ ॥

मु ॥ ननु ब्राह्मणार्थमपि देहो न त्याज्य इत्यत्राह—जीवतेति ॥ ब्राह्मणार्थाय जीवता क्षत्रबन्धुना पतमानेन देहेन विपुलं यशो नेहता नसंपादयता कोवार्थः नकोऽपि॥

वी ॥ इतीति ॥ उक्तिमेवाह—हेविप्राइति । वः युष्मभ्यम् आत्मनो मम शिरोऽपि ददामि ॥ २७॥

मु ॥ एवं निश्चित्य उदारमतिः वदान्योऽहमिति अभिमानवान् कृष्णार्जुनवृकोदरान् प्राह, तद्दर्शयति—हे विप्राइति ॥ २७ ॥

वी ॥ इत्थमुक्तः प्राह श्रीभगवान्—युद्धमिति ॥ द्वन्द्वशो युद्धं द्वन्द्वयुद्धं देहि यदि मन्यसे इच्छसि तर्हि देहीति संबन्धः, वयं राजन्याः युद्धार्थिनः न त्वन्नकाङ्क्षिणो ब्राह्मणाः इत्यर्थः ॥ २८ ॥

मु ॥ कामं कथयन्ति—युद्धमिति ॥२८॥

१. जिहीर्षत इन्द्रस्य. मु-भा-प्र-पा ॥ २. विपुलं. मु-भा-प्र-पा ॥

असौवृकोदरःपार्थस्तस्यभ्राताऽर्जुनोह्ययम्। अनयोर्मातुलेयंमांकृष्णंजानीहितेरिपुम्
एवमावेदितोराजा[1]जहासोच्चैस्समागधः। आहचामर्षितोमन्दायुद्धंतर्हिददामिवः॥
नत्वयाभीरुणायोत्स्येयुधिविक्लबचेतसा। मधुरांस्वपुरींत्यक्त्वासमुद्रंशरणंगतः॥३१
अयंतुवयसाऽतुल्योनातिसत्त्वोनमेसमः। अर्जुनोनभवेद्योद्धाभीमस्तुल्यबलोमम॥
इत्युक्त्वाभीमसेनायप्रदायमहतींगदाम्।द्वितीयंस्वयमादायनिर्जगामपुराद्बहिः॥ ३३
ततस्समेस्थलेवीरौसंयुक्तावितरेतरम्।जघ्नतुर्वज्रकल्पाभ्यांगदाभ्यांरणदुर्मदौ॥ ३४

---

वी॥ असाविति॥ असौ पार्थः पृथायाः पुत्रः वृकोदरः भीमः तस्य वृकोदरस्य अनयोः भीमार्जुनयोः मातुलस्यापत्यं मां कृष्णं तव रिपुं जानीहि॥२९॥

मु॥ के यूयमित्यत्राह—असाविति॥ ते रिपुं त्वां हन्तुमागतमित्यर्थः॥ २९॥

वी॥ एवमिति॥ उच्चैर्जहास, अमर्षितः क्रुद्धः प्राह च, उक्तिमेवाह—मन्दा इत्यादिना। हे मन्दाः तर्हि युद्धं वाञ्छथ तर्हीत्यर्थः, वो युष्मभ्यम्॥ ३०॥

मु॥ तद्वितरणमाह—एवमिति॥ एवमावेदितो राजा उच्चैः जहास स्म, आहचेदं—हे मन्दाः तर्हि वो युद्धं द्वन्द्वयुद्धं ददामि॥ ३०॥

वी॥ त्वया सह न योत्स्ये, तत्र हेतुत्वेन विशिनष्टि—भीरुणा युधि युद्धे विक्लबम् अधृष्टं चेतो यस्य तेन, एतदेव स्मारयति—मधुरामिति॥ ३१॥

मु॥ अस्मासु कस्मै ददासीत्यत्राह—न त्वयेति॥ युधि युद्धे विक्लबचेतसा अत एव भीरुणा युधि मद्भयात् कृतपलायनेन त्वया सह नयोत्स्ये; नन्वष्टादशकृत्वः त्वां जितवता मया क्वचित् पलायनं न भीतिनिश्चायकमित्यत्राह—मधुरामिति। यतः स्वपुरीं मधुरामपि त्यक्त्वा समुद्रं शरणं गतोऽसि, अतो भीरुणेति संबन्धः॥ ३१॥

वी॥ अयंत्विति॥ अयं वयसा अतुल्य इति च्छेदः, अयमर्जुनस्तु वयसा न तुल्यः, किन्त्ववमः नातिसत्त्वः अनतिबलश्च, अतो न मम समः, अतश्च योद्धा न भवेत्, भीमस्तु मम तुल्यबलः तेनैव सह योत्स्य इति भावः॥ ३२॥

मु॥तर्हि अर्जुनाय युद्धं प्रयच्छेत्यत्राह—अयम् अर्जुनोऽपि न मे समः,तदेवाह—वयसा अतुल्यः,नातिसत्त्वः नातिबलश्च भवतीति योद्धा नभवेदेव, भीमं परिशेषयित्वा तस्मै समयुद्धं प्रयच्छति—भीमइति। भीमस्तु योद्धा भवेत्, यतो मम तुल्यं बलं यस्य तथाभूतः॥ ३२॥

वी॥ इतीति॥ महतीं गुर्वीं गदां प्रदाय दत्वा पुराद्बहिर्निर्जगाम॥ ३३॥

मु॥ प्रदाय दत्वेत्यर्थः॥ ३३॥

वी॥ ततइति॥ समे निम्नौन्नत्यरहिते स्थले युद्धाङ्गणे संयुक्तावायत्तौ वीरौ मागधभीमसेनौ रणे दुष्टो मदो ययोस्तौ जघ्नतुः॥ ३४॥

मु॥ गदायुद्धं वर्णयति—ततइति चतुर्भिः॥ समे स्थले युद्धाङ्गणे संयुक्तौ वीरौ वज्रकल्पाभ्यां गदाभ्याम् इतरेतरं जघ्नतुः, वीरत्वे हेतुः—रणदुर्मदाविति॥ ३४॥

---

१. जहासस्म. मु-भा-प्र-पा॥

मण्डलानिविचित्राणिसव्यंदक्षिणमेवच।चरतोश्शुशुभेयुद्धं[1]गजयोरिवरङ्गिणोः ॥
ततश्चटचटाशब्दोवज्रनिष्पेषसन्निभः। गदयोःक्षिप्तयोराजन्दन्तयोरिवदन्तिनोः ॥
ते वै गदे [2]भुजबलेन [3]निहन्यमाने अन्योन्यतोंऽसकटिपादकरोरुजत्रून्।
चूर्णीबभूवतुरुपेत्य यथार्कशाखे संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः॥ ३७
इत्थं तयोः [4]प्रहरतोर्गदयोर्नृवीरौ क्रुद्धौ स्वमुष्टिभिरयस्सदृशैरपिष्टाम्।
शब्दस्तयोः प्रहरतोरिभयोरिवासीन्निर्घातवज्रपरुषस्तलताडनोत्थः॥ ३८
तयोरेवं प्रहरतोस्समशिक्षाबलौजसोः।

---

वी॥सव्यं दक्षिणं च यथा भवति तथा मण्डलानि गदायुद्धगतिभेदाननुचरतोःयुद्धं शुशुभे, रङ्गिणोः रङ्गगतयोर्गजयोरिवेति, नटयोरिति पाठे निर्भयत्वे दृष्टान्तः ॥ ३५॥

मु॥ गदाप्रयोगक्रममाह—मण्डलानीति॥ सव्यं दक्षिणंच यथा भवति तथा विचित्राण्येव मण्डलानि गदायुद्धविशेषान् शिक्षाभेदान् चरतोस्तयोः युद्धं शुशुभे, कथम्? रङ्गिणोः नृत्यतोः नटयोरिव तद्वत् प्रहृष्टत्वात् निर्भयत्वात् सुशिक्षितत्वाच्च॥ ३५॥

वी॥ ततश्चेति॥ चटचटेति गदयोः परस्पराघातशब्दानुकरणम्, वज्रस्याशनेर्निष्पेषः निष्पातः तत्सदृशः, युध्यतोः दन्तिनोः गदयोः दन्ताघातशब्द इव शुशुभे॥३६॥

मु॥ हे राजन् दन्तिनोः दन्तयोरिव तयोः क्षिप्तयोः गदयोः वज्रस्य निष्पेषः पातः तेन सदृशः चटचटाशब्दोऽभूत्. चटचटेति गदयोः परस्पराघातशब्दानुकरणम्॥३६॥

वी॥ तेवाइति॥ अन्योन्यतः परस्परं भुजबलेन निहन्यमाने ते गदे अंसादीनुपेत्य चूर्णीबभूवतुः, तत्र अंसः स्कन्धः, दीप्तो मन्युर्ययोस्तयोः गजयोरर्कशाखाभ्यां संयुध्यतोस्ते यथा चूर्णीभवतः, तद्वत्॥ ३७॥

मु॥ प्रहारमाह—ते इति॥ भुजजवेन अंसादीन् प्रति निपात्यमाने ते गदे अन्योन्यत उपेत्य चूर्णीबभूवतुः, दीप्तो मन्युः ययोस्तयोः संयुध्यतोः द्विरदयोः भुजजवेन निपात्यमाने अर्कशाखे इव ॥ ३७॥

वी॥ इत्थमिति॥ अयस्सदृशैः कृष्णायसवन्निष्ठुरैः मुष्टिभिः, गदयोरपिष्टां चूर्णीचक्रतुः गदयोरिति कर्मणश्शेषत्वविवक्षया षष्ठी, प्रहरतोरित्यत्र करणस्य कर्तृत्वविवक्षायां लटश्शत्रादेशः, उगितश्चेति ङीबभाव आर्षः, प्रहरतोर्भीममागधयोः ये गदे तयोरिति, गजयोरिव मुष्टिभिः प्रहरतोस्तयोः भीममागधयोः करतलताडनादुत्थ उत्पन्नश्शब्दः निर्घातवज्रपरुषः वज्रनिर्घातवत्परुष आसीत्, निर्घातशब्दस्य पूर्वनिपात आर्षः॥ ३८॥

मु॥ मल्लयुद्धमाह—इत्थमिति॥ तयोः गदयोः प्रहतयोः नष्टयोः अयस्सदृशैः अयोवत् कठिनैः स्वमुष्टिभिः अपिष्टां प्रहृतवन्तौ, प्रहरतोः तयोः तलताडनोत्थः निर्घातवत् वज्रवच्च परुषः शब्द आसीत्॥ ३८॥

वी॥ तयोरिति॥ शिक्षा अभ्यासः बलं सत्वम् ओजः प्रभावः समान्येतानि ययो-

---

१. नटयोरिव. मु-भा-प्र-पा ॥ २. भुजजवेन. मु-भा-प्र-पा ॥
३. निपात्यमाने. मु-भा-प्र-पा ॥ ४. प्रहतयोः. मु-भा-प्र-पा ॥

निर्विशेषमभूद्युद्ध[1]मक्षीणबलयोर्नृप ॥ ३९
शत्रोर्जन्ममृतीविद्वाञ्जीवितंचजराकृतम्। पार्थमाप्याययन्स्वेनतेजसाऽचिन्तयद्धरिः
सञ्चिन्त्यारिवधोपायंभीमस्यामोघदर्शनः।दर्शयामासविटपंपाटयन्निवसंज्ञया॥ ४१
तद्विज्ञायमहासत्त्वोभीमःप्रहरतांवरः। गृहीत्वापादयोश्शत्रुंपातयामासभूतले॥ ४२
एकंपादंपदाऽऽक्रम्यदोर्भ्यामन्यंप्रगृह्यसः। गुदतःपाटयामासशाखामिवमहागजः॥
एकपादोरुवृषणकटिपृष्ठस्तनांसके। एकबाह्वक्षिभ्रूकर्णे शकले ददृशुः प्रजाः॥ ४४
हाहाकारो महानासीन्निहते मगधेश्वरे।

स्तयोः अक्षीणबलयोः युद्धं निर्विशेषं निरुपममासीत् ॥ ३९ ॥

मु ॥ हे नृप एवं प्रहरतोः तयोः निर्विशेषम् अभूत, कुतः? शिक्षा अभ्यासः बलं सत्त्वम् ओजः प्रभावः समानि तानि ययोः तयोः, तर्हि किं युद्धान्निवृत्तावित्यत्राह—अक्षीणजवयोरिति ॥ ३९ ॥

वी ॥ शत्रोरिति ॥ हरिः शत्रोः जरासन्धस्य जन्म शकलरूपं मृतिः पुनःशकलीभावः ते, जरा नाम राक्षसी तत्कृतं जीवितं च विद्वान् जानन् स्वेन तेजसा पार्थं भीममाप्याययन् उपबृंहयन् अचिन्तयत् कथमसौ शकलीभवेदिति ॥ ४० ॥

मु ॥ स्वतेजसा पार्थं भीमम् आप्याययन् जन्म शकलसंगमरूपं मृतिः शकलीभावः जरया राक्षस्या तत्पुराधिदेवतया कृतं जीवितंच जानन् अचिन्तयत् कथमसौ शकलं भवेदिति ॥ ४० ॥

वी॥संचिन्त्येति॥विटपं शाखान्करे गृहीत्वा हरिर्भीमस्य यथा विटपं पाटयामि,तथा त्वमेनं पाटयेति संज्ञया सङ्केतेन अरिवधोपायं दर्शयामासेत्यर्थः ॥ ४१ ॥

मु॥ततः किमत आह—संचिन्त्येति॥अमोघदर्शनः अप्रतिहतसंकल्पः विटपं शाखां करे गृहीत्वा हरिः भीमस्य यथाहं विटपं पाटयामि, तथा त्वम् एनं विपाटयेति संज्ञया संकेतेन अरिवधोपायं दर्शयामासेत्यर्थः ॥ ४१ ॥

वी ॥ तदिति ॥ तत्साङ्केत्यं विदित्वा शत्रुं-जरासन्धम् ॥ ४२ ॥

मु ॥ ४२॥

वी ॥ एकमिति ॥ पदा पादेन आक्रम्य दृढमवष्टभ्य अन्यं पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य महागजश्शाखामिव गुदत आरभ्य पाटयामास विदारयामास ॥ ४३ ॥

मु ॥ पातयित्वा किमकरोदित्यत्राह—एवमिति॥ पातयित्वा ॥ ४३ ॥

वी ॥ एकेति ॥ एकैकः पादादिर्ययोस्तयोस्ते शकले ददृशुः ॥ ४४ ॥

मु ॥ पाटयित्वा पृथग्विसृष्टे शकले वर्णयत्येकेन॥ तदा प्रजाः शकले एव ददृशुः, एकैकपादादिर्ययोस्ते शकले ॥ ४४ ॥

वी ॥ हाहाकारइति ॥ मगधेश्वरे निहते सति जयाच्युतौ भीमं परिरभ्यालिङ्ग्य पूजयामासतुः बहुमन्येताम्, श्रीकृष्णेन परिरब्धः आलिङ्गितः हेतुगर्भमिदम्, विरुजः विगतग्लानिः बभूव ॥ ४५ ॥

१. मक्षीणजवयोः. मु-भा-प्र-पा॥

पूजयामासतुर्भीमं परिरभ्य जयाच्युतौ ॥ ४५
कृष्णेनच परिरब्धो विरुजोऽभूद्वृकोदरः ॥
सहदेवंतत्तनयंभगवान्भूतभावनः। अभ्यषिञ्चदमेयात्मामगधानांपतिंप्रभुः ॥ ४६
मोचयामास राजन्यान्संरुद्धामागधेन ये ॥ ४७
इति श्रीभागवते महापुराणे दशमस्कन्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

श्रीशुक उवाच—
अयुतेद्वेशतान्यष्टौलीलयायुधिनिर्जिताः।तेनिर्गतागिरिद्रोण्यांमलिनामलवाससः ॥
क्षुत्क्षामाश्शुष्कवदनास्संरोधपरिकर्शिताः ॥
ददृशुस्तेघनश्यामंपीतकौशेयवाससम्। श्रीवत्साङ्कंचतुर्बाहुंपद्मपत्रनिभेक्षणम् ॥ २
चारुप्रसन्नवदनं स्फुरन्मकरकुण्डलम्। पद्महस्तं गदाशङ्खरथाङ्गैरुपलक्षितम् ॥ ३

---

मु ॥ ॥ ४५ ॥

वी॥ दुर्वृत्तत्वादसौ मागधो हतः,न राज्याभिलाषेणेति दर्शयन्नाह—सहदेवमिति॥ अमेयात्मा अपरिच्छेद्यस्वरूपस्वभावः भूतानि लोकान् भावयति अभ्युदयतीति तथा-हेतुगर्भमिदम्, अतस्तत्तनयं जरासन्धतनयं सहदेवाख्यं मगधानां देशानां पतिमभ्य-षिञ्चत् तेषामधिपतिं चकारेत्यर्थः ॥ ४६ ॥

मु ॥ दुर्वृत्तत्वादयं हतः, न राज्याभिलाषेणेति दर्शयन्नाह—सहदेवमिति ॥ तस्य जरासंधस्य तनयम्, ततः किमकरोदित्यत्राह—मोक्षेति ॥ ४६ ॥

वी ॥ ततो मागधेन ये संरुद्धास्तान् राजन्यान्मोचयामास ॥ ४७ ॥

मु ॥ ४७ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

वी॥ न केवलं मोचयामास, तैस्स्तुतस्सन् तान्बहुमानयामास चेत्याह—त्रिसप्तति-तमेन अयुते इत्यादिना॥ द्वे अयुते अष्टौ शतानि च ये राजन्याः युद्धे जरासन्धेन लील-या अनायासेन निर्जिताः गिरिद्रोण्यां सन्निरुद्धाश्च ते ततो निर्गतास्सन्तो घनइव श्या-मं श्रीकृष्णं ददृशुरित्युत्तरेणान्वयः, कथंभूताः? मलिनाः अभ्यङ्गोन्मर्दनस्नानाद्यभावा-न्मलानि मलिनानि वासांसि येषां ते क्षुधा क्षामाः कृशाः शुष्काणि वदनानि येषां ते संरोधेन परिकार्शिताः क्लेशिताः, कथंभूतं? श्रीवत्सोङ्कः चिह्नं यस्य चारु सुन्दरं प्रसन्नं

किरीटहारकटककटिसूत्राङ्गदान्वितम् । भ्राजद्वरमणिग्रीवंनिवीतंवनमालया ॥ ४
पिबन्तइवचक्षुर्भ्यांलिहन्तइवजिह्वया । जिघ्रन्तइवनासाभ्यांरम्भन्तइवबाहुभिः ॥
प्रणेमुर्हतपाप्मानो मूर्धभिः पादयोर्हरेः ॥
कृष्णसन्दर्शनाह्लादध्वस्तसंरोधन[1]श्रमाः।प्रशशंसुर्हृषीकेशंगीर्भिःप्राञ्जलयोनृपाः॥६
राजान ऊचुः—
नमस्ते[2]देवदेवेशप्रपन्नार्तिहराव्यय । प्रपन्नान्पाहिनःकृष्णनिर्विण्णान्घोरसंसृतेः॥७

च वदनं यस्य स्फुरन्ती मकराकारे कुण्डले यस्य पद्मं रेखात्मकं हस्ते यस्य तं तथा गदादिभिरुपलक्षितं किरीटादिभिर्युतं भ्राजमानो वरमणिः कौस्तुभो ग्रीवायां यस्य तं वनमालया निवीतं कण्ठलम्बितया व्याप्तम ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

मु ॥ ये निर्जिता जरासन्धेन निरुद्धाश्च गिरिद्रोण्यां ते ततो निर्गतास्सन्तः घनश्यामं ददृशुरित्युत्तरेणान्वयः, यद्वा लीलया युधि जरासन्धेन निर्जिताः द्वे अयुते अष्टौ शतानिच राजन्या गिरिद्रोण्या विनिर्गता इत्यन्वयः, कथंभूताः ? संरोधेन चिरकालेन परिकर्शिताः क्लेशिताः मलिनाः अकृतमज्जनाः मलेन युक्तानि वासांसि येषां ते, क्षुधाक्षामाः कृशाः शुष्कानि नष्टशोभानि वदनानि येषां ते तथा निर्गतास्ते चिरकाङ्क्षितं कृष्णदर्शनं प्रापुरित्याह—ददृशुरिति चतुर्भिः। ते श्रीवत्साङ्कं ददृशुरित्यर्थः,भ्राजन् भ्राजमानो वरमणिः कौस्तुभो यया सा ग्रीवा यस्मिन् तं निवीतं कण्ठावलम्बितया व्याप्तम्॥

वी ॥ पिबन्त इवेत्यादीनां हरेः पादयोः प्रणेमुरित्युत्तरेणान्वयः, चेतसा रम्भन्त इव परिरम्भमाणा इव हरन्त इवेति पाठान्तरम्, इत्थं तेषां भगवति प्रेमातिशयः प्रदर्शितः ॥ ५ ॥

मु ॥ कथम्भूता ददृशुरित्यत उक्तं—पिबन्त इति ॥ रम्भन्तः आलिङ्गन्त इव हृष्टसर्वेन्द्रिया इत्यर्थः, दृष्ट्वा किं चक्रुरित्यत्राह— प्रणेमुरिति ॥ ५ ॥

वी ॥ कृष्णसन्दर्शनाय आह्लादः तेन ध्वस्तः संरोधनजः श्रमो येषां ते नृपाः बद्धाञ्जलयः प्रशशंसुः तुष्टुवुः ॥ ६ ॥

मु॥ तेषां स्तुतिमुत्थापयति—कृष्णेति ॥ ते नृपाः प्राञ्जलयो भूत्वा गीर्भिः हृषीकेशं प्रशशंसुः, कथम्भूताः ? कृष्णसन्दर्शनाह्लादेन ध्वस्तः संरोधनक्लमो येषां ते ॥ ६ ॥

वी ॥ प्रशंसामेवाह—नमस्तइत्यादिभिर्नवभिः ॥ देवानां देवो ब्रह्मा तस्यापीश अनेन परत्वमुक्तम्,प्रपन्नार्तिहरेत्यनेन वात्सल्यम्,हे अव्यय विकाररहितेत्यनेन रागद्वेषादिराहित्यं समत्वं सर्वभूतसुहृत्त्वं च, कृष्णेत्यनेन भक्तानां सुखापादनायावतीर्णत्वम्, प्रपन्नान्पाहीत्यनेन गोप्तृत्ववरणम्; ननु भवन्तो बन्धाद्विमोचितास्सुख्यन्तु, किमर्थमधुना मां प्रपद्यन्त इत्यत आत्मनो विशिंषन्ति—घोरसंसृतेर्निर्विण्णाः अतः संसृतेरपि भवान् पात्वित्येतदर्थं प्रपन्ना इत्यर्थः ॥ ७ ॥

मु ॥ स्तुतिमेवाह—नमस्त इति नवभिः ॥ हे देवदेव ते तुभ्यं नमः, जरासन्धबन्धाद्विमुक्तानां भवतां किंप्रयोजनः स्तुतिप्रणामसम्भ्रमः इत्यत्राहुः—प्रपन्नानिति । हे

१. क्लमाः. मु-भा-प्र-पा ॥ २. देवदेवत्वां. मु-भा-प्र-पा ॥

नैनंनाथाभ्यसूयामोमागधंमधुसूदन । अनुग्रहोयद्भवताराज्ञांराज्यच्युतिःप्रभो॥ ८
राज्यैश्वर्यमदोन्नद्धोनश्रेयोविन्दतेनृपः।त्वन्मायामोहितोऽनित्यामन्यतेसंपदोऽचलाः
मृगतृष्णांयथाबालामन्यन्तउदकाशयम्।एवंवैकारिकींमायामयुक्तावस्तुचक्षते॥१०
वयं पुरा श्रीमदनष्टदृष्टयो जिगीषयास्या इतरेतरस्पृधः ।
घ्नन्तः प्रजास्स्वा अतिनिर्घृणाः प्रभो मृत्युं [2]पुरस्तादविगणय्य दुर्मदाः॥

---

कृष्ण घोरसंसृतेः निर्विण्णान् त्वां प्रपन्नांश्च नः अस्मान् पाहि ततो मोचय ॥ ७ ॥

वी ॥ ननु भवन्तो जरासन्धासूयाविष्टाः विषयभोगलालसाश्च कथं संसृतेर्निर्विण्णा इत्याशङ्क्याधुना न वयं तथाभूता इत्याहुः—नैनमित्यष्टभिः ॥ हेनाथ हेमधुसूदन एनं मागधं नाभ्यसूयामः, अस्मिन्दोषान्नाविष्कुर्मः, किन्तु गुणानेवेति भावः. कुत इत्यत आहुः—अनुग्रहइति॥हे विभो यद्यस्मात् राज्ञामस्माकं राज्याच्च्युतिः भ्रंशः भवता अनुग्रहः जरासन्धमुखेन भवता कारितोऽनुग्रह इत्यर्थः ॥ ८ ॥

मु ॥ निर्वेदकारणमाहुः—नेति ॥ हे मधुसूदन नाथ एनम् उपकारिणं मागधं प्रति नाभ्यसूयामः, कुत इत्यत उक्तम्—अनुग्रह इति । हे विभो राज्ञां राज्यच्युतिरिति यत्, भवतोऽनुग्रहः, निर्वेदहेतुत्वात्तस्याः ॥ ८ ॥

वी ॥ कथं राज्यच्युतेरनुग्रहरूपतेत्यत आहुः—राज्येति ॥ राज्यैश्वर्याभ्यां यो मदः तेन उन्नद्धः उच्छृङ्खलः श्रेयो न विन्दते न लभते, किंतु तव मायया मोहितः अनित्याश्चला अपि संपदः भोग्यभोगोपकरणादिसमृद्धीः अचलाः शाश्वतीर्मन्यते, एवं मन्यमानोऽन्ततस्स्थावरतामेतीति भावः ॥ ९ ॥

मु ॥ तद्धेतुत्वं व्यतिरेकमुखेन साधयन्ति—राज्येति ॥ यद्वा संरोधात् रक्षितानस्मान् घोरायाः संसृतेरपि पाहि विमोचय. ननु भवन्तो जरासन्धासूयाविष्टा इहामुत्रभोगाविष्टाश्च कथं संसृतेर्मोचनीया इत्याशङ्क्य सम्प्रति न वयं तथा भूताः इत्याहुः नैनमित्याद्यष्टभिः । हे नाथ वयम् एनं नाभ्यसूयामः न दोषदृष्ट्या पश्यामः, कुत इत्यत आहुः—अनुग्रह इति । यत् यस्मात्, एतदेव व्यतिरेकेण उपपादयन्ति—राज्यैश्वर्याभ्यां यो मदः तेनोन्नद्धः उच्छृङ्खलवृत्तिः नृपः श्रेयः तत्साधनं निर्वेदं न विन्दते,ननु सम्पदामस्थैर्यदर्शनाद्वैराग्यं स्यादित्यत्राहुः—त्वन्मायामोहिताः जनाः अनित्याः सम्पदः अचलाः शाश्वतीः मन्यन्ते ॥ ९ ॥

वी ॥ त्वन्मायामोहितोऽनित्यामन्यत इत्येतदेव सदृष्टान्तमुपपादयन्ति—मृगतृष्णामिति ॥ मृगतृष्णा मरीचिका तामुदकाशयं जलाश्रयं नदीतटाकादिरूपं मन्यन्ते तथा अयुक्ताः अविवेकिनः नृपाः वैकारिकीं मायां प्रकृतिं वस्तु चक्षते, प्रकृतिपरिणाम रूपं भोग्यं नित्यं मन्यन्त इत्यर्थः, अतथाभूतायास्तथात्वावभासे दृष्टान्तः ॥ १० ॥

मु ॥ एवम् अयुक्ता अविवेकिनः वैकारिकीं मायां स्रक्चन्दनादिविकारात्मिकां प्रकृतिं वस्तु चक्षते प्रकृतिपरिणामरूपं भोग्यं नित्यं मन्यन्त इत्यर्थः ॥ १० ॥

वी ॥ तदेवं राज्यादियोगवियोगादनर्थावहत्वमुक्तम्, तदेतदस्मास्वेव दृष्टमि-

---

१. मोहितानित्यामन्यन्ते. मु-भा-प्र-पा ॥ २. पुरस्त्वाविगणय्य. मु-भा-प्र-पा ॥

त एव कृष्णाद्य गभीररंहसा दुरन्तवीर्येण [१]विचालितश्रियः।
कालेन तन्वा भवतोऽनुकम्पया विनष्टदर्पाश्चरणौ [२]नमाम ते॥ १२
[३]अतो न राज्यं मृगतृष्णरूपितं देहेन शश्वत्पतता रुजां भुवा।
उपासितव्यं स्पृहयामहे विभो क्रियाफलं प्रेत्य च कर्णरोचनम्॥ १३
तन्नस्समादिशोपायंयेनतेचरणाब्जयोः।स्मृतिर्यथानविरमेदपिसंसरतामिह॥ १४

त्याहुः—वयमिति द्वाभ्याम्॥ अस्याः भूमेः जिगीषया परस्परं स्पर्धमानाः अतिनिर्घृणाः नितरां निष्कृपाः वयं पुरस्तात्पुरोवर्तिनमित्यर्थः मृत्युमविगणय्य प्रजाः घ्नन्तः। पुरा ये दुर्मदास्ते वयमद्य हे कृष्ण गभीरं रंहः वेगो यस्य दुरन्तमपारं वीर्यं प्रभावो यस्य तेन भवतः तन्वा शरीरभूतेन कालेन विचालिता भ्रंशिता श्रीर्येषां ते तथाभूताः भवतोऽनुकम्पया हेतुभूतया विनष्टो दर्पो येषां ते तव चरणं निरतिशयपुरुषार्थभूतौ नमाम नतिपूर्वकं शरणं प्राप्ताः स्मेत्यर्थः॥ ११॥ १२॥

मु॥ राज्यैश्वर्यसंयोगवियोगयोरनर्थावहत्वमस्मास्वेव दृष्टमित्याहुः—वयमिति॥ श्रीमदेन नष्टा बुद्धिः येषां ते अस्या भूमेः जिगीषया इतरेतरस्पृधः परस्परं स्पर्धमानाः स्वा अपि प्रजाः घ्नन्तः अतएव निर्घृणाः पुरः पुरतः त्वा त्वां मृत्युम् अविगणय्य पुरा ये वयं दुर्मदाः, हे कृष्ण त एव वयम् अद्य भवतोऽनुकम्पया विनष्टदर्पाः ते चरणौ स्मराम स्मर्तुमाशास्महे, कथम्भूताः? भवतः तन्वा शरीरभूतेन कालेन श्रियः राज्यैश्वर्यात् विचालिताः भ्रंशिताः, अतो राज्यच्युतिर्भवदनुग्रह एवेत्यर्थः॥ ११॥ १२॥

वी॥ अतइति॥ राज्यादियोगायोगयोरेवंविधत्वाच्छश्वत्सदा रुजां रोगाणां भुवा उत्पत्तिस्थानभूतेन पतता पतिष्यता देहेन मृगतृष्णात्वेन निरूपितं तत्तुल्यमित्यर्थः,राज्यं नोपासितव्यं न सेवितव्यम् अनेनात्मनामैहिकविषयविराग आविष्कृतः, तथा हे विभो कर्णयोः श्रोत्रयोरेव रोचनं प्रीत्यावहम् "अपाम सोमममृता अभूम" "स एवैनं भूतिं गमयति" इत्याद्यर्थवादैः श्रुतिसुखमात्रावहं नत्वनुभवदशायां पतनभयशङ्कास्पदत्वेन दुःखमिश्रत्वादिति भावः, प्रेत्य लोकान्तरं प्राप्यानुभूयेति शेषः, क्रियायाः श्रौतस्मार्तरूपायाः फलं स्वर्गादिरूपं न स्पृहयामहे॥ १३॥

मु॥ अतएव अथो अनन्तरं मृगतृष्णासदृशं राज्यं शश्वत् पतता प्रतिक्षणं क्षीयमाणेन तथा रुजां रोगाणां भुवा जन्मक्षेत्रेण दुःखोत्पादकेनेत्यर्थः, देहेन उपासितव्यं सेव्यं न स्पृहयामहे, प्रेत्य परलोके च क्रियाफलं स्वर्गादिभोगमुपासितव्यं न स्पृहयामहे, कथम्भूतम्? कर्णयोः रोचनं रुचिजनकमात्रम्॥ १३॥

वी॥ तर्हि किं स्पृहयध्वे इत्यत्र तदाविष्कुर्वन्तः तदनुगृहाणेति विज्ञापयन्ति—तदिति॥ तत्तस्मात्सकलविषयाविरक्तत्वान्नोऽस्माकम् तमिति च्छेदे तमुपायं समादिश देहि, कोऽसौ? येनोपायेन अस्माकमिह प्रकृतिमण्डले संसरतामपि यथा तव चरणाब्जयोर्विषयभूतयोः स्मृतिर्न विरमेत् न विच्छिन्ना भवति, तथानुगृहाणेत्यर्थः॥ १४॥

मु॥ तर्हि किं स्पृहयध्वे? तत्राहुः, यद्वा,—यद्येवम्भूता यूयं, तर्हि मम चरणौ स्मरत, ततोऽनायासेन मुक्तिर्भविष्यति, किमन्यापेक्षयेति चेत्—अत आहुः—तन्न इति॥

१. विचालिताश्श्रियः. मु-भा-प्र-पा॥ २. स्मराम. मु-भा-प्र-पा॥ ३. अथो. मु-भा-प्र-पा॥

कृष्णायवासुदेवायहरयेपरमात्मने । प्रणतक्लेशनाशायगोविन्दायनमोनमः ॥ १५

श्रीशुक उवाच—

संस्तूयमानोभगवान्राजभिर्मुक्तबन्धनैः।तानाहकरुणस्तातशरण्यश्श्लक्ष्णयागिरा ॥

श्रीभगवानुवाच—

अद्यप्रभृतिवोभूपामय्यात्मन्यखिलेश्वरे।सुदृढाजायतेभक्तिर्बाढमाशंसितंयथा ॥ १७

दिष्ट्याव्यवसितंभूपा[१] भवन्तोभूतभाषिणः।श्रियैश्वर्यमदोन्नाहंपश्य[२] उन्मादनंनृणाम्

[३]हैहयोनहुषो वेनो रावणो नरकोऽपरे ।

---

नः अस्माकं तमुपायं समादिश, येन ते चरणाब्जयोः यथावत् स्मृतिः स्यात्, येन संसरतामपि स्मृतिः न विरमेत् ॥ १४ ॥

वी ॥ एवं स्वाभिप्रायमाविष्कृत्य तन्निष्पत्तिनिदानभगवत्प्रसादनोपायोऽञ्जलिरेवेत्यभिप्रयन्तो मन्त्रविशेषेण नमस्कुर्वन्ति—कृष्णायेति ॥ प्रणतानां प्रणतिमात्रं कुर्वतां क्लेशं नाशयतीति तथा तस्मै ॥ १५ ॥

मु ॥ समीहितसिद्ध्यै पुनर्नमस्कुर्वन्ति—कृष्णायेति ॥ १५ ॥

वी ॥ संस्तूयमानइति ॥ मुक्तं बन्धनं मागधकृतं यैः येषां वा तैः राजभिः संस्तुतः करुणः करुणायुक्तः अत एव शरण्यः श्लक्ष्णया मृद्व्या गिरा तान्राज्ञः प्राह ॥ १६ ॥

मु ॥ श्लक्ष्णया मधुरया गिरा तानाह ॥ १६ ॥

वी ॥ तदेवाह—अद्येत्यादिना॥ आत्मनि अन्तः प्रविश्य धारके अखिलानामीश्वरे प्रशासितरि मयि वो युष्माकमद्यप्रभृति सुदृढा भक्तिर्जायते भविष्यति,कथं? यथा बाढं साधु यथा तथा आशंसितं समीहितं तथा सुदृढेति संबन्धः ॥ १७ ॥

मु ॥ तद्दर्शयति—अद्येति षड्भिः ॥ अखिलेश्वरे आत्मनि मयि अद्यप्रभृति वो युष्माकं सुदृढा भक्तिः जायते जायताम्, बाढं सत्यमेव तत्, यत् भवद्भिराशंसितं कथितम् ॥ १७ ॥

वी ॥ तन्निश्चितमभिनन्दति—दिष्ट्येति ॥ हे भूपाः भूतं यथास्थितं तात्त्विकमिति यावत्, तद्भाषन्त इति तथा तैः भवद्भिः व्यवसितं निश्चितं तद्दिष्ट्या आनन्दः सम्यगिति यावत्, तदेवोपपादयितुमाह—श्रियैश्वर्याभ्यां यः मदोन्नाहः मदेनोद्बन्धनमुद्वृत्तिः, तं नृणामुन्मादनं पश्ये पश्यामि ॥ १८ ॥

मु ॥ किञ्च—हे भूपाः भवतां तथा व्यवसितमिति यत् तत् दिष्ट्या, आशंसितमेवाविष्करोति—भवन्त इति । ऋतभाषिणः सत्यवादिनो भवन्तः, ऋतभाषित्वमुपपादयति—श्रीश्च ऐश्वर्यं च ताभ्यां यो मदः तेन उन्नाहं बन्धनम्, कथं? नृणाम् उन्मादकं बुद्धिभ्रंशकरं पश्ये पश्यामि ॥ १८ ॥

वी॥ तदेवाह—हैहयइति॥ हैहयः कार्तवीर्यः नहुषः नरेश्वरश्चक्रवर्ती एते श्रीमदाद्धेतोः स्थानाद्राज्याद्भ्रंशिताः,तावद्धैहयः पितुः कामधेनुहरणात्परशुरामेण सपुत्रो हतः,

---

१. भवन्तऋतभाषिणः. मु-भा-प्र-पा॥ २. उन्मादकं. मु-भा-प्र पा॥ ३. हैहयो. मु-भा-प्र पा॥

श्रीमदाद्भ्रंशितास्स्थानादेवदैत्यनरेश्वराः ॥ १९

भवन्तएतद्विज्ञायदेहाद्युत्पाद्यमन्तवत्।मांयजन्तोऽध्वरैर्युक्ताःप्रजाधर्मेणरक्षथ ॥ २०

सन्तन्वन्तःप्रजातन्तून्सुखंदुःखंभवाभवम्।प्राप्तंप्राप्तंचसेवन्तोमच्चित्ताविचरिष्यथ ॥

उदासीनाश्चदेहादावात्मारामाधृढव्रताः।मय्यावेश्यमनस्सम्यङ्मामन्तेब्रह्मयास्यथ ॥

श्रीशुक उवाच—

इत्यादिश्य नृपान्कृष्णो भगवान्भुवनेश्वरः ।

---

तथा नहुषो देवेन्द्रतां प्राप्त उद्वृत्तश्शचीसङ्गाय ब्राह्मणान् शिबिकां वाहयन् तैरेव ततो भ्रंशितोऽजगरत्वमवाप, वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपन् तैरेव हुङ्कृतैर्हतः, रावणो राक्षसेश्वरस्सीतामभिलषन् राघवेण हतः, नरको दैत्यश्चादितेः कुण्डलाद्याहरणात् मयैव हतः, एवमपरे श्रीमदात् स्थानाद्भ्रंशिता इत्यर्थः ॥ १९ ॥

मु ॥ तदेवाह—हेहय इति ॥ देवदैत्यनरेश्वराः हेहयादयः श्रीमदात् स्थानात् भ्रंशिताः, हेहयः कार्तवीर्यो नरेश्वरः पितृकामधेनुहरणात् परशुरामेण सपुत्रो हतः, नहुषो देवेन्द्रतां प्राप्तः उन्मत्तः शचीसङ्गाय ब्राह्मणान् शिबिकां संवाहयन् तैरेव तत्पदात् पातितः अजगरत्वं प्राप, वेनोऽप्युन्मत्तो ब्राह्मणानधिक्षिपन् तद्धुंकृतैर्हतः, रावणो राक्षसेश्वरः सीताम् अभिलषन् रामेण हतः, नरकः दैत्येश्वरः दितिकुण्डलाद्याहरणात् मयैव हतः, अपरे कंसादयः ॥ १९ ॥

वी ॥ अतो भवन्तो यदुत्पाद्यं देहादि तदन्तवद्विज्ञाय युक्ताः अवहितचेतसो यज्ञैः मामाराधयन्तः धर्मेण प्रजाः रक्षथ रक्षन्त्वित्यर्थः, मध्यमपुरुष आर्षः ॥ २० ॥

मु ॥ यत् उत्पाद्यं देहादि, तत् अन्तवत् विज्ञाय युक्ताः अप्रमत्ताः अध्वरैः मां यजन्तः प्रजा धर्मेण रक्षथ रक्षत ॥ २० ॥

वी ॥ सन्तन्वन्तइति ॥ प्रजातन्तून् पुत्रपौत्रादिसन्ततीः संतन्वन्तः विस्तारयन्तः भव उत्पत्तिः, अभवः भवेतरः, तदन्यार्थोऽत्र नञ्, मरणमित्यर्थः, सुखादिकं प्राप्तंप्राप्तं सेवन्तः समत्वेन सेवमानाः मयि विषयभूते चित्तं येषां ते विचरिष्यथ कालं नयतेत्यर्थः ॥ २१ ॥

मु ॥ प्रजातन्तून् पुत्रपौत्रादिसन्ततिं सन्तन्वन्तः भवाभवौ वृद्धिक्षयौ अन्यच्च प्राप्तं समत्वेन सेवमानाः मच्चित्ताः विचरिष्यथ ॥ २१ ॥

वी ॥ देहादावित्यादिशब्देन तदनुबन्धिनां सङ्ग्रहः, उदासीनाः अहंममतारहिता इत्यर्थः, आत्मारामाः स्वात्मपरमात्मयाथात्म्यावलोकनपराः मयि सम्यङ्मन आवेश्य अन्ते प्रारब्धावसाने ब्रह्म परब्रह्मभूतं मां यास्यथ प्राप्स्यथ ॥ २२ ॥

मु ॥ चरमे वयसि किं कार्यमित्यत्राह—उदासीना इति ॥ अन्ते मृत्यौ सन्निहिते देहादौ उदासीनाः विरक्ताः धृतव्रताः आत्मारामाश्च सन्तः मयि मनः सम्यगावेश्य मां ब्रह्म यास्यथ ॥ २२ ॥

वी॥इतीति॥इतीत्थम् आदिश्यानुशिष्य तेषां नृपाणां मज्जनकर्मणि अभ्यङ्गस्नानादौ

तेषांन्ययुङ्क्तपुरुषान्स्त्रियोमज्जनकर्मणि ॥ २३

सपर्यां कारयामास सहदेवेन भारत । नरदेवोचितैर्वस्त्रैर्भूषणैस्स्रग्विलेपनैः ॥ २४

भोजयित्वावरान्नेनसुस्नातान्समलङ्कृतान् । भोगैश्चविविधैर्युक्तांस्तांबूलाद्यैर्नृपोचितैः

तेपूजितामुकुन्देनराजानोमृष्टकुण्डलाः । विरेजुर्मोचिताःक्लेशात्प्रावृडन्तेयथाग्रहाः ॥

रथान्सदश्वानारोप्य मणिकाञ्चनभूषितान् ।

[1]प्रीणीय सूनृतैर्वाक्यैस्स्वदेशान्प्रत्ययापयत् ॥ २७

तएवंमोचिताःकृच्छ्रात्कृष्णेनसुमहात्मना । ययुस्तमेवध्यायन्तःकृतानिचजगत्पतेः ॥

जगदुःप्रकृतिभ्यस्तेमहापुरुषचेष्टितम् । यथाऽन्वशासद्भगवांस्तथाचक्रुरतन्द्रिताः ॥

जरासन्धंघातयित्वाभीमसेनेनकेशवः । पार्थाभ्यांसंयुतःप्रायात्सहदेवेनपूजितः ॥

---

निमित्ते पुरुषान् स्त्रियः स्त्रीश्च न्ययुङ्क्त ॥ २३ ॥

मु ॥ तेषां मज्जनकर्मणि अभ्यङ्गस्नानादौ पुरुषान् स्त्रियश्च न्ययुङ्क्त ॥ २३ ॥

वी ॥ सपर्यामिति ॥ हे भारत सहदेवेन जरासन्धसुतेन प्रयोज्यकर्त्रा नरदेवानामर्हैर्वस्त्रादिभिः साधनैः सपर्यां कारयामास ॥ २४ ॥

मु ॥ २४ ॥

वी ॥ भोजयित्वेति ॥ वरान्नेन श्रेष्ठान्नेन भुजिकर्मणोऽन्नस्य तत्करणत्वविवक्षायां तृतीया, ततः पुनः ताम्बूलाद्यैः विविधैर्युक्तान् कारयामासेत्यर्थः ॥ २५ ॥

मु ॥ सुस्नातान् सम्यगलङ्कृतांश्च तान् वरान्नेन भोजयित्वा सहदेवेन नरदेवः चित्रैः वस्त्रैः भूषणैः स्रग्विलेपनैः अन्यैश्च नृपोचितैः विविधैः भोगैः सपर्यां कारयामास ॥

वी ॥ तइति ॥ ते राजानः सहदेवेन पूजिताः कृष्णेन क्लेशान्मोचिताः विरेजुः यथा प्रावृडन्ते शरदि ग्रहाः चन्द्रादयः, तद्वत् ॥ २६ ॥

मु ॥ ग्रहाः चन्द्रादयः ॥ २६ ॥

वी ॥ रथानिति ॥ सन्तः समीचीनाः अश्वाः येषां तान् रथानारोप्य रथेषूपवेश्य सूनृतैः मधुरैः वाक्यैः प्रीणीय हर्षयित्वा स्वस्वदेशान् प्रत्ययापयत् प्रस्थापयामास॥ २७ ॥

मु ॥ प्रीणय्य नन्दयित्वा प्रत्ययापयत् प्रास्थापयत् ॥ २७ ॥

वी ॥ तइति॥ कृच्छ्रात्क्लेशात्मोचितास्तमेव कृष्णमेव जगत्पतेः कृष्णस्य चेष्टितानि च ध्यायन्तः अग्मुः ॥ २८ ॥

मु ॥ कृतानि कर्माणि ॥ २८ ॥

वी ॥ जगदुरिति ॥ ते नृपाः महापुरुषस्य कृष्णस्य चेष्टितं प्रकृतिभ्यः अमात्यादिभ्यो जगदुरूचुः, यथा भगवान् अन्वशासदनुशिक्षितवान्, तथा निरवद्याश्चक्रुः ॥२९॥

मु ॥ पर्यायतः जगदुः ऊचुः ॥ २९ ॥

वी ॥ जरासन्धमिति॥ भीमसेनेन प्रयोज्यकर्त्रा घातयित्वा सहदेवेन जरासन्धसुतेन पूजितः पार्थाभ्यां भीमार्जुनाभ्यां च संयुतः प्रायाद्ययौ ॥ ३० ॥

---

[1] प्रीणय्य. मु-भा-प्र-पा ॥

तेगत्वाऽऽखण्डलप्रस्थंशङ्खान्दध्मुर्जितारयः।हर्षयन्तस्स्वसुहृदोदुर्हृदांचासुखावहाः॥
तच्छ्रुत्वाप्रीतमनसइन्द्रप्रस्थनिवासिनः। मेनिरेमागधंशान्तंराजाचाप्तमनोरथः॥ ३२
अभिवन्द्याथराजानंभीमार्जुनजनार्दनाः। सर्वमाश्रावयांचक्रुरात्मनायदनुष्ठितम् ॥
निशम्यधर्मराजस्तुकेशवेनानुकम्पितः। आनन्दाश्रुकलामुञ्चन्प्रेम्णानोवाचकिञ्चन
इति श्रीभागवते महापुराणे दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

श्रीशुक उवाच—
एवंयुधिष्ठिरोराजाजरासन्धवधंप्रभोः।कृष्णस्यचानुभावंतंश्रुत्वाप्रीतस्तमब्रवीत्॥ १

---

मु ॥ ३० ॥

वी ॥ तइति ॥ ते कृष्णभीमार्जुनाः आखण्डलप्रस्थमिन्द्रप्रस्थं गत्वा शङ्खान् दध्मुः ध्वनयामासुः, तत्र हेतुः—जितः अरिः शत्रुः यैस्ते दुर्हृदाममित्राणामसुखं दुःखमावहन्तीति तथा सुहृदो मित्राणि हर्षयन्तश्च ॥ ३१ ॥

मु ॥ आखण्डलप्रस्थम् इन्द्रप्रस्थम् ॥ ३१ ॥

वी ॥ तदिति॥ तच्छङ्खध्वननं श्रुत्वा मागधं शान्तं हतं मेनिरे अमन्यन्त, राजा युधिष्ठिरस्तु आप्तः मनोरथो येन तथाभूतश्चासीत् ॥ ३२ ॥

मु ॥ शान्तं मृतम्, आप्तमनोरथोऽभूत् ॥ ३२ ॥

वी ॥ अपिच—अभिवन्द्येति॥ आत्मना आत्मभिः यदनुष्ठितं कृतं तत्सर्वम् आश्रावयामासुः ॥ ३३ ॥

मु ॥ ३३ ॥

वी ॥ निशम्येति ॥ आनन्दाश्रुकलाः आनन्दाश्रुबिन्दून् मुञ्चन् किञ्चिदपि नोवाच तूष्णीमासेत्यर्थः ॥ ३४ ॥

मु ॥ अनुकम्पितम् अनुगृहीतम् उक्तं तत् श्रुत्वा आनन्दाश्रुकणान् मुञ्चन् प्रेम्णा-हेतुना किञ्चित् नोवाच ॥ ३४ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

वी ॥ अथ राजसूययाजनशिशुपालवधात्मकं भगवच्चेष्टितमनुवर्णयति—चतुस्सप्ततितमेन एवमित्यादिना ॥ युधिष्ठिरो राजा तं जरासन्धघातनात्मकं कृष्णस्यानुभावं प्रभावं च श्रुत्वा तं श्रीकृष्णमब्रवीत् ॥ १ ॥

मु ॥ केशवेनानुकम्पितं निशम्य न किञ्चनोवाचेत्युक्तम्, परस्तान्न तु प्रतिवचनं

१. कणान् . मु-भा-प्र-पा ॥

युधिष्ठिर उवाच—

येस्युस्त्रैलोक्यगुरवस्सर्वेलोकास्सहेश्वराः। वहन्तिदुर्लभंलब्ध्वाशिरसैवानुशासनम्॥
सभवानरविन्दाक्षजनानामीशमानिनाम्।धत्तेऽनुशासनंभूमंस्तदत्यन्तविडम्बनम्॥
नह्येकस्याद्वितीयस्यब्रह्मणः [1]परमेष्ठिनः। कर्मभिर्वर्धतेतेजोह्रसतेचयथारवेः॥ ४
नचतेऽजित भक्तानां ममाहमितिमाधव।

---

दर्शितम्, तदुत्थापयति—एवमिति॥ युधिष्ठिरो राजा एवं प्रभोस्सकाशात् जरासन्ध-वधं तत्र कृष्णस्यानुभावंच श्रुत्वा प्रीतः तमब्रवीत्॥ १॥

वी॥ उक्तिमेवाह—यइति चतुर्भिः॥ ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः ये च सर्वे लोकाः जनाः तत्पालाश्च ते यस्यानुशासनं दुर्लभं लब्ध्वा भाग्यैरेव तल्लब्धमिति बहुमानेनेत्यर्थः, शिरसा वहन्ति॥ २॥

मु॥ तद्दर्शयति चतुर्भिः—ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः विधिशिवा दयश्च सर्वे लोकाः तत्पालाश्च शिरसैव तवानुशासनं वहन्ति, दुर्लभं लब्ध्वेति, भाग्येन लब्धमिति बहुमानेनेत्यर्थः॥ २॥

वी॥ सभवान् हे अरविन्दाक्ष ईशमात्मानं मन्यन्त इति तथा तेषां जनानाम् अनु-शासनं धत्ते करोतीति यत्तदत्यन्तविडम्बनं मनुष्यचेष्टाभिनयमात्रम्, अन्यथा सर्व-नियन्तुस्सङ्कल्पमात्रकॢप्तजगदुत्पत्तिस्थितिलयस्य तवैतत्साक्षाच्छत्रुविजयादिरूपं कर्म न घटत इति भावः॥ ३॥

मु॥ स भवान् अस्माकम् अनुशासनं धत्ते, तत् अत्यन्तं विडम्बनम् अनुरूपमनु-करणम्॥ ३॥

वी॥ननु प्रभावातिशयार्थमेवाहमपि इतरवत् तवानुशासनं दध इत्यत आह—नहीति॥ एकस्याविभक्तनामरूपचिदचिद्विशिष्टतया जगदुपादानकारणभूतस्य अद्वितीयस्य निमित्तकारणस्य च ब्रह्मणः तदुभयकारणत्वोपयुक्तस्वाभाविकसार्वज्ञ्यसर्वशक्तित्वादिकल्याणगुणबृहत्त्वशालिनः, एवं लीलाविभूतिनायकत्वमुक्तम्, परमे नित्यविभूत्याख्ये तिष्ठतीति तथा तस्य तव कर्मभिः प्राकृतशत्रुजयादिरूपैः तेजः प्रभावो न वर्धते नापि ह्रसते, यथा रवेरुदयास्तमयादिकर्मभिः न वर्धते न क्षीयते च तद्वत्॥ ४॥

मु॥कुतोऽनुकरणमित्यत्राह—यद्वा अनुशासनधारणेनेयं देवस्य तेजोहानिरित्याशङ्क्याह—नहीति॥ हि यस्मात् एकस्य अधिकरहितस्य अद्वितीयस्य स्वसदृशवस्त्वन्तररहितस्य ब्रह्मणः स्वाश्रितानपि बृंहयतः परमात्मनः जीववत् कर्मभिरतिशयरहितस्य ते कर्मभिः उत्कृष्टैः तेजो न वर्धते, निकृष्टैः न ह्रसते च, रवेरिव उदयास्तमयादिकर्मभिरित्यर्थः॥ ४॥

वी॥ उक्तमेव सहेतुकं कैमुत्यन्यायाभिप्रायेणाह—नचेति॥ हे माधव हे अजित ते तव भक्तानामेव पशूनामिव पशुतुल्यानां देहात्माभिमानिनामिव ममाहमिति त्वं तवेति च नानाधीः स्वदेहपरदेहतत्संबन्धिष्वनात्मभूतेष्वनात्मीयेष्वात्माभिमानात्मीयत्वाभिमा-

---

[1] परमात्मनः. मु-भा-प्र. पा॥

त्वंतवेति च नानाधीः पशूनामिववैकृता ॥ ५

श्रीशुक उवाच—

इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान्ब्रह्मवादिनः ॥ ६

द्वैपायनोभरद्वाजस्सुमन्तुर्गौतमोऽसितः।वसिष्ठश्चच्यवनःकण्वोमैत्रेयःकवषस्त्रितः॥ ७
विश्वामित्रोवामदेवस्सुमतिर्जैमिनिःक्रतुः।पैलःपराशरोऽगस्त्योवैशम्पायनएवच॥८
अथर्वाकश्यपोधौम्योरामोभार्गवआसुरिः।वीतिहोत्रोमधुच्छन्दोवीरसेनोऽकृतव्रणः
उपहूतास्तथैवान्येद्रोणभीष्मकृपादयः।धृतराष्ट्रस्सहसुतोविदुरश्चमहामतिः ॥ १०
ब्राह्मणाःक्षत्रियावैश्याश्शूद्रायज्ञदिदृक्षवः।तत्रेयुस्सर्वराजानोराज्ञांप्रकृतयोनृप॥११
ततस्तेदेवयजनंब्राह्मणास्स्वर्णलाङ्गलैः ।

---

नरूपननाधीः न च नास्ति, कुतः तद्धेतुकतेजोवृद्धिह्रासौ, किंपुनस्तव तौ न स्त इतीति भावः ॥ ५ ॥

मु ॥ नन्वेवमपि अहं सर्वेश्वरः ममेदं नीचं कर्म योग्यमिति मनसि कथं न भवेत्, अत आह—नचैत इति ॥ हे अजित तव भक्तानामेव तावत् इयम् अहं मम त्वं तवेति वैकृता देहदैहिकादिविकृतविषया नानाधीः नास्तीति किं पुनर्वक्तव्यमित्यर्थः, स्वदेहपरदेहतत्सम्बन्धिषु अनात्मात्मीयेषु आत्माभिमानात्मीयत्वाभिमानरूपतया नानारूपाधीः पशूनामिव अज्ञानामिव नास्ति ॥ ५ ॥

वी ॥ इतीति ॥ यज्ञिये यज्ञार्हे वसन्तादिरूपे काले स पार्थो युधिष्ठिरः कृष्णेनानुमोदितः युक्तानभियुक्तान् ब्रह्मवादिनः ब्राह्मणान् ऋत्विजो वृतवान् ॥ ६ ॥

मु ॥ स पार्थः इत्युक्त्वा यज्ञिये यज्ञोचितेच वसन्तादिकाले कृष्णानुमोदितो युक्तान् अभियुक्तान् भगवद्भक्तियुक्तानितिवा,ब्रह्मवादिनो ब्राह्मणान् ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥

वी ॥ तानेव निर्दिशति—द्वैपायनइतित्रिभिः ॥ अकृतव्रणान्तानेतान् ऋत्विगुपद्रष्ट्रादिभेदेन वव्र इति संबन्धः ॥ ७ ॥ ८ ॥ ९ ॥

मु ॥ तानाह—द्वैपायन इति त्रिभिः॥ अकृतव्रणान्तानेतान् ऋत्विगुपद्रष्ट्रादिभेदेन वव्रे ॥ ७ ॥ ८ ॥ ९ ॥

वी ॥ उपहूताइति ॥ अन्ये च द्रोणादय उपहूतास्सन्तो यज्ञं द्रष्टुमिच्छवः तत्रेयुराजग्मुरित्यन्वयः ॥ १० ॥ ११ ॥

मु ॥ अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १० ॥ ११ ॥

वी ॥ ततइति ॥ देवयजनं देवा इज्यन्तेऽस्मिन्निति तद्यज्ञभूमिं स्वर्णमयैः लाङ्गलैः हलैः कृष्ट्वा कर्षणादिभिस्संशोध्य नृपं युधिष्ठिरं दीक्षयांचक्रिरे दीक्षासंस्कारयुक्तमकुर्वन्, पुरा पूर्वकाले यथा वरुणस्य तद्वत्, अस्याप्युपकरणाः हैमाः हेममयाः आसन्निति

कृष्ट्वा तत्र यथान्यायं दीक्षयांचक्रिरे नृपम् ॥ १२
हैमाः किलोपकरणाः वरुणस्य यथा पुरा ॥
इन्द्रादयोलोकपालाःविरिञ्चिभवसंयुताः।सगणास्सिद्धगन्धर्वविद्याधरमहोरगाः॥
मुनयोयक्षरक्षांसिखगकिन्नरचारणाः।राजानश्चसमाहूताराजपत्न्यश्चसर्वशः ॥ १४
राजसूयंसमीयुस्स्मराज्ञःपाण्डुसुतस्यवै।मेनिरेकृष्णभक्तस्यसूपपन्नमविस्मिताः॥ १५
अयाजयन्महाराजंयाजकादेववर्चसः।राजसूयेनविधिवत्प्रचेतसमिवामराः ॥ १६
सौत्येहन्यवनीपालोयाजकान्सदसस्पतीन्। अपूजयन्महाभागान्यथावत्सुसमाहितः
सदस्यग्र्याहणार्हंवै[1]विमृशंश्चसभासदः। नाध्यगच्छदनैकान्त्यात्सहदेवस्तदाब्रवीत्

---

शेषः, तृतीयान्तपाठे हैमैर्यज्ञः प्रावर्ततेति शेषः ॥ १२ ॥

मु ॥ ततो वरणानन्तरं ते ब्राह्मणाः स्वर्णलाङ्गलैः देवयजनं यज्ञस्थानं कृष्ट्वा कर्षणादिभिः संशोध्य तत्र यथान्यायं दीक्षयांचक्रिरे दीक्षासंस्कारेण संस्कृतवन्तः, यथा पुरा वरुणस्य राजसूये, तथा अत्रापि हैमाः किलोपकरणाः उपस्काराः पात्रादयः आसन्निति शेषः ॥ १२ ॥

वी॥ इन्द्रादयइति ॥ विरिञ्चिभवाभ्याम् [2]इन्द्रादयो देवगणाः ये च समाहूताः राजानः तेषां पत्न्यश्च तत्र समीयुस्स्म,ते सर्वे श्रीकृष्णभक्तस्य पाण्डुसुतस्य राज्ञो राजसूयमविस्मितास्सन्तः सूपपन्नं सुसंपन्नं मेनिरे इत्यन्वयः ॥ १३ ॥ १४ ॥ १५॥

मु ॥ किञ्च—इन्द्रादय इति ॥ ये इन्द्रादयो देवगणाः ये च राजादयः समाहूताः तत्र समेयुः स्म, ते सर्वे कृष्णभक्तस्य पाण्डुसुतस्य राजसूयम् अविस्मितास्सन्तः सूपपन्नं सुतरां युक्तं मेनिरे इत्यन्वयः ॥ १३॥१४ ॥ १५ ॥

वी॥ अयाजयन्निति॥ देवानामिव वर्चो येषां ते याजकाः ऋत्विजः देवाः प्रचेतसं वरुणमिव महाराजं युधिष्ठिरं यथाविधि राजसूयेनायाजयन् ॥ १६ ॥

मु ॥ दीक्षानन्तरम् उपसदादिक्रमेण यज्ञं प्रवर्तयांचक्रुरित्याह—अयाजयन्निति ॥ याजकाः ऋत्विजः प्रचेतसं वरुणम् ॥ १६ ॥

वी ॥ सौत्यइति॥ सौत्येऽहनि सोमाभिषवदिने अवनीपालो युधिष्ठिरः अपूजयत् पूजयितुमुद्युक्तवानित्यर्थः ॥ १७ ॥

मु ॥ सौत्येऽहनि सोमाभिषवणदिने सदसस्पतीन् याजकान् ऋत्विजोऽन्यांश्च महाभागान् विधिवत्, कथम्भूतः ? सुसमाहितः विचार्य निश्चितसत्पात्रः ॥ १७ ॥

वी ॥ सदसीति ॥ सदसि सभायामग्र्याहणार्हमग्रपूजार्हं विमृशन्नपि नाध्यगच्छत् न निश्चितवान्, कुतः ? अनैकान्त्यात् योग्यानां बहुत्वेनैकस्याप्यविशेषात्, एवं सति तदा सहदेवो माद्रीसुतः सभासदः सभ्यानब्रवीत् ॥ १८ ॥

मु ॥ विचारमेवाह—सदसीति ॥ अग्र्याहणम् अग्रपूजा, तस्य अर्हं पात्रं सदसि विमृशन्तः सभासदः सभ्याः यदा नाभ्यगच्छन्, तदा सहदेवोऽब्रवीत्, कुतो नाभ्यग-

---

[1]. विमृशन्तस्सभासदः नाभ्यगच्छन्ननैकान्त्यात्. मु-भा-प्र-पा ॥ [2]. ब्रह्मरुद्राभ्यां संयुताः.पा॥

सहदेव उवाच—

अर्हतिह्यच्युतश्श्रैष्ठ्यंभगवान्त्सात्वतांपतिः।एषवैदेवतास्सर्वादेशकालधनादयः ॥

यदात्मकमिदंविश्वंक्रतवश्चयदात्मकाः।अग्निराहुतयोमन्त्रास्साङ्ख्यंयोगश्चयत्परम् ॥

एकएवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।

आत्मनाऽऽत्माश्रयस्सर्वान्सृजत्यवति हन्त्यजः ॥ २१

---

च्छन्? अनैकान्त्यात् योग्यानां बहुत्वेन एकस्यानिश्चयात्, यद्वा सद्गुणानां तत्रतत्र व्यभिचारात् सर्वेषामेकस्मिन्नभावादित्यर्थः ॥ १८ ॥

वी ॥ तदेवाह—अर्हतीति ॥ श्रैष्ठ्यं श्रेष्ठस्योचितमर्हणमर्हति, तत्र हेतुत्वेन विशिनष्टि—सात्वतां ब्रह्मविदां पूर्वोक्तद्वैपायनादीनां पतिः स्वामी, किंच—एष वा इत्यादि। एष भगवान् सर्वदेवताः शरीरात्मभावनिबन्धनमिदं सामानाधिकरण्यम् "स आत्मा अङ्गान्यन्या देवताः" इति श्रुतेरिति भावः, देशः "समे यजेत" इत्युक्तविधः कालो वसन्तादिः धनानि यज्ञोपयुक्तानि, आदिशब्दो यजमानर्त्विगादिसङ्ग्राहकः ॥ १९ ॥

वी ॥ यदात्मकमिति ॥ देशादयो धनान्ता इत्येतद्विश्वं सर्वं यदात्मकं यो भगवानात्मा यस्य तथाभूतं क्रतवश्च साङ्ख्यं प्रत्यगात्मयाथात्म्यानुचिन्तनं योगः परमात्मोपासना तत्सर्वं स भगवान्परः निर्वाहको यस्य तथाभूतम् ॥ २० ॥

मु ॥ सहदेववाक्यं दर्शयति—अर्हतीति षड्भिः ॥ हिरवधारणे, हे सभ्याः सात्वतां पतिः भगवान् अच्युत एव श्रैष्ठ्यमर्हणमर्हति, तत्र हेतुः—एष इति। सांख्यं ज्ञानयोगः, योगः, भक्तियोगश्च यत्परं यत्प्राप्त्यर्थं भवति ॥ १९ ॥ २० ॥

वी॥ किंबहुनेत्याह—इदं चिदचिदात्मकं जगदैतदात्म्यम् एष भगवानात्मा अन्तरात्मा यस्य तथाभूतं स्वार्थे ष्यञ्, एक एवाद्वितीयोऽसौ आसीदिति शेषः, "सदेवेदमग्र असीदेकमेवाद्वितीयम्" इतिवदयं निर्देशः, अविभक्तनामरूपाचिदचिद्विशिष्टपर एकशब्दः, निमित्तान्तरव्युदासार्थोऽद्वितीयशब्दः, एक इत्यनेन कारणावस्थचिदचितोस्तदात्मकत्वमुक्तम्, ऐतदात्म्यमित्यनेन कार्यावस्थयोः, एवंभूतोऽसावात्मा स्वयमाश्रय आधारो यस्य सः आत्मना उपकरणभूतेन सर्वान् समष्टिव्यष्टिपदार्थान् सृजति, अवति रक्षति, हन्ति संहरति, एवमप्यजः स्वशरीरभूतचिदचिद्गतोत्पत्त्यादिविकाररहितः "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इति श्रुत्यर्थोऽत्रानुसन्धेयः ॥ २१ ॥

मु ॥ अयमेव जगतामुपादानं निमित्तं चेत्याह—एक एवेति ॥ अनेन "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतिरुपबृंहिता भवति, एकमेवेति श्रुत्युपात्तं पदं स्मारयति—एक एवेति । प्रलये एक एवासीदित्यर्थः, अनेनोपादानत्वमुक्तं भवति, अद्वितीयः अधिष्ठात्रन्तररहितः, अनेन निमित्तत्वमुक्तम्, कार्यस्य कारणभूतभगवत्तादात्म्यमाह—ऐतदात्म्यमिति । एष कृष्ण आत्मा यस्य सः एतदात्मा तस्य भावः ऐतदात्म्यम्, भवितर्येव भाविनिर्देशः, एतदात्मकमित्यर्थः, "ऐतदात्म्यमिदं सर्वम्" इति श्रुतिः, अयं स्वयमेव स्वस्याश्रय इत्याह—आत्मनेति । अन्याधारनिरपेक्ष इत्यर्थः ॥ २१ ॥

विविधानीह कर्माणि जनयन्यदपेक्षया । ईहतेयदयंसर्वश्रेयोधर्मादिलक्षणम् ॥ २२
तस्मात्कृष्णायमहतेदीयतांपरमार्हणम् । एवंचेत्सर्वभूतानामात्मनश्चार्हणंभवेत् ॥ २३
सर्वभूतात्मभूतायकृष्णायानन्यदर्शिने । देयंशान्तायपूर्णायदत्तस्यानन्त्यमिच्छता ॥

इत्युक्त्वासहदेवोऽभूत्तूष्णींकृष्णानुभाववित् ।
तच्छ्रुत्वातुष्टुवुस्सर्वेसाधुसाध्वितिसत्तमाः ॥ २५
श्रुत्वाद्विजेरितंराजा[१]जातहार्दसभासदाम् ।

---

वी ॥ एवंभूतश्चेदसौ किमित्यस्मदादिवच्चेष्टते, अत आह—विविधानीति॥ यदपेक्षया यस्य लोकस्यापेक्षया धर्मादिलक्षणं धर्मादिरूपम्, आदिशब्दः काममोक्षसंग्राहकः, सर्वं श्रेयः जनयन् "लक्षणहेत्वोः" इति शत्रादेशः, संपादयितुमित्यर्थः, विविधानि कर्माणि ईहते चेष्टते, यत् यस्मादेवं तस्मादित्युत्तरेण संबन्धः ॥ २२ ॥

मु॥इह विविधानि जनयन् अयं जनो धर्मादिलक्षणं सर्वं श्रेयः ईहत इति यत्, तत् यदपेक्षया यस्मिन्नपेक्षया रागेण यत्प्राप्त्यर्थमित्यर्थः, यद्वा यस्यापेक्षया अनुग्रहेण विविधानि कर्माणि तपःप्रभृतीनि जनयन् कुर्वन् यत् यस्मात् सर्वोऽपि जनो धर्मादिलक्षणं श्रेयः ईहते साधयति सर्वाणि कर्माणि तत्फलानि च यदधीनानीत्यर्थः, यद्वा अयं कृष्णः ईहते लोकहितायेत्यर्थः ॥ २२ ॥

वी॥ तस्मादिति ॥ महते सर्वोत्कृष्टाय कृष्णाय दीयतां क्रियताम्, एवंचेत् कृष्णाय दीयते चेत्, सर्वभूतानाम् आत्मनश्च अर्हणं बहुमानं कृतं भवेत्, सर्वान्तरात्मत्वादिति भावः ॥ २३ ॥ [स्त्ययः दुर्लङ्घ्य] [द्धिः बालवाक्यै]

मु ॥ ॥ २३ ॥

वी ॥ एतदेव व्युत्पादयन् वंशधाय विशिंषन्नाह—सर्वभूतेति ॥ सर्वभूतानामन्तरात्मभूताय अतएवानन्ये न विद्येते स्वस्मात्पृथग्भूतं पश्यतीत्यन्यदर्शी, ततो नञ्समासः, तस्मै सर्वशरीरमात्रं नार्हं इतरे त्वन्यदर्शिनः, नहि तेषामन्यतमाय दत्तमितरेभ्यो दत्तं भवतीति भावः, शान्ताय रागद्वेषादिरहिताय इतरे त्वशान्ताः, नहि तेषामन्यतमाय दत्तमितरे सहन्त इति भावः, पूर्णाय स्वभावतोऽवाप्तसर्वकामाय नित्यसन्तोषिण इति यावत्, नह्यसन्तोषिणे दत्तमनन्तं भवतीति भावः, अतो दत्तस्य दानस्यानन्त्यं फलानन्त्यमिच्छता कामयमानेन उक्तविधाय कृष्णायैव देयम् ॥ २४ ॥

मु ॥ अस्मिन् पूजिते सर्वभूतानामात्मनश्चार्हणं कथं भवेत्, अत आह—सर्वभूतात्मभूतायेति॥ आत्मनि भगवति पूजिते तच्छरीरभूतानि भूतान्यपि पूजितानि स्युरित्यर्थः, अनन्यदर्शिने सर्वं स्वात्मकं पश्यते शान्ताय ऊर्मिषट्करहिताय पुण्याय परमार्हणं देयमिति ॥ २४ ॥

वी ॥ इतीति ॥ कृष्णानुभाववित् श्रीकृष्णप्रभाववित् सहदेवस्तूष्णीं बभूव, तत्सहदेवोक्तं श्रुत्वा सर्वे सत्तमाः द्वैपायनादयः साधुसाध्विति तुष्टुवुः ॥ २५ ॥

मु ॥ कृष्णानुभाववित् सहदेवः इति उक्त्वा तूष्णीम् अभूत् ॥ २५ ॥

वी॥ श्रुत्वेति॥ द्विजेरितं साधुसाध्वितिघोषं श्रुत्वा सभासदां सभ्यानां जातं हार्दम-

---

१. ज्ञात्वा. हार्दम्. पा ॥

समार्चयद्धृषीकेशंप्रीतःप्रणयविह्वलः ॥ २६

तत्पादाववनिज्यापश्शिरसालोकपावनीः ।

सभार्यस्सानुजामात्यस्सकुटुम्बोऽवहन्मुदा ॥ २७

वासोभिःपीतकौशेयैर्भूषणैश्चमहाधनैः। अर्हयित्वाश्रुपूर्णाक्षोनाशकत्समवेक्षितुम् ॥

इत्थंसभाजितंवीक्ष्यसर्वेप्राञ्जलयोजनाः।नमोजयेतिनेमुस्तंनिपेतुःपुष्पवृष्टयः ॥ २९

इत्थं निशम्य दमघोषसुतस्स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः ।

उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन्भगवते परुषाण्यभीतः ॥ ३०

[1]ईशोदुरत्ययःकालइतिसत्यवतीश्रुतिः।वृद्धानामपियद्बुद्धिर्बालवाक्यैर्विभिद्यते॥३१

यूयंपात्रविदांश्रेष्ठामामङ्ध्वंबालभाषितम् ।

---

भिप्रायं ज्ञात्वाचेति शेषः, यद्वा जातमभिव्यक्तं हार्दमभिप्रायो यस्मात्तत् द्विजेरितं श्रुत्वेत्यर्थः, राजा युधिष्ठिरः प्रीतः प्रीतियुक्तः प्रणयेन स्नेहेन विह्वलः परवशः समार्चयत् ॥

मु ॥ द्विजैः ईरितं साधु साध्विति वचनं श्रुत्वा हार्दम् अभिप्रायम् ॥ २६ ॥

वी ॥ अर्चनप्रकारमेवाह द्वाभ्यां—तत्पादाविति॥तस्य भगवतः पादाववनिज्य प्रक्षाल्य लोकान्पावयन्ति पुनन्तीति तथा ताः अपः भार्यादिसहितः शिरसा वहन् पीतैः कौशेयैश्च वासोभिः महाधनैः बहुमूल्यैः अनर्घैरिति यावत्, भूषणैश्चार्हयित्वा अश्रुभिरानन्दाश्रुभिः पूर्णे अक्षिणी यस्य सः तं भगवन्तम् अवनि[illegible] नालं न प्रबभूव ॥ २७ ॥ २८ ॥

मु ॥ समर्हणमेवाह—तत्पादाविति ॥ [illegible] प्रक्षाल्य ॥ २७ ॥

मु ॥ महाधनैः अमूल्यैः ॥ २८ ॥ [illegible]र्हति, तत्र हेतुः—

वी ॥ इत्थमिति ॥इत्येवं सभाजितं संपूजितं [illegible] ॥ १९ ॥ २० ॥य नमो जयेति वदन्त इति शेषः, तं कृष्णं नेमुः नमश्चक्रुः ॥ २९ ॥ [illegible]तदात्म्यम् [illegible]

मु ॥ सभाजितं पूजितम् ॥ २९ ॥ [illegible]ोऽसौ आसीत्

वी ॥ इत्थमिति ॥ इत्थमेवंभूतं कृष्णस्य गुणव[illegible]विभक्तन दमघोषसुतः शिशुपालः जातो मन्युः यस्य सः स्वासनादुत्थाय बाहुमुत्क्षिप्योद्धृत्य[illegible]र्षी क्रुद्धः अभीतश्च भगवते परुषाणि वचांसि संश्रावयन् संश्रावयितुमित्यर्थः, इदं वक्ष्यमाणमाह ॥ ३० ॥

मु॥ निशम्य दृष्ट्वा कृष्णगुणवर्णनजातमन्युः स्वपीठात् उत्थाय बाहुम् उत्क्षिप्य भगवते तन्निन्दार्थं परुषाणि दुर्वचांसि संश्रावयन् दमघोषसुतः सदसि इदमाह, अमर्षी असहमानः, अभीतः निश्शङ्कः ॥ ३० ॥

वी ॥ तदेवाह—ईशइत्यादिना ॥ ईशः ब्रह्मादीनामपि प्रभुः कालो दुरत्ययः दुरतिक्रमणीय इत्येवंविधा श्रुतिः किंवदन्ती सत्यवती यथार्था, कुतः ? यत् यस्मात् वृद्धानामपि बुद्धिः बालस्य सहदेवस्य वाक्यैः भिद्यते विपरीता क्रियत इत्यर्थः ॥ ३१ ॥

मु ॥ तद्वाक्यं दर्शयति—हे सदसस्पतयः सर्वे पात्रविदां श्रेष्ठाः, अतः कृष्णः अर्हणे पूजायां सम्मतो योग्य इति यत् बालस्य सहदेवस्य अल्पबुद्धेः भाषितं, तत् मा मङ्ध्वं मानुमन्यध्वम् ॥ ३१ ॥

---

१. अयं श्लोको मुनिभावप्रकाशिकायां चतुस्त्रिंशत्वेन व्याख्यातः । अतस्तत्र द्रष्टव्यमेतद्व्याख्यानम् । अतएव तावत्पर्यन्तं संख्याविपर्यासश्चेति बोध्यम् ॥

सदसस्पतयस्सर्वे कृष्णो यत्सम्मतोऽर्हणे ॥ ३२

तपोविद्याव्रतधराञ्ज्ञानविध्वस्तकल्मषान्।परमर्षीन्ब्रह्मनिष्ठाल्लोकपालैश्चपूजितान्॥

[१]सदसस्पतीनतिक्रम्यगोपोऽयंकुलपांसनः।यथाकाकःपुरोडाशंसपर्यांकथमर्हति ॥

वर्णाश्रमकुलापेतस्सर्वधर्मबहिष्कृतः । स्वैरवर्तीगुणैर्हीनस्सपर्यांकथमर्हति ॥ ३५

ययातिनैषांचकुलंशप्तंसद्भिर्बहिष्कृतम् । [२]वृथापापरतंशश्वत्सपर्यांकथमर्हति ॥ ३६

ब्रह्मर्षिसेवितान्देशान् [३]हित्वा तद्ब्रह्मवर्चसम् ।

---

वी ॥ यूयमिति ॥ हे सदसस्पतयः बालभाषितं मा मङ्ध्वं मा गृह्णीत, किं तत् ? यदर्हणे कृष्णः सम्मत इति तत् ॥ ३२ ॥

वी ॥ तपइत्यादि ॥ तपोऽनशनादि, विद्या शास्त्रजन्यं ज्ञानं,व्रतं कृच्छ्रादि, एतानि धरन्तीति तथा तान्, ज्ञानं परमात्मोपासनात्मकं, तेन विध्वस्तं कल्मषं पापं येषां तान् ब्रह्मणि परस्मिन्निष्ठा येषां तान् साक्षात्कृतब्रह्मस्वरूपानिति यावत्, एवंभूतान् परमर्षीन् अतिक्रम्य अनादृत्य कुलाधमोऽसौ गोपालः काकः पुरोडाशमिव सपर्यां कथमर्हति ॥

मु ॥ बालभाषितत्वमेवाह—तपइति ॥ अन्यांश्च सदसस्पतीन् अतिक्रम्य अयं गोपालः सपर्यां कथमर्हति नार्हतीत्येव, यथा काकः पुरोडाशं नार्हति, तद्वत्. कुलपांसनः कुलदूषकः मातुलघातुकत्वात् ॥ ३२ ॥ ३३ ॥

श्लो ॥ ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥

मु ॥ ईशः स्वतन्त्रः दुरत्ययःदुर्लङ्घ्यश्च काल इति श्रुतिः सत्यवती, यत् यतः कालाद्धेतोः वृद्धानामपि बुद्धिः बालवाक्यैः विभिद्यते बाध्यते, वास्तवार्थस्तु—गां भूमिं पालयतीति गोपालः, कुलपान् वंशध्रान् अंसते घातयतीति तथा सः, अकाकः कं च अकंच काके सुखदुःखे न विद्येते यस्य सः अवाप्तकाम इत्यर्थः, यथा आप्तकामः केवलं देवयोग्यं पुरोडाशमात्रं नार्हति, अपितु सर्वमपि, तथा अयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति, अपितु आत्मसमर्पणमपीत्यर्थः ॥ ३४ ॥

वी ॥ किंच—वर्णेति ॥ वर्णादिभ्योऽपेतः भ्रष्टः सर्वस्माद्वर्णादिप्रयुक्तधर्माद्बहिष्कृतश्च स्वैरं स्वच्छन्दं वर्तत इति तथा गुणैः निरवद्यैः हीनो रहितः ॥ ३५ ॥

मु॥ काकसाम्यमाह—वर्णादिभिरपेतः रहितः अत एव सर्वैः धर्मैः बहिष्कृतः असंस्पृष्टः स्वैरवर्ती परदारादिपरः गुणैः तपोविद्यादिभिः हीनः ॥ ३५ ॥

वी ॥ ययातिनेति ॥ एषां यदूनां कुलं ययातिना तत्कूटस्थेन शप्तं सद्भिः कुलीनैः बहिष्कृतम् , शश्वत्सदा वृथा पापे रतम् ॥ ३६ ॥

मु ॥ दुष्कुलोद्भूतश्चेत्याह—ययातिनेति ॥ येषां यदूनां कुलं ययातिना शप्तम् , शश्वत् वृथापानरतं सौत्रामण्यादेर्बहिः मद्यपाननिष्ठं, सद्भिः बहिष्कृतं च, कथम् असौ सपर्याम् अर्हति ॥ ३६॥

वी ॥ ब्रह्मर्षिसेवितानार्यावर्तान् देशान् तत् तथा ब्रह्मवर्चसं च त्यक्त्वा समुद्रं

---

१. सदस्पतीन्. पा ॥ २. वृथापानरतं. मु भा प्र-पा ॥

३. हित्वैतेब्रह्मवर्चसम्. मु-भा-प्र पा ॥

समुद्रं दुर्गमाश्रित्य बाधन्ते[1]दस्युवत्प्रजाः ॥ ३७

एवमादीन्यभद्राणिबभाषेनष्टमङ्गलः।नोवाच[2]भगवान्किञ्चिद्यथासिंहशिवारुतम्॥

भगवन्निन्दनंश्रुत्वादुस्सहं[3]तेसभासदः।कर्णौपिधायनिर्जग्मुश्शपन्तश्चेदिपंरुषा ॥

निन्दांभगवतश्शृण्वंस्तत्परस्यजनस्यवा।ततोनापैतियस्सोऽपियात्यधस्सुकृताच्च्युतः

समुद्रमध्यस्थं दुर्गं निषिद्धं देशमाश्रित्य दस्युवद्दुष्टसत्त्ववत्प्रजाः जनान् बाधन्ते ॥३७॥

मु ॥ दुर्देशवासित्वमाह—ब्रह्मर्षीति ॥ एते दस्यवो ब्रह्मर्षिसेवितान् ब्राह्मणा ऋषयश्च तैः सेवितान् देशान् ब्रह्मवर्चसं ब्राह्मं तेजश्च हित्वा समुद्रं दुर्गमेवाश्रित्य प्रजाः बाधन्ते ॥ ३७ ॥

वी ॥ एवमादीनीति॥ नष्टं मङ्गलं यस्य सः,हेतुगर्भमिदम्, अत एवमादीन्यभद्राणि परुषाणि बभाषे, भगवांस्तु यथा सिंहश्शिवारुतं शिवा फेरुल्लस्या रुतं ध्वनिं श्रुत्वा तूष्णीमास्ते, तथा किंचिदपि नोवाच तूष्णीं बभूवेत्यर्थः ॥ ३८ ॥

मु ॥ यतो नष्टमङ्गलः अतः एवमादीनि अभद्राणि बभाषे, तत् श्रुत्वा भगवान् किञ्चिदपि नोवाच, यथा शिवारुतं गोमायुरुतं श्रुत्वा सिंहः, वास्तवार्थस्तु—वर्णाश्रमकुलेभ्यः अपेतः "अगोत्रमवर्णम्" इति श्रुतेः, अजातिमत्तया सर्वधर्मबहिष्कृतः ईश्वरत्वात् स्वैरवर्ती अत एव हेयगुणरहितः एवम्भूतो जीवानामेव योग्यं सपर्यामात्रं कथमर्हतीत्यर्थः, अपिच कथं वर्णनीयो मादृशैरेषां यदूनां महिमा, यस्मात् एषां कुलं ययातिना शप्तमपि किं सद्भिः बहिष्कृतम्? अपितु शिरसा धृतं, किञ्च अस्मदादिकुलवत् वृथापानरतम् अतिनियताचारमित्यर्थः, अहो यदूनामेव तावत् ईदृशं माहात्म्यम्, यदुकुलवृद्धस्य ययातेश्शापोऽपि न प्राभूत्, अयं तु साक्षात् भगवान् वासुदेवः, अतः सपर्यामात्रं कथमर्हतीत्यर्थः, किञ्च ये राजानः दुष्टानुच्चाटयन्ति, ते तदर्थं कीकटादिदेशानप्याश्रयन्ति, एतेतु ब्रह्मर्षिसेवितान् एव देशान् आश्रित्य अब्रह्मवर्चसं समुद्रं दुस्सहमपि हित्वा हापयित्वेत्यर्थः, बाधन्ते तथा दस्यवः प्रजाः ताश्च, अयमर्थः—वेदतदर्थाभियोगो ब्रह्मवर्चसम्, तद्विरुद्धमब्रह्मवर्चसम्, मुद्रा लिङ्गम्, तत्सहितं समुद्रं वेदविरुद्धलिङ्गधारिणं पाषण्डमित्यर्थः, तत्तल्लिङ्गं त्याजयित्वा बाधन्ते दण्डयन्ति, कथम्भूतम्? दुर्गं धार्मिकवत्प्रतीतेः अधार्मिकतया दुर्ज्ञानमित्यर्थः, तथा दस्यूनपि प्रजावेषेण वर्तमानान् दण्डयन्ति. अतो यदुभ्यो धार्मिकोऽन्यो नास्तीति? पारुष्यन्तु न तलस्पर्शीति मन्तव्यम्, न विद्यते येभ्यो भद्राणि तान्यभद्राणि, अनष्टमङ्गलः, शिवाया जम्बुकस्य रुतं श्रुत्वा सिंहो नकिञ्चित् ब्रूते, तद्वत् ॥ ३८ ॥

वी ॥ भगवन्निन्दनमिति ॥ कर्णौ पिधायाच्छाद्य रुषा चेदिपं चैद्यं शपन्तो जग्मुः॥

मु ॥ ३९ ॥

वी ॥ कुतो निर्जग्मुरित्यत्रानिर्गमने प्रत्यवायमाह—निन्दामिति॥ तत्परस्य भगवत्परस्य जनस्य च निन्दां श्रुत्वा यः ततो नापैति न निर्गच्छति, सोऽपि श्रोतापि अपिशब्दान्निन्दकोऽपि सुकृतात् च्युतो भ्रष्टः अधः नरके पतति ॥ ४० ॥

मु॥ निर्गमने कारणमाह—निन्दामपीति॥ सुकृतात् च्युतस्सन् अधो नरकं याति॥

१. दस्यवः. मु-भा-प्र-पा ॥ २. किंचिद्भगवान्. पा ॥ ३. तत्सभा. पा ॥

ततः पाण्डुसुताः क्रुद्धा मत्स्याः केकयसृञ्जयाः ।
उदायुधास्समुत्तस्थुश्शिशुपालजिघांसवः ॥ ४१
ततश्चैद्यस्त्वसंभ्रान्तोजगृहेखड्गचर्मणी।भर्त्सयन्कृष्णपक्षीयात्राज्ञस्सदसिभारत॥४२
तावदुत्थायभगवान् स्वान्निवार्यस्वयंरुषा।शिरःक्षुरान्तचक्रेणजहारापततोरिपोः॥
शब्दःकोलाहलोह्यासीच्छिशुपालेहतेमहान्।तस्यानुयायिनोभूपादुद्रुवुर्जीवितैषिणः
चैद्यदेहोत्थितंज्योतिर्वासुदेवमुपाविशत्।पश्यतांसर्वभूतानामुल्केवभुविखाच्च्युता ॥
जन्मत्रयानुगुणितवैरसंरब्धयाधिया।ध्यायंस्तन्मयतांयातोभावोहिभवकारणम् ॥

---

वी ॥ ततइति ॥ सभासदां निर्गमनानन्तरं मत्स्यादयश्चोत्थाय क्रुद्धाः शिशुपालं हन्तुमिच्छवः उदायुधाः उद्धृतान्यायुधानि यैस्ते उत्तस्थुः ॥ ४१ ॥

मु ॥ ४१ ॥

वी ॥ ततइति॥ असंभ्रान्तः अवहितः हे भारत कृष्णपक्षीयान् राज्ञः भूपान् भर्त्सयन् खड्गखेटौ जग्राह ॥ ४२ ॥

मु ॥ असम्भ्रान्तः निर्भयः ॥ ४२ ॥

वी ॥ तावदिति ॥ तावत् तत्क्षणमेवोत्थाय स्वान् स्वपक्षीयान् निवार्य रुषा क्षुरस्येवान्तो धारा यस्य तेन चक्रेणापततो रिपोश्शिरो जहार चिच्छेद ॥ ४३ ॥

मु॥ तावदुत्थायेति ॥ अयमभिप्रायः—एष मत्पार्षदोऽधिकबलो हन्यात्सर्वानेतान्, अतो मयैव शीघ्रं हन्तव्यमिति तत्क्षणमेव उत्थाय शिरो जहार—इति ॥ ४३ ॥

वी॥ शब्दइति॥शिशुपाले हते सति महानुच्चैः कोलाहलः कलकलशब्द आसीत्, तस्य चैद्यस्यानुयायिनोऽनुवर्तिनो भूपाः जीवितेच्छवः दुद्रुवुः ॥ ४४ ॥

मु ॥ ४४ ॥

वी ॥ चैद्येति ॥ सर्वभूतानां पश्यतां सतां खादाकाशात् च्युता उल्का भुवीव चैद्यस्य देहादुत्थितं तेजो जीवात्मकं वासुदेवं श्रीकृष्णमुपाविशत्, तावत्प्रविश्य ततस्तत्साधर्म्यमापेत्यर्थः ॥ ४५ ॥

मु ॥ खात् आकाशात् भुवि च्युता पतिता उल्केव ॥ ४५ ॥

वी ॥ बद्वेव व्यञ्जयन्, कथं तन्निन्दकस्य तत्साधर्म्यप्राप्तिरिति शङ्कां च निराकुर्वन्नाह—जन्मत्रयेति ॥ जन्मत्रयेणानुगुणितमनुवर्तितं यद्वैरं तेन संरब्धया आविष्टया धिया ध्यायन् तन्मयतां तत्प्रचुरतां तत्साधर्म्यमिति यावत्, यातः प्राप्तः, पार्षदो बभूवेत्यर्थः, हि यस्माद्भावः चित्तवृत्तिः भवकारणं शुभाशुभजन्मनोर्निदानम्, अतः शुभाश्रयविषयो भावश्शुभभवकारणं बभूवेत्यर्थः ॥ ४६ ॥

मु ॥ वासुदेवं द्विषतः कथं तस्मिन् प्रवेशः?, अत आह—जन्मत्रये अनुगुणितेन वैरेण संरब्धया क्रोधाविष्टया धिया तन्मयतां तत्स्वरूपतां यातः पुनरपि पार्षदो बभूवेत्यर्थः, अत्र हेतुः—भावश्चित्तवृत्तिः, भवस्य शुभाशुभजन्मनः कारणम् ॥ ४६ ॥

ऋत्विग्भ्यस्ससदस्येभ्यो दक्षिणां विपुलामदात् ।
सर्वान्संपूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७

साधयित्वा क्रतुं राज्ञः कृष्णो योगीश्वरेश्वरः ।
उवास कतिचिन्मासान्सुहृद्भिरनुयाचितः ॥ ४८

ततोऽनुज्ञाप्यराजानमनिच्छन्तमपीश्वरः।ययौसभार्यस्सामात्यस्स्वपुरंदेवकीसुतः॥
वर्णितंतदुपाख्यानंमयातेबहुविस्तरम्।वैकुण्ठवासिनोर्जन्मविप्रशापात्पुनःपुनः॥५०
राजसूयावभृथ्येनस्नातोराजायुधिष्ठिरः।ब्रह्मक्षत्रसभामध्येशुशुभेसुरराडिव॥ ५१
राज्ञासभाजितास्सर्वेसुरमानवखेचराः।कृष्णंक्रतुंचशंसन्तस्स्वधामानिमुदाययुः॥
दुर्योधनमृतेपापंकलिंकुरुकुलामयम् । योनसेहेश्रियंस्फीतांदृष्ट्वापाण्डुसुतस्यताम्॥५३

---

वी॥ ऋत्विग्भ्यइति॥ एकराट् युधिष्ठिरः सदसि भवास्सदस्यास्तैस्सहितेभ्यः ऋत्विग्भ्यः विपुलां महतीं दक्षिणां ददौ, ततो विधिवदवभृथं नाम स्नानं चक्रे ॥ ४७॥

मु॥ राज्ञो यज्ञसमाप्तिमाह—ऋत्विग्भ्य इति॥ ससदस्येभ्यः सदस्यैः सहितेभ्यः॥

वी॥ साधयित्वेति॥ राज्ञो युधिष्ठिरस्य क्रतुं राजसूयं साधयित्वा सुहृद्भिः पृथादिभिर्याचितः प्रार्थितः कतिचिन्मासानुवास उषितवान्, मासानित्यत्यन्तसंयोगे द्वितीया ॥४८॥

वी॥ ततइति॥ ईश्वरो भगवान् स्वगमनमनिच्छन्तमपि राजानं युधिष्ठिरमनुज्ञाप्य स्वपुरं द्वारकां प्रति ययौ ॥४९॥

मु॥ कृष्णस्य प्रवृत्तिशेषमाह—साधयित्वेति द्वाभ्याम्॥ ४८॥ ४९॥

वी॥ जन्मत्रयानुगुणितवैरविस्तरबुभुत्सुमालक्ष्याह—वर्णितमिति॥ वैकुण्ठवासिनोर्जयविजययोः विप्राणां सनकादीनां शापाद्धेतोः पुनःपुनः जन्म तद्विषयं यदुपाख्यानं तन्मया तुभ्यं बहुविस्तरं यथा तथा वर्णितम् ॥५०॥

मु॥ वैकुण्ठवासिनोः जन्मेति, अत्र वक्तव्यं सर्वं पूर्वमेव प्रप्रश्रितमित्यर्थः॥५०॥

वी॥ राजसूयेति॥ राजसूयसंबन्धिना अवभृथेन स्नातः सुरराडिन्द्र इव शुशुभे॥

मु॥ सुरराडिव इन्द्र इव॥ ५१॥

वी॥ राज्ञेति॥ राज्ञा युधिष्ठिरेण संपूजितास्सर्वे सुरा मानवाः खेचरा अमराश्च शंसन्तः स्तुवन्तः मुदा हर्षेण स्वधामानि स्वस्वस्थानानि ययुः॥५२॥

मु॥ त्रिलोकवासिनां यानमाह—राज्ञेति॥ सुराः खेचराः प्रथमा नवाश्च॥५२॥

वी॥ किं सर्वे मुदा ययुः? नेत्याह—दुर्योधनमिति॥ दुर्योधनमेकं विना सर्वे मुदा ययुः, तत्र हेतुत्वेन विशिनष्टि—पापम् अत एव कलिं धर्मद्विषं कुरुकुलस्यामयं रोगवन्नाशनिदानम्, किंच यो दुर्योधनः समृद्धां पाण्डुसुतस्य श्रियं संपदं दृष्ट्वा न सेहे न सोढवान् ॥५३॥

मु॥ उत्तराध्यायबीजं वपति—दुर्योधनमिति॥ पापं धर्मद्विषम्, अत्र हेतुः—कलिं कलेरंशम् अत एव कुरुकुलस्य आमयं व्याधिवद्विनाशकम्॥५३॥

यइदंकीर्तयेद्विष्णोःकर्मचैद्यवधादिकम् । [1]राज्ञांमोक्षंवितानंचसर्वपापैःप्रमुच्यते॥५४
इति श्रीभागवते महापुराणे दशमस्कन्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

राजोवाच—
अजातशत्रोस्तंदृष्ट्वाराजसूयमहोदयम् । सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १
दुर्योधनंवर्जयित्वा[2]राजानमृषयस्सुराः । इतिश्रुतंनोभगवंस्तत्रकारणमुच्यताम्॥ २
श्रीशुक उवाच—
पितामहस्यतेयज्ञेराजसूयेमहात्मनः । बान्धवाःपरिचर्यायांतस्यासन्प्रेमबन्धनाः॥ ३
भीमोमहानसाध्यक्षो धनाध्यक्षस्सुयोधनः ।

---

वी॥ उपवर्णितोपाख्यानकीर्तनफलमाह —यइति ॥ राज्ञां जरासन्धबन्दीकृतानां मोक्षणं ततस्त्याजनं वितानं यज्ञं च यः कीर्तयेत् अनुवर्णयेत् स सर्वैः पापैः प्रमुच्यते ॥

मु॥ अध्यायत्रयश्रवणादिफलमाह—य इदमिति ॥ कीर्तयेदिति श्रवणोपलक्षणम् , आदिशब्देन जरासन्धवध उक्तः, चैद्यवधादिकं राज्ञां मोक्षं वितानं यज्ञञ्च इदं कर्म यः कीर्तयेत् सः सर्वपापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

वी॥ "दुर्योधनमृते पापम्" इत्यस्यैव विस्तरबुभुत्सया प्रष्टुमुक्तमनुवदति राजा—अजातशत्रोरिति॥ राजसूयस्य महोदयं महोत्सवं दृष्ट्वा मुमुदिरे सन्तुतुषुरिति नोऽस्माभिः श्रुतं त्वन्मुखादेवेत्यर्थः, हे भगवन् तत्र दुर्योधनासन्तोषे कारणमुच्यताम्॥ १ ॥ २ ॥

मु ॥ एकस्य दुर्योधनस्य दुःखकारणं प्रष्टुमनुवदति—अजातशत्रोरिति ॥ १ ॥

मु ॥ श्रुतं त्वत्त एवेत्यर्थः ॥ २ ॥

वी॥ तद्वक्तुं प्रस्तौति—पितामहस्येति॥ ते तव पितामहस्य महात्मनो राज्ञो युधिष्ठिरस्य राजसूये तस्य राज्ञो बान्धवाः प्रेमबन्धनाः प्रेमयन्त्रिताः परिचर्यायामासन् परिचेरुरित्यर्थः ॥ ३ ॥

मु ॥ दुर्योधनामर्षकारणत्वेन यज्ञमहोत्सवमेव सिंहावलोकनन्यायेन कथयति—पितामहस्येत्यादिना एकदान्तःपुरे तस्येत्यन्तेन प्राक्तनेन ग्रन्थेन ॥ प्रेमबन्धनाः प्रेमयन्त्रिताः पूजायां सत्करणे निरूपिता इति योज्यम् ॥ ३ ॥

वी ॥ तदेव प्रपञ्चयति—भीम इति ॥ महानसाध्यक्षः पाकशालाध्यक्षो बभूव,

---

१. राजमोक्षं. पा ॥ २. राजानस्सर्षयस्सुराः. पा ॥

सहदेवस्तु पूजायां नकुलो द्रव्यसाधने ॥ ४

सतांशुश्रूषणेजिष्णुःकृष्णःपादावनेजने। परिवेषणेद्रुपदजःकर्णोदानेमहामनाः॥ ५

युयुधानोविकर्णश्चहार्दिक्यविदुरादयः। बाह्लीकपुत्राभूर्याद्यायेचसन्तर्दनादयः॥ ६

निरूपितामहायज्ञेनानाकर्मसु तेतदा। प्रवर्तन्तेस्मराजेन्द्रराज्ञःप्रियचिकीर्षवः॥ ७

ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः।

चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम्॥ ८

मृदङ्गशङ्खपणवदुन्दुभ्यानकगोमुखाः। वादित्राणिविचित्राणिनेदुरावभृथोत्सवे॥ ९

नर्तक्योननृतुर्हृष्टागायकायूथशोजगुः। वीणावेणुतलोन्नादस्तेषांसदिवमस्पृशत्॥ १०

---

सुयोधनो दुर्योधनः धनाध्यक्ष आस, पूजायां सम्मानने सहदेवः,द्रव्यसाधने नानावस्तुसंपादने नकुलोऽभवदित्यर्थः॥ ४॥

मु॥ द्रव्यसाधने नानावस्तुसम्पादने॥ ४॥

वी॥ जिष्णुरर्जुनः सतां शुश्रूषणे चन्दनलेपनादौ, कृष्णः पादावनेजने पादप्रक्षालने, द्रुपदजः धृष्टद्युम्नः परिवेषणे भक्ष्यभोज्यादिविनियोगे,कर्णस्तु दाने निरूपित इति वचनविपरिणामेन उत्तरत्र संबन्धः॥५॥

मु॥ शुश्रूषणे चन्दनलेपनादौ पादसंवाहनादौच परिवेषणे अन्नोपदंशादिविभजने॥

वी॥ युयुधानस्सात्यकिः तत्प्रभृतयः महायज्ञे नानाकर्मसु निरूपितास्सन्तः राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छवः यथानियोगं प्रवर्तन्तेस्म प्रावर्तन्त॥ ६॥ ७॥

मु॥ हार्दिक्यः कृतवर्मा भूर्याद्याः भूरिश्रवःप्रभृतयः॥ ६॥

मु॥ तदा यज्ञारम्भे निरूपिताः नियुक्तास्सन्तो नानाकर्मसु प्रवर्तन्तेस्म॥ ७॥

वी॥ ऋत्विगिति॥ ऋत्विजश्च सदस्याश्च बहुविदश्च तेषु सुहृत्तमेषु च सूनृतादिभिः स्विष्टेषु सम्यक्पूजितेषु सत्सु,तत्र सूनृतं प्रियवाक्यम्, अर्हणमलङ्कारादि,सात्वतपतेः श्रीकृष्णस्य चरणं प्रविष्टे सति च द्युनद्यां गङ्गायामवभृथस्नपनं चक्रुः॥८॥

मु॥ ऋत्विजः सदस्याश्च बहुविदो विद्वांसश्च तेषु सुहृत्तमेषु च सूनृतसमर्हणदक्षिणाभिः प्रियवचनाराधनदानैः स्विष्टेषु सम्यक्पूजितेषु सात्वतपतेश्चरणं चैद्ये च प्रविष्टे सति ततश्च यज्ञसमाप्त्यनन्तरं द्युनद्यां गङ्गायाम्॥ ८॥

वी॥ तदेव प्रपञ्चयितुं तावद्गङ्गां प्रति गमनारम्भं प्रस्तौति—मृदङ्गेति॥ आवभृथे अवभृथसंबन्धिन्युत्सवे मृदङ्गादयः अन्यानि वादित्राणि वाद्यानि च विचित्राणि नेदुः दध्वनुः॥९॥

मु॥ अवभृथस्नपनान्ते च तद्दर्शयति—मृदङ्गेति॥ ९॥

वी॥ नर्तक्यइति॥ तेषां च तासां च तेषां "पुमान् स्त्रिया" इत्येकशेषः, गायकानां नर्तकीनां चेत्यर्थः, वीणादीनां नादः, यद्वा तेषां मृदङ्गादीनां वीणादीनां च स प्रसिद्धो नादः दिवमन्तरिक्षमस्पृशत् व्याप्तवान्॥ १०॥

मु॥ तत् तदा वीणाः वेणवः तलानिच तेषामुच्चैर्नादः दिवमस्पृशत्॥ १०॥

चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः। स्वलङ्कृतैर्भटैर्भूपानिर्ययूरुक्ममालिनः॥११
यदुसृञ्जयकाम्भोजकुरुकोसलकेकयाः। कम्पयन्तोभुवंसैन्यैर्यजमानपुरस्सराः॥
सदस्यर्त्विग्द्विजश्रेष्ठाब्रह्मघोषेणभूयसा। देवर्षिपितृगन्धर्वास्तुष्टुवुःपुष्पवर्षिणः॥१३
स्वलङ्कृतानरानार्योगन्धस्रग्भूषणाम्बरैः॥विलिम्पन्तोऽभिषिञ्चन्तोविजह्रुर्विविधैरसैः
तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः। पुम्भिर्लिप्ताःप्रलिम्पन्त्योविजह्रुर्वारयोषितः॥
गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः।

---

वी॥ चित्रेति॥ रुक्ममालाः स्वर्णमालाः एषां सन्तीति तथा, व्रीह्यादित्वान्मत्वर्थीय इनिः, ते भूपाः चित्रा ध्वजादयो येषां तैरिभेन्द्रादिभिः स्वलङ्कृतैर्भटैश्च सह निर्जग्मुः॥११॥

मु॥ तेषां नद्यागमनं वर्णयति—चित्राणि ध्वजपताकाग्राणि तैः इभेन्द्रैः स्यन्दनैः अर्वभिः अश्वैश्च भटैश्च सह रुक्ममालिनः॥११॥

वी॥ यद्विति॥ यजमानो युधिष्ठिरः पुरस्सरः पुरोयायी येषां ते यद्वादयः सैन्यैः भुवं कम्पयन्तो निर्ययुरिति पूर्वेण संबन्धः॥१२॥

मु॥ यदुसृञ्जयाद्या भूपाः सैन्यैः भुवनं कम्पयन्तः यजमानपुरस्सराः॥१२॥

वी॥ सदस्येति॥ सदस्यादयो भूयसा ब्रह्मघोषेण निर्ययुः, तदा देवादयः पुष्पवर्षिणः तुष्टुवुश्च॥१३॥

मु॥ सदस्यादयश्च भूयसा ब्रह्मघोषेण पुरान्निर्ययुः, नदीं गच्छतस्तान् देवर्षिपितृगन्धर्वाः पुष्पवर्षिणस्तुष्टुवुः॥१३॥

वी॥ किंच—गन्धादिभिः स्वलङ्कृताः नराः नार्यश्च विविधैः रसैः विलिम्पन्तोऽभिषिञ्चन्तश्च मिथो विजह्रुः॥१४॥

मु॥ नदीं प्राप्तानां विहारमाह—स्वलङ्कृता इति॥ गन्धादिभिः स्वलङ्कृताः नरा नार्यश्च हृष्टाः विविधैः रसैः विलिम्पन्तो मिथो विजह्रुः॥१४॥

वी॥ रसानेवाह—तैलेति॥ पुम्भिः कर्तृभिः तैलादिभिः लिप्ताः वारयोषितः पुनस्तैर्विलिम्पन्त्यः विजह्रुः, गोरसो दधिक्षीरादिः, गन्धोदकं चन्दनोदकम्॥१५॥

मु॥ रसानेवाह—तैलेति॥ सान्द्रकुङ्कुमादिभिः पुम्भिः लिप्ताः तांश्च विलिम्पन्त्यो वारयोषितश्च विजह्रुः॥१५॥

वी॥ गुप्ताइति॥ दिवि यथा विमानश्रेष्ठैः देव्यो देवस्त्रियः तथा नृदेव्यः राज्ञां स्त्रियः नृभिः भटैर्गुप्ताः रथादियानैरेतदवभृथस्नपनमुपलब्धुं द्रष्टुं निरगमन्निर्जग्मुः. ताः नृदेव्यः मातुलेयैः सखिभिश्च सिच्यमानाः सव्रीडेन हासेन विकसन्ति वदनानि यासां. ता विरेजुः॥१६॥

ता मातुलेयसखिभिः परिषिच्यमानास्सव्रीडहासविकसद्वदना विरेजुः ॥ १६
ता देवरानुत सखीन्सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकबरच्यवमानमाल्याः क्षोभं दधुर्मलधियां रुचिरैर्विहारैः ॥ १७
ससम्राड्रथमारूढस्सदश्वंरुक्ममालिनम्।व्यरोचतस्वपत्नीभिःक्रियाभिःक्रतुराडिव॥
पत्नीसंयाजावभृथ्यैश्चरित्वातेतमृत्विजः। आचान्तंस्नापयांचक्रुर्गङ्गायांसहकृष्णया॥
देवदुन्दुभयोनेदुर्नरदुन्दुभिभिस्समम्। मुमुचुःपुष्पवर्षाणिदेवर्षिपितृमानवाः ॥ २०

---

मु ॥ एवं वेश्यानां विहारमुक्त्वा यदुकुरुस्त्रीणां विहारमाह—गुप्ता इति द्वाभ्याम्॥ नृदेव्यो राजपत्न्यः एतत् अवभृथस्नानम् उपलब्धुं दिवि विमानवरैः देव्यो यथा नृभिः गुप्ता निरगमन् निरगुः, मातुलेयैः सखिभिश्च परितः सिच्यमानाः ताः सव्रीडो यो हासः तेन विकसन्ति वदनानि यासां ताः विरेजुः ॥ १६ ॥

वी ॥ ताइति ॥ ता नृदेव्यः दृतीभिः उदकनोदनचर्मयन्त्रैः देवरान् पतिभ्रातॄन् उत सखीन् सखीनपि सिषिचुः,स्वयं च तैस्सिक्ताः क्लिन्नानि सिक्तानि अम्बराणि यासां ताः अत एव विवृतं व्यक्तं गात्रं शरीरं कुचावूरू मध्यप्रदेशश्च यासां ताः औत्सुक्यात्तत्प्रयुक्त जलक्रीडातिशयान्मुक्तेभ्यः श्लथेभ्यः कबरेभ्यः केशबन्धेभ्यः च्यवमानानि गलन्ति माल्यानि पुष्पाणि यासां ताः रुचिरैर्विहारैः मलधियां कामिनां क्षोभं चित्तचाञ्चल्यं कामोद्रेकमिति यावत्, दधुश्चक्रुः ॥ १७॥

मु ॥ देवरान् पतिभ्रातॄन् उत सखीन् दृतीभिः उदकपूर्णचर्मामत्रैः सिषिचुः, ता रुचिरैः विहारैः मलधियां कामाविष्टधियां क्षोभं दधुः, विवृतानि प्रकटीभूतानि गात्रकुचोरुमध्यानि यासां ताः औत्सुक्येन मुक्तबन्धनेभ्यः कबरेभ्यः च्यवमानानि माल्यानि यासां ताः ॥ १७ ॥

वी ॥ सइति ॥ सन्तस्समीचीनाः अश्वाः यस्य रुक्ममाला अस्य सन्तीति तथा तं रथमारूढस्सम्राट् युधिष्ठिरः क्रियाभिरङ्गक्रियाभिः प्रयाजादिभिः क्रतुराट् राजसूय इव स्वपत्नीभिः व्यरोचत रराज ॥ १८ ॥

मु ॥ राज्ञो निर्गमनमाह—स सम्राडिति ॥ स्वपत्नीभिः स्वसम्बन्धिनीभिः पत्नीभिः सह व्यरोचत, क्रियाभिरिष्टिभिः सह क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥

वी ॥ पत्नीति ॥ पत्नीसंयाजाः यागविशेषाः, अवभृथस्य संबन्धि आवभृथ्यं तच्च कर्म चरित्वा अनुष्ठाय ऋत्विजः तं सम्राजम् आचान्तं कृताचमनं कृष्णया द्रौपद्या सहितं स्नापयांचक्रुः ॥ १९ ॥

मु ॥ ऋत्विजः, पत्नीसंयाजाः यागविशेषाः,अवभृथसम्बन्धिनः आवभृथ्याः, तैः चरित्वा तान् अनुष्ठायेत्यर्थः, गङ्गायां कृष्णया सह स्नापयांचक्रुः ॥ १९ ॥

वी॥ देवदुन्दुभयइति॥ नराणां दुन्दुभिभिः समं सह देवानां दुन्दुभयो नेदुः, देवादयः पुष्पवर्षाणि मुमुचुः ॥ २० ॥

मु ॥ २० ॥

सस्नुस्तत्रततस्सर्वेवर्णाश्रमयुताजनाः। महापातक्यपियतस्सद्योमुच्येतकिल्बिषात् ॥
अथ राजाऽहतेक्षौमेपरिधायस्वलङ्कृतः।ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः॥

[1]बन्धूञ्ज्ञातीन्नृपान्मित्रान् सुहृदोऽन्यांश्च सर्वशः।
अभीक्ष्णं पूजयामास नारायणपरो नृपः॥ २३

सर्वे जनास्सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घहाराः।
नार्यश्च कुण्डलयुगालकबृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः॥ २४

अथर्त्विजोमहाशीलास्सदस्याब्रह्मवादिनः।विप्रक्षत्रियविट्छूद्राराजानोयेसमागताः

---

वी॥ सस्नुरिति॥ ततः स्नपनानन्तरं चातुर्वर्ण्यचातुराश्रम्यव्यवस्थयाऽवस्थितास्सर्वे जनास्सस्नुः स्नानं चक्रुः, तत्रकारणमाह—महापातकीति। यतः स्नानात् महापातक्यपि किल्बिषाद्ब्रह्महत्यादिपातकान्मुच्येत, किं पुनरितरे पातकिनस्ततो मुच्येरन्निति कैमुत्यनयद्योतनार्थोऽपिशब्दः, पापनिवृत्तये सस्नुरिति भावः॥ २१॥

मु॥ ततो वर्णाश्रमयुता जनाः सर्वे तत्र गङ्गायां सस्नुः, तत्र हेतुः—यतोऽवभृथस्नानात्॥ २१॥

वी॥ अथेति॥ राजा युधिष्ठिरः अहते नूतने क्षौमे वस्त्रे परिधाय आभरणादिभिः ऋत्विगादीन् आनर्च अर्चितवान्॥ २२॥

मु॥ अथ राजा अहते नूतने क्षौमे दुकूले परिधाय स्वलङ्कृतो भूत्वा आभरणाम्बरैः आनर्च अर्चितवान्॥ २२॥

वी॥ बन्धूनिति॥ मित्रानिति पुंस्त्वमार्षम्, तत् नृपानित्यस्य विशेषणम्, अभीक्ष्णं पुनःपुनः पूजयामास, तत्र हेतुत्वेन विशिनष्टि—नारायणः परो यस्य सः सर्वस्य नारायणात्मकत्वबुद्धियुक्त इत्यर्थः॥ २३॥

मु॥ नारायणपरः नारायणभक्तः स नृपः, बन्धवः सखायः, ज्ञातयः सपिण्डाः, नृपेषु मध्ये अमित्राः मित्रेभ्योऽन्ये,सुहृदः प्रत्युपकारनिरपेक्षमुपकर्तारः, अन्यांश्च सूतमागधादीन्, सर्वशः सङ्घशः अभीक्ष्णं पूजयामास॥ २३॥

वी॥ सर्वइति॥ सर्वे जनाः नराः सुराणामिव रुक् कान्तिर्येषां ते मणिकुण्डलादीनां द्वन्द्वः, ततो मत्वर्थीयोऽच्, मणिकुण्डलाभ्यां सहिताः स्रगादयो येषामिति वा, तथाभूताः विरेजुः, नार्यस्तु कुण्डलयुगेनालकवृन्देन च जुष्टा वक्त्रस्य श्रीर्यासां तथाभूताः कनकमेखलयोपलक्षिताश्च विरेजुः॥ २४॥

मु॥ तत्र सर्वे जनाः पुरुषा नार्यश्च विरेजुः, कथम्भूता जनाः? सुराणामिव रुक् कान्तिः येषां ते मणिमयानि कुण्डलानि स्रजः उष्णीषाणि शिरोवेष्टनानि कञ्चुकानि कवचानि दुकूलानि महार्घा हाराश्च येषां ते, कथम्भूता नार्यः? कुण्डलयुगेन अलकबृन्देन च जुष्टा वक्त्रश्रीः यासां ताः कनकमेखलया सुवर्णमयकाञ्च्योपलक्षिताः॥ २४॥

वी॥ अथेति॥ महच्छीलं सुस्वभावस्सद्वृत्तिर्वा येषां ते ऋत्विगादयः पूजितास्सन्तः

---

१. बन्धुज्ञातिनृपामित्रसु. मु-भा-प्र-पा॥

देवर्षिपितृभूतानिलोकपालास्सहानुगाः। पूजितास्तमनुज्ञाप्यस्वधामानिययुर्नृप ॥
हरिदासस्यराजर्षेराजसूयमहोदयम्।नैवातृप्यन्प्रशंसन्तःपिबन्मर्त्योऽमृतंयथा ॥ २७
ततोयुधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् ।
प्रेम्णा निवारयामास कृष्णं च त्यागकातरः ॥ २८
भगवानपितत्राङ्गन्यवात्सीत्तत्प्रियङ्करः।प्रस्थाप्ययदुवीरांश्चसाम्बादीन्वैकुशस्थलीम्
इत्थंराजाधर्मसुतोमनोरथमहार्णवम् । सुदुस्तरंसमुत्तीर्यकृष्णेनासीद्गतज्वरः ॥ ३०
एकदाऽन्तःपुरेतस्यवीक्ष्यदुर्योधनश्श्रियम्।अतप्यद्राजसूयस्यमहत्त्वंचाच्युतात्मनः॥
यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्म्यो नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।

---

हे नृप तमनुज्ञाप्य तदनुज्ञामुपादायेत्यर्थः, स्वधामानि स्वगृहाणि ययुः ॥ २५ ॥ २६ ॥

मु ॥ त्रिलोकवासिनां स्वस्थानगमनमाह—अथेति द्वाभ्याम् ॥ राजानोऽभिषिक्ताः ॥ २५ ॥ २६ ॥

वी ॥ हरिदासस्येति ॥ राजसूयमहोत्सवं प्रशंसन्तो नातृप्यन्, यथा मर्त्यः अमृतं पिबन् न तृप्यति, तद्वत् ॥ २७॥

मु ॥ तेच राजसूयं प्रशंसन्तो ययुरित्याह—हरिदासस्येति ॥ २७ ॥

वी ॥ ततइति ॥ सुहृदश्च संबन्धिनो ज्ञातींश्च बान्धवांश्च जिगमिषून् प्रेम्णा निवारयामास, त्यागाद्विश्लेषात्कातरः दीनः प्रेम्णाच कृष्णं वारयामास ॥ २८ ॥

मु॥ सुहृदादीन् गन्तुमुद्यतान् कश्चित्कालं तत्रैव निवासयामासेत्याह—तत इति॥

वी ॥ भगवानिति ॥ तस्य युधिष्ठिरस्य प्रियङ्करः प्रियं चिकीर्षुरिति यावत्, कुशस्थलीं द्वारकां प्रति साम्बादीन् यदुवीरान्प्रस्थाप्य प्रयाप्य स्वयं तत्रैव अन्यानि कतिचिद्दिनान्यवात्सीदुषितवान् ॥ २९ ॥

मु ॥ कुशस्थलीं द्वारकाम् ॥ २९ ॥

वी ॥ इत्थमिति ॥ सुदुस्तरं मनोरथं राजसूयचिकीर्षारूपं महार्णवं कृष्णेन कर्णधारस्थानीयेन समुत्तीर्य गतज्वरो निश्चिन्त आसीत् ॥ ३० ॥

मु ॥ राजसूयमुपसंहरति—इत्थमिति ॥ मनोरथमहार्णवं कृष्णेन हेतुना समुत्तीर्य गतज्वरः निश्चिन्तः आसीत् ॥ ३० ॥

वी ॥ एकदेति ॥ अच्युते भगवत्यात्मा मनो यस्य तस्य युधिष्ठिरस्यान्तःपुरे श्रियं संपदं राजसूयस्य महत्त्वं चावलोक्य दुर्योधनोऽतप्यत ॥ ३१ ॥

मु ॥ यदर्थं धर्मपुत्रस्य विभूत्यतिशयो वर्णितः, तदाह—एकदेति ॥ अन्तःपुरे वसन् दुर्योधनः एकदा अच्युते आत्मा मनो यस्य तस्य धर्मपुत्रस्य श्रियं राजसूयस्य महत्त्वं महिमानं च वीक्ष्य अतप्यत् न सेहे ॥ ३१ ॥

वी ॥ श्रियमेव प्रपञ्चयंस्तत्परितापमाह—यस्मिन्निति द्वाभ्याम् ॥ यस्मिन्नन्तःपुरे विश्वसृजा विश्वकर्मणा उपक्लृप्ताः रचिताः नानाविधाः नरेन्द्रादीनां लक्ष्म्यः भोग्यभोगोपकरणभोगस्थानादिलक्ष्म्यः भान्ति, द्रुपदराजसुता द्रौपदी ताभिः लक्ष्मीभिः पतिमु-

ताभिः पतिं द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२
यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारु कुचकुङ्कुमशोणहारं श्रीमन्मुखं चपलकुण्डलकुन्तलाढ्यम् ॥ ३३
सभायांमयक्लृप्तायांक्वापिधर्मसुतोविराट्।वृतोऽनुजैर्बन्धुभिश्चकृष्णेनापिस्वचक्षुषा ॥
आसीनःकाञ्चनेसाक्षादासनेमघवानिव।पारमेष्ठ्यश्रियाजुष्टस्स्तूयमानश्चवन्दिभिः॥
तत्रदुर्योधनोमानीपरीतोभ्रातृभिर्नृप।किरीटमालीन्यविशदसिहस्तः[१]क्षिपन्नृपान् ॥

---

पतस्थे पर्यचरत्. यस्यां द्रुपदराजसुतायां विषक्तम् आसक्तं हृदयं यस्य सः कुरुराट् दुर्योधनः अतप्यत् ॥ ३२ ॥

मु ॥ ततः किमित्यत आह—यस्मिन्निति ॥ विश्वसृजा मयेन उपक्लृप्ता रचिता नरेन्द्रादीनां लक्ष्म्यः सम्पदः यस्मिन् अन्तःपुरे नाना विभान्ति किल, यस्यां विषक्तहृदयः कुरुराट् दुर्योधनः पूर्वम् अतप्यत्, सा द्रुपदराजसुता ताभिः संपद्भिरुपलक्षिता यस्मिन् पतिम् उपतस्थे ॥ ३२ ॥

वी ॥ यस्मिन्निति ॥ तदा दुर्योधनपरितापकाले यस्मिन्नन्तःपुरे यदुपतेः कृष्णस्य महिषीसहस्रं पत्नीसहस्रं परितापावहत्वेनासेति शेषः, सहस्रमिति बहुत्वोपलक्षणम्, कथंभूतं ? श्रोणीभरेण नितम्बभरेण शनकैः क्वणद्भिः चरणाभरणध्वननपूर्वकं चलद्भिः अङ्घ्रिभिश्शोभा यस्य तत् मध्ये सुचारु चारुमध्यमित्यर्थः, कुचकुङ्कुमैः शोणाः हाराः यस्य तत् श्रीमन्ति शोभायुक्तानि मुखानि यस्य तत् चपलैः कुण्डलैः कुन्तलैश्च आढ्यं संपन्नम् ॥ ३३ ॥

मु ॥ तस्मिंश्च मधुपतेः कृष्णस्य महिषीसहस्रमिति बहुत्वोपलक्षणम्, उवासेत्यर्थः, अनेन महत्त्वं कथितम्, तस्मिन् अन्तःपुरे श्रियं दृष्ट्वा दुर्योधनोऽतप्यदित्यन्वयः, श्रोणीभरेण जघनभारेण हेतुना शनकैः क्वणदङ्घ्रिशोभं मणिनूपुरैः क्वणद्भिः अङ्घ्रिभिः शोभा यस्य तत् मध्ये सुचारु सुचारुमध्यमिति यावत्, कुचस्थेन कुङ्कुमेन शोणा हारा यस्य तत् श्रीमन्ति मुखानि यस्य तत् चपलैः चलद्भिः कुण्डलैः कुन्तलैश्च आढ्यम् ॥

वी ॥ सभायामिति ॥ क्वापि कदाचित् मयेन क्लृप्तायां मयविद्यायामिति पाठे विद्याप्रभावरचितायामित्यर्थः, स्वचक्षुषा हिताहितज्ञापकेन कृष्णेन परिवृतो रेजे इति शेषः ॥

मु ॥ क्वचित् कदाचित् विराट् विरेज इति शेषः, स्वचक्षुषा स्वनेत्रभूतेन ॥ ३४ ॥

वी ॥ किंच—आसीनइति ॥ पारमेष्ठ्यश्रिया चतुर्मुखसंपत्सदृशश्रिया जुष्टः सेवितः इन्द्र इवासीन उपविष्टवान् ॥ ३५ ॥

मु ॥ ॥ ३५ ॥

वी ॥ तत्रेति—किरीटमाले अस्य स्त इति तथा मानी साहंकारः असिः खड्गो हस्ते यस्य सः भ्रातृभिः दुश्शासनादिभिः परिवृतः नृपान् क्षिपन् निन्दन् तत्र सभायां न्यविशत् विवेश. रुषेति पाठे द्वारपालान् क्षिपन्नित्यर्थः ॥ ३६ ॥

मु ॥ मानी अहंकारी किरीटंच मालाच विद्येते यस्य सः न्यविशत् विवेश, क्षिपन्

---

१. क्षिपन्रुषा. मु-भा-प्र पा ॥

स्थलेऽभ्यगृह्णाद्वस्त्रान्तंजलंमत्वास्थलेऽपतत्।जलेचस्थलवद्भ्रान्त्यामयमयाविमोहितः
जहासभीमस्तंदृष्ट्वास्त्रियोनृपतयोऽपरे।निवार्यमाणाअप्यङ्गराज्ञाकृष्णानुमोदिताः ॥

स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम्।
हाहेति शब्दस्सुमहानभूत्तदा अजातशत्रुर्विमना इवाभवत् ॥ ३९
बभूव तूष्णीं भगवान्भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥
एतत्तेऽभिहितंराजन्यत्पृष्टोऽहमिहत्वया।दुर्योधनस्यदौरात्म्यंराजसूयेमहाक्रतौ॥४०
इति श्रीभागवते महापुराणे दशमस्कन्धे पञ्चसप्ततितमोऽध्यायः ॥ ७५॥

---

द्वाःस्थान् अधिक्षिपन् ॥ ३६ ॥

वी ॥ स्थलइति ॥ शत्रूणां जलस्थलबुद्धिविपर्यासकारिणीं सभामाविशन् दुर्योधनस्तावत्स्थले जलभ्रान्त्येति शेषः, वस्त्रान्तमभ्यगृह्णात् उद्धृतवान्,तथा क्वचित् स्थले जलं मत्वा न्यपतत्, तथा जले च स्थलवद्भ्रान्त्या न्यपतत्, जलविषयकज्ञानस्य स्थलविषयकज्ञानसारूप्यज्ञापनाय वत्करणम् , तदात्मिकया भ्रन्त्येत्यर्थः,भ्रान्तौ कारणं वदन्विशिनष्टि --मयस्य मायया विमोहित इति ॥ ३७ ॥

मु ॥ सः स्थले जलं मत्वा वस्त्रान्तम् अभ्यगृह्णात् आकुञ्चितवान्, अस्थले अगाधे जले स्थलवद्भ्रान्त्या अपतच्च, तत्र हेतुः—मयमायाविमोहित इति । मयेन कृतया मायया विमोहितः ॥ ३७ ॥

वी ॥ जहासेति ॥ तम् एवंभूतं दुर्योधनं दृष्ट्वा भीमः जहास हसितवान्, तथा अन्ये नृपाश्च राज्ञा युधिष्ठिरेण निवार्यमणा अपि भगवता अनुमोदिताः तं पश्यतेत्येवं प्रबोधिताः जहसुः ॥ ३८ ॥

मु ॥ अङ्ग हे राजन् तं तथाभूतं दृष्ट्वा भीमो जहास, स्त्रियो द्रौपद्यादयः अपरे नृपतयश्च राज्ञा निवार्यमाणा अपि कृष्णेन अनुमोदिताः जहसुः ॥ ३८ ॥

वी॥ सइति॥ स दुर्योधनः लज्जितोऽधोमुखः गजाह्वयं हास्तिनपुरं ययौ,तदा सुमहानुच्चैः हाहा दुर्योधनोऽवमानित इत्येवंविधः शब्दो बभूव, विमना इव अभवत्, इवशब्दोऽनतिरिक्तार्थकः ॥ ३९ ॥

मु ॥ किन्तेन फलितमित्यत्राह—स इति॥ तूष्णीं किमप्यनुक्त्वैव भुवो भरं जिहीर्षुरिति, यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रान्तिं प्राप, मयमायातु निमित्तमात्रम्, स भूभारहरणार्थं दुर्योधनस्य भीमादिहास्येनच पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ३९ ॥

वी ॥ प्रश्नस्योत्तरमुक्तं निगमयति—तदिति॥ हे राजन् यत् अहं त्वया पृष्टः तस्यैतदुत्तरं तुभ्यमितीत्थम् अभिहितम्, किं तत् ? यद्दुर्योधनस्य दौरात्म्यं युधिष्ठिरसंपदवलोकनजपरितापरूपं दौर्जन्यम् ॥ ४० ॥

मु ॥ प्रश्नोत्तरमुपसंहरति—राजसूये महाक्रतौ सुयोधनस्य दौरात्म्यं प्रति यत्

सात्ववधकथारम्भघट्टः

श्रीशुक उवाच—

अथान्यदपिकृष्णस्यशृणुकर्माद्भुतंनृप।क्रीडानरशरीरस्ययथासौभपतिर्हतः॥ १

शिशुपालसखस्साल्वो रुक्मिण्युद्वाह आगतः।
यदुभिर्निर्जितस्सङ्ख्ये जरासन्धादयस्तदा ॥ २

साल्वःप्रतिज्ञामकरोच्छृण्वतांसर्वभूभुजाम्।अयादवांक्ष्मांकरिष्येपौरुषंममपश्यत॥ ३

इतिमूढःप्रतिज्ञायदेवंपशुपतिंप्रभुम्।आराधयामासनृपपांसुमुष्टिंसकृद्ग्रसन् ॥ ४

संवत्सरान्ते भगवानाशुतोष उमापतिः।

---

त्वया प्रष्टोऽहम्, एतत् ते तुभ्यम् अभिहितं मयेत्यन्वयः॥ ४० ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

वी ॥ अथ साल्ववधात्मकं भगवतश्चेष्टितमनुवर्णयितुं प्रस्तौति षट्सप्ततितमेन—अथेति ॥ क्रीडार्थं नरस्येव शरीरं यस्य तस्य कृष्णस्याद्भुतमन्यदपि चेष्टितं शृणु, किं तत्? सौभपतिः सौभं नाम पुरं तस्य पतिः साल्वो यथा येन प्रकारेण हतः, तथा तस्य हननमित्यर्थः॥ १॥

मु ॥ हे नृप अथ अनन्तरं क्रीडार्थं गृहीतनरदेहस्य कृष्णस्य अन्यत् अत्यद्भुतं कर्म शृणु, किन्तदित्यत्रोक्तं—यथेति। सौभं नाम पुरं कामगं तस्य पतिः साल्वः यथा हतः अभूत्, तथा शृणु ॥ १ ॥

वी ॥ शिशुपालसखइति ॥ यदा साल्वो रुक्मिणीविवाहे आगतः सङ्ख्ये युद्धे निर्जितः जरासन्धादयश्च जिताः,स तदा सर्वभूतानां शृण्वतां प्रतिज्ञामकरोदिति संबन्धः, प्रतिज्ञामेव दर्शयति—अयादवामिति। यादवरहितां क्ष्मां भूमिं करिष्यामि, मे पराक्रमं पश्यत ॥ २ ॥ ३ ॥

मु ॥ कुतो हेतोरसौ कृष्णेन हतः?, कथञ्च सौभं लब्धवान्?, कदावा यदुभिर्युरुध्यदित्यत्राह—शिशुपालः सखा यस्य सः रुक्मिण्युद्वाहे यदा जरासंधादयः तदा यदुभिः संख्ये युद्धे निर्जितः साल्वः सर्वभूभुजां शृण्वतां प्रतिज्ञाम् अकरोत्, तामेवाह—अयादवामिति। पौरुषं वीर्यम् ॥ २ ॥ ३ ॥

वी ॥ इतीति ॥ इत्थं प्रतिज्ञाय अत एव मूढः पशुपतिं रुद्रम् अराधयामास, किं कुर्वन्? प्रत्यहं सकृत्पांसुमुष्टिमेकं ग्रसन् भक्षयन् आराधयामासेति संबन्धः॥ ४ ॥

मु ॥ पांसुमुष्टिं सकृत् प्रतिदिनमेकवारं ग्रसन् भक्षयन् पशुपतिम् आराधयामास ॥ ४ ॥

वी ॥ संवत्सरान्तइति ॥ आशुतोषः ईषत्सन्तोषवान् भगवद्विद्वेषित्वादिति भावः,

वरेण च्छन्दयामास ससाल्वं शरणागतम् ॥ ५
देवासुरमनुष्याणांगन्धर्वोरगरक्षसाम्।अभेद्यंकामगंवव्रेसयानंवृष्णिभीषणम् ॥ ६
तथेतिगिरिशादिष्टोमयःपरपुरञ्जयः।पुरंनिर्मायसाल्वायप्रादात्सौभमयोमयम् ॥ ७
सलब्ध्वाकामगंयानंतमोधामदुरासदम्।ययौद्वारवतींसाल्वोवैरंवृष्णिकृतंस्मरन्॥ ८
निरुध्यसेनयासाल्वोमहत्याभरतर्षभ। पुरींबभञ्जोपवनान्युद्यानानिचसर्वशः ॥ ९
सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ।
विहारान् स विमानाग्र्यान्निपेतुश्शस्त्रवृष्टयः ॥ १०
शिलाद्रुमाश्चाशनयस्सर्पाआसारशर्कराः। प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादितादिशः

---

वरेणेति हेत्वर्थे तृतीया,वरार्थं छन्दयामास वरं वरयेत्युवाचेत्यर्थः ॥ ५ ॥

मु ॥ आशुतोषोऽप्युमापतिः—कृष्णविद्विषि साल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत्,तस्य निर्बन्धमालक्ष्य संवत्सरान्ते वरेण च्छन्दयामास वरं वृणीष्वेत्यब्रवीत् ॥ ५ ॥

वी ॥ देवेति ॥ स साल्वः यानं विमानं वव्रे वृतवान्,कथंभूतं ? देवादीनां भेत्तुमशक्यं कामं यथेष्टं गच्छतीति तथा तद्वृष्णीनां यदूनां भीषणं भयंकरम् ॥ ६ ॥

मु ॥ सः देवादीनामभेद्यं वृष्णिभीषणं च कामगं यानं वव्रे ॥ ६ ॥

वी ॥ तथेतीति ॥ तथेत्यङ्गीकृत्य गिरिशेनादिष्टो मयः सौभं नाम अयोमयं लोहमयं पुरं निर्माय ददौ ॥ ७ ॥

मु ॥ तदा तथास्त्वित्युक्त्वा गिरिशेनादिष्टो मयः सौभं नाम पुरं निर्माय साल्वाय प्रादात्, परेषां पुराणि जयति स्वाधीनानि करोतीति तथा अयोमयं लोहमयम् ॥ ७ ॥

वी ॥ स लब्ध्वेति ॥ स साल्वः तमसोऽन्धकारस्य धामाश्रयं यानं लब्ध्वा अधिष्ठायेत्यर्थः, वृष्णिकृतं वैरं स्मरन् द्वारवतीं ययौ ॥ ८ ॥

मु ॥ तमोधाम असुरमायालयम् अन्धकारास्पदम् अतएव दुरासदं दुर्भेदं दुर्दर्शं दुष्प्रापं वा. वृष्णिभिः कृतं वैरं स्मरन् ॥ ८ ॥

वी ॥ निरुध्येति ॥ हे भरतर्षभ पुरीं द्वारवतीं निरुध्य उपवनादीनि बभञ्ज ॥ ९ ॥

मु ॥ महत्या सेनया पुरं निरुध्य उपवनादीनि बभञ्ज ॥ ९ ॥

वी॥ तत्राट्टालाः प्राकारोपरिगृहाः, तोरणाः बहिर्द्वाराणि, विहाराः क्रीडास्थानानि, किञ्च विमानाग्र्यात्तस्मात्सौभात् शस्त्रवृष्टयः शिलादयश्च निपेतुः; तत्रासारो धारासम्पातः, शर्कराः सूक्ष्मशिलाः, प्रचण्डो निष्ठुरश्चक्रवातो बभूव, दिशश्च रजसा रेणुना च्छादिताः बभूवुः ॥ १० ॥ ११ ॥

मु ॥ गोपुरैः सहितानि सगोपुराणि प्रासादाः भूभुजां गृहाः, अट्टालकाः प्राकारोपरि मञ्चाकाराः, तोलिकाः तत्पर्यन्तकुड्यानि, यद्वा पाषाणप्रक्षेपयन्त्रविशेषाः, विहारान् क्रीडास्थानानि च स बभञ्जेति पूर्वेण संबन्धः, किञ्च विमानाग्र्यात् शस्त्रवृष्ट्यादयः पेतुः, आसाररूपाः शर्कराः सूक्ष्मपाषाणवृष्टयः ॥ १० ॥ ११ ॥

इत्यर्द्यमानासौभेनकृष्णस्यनगरीभृशम्। नाभ्यपद्यतशंराजंस्त्रिपुरेणयथामही ॥ १२
प्रद्युम्नोभगवान्वीक्ष्यबाध्यमानानिजाःप्रजाः।माभैष्टेत्यभ्ययाद्वीरोरथारूढोमहा[१]रथः
सात्यकिश्चारुदेष्णश्चसाम्बोऽक्रूरस्सहानुजैः।हार्दिक्योभानुविन्दश्चगदश्चशुकसारणौ
अपरेचमहेष्वासारथयूथपयूथपाः।निर्ययुर्दंशितागुप्तारथेभाश्वपदातिभिः ॥ १५
ततःप्रवव्रतेयुद्धंसाल्वानांयदुभिस्सह।यथाऽसुराणांविबुधैस्तुमुलंरोमहर्षणम् ॥ १६
ताश्चसौभपतेर्मायादिव्यास्त्रैरुक्मिणीसुतः। क्षणेननाशयामासनैशंतमइवोष्णगुः॥ १७
विव्याधपञ्चविंशत्यास्वर्णपुङ्खैरयोमुखैः।साल्वस्यध्वजिनीपालंशरैस्सन्नतपर्वभिः ॥
शतेनाताडयत्साल्वमेकैकेनास्य सैनिकान् ।

---

वी ॥ इतीति ॥ इत्थं सौभेन यानेन भृशम् अर्द्यमाना पीड्यमाना कृष्णस्य नगरी द्वारका हे राजन् शं सुखं नाभ्यपद्यत न प्राप, यथा त्रिपुरेण मही शं नाभ्यपद्यत,तद्वत्॥

मु ॥ सौभेन तत्पतिना, नगरी तत्स्थजनसंततिः, शं सुखं नाभ्यपद्यत ॥ १२ ॥

वी॥ प्रद्युम्न इति॥ भगवान् षड्गुणसम्पन्नः प्रद्युम्नः बाध्यमानाः पीड्यमानाः निजाः स्वकीयाः प्रजाः प्रेक्ष्य इतीत्यनन्तरमुक्त्वेति शेषः, अभ्ययात् अभ्यद्रवत् ॥ १३ ॥

वी ॥ तथा सात्यकिप्रभृतयोऽपरे च यदुवीराः महान्त इष्वासाः धनूंषि येषां ते रथयूथपानामपि यूथपाः दंशिताः कवचिताः रथादिभिश्चतुर्भिरङ्गैर्गुप्ताश्च निर्ययुः, द्वारकाया इति शेषः ॥ १४ - १५ ॥

मु ॥ दंशिताः बद्धकवचाः रथेभाश्वपदातिभिः गुप्ताः ॥ १५ ॥

वी ॥ तत इति ॥ युद्धं प्रवृत्तमभूत्, यथा विबुधैः देवैस्सह असुराणां तद्वत्, कथम्भूतं ? तुमुलं व्याकुलं रोमहर्षणं शृण्वतामपि रोमोद्गमकरम् ॥ १६ ॥

मु ॥ तुमुलं संकुलम् अत एव रोमहर्षणं भयंकरं युद्धं प्रववृते ॥ १६ ॥

वी ॥ ताश्चेति ॥ याश्शस्त्रवृष्ट्यादयो मायास्ताः क्षणेन नाशयामास, उष्णाः गावः किरणाः यस्य स सूर्यो नैशं निशासम्बन्धि तमोऽन्धकारं नाशयति, तद्वत् ॥ १७ ॥

मु ॥ ताः शस्त्रवृष्ट्यादिरूपाः मायाः, नैशं निशि भवं तमः उष्णगुः सूर्य इव॥१७॥

वी ॥ विव्याधेति ॥ स्वर्णमयाः पुङ्खाः पृष्ठप्रान्ताः येषां तैः अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः सन्नतानि निमग्नानि पर्वाणि येषां तैः पञ्चविंशत्या शरैः साल्वस्य ध्वजिनीपालं सेनान्यं विव्याध ॥ १८ ॥

मु ॥ किञ्च—विव्याधेति ॥ साल्वस्य ध्वजिनीपालं सेनापतिं पञ्चविंशत्या शरैः विव्याधेत्यन्वयः, स्वर्णमयानि पुङ्खानि पृष्ठप्रान्ताः येषां तैः अयो लोहं तन्मयानि मुखानि अग्राणि येषां तैः सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥

वी॥ साल्वं तु शतेन शराणामिति शेषः, अताडयत्, सैनिकान्भटान् एकैकेन शरेणाताडयत्, नेतॄन् अवान्तरसेनानायकान् सारथीन् वा दशभिर्दशभिः शरैः वाहनानि गजाश्वरथादीनि त्रिभिस्त्रिभिः शरैः अताडयत् ॥ १९ ॥

---

१. यशाः पा ॥

दशभिर्दशभिर्नेतॄन्वाहनानि त्रिभिस्त्रिभिः ॥ १९

तदद्भुतंमहत्कर्मप्रद्युम्नस्यमहात्मनः।दृष्ट्वातंपूजयामासुस्सर्वेस्वपरसैनिकाः ॥ २०

बहुरूपैकरूपंतदृश्यतेनचदृश्यते।मायामयंमयकृतंदुर्विभाव्यंपरैरभूत् ॥ २१

क्वचिद्भूमौक्वचिद्व्योम्निगिरिमूर्ध्निजलेक्वचित्।अलताचक्रवद्भ्राम्यत्सौभंतदुरवस्थितम्॥

यत्रयत्रोपलक्ष्येतससौभस्सहसैनिकः।सात्वस्ततस्ततोऽमुञ्चञ्शरान्सात्त्वतयूथपाः

शरैरग्न्यर्क[१]संस्पर्शैराशीविषदुरासदैः।पीड्यमानपुरानीकस्साल्वोऽमुह्यत्परेरितैः॥

साल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।

---

मु ॥ शतेन एकैकेनेत्यादौ शरैश्शरेणेत्यादि योज्यम्, सैनिकान् भटान्, नेतॄन् सारथीन् ॥ १९ ॥

वी ॥ तदिति ॥ तत्प्रद्युम्नविक्रमात्मकं महदतिकौशलं कर्म दृष्ट्वा स्वपरसेनयोर्वर्तमानास्सर्वे तं प्रद्युम्नं पूजयामासुः बहुमेनिरे ॥ २० ॥

मु॥ प्रद्युम्नस्य महत् अद्भुतं च तत् कर्म दृष्ट्वा स्वपरसेनयोः वर्तमानाः पूजयामासुः सम्मानितवन्तः ॥ २० ॥

वी ॥ बह्विति ॥ तन्मयकृतं सौभं क्वचित् बहुरूपं क्वचिच्चैकरूपं क्वचिच्च दृश्यते क्वचित्तु न दृश्यते, एवं परैः दुर्विभाव्यमवितर्क्यमभवत् ॥ २१ ॥

मु ॥ मायामयम् आश्चर्यमयं मयकृतं तत् पुरं परैः दुर्विभाव्यमभूत् , तत्र हेतुमाह —बहुरूपैकरूपं कदाचित् बहुरूपं कदाचिदेकरूपं कदाचित् दृश्यते कदाचित् न दृश्यते॥

वी ॥ किंच—क्वचिदिति ॥ एवं दुरवस्थितम् अनवस्थितं चाभूत् ॥ २२ ॥

मु ॥ किञ्च—तत् सौभं दुरवस्थितम् अनवस्थितं च अभूत् , कुतः?, अलातचक्रवत् भ्राम्यत् , ततोऽपि विशेषमाह—यदा दृश्यते स्म, तदा क्वचित् व्योम्नि अन्तरिक्षे क्वचित् गिरिमूर्ध्नि क्वचित् जले समुद्रमध्ये ॥ २२ ॥

वी ॥ यत्रयत्रेति ॥ उपलक्ष्येत दृश्येत, सात्त्वतयूथपाः यदुवीराः ॥ २३ ॥

मु ॥ एवमपि यत्रयत्र ससौभः सहसैनिकश्च साल्व उपलक्ष्येत, ततः तत्रतत्र सात्त्वतयूथपाः शरान् अमुञ्चन् ॥ २३ ॥

वी ॥ शरैरिति अग्निवद्दाहकः अर्कवत्संशोषकः युगपत् सर्वतस्संस्पर्शो येषां तैः आशीविषवदेकस्पर्शमात्रेण मारकत्वाद्दुरासदैः दुस्सहैः परेरितैः यदुवीरप्रयुक्तैः शरैः पीड्यमानं पुरमनीकानि च यस्य सः साल्वः अमुह्यत् मुमोह ॥ २४ ॥

मु ॥ परेरितैः परैर्मुक्तैः शरैः पीड्यमानं पुरम् अनीकञ्च यस्य सः साल्वः स्वयं चापि पीड्यमानस्सन् अमुह्यत् , अग्न्यर्कसङ्काशैः अग्निवत् प्रदाहकैः अर्कवत् युगपत् सर्वसंस्पर्शिभिः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वात् दुरासदैः ॥ २४ ॥

वी ॥ साल्वेति ॥ साल्वसैन्यपानां शस्त्रौघैः भृशं पीडिता अपि यदुवीराः स्वंस्वं रणं रणभूमिं न तत्यजुः न त्यक्तवन्तः, तत्र हेतुत्वेन विशिनष्टि—लोकत्रयमपि जेतुमिच्छवः ॥ २५ ॥

---

१. संकाशैः. मु भा-प्र. पा ॥

न तत्यजूरणं स्वंस्वं लोक[1]त्रयजिगीषवः ॥ २५
सात्वामात्यो द्युमान्नाम [2]प्रद्युम्नास्त्रप्रपीडितः ।
आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६
प्रद्युम्नंगदयाशीर्णवक्षस्थलमरिन्दमम्।अपोवाह रणात्सूतोधर्मविद्दारुकात्मजः॥ २७
लब्धसंज्ञोमुहूर्तेनकार्ष्णिस्सारथिमब्रवीत्।अहोअसाध्विदंसूतयद्रणान्मेऽपसर्पणम् ॥
नयदूनांकुलेजातश्श्रूयतेरणविच्युतः। विना[3]मत्क्लीबचित्तेनसूतेनप्राप्तकल्मषात्॥२९
किंनु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ ।

मु ॥ भृशार्दिता अपि स्वंस्वं रणं रणस्थानं न तत्यजुः, लोकेति—इमं परं लोकं च जेतुमिच्छुत्वादित्यर्थः, 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति न्याय-मवलम्ब्य न तत्यजुरिति भावः ॥ २५ ॥

वी ॥ साल्वामात्य इति ॥ द्युमान्नाम द्युमदाख्यः बली मौर्व्या कार्ष्णायसमय्या गुर्व्येति पाठान्तरम्, व्याहत्य प्रताड्य व्यनदत् ॥ २६ ॥

मु ॥ प्राक् मायासंहारानन्तरमेव, प्रपीडितः मौर्व्या कार्ष्णायसमय्या सम्यक् व्याहत्य प्रहृत्य ॥ २६ ॥

वी ॥ प्रद्युम्नमिति ॥ गदया तत्प्रहारेण विशीर्णं वक्षस्थलं यस्य तं प्रद्युम्नं रणाद्रण-स्थानादपोवाह अपसारयामास,तत्र हेतुत्वेन सूतं विशिनष्टि—धर्मवित् 'सूतः कृच्छ्रगतं रक्षेद्रथिनम्' इत्येवंविधधर्मवित् दारुकस्य कृष्णसारथेः आत्मजश्च ॥ २७ ॥

मु ॥ द्युमतो गदया शीर्णवक्षस्स्थलं तं सूतः रणात् रणस्थानात् अपोवाह अन्यतो निनाय, तत्र हेतुः—धर्मविदिति । दुरवस्थं रथिनं रक्षेदिति स्वधर्मं वेत्तीति तथा, त-त्रापि हेतुः—दारुकात्मज इति ॥ २७ ॥

वी ॥ लब्धसंज्ञ इति ॥ तावन्मूर्च्छितः ततो मुहूर्तेन लब्धा संज्ञा चेतना येन सः कार्ष्णिः प्रद्युम्नः सारथिम् उवाच, उक्तिमेवाह—अहो इति सार्धैश्चतुर्भिः। हे सूत इदम-साधु, किं तत्? मम रणादपसर्पणमिति यत् ॥ २८ ॥

मु ॥ अहो सूत यन्मे रणादपसर्पणम् , इदम् असाधु अयुक्तं भवति ॥ २८ ॥

वी ॥ कुतस्तस्यासाधुत्वम्? अत आह—नेति॥ यदूनां कुले जातः कोऽपि रणाद्वि-च्युतः पलायितो न श्रूयते, किं पुनर्दृश्यत इति भावः, क्लीबमधृष्टं चित्तं यस्य तेन त्वया सूतेन हेतुना प्राप्तं कल्मषमयशो येन तस्मात् मत् मत्तः विना अन्यः कोऽपि रणवि-च्युतो न श्रूयत इति संबन्धः ॥ २९ ॥

मु॥ यतः—क्षीबचित्तेन जडबुद्धिना सूतेन त्वया हेतुना प्राप्तकिल्बिषात् मत् मत्तो विना यदूनां कुले जातो रणविच्युतो न श्रूयते ॥ २९ ॥

वी ॥ किंच—किंन्विति॥ रामकेशवावभिसङ्गम्य तत्पार्श्वे गत्वेत्यर्थः, ताभ्यां पृष्टः न्याय्याद्युद्धादपक्रान्तः पलायितोऽहम् आत्मनः क्षमं योग्यं किन्नु वक्ष्यामि ॥ ३० ॥

१. द्वय. मु. भा. प्र. पा॥ २. प्रद्युम्नं प्राक्प्रपीडितः. मु. भा. प्र. पा ॥
३. मत्क्षीब. मु. भा. प्र. पा ॥

युद्धाद्धर्म्यादपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३०

व्यक्तंमेकथयिष्यन्तिहसन्त्योभ्रातृजामयः।[१]क्लैब्यंकथंकथंवीरतथाऽन्यैःकथ्यतांमृथे

सारथिरुवाच—

धर्मंविजानताऽऽयुष्मन्कृतमेतन्मयाविभो।सूतःकृच्छ्रगतंरक्षेद्रथिनंसारथिंरथी॥ ३२

एतद्विदित्वातुभवान्मयाऽपोवाहितोरणात्।उपसृष्टःपरेणेतिमूर्च्छितोगदयाऽऽहतः॥

इति श्रीभागवते महापुराणे दशमस्कन्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

मु ॥ तिष्ठत्वेतत्, धर्म्याद्युद्धादपक्रान्तोऽहं रामकेशवौ पितरावुपसङ्गम्य ताभ्यां पृष्टः तत्र तयोस्सन्निधौ आत्मनः क्षमं वक्तुं योग्यं किन्तु वक्ष्ये युद्धादपक्रमकारणं किन्तु वक्ष्यामि ॥ ३० ॥

वी ॥ किंच—व्यक्तमिति॥ मे मम भ्रातृजामयो भ्रातृभार्याः मृधे युद्धे प्राप्तं क्लैब्यं कथंकथमिति हसन्त्यः कथयिष्यन्ति, व्यक्तं नूनम्, हे वीर तथा अन्यैरपि कथं कथ्यताम्, संभावनायां लोट् ॥ ३१ ॥

मु ॥ किञ्च हसन्त्यो मे भ्रातरौ जामयः स्वसारश्च व्यक्तं सर्वसमत्वं कथयिष्यन्ति वक्ष्यन्ति, हे वीर तव अन्यैर्वैरिभिस्सह मृधे कथं क्लैब्यं क्लीबभावं गतो भवान्, तत्कथ्यतामिति ॥ ३१ ॥

वी॥ इत्थमुक्तः प्राह सूतः—धर्ममिति॥ हे प्रभो धर्मं विजानतेति हेतुगर्भम्, अतो मया एतदपसारणं कृतम्, कोऽसौ धर्मस्तत्राह—सूत इति। कृच्छ्रगतं विपत्तिं गतं रथिनं रक्षेत्, रथी तु तथाभूतं सारथिमिति ॥ ३२ ॥

मु ॥ धर्ममेवाह सूत इति—रथिनं कृच्छ्रगतं सूतो युधि रक्षेत् ॥ ३२ ॥

वी॥अस्त्वयं धर्मः, किम्मयाऽधुना प्राप्तं कृच्छ्रं? यतो मामपोहितवान्,तत्राह—एतदिति ॥ परेण शत्रुणा कर्त्रा गदया आहतस्ताडितः उपसृष्टः पीडां प्राप्तः मूर्च्छितश्चेत्येतद्विदित्वा, उपस्पृष्ट इति पाठे परेणापह्वियेतेत्येतद्विदित्वेत्यर्थः, मया भवान् रणादपोवाहितः ॥ ३३ ॥

मु ॥ एतद्वचनं विदित्वातु एवं भवान् मया रणादपोवाहितः, कृच्छ्रगतत्वमेवाह—उपसृष्ट इति । परेण गदया हत इति हेतोः उपसृष्टः उपसर्गं पीडनं प्राप्तः मूर्च्छितश्च भवानिति सम्बन्धः, भयादपक्रमणं हि अकीर्तिकरं, न तु मुर्च्छायामित्यर्थः ॥ ३३ ॥

इति श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

१. क्लैब्यं गतः कथं. मु-भा-प्र. पा ॥

श्रीशुक उवाच—

¹सउपस्पृश्यसलिलंदंशितोधृतकार्मुकः।नयमांद्युमतःपार्श्वंवीरस्येत्याहसारथिम् ॥ १ ॥
विधमन्तंस्वसैन्यानिद्युमन्तंरुक्मिणीसुतः।प्रतिरुध्यप्रत्यविध्यन्नाराचैरष्टभिःस्मयन् ॥
चतुर्भिश्चतुरोवाहान्सूतमेकेनचाहनत्।द्वाभ्यांधनुश्चकेतुंचद्युमतोऽन्येनवैशिरः ॥ ३
गदसात्यकिसाम्बाद्याजघ्नुस्सौभपतेर्बलम्।पेतुस्समुद्रेसौभेयास्सर्वेसंछिन्नकन्धराः॥
एवंयदूनांसाल्वानांनिघ्नतामितरेतरम्।युद्धंत्रिनवरात्रंतदभूत्तुमुलमुल्बणम् ॥ ५
इन्द्रप्रस्थगतःकृष्णआहूतोधर्मसूनुना । राजसूयेचनिर्वृत्तेशिशुपालेचसंस्थिते॥ ६

वी ॥ अथ पुनस्सन्नद्धेन प्रद्युम्नेन द्युमति हते सति यदुषु च युध्यमानेषु भगवानागत्य साल्वं जघानेत्याह सप्तसप्ततितमेन—सत्विति ॥ स तु प्रद्युम्नः सलिलमुपस्पृश्य आचम्य मूर्च्छात उत्थितत्वादिति भावः, दंशितः सन्नद्धः उद्धृतं कार्मुकं धनुर्येन सः सारथिमाह,किमिति? वीरस्य द्युमतः पार्श्वे समीपं मां नय प्रापयेति ॥ १ ॥

मु ॥ दंशितः सन्नद्धः वीरस्य वीरोऽस्मीति मन्यमानस्य ॥ १ ॥

वी॥ विधमन्तमिति॥ रुक्मिणीसुत इत्यस्य द्युमत्पार्श्वं गत इत्यादिः, स्वसैन्यानि विधमन्तं ताडयन्तं द्युमन्तं प्रतिरुध्य सन्निरुध्य स्मयन्, अनेनानायासस्सूच्यते, अष्टभिश्शरैः प्रत्यविध्यत् प्रत्यताडयत् ॥ २ ॥

मु ॥ विधमन्तं क्षपयन्तं प्रतिरुद्ध्य अष्टभिः नाराचैः प्रत्यविद्ध्यत् ॥ २ ॥

वी ॥ तत्राष्टानां विनियोगमाह—चतुर्भिरिति॥ वाहानश्वान् एकेन कार्मुकम् एकेन ध्वजमेकेन तु द्युमतश्शिरोऽहनत् ॥ ३ ॥

मु ॥ तेषां विनियोगमाह—चतुर्भिरिति ॥ ३ ॥

वी ॥ गदेति॥ गदप्रभृतयः यदवः सौभपतेः बलं जघ्नुः, सौभेयाः सौभस्थाः सर्वे संछिन्नाः कन्धरा येषां ते समुद्रे पेतुः पतितवन्तः ॥ ४ ॥

मु ॥ सौभेयाः सौभस्थाः ॥ ४ ॥

वी ॥ एवमिति॥ इतरेतरं परस्परं निघ्नतां संबन्धि तद्युद्धं त्रिनवरात्रमभूत् नवानां रात्रीणां समाहारः नवरात्रं त्रयाणां नवरात्राणां समाहारस्त्रिनवरात्रं सप्तविंशत्यहोरात्राणीत्यर्थः, तुमुलमाकुलम् उल्बणं घोरम् ॥ ५ ॥

मु ॥ नवानां रात्रीणां समाहारो नवरात्रं त्रयाणां नवरात्राणां समाहारः त्रिनवरात्रं सप्तविंशतिरहोरात्राणीत्यर्थः, तुमुलं सङ्कुलम् उल्बणं घोरम् ॥ ५ ॥

वी ॥ अत्र कैश्चिदृषिभिरुक्तं दूषयितुमनुवदति शुकः—'इन्द्रप्रस्थगतः' इत्यादिना 'एवं वदन्ति राजर्षे ऋषयः'इत्यतः प्राक्तनेन॥ धर्मसूनुना युधिष्ठिरेणाहूतः कृष्णः राजसूये संवृत्ते परिसमाप्ते सति शिशुपाले संस्थिते मृते च सति तत्रैव कतिचिद्दिनानि स्थितः अतिघोराणि निमित्तानि पश्यन् कुरुवृद्धादीन् भीष्मादीन् ससुतां पृथां कुन्तीं मुनींश्चामन्त्र्य पृष्ट्वा द्वारवतीं ययौ, आह चेत्युत्तरेण संबन्धः ॥ ६ ॥ ७॥

१. अस्मिन्नध्याये आदौ 'इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः । पुनरात्तप्रहरणस्सूतमाह रणाङ्गणे' इति श्लोकोऽयं विजयध्वजाचार्य पाठ इति कोशान्तरे दृश्यते ॥

[1]कुरुवृद्धानुपामन्त्र्यमुनींश्चससुतांपृथाम्।निमित्तान्यतिघोराणिपश्यन्द्वारवतींययौ॥
आहचाहमिहायातआर्यमिश्राभिसंगतः।राजन्याश्चैद्यपक्षीयानूनंहन्युःपुरींमम ॥ ८
वीक्ष्यतत्कदनंरामंनिरूप्यपुररक्षणे।सौभंचसाल्वराजंचदारुकंप्राहकेशवः ॥ ९
रथंप्रापयमेसूतसाल्वस्यान्तिकमाशुवै।[2]सम्भ्रमस्तेनकर्तव्योमायावीसौभराडयम् ॥
इत्युक्तश्चोदयामासरथमास्थायदारुकः।विशन्तंददृशुस्सर्वेस्वेपरेचारुणानुजम्॥ ११
साल्वश्चकृष्णमालोक्यहतप्रायबलेश्वरः।प्राहरत्कृष्णसूतायशक्तिंभीमरवांमृधे ॥ १२

---

मु ॥ कदेत्यपेक्षां प्रतिक्षिपन्नाह—इन्द्रप्रस्थमिति ॥ संस्थिते स्वपदं प्राप्ते दुष्टे दुर्योधने च स्वपुरं गते इति चकारार्थः ॥ ६ ॥

मु ॥ अतिघोराणि निमित्तानि पश्यन् कुरुवृद्धान् भीष्मादीन् मुनीन् द्वैपायनादीन् ससुतां पृथां च अनुज्ञाप्य द्वारवतीं ययौ ॥ ७ ॥

वी ॥ उक्तिमेवाह—आह चाहमिहेत्यादिना ॥ आर्यमिश्रो बलभद्रस्तेनाभिसङ्गतः सहितोऽहमिहागतः,चैद्यपक्षीया राजन्या मम पुरीं हन्युर्नाशयेयुः,अतोऽहं गमिष्यामीति शेषः ॥ ८ ॥

मु ॥ दुर्निमित्तानि पश्यतस्तस्य कुरुवृद्धान्प्रत्याभाषणमाह—आह चेति ॥ आर्यमिश्राभिसङ्गतः बलभद्रसहितः ॥ ८ ॥

वी॥ वीक्ष्येति॥ अस्यागमनानन्तरम् इत्यादिः, स्वानां तत्कदनं युद्धं सौभं साल्वं च वीक्ष्य रामं पुररक्षणं प्रति निरूप्य नियुज्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥

मु ॥ द्वारकां प्राप्तस्य प्रवृत्तिमाह—वीक्ष्येति ॥ स्वानां कदनं पीडनं सौभं साल्वराजं च वीक्ष्य पुररक्षणे पुररक्षणार्थम् आर्यं रामं निरूप्य नियुज्य केशवो दारुकं प्राह, यद्वा परमतमुपन्यस्यति—इन्द्रप्रस्थमित्यादिना । आह चेति स्वगतमेव पथि चिन्ताविक्षुभितमाभाषणम्, दुर्निमित्ताकुलचित्त एवं चिन्तयन् द्वारकामागत्य स्वानां कदनं वीक्ष्य रामं पुररक्षणं प्रति निरूप्य दारुकं प्राहेत्यन्वयः ॥ ९ ॥

वी ॥ उक्तिमेवाह—रथमिति॥ हे सूत साल्वस्यान्तिकं प्रति आशु रथं प्रापय, तेन साल्वेन सह संग्रामः कर्तव्यः, अयं साल्वो मायावी सौभराट् च ॥ १० ॥

मु॥ वैशब्दोऽवधारणार्थः,साल्वस्यान्तिकमेवेति योज्यम्, किं च ते त्वया सम्भ्रमश्च न कर्तव्यः, अयं सौभराट् मायावी भवति ॥ १० ॥

वी॥ इतीति॥ आस्थाय सम्यगधिष्ठाय चोदयामास गमयामास, अश्वानिति शेषः, विशन्तमिति। अरुणस्यानुजो यस्मिन् तं गरुडध्वजं रथं विशन्तं रणभूमाविति शेषः, स्वे यदवः परे साल्वपक्षीयाश्च ददृशुः ॥ ११ ॥

मु ॥ आस्थाय अधिष्ठाय अरुणानुजं ध्वजे वर्तमानं गरुडं ददृशुरित्यन्वयः ॥११॥

वी॥ साल्व इति॥ हतप्रायस्य बलस्येश्वरः साल्वः युद्धे कृष्णमवलोक्य भीमो रवो ध्वनिः यस्यास्तां शक्तिं कृष्णस्य सूताय प्राहरत्प्रायुङ्क्त ॥ १२ ॥

मु ॥ हतप्रायस्य बलस्य ईश्वरः ॥ १२ ॥

---

१. कुरुवृद्धाननुज्ञाप्य. मु. भा. प्र. पा ॥ २. संभ्रमस्ते न कर्तव्यः. मु. भा. प्र. पा ॥

तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशश्शौरिस्सायकैश्शतधाऽच्छिनत् ॥ १३.

तंचषोडशभिर्बाणैर्विद्ध्वासौभंचखेऽभ्रमत्।अविध्यच्छरसंदोहैःखंसूर्यइवरश्मिभिः ॥ १४
साल्वश्शौरैस्तुदोस्सव्यंसशार्ङ्गंशार्ङ्गधन्वनः।बिभेदन्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम्
हाहाकारोमहानासीद्भूतानांतत्रपश्यताम्।विनद्यसौभराडुच्चैरिदमाहजनार्दनम् ॥
यत्त्वयामूढनस्सख्युर्भार्याचापहृतेक्षताम्।प्रमत्तस्ससभामध्येत्वयाव्यापादितस्सखा
तं त्वाऽद्य निशितैर्बाणैरपराजितमानिनम् ।

---

वी ॥ तामिति॥ रंहसा वेगेन नभस्यापतन्तीम् उल्कामिव सर्वाः दिशो भासयन्तीं तां शक्तिं शतधा चिच्छेद ॥ १३ ॥

मु ॥ महोल्कां दिशो भासयन्तीं रंहसा वेगेन आपतन्तीं तां तथा अच्छिनत् ॥

वी॥ तमिति ॥ खे आकाशे भ्रमद्भ्राम्यमाणं सौभं तं सौभपतिं च विद्ध्वा खमाकाशं रश्मिभिस्सूर्य इव शरजालैः पुनस्सौभमविध्यत्, सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य, अचिन्त्यवेगत्वबाहुल्यादिभिश्शराणां रश्मिसादृश्यम्, अयत्नेनैव रश्मिवच्छरजालप्रसारात्सूर्यतुल्यश्श्रीकृष्ण इत्यवगन्तव्यम् ॥ १४ ॥

मु ॥ तं साल्वं च षोडशभिर्बाणैः विद्ध्वा खे अभ्रमत्, सौभश्च शरसन्दोहैः अविध्यत्, खं सूर्य इव रश्मिभिरिति, सुनीलत्वविपुलत्वादिभिराकाशोपमा, अचिन्त्यवेगत्वजाज्वल्यमानत्वबहुलत्वादिभिः शराणां रश्मिसादृश्यम्, सूर्यतुल्यः कृष्ण इति ॥

वी ॥ साल्व इति॥ शार्ङ्गधन्वनः कृष्णस्य शार्ङ्गसहितं दोर्भुजं बिभेद विव्याध, हस्ताच्छार्ङ्गं न्यपतत्, तदद्भुतमभूत् अभूतपूर्वत्वादिति भावः ॥ १५ ॥

मु ॥ सौभपतेर्युद्धविलासविशेषमाह—साल्व इति ॥ सव्यं दोः बाहुम् ॥ १५ ॥

वी ॥ अत एवाह—हाहाकार इति ॥ महानुच्चैः विनद्येति अस्य शार्ङ्गपातजसन्तोषातिशयादित्यादिः, उच्चैः विनद्य इदं वक्ष्यमाणमाह ॥ १६ ॥

मु ॥ केषामद्भुतमासीदित्यत्राह—हाहाकार इति ॥ तत्र तदा पश्यतां भूतानां साल्वमायामोहितानां दारुकादन्येषां महान् हाहाकारः आसीत् ॥ १६ ॥

वी ॥ तदेवाह—यदिति द्वाभ्याम् ॥ यत् यस्मात् हे मूढ नोऽस्माकं सख्युश्चैद्यस्य भार्यात्वेन सङ्कल्पिता रुक्मिणी त्वया अस्माकमीक्षतां पश्यतां सताम् अपहृता, तथा नस्सखा सभामध्ये व्यापादितः हतः, तत्र हेतुत्वेन सखायं विशिनष्टि—प्रमत्तः तदाऽनवहित इत्यर्थः ॥ १७ ॥

मु ॥ हे मूढ यत् यस्मात् नः अस्माकं सख्युः चैद्यस्य सा बन्धुभिर्दत्ता भार्या ईक्षताम् ईक्षमाणान् नः अस्मान् अनादृत्य अपहृता, यस्माच्च नः सखा स एव प्रमत्तोऽनवहितः सभामध्ये त्वया व्यापादितः निहतः ॥ १७ ॥

वी॥ तमिति॥ तुशब्दोऽत्र हेत्वर्थः, तस्मात्तं सख्युर्भार्यापहर्तारं हन्तारं च अपराजितमात्मानं मन्यमानं त्वामपुनरावृत्तं मृत्युं नयामि, अतो युद्धे ममाग्रतस्तिष्ठ ॥ १८ ॥

[1]नयाम्यपुनरावृत्तं यदि तिष्ठेर्ममाग्रतः ॥ १८

श्रीभगवानुवाच—

वृथात्वंकत्थसेमन्दनपश्यस्यन्तिकेऽन्तकम्।पौरुषंदर्शयन्तिस्मशूरा नबहुभाषिणः॥

इत्युक्त्वा गदया साल्वं भगवान्भीमवेगया ।
तताड जत्रौ संक्रुद्धस्स चकम्पे वमन्नसृक् ॥
गदायां सन्निवृत्तायां साल्वस्त्वन्तरधीयत ॥ २०

ततोमुहूर्त आगत्यपुरुषश्शिरसाऽच्युतम्।देवक्याप्रहितोऽस्मीतिनत्वाप्राहवचोरुदन्॥

कृष्णकृष्णमहाबाहोपितातेपितृवत्सल। बद्ध्वाऽपनीतस्साल्वेनसौनिकेनयथापशुः ॥

निशम्यविप्रियंकृष्णोमानुषींप्रकृतिंगतः।विमनस्कोघृणीस्नेहाद्बभाषेप्राकृतोयथा ॥

कथं राममसंभ्रान्तं जित्वाऽजेयं सुरासुरैः ।
साल्वेनाल्पीयसाऽऽनीतः पितामे बलवान्विधिः ॥ २४

---

मु ॥ तस्मात् अपराजितोऽहमिति मानयन्तं तं त्वाम् अद्य निशितैः अपुनरावृत्तिं मृतिं नयामि, तिष्ठेः स्थास्यसि ॥ १८ ॥

वी॥इत्थमुक्तः प्राह श्रीभगवान्—वृथेति॥हे मन्द विकत्थसे प्रगल्भं भाषसे, अन्तिके समनन्तरे प्राप्तं मृत्युं न पश्यसि नालोकयसीत्यर्थः,किं च शूराः केवलं पौरुषमेव दर्शयन्ति, नतु बहु यथा तथा भाषन्त इति ॥ १९ ॥

मु ॥ हे मन्द त्वं वृथा कत्थसे, पौरुषं वीर्यं दर्शयन्त्येव, न बहुभाषिणः स्युः, तस्मात् न शूरोऽसि ॥ १९ ॥

वी ॥ इतीति॥ भीमो भयंकरो वेगः यस्यास्तया गदया जत्रौ स्कन्धमूले तताड ताडयामास, स च साल्वः असृक् रुधिरं वमन् उद्गिरन् चकम्पे कम्पितवान्, गदायामिति। सन्निवृत्तायां कृष्णेनापनीतायां सत्यामित्यर्थः, अन्तरधीयत अन्तर्हितवान् ॥२०॥

मु ॥ जत्रौ कण्ठमूले, साल्वस्यापरां मायामाह—गदायामिति। सन्निवृत्तायां पुनः कृष्णकरं गतायाम् ॥ २० ॥

वी ॥ ततः अन्तर्धानानन्तरं कश्चित्साल्वप्रेषितः पुरुष आगत्याच्युतं शिरसा नत्वा प्रणम्य रुदन्वचो वाक्यं प्राह, किमिति? देवक्या प्रहितः प्रेषितोऽस्मीति ॥ २१ ॥

मु ॥ शिरसा अच्युतं नत्वा रुदन् देवक्या प्रहितोऽस्मीत्युक्त्वा इदं वचः प्राह ॥

वी॥ किंच—हे पितृवत्सल ते तव पिता वसुदेवः साल्वेन बद्ध्वा अपनीतः, यथा सौनिकेन पशुमारकेण पशुरपनीयते, तद्वत् ॥ २२ ॥

मु ॥ २२ ॥

वी॥ निशम्येति॥ मानुषीं प्रकृतिं स्वभावम् अनुगतः प्राप्तः घृणी दयावान् अत एव विमनस्को दुःखितमनाः स्नेहात्पितृविषयकात् बभाषे, यथा प्राकृतः पुरुषः, तद्वत् ॥

मु ॥ मानुषीं मनुष्यकृतां प्रकृतिं मायां गतः तथा मोहितः कृष्णः तत् विप्रियं निशम्य घृणी दयावानिति हेतोः विमनस्कः स्नेहात् यथा प्राकृतो जनः तथा बभाषे ॥

वी ॥ भाषणमेवाह—कथमिति॥ सुरासुरैरपि जेतुमशक्यं तं प्रसिद्धं रामं कथं

---

[1] नयाम्यपुनरावृत्तिं. मु. भा. प्र. पा ॥

इतिब्रुवाणेगोविन्देसौभराट्प्रत्युपस्थितः।वसुदेवमिवानीयकृष्णंचेदमुवाचह ॥ २५
एषतेजनितातातोयदर्थमिहजीवसि। वधिष्येवीक्षतस्तेऽमुमीशश्चेत्पाहिबालिश॥२६
एवंनिर्भर्त्स्यमायावीखड्गेनानकदुन्दुभेः।उत्कृत्यशिरआदायखस्थंसौभंसमाविशत्॥

ततो मुहूर्तं [1]प्रकृतावुपप्लुतस्स्वबोध आस्ते [2]स्वजनानुसङ्गतः ।
महानुभावस्तदबुध्यतासुरीं मायां स साल्वप्रहितां मयोदिताम् ॥ २८
न तत्र दूतं न पितुः कलेबरं प्रबुद्ध आजौ समपश्यदच्युतः।
स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ २९

---

जित्वा क्षुद्रेण साल्वेन मम पिता आनीतः, विधिः दैवं बलवान् अहो ॥ २४ ॥

मु ॥ अल्पीयसा अत्यल्पबलेन साल्वेन बलवान् मे पिता कथं नीतः, एतदसम्भावितमिव भातीत्यर्थः ॥ २४ ॥

वी ॥ इति ब्रुवाणे सति वसुदेवमिवेति इति इवशब्देन वस्तुतोऽवसुदेवमिति सूच्यते ॥ २५ ॥

मु ॥ एतत्सम्भवोपपादिकां परां मायामाह—इति ब्रुवाण इति त्रिभिः ॥ २५ ॥

वी ॥ उक्तिमेवाह—एष इति॥ ते तव एष जनिता जनकः तातः पालकव्यावृत्तये जनितेत्युक्तम्, यदर्थं किमर्थमित्यर्थः, ते तव वीक्षतः पश्यतस्सतः अमुं वसुदेवं वधिष्ये, हे बालिश मूढ ईशस्समर्थश्चेत् अमुं पाहि ॥ २६ ॥

मु ॥ जनिता जनयिता, यदर्थं यद्रक्षणार्थम्, ईशः शक्तश्चेत् ॥ २६ ॥

वी ॥ एवमिति॥ आनकदुन्दुभेः वसुदेवस्य शिर उत्कृत्य छित्वा आदाय खस्थम् आकाशे स्थितं सौभमाविशत् ॥ २७ ॥

मु ॥ २७ ॥

वी॥ तत इति॥ प्रकृतौ मानुषस्वभावे उपप्लुतो मग्नः स्वबोधः स्वासाधारणं सार्वज्ञ्यं यस्य सः, तत्र हेतुः—स्वजनानुसङ्गतः स्वजनासक्तः महानुभावः, हेतुगर्भमिदम्, तत्त्वात् स भगवान् मयोदितां साल्वं प्रति मयैनैवं कुर्वित्युपदिष्टामित्यर्थः, साल्वेन प्रेषिताम् आसुरीं मायाम् अबुध्यत ज्ञातवान् ॥ २८ ॥

मु ॥ स्वबोधः स्वतस्सिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मानुष्यस्वभाव इव प्लुतः निमग्नः आस्ते अतिष्ठत्, स महानुभावः ततो मयोदितां साल्वेन प्रहिताम् आसुरीं मायां तावदबुध्यत ॥ २८ ॥

वी ॥ ततः किं कृतवान्? तदाह—नेति॥ यदैवं प्रबुद्धोऽबुध्यत, तत्र तदैव आजौ युद्धाङ्गणे दूतं नापश्यत्, नापि पितुः कलेबरं, यथा स्वप्नादुद्बुद्धस्स्वाप्नमर्थं न पश्यति, तद्वत्, किंतु अम्बरचारिणं सौभे स्थितं तं रिपुं साल्वमवलोक्य निहन्तुमुद्युक्तो बभूव॥

मु ॥ एवं प्रबुद्धोऽच्युतः तत्र दूतादिकं नापश्यत्, प्रबुद्धः प्राप्तप्रबोधः जाग्रत् पुमान् स्वप्नं स्वप्नप्रपञ्चं यथा न पश्यति, तद्वत्, ततश्च अम्बरचारिणं सौभस्थं रिपुमालोक्य निहन्तुमुद्यतः ॥ २९ ॥

---

१. प्रकृताविव. मु-भा-प्र-पा ॥ २. स्वजनानुषङ्गतः. मु-भा-प्र-पा ॥

एवंवदन्तिराजर्षेऋषयःकेचनान्विताःयत्स्ववाचोविरुध्येरन्ननूनंतेस्मरन्त्युत॥ ३०

क्वशोकमोहौ स्नेहो वा भयं[1]वाऽज्ञानसंभवम् ।
क्वचाखण्डितविज्ञानज्ञानैश्वर्यस्यहाऽऽत्मनः ॥ ३१

यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्तआत्मीयमनन्तमैश्वरं कुतो नु मोहः परमस्य सद्गतेः ॥ ३२

वी ॥ इत्थमुपन्यस्तं परमतं निराकरोति—एवमिति ॥ हे राजर्षे केचिदृषयः नान्विताः अनन्विताः पूर्वापरानुसन्धानरहिता इत्यर्थः, इत्थं वदन्ति, तदेवाह—यत्स्ववाच इति । स्ववाचो विरुध्येरन् विरोधं प्राप्नुयुरिति यत्,तन्नानुस्मरन्ति नानुसंदधते, नूनं ध्रुवम्, अयमभिप्रायः—न तावद्राजसूयार्थं रामेण सहागतः श्रीकृष्णः 'सङ्कर्षणमनुज्ञाप्य'इति पूर्वमुक्तत्वात्, न चेन्द्रप्रस्थं गते कृष्णे साल्वागमनं साल्वसंग्रामव्यासक्तेन मया युष्मद्द्यूतं न ज्ञातमिति काम्यकवनस्थान्पाण्डवान् सान्त्वयता कृष्णेनोक्तमिति व्यासोक्तेरिति ॥ ३० ॥

मु ॥ एवं परमतमुपन्यस्तं निराकरोति—एवमिति ॥ केच केचित् नान्विताः अनन्विताः पूर्वापरानुसन्धानरहिताः, तदाह—यत्स्ववाच इति । तन्नानुस्मरन्तीत्यर्थः ॥

वी॥असंभावितं चैतदित्याह—क्व शोकमोहाविति॥ 'विमनस्कः' इत्यनेनोक्ताः शोकः 'मानुषीं प्रकृतिं गतः'इत्यनेनोक्तोः मोहश्च 'घृणी स्नेहात्'इत्यनेनोक्तः स्नेहः भयं वा दुर्निमित्तदर्शनजं'नूनं हन्युः पुरीं मम'इत्युक्तं यच्च हस्ताच्छार्ङ्गं न्यपतदिति,तच्चाज्ञानसंवं न विद्यते ज्ञानं येषां तेषु संभवं संभवेत्, भयं वा क्वेत्यसंभावना द्योत्यते, तद्धेतुत्वेन भगवन्तं विशिनष्टि-अखण्डितेति।ज्ञानविज्ञानशब्दौ प्रकारप्रकाकारिविषयज्ञानपरौ,अखण्डिते ज्ञानविज्ञाने सर्वपदार्थतद्याथात्म्यविषयके ऐश्वर्यं च यस्य तस्येश्वरस्य सर्वान्तर्यामिणः शोकादिः क्वेति संबन्धः,हेत्येवंविधस्य भगवतश्शोकादिकं वदतः प्रति विस्मयते॥

मु ॥ असम्भविचेत्याह—क्वशोकेति ॥ अज्ञसम्भवाः संसारिषु सम्भवन्तः, विज्ञानज्ञानशब्दौ प्रकारप्रकारिविषयज्ञानपरौ, अखण्डितविज्ञानैश्वर्यः ज्ञानैश्वर्याणामीश्वर इति वार्थः ॥ ३१ ॥

वी॥शोकाद्यभावं कैमुत्यनयाभिप्रायेणाह—यत्पादेति॥ यस्य भगवतः पादयोः सेवया परिचर्यादिरूपसेवया श्रवणकीर्तनादिरूपया वा ऊर्जिता पुष्कला परिनिष्पन्नेति यावत्, तया आत्मविद्यया आत्मनस्तस्य परमात्मनः विद्यया उपासनया अनाद्यात्मविपर्ययग्रहं हिन्वन्ति अपनयन्ति, अनादिश्चासावात्मनो विपर्ययः देहाद्विलक्षणस्यात्मनो देहुतादात्म्यभ्रमः अस्वतन्त्रस्यात्मनः स्वातन्त्र्यभ्रमश्चेत्येवं विपर्ययः स एव ग्रहः पिशाचः तं किंचानन्तमसङ्कुचितम् आत्मीयमैश्वर्यम् अपहतपाप्मत्वादिगुणाष्टकलक्षणं लभन्ते निरस्तनिश्शेषाज्ञानतत्कार्याः गुणाष्टकप्रादुर्भावरूपमुक्तिं लभन्त इत्यर्थः, सतां गतेः परमपुरुषस्य मोहः कुतो नु? तत्पादसेवकानामेव न मोहः, किंपुनस्तस्य मोहाभाव इति वक्तव्यमित्यर्थः ॥ ३२ ॥

मु ॥ किञ्च यस्य पादसेवया ऊर्जितया लब्धबलया आत्मविद्यया अनादिश्चासा-

१. वा येऽज्ञसंभवाः. मु-भा-प्र-पा ॥

तं शस्त्रपूगैः प्रहरन्तमोजसा साल्वं शरैश्शौरिरमोघविक्रमः ।
युद्ध्वाऽच्छिनद्वर्मधनुश्शिरोमणिं सौभं च शत्रोर्गदया रुरोज ह ॥ ३३
तत्कृष्णहस्तेरितया विचूर्णितं पपात तोये गदया सहस्रधा ।

---

वात्मविपर्ययग्रहश्च तं मनुष्योऽस्मीत्यादिरूपं सन्तो हिन्वन्ति नाशयन्ति, आत्मीयमैश्वरं गुणाष्टकलक्षणं लभन्ते,तस्य सतां गतेः कुतोनु मोह इति, अतो नैतद्वचनं सत्यमित्यर्थः॥

वी॥ इत्थं परमते निरस्ते किं तर्हि तात्त्विकमित्यत आह—तमिति॥ शौरिरित्यस्ये-न्द्रप्रस्थादागत इत्यादिः, यद्वा—भगवतः शोकमोहादिप्रतिपादकमिव स्थितमनूदितं प-रमतमुद्धरति एवं वदन्तीति त्रिभिः॥अन्विता युक्ता इति यावत्,केचनैवं वदन्तीत्यर्थः, न-नु निरस्तनिखिलदोषस्य भगवतोऽज्ञानशोकादिदोषान्वदन्तः कथमभियुक्ता इत्यत आह—यदिति। यत् यस्मात् स्ववाच इति षष्ठ्यन्तं,स्ववाचः 'वेदाहं समतीतानि वर्तमानानि चार्जुन' 'तान्यहं वेद सर्वाणि' इति सार्वज्ञ्यविषयभगवद्वचसः ये विरुध्येरन् अज्ञाना-दयो दोषाः तान् ते ऋषयः नानुस्मरन्त्येव, किन्तु मनुष्यभावानुकारमात्रतात्पर्यत्वेन तथोचुरिति भावः, त इति बहुवचनं सर्वाभिप्रायकम्, एवं च 'मानुषीं प्रकृतिं गतः' इत्यस्य प्रकृतिं स्वभावं गतोऽनुगतः अनुकुर्वन्नित्यर्थः, अन्यथा प्राकृतो यथेति दृष्टा-न्तासङ्गतिः, हस्ताच्छार्ङ्गं न्यपतदित्युक्तेरपि मनुष्यभावानुकारे तात्पर्यम्, अन्यथा नि-रस्तनिखिलदोषस्य क्वावद्यसंभावनापीत्यभिप्रायेणाह—क्व शोकेति द्वाभ्याम्॥ अनयो-र्यथोक्त एवार्थः, अस्मिन्पक्षे आर्यमिश्राभिसङ्गत इत्यस्यायमर्थः—आर्यमिश्राः वृद्धा भी-ष्मादयः, तैः अभिसङ्गतः अभितस्संगतः सुखमासमिति, 'आर्यमिश्रैश्च सङ्गतः' इति पाठान्तरमपि क्वचिद्दृश्यते, आर्यैर्मुनिभिर्मिश्रैर्भवद्भिश्च सङ्गत इत्यर्थः, न तु बलभद्र-सहितत्वमनेनोच्यते, अस्मिन्पक्षे काम्यकवनस्थपाण्डवसान्त्वनमुपपन्नमेव, अन्यथा परमतं दूषयन् भगवान्बादरायणः स्ववचसोः पूर्वपरयोः विरोधं परमतेनापादयितुम-र्हति, 'ततो मुहूर्तमित्यादेस्तु' अयमर्थः—उपप्लुतः स्वबोध इत्यसमस्तं पदद्वयम्, स्वबोधः स्वः स्वाभाविकः स्वासाधारणश्च बोधस्सार्वज्ञ्यरूपो यस्य तथाभूतोऽपि प्रकृतावुपप्लुतो मग्नः प्रकृतिवश्याज्ञसंसारीव आस्ते आस इत्यर्थः, तत्र हेतुः—स्वजनान् यदून् अनुसङ्गतः अनुवर्तमानः स्वयमपि कश्चिद्यादव इवानुकुर्वन् इत्यर्थः, तत्ततोऽबुध्यत प्रबुद्धवानभूत्, नित्यसर्वज्ञोऽपि प्राकृतवत्क्रमेणाबुध्यतेति, किं चाद्य-व्याख्याने इन्द्रप्रस्थाद्भगवदागमनस्यानुक्तत्वात् 'तं शस्त्रपूगैः' इत्यादेः पूर्वग्रन्थसंदर्भवै-घट्यं शौरिरित्यस्येन्द्रप्रस्थादागत इत्यादिपूरणत्वे स्वारस्यमित्यवगन्तव्यमित्यलं विस्तरेण, अमोघोऽप्रतिहतो विक्रमो यस्य स शौरिः ओजसा बलेन शस्त्रजातैः प्रहरन्तं साल्वं शरैर्विद्ध्वा ताडयित्वा वर्म कवचं धनुश्च शिरोमणिं च अच्छिनत्, सौभं तु गदया बभञ्ज, हेत्याश्चर्ये ॥ ३३ ॥

मु ॥ प्रासङ्गिकं त्यक्त्वा प्रकृतमेवानुसरति—तमिति ॥ वर्म कवचम्, रुरोज बभञ्ज ॥ ३३ ॥

वी ॥ तदिति ॥ कृष्णहस्तेनेरितया प्रयुक्तया गदया सहस्रधा विचूर्णितं तत्सौभं तोये समुद्रजले पपात, ततस्साल्वः तत्सौभं त्यक्त्वा भूतलमास्थितः गदामुद्यम्य द्रुतं

विसृज्य तद्भूतलमास्थितो गदामुद्यम्य साल्वोऽच्युतमभ्यगाद्द्रुतम्॥ ३४
आधावतस्साङ्गदमस्य बाहुं भल्लेन छित्वाऽथ रथाङ्गमद्भुतम् ।
वधाय साल्वस्य लयार्कसन्निभं बिभ्रद्बभौ सार्क इवोदयाचलः ॥ ३५
जहार तेनैव शिरस्सकुण्डलं किरीटयुक्तं पुरुमायिनो हरिः ।
वज्रेण वृत्रस्य यथा पुरन्दरो बभूव हाहेति वचस्तदा नृणाम् ॥ ३६
तस्मिन्निपतितेपापेसौभेचगदयाहते । [१]देवदुन्दुभयोनेदुस्तदादेवगणेरिताः ॥
सखीनामपचितिं कुर्वन्दन्तवक्त्रो रुषाऽभ्यगात् ॥ ३७

इति श्रीभागवते महापुराणे दशमस्कन्धे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

श्रीशुक उवाच—

शिशुपालस्यसाल्वस्यपौण्ड्रकस्यापिदुर्मतेः। परलोकगतानांचकुर्वन्पारोक्ष्यसौहृदम्॥

---

यथा तथा तं कृष्णम् अभ्यद्रवत् ॥ ३४ ॥

मु॥ततः सौभं कृष्णहस्तेरितया गदया सहस्रधा विचूर्णितं तोये समुद्रजले पपात॥

वी॥ आधावत इति॥ अभ्यापततोऽस्य साल्वस्य अङ्गदेन सहितं बाहुं भल्लेन बाणविशेषेण छित्वा अथ साल्वस्य वधार्थं प्रलयतुल्यं रथाङ्गं चक्रं बिभ्राणो बभौ, यथा सार्कः सूर्यसहित उदयाचलः, तद्वत् ॥ ३५ ॥

मु ॥ भल्लेन स्नुहिदलाकारेण बाणेन साङ्गदं तस्य बाहुं छित्वा अथ च्छेदनानन्तरमेव साल्वस्य वधाय लयार्कसन्निभमिति प्रलयार्कप्रभं रथाङ्गं बिभ्रत् अच्युतो बभौ ॥

वी॥ जहारेति॥ पुरुमायिनः बहुविधमायिनः साल्वस्य शिरः तेनैव चक्रेणैव जहार हृतवान्, यथेन्द्रो वज्रेण वृत्रस्य शिरः, तद्वत्, तदा नृणां हाहेति शब्दो बभूव॥ ३६ ॥

मु ॥ यथा पुरन्दरो वज्रेण वृत्रशिरः, तथा जहार, पुरुमायिनः अनेकमायावतः ॥

वी॥अथ सानुजदन्तवक्त्रवधात्मकं हरेश्चेष्टितं वक्तुं तावत्प्रस्तौति सार्धेन—तस्मिन्निति ॥ तस्मिन् साल्वे पतिते हते च सति सखीनां साल्वादीनाम् अपचितिं पारोक्ष्येणोपकृतिं कुर्वन् कर्तुमित्यर्थः, वर्णाधिक्यमार्षम् ॥ ३७ ॥

मु ॥ देवगणैः ईरिताः वादिताः, सखीनां शिशुपालादीनाम् ॥ ३७ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कंधे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायामेकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

वी ॥ सखीनामपचितिं कुर्वन्नित्युक्तं विस्तरेणाह—शिशुपालस्येत्यादिना॥ पारोक्ष्यसौहृदं परोक्षेण कर्तव्यं सुहृत्कृत्यं कुर्वन्''लक्षणहेत्वोः''इति शता, कर्तुमित्यर्थः, व्यह-

१. नेदुर्दुन्दुभयो राजन् दिवि देवगणेरिताः. पा ॥

एकःपदातिस्संक्रुद्धोगदापाणिःप्रकम्पयन्। पद्भ्यांमहींमहाराजमहासत्त्वोऽभ्यवर्तत
तंतथाऽऽयान्तमालोक्यगदामादायसत्वरः।अवप्लुत्यरथात्कृष्णःसिन्धुंवेलेवप्रत्यधात्
गदामुद्यम्यकारूशोमुकुन्दंप्राहदुर्मदः।दिष्ट्यादिष्ट्याभवानद्यममदृष्टिपथंगतः ॥ ४
त्वंमातुलेयोनःकृष्णमित्रध्रुङ्मांजिघांससि।अतस्त्वांगदयामन्दहनिष्येवज्रकल्पया
तर्ह्यानृण्यमुपैम्यद्यमित्राणांमित्रवत्सलः।बन्धुरूपमरिंहत्वाव्याधिंदेहचरंयथा ॥ ६

---

इयतेत्युत्तरत्र संबन्धः, कथंभूतः? एकः असहायः गदा पाणौ यस्य सः पद्भ्यां महीं प्रकम्पयन् महत् सत्त्वं बलं यस्य सः हे महाराज ॥ १ ॥ २ ॥

मु ॥ सखीनामपचितिं कुर्वन्नित्युक्तम्, तदेवाह—शिशुपालस्येति ॥ पारोक्ष्यसौहृदं परोक्षे करणीयं बन्धुकृत्यम् ॥ १ ॥

मु ॥ अभ्यदृश्यत दन्तवक्र इत्यर्थः, पद्भ्याम् इलां महीं प्रकम्पयन्, तत्र हेतुः—महासत्त्वः महाबल इत्यर्थः ॥ २ ॥

वी ॥ तदा कृष्णः किमकरोत्? तदाह—तमिति॥ तं दन्तवक्रम् अवलोक्य त्वरया सहितः सिन्धुं समुद्रं वेलेव तं प्रत्यधात् प्रतिरुरोध ॥ ३ ॥

मु ॥ प्रत्यधात् रुरोध ॥ ३ ॥

वी ॥ गदामिति ॥ कारूशो दन्तवक्त्रः प्राह,तदेवाह—दिष्ट्येति॥ दिष्ट्या अयमानन्दो जात इत्यर्थः,कोऽसौ? अद्य दृष्टिपथं भवान्प्राप्त इत्येषः,हे कृष्ण त्वम् अस्माकं मातुलेयः मातुलस्य पुत्रः सहजमित्रमिति तात्पर्यम्, तथाऽपि मित्राण्येव द्रुह्यतीति तथा मां च हन्तुमिच्छसि, यत एवंभूतः, ततस्त्वां वज्रतुल्यया बृहत्या गदया हनिष्ये ताडयिष्यामीत्यर्थः॥ ४ ॥ ५ ॥

मु ॥ कारूशः करूशाधिपतिः, हे कृष्ण भवान् अद्य मम दृष्टिपथं गत इति यत् तत् दिष्ट्या अतिशयेन भद्रं जातम् ॥ ४ ॥

मु ॥ तत्र हेतुमाह—त्वमिति ॥ हे मन्द नोऽस्माकं मातुलेयोऽपि त्वं मां जिघांससीति मित्रध्रुगसि, अतो वज्रकल्पया गदया त्वां हनिष्ये ॥ ५ ॥

वी॥ तर्हि एवं चेत्, मित्रवत्सलोऽहं देहगतं व्याधिमिव मृत्युसंपादकं बन्धुरूपमरिं त्वां हत्वा मित्राणामानृण्यम् ऋणाभावं प्राप्स्यामि ॥ ६ ॥

मु ॥ न केवलं मम द्रोही, किन्तु मद्बन्धुद्रोही चेत्यवश्यं हन्तव्योऽसीत्याह—तर्हीति ॥ हे अज्ञ मित्रेषु वत्सलोऽनुरक्तः अहं बन्धुरूपं मातुलेयरूपम् अरिं त्वां हत्वा तदैव मित्राणामानृण्यम् उपैमि, स्वसम्बन्धित्वेऽपि हन्तव्यत्वे दृष्टान्तः—व्याधिं देहचरं यथेति। वस्तुतस्तु—दुर्मदः भगवदवलोकनेन गतमदः मुकुन्दं तृतीयजन्मनि मुक्तिं दातुमागतमित्यर्थः, अद्य तृतीयजन्मावसाने ब्रह्मशापावसाने च भवान् मम स्वात्मीयं दृष्टिपथं गतः, एतत् दिष्ट्या भद्रम्, हर्षे वीप्सा, किञ्च—हे कृष्ण त्वम् अस्माकं मातुलेयः बन्धुः, एवमपि मित्रध्रुक् मित्राणि घातितवान् मां त्वं जिघांससि, यदस्माकं त्वत्तो मृत्युस्सनकाद्यनुग्रहप्राप्तो दुर्वारः, अतः त्वामेतावन्मात्रम् अहं याचे, किं तदित्यत्राह—हे अमन्द सर्वसंहारसमर्थ क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि

एवंरूक्षैस्तुदन्वाक्यैःकृष्णंतोत्रैरिवद्विपम्।गदयाऽताडयन्मूर्ध्निसिंहवद्व्यनदच्चसः॥ ७

गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ।
कृष्णोऽपि तं महागुर्व्या कौमोदक्या स्तनान्तरे ॥ ८

[1]गाढनिर्भिन्नहृदयउद्वमन्रुधिरंमुखात्। प्रसार्यकेशबाह्वङ्घ्रीन्धरण्यांन्यपतद्व्यसुः ॥ ९
ततस्सूक्ष्मतरंज्योतिःकृष्णमाविशदद्भुतम्।पश्यतांसर्वभूतानांयथाचैद्यवधेनृप॥ १०

---

तदेकवारं सहस्वेति, ननु वज्रतुल्यां त्वद्गदां कोवा सहेत? नैवमित्याह—अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः, नन्वेवं कस्तव पुरुषार्थः? तत्राह—तर्हीति । ज्ञो यस्मान्न विद्यते हे सर्वज्ञेत्यर्थः, एतद्देहबन्धेन बन्धुरूपं "माता पिता भ्राता" इत्यादिश्रुत्यनुसारेण सर्वविधबन्धुम् अरिं ब्रह्मशापेन शत्रुतया प्रतीतं त्वां हत्वा, गत्यर्थस्य बुद्ध्यर्थत्वात् ज्ञात्वेत्यर्थः, तेन मित्राणामानृण्यम् उपैमि तत्त्वज्ञानप्रभावेन मित्राण्यपि त्वत्पदं प्रापय्य तेषामनृणो भवामीत्यर्थः, तदुक्तं—"पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः" इत्यादिना,विशेषेणाधीयते हृदि चिन्त्यत इति व्याधिः,देहे हृत्पुण्डरीके चरति वर्तत इति देहचरः अन्तर्यामीति तं यथा तत्त्वतो ज्ञात्वा अनृणो भवति, एवं साक्षाद्भूतं त्वामित्यर्थः ॥ ६ ॥

वी॥एवमिति॥ तोत्रैः अङ्कुशादिभिः द्विपं गजमिव इत्थं रूक्षैः परुषैः वाक्यैः कृष्णं तुदन् व्यथयन्निव मूर्ध्नि गदया अताडयत्, ततः स दन्तवक्त्रः सिंहवत् व्यनदत्॥ ७॥

मु ॥ रूक्षैरित्यादौ प्रतीत्यनुसारेण परुषैः वाक्यैः तुदन व्यथयन् तोत्रैः अङ्कुशादिभिः ॥ ७ ॥

वी॥ गदयेति॥ यदूद्वहः कृष्णः आजौ युद्धे गदया ताडितोऽपि न चचाल, अपितु कृष्णः तं दन्तवक्त्रं स्तनान्तरे स्तनमध्ये कौमोदक्या गदया गाढं यथा तथा अताडयदित्यनुषङ्गः ॥ ८ ॥

मु ॥ ८ ॥

वी ॥ एवं ताडितो निर्भिन्नं हृदयं यस्य सः मुखात् रुधिरम् उद्वमन् केशादीन् प्रसार्य व्यसुः गतप्राणो धरण्यां न्यपतत् ॥ ९ ॥

मु ॥ ९ ॥

वी॥ततो दन्तवक्त्रशरीरात् सूक्ष्मम् अणुस्वरूपं परित्यक्तप्रकृतिसंबन्धं ज्योतिः स्वप्रकाशं जीवस्वरूपं कृष्णम् आविशत्,तावदाविश्य ततस्तत्साधर्म्ययुक्तः तत्पार्षदतां प्राप्त इत्यर्थः, यथा सर्वभूतानां पश्यतां सतां हे नृप चैद्यवधे कृते तद्देहादाविशत्, तद्वत्, यद्यप्यात्मज्योतिषोऽतिसूक्ष्मत्वात्सर्वभूतैर्द्रष्टुम् अशक्यम् अतीन्द्रियं च, तथाऽपि स्वस्य परमपुरुषत्वं तयोस्तु शापान्ते स्वस्मिन्प्रवेशं च सर्वभूतेभ्यः प्रख्यापयितुं शक्तो भगवान् तथा प्रवेशयामासेति विभावयन्तु ॥ १० ॥

मु ॥ तस्य शापमोक्षमाह—तत इति ॥ कृष्णम् आविशत्, तत् अद्भुतम् अभूत्॥

---

१. गदा. पा ॥

विदूरथस्तु तद्भ्राता भ्रातृशोकपरिप्लुतः ।
आगच्छदसिचर्मभ्या[१]मुच्छ्वसंस्तज्जिघांसया ॥　　११
तस्यचापततःकृष्णश्चक्रेणक्षुरनेमिना।शिरोजहारराजेन्द्रसकिरीटंसकुण्डलम् ॥ १२
एवंसौभंचसाल्वंचदन्तवक्त्रंसहानुजम्।हत्वादुर्विषहानन्यानीडितस्सुरमानवैः॥१३
मुनिभिस्सिद्धगन्धर्वैर्विद्याधरमहोरगैः।अप्सरोभिःपितृगणैर्यक्षैःकिन्नरचारणैः ॥
उद्गीयमानविजयःकुसुमैरभिवर्षितः।वृतश्चवृष्णिप्रवरैर्विवेशालङ्कृतांपुरीम् ॥　१५
एवंयोगेश्वरःकृष्णोभगवाञ्जगदीश्वरः।ईयतेपशुदृष्टीनांनिर्जितोजयतीतिसः ॥ १६

( बलरामकृततीर्थयात्रासूतवधादिकथारम्भघट्टः )

श्रुत्वायुद्धोद्यमंरामःकुरूणांसहपाण्डवैः।तीर्थाभिषेकव्याजेनमध्यस्थःप्रययौकिल ॥

---

वी॥ विदूरथइति॥ तस्य दन्तवक्रस्य भ्राता विदूरथः भ्रातृविषयशोकेन परिप्लुतः उच्छ्वसन् तज्जिघांसया कृष्णजिघांसया असिचर्मभ्यां खड्गखेटाभ्यां युक्त इति शेषः, आगच्छदभ्यपतत् ॥ ११ ॥

वी॥ क्षुरस्येव नेमि धारा यस्य तेन चक्रेण हे राजेन्द्र किरीटादिसहितम् आपततः तस्य विदूरथस्य शिरो जहार चिच्छेदेत्यर्थः ॥ १२ ॥

मु ॥ ११ ॥ १२ ॥

वी ॥ एवमिति ॥ अन्यानपि दुर्विषहान् सोढुमशक्यान् शत्रून् हत्वा सुरादिभिरीडितः उपगीयमानो विजयो यस्य सः वृष्णिप्रवरैः यदूत्तमैः परिवृतश्च पुरीं द्वारकां विवेश ॥ १३ ॥ १५ ॥

मु ॥ उपसंहरति—एवमिति ॥ अन्यैः दुर्विषहान् दुस्सहान् हत्वा सुरमानवैः मुनिभिश्च ईडितः सिद्धादिभिः उपगीयमानसच्चरित्रः सर्वैरेतैः कुसुमैरभिवर्षितः वृष्णिप्रवरैर्वृतश्च अलङ्कृतां पुरीं विवेश ॥ १३ ॥ १५ ॥

वी॥इत्थं सर्वत्र सर्वदा विजयिनो भगवतः कश्चित्पराजयं वदन्तो मूढा इत्याह—एवमिति॥भगवान् षाड्गुण्यपूर्णः जगतः कृत्स्नस्येश्वरः प्रशासिता च,अनेन पराजयसंभावना दूरत एवापास्तेति सूचितम्, निर्जितः जरासन्धादिभिरिति शेषः, क्वचिच्च जयतीत्येवं पशुदृष्टीनां मूढानाम् ईयते प्रतीयते,निर्जितो जयतीति भ्रान्तिः,अजित एव जयतीत्यर्थः॥

मु ॥ निर्जितो जयतीति भ्रान्तिः, अजित एव जयतीत्यर्थः ॥ १६ ॥

वी॥अथ पुनः कानिचित् बलभद्रचेष्टितान्यनुवर्णयति—श्रुत्वेत्यादिना यावदेकोनाशीतिसमाप्ति॥ कुरूणां पाण्डवैस्सह युद्धोद्यमं युद्धाय यत्नं श्रुत्वा मध्यस्थः उभयेषामपि बान्धवताविशेषादुभयमध्यस्थः तटस्थ इति यावत्, हेतुगर्भमिदम्, अतः पुण्यतीर्थस्नानयात्राव्याजेन प्रययौ ॥ १७ ॥

मु ॥ मध्यस्थः उभयपक्षसाधारण इति हेतोः तीर्थाभिषेकव्याजेन पुरात्प्रययौ किल ॥ १७ ॥

---

१. निश्वसन्. पा ॥

स्नात्वाप्रभासेसंतर्प्यदेवर्षिपितृमानवान्।सरस्वतींप्रतिस्रोतांययौब्राह्मणसंवृतः॥ १८
पृथूदकंबिन्दुसरस्[1]त्रिकूटंचसुदर्शनम्।विशालंब्रह्मतीर्थंचचक्रंप्राचींसरस्वतीम्॥ १९
यमुनामनुयान्येवंगङ्गामनुचभारत।जगामनैमिशंयत्रऋषयस्सत्रमासते॥ २०
तमागतमभिप्रेत्यमुनयोदीर्घसत्रिणः।अभिनन्द्ययथान्यायंप्रणम्योत्थायचार्चयन्॥
सोऽर्चितस्सपरीवारःकृतासनपरिग्रहः।रोमहर्षणमासीनंमहर्षेश्शिष्यमैक्षत॥ २२
अप्रत्युत्थायिनंसूतमकृतप्रह्वणाञ्जलिम्।अध्यासीनंचतान्विप्रांश्चुकोपोद्वीक्ष्यमाधवः
कस्मादसाविमान्विप्रानध्यास्ते प्रतिलोमजः।

---

वी॥ स्नात्वेति॥ प्रति प्रत्यक् स्रोतः प्रवाहो यस्यास्तां सरस्वतीं प्रत्यक्सरस्वतीं ययावित्यर्थः॥ १८॥

मु॥ तत्प्रस्थानक्रममाह—स्नात्वेति॥ प्रभासे सरस्वतीसमुद्रसङ्गमस्थाने प्रतिस्रोतां पश्चिमाभिमुखस्रोतसम्, प्रतिस्रोतादयः प्रत्यग्वाहिन्यास्सरस्वत्या एव स्थानविशेषाः॥

वी॥ ततः पृथूदकादीन् तीर्थविशेषान् ययाविति संबन्धः, तत्र चक्रं चक्रतीर्थं प्राचीं सरस्वतीं त्रिवेणीमित्यर्थः॥ १९॥

मु॥ पृथूदकं पृथुतीर्थं चक्रं चक्रतीर्थं च गत्वा प्राचीं प्राक्स्रोतसं सरस्वतीं ययौ॥

वी॥ ततो यमुनामनु यानि तीर्थानि, गङ्गामनु च यानि, तानि सर्वाणि सादरं यथा तथा, नारदामिति पाठे तदाख्यतीर्थं नैमिशं च जगामेति संबन्धः, नैमिशं विशिनष्टि—यत्रेति। यत्र नैमिशे ऋषयः शौनकादयः सत्रमासते अनुतिष्ठन्ति॥ २०॥

मु॥ ततः तामनु यानि तीर्थानि तान्यतिक्रम्य यमुनामनु यानि तान्यतिक्रम्य गङ्गामनु यानि तान्यतिक्रम्य नैमिशं जगाम, सत्रमासत अन्वतिष्ठन्॥ २०॥

वी॥ तमिति॥ तं बलभद्रम् आगतमभिप्रेत्य दृष्ट्वेत्यर्थः, दीर्घं सहस्रसमं सत्रमेषामस्तीति तथा, ते मुनयः यथान्यायम् अर्चयन्नर्चितवन्तः॥ २१॥

मु॥ दीर्घसत्रिणः दीर्घकालसत्रदीक्षावन्तः॥ २१॥

वी॥ सइति॥ कृतः आसनपरिग्रहो येन स रामः रोमहर्षणमैक्षत इति संबन्धः, कथंभूतम्? आसीनमुपविष्टं महर्षेर्बादरायणस्य शिष्यम्॥ २२॥

मु॥ महर्षेः व्यासस्य शिष्यं रोमहर्षणम् आसीनमैक्षत॥ २२॥

वी॥ अप्रत्युत्थायिनं प्रत्युत्थानमकृतवन्तं तं सूतं प्रतिलोमजं न कृतं प्रह्वणं प्रणामः अञ्जलिश्च येन तं तान् विप्रान् अध्यासीनं विप्रेभ्योऽप्युच्चासनासीनमित्यर्थः, माधवो रामः चुकोप सकोपं प्राहेत्यर्थः॥ २३॥

मु॥ माधवः मधुवंश्यो रामः तान् विप्रान् अधि उपरि आसीनम् अत एव तेषु प्रत्युत्थितेषु अप्रत्युत्थायिनं तेषु कृतप्रणामेषु अकृतप्रह्वणाञ्जलिं न कृतं प्रह्वणं प्रणामः अञ्जलिश्च येन तं सूतमुद्वीक्ष्य चुकोप, आह चेदमिति शेषः॥ २३॥

वी॥ तदेवाह—कस्मादिति चतुर्भिः॥ विप्रानध्यास्ते विप्रेषूच्चैरासनमधितिष्ठतीत्यर्थः, प्रतिलोमज इत्यनेन तदनर्हत्वाविष्कारः, तथा धर्मं पालयन्तीति तथा तान-

---

[1] त्रितकूपं. पा॥

धर्मपालांस्तथैवास्मान्वधमर्हति दुर्मतिः ॥ २४
ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च। सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥
अदान्तस्याविनीतस्य वृथा पण्डितमानिनः। न गुणाय भवन्ति स्म नटस्येवाजितात्मनः ॥
एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः। वध्या हि धर्मध्वजिनस्ते हि पातकिनोऽधिकाः
एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि। [1]भावित्वात्तं कुशाग्रेण करस्थेनाहनत्प्रभुः ॥

---

स्मानप्यध्यास्ते, अतोऽयं दुर्मतिः वधमर्हति ॥ २४ ॥

मु ॥ इमान् धर्मिष्ठान् विप्रान् धर्मपालानस्मांश्च असौ प्रतिलोमजः कस्मादध्यास्ते अधः कृत्यास्ते? न कस्माच्चित्, अतो दुर्मतिर्वधमर्हति ॥ २४ ॥

वी ॥ अजानन्नध्यास्त इत्यत आह—ऋषेरिति ॥ ऋषेर्भगवतो बादरायणस्य शिष्यो भूत्वा बहूनीतिहासादीनि सर्वतः कात्स्न्र्येन अधीत्य च अदान्तस्य दमविनयादिरहितस्य वृथा पण्डितमात्मानं मन्यमानस्य गुणाय न भवन्ति, इतिहासाद्यध्ययनादीनीति शेषः, किन्तु दोषायैवेति भावः, अदान्तस्येत्यादिविशेषणैः नास्याज्ञानकृतमध्यासनाधिष्ठानम्, अपित्वहंकारप्रयुक्तमिति सूच्यते ॥ २५ ॥ २६ ॥

मु ॥ अज्ञानादिति चेत्—नेत्याह—ऋषेरिति ॥ महर्षेः व्यासस्य सर्वशः कात्स्न्र्येन अधीत्य कस्मादध्यास्त इति सम्बन्धः ॥ २५ ॥

मु ॥ तर्हि विदितवेदितव्यत्वात् न वध्य इत्यत्राह—अदान्तस्येति ॥ स्मेत्यवधारणे, गुरोरधीतान्यपीतिहासादीनि नटस्येव अजित आत्मा मनो येन तस्य अस्य ख्यातिलाभपूजाद्यर्थिनः अतएवादान्तस्य अजितेन्द्रियस्य अविनीतस्य स्वैरवृत्तेः वृथा वस्तुतः पाण्डित्यं विनैव पण्डितमानिनश्च अस्य गुणाय निर्दोषत्वाय न भवन्तिस्म ॥ २६ ॥

वी॥ विप्रानध्यास्ताम्, अन्यद्वा करोतु, किं तवेत्यत आह—एतदर्थइति॥ कोऽसावर्थः? धर्मध्वजिनः उत्तमवेषधारिणो वध्या इत्येषः, कुतः? हि यस्मात् ते धर्मध्वजिनः अधिकाः पातकिनः, अतो दुष्कृद्विनाशार्थमवतीर्णेन मया एवंविधा अवश्यं वध्या इत्यर्थः ॥ २७ ॥

मु ॥ भवतु स दोषस्त्वं तस्य, किं तेन आयुष्मतश्छिन्नमित्यत्राह—एतदर्थ इति ॥ एषः दुरात्मनां वध एव अर्थः प्रयोजनं यस्य स एतदर्थः, हिरवधारणे, अस्मिन् लोके मया एतदर्थ एवावतारः कृतः, तथापि व्यासशिष्यत्वात् पौराणिकत्वाच्च असौ न वध्य इत्यत्राह—वध्या इति । अत्र ये धर्मध्वजिनः धर्मिष्ठवेषधारिणः अधर्मिष्ठाः ते सुतरां वध्याः, हि यस्मात् ते अधिकाः पातकिनः लोकवञ्चकत्वादिति भावः ॥ २७ ॥

वी ॥ एतावदिति ॥ असतां वधान्निवृत्तोऽपि भगवान् रामः भावित्वात् भवितव्यस्य केनाप्यपरिहार्यत्वात् तं रोमहर्षणं कुशाग्रेणाहनत् ॥ २८ ॥

मु ॥ असद्वधात् अपि निवृत्तो भगवान् एतावदुक्त्वा करस्थेन कुशाग्रेण अस्त्रमन्त्रं भावित्वा अभिमन्त्र्य तमहनत् ॥ २८ ॥

---

१. भावित्वाऽस्त्रं. मु-भा-प्र-पा ॥

हाहेतिवादिनस्सर्वेमुनयःखिन्नमानसाः।ऊचुस्सङ्कर्षणंदेवमधर्मस्तेकृतःप्रभो॥ २९
अस्यब्रह्मासनंदत्तमस्माभिर्यदुनन्दन।आयुश्चात्माक्लमंतावद्यावत्सत्रंसमाप्यते॥ ३०
अजानतेवाचरितस्त्वयाब्रह्मवधोयथा। [१]योगेश्वरस्यभवतोनाऽऽम्नायोऽपिनियामकः
यद्येतद्ब्रह्महत्यायाःपावनंलोकपावन। चरिष्यतिभवाल्लोक[२]सङ्ग्रहोनान्यचोदितः॥

श्रीराम उवाच—

चरिष्येवधनिर्वेशंलोकानुग्रहकाम्यया।नियमःप्रथमेकल्पेयावान्सतुविधीयताम्॥३३

वी ॥ हाहेति ॥ खिन्नं मानसं येषां ते ऊचुः, उक्तिमेवाह—अधर्मइत्यादिना सपादत्रयेण । ते त्वया अधर्मः कृतः ॥ २९ ॥

मु ॥ ते त्वया ॥ २९ ॥

वी ॥ अधार्मिकप्रतिलोमजवधः कोऽयमधर्म इत्यत आहुः - अस्येति॥ हे यदुनन्दन अस्य रोमहर्षणस्यास्माभिः ब्रह्मासनं यावत् यावता कालेन सत्रं समाप्यते, तावत् आत्मनो देहस्य न क्लमः श्रमो यस्मिन् तदायुश्च दत्तम्, पुराणवक्त्रे ब्राह्मणाय देयं यस्मान्न प्रत्युत्थीयते तद्ब्रह्मासनम् ॥ ३० ॥

मु ॥ प्रतिलोमजवधेऽपि त्वया अधर्मः कृत इत्याशयेनाहुः—अस्येति॥ पुराणप्रवचनाय आत्मनः शरीरस्य अक्लमो यस्मिन् तत् आयुश्च दत्तमिति ॥

वी ॥ अजानतेति ॥ अतस्त्वया अजानतेव आचरितं कृतं यथा ब्रह्मवधो ब्रह्महत्या तद्वत् ब्रह्महत्यासदृशं पापं कृतमित्यर्थः, ननु ब्रह्मवधादपि किं ममेश्वरस्येत्यत आह—योगेश्वरस्येति सार्धेन । यद्यपि योगेश्वरस्याविद्यास्पर्शोपयुक्तयोगनिर्वाहकस्य अकर्मवश्यस्य तव ब्राह्मणो न हन्तव्यः इत्यादिलक्षण आम्नायोऽपि न नियामकः, यद्यपि त्वं न विधिवश्य इत्यर्थः ॥ ३१ ॥

वी॥तथापि हे लोकपावन ब्रह्महत्यायाः पावनं प्रायश्चित्तं चरिष्यति चरतु अनुतिष्ठत्वित्यर्थः, किमर्थमित्यत आहुः—न अन्यैश्चोदितः स्वयमेव यदि भवान् चरिष्यति, तर्हि लोकसंग्रहः स्यादित्यर्थः, " यद्यदाचरति श्रेष्ठः " इत्युक्तरीत्या लोकाननुशिक्षितुं चरेति भावः ॥ ३२॥

मु॥ यथा यथावत् ब्रह्मवधः आचरितः, ननु विधिनिषेधाकिङ्करस्य का नाम ब्रह्महत्येत्यत्राहुः—योगेश्वरस्येति सार्धेन ॥ हे लोकपावन सकृन्नामसङ्कीर्तनेनैव महापातकानि विनाशयतस्तव किं प्रायश्चित्तेनेत्यर्थः,योगेश्वरस्य भवतः आम्नायोऽपि ब्राह्मणो नहन्तव्य इत्यादि लक्षणः नियामको न भवत्येव, अत एव तस्याः ब्रह्महत्यायाः पावनं कर्म नान्यचोदितः अनन्यचोदितः स्वयमेव भवान् यदि करिष्यति, तदा लोकसङ्ग्रहं लोकसङ्ग्रहः स्यादिति भावः, नपुंसकत्वमार्षम् ॥ ३१ ॥ ३२ ॥

वी ॥ एवमुक्तः प्राह रामः—चरिष्य इति द्वाभ्याम् ॥ लोकानुग्रहकाम्यया लोकानुजिघृक्षया वधस्य निर्वेशं प्रायश्चित्तं चरिष्ये,प्रथमे कल्पे मुख्यपक्षे यावान्नियमः, स तु विधीयतां मुख्यप्रायश्चित्तमुपदिश्यतामित्यर्थः ॥ ३३ ॥

मु ॥ लोकानुग्रहकाम्यया लोकसङ्ग्रहार्थं वधनिर्वेशं वधप्रायश्चित्तं चरिष्ये चरि-

१. लोकेश्वरस्य. पा ॥ २. सङ्ग्रहं. मु-भा-प्र-पा ॥

दीर्घमायुः[1]किलैतस्यसत्त्वमिन्द्रियमेवच। आशासितंयत्तद्ब्रूतसाधयेयोगमायया॥३४

ऋषय ऊचुः—

[2]शस्त्रस्यतववीर्यस्यमृत्योरस्माकमेवच। यथाभवेद्वचस्सत्यंतथारामविधीयताम्॥ ३५

राम उवाच—

आत्मावैपुत्रउत्पन्नइतिवेदानुशासनम्। तस्मादस्यभवेद्वक्ताआयुरिन्द्रियसत्त्ववान्॥

किंवःकामोमुनिश्रेष्ठाब्रूताहंकरवाण्यथ। अजानतस्त्वपचितिंयथावच्चिन्त्यतांबुधाः॥

---

ष्यामि. प्रथमे कल्पे मुख्यपक्षे, विधीयताम् उपदिश्यताम् ॥ ३३ ॥

वी॥ किंच—दीर्घमिति ॥ अस्य रोमहर्षणस्य दीर्घमायुस्सत्त्वं बलमिन्द्रियपाटवात्मकम् अन्यच्च यद्भवद्भिराशासितम् अपेक्षितं तत्सर्वं ब्रूत योगमायया आश्चर्यशक्त्या तत्सर्वं साधये ॥ ३४ ॥

मु॥ किञ्च—एतस्य दीर्घमायुः सत्त्वं बलम् इन्द्रियम् इन्द्रियपाटवम् अन्यच्च यत् भवद्भिः आशासितम् अपेक्षितं च,एतत् ब्रूत, एतत्सर्वं योगमायया आश्चर्यशक्त्या साधये साधयामि ॥ ३४ ॥

वी ॥ इत्थमुक्ताः प्राहुर्मुनयः—शस्त्रस्येति ॥ शस्त्रस्य त्वत्प्रयुक्तकुशाग्ररूपस्य तव वीर्यस्य च मृत्योः रोमहर्षणमरणस्य च यथा सत्यत्वं यथा चास्माकं वचः यावत्सत्रं त्वं दीर्घायुष्मान् पुराणवक्ता भवेत्येवंविधं वचः सत्यं भवेत्, तथा हे राम विधीयतां क्रियतामित्यर्थः ॥ ३५ ॥

मु॥ अस्त्रादीनां सत्यता यथा भवेत् अस्माकं वचः सत्यं यथा भवेत्, तथा विधीयतामित्यर्थः ॥ ३५ ॥

वी॥शस्त्रादीनां सत्यत्वं संपादयन्नाह रामः—आत्मावाइति॥ "आङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामाऽसि संजीव शरदश्शतम्" इत्यादिवेदानुशासनं वेदवाक्यम्, तस्मादस्य पुत्र उग्रश्रवाः भवतां पुराणवक्ता भवेत्, आयुरादिमांश्च भेवत्, अतस्साक्षाद्रोमहर्षणस्याजीवनात् अस्त्रस्य मृत्योश्च सत्यता, पुत्ररूपेण चायुरादिसिद्धेर्भवद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥

मु ॥ तथा सम्पादयन्नाह—आत्मा वै इति ॥ "अङ्गादङ्गात्संभवसि हृदयादधि जायसे।आत्मा वै पुत्रनामाऽसि सञ्जीव शरदश्शतम्"इत्यादिवेदानुशासनं,तस्मात् अस्य रोमहर्षस्य पुत्रः उग्रश्रवाः भवतां पुराणवक्ता भवेत्, अतोऽस्त्रादेस्सत्यता,पुत्रशब्दितस्य सूतस्य आयुरादिलाभात् युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६॥

वी॥ किंच—ब्रह्मदण्डार्थं युष्मदपेक्षितं कथयत,तदहं करिष्यामीत्यत आह—किंवः कामइति॥ हे मुनिश्रेष्ठाः वो युष्माकं किंकामः यद्विषयः कामो वर्तते तं ब्रूत,अथानन्तरं ब्रह्मदण्डं गृहीत्वा अपचितिं निष्कृतिम् अजानतो मम हे बुधाः यथावत् वेदशास्त्रानुसारतः अपचितिः चिन्त्यतां विधीयताम् ॥ ३७॥

---

१. बतै. पा ॥ २. अस्त्रस्य. मु-भा-प्र पा ॥

ऋषय ऊचुः—

इल्वलस्यसुतोघोरः[१]पल्वलोनामदानवः।सदूषयतिनस्सत्रमेत्यपर्वणिपर्वणि ॥ ३८

तंपापंजहिदाशार्हतन्नश्शुश्रूषणंपरम्।पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम्॥ ३९

ततश्च भारतंवर्षंपरीत्यसुसमाहितः।चरित्वा द्वादशान्मासांस्तीर्थस्नायी विशुध्यसे॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे पल्वलवधोपक्रमो नाम अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

श्रीशुक उवाच—

[२]ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः। भीमो वायुरभूद्राजन्पूयगन्धश्च सर्वशः॥

---

मु॥ किञ्च—ब्रह्मदण्डार्थं युष्मद्रक्षणार्थं च ईप्सितं कथयतेत्याह — किं वः कामः किं विषये वः कामो वर्तते, तत्कथयतेति, अत्र ब्रह्मदण्डं गृहीत्वा अपचितिं निष्कृतिम् अजानतो मे हे बुधाः यथावच्चिन्त्यताम् , अपचितिरिति शेषः ॥ ३७ ॥

वी॥ इत्थमुक्तास्तावदपेक्षितं कथयन्ति—इल्वलस्येति ॥ दानवो वर्तत इति शेषः, स पल्वलः प्रतिपर्वागत्य सत्रं दूषयति ॥ ३८ ॥

मु ॥ प्रथमं तावदपेक्षितं कर्तव्यं कथयन्ति—इल्वलस्येति द्वाभ्याम् ॥ ३८ ॥

वी ॥ तं पल्वलं जहि मारय, तदेव नोऽस्माकं परमुत्कृष्टं शुश्रूषणं, तं कथंभूतं? पूयादीन्यभिवर्षतीति तथा तं, तत्र पूयं हेयम् ॥ ३९ ॥

मु ॥ कथं दूषयतीत्यत आहुः—पूयेति ॥ ३९ ॥

वी ॥ ततस्तद्वधानन्तरं भारतं वर्षं परीत्य प्रदक्षिणीकृत्य सुसमाहितो रागद्वेषादिरहितः तीर्थस्नानशीलो द्वादश मासांश्चरित्वा विशुध्यसे शुद्धो भविष्यसि, चरित्वेत्यस्य कृच्छ्राणीत्यादिर्वा ॥ ४० ॥

मु ॥ प्रायश्चित्तं विदधति—ततश्चेति ॥ ततः सुसमाहितः सुतरां समाहितः अहिंसाब्रह्मचर्यादियुक्तः तीर्थस्नायी तीर्थस्नानशीलश्च द्वादश मासान् भारतं वर्षं परीत्य प्रदक्षिणीकृत्य चरित्वा विशुद्ध्यसे ॥ ४० ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम् अशीतितमोऽध्यायः ॥ ८० ॥

---

वी॥ अथ पल्वलवधं वक्तुं तद्दुश्चेष्टितं प्रस्तौति—ततइति ॥ पर्वण्युपावृत्ते प्राप्ते सति प्रचण्डो निष्ठुरः पांसून्वर्षतीति तथा भयङ्करो दुर्गन्धो वायुः अभूत् उदभूत्॥ १॥

मु ॥ वल्कलवधमाह—तत इति षड्भिः ॥ उपावृत्ते प्राप्ते ॥ १ ॥

---

१. बल्वलो. पा ॥ वल्कलो. मु भा प्र-पा ॥ २. अथ. पा ॥

ततोऽमेध्यमयं वर्षं[1]पल्वलेनविनिर्मितम्। अभवद्यज्ञशालायांसोऽन्वदृश्यतशूल[2]धृत्

तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ।

तप्तताम्रशिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३

सस्मार मुसलं रामः परसैन्यविदारणम्।हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥४

तमाकृष्यहलाग्रेण[२]पल्वलंगगनेचरम्। मुसलेनाहनत्क्रुद्धोमूर्ध्निब्रह्मद्रुहंबलः ॥ ५

सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन्। मुञ्चन्नार्तस्वरंशैलोयथावज्रहतोऽरुणः

संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः।अभ्यषिञ्चन्महाभागवृत्रघ्नंविबुधायथा॥

वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ।

---

वी॥ ततः अमेध्यमयमिति च्छेदः, स पल्वलः शूलं धरतीति तथा अन्वदृश्यत ॥

मु ॥ २ ॥

वी॥ तमिति ॥ तं पल्वलमवलोक्य रामः परसैन्यं विदारयतीति तथा तं मुसलं दैत्यान् दमयति नाशयतीति तथा तद्धलं च सस्मारेति संबन्धः, तं कथंभूतं? बृहन् कायः शरीरं यस्य तं भिन्नो विदीर्णोऽञ्जनचयः उपमा यस्य तम् अतिकृष्णमित्यर्थः, तप्तताम्रवच्छिखा श्मश्रूणि च यस्य तं दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तं ते हलमुसले तूर्णं तदैव उपतस्थतुः सन्निहिते बभूवतुः ॥ ३ ॥ ४ ॥

मु ॥ भिन्नः विदीर्णः अञ्जनचयः उपमा यस्य तम् अतिकृष्णमित्यर्थः, तप्तताम्रवत् शिखाश्मश्रूणि च दंष्ट्राश्च तैस्ताभिरुग्रं भ्रुकुटीयुक्तं मुखं यस्य तम् ॥ ३ ॥

मु ॥ ४ ॥

वी॥ तमिति ॥ गगनेचरं तं पल्वलं हलाग्रेणाकृष्य बलो रामः क्रुद्धो मूर्ध्नि मुसलेनाहनत् ताडयामास,तत्र हेतुत्वेन पल्वलं विशिनष्टि—ब्रह्मद्रुहं ब्रह्म ब्राह्मणकुलं तस्मै द्रुह्यतीति तथा तम् ॥ ५ ॥

मु ॥ ५ ॥

वी॥ सइति॥ निर्भिन्नं ललाटं यस्य सः पल्वलः असृक् रुधिरम् उत्सृजन् उद्गिरन् आर्तस्वरं मुञ्चंश्च भुवि भूमौ अपतत्, यथा अरुणः गैरिकादिधातुभिरिति शेषः, उपमेये तु रुधिरेणारुणः वज्रेणाहतः पर्वतः पतति, तद्वत् ॥ ६ ॥

मु ॥ यथा धातुभिररुणः वज्रहतः शैलः, तथा सोऽसुरो भुव्यपतत् ॥ ६ ॥

वी॥ संस्तुत्येति॥ अवितथाः सत्याः ताः आशिषः प्रयुज्य आशीर्वादान् कृत्वेत्यर्थः, हे महाभाग अभ्यषिञ्चन् स्नापयामासुः, यथा विबुधाः देवाः वृत्रघ्नम् इन्द्रं तद्वत्॥ ७ ॥

मु ॥ अवितथा आशिषः प्रयुज्य मन्त्राभिमन्त्रितेन तीर्थोदकेन अभ्यषिञ्चन् ॥ ७ ॥

वी॥ वैजयन्तीमिति॥ श्रियो धामानि अम्लानानि पङ्कजानि यस्यां तां वैजयन्तीं नाम मालां दिव्ये वस्त्रे दिव्यान्याभरणानि च ददुः ॥ ८ ॥

---

१. बल्वलेन. पा॥ २. धृक्. इति पाठान्तरम् । 'दृह वृद्धौ' इत्यस्माद्धातोः क्विपि 'दादेः' इति घत्वे भष्भावे च रूपम् । शूलेन दर्हते वर्धत इति शूलधृक् इति विग्रहः ॥

रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८

अथ तैरभ्यनुज्ञातःकौशिकीमेत्यब्राह्मणैः। स्नात्वासरोवरमगाद्यतस्सरयुरास्रवत्॥ अनुस्रोतेन सरयूं प्रयागमुपगम्य सः।स्नात्वा संतर्प्य देवादीञ्जगाम पुलहाश्रमम् ॥ गोमतींगण्डकींस्नात्वाविपाशांशोणआप्लुतः। गयांगत्वापितॄनिष्ट्वागङ्गासागरसङ्गमम् उपस्पृश्यमहेन्द्राद्रौरामंदृष्ट्वाऽभिवाद्यच। [१]सप्तगोदावरीं[२]वेणींपम्पांभीमरथींततः ॥ स्कन्दंदृष्ट्वाययौरामश्श्रीशैलंगिरिशालयम्। द्रविडेषुमहापुण्यंदृष्ट्वाद्रिंवेङ्कटं[३]प्रभुः॥ १४ कामकोटिंपुरींकाञ्चींकावेरींचसरिद्वराम्। श्रीरङ्गाख्यंमहापुण्यंयत्रसन्निहितोहरिः॥ ऋषभाद्रिंहरेःक्षेत्रंदक्षिणांमधुरांतथा। समुद्रसेतुमगमन्महापातकनाशनम् ॥ १६

---

मु ॥ श्रियो धामानि अम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥

वी ॥ अथेति ॥ तैर्मुनिभिः ब्राह्मणैस्सह कौशिकीं नदीमागत्य तत्र स्नात्वा ततस्सरोवरमगात्, किं तत्सरस्तत्राह—यतस्सरसः सरयूः आस्रवत् उद्गात् ॥ ९ ॥

मु ॥ अथ तैरभ्यनुज्ञातो रामो ब्राह्मणैस्सह कौशिकीमेत्य स्नात्वा सरोवरमगात्, तमेवाह—यत इति ॥ ९ ॥

वी ॥ सरयूमनुस्रोतेन अनुलोमेन स बलभद्रः पुलहाश्रमं सालग्रामक्षेत्रं गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणे च नदे आप्लुतः स्नातः पितॄन् पितामहादीन् इष्ट्वा संपूज्य मनसा आराध्येत्यर्थः,जीवत्पितृकत्वाच्छ्राद्धाधिकाराभावात्, यद्यपि जीवत्पितृकैः गया न गन्तव्येति वदन्ति,तथाप्यत एव वचनात्तीर्थयात्राव्याजेन गन्तव्या,न तु श्राद्धार्थमित्यवगम्यते, गङ्गासागरसङ्गमं गत्वा उपस्पृश्य तत्र स्नात्वा, क्त्वाप्रत्ययान्तानां समुद्रसेतुमगमदित्युपरिष्टादन्वयः,गिरिशस्य रुद्रस्य आलयं श्रीशैलं श्रीपर्वतं काञ्चीपुरीं सरिद्वरां कावेरीं यत्र हरिस्सन्निहितस्तच्छ्रीरङ्गाख्यं महापुण्यावहं क्षेत्रम् ऋषभाद्रिं वनगिरिं, तद्विशेषणं हरेः क्षेत्रमिति, तत्रेति ॥ १० ॥ १६ ॥

मु ॥ स्रोतेन अनुलोमतः पुलहाश्रमं सालग्रामम् ॥ १० ॥

मु ॥ गोमत्यां गण्डक्यां विपाशायां च स्नात्वा शोणे आप्लुतः स्नातः ॥ ११ ॥

मु ॥ रामं भार्गवम् ॥ १२ ॥

मु ॥ श्रीशैलं श्रीपर्वतं गिरिशस्यालयम् ॥ १३ ॥

मु ॥ काञ्चीं च पुरीम् ॥ १४ ॥

मु ॥ वृषभाद्रिं वनगिरिं दक्षिणमर्णवं गतः ॥ १५ ॥

मु ॥ १६ ॥

---

१. सप्तगोदावरम्. इति पाठान्तरम्। सप्तगोदावरीमिति पाठस्त्वार्षः; 'नदीभिश्च' इति समाहारे अव्ययीभावे 'संख्याया नदीगोदावरीभ्यां च' इत्यचि सप्तगोदावरमित्येव रूपापत्तेः ॥

२. वेणाम् पा॥ ३. प्रभुम्. पाठान्तरम्। इदं च अद्रेर्विशेषणम्। सहि पर्वत एव विष्णुरूपः, यथा नारायणः ॥

तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्योहलायुधः । कृतमालांताम्रपर्णीमलयंचकुलाचलम् ॥
तत्रागस्त्यंसमासीनंनमस्कृत्याभिवाद्यच।योजितस्तेनचाशीभिरनुज्ञातोगतोऽर्णवम्
दक्षिणंतत्रकन्याख्यांदुर्गांदेवींददर्शसः । ततःफल्गुनमासाद्यपञ्चाप्सरसमुत्तमम् ॥
विष्णुस्सन्निहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १९
ततोऽतिव्रज्य भगवान् [१]केरलाञ्च्छतगर्तकान् ।
गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ २०
आर्यांद्वैपायनींदृष्ट्वाशूर्पारकमगाद्बलः।तापींपयोष्णींनिर्विन्ध्यामुपस्पृश्याथदण्डकाम्
प्रविश्यरेवामगमद्यत्रमाहिष्मतीपुरी।मनुतीर्थमुपस्पृश्यप्रभासंपुनरागमत् ॥ २२
श्रुत्वाद्विजैःकथ्यमानंकुरुपाण्डवसंयुगे । सर्वराजन्यनिधनंभारंमेनेहृतंभुवः ॥ २३

---

वी ॥ तत्र समुद्रसेतौ अयुतं धेनूः ददौ ॥ १७ ॥

वी ॥ कृतमालामिति ॥ अगमदित्यनुषङ्गः, शेषोवा, तत्र मलयपर्वते तेनागस्त्येन आशीर्भिर्योजितः चोदितश्च दक्षिणमर्णवं गतः, तत्रार्णवसमीपे कन्याख्यां कन्यांकुमार्याख्यां दुर्गां देवीं ददर्श स बलरामः ॥॥ १८ ॥

मु ॥ १७ ॥

मु ॥ १८ ॥

वी॥तत इति॥ फाल्गुनमनन्तपुरं प्राप्य उत्तमं पञ्चाप्सरसं नाम सरः समासाद्य, तद्विशिनष्टि—यत्र पञ्चाप्सरसे विष्णुस्सन्निहितः, तत्र स्नात्वा गवामयुतम् अस्पर्शत् अदादित्यर्थः ॥ १९ ॥

मु ॥ फाल्गुनम् अनन्तपुरं, तस्य विशेषणं—विष्णुरिति । यत्र विष्णुः सन्निहितः, तत्फाल्गुनमासाद्य पञ्चाप्सरं नाम यदुत्तमं सरः तत्र स्नात्वा गवामयुतमस्पर्शत् ब्राह्मणेभ्यो ददौ ॥ १९ ॥

वी॥ भगवान् रामः केरलादीन् देशान् यत्र धूर्जटेश्शिवस्य सान्निध्यं तद्गोकर्णाख्यं शिवाभिमानिक्षेत्रम् ॥ २० ॥

मु ॥ ततो भगवान् बलः केरलान् शतगर्तकांश्च देशान् अतिव्रज्य गोकर्णाख्यं शिवक्षेत्रमगात् , यत्र धूर्जटेस्सान्निध्यं भवति ॥ २० ॥

वी ॥ द्वीपमयनं यस्यास्तामार्याममम्बिकां दृष्ट्वा शूर्पारकं क्षेत्रं जगाम, तापीमिति । उपस्पृश्य ताप्यादिषु स्नात्वा अथ दण्डकाख्यमरण्यं प्रविश्य ततो रेवां नर्मदामगमत्, यत्र रेवातीरे माहिष्मती पुरी वर्तते, तां रेवामित्यर्थः ॥ २१ ॥ २२ ॥

मु ॥ ततो द्वैपायनीं द्वीपमयनं यस्यास्ताम् आर्यां दृष्ट्वा शूर्पारकमगात् , अथ तापीं पयोष्णीं निर्विन्ध्यां चोपस्पृश्य दण्डकं वनं प्रविश्य रेवामगमत् ,यत्र यस्यास्तीरे॥२१-२२॥

वी॥श्रुत्वेति ॥ तत्र द्विजैः कथ्यमानं सर्वेषां बहूनां राजन्यानां राज्ञां निधनं नाशं श्रुत्वा भुवो भारं हृतं भगवतेति शेषः, मेने अमन्यत ॥ २३ ॥

मु ॥ २३ ॥

---

१. केरलांश्च त्रिगर्तकान् . पा ॥

सभीमदुर्योधनयोर्गदाभ्यांयुध्यतोर्मृधे। वारयिष्यन्विनशनंजगामयदुनन्दनः॥ २४
य युधिष्ठिरस्तुतंदृष्ट्वायमौकृष्णार्जुनावपि।अभिवाद्याभवंस्तूष्णींकिंविवक्षुरिहागतः॥
गदापाणीउभौदृष्ट्वासंरब्धौविजयैषिणौ।मण्डलानिविचित्राणिचरन्ताविदमब्रवीत्॥
युवांतुल्यबलौवीरौहेराजन्हेवृकोदर। एकंप्राणाधिकंमन्येउतैकंशिक्षयाऽधिकम्॥
तस्मादेकतरस्येहयुवयोस्समवीर्ययोः। नलक्ष्यतेजयोऽन्योवाविरमत्वफलोरणः॥
नतद्वाक्यंजगृहतुर्बद्धवैरौ[१]नृपात्मजौ।अनुस्मरन्तावन्योन्यं[२]दुरुक्तंदुष्कृतानिच॥ २९
दिष्टंतदनुमन्वानोरामोद्वारवतींययौ। उग्रसेनादिभिस्फीतैर्ज्ञातिभिःसमुपागतः॥
तं पुनर्नैमिशं प्राप्तमृषयोऽयाजयन्मुदा।

---

वी॥ स इति॥ स यदुनन्दनो रामः मृधे युद्धे युद्ध्यतोस्सतोः तौ वारयिष्यन् वारयितुं विनशनं कुरुक्षेत्रं जगाम॥ २४॥

मु॥ विनशनं कुरुक्षेत्रम्॥ २४॥

वी॥ युधिष्ठिर इति॥ तं रामं दृष्ट्वा यमौ तत्समीपमिति शेषः, तथा कृष्णार्जुनावपि ययतुः, ते तमभिवाद्य किं वक्तुमिच्छुरिहागत इति संशयानाः तूष्णीमभवन्॥

मु॥ २५॥

वी॥ उभौ भीमदुर्योधनौ दृष्ट्वा इदं वक्ष्यमाणम् अब्रवीत्, कथंभूतौ? संरब्धौ क्रुद्धौ विजयमाकाङ्क्षन्तौ विचित्राणि मण्डलानि गतिभेदान् चरन्तौ कुर्वन्तौ॥ २६॥

मु॥ उभौ भीमदुर्योधनौ॥ २६॥

वी॥ उक्तिमेवाह—युवामिति॥ हे राजन् दुर्योधन हे वृकोदर भीम एकं भीमं प्राणाधिकं बलाधिकं मन्ये, उतैकम् एकं तु दुर्योधनं शिक्षयाऽधिकं मन्ये॥ २७॥

मु॥ तुल्यबलत्वमाह—एकमिति॥ प्राणाधिकं बलाधिकं भीमसेनं, शिक्षयाधिकं दुर्योधनम् उत अपि॥ २७॥

वी॥ तस्मात् हेतोः तुल्यवीर्ययोः युवयोरन्यतरस्य विजयः अन्यः पराजयो वा भविष्यतीति न लक्ष्यते, अतो निष्फलो रणः संग्रामः विरमतु शाम्यतु॥ २८॥

मु॥ अन्यः पराजयः, अतः अफलो निष्फलो रणो विरमतु॥ २८॥

वी॥ नेति॥ नृपात्मजौ भीमदुर्योधनौ इत्थमुक्तावपि तस्य रामस्य वाक्यं न जगृहतुः, तत्र हेतुत्वेन तौ विशिनष्टि—बद्धवैरौ, तत्रापि हेतुः—अन्योन्यं दुरुक्तं दुश्चेष्टितानि च स्मरन्तौ॥ २९॥

मु॥ हे नृप अर्थवत् महाप्रयोजनयुक्तमपि तौ न जगृहतुः, तत्र हेतुः—अनुस्मरन्ताविति। दुरुक्तान् दुरुक्तानि दुष्कृतानि च अनुस्मरन्तौ॥ २९॥

वी॥ दिष्टमिति॥ रामः तत्स्ववाक्याग्रहणं दिष्टं तयोः प्राचीनकर्मप्रयुक्तं मन्वानः तूष्णीं द्वारवतीं पुरीं ययौ, तत्र च स्फीतैस्सर्वसंपत्समृद्धैरुग्रसेनादिभिस्सङ्गतो बभूव॥

मु॥ दिष्टं दैवम्॥ ३०॥

वी॥ तमिति॥ तं बलभद्रं निवृत्ताखिलविरोधं कृत्वङ्गैस्सह क्रतुभिः अयाजयन्,

---

१. नृपार्थवत्. मु-भा-प्र-पा॥ २. दुरुक्तान्. मु-भा-प्र-पा॥

१क्रत्वङ्गैः क्रतुभिस्सर्वैर्निवृत्ताखिलविग्रहम् ॥ ३१
तेभ्योविशुद्धविज्ञानंभगवान्व्यतरद्विभुः। येनैवात्मन्यदोविश्वमात्मानंविश्वगंविदुः॥
स्वपत्न्याऽवभृथस्नातोज्ञातिबन्धुसुहृद्वृतः। रेजेस्वज्योत्स्नयेवेन्दुस्सुवासास्सुष्ठलङ्कृतः॥
ईदृग्विधान्यनेकानिबलस्यबलशालिनः। अनन्तस्याप्रमेयस्यमायामर्त्यस्यसन्तिहि ॥
योऽनुस्मरेतरामस्यकर्माण्यद्भुतकर्मणः। २शृण्वन्गृणन्ननन्तस्यविष्णोस्सदयितोभवेत्

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे बलदेवतीर्थयात्रानिरूपणं नाम एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

क्रत्वङ्गमिति पाठे यज्ञशरीरकं परमात्मानम् ॥ ३१ ॥

मु॥ प्राप्तं पुनर्नैमिशं प्राप्तं सभार्यमिति द्रष्टव्यं,क्रत्वङ्गं यज्ञशरीरं तं सर्वैः क्रतुभिरयाजयन् निवृत्तोऽखिलैः विग्रहो विरोधो यस्मात्तम् ॥ ३१ ॥

वी ॥ तेभ्य इति ॥ भगवान् रामः तेभ्यः ऋषिभ्यः विशुद्धं विपर्ययसंशयादिरहितं विज्ञानं व्यतरत् अदात् उपदिदेशेत्यर्थः.किं तज्ज्ञानं? यद्यतरदित्यत आह —येनैवेति।येन ज्ञानेन आत्मनि परमात्मन्याधारभूते विश्वमात्मानं च विश्वगं विश्वं गच्छति व्याप्य तिष्ठतीति तथाभूतं विदुः साक्षात्कुर्युः, तथाविधं ज्ञानं व्यतरदित्यर्थः, (ज्ञानप्रदानं दक्षिणास्थानीयमिति बोध्यम्) ॥ ३२ ॥

मु ॥ ज्ञानं दक्षिणास्थानीयं, किंविषयं ज्ञानमित्यत आह —येनेति । अतः चराचरं विश्वं येन आत्मन्यवस्थितं विदुः, येन च आत्मानं विश्वगं विदुः, धारकत्वं व्याप्तिश्चोक्ता, प्राप्यत्वं चोक्तम, येनैवं भूतं, तद्विज्ञानमुपदिदेश ॥ ३२ ॥

वी ॥ स्वपत्न्येति ॥ रेवत्याख्यया स्वपत्न्या सह अवभृथस्नातः कृतावभृथस्नान इत्यर्थः, स्वज्योत्स्नया चन्द्र इव रेजे, ज्योत्स्नास्थानीया स्वपत्नी, चन्द्रस्थानीयस्तु रामः, अनपायित्वाच्छुभ्रवर्णत्वाच्च ॥ ३३ ॥

मु ॥ स्वपत्न्या रेवत्या सह ॥ ३३ ॥

वी ॥ रामस्य चेष्टितानि साकल्येन वक्तुं न शक्यानीत्यभिप्रयन्नाह —ईदृग्विधानीति ॥ अनन्तस्यानन्तावताररूपस्य अप्रमेयस्य असङ्ख्यातकल्याणगुणस्य मायामर्त्यस्य स्वसंकल्पपरिगृहीतमनुष्यजन्मनः ॥ ३४ ॥

मु ॥ रामचरितमुपसंहरति —ईदृग्विधानीति ॥ ३४ ॥

वी॥ उपवर्णितबलभद्रचेष्टितश्रवणादिफलमाह —यइति॥ अद्भुतानि कर्माणि यस्य तस्यानन्तस्य तदवताररूपस्य बलदेवस्य कर्माणि यः पुमान् शृण्वन् सति वक्तरि गृणन् कथयन् सति श्रोतरि कीर्तयन् उभयोरभावे अनुस्मरेच्च, स विष्णोर्दयितो निरतिशयप्रियो भवेत् ॥ ३५ ॥

मु ॥ ३५ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम् एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

१. क्रत्वङ्गैः. मु-भा-प्र-पा ॥ २. सायं प्रातरनन्तस्य. पा ॥

( कुचेलोपाख्यानम्. )

राजोवाच—

भगवन्यानिचान्यानिमुकुन्दस्यमहात्मनः। वीर्याण्यनन्तवीर्यस्यश्रोतुमिच्छामहेप्रभो॥
कोनुश्रुत्वाऽसकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः। विरमेतविशेषज्ञोऽविषण्णःकाममार्गणैः॥

[1]सा वागनन्तस्य गुणान्गृणीते करौ च तत्कर्मकरौ मनश्च।
स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथास्स कर्णः॥ ३
शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः।

वी॥ अथ भगवतो भक्तानुग्रहं ब्रह्मण्यत्वाद्यात्मकं कुचेलवृत्तान्तं प्रस्तोष्यन् तावत्तद्विषयकं राज्ञः प्रश्नमाह सूतः—भगवन्निति॥ हे भगवन् शुक अनन्तस्यापरिच्छिन्नस्वरूपस्वभावस्य महात्मनो भक्तानुकम्पिनो मुकुन्दस्य यानि वीर्याणि प्रभावसूचकानि कर्माणि, तानि श्रोतुमिच्छामहे प्रभो वक्तुं समर्थेति भावः॥ १॥

मु॥ रामचरितं श्रुत्वा पुनः कृष्णचरितं पृच्छति चतुर्भिः—हे भगवन् मुकुन्दस्य यान्यन्यानि वीर्याणि, तानि च श्रोतुमिच्छामहे॥ १॥

वी॥ बहुधा श्रुतवतोऽपि कुतस्तव न विरक्तिरुदेतीत्यत आह—कोन्विति॥ हे ब्रह्मन् उत्तमश्लोकस्य सत्कथाः असकृदपि श्रुत्वा काममार्गणैर्विषयान्वेषणैः अविषण्णः विषादमप्राप्तः विशेषज्ञो रसज्ञश्चेत्, कोवा पुमान्विरमेत भगवत्कथाश्रवणादिति शेषः, सारज्ञश्चेन्न कोऽपि विरमेतेत्यर्थः, यद्वा काममार्गणैर्विषण्णः निर्वेदं प्राप्तः॥ २॥

मु॥ इच्छायां हेतुः—क इति॥ हे ब्रह्मन् काममार्गणैः कामबाणैः विषण्णः पीडितः विषयासक्तोऽपि विशेषज्ञः सारासारविभागज्ञः को नु उत्तमश्लोकस्य सत्कथाः असकृत् श्रुत्वा विरमेत, न कोऽपि॥ २॥

वी॥ भगवद्गुणवर्णनादिषूपयुक्तानामेव वागादीन्द्रियाणां साफल्यम्, अन्यथा वैयर्थ्यमेवेत्याह—सेति॥ या अनन्तस्य गुणान् गृणीते वर्णयति, सैव वाक् सफलेत्यर्थः, विपर्यये "जिह्वाऽसती दार्दुरकीव" इत्यादिद्वितीयस्कन्धोक्तोऽनुसन्धेयः, तस्य भगवतः कर्माराधनात्मकं कुरुत इति तथा तावेव करौ हस्तौ, स्थावरेषु जङ्गमेषु च अन्तरात्मतया वसन्तं भगवन्तं यत्स्मरेत्, तदेव मनः, यस्तस्य पुण्याः कथाः शृणोति, स एव कर्णः श्रोत्रम्॥ ३॥

मु॥ परमपुरुषार्थकामी तु सुतरां न विरमेतेत्याशयेनाह; यद्वा, कथाश्रवणं स्तुवन् दृष्टान्ततया अन्यार्थानाह—सा वागिति॥ या अनन्तस्य गुणान् गृणीते, सैव वाक्, नान्या निष्फलत्वात्, तत्कर्मकरौ तस्य परिचर्याप्रवृत्तावेव करौ, स्थिरजङ्गमेषु वसन्तं तं यत् स्मरेत्, तदेव मनः, यस्तस्य पुण्यकथाः शृणोति, स एव कर्णः॥ ३॥

वी॥ उभयं चराचरात्मकं जगत् लिङ्गं शरीरं यस्य तं विभवावताररूपमर्चावताररूपं चेति वा, यत् आनमेत् प्रणमेत्, तदेव शिरः, यत्तं पश्यति, तदेव चक्षुः, विष्णोः तज्ज-

[1] सा वाग्यया तस्य गुणान्. पा॥

अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४

श्री सूत उवाच—

विष्णुरातेनसंपृष्टो भगवान्बादरायणिः। वासुदेवेभगवतिनिमग्नहृदयोब्रवीत् ॥ ५

श्री शुक उवाच—

कृष्णस्यासीत्सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥
यदृच्छयोपपन्नेन वर्तमानो गृहाश्रमी ॥ ६

तस्यभार्याकुचेलस्यक्षुत्क्षामाचतथाविधा।पतिव्रतापतिंप्राहम्लायतावदनेनसा ॥ ७

[1]दारिद्र्यात्सीदमाना सा वेपमानाभिगम्यच ।
ननु ब्रह्मन्भगवतस्सखा साक्षाच्छ्रियःपतिः ॥
ब्रह्मण्यश्च शरण्यश्च भगवान्सात्त्वतर्षभः ॥ ८

---

नानां तद्भक्तानां वा पादोदकं नित्यं भजन्ति सेवन्ते, तान्येवाङ्गानि गात्राणि ॥ ४ ॥

मु ॥ यत् तस्योभयलिङ्गं चरमचरं च शरीरं रामाद्यवताररूपम् अर्चावताररूपं चेति केचित्, आनमेत्, तदेव शिरः, तुरवधारणार्थः, तत् उभयलिङ्गमेव यत् पश्यति, तद्धि तदेव चक्षुः, यानि विष्णोः तज्जनानां तद्भक्तानां च पादोदकम् अथ सर्वतो नित्यं भजन्ति, तान्येवाङ्गानि ॥ ४ ॥

वी ॥ इत्थमापृष्टः प्राह मुनिरित्याह सूतः—विष्णुरातेनेति ॥ विष्णुरातेन परीक्षिता निमग्नमासक्तं मानसं हृदयं यस्य सः ॥ ५ ॥

मु ॥ उत्तरमुत्थापयति सूतः—विष्णुरातेनेति ॥ ५ ॥

वी ॥ उक्तिमेवाह—कृष्णस्यासीदित्यादिना यावदुत्तराध्यायसमाप्ति ॥ ब्रह्मवित्तमः ब्रह्मविदां श्रेष्ठः इन्द्रियार्थेषु शब्दादिविषयेषु विरक्तः तत्र हेतुः प्रशान्त आत्मा मनो यस्य सः जितानीन्द्रियाणि बाह्यानि येन सः यदृच्छयोपपन्नेन दैवाल्लब्धेनान्नादिना वर्तमानः जीवन् एवंभूतः कृष्णस्य सखा आसीदिति संबन्धः ॥ ६ ॥

मु ॥ भगवतो ब्रह्मण्यतां स्वशक्तिसदृशपरितुष्टतां तत्तोषस्य भोगमोक्षफलप्रदत्वं च प्रकाशयन् कुचेलोपाख्यानमारभते—कृष्णस्य सखा सब्रह्मचारी कश्चिद्ब्राह्मण आसीत्, तस्य तत्सखत्वं सम्पादयितुं विशेषणानि, ब्रह्मवित्तमः साङ्गाधीतसमस्तवेदः विचारिततदर्थश्च इन्द्रियार्थेषु विषयेषु विरक्तः प्रशान्तात्मा प्रत्यक्प्रवणमनाः जितेन्द्रियः वशीकृतेन्द्रियः, स च गृहाश्रमी भवति, तत्रापि शालीन इत्याह—यदृच्छयोपपन्नेन वृत्त्युपायेन वर्तमान इति ॥ ६ ॥

वी ॥ तस्येति ॥ तस्य ब्राह्मणस्य कुचेलाख्यस्य, कुत्सितं चेलमस्येतीदमन्वर्थं नाम, भार्या क्षुत्क्षामा यदृच्छालब्धं तस्मै परिविष्य स्वयं क्षुधा जीर्णा तत्र हेतुः तथाविधा पतिवज्जितेन्द्रिया अत एव पतिव्रता एवंभूता सा म्लायता शुष्यता वदनेन पतिं प्राह॥

---

१. दरिद्रा सीद. पा ॥

तमुपैहि महाभाग साधूनां च परायणम्। दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥
आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ॥ ९
स्मरतः पादकमलमात्मानमपि यच्छति। किमर्थकामान्भजतो नात्यभीष्टाञ्जगद्गुरुः ॥
स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदुः।
अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥
इति सञ्चिन्त्य मनसा गमनाय मतिं दधे ॥ ११

---

वी॥तदेवाह—नन्विति सार्धैस्त्रिभिः॥हे ब्रह्मन् भगवतः पूज्यस्य तव यस्सखा कृष्णः, तमुपैहि समीपं गच्छ, कथंभूतः? साक्षात् श्रियोलक्ष्म्याः पतिः तवदारिद्र्यापनयनं तस्य कियदिति भावः,ननु श्रियः पतिश्चेत्—मां नावलोकयेदपीत्यत आह—ब्रह्मण्य इति।ब्रह्मणि ब्राह्मणकुले साधुः तस्मात्त्वामादरिष्यत इति भावः,अथापि श्रियःपतिश्चेन्मोक्षदो न तु वित्तद इत्यत आह—शरण्यः चतुर्विधपुरुषार्थार्थिनां शरणार्हः, अथापि न मदभिप्रेतं जानीयादित्यत आह—भगवान् ज्ञानशक्त्यादिषाड्गुण्यपूर्णः, अथापि परत्वेन न मामाद्रियेतेत्यत आह—सात्वतर्षभः निरतिशयसौशील्यादेव सात्त्वतश्रेष्ठतयाऽवतीर्ण इति भावः,तमेव किं विशिष्योपैहीति ब्रूष इत्यत आह—साधूनां भवादृशां परमयनं प्राप्यम्, उपेताय किं दास्यतीत्यत आह—दास्यतीति। भूरि पुष्कलं द्रविणं धनं सीदते दारिद्र्येण क्लिश्यते कुटुम्बिने च तुभ्यं दास्यति, क्वास्तइत्यत आह—आस्तइति। द्वारकायामेवाधुना आस्ते, न तु शत्रुविजयार्थं क्वापि गत इति भावः ॥ ८ ॥ ९ ॥

मु॥ तथाविधा कुचेला, किञ्च क्षुत्क्षामाच सम्पन्नमन्नं तस्मै प्रदाय परिशिष्टं भुञ्जाना क्षुधा जीर्णा पतिव्रता पतिशुश्रूषणपरा भार्याचासीत् ,सा साध्वी अनशनात्सीदन्ती अत एव म्लायता शुष्यता वदनेन उपलक्षिता भयाद्वेपमाना तदिदमब्रवीत्, हे भगवन् हे ब्रह्मन् भगवतः तव साक्षात्सखा ननु, सत्यं श्रियः पतिः मम सखा, ततः किमत आह—ब्रह्मण्यः ब्राह्मणप्रियः शरण्यः आश्रितवत्सलश्चेति, ततो वा किम्? इत्यत आह—तमिति। चकारात् साध्वीना च परायणं तमुपैहि, किमर्थं? कुटुम्बिने सीदते दरिद्राय च तुभ्यं स भूरि द्रविणं दास्यति, ननु देवकार्यार्थमवतीर्णोऽसौ कथमस्मदभिमतं साधयेदित्यत आह—आस्त इति। योऽधुना भोजवृष्ण्यन्धकेश्वरः भोजादिभिः परिवृतो द्वारवत्यामास्ते कृतकृत्यास्तिष्ठति ॥ ७ ॥ ८ ॥ ९ ॥

वी॥ दास्यति वा नवेति संशयानं प्रत्याह—स्मरतइति॥ स्मरत एव आत्मानमपि यच्छति ददाति,किंपुनः सुदूरं गत्वा भजतो याचमानस्यार्थकामान् ददातीति वक्तव्यमित्यर्थः, तान्विशिनष्टि—नात्यभीष्टानिति।परिपाकविरसत्वादिति भावः,भर्तुर्भोगसंपादनार्थमेवं प्रचोदितमिति न पूर्वोक्तजितेन्द्रियत्वपातिव्रत्यादिविरोधः ॥ १० ॥

मु ॥ नात्यभीष्टान् परिपाकविरसत्वात् ॥ १० ॥

वी ॥ स इति ॥ स विप्रः कुचेलः मृदुः मृदुस्वभावत्वात् ओमिति वदन्निति भावः, उत्तमश्लोकस्य भगवतो दर्शनमित्ययं परमो लाभ इति मनसा सञ्चिन्त्य चिन्तापूर्वकं निश्चित्येत्यर्थः, वित्तलाभस्त्वानुषङ्गिक इत्यभिप्रेत्येति भावः,मतिं बुद्धिं दधे चक्रे,विधाय

अप्यस्त्युपायनं किंचिद्गृहे कल्याणि दीयताम् ।
याचित्वा चतुरो मुष्टीन्विप्रान्पृथुकतण्डुलान् ॥
चेलखण्डेन तान्बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १२
स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल । कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥
त्रीणि गुल्मान्यतीयाय तिस्रः कक्ष्याश्च स द्विजः ॥ १३
विप्रोऽगम्यान्धवृष्णीनां गृहेष्वच्युतधर्मिणाम् ।
गृहान् द्व्यष्टसहस्राणि महिषीणां हरेर्द्विजः ॥
विवेशैकतमं श्रीमान् ब्रह्मानन्दं गतो यथा ॥ १४
तं विलोक्याच्युतो दूरात्प्रियापर्यङ्क[1]आस्थितः ।

---

प्राहेत्यर्थः ॥ ११ ॥

मु ॥ ११ ॥

वी ॥ तदेवाह—अपीति ॥ हे कल्याणि उपायनं भगवते समर्पणीयं भोग्यवस्तु गृहे किमस्तीति प्रश्नः, इत्थमापृष्टा सा पृथुकतण्डुलान् तानपि चतुरो मुष्टीन् ग्रामस्थान् विप्रान् याचित्वा चेलखण्डेन छिद्रपटशकलेन बद्ध्वा भगवत उपायनं भर्त्रे ददौ, तद्धस्ते ददावित्यर्थः ॥ १२ ॥

मु ॥ हे कल्याणि गृहे किञ्चिदुपायनमप्यस्ति, अस्तिचेद्दीयताम्, एवमुक्ता सा चतुरो मुष्टीन् मुष्टिप्रमाणान् व्रीहीन् विप्रान्याचित्वा तान् पृथुकतण्डुलान् तण्डुलोपमान् पृथुकान् कृत्वा चेलखण्डेन बद्ध्वा उपायनं यथा तथा भर्त्रे प्रादात् ॥ १२ ॥

वी ॥ स इति॥ स विप्राग्र्यः कुचेलः तान् पृथुकतण्डुलान्, त्रीणीति । स द्विजः कुचेलः गुल्मानि रक्षार्थसैन्यस्थानानि, ततः कक्ष्याः प्रतोलयः ताश्चातीयायातिक्रान्तवानित्यर्धस्यान्वयः ॥ १३ ॥

मु ॥ मह्यं मम कृष्णसन्दर्शनं कथं स्यादिति चिन्तयन् स द्विजः त्रीणि गुल्मानि सेनानिवेशस्थानानि तीर्णः कक्ष्याश्च द्वाराणि च अतीयाय अतिक्रम्य जगाम ॥ १३ ॥

वी ॥ विप्र इति ॥ आच्युतस्येव धर्मास्सम्पत्त्यादिगुणाः येषां तेषामगम्यानां दुर्गमानामन्धकानां वृष्णीनां च गृहेषु मध्ये द्व्यष्टसहस्राणि हरेर्महिषीणां गृहान् तत्रापि श्रीमदेकतमं गृहं विवेशेति संबन्धः, द्विजशब्दस्य त्रैवर्णिकसाधारणत्वादग्रजात्यवगमाय विप्र इति चोक्तमित्यतो न पौनरुक्त्यं, यथा ब्रह्मानन्दं मोक्षसुखं प्राप्तो वैकुण्ठं हरेर्मन्दिरं विशति, तद्वत् ॥ १४ ॥

मु ॥ असौ विप्रः जगत्यां दुष्प्रापाश्च ते अन्धा वृष्णयश्च तेषाम् अच्युतधर्मिणाम् अच्युतसेविनां गृहेषु मध्ये हरेः महिषीणां गृहान् गत्वा तेषां मध्ये श्रीमत् एकतमं गृहं विवेश, यथा ब्रह्मानन्दं गतो द्विजः, तथा बभूवचेति योज्यम् ॥ १४ ॥

वी ॥ तमिति ॥ प्रियायाः रुक्मिण्याः पर्यङ्के आस्थितो भगवान् तं कुचेलं दूरादेव दृष्ट्वा दोर्भ्यां बाहुभ्यां पर्यग्रहीदालिङ्गितवान् ॥ १५ ॥

---

१. आश्रितः. मु-भा-प्र. पा ॥

सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १५
सख्युःप्रियस्यविप्रर्षेरङ्गसङ्गातिनिर्वृतः।प्रीतोऽभ्यमुञ्चदब्बिन्दून्नेत्राभ्यांपुष्करेक्षणः
अथोपवेश्यपर्यङ्केस्वयंसख्युस्समर्हणम्।उपहृत्यावनिज्यास्यपादौपादावनेजनीः॥
अग्रहीच्छिरसाराजन्भगवाल्लोकपावनः।व्यलिम्पद्दिव्यगन्धेनचन्दनागरुकुङ्कुमैः ॥
धूपैस्सुरभिभिर्मित्रं[1]प्रदीपैर्बलिभिर्मुदा।अर्चित्वाऽऽवेद्यताम्बूलंगांचस्वागतमब्रवीत्
कुचेलंमलिनंक्षामंद्विजंधमनिसन्ततम्।देवीपर्यचरद्भैष्मीचामरव्यजनादिभिः॥ २०
अन्तःपुरजनोदृष्ट्वाकृष्णेनामलकीर्तिना।विस्मितोऽभूदतिप्रीत्याअवधूतंसभाजितम्॥
किमनेनकृतंपुण्यमवधूतेनभिक्षुणा।श्रियाहीनेनलोकेऽस्मि[2]न्गर्हितेनाधमेनच॥ २२

---

मु ॥ आश्रितः आस्थितः, पर्यग्रहीत् परिषस्वजे ॥ १५ ॥

वी ॥ सख्युरिति ॥ अङ्गसङ्गेनालिङ्गनेनातीव निर्वृतः सुखितः प्रीतश्च पुष्करेक्षणो भगवान्नेत्राभ्याम् अनन्दाश्रुबिन्दून् अभ्यमुञ्चत् ॥ १६ ॥

मु ॥ अब्बिन्दून् हर्षाश्रूणि ॥ १६ ॥

वी ॥ अथेति ॥ उपविष्टं कृत्वा तस्य सख्युस्स्वयमेव उपायनमुपहृत्य समर्प्य पादाववनिज्य प्रक्षाल्य पादावनेजनीरपः शिरसा अग्रहीद्दधार, व्यलिम्पदिति । चन्दनादिभिः साधितेन दिव्यगन्धेन मित्रं सखायं व्यलिम्पत्, सुरभिभिः धूपैः दीपैर्बलिभिः अन्यैश्च पूजासाधनैरर्चित्वा गां धेनुं ताम्बूलं च निवेद्य स्वागतमब्रवीत् पप्रच्छ ॥१७॥ १८ ॥ १९ ॥

मु ॥ समर्हणम् अर्घ्यम् उपहृत्य समर्प्य पादावनेजनीः अपः, चन्दनागरुकुङ्कुमैः कल्पितेन दिव्येन गन्धेन अनुलेपनेन व्यलिम्पत्, ततः तं मित्रं सुरभिभिः धूपैः प्रदीपावलिभिश्च अर्चित्वा ताम्बूलं गाश्चावेद्य स्वागतमस्त्वित्यब्रवीत् ॥ १७ ॥ १९ ॥

वी ॥ कुचेलमिति ॥ मलिनमभ्यङ्गोन्मर्दनाद्यभावात् धमनिभिस्सिराभिः सन्ततं व्याप्तं मेदोमांसादिरहितकेवलत्वङ्मात्रावशिष्टशरीरमित्यर्थः, तत्र हेतुः—क्षामं क्षुधा कर्शितं भैष्मी रुक्मिणी चामरव्यजनेन पर्यचरत् वीजयामासेत्यर्थः ॥ २० ॥

मु ॥ धमनिभिः सिराभिः सम्यक्ततं व्याप्तं भैष्मी रुक्मिणी ॥ २० ॥

वी ॥ अन्तःपुरजन इति ॥ अमला निर्मला कीर्तिर्यस्य तेन कृष्णेन प्रीत्या सभाजितं सम्यक्पूजितं तमवधूतं मलिनं दृष्ट्वा विस्मितो बभूव ॥ २१ ॥

मु ॥ अवधूतं मलिनम् अतिप्रीत्या सभाजितं सत्कृतं दृष्ट्वा विस्मितोऽभूत्, आह चेदमिति शेषः ॥ २१ ॥

वी ॥ विस्मयमेवाह—किमनेनेति द्वाभ्याम्॥पूर्वं किं पुण्यमनेन कृतमित्यर्थः, अन्यथैवं पूजितो न स्यादित्यभिप्रयन् विशिनष्टि—अवधूतेन मलिनेन श्रिया हीनेन दरिद्रेण

---

१. प्रदीपावलिभिः. मु-भा-प्र-पा ॥ २. गर्हितेनावमेनच. मु-भा-प्र-पा ॥

योऽसौत्रिलोकगुरुणाश्रीनिवासेनसंभृतः।पर्यङ्कस्थांश्रियंहित्वापरिष्वक्तोऽग्रजोयथा
कथयांचक्रतुर्गाथाःपुरागुरुकुलेसतोः।आत्मनोर्ललिताराजन्करौगृह्यपरस्परम् ॥
श्री भगवानुवाच—
अपिब्रह्मन्गुरुकुलाद्भवतालब्धदक्षिणात्।समावृत्तेनधर्मज्ञभार्योढासदृशीनवा॥ २५
प्रायोगृहेषुतेचित्तमकामाविहतंतथा।नैवातिप्रीयसेविद्वन्धनेषुविदितंहिमे ॥ २६
केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ।

अत एवास्मिन् लोके गर्हितेन अनादरणीयेन अस्मिन्लोकइत्यनेनामुष्मिस्तु अदरणीयए वेति सूच्यते, अधमेन न ह्यधमः पूज्यते, किन्तु पूजकापेक्षयोत्तम एव पूज्यत इति योऽसावुक्तविधोऽप्ययं द्विजस्त्रिलोकगुरुणा श्रीनिवासेन संभृतः सम्मानितः परिष्वक्त आलिङ्गितश्च, यथा अग्रजो रामः तद्वत् ॥ २२ ॥ २३ ॥

मु ॥ भिक्षुणा भिक्षोपजीविना श्रिया हीनेन दरिद्रेण अत एवास्मिन् लोके गर्हितेन अवमेन न्यूनेन, योऽसौ त्रिलोकगुरुणा पर्यङ्कस्थां प्रियां हित्वा परिष्वक्तः, तेनानेन अवधूतेन किं पुण्यं कृतमिति सम्बन्धः ॥ २२ ॥ २३ ॥

वी ॥ कथयांचक्रतुरिति ॥ अस्य कृष्णकुचेलावित्यादिः, पुरा गुरुकुले सतोर्वर्तमानयोः आत्मनोः याः सुन्दराः गाथाः कथाः, ताः परस्परं करौ हस्तौ गृह्य गृहीत्वा, ल्यबार्षः हे राजन् कथयांचक्रतुः ॥ २४ ॥

मु ॥ आत्मनोः गुरुकुले सतोः वसतोः पूर्वाः प्राक्प्रवृत्ताः ललिताः गाथाः कथाः कथयांचक्रतुः, किं कृत्वा? परस्परं करौ गृह्य गृहीत्वा ॥ २४॥

वी ॥ तदेवाह—अपीति ॥ हे ब्रह्मन् लब्धा दक्षिणा येन तस्माद्गुरुकुलात्समावृत्तेन कृतसमावर्तनाख्यकर्मणा भवता''वेदमधीत्याभिसमावृत्य''इत्यर्थातसाङ्गसशिरस्कस्वाध्यायैरनुष्ठेयं समावर्तनाख्यं कर्म विहितं, हे धर्मज्ञ सदृशी अनुरूपा भार्या ऊढा परिणीता न वा, अपिशब्दः प्रश्नद्योतकः ॥ २५ ॥

मु ॥ भार्या ऊढा परिगृहीता न वेति गृहस्थलिङ्गदर्शनात् भोगादर्शनाच्च संशयादिव प्रश्नः ॥ २५ ॥

वी ॥ नोढैवेत्यहं तु संभावयामीत्यभिप्रयन्नाह —प्राय इति ॥ अकामविहतं कामैरविहतं तव चित्तं प्रायशो गृहेषु गृहाश्रमेषु न रमत इत्यध्याहारः,यद्वा तव चित्तं गृहेषु कामैरविहतं विहतं न भवति, तथा हे विद्वन् तत्त्वत्रययाथात्म्यज्ञानिन् धनेष्वपि विषयभूतेषु नातीव प्रीयसे प्रीतियुक्तो भवसीति मे मया विदितम् ॥ २६ ॥

मु ॥ अप्रतिषेधात् उद्वाहमनुमतं मत्वा प्राह —प्राय इति ॥ ते चित्तं नूनं कामहतं न भवतीति मे विदितं, तथाहि—धनेषु वस्त्रादिषु नैवातिप्रीयसे, हे विद्वन् विदुषस्तव एतद्युक्तमिति भावः ॥ २६ ॥

वी ॥ गृहस्थलिङ्गदर्शनादूढैवेति पुनर्निश्चित्य कामहतत्वाभावे किंगृहाश्रमेणेत्याशङ्कामपनुदन् तत्प्रयोजनमाह—केचिदिति ॥ कामैरहतं चेतो येषां तथाभूता अपि केचि-

१. प्रियां. मु-भा-प्र. पा ॥

त्यजन्तः प्रकृतिं दैवीं यथाऽहं लोकसङ्ग्रहम् ॥ २७

कच्चिद्गुरुकुलेवासंब्रह्मन्स्मरसिनौयतः।द्विजोविज्ञायविज्ञेयंतमसःपारमश्नुते॥ २८

सवैसत्कर्मणांसाक्षाद्द्विजातेरिहसम्भवः।आद्योऽङ्गयत्राश्रमिणांयथाऽहंज्ञानदोगुरुः

न्मुमुक्षवः दैवीं देवस्य विष्णोस्सम्बन्धिनीं प्रकृतिं मायां "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्युक्तविधां त्यजन्तः "लक्षणहेत्वोः" इति शत्रादेशः, त्यक्तुं प्रकृतिसंबन्धान्मोक्तुमिति यावत्, कर्माणि गृहस्थाश्रमप्रयुक्तान्यनभिसंहितफलानि नित्यनैमित्तिकादिरूपाणि कुर्वन्ति ब्रह्मविद्याङ्गत्वेनानुतिष्ठन्तीत्यर्थः, ब्रह्मविद्याङ्गतया कर्मणामनुष्ठानार्थं गृहाश्रमपरिग्रह इति भावः, ननु कामैश्चेतसोऽविहतय एव हि कर्माणि कर्तव्यानि, कर्मणां विद्याङ्गत्वमपि चित्तशुद्धिजननद्वारैव, तथा च सति कामैरविहतचेतसां किं कर्मानुष्ठानेनेत्यत आह—यथाऽहं लोकसंग्रहमिति।लोकस्य सङ्ग्रहो यस्मिन् तद्यथा भवति तथा अहं करोमि तद्वत्, अयं भावः—कामैर्विहतचेतोभिस्तद्विहातिद्वारा विद्यानिष्पत्तये कर्माणि कर्तव्यानि, अविहतचेतोभिस्तु लोकसङ्ग्रहार्थमिति भावः ॥ २७ ॥

मु ॥ कामहतत्वाभावे किं गृहस्थधर्मक्लेशेनेत्यत्राह—केचिदिति ॥ केचित् मुमुक्षवः दैवीं देवेन भगवता कृतां प्रकृतिं त्यजन्तः कामैः अनाकृष्टचित्ताः कर्माणि फलसङ्गकर्तृत्वत्यागपूर्वकं कुर्वन्ति, फलसङ्गविरहे दृष्टान्तः—यथाहमिति । लोकसङ्ग्रहमिति क्रियाविशेषणम्, लोकेन सङ्ग्रहो यस्येति बहुव्रीहिर्वा लोकसङ्ग्रहानुगुणमित्यर्थः, यथा अहं लोकसङ्ग्रहार्थं कर्माणि करोमि तद्वदिति ॥ २७ ॥

वी ॥ कच्चिदिति ॥ हे ब्रह्मन् नौ आवयोः गुरुकुले वासं स्मरसि कच्चित् तं विशिनष्टि—यतो गुरुकुलवासाद्विज्ञेयं स्वपरात्मयाथात्म्यं विज्ञाय तमसः पारम् अज्ञानस्य पारं मुक्तिमिति यावत्, अश्नुते प्राप्नोति ॥ २८ ॥

मु ॥ नौ आवयोः, यतः गुरोः गुरुकुलवासाद्वा, विज्ञेयं भगवत्तत्त्वं विज्ञाय तमसः पारम् अज्ञानस्य पारमश्नुते, तमसः प्रकृतेः पारं पारभूतं स्थानम् अश्नुत इति वार्थः, अनेन गुरोः अत्यन्तपूज्यतोक्ता ॥ २८ ॥

वी ॥ किं च—स वाइति ॥ स वै गुकुलवासः द्विजातेस्त्रैवर्णिकस्य सतां कर्मणां सम्भवः अनुष्ठानहेतुः तद्धेतुभूतज्ञानोत्पादकत्वादित्यभिप्रायः, यद्वा सत्कर्मणां पुंसां द्वितीयजन्मसम्भवेन गुरुकुलावासरूपो ह्याश्रम इत्यर्थः, यस्मिन्नाश्रमे गुरुरहमिव ज्ञानदस्स इत्यन्वयः, यद्वा ज्ञानप्रदस्य गुरोरत्यन्तपूज्यतां वक्तुं पुरुषस्य त्रीन्गुरूनाह—स वाइति । अङ्ग हे ब्रह्मन् इह संसारे यतस्सम्भवो जन्ममात्रं स पिता तावदाद्यः प्रथमः गुरुः, द्विजातेस्सतः पुंसः सत्कर्मणां यत्र सम्भवः उपनीय वेदाध्यापकस्स द्वितीयो गुरुः, यथाऽहमीश्वरः, तथा प्रथमादपि पूज्य इत्यर्थः, ब्रह्मविद्याप्रदं गुरुमाह—आश्रमिणां सर्वेषामपि ज्ञानदो यो गुरुः, स तु साक्षादहमेवेति ॥ २९ ॥

मु ॥ सः गुरुकुलवासः द्विजातेः सत्कर्मणां सम्भवः अनुष्ठानहेतुः तद्धेतुभूतज्ञानोत्पादकत्वादित्यभिप्रायः, यद्वा सत्कर्मणां पुंसां द्विजातेः द्वितीयजन्मनस्सम्भव इत्यर्थः, अनेन ब्रह्मचर्याश्रम उक्तो भवति, यत्र आश्रमे आद्योऽहमिव गुरुः ज्ञानप्रदः स इत्यन्वयः॥

नन्वर्थकोविदाब्रह्मन्वर्णाश्रमवतामिह।येमयागुरुणावाचातरन्त्यञ्जो[1]महार्णवम् ॥
नाहमिज्याप्रजातिभ्यांतपसोपशमेनवा।तुष्येयंसर्वभूतात्मागुरुशुश्रूषयायथा ॥ ३१
अपिनः स्मर्यतेब्रह्मन्वृत्तंनिवसतांगुरौ।गुरुदारैश्चोदितानामिन्धनानयनेक्वचित् ॥
प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ।

---

वी ॥ अतो ज्ञानप्रदं गुरुमाश्रित्य ये संसारं तरन्ति, ते बुद्धिमन्त इत्याह—नन्विति॥ ननु हे ब्रह्मन् इह लोके सर्वेषां वर्णानामाश्रमिणां च मध्ये त एवार्थकोविदाः पुरुषार्थकुशलाः, के? ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेण अञ्जस्सुखेन संसाररूपं महार्णवं तरन्ति ॥ ३० ॥

मु ॥ गुरुं समाश्रित्य ये संसारं तरन्ति, ते निपुणा इत्याह—नन्विति ॥ हे ब्रह्मन् वर्णाश्रमवतां मध्ये ये गुरुणा मया वाचा उपदेशेन अञ्जः सुखेनैव भवार्णवं तरन्ति, ते ननु इह जन्मनि अर्थकोविदाः प्रयोजनकुशला इत्यर्थः. 'गुरुणा नावा' इति पाठे गुरोस्तरणहेतुत्वान्नौसादृश्यम् ॥ ३० ॥

वी ॥ एवं महोपकर्तुर्गुरोः अधिकस्सेव्यो नास्तीत्युक्तम्, अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह —नाहमिति ॥ इज्या महायज्ञपञ्चकं,प्रजातिः प्रकृष्टं जन्म, तपोऽनाशनादिरूपं, शम इन्द्रियनिग्रहः, यथाऽहं गुरुशुश्रूषया तुष्येयं प्रीतस्स्यां, न तथा इज्यादिभिस्तुष्येयम्, आत्मानं विशिनष्टि—सर्वभूतानामन्तरात्मा ॥ ३१ ॥

मु॥ गुरुशुश्रूषां विना मत्तोषकरः कोऽपि धर्मो नास्तीत्याह—नाहमिति ॥ इज्या यागः गृहस्थधर्मः, प्रजातिः प्रकृष्टजन्म उपनयनं,ब्रह्मचर्यमनेन लक्ष्यते. तेन तपसा वानप्रस्थधर्मेण उपशमेन यतिधर्मेणवा अहमाराध्यः तथा न तुष्यामि, यथा गुरोः शुश्रूषया सर्वभूतान्तर्यामी स्थित्वा साधुकर्म अनुमत्य असाधुकर्मोपेक्ष्य च वर्तमानोऽहमित्यर्थः, यद्वा आश्रमभेदानादरेण प्रजातिः संतत्युत्पादनम्, तपः कृच्छ्रादि, उपशमः चित्तशान्तिः ॥ ३१ ॥

वी ॥ किं चास्माकं गुरुशुश्रूषणे किमपि दैवादेव सम्पन्नं, तत्किं त्वया न स्मर्यत इति पृच्छति—अपि न इति ॥ गुरौ तत्सन्निधौ निवसताम् अस्माकं वृत्तं न स्मर्यते किम्, किं तदित्यत आह—गुरुदारैरित्यादिना । इन्धनानयने निमित्ते चोदितानामस्माकं क्वचित्कदाचित् ॥ ३२ ॥

मु॥ सर्वधर्मोपदेष्टाप्यहं गुरुकुलवासमादृतवानिति तस्य गौरवं प्रकाशयितुं स्वस्य गुरुकुलवासे पूर्ववृत्तं स्मारयन् पृच्छति—अपिनइति ॥ हे ब्रह्मन् गुरुकुले निवसतां कदाचित् गुरुदारैः इन्धनानयने चोदितानां च नः अस्माकं यत् सङ्कटमासीत्, तत्स्मर्यते किम् ॥ ३२ ॥

वी ॥ अपर्तौ अपगते ऋतौ अकाल इत्यर्थः, महारण्यं प्रविष्टानां सतां वातो वर्षं च तयोस्समाहारस्तदभूत्, तथा निष्ठुराः स्तनयित्नवः,स्तनयित्नुशब्दोऽत्र तद्गर्जिते लाक्षणिकः, गर्जितानि चाभवन् ॥ ३३ ॥

---

१. भवार्णवम्. मु-भा-प्र. पा ॥

वातवर्षमभूत्तीव्रं निष्ठुरास्स्तनयित्नवः ॥ ३३

सूर्यश्चास्तंगतस्तावत्तमसाचावृतादिशः।निम्नंकूलं[1]जलमयंनप्राज्ञायतकिञ्चन॥ ३४

वयं भृशं तत्र महानिलाम्बुभिः निहन्यमाना मुहुरम्बुसंप्लवे ।
दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥ ३५

एतद्विदित्वाऽभ्युदिते रवौ सान्दीपनिर्गुरुः ।
अन्वेषमाणो नश्शिष्यानाचार्योऽपश्यदातुरान् ॥ ३६

अहोमेपुत्रकायूयमस्मदर्थेऽतिदुःखिताः। आत्मावैप्राणिनांप्रेष्ठस्तमनादृत्यमत्पराः॥
इयदेवहिसच्छिष्यैःकर्तव्यंगुरु[2]निष्क्रियम्।यद्वैविशुद्धभावेन[3]सर्वथाऽऽत्मार्पणंगुरौ

---

मु ॥ तदेव प्रकटयति—प्रविष्टानामिति॥अपतौ अकाले तीव्रं वातवर्षं वातश्च वर्षं चाभूत्, सुमहत् दीर्घकालं, तीव्रं प्रभूतम्, यद्वा सुमहत्, प्रभूतम्, तीव्रं भयंकरम्, स्तनयित्नवो गर्जितानि च अभवन् ॥ ३३ ॥

वी ॥ तावत्तदैव सूर्योऽस्तं गतश्च, अत एव दिशस्तमसा व्याप्ताः, निम्नं नतं कूलमुन्नतं च स्थलं जलमयं, हेतुगर्भम्. अतो न प्राज्ञायत न ज्ञातमभूत् ॥ ३४ ॥

मु ॥ तावत् साकल्येन दिशश्च तमसावृता अभवन्, तावत् तस्मिन् क्षण एव जलमये जलव्याप्ते देशे निम्नं कूलम् उन्नतं वा किंचन न प्राज्ञायत विशेषतो न ज्ञायते स्म॥

वी ॥ वयमिति ॥ अम्बूनां संप्लवे प्रवाहे महानिलैः अम्बुभिश्च हन्यमानाः पीड्यमानाः दिशोऽविदन्तः अजानन्तः अतएवातुराः परस्परं गृहीताः हस्ता यैस्ते वयं वने परिबभ्रिम परितो बभ्रिम इन्धनभारान् धृतवन्त इत्यर्थः, पर्यचरामेतिवा, उपसर्गवशात् भृञश्चरत्यर्थत्वम्, इडार्षः ॥ ३५ ॥

मु ॥ अम्बूनां सं प्लवो व्यामिश्रणं यस्मिन् तत्र महति वने महानिलाम्बुभिः महता अनिलेन अम्बुभिश्च मुहुः भृशं निहन्यमानाः आतुरा वयं दिशोऽप्यविदन्तः परस्परं गृहीतहस्ताः परिबभ्रिम परितो बभ्रिम ॥ ३५ ॥

वी ॥ एतदिति॥ एतदस्माकं कृच्छ्रं विदित्वा सूर्ये उदिते सत्यन्वेषमाणो नोऽस्मानपश्यत् दृष्ट्वा अब्रवीदित्यर्थः ॥ ३६ ॥

मु ॥ आतुराञ्छिष्यान् नः अपश्यत् ॥ ३६ ॥

वी॥तदेवाह—अहो इति त्रिभिः॥हे पुत्रकाः देहिनाम् आत्मा देहः प्रेष्ठः प्रियतमः तथाऽपि तमात्मानम् अनादृत्य मत्पराः मत्सेवापराः मत्प्रयोजनायातीव दुःखिताः इत्यर्थः॥

मु ॥ आहचेदम्—अहोइति ॥ संतोषे, आत्मा देहः ॥ ३७ ॥

वी ॥ इयदेवेति ॥ सच्छिष्यैर्गुरोः कर्तव्यं निष्क्रियं प्रत्युपकारः इयदेव एतावदेव, कियत्? यद्विशुद्धभावेन निष्कपटभावेन सर्वथा सर्वप्रकारेण आत्मार्पणं देहसमर्पणमित्येतावत् “शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदयेत्” इत्युक्तेरिति भावः ॥ ३८ ॥

मु ॥ गुरोः निष्कृतिः प्रत्युपकारः, सर्वैरर्थैस्सह आत्मनो देहस्यार्पणं सर्वपुरुषार्थ-

---

१. जलमये ; २. निष्कृतिः ; ३. सर्वार्थात्मा. मु-भा-प्र-पा ॥

तुष्टोऽहंवोद्विजश्रेष्ठास्सत्यास्सन्तुमनोरथाः।छन्दांस्ययातयामानिभवन्त्विहपरत्रच॥
इत्थंविधान्यनेकानिवसतां[१]गुरुवेश्मनि।गुरोरनुग्रहेणैवपुमान्पूर्णःप्रशान्तये ॥ ४०
ब्राह्मण उवाच—
किन्वस्माभिरनिर्वृत्तंदेवदेवजगद्गुरो।भवतासत्यकामेनयेषांवासोगुरावभूत्॥ ४१
यस्यच्छन्दोमयंब्रह्मदेहआवपनंविभो।श्रेयसांतस्यगुरुषुवासोऽत्यन्तविडम्बनम्॥४२

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रीदामचरिते
अशीतितमोऽध्यायः ॥ ८० ॥

---

शेषभूतस्य देहस्यार्पणं वा ॥ ३८ ॥

वी ॥ तुष्टइति ॥ हे द्विजश्रेष्ठाः द्विजशब्दस्य त्रैवर्णिकपरत्वादेवं संबोधनं, वो युष्मभ्यम् अहं गुरुस्सन्तुष्टः,अतो युष्माकं मनोरथा अपेक्षाः सत्यास्सफलास्सन्तु,किं च छन्दांसि मत्तोऽधीता वेदाः इह परत्र च लोके अयातयामान्यगतसाराणि सफलानि ऐहिकामुष्मिकापेक्षितफलजननसमर्थानि भवन्त्वित्यर्थः ॥ ३९ ॥

मु ॥ द्विजाः ब्रह्मचारिणः,तेषु श्रेष्ठाः वो युष्माकं मनोरथाः सत्याः सफलाः सन्तु, छन्दांसि च मत्तोऽधीयमानानि इह परत्रच अयातयामानि अगतवीर्याणि सन्तु भुक्तये मुक्तये च सन्त्वित्यर्थः ॥ ३९ ॥

वी ॥ इत्थमिति ॥ गुरुवेश्मनि स्वाचार्यगृहेषु वसतामस्माकम् एवंविधान्यनेकानि वृत्तानि किं त्वया न स्मर्यन्तइति शेषः,फलितमाह—गुरोरिति।अनुग्रहेणैवेत्येवकारेणोपायान्तरव्यावृत्तिः, पूर्णः पूर्णमनोरथस्स्यादित्यर्थः ॥ ४० ॥

मु ॥ गुरुवेश्मसु वसतां नः इत्थंविधानि ईदृशानि अनेकानि चरितानि अभूवन् तानि सर्वाणि किं त्वया स्मर्यन्त इति योज्यम् , किंप्रयोजनानीत्यत आह—गुरोरिति। यतो गुरोः अनुग्रहेण पूर्णः पुमानेव प्रशान्तये मुक्तये भवति ॥ ४० ॥

वी॥ इत्थमुक्तः प्राह कुचेलः—किंन्विति॥हे देवदेव जगद्गुरो अस्माभिरनिर्वृत्तमसंपन्नम् अस्माकं दुर्लभं किंन्वस्ति? न किमपीत्यर्थः, तत्र हेतुं वदन्नात्मनो विशिनष्टि—येषामस्माकं सत्यकामेन भवता सह गुरुकुले वासो बभूव, तैरस्माभिरिति संबन्धः, सत्यकामस्य तव गुरुकुलवासः केवलमस्मन्मनोरथपूरणार्थ एवेति भावः ॥ ४१ ॥

मु॥हे देवदेव जगद्गुरो सत्यकामेन सफलसंकल्पेन भवता सह येषां गुरौ गुरुकुले वासोऽभूत्,तैरस्माभिः कर्तव्यं किमनिर्वृत्तं कर्तव्यं किं न्वननुष्ठितं?सर्वं कृतमेवेत्यर्थः ॥

वी ॥ अन्यथा न घटतइत्यभिप्रयन्नाह—यस्येति॥ छन्दोमयं वेदरूपं ब्रह्म यस्य देहः विग्रहः श्रेयसां पुरुषार्थानामावपनम् उत्पत्तिभूमिः, तस्य तव गुरुषु गुरुगृहेषु वासोऽत्यन्तविडम्बनम् अभिनयमात्रं विडम्बनेनास्मन्मनोरथपूरणार्थः,अन्यथा सर्वविद्यास्थानतदवबोध्यपुरुषार्थचतुष्टयवर्षुकशीलशरीरस्य तव न घटत इत्यर्थः ॥ ४२ ॥

मु ॥ जगद्गुरुत्वमाविष्करोति—यस्येति ॥ हे विभो श्रेयसां पुरुषार्थानाम् आवप-

---

१. गुरुवेश्मसु. मु-भा-प्र. पा ॥

श्रीशुक उवाच—

१सइत्थंद्विजमुख्येनसहसंकथयन्हरिः।सर्वभूतमनोभिज्ञःस्मयमानउवाचतम् ॥ १

श्रीभगवानुवाच—

किमुपायनमानीतंब्रह्मन्मेभवतागृहात्। अण्वप्युपाहृतंभक्तैःप्रेम्णाभूर्येवमेभवेत् ॥
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ २

पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति।तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ॥ ३

---

नम् उद्धवस्थानं छन्दोमयं ब्रह्म तदाख्यं यस्य देहो भवति,तस्य तव गुरुषु वासः अत्यन्त-विडम्बनम् अतिशयेन नटनं भवति ॥ ४२ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे अशीतितमोऽध्यायः ॥ ८० ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

वी ॥ ततः किं जातं? तदाह—स इति ॥ हरिः इत्थं द्विजमुख्येन सह संकथयन् सुखगोष्ठीं कुर्वन् सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः, तं विप्रमुवाच ॥ १ ॥

मु ॥ द्विजमुख्येन सह इत्थं संकथयन् सुखेन कथाः कथयन् हरिः यतस्सर्वभूतानां मनोभिज्ञः मनसोऽभिज्ञः, अतस्स्मयमानः तमुवाच मदर्थं पृथुकतण्डुलानानीय दातुं लज्जित इति जानन् उवाचेत्यर्थः ॥ १ ॥

वी ॥ तदेवाह—किमिति सार्धद्वयेन ॥ हे ब्रह्मन् भवता गृहात् मे मह्यम् उपायनं किमानीतं? लज्जया तूष्णीं स्थितस्य तामपनुदन्नाह—अण्विति द्वाभ्याम् । यद्भक्तैः प्रेम्णा उपहृतं समर्पितं तत् अणु अत्यल्पमपि मे भूर्येव भवेत्,यद्भूर्यप्यभक्तेनोपहृतं मम सन्तोषाय न कल्पते ॥ २ ॥

मु ॥ लज्जया अकथयतः तामपनुदन् आह—अण्वपीति द्वाभ्याम्॥ प्रेम्णा भक्तैरुपहृतम् अर्पितम् अणु स्वल्पमपि मे भूर्येव भवेत् ॥ २ ॥

वी ॥ अतः पत्रादीनामन्यतमं यः पुमान्मह्यं प्रयच्छति ददाति समर्पयतीति यावत्, प्रयतः नियतः विशुद्ध आत्मा मनो यस्य तस्य संबन्धि भक्त्या समर्पितमहमश्नामि ॥३॥

मु ॥ तत्र न द्रव्यविशेषनियम इत्याह—भक्त्या सहोपहृतं प्रयतात्मनः शुद्धबुद्धेः तस्य सम्बन्धि तत् अहमश्नामि ॥ ३ ॥

---

१. अस्यानन्तरं—'ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान् प्रहसन् प्रियम् । प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां गतिः' इत्ययं श्लोकः क्वचित्पुस्तके दृश्यते । व्याख्यातश्च बहुभिरितरैः ॥

इत्युक्तोऽपिद्विजस्तस्मैव्रीडितःपतयेश्रियः।पृथुक[1]प्रसृतिंराजन्नप्रायच्छदवाङ्मुखः
सर्वभूतात्मदृक्साक्षीतस्यागमनकारणम्।विज्ञायाचिन्तयदयंश्रीकामोनाभजत्पुरा ॥

पत्न्याः पतिव्रतायास्तु सखा प्रियचिकीर्षया ।
प्राप्तो मामस्य दास्यामि सम्पदोऽमर्त्यदुर्लभाः ॥ ६

इत्थंविचिन्त्यवसनाच्चीरबद्धान्द्विजन्मनः।स्वयंजहारकिमिदमितिपृथुकतण्डुलान् ॥
नन्वेतदुपनीतंमेपरमप्रीणनंसखे।तर्पयन्त्यङ्गमांविश्वमेतेपृथुकतण्डुलाः ॥ ८

इति मुष्टिं सकृज्जग्ध्वा द्वितीयं मुष्टिमाददे ।

वी ॥ इतीति ॥ व्रीडास्य संजातेति तथा अत एवावाङ्मुखः, हे राजन् तस्मै श्रियःपतये भगवते पृथुकप्रसृतिं न प्रायच्छत् न ददौ ॥ ४ ॥

मु ॥ श्रियःपतये तस्मै पृथुकप्रसृतीः पृथुकमुष्टीन् व्रीडितः अत एव अवाङ्मुखः सन् न प्रायच्छत् ॥ ४ ॥

वी ॥ सर्वभूतानामात्मानमन्तःकरणं पश्यतीति तथा अत एव साक्षी साक्षाद्द्रष्टा भगवान् सर्वभूतमनोभिप्रायसाक्षात्कर्तावा, तस्य द्विजस्यागमनकारणं विज्ञाय कार्यम् आत्मना कर्तव्यम् अचिन्तयत्,किमिति विज्ञायेत्यत्राह— श्रीकाम इत्यादिना मामित्यन्तेन । श्रीकामो नाभजत् मामिति शेषः, किन्तु मोक्षार्थकाम इत्यर्थः, अधुना तु पतिव्रतायाः पत्न्याः प्रियं कर्तुमिच्छया मां प्राप्त इति, कार्यचिन्ताप्रकारमेवाह—अस्येत्यादिना । अमर्त्यानां देवानामपि दुर्लभाः संपदः भोग्यभोगोपकरणभोगस्थानादिसमृद्धीः अस्य द्विजस्य दास्यामि ॥ ५ ॥ ६ ॥

मु ॥ साक्षात्प्रत्यक्षतस्सर्वभूतात्मदृक् सर्वभूतबुद्धिद्रष्टा तस्यागमनकारणं स्वयमेव विज्ञाय अचिन्तयत् , तद्दर्शयति—नेनि। अयं पुरा मां श्रीकामो नाभजत् , अद्य तु अयं सखा पतिव्रतायाः पत्न्याः प्रियचिकीर्षया मां प्राप्तः. अतोऽस्य अमर्त्यदुर्लभाः सम्पदो दास्यामि ॥ ५ ॥ ६ ॥

वी ॥ इत्थमिति॥ अतिजीर्णत्वाद्वस्त्रस्य पुनस्तन्मध्ये चीरेण बद्धान् पृथुकतण्डुलान् किमिदमिति पृच्छन् स्वयमेव जहार आददे आदायोवाचेत्यर्थः ॥ ७ ॥

मु ॥ इत्थं विचिन्त्य द्विजन्मनो वसनात् अतिजीर्णत्वात् वसनस्य पुनस्तन्मध्ये चीरेण वस्त्रखण्डेन बद्धान् पृथुकतण्डुलान् किमिदमिति ब्रुवन् स्वयमेव जहार ॥ ७ ॥

वी ॥ उक्तिमेवाह—नन्विति ॥ ननु हे सखे मह्यम् एतत् पृथुकतण्डुलरूपमुपायनमानीतम्, एतदेव मम परमप्रीणनं नितरां प्रीतिकृत्, अङ्ग हे सखे एते पृथुकतण्डुलाः विश्वं विश्वशरीरकं मां तर्पयन्ति तृप्तं कुर्वन्ति ॥ ८ ॥

मु ॥ अङ्ग हे सखे मां विश्वं विश्वात्मानं माम् ॥ ८ ॥

वी ॥ इतीत्यनन्तरमुक्त्वेति शेषः, एकं मुष्टिं जग्ध्वा द्वितीयं मुष्टिं जग्धुम् अत्तुम् आददे, तावददनात्पूर्वमेव रुक्मिणी सत्वरा त्वरया युक्ता परमेष्ठिनः कृष्णस्य हस्तं जगृहे गृहीत्वा वारयन्ती प्राहेत्यर्थः ॥ ९ ॥

१. प्रसृतीः. मु-भा-प्र-पा ॥

तावच्छ्रीर्जगृहे हस्तं सत्वरा[1]परमेष्ठिनः ॥ ९

श्रीरुवाच—

एतावताऽलं विश्वात्मन्सर्वसंपत्समृद्धये ।
अस्मिंल्लोकेऽथवाऽमुष्मिन्पुंसस्त्वत्तोषकारणम् ॥ १०

ब्राह्मणस्तां तु रजनीमुषित्वाऽच्युतमन्दिरे। भुक्त्वा पीत्वा सुखं मेन आत्मानं स्वर्गतं यथा
श्वोभूते विश्वभावेन[2] स्वसखेनाभिनन्दितः। जगाम स्वालयं तात पथ्यनुव्रज्य वन्दितः॥

स चालब्ध्वा धनं सख्युर्न तु याचितवान्स्वयम् ।
स्वगृहान्व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १३

मु ॥ इति ब्रुवन् पृथुकमुष्टिं सकृत् एकवारं जग्ध्वा द्वितीयं वारं जग्धुम् आददे, तावत् तस्मिन् क्षणे श्रीः रुक्मिणी परमेष्ठिनः हस्तं जगृहे, तत्परेति । अयं भावः—एतावता पुंसः इह अमुत्र च मत्कटाक्षजनितानां सर्वसम्पदां समृद्धये अलम्, इतःपरं प्रदेयाभावात् मा त्वम् ऋणी स्या इति व्रीडानम्रं तिष्ठतोऽस्य हस्तं जगृह इति, सत्वरेति च पाठः ॥ ९ ॥

वी ॥ तदेवाह—एतावतेति॥ हे विश्वात्मन् विश्वात्मना त्वया एकमुष्ट्यदनेनैव कृत्स्नं विश्वं तर्पितमिति संबोधनाभिप्रायः, एतावता एकमुष्ट्यदनमात्रेणैव पुंसः अस्मिन् अमुष्मिन्वा लोके सर्वसंपदां समृद्धये अलं पर्याप्तम्, इतःपरं द्वितीयमुष्ट्यदनेन किं मामपि द्विजाधीनां कर्तुमुद्युङ्क्ष इति भावः, तव तोषस्य कारणं यथा भवेत्, तथा सर्वसंपत्समृद्धय इति संबन्धः ॥ १० ॥

मु ॥ आह चेदं—हे विश्वात्मन् अस्मिन् अथवा अमुष्मिन् लोके पुंसः सर्वसम्पत्समृद्धये एतावता एकग्रासमात्रेण अलम्, त्वत्तोषकारणं यथा भवेत्; तथा सर्वसम्पत्समृद्धये स्यात्, यां भक्तसमृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ॥ १० ॥

वी ॥ ब्राह्मण इति ॥ अच्युतस्य मन्दिरे भुक्त्वा पीत्वा तां रात्रिं सुखं यथातथा उषित्वा च आत्मानं स्वर्गतं स्वर्गवासिनमिव अमन्यतेत्यर्थः ॥ ११ ॥

मु ॥ स्वर्गतं स्वर्गवासिनम् ॥ ११ ॥

वी॥ ततः श्वो भूते उदिते रवौ विश्वं भावयति अभ्युदययुक्तं करोतीति तथा तेन स्वसखेन कृष्णेनाभिनन्दितः अभिनन्दनपूर्वकमनुज्ञात इत्यर्थः, तथा हे तात तेन पथि अनुव्रज्य अनुगम्य वन्दितश्च स्वालयं स्वगृहं प्रति जगाम ॥ १२ ॥

मु॥ श्वो भूते उदिते रवौ, विश्वं भावयतीति विश्वभावः, तेन स्वसुखेन आनन्दपूर्णेन अभिनन्दितः अनुज्ञातः विनयोक्तिभिः ॥ १२ ॥

वी ॥ स चेति ॥ स ब्राह्मणस्सख्युस्सकाशाद्धनम् अलब्ध्वा स्वयं व्रीडितः कार्पण्येन लज्जितः न याचितवान्, भगवानयाचितो न ददौ, स्वयं तु न याचित्वाऽपि लब्धवानित्यर्थः, किंतु महतो भगवतो दर्शनेनैव निर्वृतः सुखितः स्वगृहान्प्रति जगाम॥ १३॥

मु ॥ व्रीडितः स्वचित्तकार्पण्येन लज्जितः महतः कृष्णस्य दर्शनेन निर्वृतः ॥ १३ ॥

१. तत्परा. मु-भा-प्र. पा ॥ २. स्वसुखेना. मु-भा-प्र. पा ॥

अहोब्रह्मण्यदेवस्यदृष्टाब्रह्मण्यतामया।यद्दरिद्रतमोलक्ष्मीमाश्लिष्टोबिभ्रतोरसि।।१४
　　क्वाहं दरिद्रः पापीयान्क्व कृष्णश्श्रीनिकेतनः ।
　　ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥　　　　१५
निवेशितःप्रियाजुष्टेपर्यङ्के भ्रातरोयथा।महिष्यावीजितश्श्रान्तोवालव्यजनहस्तया ॥
शुश्रूषयापरमयापादसंवाहनादिभिः।पूजितोदेवदेवेनविप्रदेवेनदेववत् ॥　　१७
स्वर्गापवर्गयोःपुंसांरसायांभुविसंपदाम्।सर्वासामपिसिद्धीनांमूलंतच्चरणार्चनम् ॥
अधनोऽयंधनंप्राप्यमाद्यन्नुच्चैर्नमांस्मरेत्।इतिकारुणिकोनूनंधनंमेभूरिनाददात्॥१९

---

वी॥ निर्वृतिमेवाह—अहो इति चतुर्भिः॥ ब्रह्मण्यदेवस्य ब्राह्मणश्रेष्ठस्य ब्रह्मण्यता ब्रह्मकुले साधुता दृष्टा, काऽसौ? उरसि वक्षसि लक्ष्मीं बिभ्रता भगवताऽहं दरिद्रोऽपि आश्लिष्ट आलिङ्गित इति यत्, एषा ॥ १४ ॥

मु ॥ यत् यस्मात् ब्रह्मण्यताया हेतोः लक्ष्मीम् उरसि बिभ्रता तेन आश्लिष्टोऽहम्॥

वी॥ अयमलभ्यलाभ इत्याह—क्वाहमिति ॥ पापीयान्नीचः अथापि ब्रह्मबन्धुरयमित्यभिप्रेत्य बाहुभ्यामालिङ्गितः ॥ १५ ॥

मु ॥ तदेवोपपादयति —क्वेति ॥ १५ ॥

वी ॥ किंच श्रिया लक्ष्म्यवताररूपया रुक्मिण्या जुष्टे सेविते पर्यङ्के अहं निवेशितः उपवेशितः, यथा भ्रातरः, तद्वत् , किंचाध्वनि श्रान्तोऽहं वालव्यजनं हस्ते यस्यास्तया महिष्या भार्यया वीजितश्च ॥ १६ ॥

मु ॥ भ्रातरः रामादयः ॥ १६ ॥

वी॥ किंच—शुश्रूषयेति॥पादसंवाहनं पादपीडनम्, आदिशब्देन चन्दनलेपनादिसंग्रहः, देवानां ब्रह्मादीनां देवेन तथापि सौशील्यातिशयेन विप्राणां देवेन कर्त्रा देववत् अहं पूजितः ॥ १७ ॥

मु ॥ देववत् देवेन तुल्यं पूजितः ॥ १७ ॥

वी॥इत्थं संपूज्यापि धनस्यादाने कारणं कल्पयति—स्वर्गापवर्गयोरिति द्वाभ्याम्॥ यद्यपि रसायां पाताले भुवि च संपदां सर्वासां सिद्धीनाम् अणिमादीनां च स्वर्गापवर्गयोः स्वर्गमोक्षयोश्च कारणं तस्य भगवतश्चरणार्चनमेव ॥ १८ ॥

मु ॥ एवमाराध्यापि धनस्यादाने कारणमाह—स्वर्गेति द्वाभ्याम् ॥ पुंसां स्वर्गापवर्गयोः भुवि रसायां च सम्पदाम् अन्यासामपि सर्वासां सिद्धीनां तच्चरणार्चनं यद्यपि मूलं भवति ॥ १८ ॥

वी॥ तथाऽप्ययं भगवान्कारुणिकः, हेतुगर्भमिदम्, अतो निर्धनो मादृशो धनं लब्ध्वा नितरां माद्यन् गर्वितो मां न स्मरेदित्यभिप्रेत्य मे मह्यं भूरि बहु धनं नाददात न ददौ ॥१९ ॥

मु॥तथापि एवं सञ्चिन्त्य कारुणिकः मह्यं मम अभूरि अल्पमपि धनं नाददात्,कथं सञ्चिन्त्येत्यत आह, यद्वा मदनुग्रहैकपरायणत्वात् दृष्टं पुरुषार्थं न प्रायच्छदित्याह—

इति[1]तच्चिन्तयाहृष्टःप्राप्तोनिजगृहान्तिकम्।सूर्यानलेन्दुसङ्काशैर्विमानैस्सर्वतोवृतम् ॥
विचित्रोपवनोद्यानैःकूजद्द्विजसमाकुलैः।प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः
जुष्टं स्वलंकृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः ॥ २१
किमिदंकस्यवास्थानंकथंतदिदमित्यभूत्।एवंमीमांसमानंतंनरानार्योऽमरप्रभाः ॥
प्रत्यगृह्णन्महाभाग गीतवाद्येन भूयसा ॥ २२
पतिमागतमाकर्ण्यप्रीत्युद्धर्षातिसंभ्रमा।निश्चक्रामगृहात्तूर्णंरूपिणीश्रीरिवालयात् ॥

---

अध्वन इति ॥ १९ ॥

वी ॥ इतीति ॥ तच्चिन्तया भगवद्गुणानुचिन्तयैव हृष्टः स्वगृहसमीपं प्राप्तः, तस्य विशेषणं--सूर्येति । सूर्यादिवद्दीप्यमानैरित्यर्थः, सर्वतः परितः वृतम् ॥ २० ॥

मु ॥ गत्यां गमने इति सञ्चिन्तयन् निजगृहान्तिकं प्राप्तः, गृहं विशिनष्टि—सूर्येति। सूर्यवत् प्रकाशमानैः अनलवत् भास्वरैः इन्दुवदानन्दकरैरित्यर्थः ॥ २० ॥

वी॥ किंच—विचित्रेति॥ कूजतां द्विजानां पक्षिणां कुलानि तैराकुलैः व्याप्तैः विचित्रैः उपवनैरुद्यानैश्च वृतं तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तैः सरोभिरिति विशेष्यमध्याहार्यम्, जुष्टं युक्तमित्यर्थः,पुम्भिः हरिणानामिवाक्षीणि यासां ताभिः स्त्रीभिश्च जुष्टम् ॥ २१ ॥

मु ॥ विचित्रोपवनोद्यानैश्च वृतं, कथम्भूतैः ? कूजद्भिः द्विजकुलैः पक्षिसङ्घैः आकुलैः प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलयुक्तानि वारीणि येषु तैः,स्वलङ्कृतैः पुम्भिः हरिणाक्षिभिः हरिणलोचनाभिः स्त्रीभिश्च जुष्टम् ॥ २१ ॥

वी ॥ तदाश्चर्यं दृष्ट्वा वितर्कितवानित्याह—किमिदमिति ॥ प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्येदं स्थानमिति स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमिति, एवंरूपमभूत्, इतीत्थं मीमांसमानं वितर्कयन्तं द्विजं नराः नार्यश्च हेमहाभाग भूयसा उच्चैः गीतवाद्येन प्रत्यगृह्णन् उपायनादिभिरादृतवन्त इति संबन्धः, अमरप्रभाः अमरतुल्यकान्तय इति नरनारीविशेषणम् ॥ २२ ॥

मु ॥ तदाश्चर्यं दृष्ट्वा वितर्कितवान् , तदाह—किमिदमिति ॥ प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति, पश्चात् दिव्यविमानोपमानि हर्म्याणि दृष्ट्वा कस्य वेति, स्थानं च स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमिति, अमरप्रभाः तत्तुल्यकान्तयः प्रत्यगृह्णन् उपायनादिभिः आदृतवन्तः ॥ २२ ॥

वी ॥ पतिमिति ॥ आलयात्कमलवनात् श्रीः लक्ष्मीरिव स्वगृहात् तूर्णं निश्चक्राम निर्गतवती ॥ २३ ॥

मु ॥ उद्गतो हर्षो यस्यास्सा अत्यन्तं सम्भ्रम आदरो यस्यास्सा आलयात् कमलवनात् रूपिणी रूपधारिणी श्रीरिव, स्वर्गस्य तत्र भगवता आनीतत्वात् स्वर्गिणामिव तयोः रूपं बभूवेति भावः ॥ २३ ॥

---

१. संचिन्तयन् गत्यां..मु-भा-प्र. पा ॥

पतिव्रतापतिंदृष्ट्वा[1]प्रेम्णोत्कण्ठाश्रुलोचना।मीलिताक्ष्यनमद्बुद्ध्यामनसापरिषस्वजे॥

पत्नीं वीक्ष्य प्रस्फुरन्तीं देवीं वैमानिकीमिव ।
दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥ २५

प्रीतस्स्वयंतयायुक्तःप्रविष्टोनिजमन्दिरम्।मणिस्तम्भशतोपेतंमहेन्द्रभवनंयथा॥ २६

पयःफेननिभाश्शय्यादान्तारुक्मपरिच्छदाः।पर्यङ्काहेमदण्डानिचामरव्यजनानिच॥

आसनानिचहैमानिमृदूपस्तरणानिच।मुक्तादामविलम्बीनिवितानानिद्युमन्तिच ॥

स्वच्छस्फटिककुड्येषुमहामरकतेषुच।रत्नदीपान्भ्राजमानाँल्ललनारत्नसंयुतान्॥ २९

विलोक्य ब्राह्मणस्तत्र समृद्धीस्सर्वसम्पदाम् ।
तर्कयामास निर्व्यग्रस्स्वसमृद्धिमहैतुकीम् ॥ ३०

---

वी ॥ पतिव्रतेति ॥ उत्कण्ठया प्रेमपूर्वकानुध्यानेन अश्रूणि आनन्दाब्बिन्दवो लोचनयोर्यस्यास्सा प्रेम्णा पतिं दृष्ट्वा मीलिते अक्षिणी यया सा बुद्ध्या अनमत् नमश्चक्रे, मनसा परिषस्वजे आलिङ्गितवती च ॥ २४ ॥

मु ॥ प्रेम्णा सम्भृतया उत्कण्ठया अश्रूणि लोचनयोः यस्याः मीलिते अक्षिणी यस्यास्सा मीलिताक्षी भूमौ अनमत्, मनसा परिषस्वजे च, बुद्धयेति वा ॥ २४ ॥

वी ॥ पत्नीमिति ॥ स ब्राह्मणः वैमानिकीं विमानारूढां देवीं देवतास्त्रियमिव प्रस्फुरन्तीं तां निष्कं पदकाख्यभूषणं कण्ठे यासां तासां दासीनां मध्ये भान्तीं दीप्यमानां पत्नीं वीक्ष्य विस्मितो बभूव ॥ २५ ॥

मु ॥ २५ ॥

वी ॥ प्रीत इति ॥ तया पत्न्या युक्तस्सहितः. निजमन्दिरं विशिनष्टि—मणिस्तम्भेत्यादिना । यथा महेन्द्रभवनं. तद्वत् स्थितम् ॥ २६ ॥

वी॥पय इति॥पयःफेनेत्यादेः तत्र मन्दिरइत्यादि',पयःफेननिभाः दुग्धफेनवन्मृदुलाः शुभ्राश्च दान्ताः धौताः रुक्ममयाः परिच्छदाः परिकराः यासां ताः शय्या इति द्वितीयान्तानां विलोक्येत्युपरिष्टात्संबन्धः, प्रथमान्तपाठे तु यत्र मन्दिरे पयःफेननिभाश्शय्यादयः, तत्र सर्वसंपदां समृद्धिमवलोक्य तर्कयामासेति संबन्धः, अस्मिन् पक्षे दान्ताः दन्तमयाः रुक्मपरिच्छदा इति च पर्यङ्कविशेषणं. हेममयो दण्डो येषां तानि चामरव्यजनानि च ॥ २७॥

वी॥आसनानीति॥ मृदून्युपस्तरणानि तूलादिमयानि येषु तान्यासनानि मुक्तादाम्नां मुक्तासराणां विलम्बा येषु सन्तीति तथा तानि वितानानि उल्लोचाः द्युमन्ति कान्तियुक्तानि च ॥ २८ ॥

वी ॥ महान्तो मरकता इन्द्रनीलमणयो येषु तेषु स्वच्छेषु स्फटिकमयकुड्येषु रत्नान्येव दीपाः स्त्रीरत्नैः संवृताः भ्राजमानाः औज्ज्वल्यातिशयाद्रत्नानां दीपत्वरूपणम् ॥

वी ॥ विलोकयेति ॥ निर्व्यग्रः निश्चलः स्थितस्सन् अहैतुकीम् आकस्मिकीं स्वस्य

---

[1]. प्रेमोत्कण्ठा. मु-भा प्र-पा ॥

नूनं [1]बतेदं मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३१
नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोगः ।
[2]पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभ[3]स्सकामे ॥ ३२

समृद्धिं तर्कयामास कुत एषा समृद्धिरागतेति तावच्चिन्तितवानित्यर्थः ॥ ३० ॥

मु ॥ तत्र निजमन्दिरे ब्राह्मणः सर्वसम्पदां समृद्धिं विलोक्य तर्कयामास, समृद्धीनामेवाविष्करणं—पय इति । यत्र पयःफेननिभाः शय्याः दान्ताः गजदन्तमयाः रुक्मपरिच्छदाश्च पर्यङ्काः हेमदण्डानि चामरव्यजनानि हैमान्यासनानि मृदूनि उपस्तरणानि आस्तरणानि तूलादिमयानि येषां तानि मुक्तादामविलम्बीनि मुक्तादाम्नां विशिष्टो लम्बो विलम्बः तद्वन्ति, द्युमन्ति वितानानि च यत्र, तत्र सर्वसम्पदां समृद्धीः रत्नदीपांश्च विलोक्येति योज्यम् , कथम्भूतान्? कुत्रस्थान्वा रत्नदीपान्? ललनारत्नैः संयुतान् भ्राजमानान् दीप्यमानान् महामरकतेषु स्वच्छस्फटिककुड्येषु स्थितान् , किं तर्कयामासेत्यत आह—समृद्धिमिति । अहैतुकीम् अकस्मात्प्राप्तां समृद्धिं प्रति कुत एषा समृद्धिरागतेति ॥ २९ ॥ ३० ॥

वी ॥ निश्चिनोति—नूनमिति॥ दुर्भगस्यास्मिञ्जन्मनि निर्भाग्यस्य शश्वत्सदा जन्मान्तरेष्वपीत्यर्थः, दरिद्रस्य मम समृद्धिहेतुस्संपद्धेतुः महाविभूतेर्विभूतिद्वयनायकस्य यदूत्तमस्य भगवतोऽवलोकनादन्यो नैवोपपद्येत न संभाव्येत नूनं ध्रुवम् अहो बत एतदाश्चर्यमित्यर्थः ॥ ३१ ॥

मु ॥ भगवत्कटाक्षैरेवमासीदिति निश्चिनोति—नूनमिति निश्चये, एवञ्चासावहञ्च तस्य एतन्मम महती नित्या विभूतिर्यस्य तस्य अवलोकतोऽन्यो नैवोपपद्येत ॥ ३१ ॥

वी॥ एवं तर्हि समक्षमेव मह्यं दास्यामीति ब्रुवन् किं न ददावित्याशङ्क्याह—नन्विति ॥ भूरिभोगः बहुभोगो भगवान्, हेतुगर्भमिदम् , अतः याचिष्णवे याचकाय भूर्यपि बह्वप्यल्पमपि अब्रुवाणो 'दास्यामि प्रतिगृहीष्व'इत्येवमवदन् असमक्षमेव दिशते यच्छति,विरिञ्चिभोगपर्यन्तमपि याचकाय दीयमानं स्वभोगापेक्षयाऽतितुच्छमेवेत्यभिप्रेत्य लज्जया तत्समक्षं न यच्छति,किन्त्वसमक्षमेवेत्यर्थः,एतदेव दृष्टान्तमुखेन वदन्कृतज्ञतामप्याह—पर्जन्यवदिति। यथा पर्जन्यः कदाचित् बह्वपि वर्षम् अल्पमेव मन्यमानश्शयाने सति जने रात्रावगर्जन्नसमक्षमेव वर्षति, तद्वदयं दाशार्हकाणामृषभो यदुपतिः तत्सेवकसमर्पितमत्यल्पमपि समीक्षमाणो बहुमन्यमानः सकामे कामनया युक्ते पुंसि अभिलषितानर्थानसमक्षं वर्षतीत्यर्थः ॥ ३२ ॥

मु ॥ ननु स त्वदवलोकमात्रेण महदैश्वर्यं दत्तवान् , तर्हीदं तुभ्यमिति किं नावोचत्? अत आह नन्विति ॥ ननु मे सखा समक्षम् अब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशति ददाति, अत्र हेतुः—भूरिभोगो विभूतिर्यस्य, अतो भूर्यपि स्वल्पं मत्वा समक्षमब्रुवाण एव ददाति, न पर्जन्यवद्ददाति पर्जन्यो गर्जितपूर्वकं ददाति, नैवमित्यर्थः, यद्वा—पर्जन्यवद्ददाति, न अस्मान् निरीक्षमाण इत्यर्थः ॥ ३२॥

१. बतैतन्मम. मु-भा प्र. पा ॥ २. पर्जन्यवन्नस्वय. मु-भा प्र. पा ॥ ३. सखामे. मु-भा-प्र. पा ॥

किञ्चित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी।
मयोप[1]नीतं पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३३
तस्यैव मे सौहृदसख्यमैत्रीदास्यं पुनर्जन्मनिजन्मनि स्यात्।
महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३४
भक्ताय चित्रं भगवान्हि संपदो राज्यं विभूतीर्न समर्थयत्यजः।

---

वी ॥ तत्स्वयमीक्षमाण इत्येतदेव स्वदृष्टान्तेन द्रढयति—किञ्चिदिति ॥ यत्स्वदत्तम् आत्मना दत्तमैश्वर्यम् उरु भूर्यपि तत्किञ्चित्करोति अत्यल्पं मन्यत इत्यर्थः,यत्सुहृदा भक्तेन कृतं समर्पितं फल्गु अल्पमपि तद्भूरि बहु करोतीति,तथा तथाहि मयोपनीतं समीप आनीतं पृथुकानामेकं मुष्टिं स्वयं महात्मा उभयविभूत्यधिपतिरपि प्रीतियुक्तः प्रत्यग्रहीत्, महात्मेत्यस्य सर्वभूताभिप्रायज्ञ इति वाऽर्थः ॥ ३३ ॥

मु ॥ किञ्च—अस्यायमसाधारणः स्वभाव इत्याह—किञ्चिदिति ॥ उर्वपि महदपि स्वदत्तं यत् वस्तु किञ्चित् करोति अल्पं मन्यते, सुहृद्भिः कृतं दत्तं फल्ग्वपि अल्पमपि भूरि करोतीति तथा भूरि मन्यत इत्यर्थः, तस्मात् मयोपनीताम् उपहारत्वेन नीतां पृथुकानामेकमुष्टिं प्रीतियुक्तः प्रत्यग्रहीत् स्वयमादाय भक्षितवान् ॥ ३३ ॥

वी ॥ अतः कृतज्ञतमस्य भगवतस्सख्यादिकमेव मम प्रतिजन्मनि स्यादिति प्रार्थयते—तस्यैवेति ॥ भगवतएव सौहृदं हितैषित्वं प्रेम वा, सख्यं प्रियत्वं हिताशंसनं वा, मित्रत्रायकत्वं वा, मैत्री उपकारस्मरणेन किञ्चित्करत्वं, दास्यं भृत्यत्वं, तेषां द्वन्द्वैकवद्भावः, तन्मम जन्मनिजन्मनि, वीप्सायां द्विर्भावः,स्यात् अस्तु, न तु विभूतिरिति भावः, किञ्च गुणालयेनानन्तकल्याणगुणाश्रयेण महानुभावेन भगवता विषज्जतः विशेषेण सङ्गतिं प्राप्नुवतो मम तत्पुरुषाणां तद्भक्तानां प्रसङ्गः प्रकृष्टः सङ्गस्स्यात् ॥ ३४ ॥

मु ॥ एवं भगवतः स्वस्मिन् वात्सल्यमवलोक्य तद्दास्यं प्रार्थयते—तस्येति ॥ दास्यमिति द्वन्द्वैकवद्भावः, सौहृदं हितैषित्वम् , सख्यं प्रियैषित्वम् , मैत्री उपकारस्मरणेन किंञ्चित्करत्वम, दास्यं भृत्यत्वम् , एतत् प्रतिजन्म भूयादित्यर्थः, अपि च महानुभावेन वात्सल्यादिगुणालयेन च विषज्जतः विशेषेण सङ्गं प्राप्नुवतः मम तस्य पुरुषेषु भागवतेषु प्रकृष्टस्सङ्गः स्यादिति ॥ ३४ ॥

वी ॥ ननु भक्तस्सन्नेव किमिति पुनस्तद्भक्तिं प्रार्थयस इत्यत आह भक्तायेति ॥ चित्रं यद्यहं भक्तः तर्हि महामैश्वर्यप्रदानमतिचित्रमित्यर्थः, इत्थमैश्वर्यदानेन मामभक्तमेव सम्भावयामीति भावः,कुतः? हि यस्मात् अजो भगवान् भक्ताय संपदो राज्यं विभूतीश्च न समर्थयति न वर्धयति न यच्छतीत्यर्थः,तत्र संपदो भोग्यभोगोपकरणभोगस्थानादिसमृद्धयः, विभूतयः पुत्रपशुवित्तादिसमृद्धयः, अदाने हेतुं वदन् भगवन्तं विशिनष्टि—धनिनां मदस्योद्भवो यस्मात् तदैश्वर्यं निपातं निपतन्त्यनेन नरक इति तथाभूतम् अदीर्घबोधाय अविवेकाय भवेदिति पश्यन् जानन् विचक्षणः,हेतुगर्भमिदम्, अतस्तावन्न समर्थयत्येवेति संबन्धः, अतः किं वाऽहमभक्तः, तस्मात्तद्भक्तिं प्रार्थयइति

---

१. नीतां. मु-भा-प्र. पा ॥

अदीर्घबोधाय विचक्षणस्स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३५
इत्थं व्यवसितो बुद्ध्या भक्तोऽतीव जनार्दने ।
विषयाञ्जायया त्यक्ष्यन्बुभुजे नातिलम्पटः ॥ ३६
तस्यैव[1]देवदेवस्य हरेर्यज्ञपतेःप्रभोः। ब्राह्मणाःप्रभवोदैवंनतेभ्योविद्यतेपरम् ॥ ३७
श्रीशुक उवाच—
एवं स विप्रो भगवत्सुहृत्तमो दृष्ट्वा स्वभृत्यैरजितं पराजितम् ।
तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धामलेभेचरितैस्सतांगतिम् ॥ ३८

---

भावः ॥ ३५ ॥

मु ॥ ननु भक्तेः फलं सम्पदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयसे ; अत आह—भक्तायेति ॥ चित्राः नानाविधाः सम्पदः कोशादीन्, राज्यम् ऐश्वर्यम्, विभूतीः कलत्रपुत्रादीन् न समर्थयति न ददाति, अपि तु केवलां भक्तिमेव, अदीर्घबोधाय अविवेकिने सम्पदः प्रयच्छति. भक्तायाप्रदाने हेतुः—पश्यन्निपातमिति । मम तु भक्त्यभावादेवं जातम्, अतः तद्भक्तिरेव स्यादिति भावः ॥ ३५ ॥

वी ॥ इत्थमिति ॥ बुद्ध्या विवेकात्मिकया व्यवसितः निश्चिन्वन् नितरां भगवति भक्तियुक्तस्सन् विषयान् त्यक्ष्यन् शनैश्शनैः विषयत्यागमभ्यस्यन् नातिलम्पटः तेष्वतीवादररहितः तान् जायया सह बुभुजे अनुबभूव ॥ ३६ ॥

मु॥ व्यवसितः कृतनिश्चयः त्यक्ष्यन् शनैः त्यागमभ्यस्यन् जायया सह बुभुजे॥३६॥

वी ॥ स्वयं निस्समाभ्यधिको भगवान् कथमेवमकिंचनं द्विजमादृतवानिति स्मयमानं राजानमालक्ष्याह—तस्यैवेति ॥ हे प्रभो यज्ञपतेर्यज्ञनिर्वाहकस्य देवानां ब्रह्मादीनामपि देवस्य हरेः प्रभवो दैवं च ब्राह्मणा एव. तेभ्यो ब्राह्मणेभ्यः परमन्यद्दैवं न तस्य विद्यत इत्यर्थः ॥ ३७ ॥

मु ॥ तस्य ब्रह्मण्यता नातिचित्रमित्याह—यद्वा अनेन चरित्रेण तत्सिद्धं भवतीत्याह—तस्येति ॥ वैशब्दोऽवधारणे,यज्ञपतेः यज्ञपुरुषस्य हरेरेव तस्य प्रभोः देवानामपि देवस्यापि ब्राह्मणाः प्रभवो दैवं च भवन्ति, तेभ्यः परमधिकं किंचित् न विद्यते ॥ ३७॥

वी ॥ ततो ब्राह्मणः किमभूदित्यत आह—एवमिति ॥ भगवत्सखः स ब्राह्मणः अन्यैरजितमपि स्वभृत्यैः पराजितं वशीकृतं दृष्ट्वा तस्य भगवतो ध्यानेन उद्ग्रथितमुन्मोचितमात्मनस्स्वस्य बन्धनं संसृतिबन्धो यस्य सः चरितैः तद्ध्यानाङ्गतयाऽनुष्ठितैर्वर्णाश्रमानुगुणैः पञ्चमहायज्ञाद्यनुष्ठानैः ध्यानद्वारा साधनैः सतां मुक्तानां गतिं प्राप्यं तस्य भगवतो धाम स्थानं वैकुण्ठाख्यं लेभे प्राप्तवान्, स्वभृत्यैः पराजितं सतां गतिम् उपाभूतं दृष्ट्वेति वा संबन्धः ॥ ३८ ॥

मु ॥ कुचेलोपाख्यानमुपसंहरति—एवं भगवत्सुहृत्तमः स विप्रः अन्यैरजितमपि स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानवेगेन उद्ग्रथितं शिथिलीभूतम् आत्मबन्धनम् अहंकारममकाररूपं यस्य सः एवं भूतस्सन अविरतः सतांगतिं प्राप्यभूमिं तस्य धाम लेभे ॥

१. तस्यवै. मु भा-प्र. पा ॥

एतद्ब्रह्मण्यदेवस्यश्रुत्वाब्रह्मण्यतांनरः। लब्धभावोभगवतिकर्मबन्धाद्विमुच्यते ॥ ३९

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे पृथुकोपाख्यानं नाम एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

( सूर्योपरागे कुरुक्षेत्रं प्रति श्रीकृष्णादीनाङ्गमनकथाप्रारम्भघट्टः. )

श्रीशुक उवाच—

अथैकदाद्वारकायांवसतोरामकृष्णयोः। सूर्योपरागस्सुमहानासीत्कल्पक्षयेयथा॥ १

तंज्ञात्वासत्तमाराजन्पुरस्तादेवसर्वशः।स्यमन्तपञ्चकंक्षेत्रंययुश्श्रेयोविधित्सया ॥ २

निःक्षत्रियांमहींकुर्वन्रामश्शस्त्रभृतांवरः।नृपाणांरुधिरौघेणयत्रचक्रेमहाह्रदान् ॥ ३

---

वी ॥ अथोपवर्णितभगवच्चेष्टितश्रवणफलमाह —एतदिति ॥ ब्रह्मण्यश्रेष्ठस्य भगवतो ब्रह्मण्यतां श्रुत्वा लब्धः भावो भक्तिर्येन सः कर्मबन्धात् प्राचीनकर्मरूपाद्बन्धात् मुक्तो भवति ॥ ३९ ॥

मु ॥ एतदुपाख्यानश्रवणादिफलमाह —एतदिति ॥ ब्रह्मण्यश्चासौ देवश्च, तस्य ब्रह्मण्यतां प्रति एतदुपाख्यानं श्रुत्वा भगवति लब्धभावो लब्धभक्तिस्सन् कर्मबन्धाद्वि मुच्यते ॥ ३९ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

वी ॥ अथ भगवतस्सबान्धवस्य तीर्थयात्राव्याजेन सुहृत्सङ्गमतत्सल्लापाद्यात्मकं चेष्टितमनुवर्णयति त्रिभिरध्यायैः—अथेति ॥ रामकृष्णयोः द्वारकायां वसतोस्सतोस्सुमहान् सर्वग्रासः, तत्र दृष्टान्तः कल्पक्षये यथेति । यथा कल्पावसाने सूर्यो न दृश्यते तद्वदित्यर्थः ॥ १ ॥

मु ॥ कल्पक्षये महाप्रलये यथा सर्वग्रास इत्यर्थः ॥ १ ॥

वी ॥ तमिति ॥ हे राजन् तं सूर्योपरागं ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा सत्तमाः शिष्टास्सर्वे श्रेयोविधित्सया पुण्यार्जनेच्छया स्यमन्तपञ्चकं नाम क्षेत्रं कुरुक्षेत्रमित्यर्थः, ययुर्जग्मुः ॥ २ ॥

मु ॥ पुरस्तादेव ज्योतिर्विदां सकाशात् ज्ञात्वा सर्वतः सर्वस्माद्देशात् स्यमन्तपञ्चकं क्षेत्रं कुरुक्षेत्रं श्रेयोविधित्सया श्रेयस्साधनं विधातुमिच्छया ययुः ॥ २ ॥

वी ॥ अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्यापापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह —निःक्षत्रियामिति द्वाभ्याम् ॥ रामो भार्गवः रुधिरौघेण रुधिरधारया यत्र क्षेत्रे महाह्रदान् पञ्च चक्रे ॥ ३ ॥

मु ॥ तन्माहात्म्यमाह—निःक्षत्रियामिति द्वाभ्याम् ॥ महाह्रदान् नवसंख्याकान्॥

ईजेचभगवान्रामोयत्रास्पृष्टोऽपिकर्मणा। लोकस्यग्राहयन्नार्योयथाऽन्योऽघापनुत्तये
महत्यांतीर्थयात्रायांतत्रागन्भारतीःप्रजाः। वृष्णयश्चतथाऽक्रूरवसुदेवाहुकादयः॥
ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः॥ ५
गदप्रद्युम्न[१]साम्बाश्चसुचन्द्रशुकसारणैः। आस्तेऽनिरुद्धोरक्षायांकृतवर्माचयूथपः॥६
तेरथैर्देवधिष्ण्याभैर्हयैश्चतरलप्लवैः।गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः॥ ७
व्यरोचन्तमहाभागाःपथिकाञ्चनमालिनः। दिव्यस्रग्वस्त्रसन्नाहाःकलत्रैःखेचराइव॥
तत्र स्नात्वा महाभागा उपोष्य सुसमाहिताः।

---

वी॥ईज इति॥ कर्मणा नृपवधप्रयुक्तपापेन अस्पृष्टोऽपि रामो भार्गवः लोकस्य ग्राहयन् अन्योऽपि मत्तोऽर्वाचीनाश्शिष्टा एवं कुर्युरिति तान्ग्राहयितुमित्यर्थः. तथा अन्येषामविदुषाम् अघापनुत्तये पापापनोदनाय च यत्र क्षेत्रे ईजे इयाज, तत्क्षेत्रं ययुरिति पूर्वेण संबन्धः॥४॥

मु॥ कर्मणा पापेन अस्पृष्टोऽपि लोकस्य धर्मं ग्राहयन् अघापनुत्तये दोषपरिहाराय अन्य इव जीव इव यत्र यज्ञैः ईजे॥४॥

वी॥ महत्यामिति॥ महत्यामतिशयितपुण्यावहायां भारतीः भारत्यः भारतवर्षस्थाः प्रजाः तत्र क्षेत्रे आगन् आजग्मुः,तथा अक्रूरादयो वृष्णयश्चागमन्, किमर्थमित्यत आह —ययुरिति। हे भारत स्वं स्वकीयमघं क्षपयिष्णवः निरसितुमिच्छव इत्यर्थः॥५॥

मु॥ आगन् आजग्मुः,भारतीः भारत्यः भारतवर्षस्थिता इत्यर्थः, आहुकः उग्रसेनः॥

वी॥ गदेति॥ गदादिभिस्सहानिरुद्धः रक्षायां निमित्तभूतायां द्वारकारक्षणार्थमित्यर्थः, तत्रैवास्ते स्थितवानित्यर्थः, तथा यूथपः सेनानीः कृतवर्माऽपि तत्रैवास्त इत्यर्थः, एतैर्विशेषणैः सर्वे भगवदादयो जग्मुरित्यभिप्रायः, तत्र श्रीकृष्णस्तु लोकं तीर्थयात्रायां प्रवर्तयितुं गत इति बोध्यम्॥६॥

मु॥ सुचन्द्रशुकसारणैस्सह अनिरुद्धो द्वारकारक्षणायाम् आस्ते, तथा कृतवर्मा यूथपः सेनापतिः॥६॥

वी॥ तइति॥ ते अक्रूरादयः देवधिष्ण्याभैः देवविमानसङ्काशैः इति रथविशेषणं, तरलास्तरङ्गाः तद्वत्प्लवो गतिर्येषां तैरिति हयविशेषणं, नदद्भिरभ्राभैः नीलमेघसङ्काशैरिति च गजविशेषणं, विद्याधराणामिव द्युतिर्येषां तैः नृभिर्नरैश्च व्यरोचन्त इति संबन्धः, महाभागा महाभाग्यवन्तस्सर्वे काञ्चनमालायुक्ताः दिव्याः स्रगादयो येषां ते सन्नाहः कवचादिपरिकरबन्धः खेचरा देवा इव कलत्रैस्सह व्यरोचन्त॥७॥८॥

मु॥ महाभागाः ते यदवः पथि व्यरोचन्त, रथादिभिः कलत्रैश्च सहिताः देवधिष्ण्याभैः विमानसदृशैः तरलाः तरङ्गाः, तद्वत् प्लवो येषां तैः वलद्भिरित्यर्थः, विद्याधरद्युभिः विद्याधराणामिव द्युतिः येषां तैः नृभिः पदातिभिः दिव्या अत्युत्तमाः स्रग्वस्त्रसन्नाहा येषां ते, कथं व्यरोचन्त? खेचराः वैमानिका इव॥७॥८॥

वी॥ तत्रेति॥ वासस्स्रगादय आसां सन्तीति तथा ताः धेनूर्ददुः॥९॥

---

१. साम्बाद्याः. मु-भा-प्र. पा॥

ब्राह्मणेभ्यो ददुर्धेनूर्वासस्स्रग्रुक्ममालिनीः ॥ ९
रामह्रदेषुविधिवत्पुनराप्लुत्यवृष्णयः।ददुस्स्वर्णंद्विजाग्रयेभ्यःकृष्णेनोभक्तिरस्त्विति
स्वयंचतदनुज्ञातावृष्णयःकृष्णदेवताः।भुक्त्वोपविविशुःकामंस्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु॥
तत्रागतांस्तेददृशुस्सुहृत्सम्बन्धिनोनृपान्। मत्स्यकेकयकोसल्यविदर्भकुरुसृञ्जयान्॥
कम्बोजकेकयान्मद्रान्कुन्तीनानर्तकेरलान् ।
अन्यांश्चैवात्मपक्षीयान्परांश्चशतशोनृपान् ॥
नन्दादीन्सुहृदो गोपान्गोपीश्चोत्कण्ठिताश्चिरम् ॥ १३
अन्योन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः ।
आश्लिष्य गाढं नयनैस्स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १४

---

मु ॥ तत्र स्यमन्तपञ्चके स्नात्वा ॥ ९ ॥

वी ॥ रामह्रदेषु भार्गवरामनिर्मितेषु ह्रदेषु आप्लुत्य स्नात्वा कृष्णे भगवति नोऽस्माकं भक्तिरस्त्विति प्रार्थयमानाः ददुः ॥ १० ॥

मु ॥ पुनः अन्येद्युः आप्लुत्य, यद्वा तस्मिन्नेवाहनि मुक्तस्नानं कृत्वा नः अस्माकं कृष्णे भक्तिः अस्त्विति प्रार्थयन्त ॥ १० ॥

वी ॥ तथा स्वयं भगवानप्याप्लुत्य ददावित्यर्थः, कृष्णो देवता येषां ते अत एव तेन कृष्णेनानुज्ञाताः वृष्णयः कामं यथेष्टं भुक्त्वा स्निग्धा सान्द्रा छाया येषां तेषामङ्घ्रिपाणां वृक्षाणाम् अङ्घ्रिषु मूलेषु उपविविशुः ॥ ११ ॥

मु॥ तदनुज्ञाताः तैः द्विजैः अनुज्ञाताः, स्निग्धच्छायाः शीतलच्छायाः ये अङ्घ्रिपाः वृक्षाः, तेषाम् अङ्घ्रिषु मूलेषु उपविविशुः ॥ ११ ॥

वी ॥ तत्रेति ॥ ते वृष्णयः तत्र स्यमन्तपञ्चके आगतान् सुहृदादीन् ददृशुः, सुहृदश्च संबन्धिनश्च तान् मत्स्यादयः शब्दा जनपदतद्राजसाधारणाः, अन्यान्मत्स्यादिभ्योऽन्यानात्मपक्षीयान् स्वपक्षपातिनस्तथा परान् शत्रूंश्च सुहृदो नन्दादीन् गोपान् चिरमुत्कण्ठा प्रीतिपूर्वकानुध्यानमासां संजातेति तथा ताः गोपीश्च ददृशुरिति पूर्वेण संबन्धः॥

मु ॥ सुहृदः संबन्धिनो बान्धवान् तत्र आगतान् ते यदवः ददृशुः, तानेवाह—मत्स्येति ॥ १२ ॥

मु ॥ परान् स्वपक्षीयेभ्योऽन्यांश्च ॥ १३ ॥

वी ॥ अन्योन्येति ॥ अन्योन्यस्य सन्दर्शनेन यो हर्षः तस्य रंहसा वेगेन अतिशयेनेति यावत्, प्रोत्फुल्लैः हृद्वक्त्राण्येव सरोरुहाणि तैः श्रीः शोभा येषां ते गाढं यथातथा आलिङ्ग्य नयनैः स्रवन्ति जलानि येषां ते हृष्यन्त्यः उदञ्चितलोमानः त्वचो येषां ते रुद्धाः गद्गदाः गिरो येषां ते मुदं हर्षं ययुः प्रापुः ॥ १४ ॥

मु ॥ तत्र पुंसां पुम्भिः समागममाह—अन्योन्येति ॥ ते परस्परं गाढम् आश्लिष्य मुदं ययुः, कथंभूताः? अन्योन्यसंदर्शनसंभूतस्य हर्षस्य रंहो वेगः, तेन प्रोत्फुल्लैः हृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते तथा नयनैः स्रवत् जलम् अश्रु येषां ते तथा ॥ १४ ॥

स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे ।
स्तनैस्स्तनान्कुङ्कुमपङ्करूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १५
ततोऽभिवाद्यतेवृद्धान्यविष्ठैरभिवादिताः। स्वागतंकुशलंपृष्ट्वाचक्रुःकृष्णकथामिथः ॥
पृथाभ्रातॄन्स्वसॄर्वीक्ष्यतत्पुत्रान्पितरावपि।भ्रातृपत्नीर्मुकुन्दश्चजहौसङ्कथयाशुचः॥१७

कुन्त्युवाच—

आर्यभ्रातरहंमन्य आत्मानमकृताशिषम्।यत आपत्सुमद्वार्तां[1]नानुस्मरतसत्तमाः ॥
सुहृदोज्ञातयःपुत्राभ्रातरःपितरोऽपिवा। नानुस्मरन्तिस्वजनंयस्यदैवमदक्षिणम् ॥

वी ॥ स्त्रियश्चेति ॥ अतिसौहृदेन स्मितं तेन अमलाः अपाङ्गः नेत्रान्तैः दृशो दृष्टयो यासां ताः कुङ्कुमपङ्केन रूषितान् लिप्तान् तादृशैः स्तनैः निहत्य संपीड्य मिथोऽभिरेभिरे परिषस्वजिरे प्रणयेन प्रीत्या अश्रूणि लोचनयोः यासां ताः ॥ १५ ॥

मु ॥ स्त्रीणां स्त्रीभिस्समागममाह—स्त्रियश्चेति ॥ मिथः संवीक्ष्य स्त्रियश्च दोर्भिः अभिरेभिरे आलिङ्गितवत्यः, कथंभूताः? अतिसौहृदेन यत् स्मितं तेन अमलापाङ्गेन च युक्ता दृशो दृष्टयो यासां तास्तथा प्रणयेन संभूतानि अश्रूणि लोचनेषु यासां तास्तथा, किं कृत्वा अभिरेभिरे? कुङ्कुमपङ्करूषितान् स्तनान् स्तनैः निहत्य ॥ १५ ॥

वी ॥ तत इति ॥ ते यदवो मत्स्यादयश्च वृद्धान् वयसा अधिकान् अभिवन्द्य यविष्ठैः न्यूनवयस्कैरभिवन्दिताश्च स्वागतं कुशलं च पृष्ट्वा तत्र परस्परं कथाश्चक्रुः कथयामासुः ॥ १६ ॥

मु ॥ १६ ॥

वी ॥ तावत्पृथा कुन्ती भ्रातॄन् स्वसॄः भगिनीश्च तत्पुत्रान् भ्रातृपुत्रान् स्वसृपुत्रांश्च वीक्ष्य सङ्कथया मिथस्सप्रेमगोष्ठ्या शुचः क्लेशान् जहौ तत्याज ॥ १७ ॥

मु ॥ भ्रातॄन् भ्रातृपत्नीः स्वसॄः तत्पुत्रान् पितरावपि मुकुन्दं च वीक्ष्य संकथया मिथस्संभाषणेन शुचो जहौ ॥ १७ ॥

वी ॥ तावत् पृथावसुदेवयोः सङ्कथामाह—आर्येत्यादिभिश्चतुर्भिः ॥ हे आर्य हे भ्रातः अहमात्मानम् अकृताशिषम् अप्राप्तमनोरथं मन्ये मम मनोरथपूर्तिरजातेत्यर्थः, कुतः? यत् यस्मात् हे सत्तमाः मद्वार्तां नानुस्मरत न स्मृतवन्तः, अडभाव आर्षः॥१८॥

मु ॥ तस्य वासुदेवस्य च संकथामाह—आर्येति चतुर्भिः ॥ भ्रातरिति वसुदेवः संबोध्यते, ज्येष्ठत्वादार्येत्युक्तिः, अकृताशिषम् अकृतमनोरथम्, यतः सत्तमाः यूयम् आपत्सु मद्वार्तां नानुस्मरथ, तस्मादेव हेतोः ॥ १८ ॥

वी ॥ युक्तं चैतदित्याह—सुहृद इति ॥ यस्य दैवमदक्षिणं प्रतिकूलं, तं स्वजनमपि सुहृदो नानुस्मरन्त्येव, अतो मम दैवं प्रतिकूलमिति भवतां कोऽपराध इति भावः ॥

मु ॥ यस्य दैवम् अदक्षिणम् अननुकूलं, तं स्वजनमपि सन्तं सुहृदादयो नानुस्मरन्ति, अतो ममैव दैवं प्रतिकूलं, युष्माकं कोऽपराध इत्यर्थः ॥ १९ ॥

[1]. नानुस्मरथ. मु-भा-प्र पा ॥

श्री वसुदेव उवाच—
अम्बमास्मानसूयेथादैवक्रीडनकान्नरान्।ईशस्यहिवशेलोकः[१]क्रियतेकार्यतेयथा ॥
कंसप्रतापितास्सर्वेवयंयातादिशंदिशम्। एतर्ह्येवपुनस्स्थानंदैवेनासादितास्स्वसः ॥
श्री शुक उवाच—
वासुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चितानृपाः।आसन्नच्युतसन्दर्शपरमानन्दनिर्वृताः॥ २२

भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा।
सदाराः पाण्डवाः कुन्ती सञ्जयो विदुरः कृपः ॥ २३

कुन्तिभोजोविराटश्चभीष्मकोनग्नजिन्महान्।पुरुजिद्द्रुपदश्शल्योधृष्टकेतुश्चकाशिराट्॥
दमघोषोविशालाक्षोमैथिलोमद्रकेकयौ। युधामन्युस्सुशर्माचससुताबाह्लिकादयः ॥

राजानोऽन्येच राजेन्द्र युधिष्ठिरमनुव्रताः।
श्रीनिकेतं ययुश्शौरेस्सस्त्रीका वीक्ष्य विस्मिताः ॥ २६

---

वी॥ एवमुक्तः प्राह वसुदेवः—अम्बेति ॥ हे अम्ब दैवस्य क्रीडनकान् क्रीडासाधनभूतान् नरानस्मान्प्रति मासूयेथाः असूयां मा कार्षीः. कुतः? हि यस्मात् लोकः जनः ईशस्य ईश्वरेणेत्यर्थः, वशे क्रियते वशीक्रियतइत्यर्थः, यथा यथारुचि कार्यते व्यापार्यतेच॥

मु॥ तां वसुदेव आह—अम्बेति॥ अस्मान् प्रति मासूयेथाः असूयां मा कृथाः, कथंभूतान्? देवक्रीडनकान् देवस्य क्रीडासाधनभूतान्, तत्र हेतुः—नरानिति। क्रीडनकत्वमेवाह—ईशस्येति। लोके जीवसंघः ईशस्य वशे तिष्ठन् हि एव शुभाशुभं कर्म कुरुते, अथवा कार्यते ॥ २० ॥

वी॥ ईशवशत्वमेवाह—कंसप्रतापिता इति ॥ कंसेन प्रतापिताः क्लेशितास्सर्वे दिशंदिशं याताः गताः, हे स्वसः एतर्ह्येव संप्रत्येव दैवेन स्थानमासादिताः प्रापिताः ॥

मु॥ केन कार्यत इत्यपेक्षायां बलवतेत्याशयेनाह—कंसेति ॥ यद्वा ईशवशत्वमेवाह—हे स्वसः, एतर्ह्येव संप्रत्येव ॥ २१ ॥

वी॥ वसुदेवेति ॥ ते मत्स्यादयो नृपाः वसुदेवादिभिर्यदुभिरर्चिताः अच्युतसंदर्शनजपरमानन्देन सुखिताश्च आसन् बभूवुः ॥ २२ ॥

मु॥ वसुदेवादीनां बन्धुसत्कारमाह—वसुदेवेति॥ २२ ॥

वी॥ भीष्मादयः अन्ये च ये युधिष्ठिरमनुव्रतास्ते सर्वे सस्त्रीकाः श्रियो लक्ष्म्याः निकेतनमाश्रयं शौरेर्वपुः शरीरमवलोक्य विस्मिता बभूवुरिति संबन्धः, ससुता दुर्योधनादिसहिता गान्धारी ॥ २३ ॥ २६॥

मु॥ नृपानेवाह—भीष्म इति ॥ २३ ॥

मु ॥ २४ ॥

मु ॥ २५ ॥

मु ॥ ये राजसूये जिताः, ते अन्येच्च युधिष्ठिरम् अनुव्रताः अनुगच्छन्तः राजानः

---

१. कुरुते कार्यतेऽथवा. मु-भा-प्र. पा ॥

अथ ते कृष्णरामाभ्यां सम्यक्प्राप्तसमर्हणाः ।
प्रशशंसुर्मुदायुक्ता वृष्णीन्कृष्णपरिग्रहान् ॥ २७
अहोभोजपतेयूयंजन्मभाजोनृणामिह । यत्पश्यथासकृत्कृष्णंदुर्दर्शमपियोगिनाम् ॥
यद्विश्रुतिश्श्रुतिनुतेदमलंपुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूःकालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षतिनोऽखिलार्थान्

---

सस्त्रीकाः श्रीनिकेतं शौरेः वपुः वीक्ष्य विस्मिताः ॥ २६ ॥

वी ॥ अथेति॥ ते भीष्मादयः कृष्णरामाभ्यां कर्तृभ्यां सम्यग्यथा तथा प्राप्तं समर्हणं यैस्ते कृष्णेन परिगृह्यन्त इति तथा तान्वृष्णीन् प्रशशंसुः ॥ २७ ॥

मु ॥ प्रशंसने हेतुः—कृष्णस्य परिग्रहाः संबन्धिनः, तान् ॥ २७ ॥

वी॥ प्रशंसामेवाह—अहो इति त्रिभिः॥ भोजपतिः उग्रसेनः हे भोजपते इह लोके नृणां मध्ये यूयमेव जन्मभाजः सफलजन्मानः, कुतः? यद्यस्मात् योगिनामपि दुर्दर्शं कृष्णमसकृत्पश्यथ ॥ २८ ॥

मु ॥ प्रशंसां दर्शयति त्रिभिः—अहो भोजपते उग्रसेन इह नृणां मध्ये यूयं जन्मभाजः सफलजन्मानः, यत् यस्मात् योगिनामपि दुर्दर्शं कृष्णम् असकृत् पश्यथ ॥२८॥

वी ॥ किञ्च न केवलं तस्य दर्शनमेव, अपित्वत्यन्तदुर्लभं बहु युष्माकं संपन्नमित्याहुः—यद्विश्रुतिरिति द्वाभ्याम्॥ यदिति पृथक्पदमव्ययं यस्येत्यर्थकं, विश्रुतिपादावनेजनपदाभ्यां पृथक्संबध्यते, यद्वा पादेत्यस्य यस्येत्यादिः, यस्य भगवतो विश्रुतिः कीर्तिः श्रुतिभिर्वेदैः नुता, इदं कथयत्सर्वमाश्वपाकं जगत्पुनाति, यस्य पादावनेजनपयः पादक्षालनजलं तदात्मिका गङ्गा च जगत्पुनातीत्यर्थः, वचः काव्यपुराणादिरूपं शास्त्रं शासनात्मकवेदाश्च विश्वं पुनाति, किंच कालेन भर्जितो दग्धो भगो माहात्म्यं यस्यास्तथाविधाऽपि भूः पृथ्वी यस्याङ्घ्रिपद्मस्पर्शेनोत्था आविर्भूता शक्तिः माहात्म्यमैश्वर्यमिति यावत्, सा यस्याः तथाभूता नोऽस्माकमखिलार्थान सर्वानभीष्टानर्थान् अभिवर्षतीति, विश्रुतमिति पाठे"इमं मे गङ्गे यमुने सरस्वति" इत्यादिषु विविधश्रुतिषु श्रुतमिति पयोविशेषणम्, वचः गीतात्मकं शास्त्रं, 'यत्कीर्तनं जगदलं सकलम्'इति पाठे अलं पुनातीत्यन्वयः, 'जगदमीवमलं पुनाति'इति पाठे अमीवं पापं तदेव मलं यस्य तज्जग पुनातीत्यर्थः, गङ्गाजलं गीताशास्त्रं चेदं जगत्सकलं पुनातीत्यर्थः ॥ २९ ॥

मु ॥ न केवलं तस्य दर्शनमेव, अपितु अत्यन्तदुर्लभं बहु युष्माकं संपन्नमित्याहुः—यद्विश्रुतिरिति द्वाभ्याम्॥यदिति पृथक्पदम्,यस्येत्यर्थः,विश्रुतिः कीर्तिः,श्रुतिनुता इदं विश्वम् अलम् अत्यर्थं पुनाति, 'श्रुतमुतेदम्' इति पाठे "इमं मे गङ्गे यमुने सरस्वति" इत्यादिविविधश्रुतिषु श्रुतमिति पयोविशेषणम्, यस्य पादावनेजनपयः गङ्गा च यस्य वचः गीताशास्त्रं यस्य विश्रुतिः कीर्तिश्रवणं गङ्गाजलं गीताशास्त्रं च इदमलं पुनातीत्यन्वयः, अमीवमलमिति पाठे पापाख्यं मलमित्यर्थः, भूः कालभर्जितभगापि कालेन दग्धैश्वर्यापि यस्य अङ्घ्रिपद्मस्पर्शेन उत्था आविर्भूता शक्तिः यस्याः सा नः अस्माकम् अखिलान् अर्थान् पुरुषार्थान् अभितो वर्षति ॥ २९ ॥

[1]यद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ।
येषां गृहे निरयवर्त्मनि वर्ततां वस्स्वर्गापवर्गविरमस्स्वयमास विष्णुः ॥ ३०

श्री शुक उवाच—

नन्दस्तत्र यदून्प्राप्ताञ्ज्ञात्वाकृष्णपुरोगमान्। तत्रागमद्वृतोगोपै[2]रनोभिस्तद्दिदृक्षया ॥

तंदृष्ट्वावृष्णयोहृष्टास्तन्वःप्राणमिवोत्थिताः । परिषस्वजिरेगाढंचिरदर्शनकातराः ॥

वसुदेवःपरिष्वज्यसम्प्रीतःप्रेमविह्वलः । स्मरन्कंसकृतान्क्लेशान्पुत्रन्यासञ्चगोकुले॥

वी ॥ किञ्च—यद्दर्शनेति॥ यस्य दर्शनं च स्पर्शनं च अनुपथः अनुगतिश्च प्रजल्पो गोष्ठी च शय्या शयनम्, आसनं च अशनं भोजनं चेतीतरेतरयोगद्वन्द्वः, सयौनसपिण्डाभ्यां विवाहैकगोत्रत्वाभ्यां बन्धः संबन्धः दर्शनादिभिस्सहितस्सयौनसपिण्डबन्धः स येषां भवतामस्ति, किं च येषां गृहे श्रीकृष्णः स्वयमास आविर्बभूव, येषां वो निरयवर्त्मनि प्रवृत्तिमार्गे वर्ततां वर्तमानानामपि स्वर्गापवर्गविरमः भगवत्सङ्गात्स्वर्गापवर्गवैतृष्ण्यं चास अभूत् ॥ ३० ॥

मु ॥ तस्य दर्शनं च अनुपथम् अनुगमनं च प्रजल्पः सम्भाषणं च शय्या शयनं च आसनम् उपवेशनम् अशनं सहभोजनं सयौनं सहविवाहादिसम्बन्धः सपिण्डबन्धः एकगोत्रान्वयश्च येषां वः अस्ति, किञ्च येषां वो गृहे निरयवर्त्मनि प्रवृत्तिमार्गे वर्ततां वर्तमानानां स्वर्गापवर्गविरमः जन्ममृत्युनिवारकः विष्णुः स्वयम् आस अवतीर्णोऽभूदित्यर्थः, यद्वा तदिति पृथक्पदं सामान्यं निर्दिशति, विष्णुरित्यन्वयः, येषां वः निरयवर्त्मनि संसारहेतौ गृहे वर्तमानानामपि दर्शनादिभिः बन्धस्य बन्धः आस स विष्णुः स्वर्गापवर्गविरमश्च आस, अतो यूयं जन्मभाज इत्यर्थः ॥ ३० ॥

वी ॥ नन्दइति ॥ कृष्णपुरोगमान् कृष्णप्रभृतीन् ज्ञात्वा आकर्ण्य तद्दिदृक्षया कृष्णादिदर्शनेच्छया गोपैः परिवृतः अनोभिश्शकटैः गमनसाधनैः तत्र कृष्णसन्निधावाजगाम ॥ ३१ ॥

मु॥ अनस्थार्थैरिति—तत्रैव वासचिकीर्षया शकटेषु स्थापितैः अर्थैस्सह आगत इत्यर्थः ॥ ३१ ॥

वी ॥ तमिति ॥ तं नन्दं प्राणं मुख्यप्राणं प्रति तन्वः शरीराणीव तावद्विनिर्गते पुनरागते सति मुख्यप्राणे यथा शरीराण्युत्तिष्ठन्ते, तद्वदित्यर्थः, उत्थितास्सन्तः चिरं दर्शने निमित्ते कातराः लम्पटाः अतो गाढं यथातथा परिषस्वजिरे आलिङ्गितवन्तः ॥

मु ॥ ३२ ॥

वी ॥ वसुदेव इति ॥ परिष्वज्य नन्दमिति शेषः, प्रणयेन स्नेहातिशयेन विह्वलः परवशः गोकुले पुत्रयोः रामकृष्णयोः न्यासमवस्थापनं च स्मरन्नास्तेत्यध्याहारः ॥ ३३ ॥

मु॥ वसुदेवः तं परिष्वज्य प्रेमविह्वलो बभूवेति शेषः, गोकुलं पुत्रन्यासं च स्मरन् ॥ ३३ ॥

१. तद्दर्शन. मु-भा-प्र.पा ॥ २. अनस्थार्थैः. मु-भा-प्र. पा ॥

कृष्णरामौपरिष्वज्यपितरावभिवाद्यच । नकिञ्चनोचतुःप्रेम्णासाश्रुकण्ठौकुरूद्वह ॥
तावात्मोत्सङ्गमारोप्यबाहुभ्यांपरिरभ्यच।यशोदाचमहाभागासुतौविजहतुश्शुचः॥
रोहिणीदेवकीचाथपरिष्वज्यव्रजेश्वरीम्।स्मरन्त्यौतत्कृतांमैत्रींबाष्पकण्ठ्यौसमूचतुः
काविस्मरेतवांमैत्रीमनिवृत्तांव्रजेश्वरि । अवाप्याप्यैन्द्रमैश्वर्यंयस्यानेहप्रतिक्रिया ॥
एतावदृष्टपितरौ युवयोस्स्म पित्रोस्सम्प्रीणनाभ्युदयपोषणपालनानि ।
प्राप्योषतुर्भवतिपक्ष्महियद्वदक्ष्णोर्न्यस्तावकुतचभयौनसतां परोऽस्ति॥ ३८

वी ॥ कृष्णरामाविति प्रथमान्तम्,पिता च माता च पितरौ "पिता मात्रा" इत्येकशेषः, तौ यशोदानन्दौ अभिवाद्यालिङ्ग्य च हे कुरूद्वह प्रेम्णा साश्रुः कण्ठो ययोस्तौ किंचिदपि नोचतुः तूष्णीमासतुरित्यर्थः ॥ ३४ ॥

मु ॥ पितरौ यशोदानन्दौ, साश्रुकण्ठौ साश्रुः अश्रुभिः सहितः तैः रुद्धः कण्ठः ययौस्तौ ॥ ३४ ॥

वी ॥ ताविति ॥ यशोदाचेति चशब्दान्नन्दः तौ सुतौ रामकृष्णौ आत्मन उत्सङ्गमारोप्य तस्मिन्नुपवेश्येत्यर्थः, बाहुभ्यां परिरभ्यच शुचः पुत्रविश्लेषजशोकान् विजहतुः ॥ ३५ ॥

मु ॥ नन्दो यशोदाच तौ सुतौ परिरभ्य शुचः चिरविरहजशोकान् विजहतुः तत्यजतुः, यद्वा शुचः अश्रूणि विजहतुः मुमुचतुरित्यर्थः ॥ ३५ ॥

वी ॥ देवकीति ॥ व्रजेश्वरीं यशोदां परिष्वज्य तत्कृतां व्रजेश्वरीकृतां मैत्रीं स्मरन्त्यौ बाष्पमानन्दाश्रु कण्ठे ययोस्ते समूचतुः ॥ ३६ ॥

मु ॥ व्रजेश्वरीं यशोदाम् ॥ ३६ ॥

वी ॥ उक्तिमेवाह—केति ॥ हे व्रजेश्वरि वां युवयोः मैत्रीम् अनिवृत्तां यावद्देहमनुवृत्तामित्यर्थः, का वा स्त्री विस्मरेत ? न कापीत्यर्थः, अत्र हेतुत्वेन तां विशिनष्टि—ऐन्द्रमैश्वर्यं दत्वाऽपि यस्या मैत्र्याः प्रतिक्रिया प्रत्युपकृतिः इह लोके नास्ति ॥ ३७ ॥

मु॥ अनिवृत्तां निवृत्तिकारणे सत्यपि अनुवर्तमानाम् ऐन्द्रमैश्वर्यमवाप्यापि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३७ ॥

वी॥मैत्रीं प्रपञ्चयतः—एताविति॥न दृष्टौ पितरौ याभ्यां तौ हे भवति युवयोः पित्रोः न्यस्तावेतौ संप्रीणनादीनि प्राप्य अकुत्रचभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः वासं चक्रतुः, कथम्भूतयोः ? अक्ष्णोः नेत्रयोः पक्ष्म यद्वत्, तथा रक्षकयोर्युवयोरिति संबन्धः, रक्षकयोरित्यस्याध्याहारः, संप्रीणनमपेक्षितप्रदानेन तर्पणम्, अभ्युदयो महोत्सवः, युक्तं चैतदित्यूचतुः— न सतां परोऽस्तीति । 'परः स्वः' इति पाठे परः स्वक इति च न वैषम्यमस्तीत्यर्थः ॥ ३८ ॥

मु ॥ तत्कृतां मैत्रीमाहतुः—एताविति ॥ न दृष्टौ पितरौ याभ्यां तौ हे भवति युवयोः पित्रोः न्यस्तावेतौ संप्रीणनानि प्राप्य अकुत्रचभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः, कथंभूतयोः ? अक्ष्णोः नेत्रयोः रक्षकं पक्ष्म यद्वत् , तथा रक्षकयोः, युक्तं युवयोरेतत्, यतः सतां परः स्वः इति नास्ति वैषम्यम्, संप्रीणनं लालनम् अभ्युदयः मङ्ग-

१. परः स्वः. मु-भा-प्र. पा ॥

श्रीशुकउवाच—

गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्त्यः ।
दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ३९
भगवांस्तास्तथाभूताविविक्तउपसङ्गतः।आश्लिष्यानामयंपृष्ट्वाप्रहसन्निदमब्रवीत्॥
अपिस्मरथनस्सख्यस्स्वानामर्थचिकीर्षया। गतांश्चिरायिताञ्छत्रुपक्षक्षपणचेतसः॥
अप्यवध्यायथास्मान्स्विदकृतज्ञविशङ्कया।नूनंभूतानिभगवान्युनक्तिवियुनक्तिच॥
वायुर्यथा घनानीकं तृणतूलरजांसिच ।

---

लकर्म पोषणं वर्धनं पालनं च तानि ॥ ३८ ॥

वी॥ गोप्यश्चेति॥ अभीष्टं प्रियतमं कृष्णमुपलभ्य दृष्ट्वा यस्य श्रीकृष्णस्य प्रेक्षणे प्रवृत्तासु दृशिषु नेत्रेषु व्यवधायकपक्ष्मकृतं विधातारं शपन्त्यः दृग्भिर्नेत्रद्वारैः हृदीकृतं हृदये प्रवेशितमाश्लिष्य नित्ययुजां नित्यं मनो युञ्जानानां योगिनामपि दुरापं दुर्लभं तद्भावं कात्स्न्र्येन तद्विग्रहावगाहनात्मकमभिप्रायं प्रापुः ॥ ३९ ॥

मु॥ अभीष्टत्वे हेतुः—यस्य कृष्णस्य प्रेक्षणे दृशिषु दृष्टिषु पक्ष्मकृतं व्यवधायकपक्ष्मस्रष्टारं ब्रह्माणं शपन्ति, दृग्भिः नेत्रद्वारैः हृदीकृतं हृदये प्रवेशितं परिरभ्य नित्ययुजां नित्यं युञ्जानानां योगिनामपि दुरापं दुर्लभं तस्मिन् भावं भावनां चिन्तनाम् अवापुरिति ॥ ३९ ॥

वी॥ भगवानिति॥ तथाभूताः आत्मभावमापन्नास्ता गोपीः विविक्ते एकान्ते उपसङ्गतः अनामयमारोग्यं पृष्ट्वा इदं वक्ष्यमाणम् अब्रवीत् ॥ ४० ॥

मु॥ तथाभूताः प्रेमविवशीभूताः ताः आश्लिष्य प्रहसन् इदम् अब्रवीत् ॥ ४० ॥

वी॥ तदेवाह—अपीति॥ हे सख्यः नोऽस्मान् अपि स्मरथ किमित्यर्थः, क्षणसौहृदान्युष्मान्नानुस्मराम इत्यत आत्मनो विशिनष्टि—स्वानां साधूनामर्थं प्रयोजनं कर्तुमिच्छया चिरायितान्विलम्बितान्, तत्र हेतुः—श पक्षक्षपणे चेतो येषां तानस्मान्॥

मु॥ तद्दर्शयति—अपीति षड्भिः॥ हे सख्यः स्वानां बन्धूनाम् अर्थचिकीर्षया अर्थः विरोधिसंहरणं तस्य चिकीर्षया गतान् चिरायितान् अतीतचिरकालांश्च नः अस्मान् स्मरथापि, चिरायितत्वे हेतुः—शत्रुपक्षस्य क्षपणे चेतो येषां तान् ॥ ४१ ॥

वी॥ अकृतज्ञविशङ्कया अकृतज्ञः कृतज्ञादन्यः, तद्विशङ्कया कृतघ्ना एवैत इति बुद्ध्येत्यर्थः,अवध्यायथापिस्वित् अवजानीथ किमित्यर्थः,अवपूर्वाद्ध्यायतेर्लोणमध्यमबहुवचनम्, न शङ्कामात्रं,निश्चितमेतत् परित्यज्य गतत्वादित्यत आह—नूनमिति। भूतानीति द्वितीयान्तम् ॥ ४२ ॥

मु॥ प्रश्नान्तरम्—अपीति ॥ अपिस्वित् आहोस्वित् अकृतज्ञा इति विशङ्कया अवध्यायथ,अवध्यानम् अप्रीत्या चिन्तनम्,सत्यं तथा शङ्कामहे आयास्यामीति गत्वा पुनरनागमनादित्यत्राह—नूनमिति ॥ ४२ ॥

वी॥ एतत्सदृष्टान्तमाह—वायुरिति ॥ घनानीकं मेघसमुदायं तृणादीनि च वायुः

संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ४३

मयिभक्तिर्हिभूतानाममृतत्वायकल्पते।दिष्ट्यायदासीन्मत्स्नेहोभवतीनांमदापनः॥

अहंहिसर्वभूतानामादिरन्तोऽन्तरंबहिः।भौतिकानांयथाखंवार्भूर्वायुर्ज्योतिरङ्गनाः॥

[१]एवंह्येतानिभूतानिभूतेष्वात्माऽऽत्मनाततः।उभयंमय्यथपरेपश्यताभातमक्षरे॥ ४६

यथा युनक्ति, वियुनक्ति वियोजयति च, तद्वत् भूतकृत् भूतस्रष्टा भगवान् कचित् भूतानि संयोज्य पुनः आक्षिपते वियोजयति च ॥ ४३ ॥

मु ॥ तत्र दृष्टान्तः—वायुरिति ॥ आक्षिपते आक्षिपति पृथक्करोतीत्यर्थः, ईश्वराधीनेष्वस्मासु न दोष उद्भावनीय इत्यर्थः ॥ ४३ ॥

वी ॥ किञ्च अतिभद्रमिदं यद्भवतीनां मद्वियोगेन मत्प्रेमातिशयोऽभूदित्याह—मयीति ॥ मयि भक्तिमात्रमेव तावदमृतत्वाय मुक्तये कल्पते, यत्तु भवतीनां मयि स्नेह आसीत्, तद्दिष्ट्या अतिभद्रं, कुतः? मदापनः मत्प्रापणः ॥ ४४ ॥

मु ॥ ननु आयुष्मतो नेश्वराधीनत्वं तवैवेश्वरत्वादित्याशङ्क्य भवतीनां भक्त्यतिशयजननाय विलम्बो मया कृत इत्याह—मयीति॥ यद्वा—अतिभद्रमिदं यद्भवतीनां मद्वियोगेन प्रेमातिशयो जात इत्याह—केवलं मयि भक्तिमात्रम् अमृतत्वाय कल्पते, भवतीनां मयि स्नेह आसीदिति यत्, तत् दिष्ट्या भद्रम्, तत्र हेतुः—मदापनः मत्प्रापकत्वादित्यर्थः,एवं वा—हि यस्मात् मयि भक्तिः भूतानाम् अमृतत्वाय कल्पते,तस्मात् भवतीनां मदापनः मत्प्रापणः स्नेह आसीदिति यत्, तत् दिष्ट्या ॥ ४४ ॥

वी॥ कीदृशस्त्वं? यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायाम् आत्मनो याथात्म्यमाह—अहमिति ॥ आदिः सृष्टिकारणम् अन्तः लयकारणम् अन्तरम् अन्तरात्मा, बहिश्च व्याप्य स्थित इत्यर्थः, अन्तर्बहिश्च सद्भावे दृष्टान्तमाह—भौतिकानामिति।हे अङ्गनाः खमाकाशः वाः जलं भूः पृथ्वी खादीनि यथा भौतिकानां भूतपरिणामात्मकानां देवमनुष्यादिशरीराणामन्तर्बहिश्च वर्तन्ते ॥ ४५ ॥

मु ॥ प्राप्यस्वरूपं विशदयति—अहं हीति ॥ हे अङ्गनाः सर्वभूतानामुत्पत्त्यादिकारणमहमेवेत्यर्थः, उत्पत्त्यादिकारणत्वे अन्तर्बहिस्सद्भावे च दृष्टान्त उच्यते—यथा खमित्यादिना । यथा भौतिकानां भूतशरीराणां खादिभूतपञ्चकमुत्पत्त्यादिकारणं, तद्वदिति॥

वी ॥ एवं दृष्टान्तमुखेन शिक्षितमर्थं दार्ष्टान्तिके सङ्गमयति—एवमिति ॥ एतानि आकाशादीनि तत्कार्यरूपाणि देवादिशरीरात्मकानि च भूतानि भूतेष्वात्मा तेषु भूतेषु स्थित आत्मा जीवात्मा च आत्मना मया अन्तर्बहिश्च व्याप्यन्त इति शेषः, ततस्तस्मादुभयं चेतनमचेतनं च वस्तुजातमक्षरे अन्तर्बहिश्च व्याप्य वर्तमानेऽपि व्याप्यगतविकाररहिते मय्याभातं प्रमितं पश्यत, मयीत्यनेनधारकत्वमुक्तम्, आत्मनेत्यनेनान्तःप्रविश्यप्रशासितृत्वम्, अन्तःप्रविश्यनियमनं ह्यात्मशब्दप्रवृत्तिनिमित्तम् ॥ ४६ ॥

मु ॥ एवंहेतूनि भूतानि देवादिशरीररूपकार्याणि एवंहेतुमन्तीत्यर्थः, भूतेषु आत्मा जीवात्मा आत्मना मत्कृतशरीरसंसृष्टाकृतिरित्यर्थः, उभयं चेतनमचेतनं च वस्तुजातम् अक्षरे क्षरणरहिते परे चिदचिद्विलक्षणे मयि आभातं प्रकाशितं पश्यत॥

१. एवंहेतूनि. मु-भा-प्र. पा ॥

श्रीशुक उवाच—

अध्यात्मशिक्षयागोप्यएवंकृष्णेनशिक्षिताः।तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन्

आहुश्च ते नलिननाभ पदारविन्दं योगीश्वरैर्हृदिविचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं गेहंजुषामपि मनस्युदियात्सदानः ॥ ४८

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे वृष्णिगोपसङ्गो नाम
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

श्रीशुक उवाच—

अथानुगृह्यभगवान्गोपीनांसङ्गतिंगुरुः।युधिष्ठिरमथापृच्छत्सर्वांश्चसुहृदोऽव्ययम्॥ १

---

वी ॥ अध्यात्मशिक्षयेति—आत्मनि अध्यात्मं विभक्त्यर्थेऽव्ययीभावः, स्वात्मपरमात्मयाथात्म्यविषयज्ञानमित्यर्थः, तस्य शिक्षया सम्यगुपदेशेन साधनेन इत्थं कृष्णेन कर्त्रा शिक्षिताः गोप्यः तस्य भगवदुपदिष्टात्मयाथात्म्यस्यानुस्मरणेन मननपूर्वकनिदिध्यासनेन ध्वस्तः जीवकोशः कोशवदावारकं कर्ममूलमज्ञानं यासां ताः तं भगवन्तमध्यगन् प्रापुः, क्रमेण मुक्ता बभूवुरित्यर्थः ॥ ४७ ॥

मु ॥ अध्यात्मशिक्षया आत्मतत्त्वोपदेशेन शिक्षिताः बोधिताः तस्य अनुस्मरणेन ध्वस्तः जीवस्य कोशः स्वरूपतिरोधायककर्म यासां ताः तं कृष्णम् अध्यगन् अयमेवास्माकं प्राप्य इति जानन्ति स्मेत्यर्थः ॥ ४७ ॥

वी ॥ वी ॥ तदा तदुपदिष्टाध्यात्मानुस्मरणविरोधिमोहोपशमनाय मनसस्तदङ्घ्रिप्रावण्यं प्रार्थयमानाः प्रह्वाश्चेत्याह—आहुश्चेति ॥ उक्तिमेवाह—तदित्यादिना । हे नलिननाभ अगाधः अपारो बोधो ज्ञानं येषां तैः योगीश्वरैः हृदि विचिन्त्यं केवलं चिन्त्यमेव न तु दृश्यं संसारकूपे पतितानाम् उत्तरणायावलम्बम् आलम्बनभूतं ते तव पदाम्बुजं देहधारिणां नोऽस्माकं मनसि सदा उदियात् आविर्भवेत् यथावद्विषयीभवेदित्यर्थः ॥

मु ॥ एवं यथावत् ज्ञातभगवत्स्वरूपाः प्रार्थयन्ते—आहुश्चेति॥ हे नलिननाभ पद्मनाभ गेहंजुषामपि गृहस्थितानामपि नः मनसि ते पादारविन्दं सदा उदियात् प्रादुर्भूयादिति ॥ ४८ ॥

इति श्रीभावबतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

वी ॥ अथेति॥ गुरुस्तत्त्वोपदेष्टा भगवान्गोपीनां सङ्गतिं स्वपादारविन्दासक्तिं तथास्त्वित्यनुगृह्य अथ युधिष्ठिरं सर्वान्सुहृदश्च अव्ययमारोग्यमपृच्छत् ॥ १ ॥

मु ॥ अव्ययं कुशलम् ॥ १ ॥

तएवंलोकनाथेनपरिपृष्टास्सुसत्कृताः। प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः॥ २

कुतोऽशिवं त्वच्चरणाम्बुजासवं [1]महात्मनां सम्मुखनिर्वृतं क्वचित्।
पिबन्ति ये कर्णपुटैरलं प्रभो देहम्भृतां देहकृदस्मृतिच्छिदम्॥ ३

हित्वाऽऽत्मधामविधुतात्मकृतत्र्यवस्थमानन्दसंप्लवमखण्डमकुण्ठबोधम्।
कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नतास्स्मः॥ ४

---

वी॥ तइति॥ ते युधिष्ठिरादयः तस्य भगवतः पादयोरीक्षया दर्शनेन हतं निरस्तम् अंहः पापममङ्गलं वा येषां ते प्रत्यूचुः॥ २॥

मु॥ तस्य पादेक्षा पादसंदर्शनं, तया हतम् अंहो येषां ते॥ २॥

वी॥ उक्तिमेवाह—कुत इति द्वाभ्याम्॥ त्वच्चरणाम्बुजासवं त्वत्पदाब्जकथामृतमित्यर्थः, आसववन्मधुरं विषयविस्मापनं च ये कर्णपुटैः श्रोत्रचषकैः पिबन्ति, त्वच्चरणाम्बुजं ये ध्यायन्तीत्यर्थः, तेषामशिवममङ्गलं कुतः? नास्त्येवेत्यर्थः, आसवत्वरूपणात्पिबन्तीत्युक्तम्. प्रसिद्धासवादौत्कृष्ट्यं वक्तुं विशिंषन्ति—महात्मनां सतः परिशुद्धात् मुखमेव पद्मं तस्मान्निस्सृतं निर्गलितं देहधारिणां देहकृच्चासावस्मृतिः देहकृदस्मृतिः देहसंपादकमनाद्यज्ञानं तां छिनत्तीति तथा तं प्रसिद्धामृतं तु नैवंविधमिति भावः॥३॥

मु॥ महन्महनस्तः महतां मनस्सकाशात् मुखतो मुखद्वारतो निस्सृतं त्वच्चरणाम्बुजयोः आसवं मकरन्दं, कीदृशं? देहंभृतां शरीरिणां देहकृतः देहहेतोः अस्मृतेः अज्ञानस्य च्छिदं विनाशकं, यद्वा—दहकृत् परमात्मा, तद्विषयाज्ञानच्छिदमित्यर्थः, कर्णपुटैः ये पिबन्ति, क्वचित् कदाचिदपि तेषाम् अशिवं कुत इति, क्वचित् कदाचिदपि अलम् अत्यर्थं ये पिबन्ति, तेषाम् अशिवं कुतः? अयं भावः—क्वचित् चरितामृतं श्रोतृणामपि नाशुभं, किमुत भगवन्तं पश्यतामस्माकम्—इति॥ ३॥

वी॥ तमिति यस्य चरणाम्बुजामृतमेवंविधं तं त्वां नताः स्मः प्रणमामः, कथम्भूतं? परमहंसानां गतिं प्राप्यं मुक्त्युपायभूतश्च तदुपयुक्तं सौशील्यं वात्सल्यं चाहुः—कालेनोपसृष्टो विप्लुतो निगमो वेदः तस्यावने निमित्ते रक्षणार्थे वैदिकधर्ममर्यादापालनार्थमित्यर्थः, आत्ता परिगृहीता योगमायया स्वाश्चर्यशक्तियोगेन आकृतिर्विग्रहो यस्य तं योगमायेत्यनेनाकृतेरकर्मायत्तत्वमुक्तम्, आत्मेत्यनेन स्वेच्छयैवोपात्तत्वम्, यद्यपि संकल्पमात्रेणापि निगमविरोधिदुष्कृद्विनाशसंभवः, तथाप्याश्रितवात्सल्यात्सौशील्याच्चात्तयोगमायाकृतिरिति भावः, आश्रितकार्यापादकज्ञानगुणयोगमाहुः—अखण्डः अविच्छिन्नः अप्रतिहतः बोधः अनिष्टपरिहारेष्टप्रापणाद्युपयुक्तज्ञानं यस्य तं, प्राप्यत्वोपयुक्तं गुणमाहुः—आनन्दसंप्लवम् आनन्दप्रवाहरूपं, प्राप्यवैलक्षण्यमाहु—तिस्रः अवस्थाः उत्पत्तिस्थितिसंहृतयः आत्मधाम्ना स्वतेजसा विधुता निर्धूताः आत्मकृताः स्वकृताः तिस्रः अवस्थाः यस्य तम् अन्येषां सृष्ट्यादिकृत्त्वयं सृष्टाद्यविषयश्चेत्यर्थः॥ ४॥

मु॥ एवं कुशलप्रश्नमभिनन्द्य नमन्ति—हित्वेति॥ आत्मधाम्ना स्वतेजसा विधुता निर्धूता आत्मना स्वेन कृताः तिस्रोऽवस्था उत्पत्तिस्थितिलया यस्य तम्, अन्येषां सृष्ट्यादिहेतुत्वं स्वयं सृष्ट्याद्यविषयमित्यर्थः, आनन्दसंप्लवं निरतिशयानन्दसंयुक्तम् अखण्डं

---

[1]. महन्मनस्तो मुखनिस्सृतं. मु-भा-प्र. पा॥

श्री शुक उवाच—

इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः।
समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताश्शृणु वर्णयामहे ॥ ५

द्रौपद्युवाच—

हेवैदर्भ्यच्युतेभद्रेहेजाम्बवतिकोसले।हेसत्यभामेकालिन्दिशैब्येरोहिणिलक्ष्मणे ॥ ६
हेकृष्णपत्न्यएतन्नोब्रूतवोभगवान्स्वयम्। उपयेमेयथालोकमनुकुर्वन्स्वमायया ॥ ७

रुक्मिण्युवाच—

चैद्यायमाऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः।

---

परिपूर्णम् अकुण्ठः सर्वविषयः बोधो यस्य तं सर्वज्ञमित्यर्थः,कालोपसृष्टनिगमावने कालोपप्लुतवेदरक्षणार्थम् आत्तयोगमायाकृतिं स्वीकृतस्वाश्चर्ययोगकल्पितविग्रहं परमहंसानां गतिं त्वां हि त्वामेव नताः स्मः, यद्वा—आत्मनो धाम स्थानं क्षीरार्णवं हित्वा उत्सृज्य कालोपसृष्टनिगमावने आत्तयोगमायाकृतिं, तदुक्तम् "एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः। नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम्" इति, विधुतेत्यादिविशेषणविशिष्टत्वादिति प्रकरणाद्गम्यते ॥ ४ ॥

वी ॥ इतीति ॥ उत्तमश्लोकोत्तमं श्रीकृष्णमित्थं जनेष्वभिष्टुवत्सु परितः स्तोत्रं कुर्वत्सु सत्सु अन्धकानां कौरवाणां च स्त्रियः समेत्य सङ्घीभूय मिथो गोविन्दस्य कथाः अगृणन्कथयामासुः, तास्त्रिषु लोकेषु गीताः कथाः वर्णयामहे शृण्विति शुकोक्तिः, इत्थं प्रतिज्ञाय तावत्ताः प्रष्टुं श्रीकृष्णपत्नीः प्रति द्रौपदीप्रश्नमाह—वैदर्भीत्यादिद्वाभ्याम् ॥ अच्युते इति वैदर्भीविशेषणम्, नित्यानपायिनीत्यर्थः, हे कौसल्ये, सत्ये, शैब्ये मित्रविन्दे, रोहिणी नाम काचित्पट्टमहिषीतुल्या, अन्याः कृष्णपत्नीर्युगपत्सम्बोधयति हे कृष्णपत्न्य इति। एतन्नोऽस्मभ्यं ब्रूत, किं ? यदयं भगवान् कृष्णः स्वमायया स्वसङ्कल्पेन लोकमनुकुर्वन् यथा भवतीरुपयेमे उदूढवानित्येतत् ॥ ५ ॥ ७ ॥

मु ॥ इतीति शुकोक्तिः, अन्धकानां यादवानां स्त्रियः त्रिभिर्लोकैः गीताः, त्रिषु लोकेषु गीता वा ॥ ५ ॥

मु ॥ कोसले सत्ये, शैब्ये मित्रविन्दे, रोहिणी नाम काचित् पट्टमहिषीतुल्या ॥ ६॥

मु ॥ हे अन्याः कृष्णपत्न्यः स्वमायया लोकम् अनुकुर्वन् वो युष्मान् यथा उपयेमे, एतत् नः ब्रूत ॥ ७ ॥

वी ॥ एवमापृष्टासु तावद्रुक्मिणी प्राह—चैद्यायेति ॥ मां चैद्यायार्पयितुं दापयितुं राजसु चैद्यपक्षीयेषूद्यतकार्मुकेषूद्धृतचापेषु सत्सु अजेया भटाः तेषां शेखरिता मकुटवत्कृता अङ्घ्रिरेणवो येन सः तेषां मूर्ध्नि पदं निदधादित्यर्थः, स भगवान् मृगेन्द्रः सिंहः अजानामवीनाञ्च यूथात्स्वभागमिव मां निन्ये आनीतवान्, अत्रोद्यतकार्मुकराजन्ययूथस्याजावियूथतुल्यताभिप्रेता, तस्य भगवतः श्रीनिकेतचरणः श्रीमत्पादारविन्दं

निन्ये मृगेन्द्र इव भागमजावियूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८

सत्यभामोवाच—

यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार ।
जित्वर्क्षराजमथ रत्नमदात्स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९

जाम्बवत्युवाच—

अज्ञाय देहकृदयं निजनाथदैवं सीतापतिं त्रिनवहान्यमुनाऽभ्ययुध्यत् ।
ज्ञात्वा [१]परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १०

ममार्चनाय परिचर्यार्थमस्तु, तच्छ्रीनिकेतचरणं सदाऽहं परिचरेयमिति प्रार्थना ॥ ८ ॥

मु ॥ माम् अर्पयितुं संपादयितुं राजसु जरासन्धादिषु उद्यतकार्मुकेषु सत्सु अजेया ये भटाः, तेषां शेखरिताः मकुटवत्कृताः अङ्घ्रिरेणवो येन, तेषां मूर्ध्नि पदमर्पयदित्यर्थः, अजानाम् अवीनां च यूथात् यूथमध्यात् मृगेन्द्रः भागं स्वोचितं मांसमिव तेषां मध्यात् मां निन्ये यः, तस्य श्रीनिकेतस्य चरणो मम अर्चनाय अस्तु, पाठान्तरे-अजेयबलिशेखरिताङ्घ्रिरेणुः अजेयबलवत्पार्थिवशिरोधृतपादरेणुः, श्रीनिकेतयोः लक्ष्म्याश्रयभूतयोः चरणाब्जयोः समर्चनाय परिचर्यार्थं निन्ये इत्यन्वयः ॥ ८ ॥

वी ॥ अथ सत्यभामोक्तिमाह—य इति ॥ सनाभेः भ्रातुः प्रसेनस्य वधेन सिंहकर्तृकेण तप्तं हृदयं यस्य तेन ततेनास्मत्पित्रा लिप्तमापादितमभिशापं दुर्यशोऽपमार्ष्टुमपनेतुमृक्षराजं जाम्बवन्तं जित्वा रत्नं स्यमन्तकमुपाजहार आनीतवान्, अथानन्तरं मत्पित्रे रत्नमदाद्ददौ, तेन स्वापराधेन भीतस्स मे पिता प्रभवे श्रीकृष्णाय दत्तामक्रूरादिभ्यः प्रतिश्रुतामपि माम्, अपिशब्दाद्रत्नमपि अदिशत् ददावित्यर्थः ॥ ९ ॥

मु ॥ कृष्णः सनाभेः भ्रातुः वधेन सिंहकृतेन तप्तं हृदयं यस्य तेन मे ततेन तातेन पित्रा लिप्तम् अभिशापं दुर्यशः अपमार्ष्टुं परिहर्तुम् ऋक्षराजं जाम्बवन्तं जित्वा रत्नं स्यमन्तकम् उपाजहार आनीतवान्,अथ अनन्तरं मत्पित्रे रत्नम् अदात्, तेन स्वापराधेन भीतः प्रभवे कृष्णाय माम् अदिशत अदिशत् ददौ, दत्ताम् अक्रूरादिभ्यः प्रतिश्रुतामित्यर्थः ॥ ९ ॥

वी ॥ अथ जाम्बवती जगौ—अज्ञायेति ॥ देहकृन्मम पिता जाम्बवान् अमुं कृष्णं निजनाथं स्वस्वामिनं स्वकुलदैवतं च सीतापतिमज्ञाय अज्ञात्वा ल्यबार्षः, अमुना श्रीकृष्णेन सह त्रिनवहानि सप्तविंशत्यहानि, अत्यन्तसंयोगे द्वितीया, छन्दोभङ्गाभावाय-ह्रस्व आर्षः, शकन्ध्वादित्वात्पररूपं वा, अयुध्यत्, ततः परीक्षितः परीक्षास्य सञ्जातेति तथा स मम पिता ज्ञात्वा सीतापतिरेवासावधुना यदुष्ववतीर्ण इति ज्ञात्वेत्यर्थः, पादौ प्रगृह्य पादग्रहणपूर्वकं प्रसाद्य मणिना सह मामर्हणमुपायनमुपाहरत समर्पितवान्, अहममुष्य भगवतो दासी यावदात्मभाविदास्यं कुर्यामिति प्रार्थना ॥ १० ॥

मु ॥ देहकृत् मे पिता अमुं कृष्णं निजनाथं स्वामिनं देवम् ईश्वरं सीतापतिम् अज्ञाय अविज्ञाय त्रिनवहानि सप्तविंशतिं दिनानि अमुना अभ्ययुध्यत्, परीक्षितं संजाता

१. परीक्षितमुपा. मु-भा-प्र. पा॥

कालिन्द्युवाच—

तपश्चरन्तीमाज्ञायस्वपादस्पर्शकाम्यया।सख्योपेत्याग्रहीत्पाणिं[१]योऽहंतद्गृहमार्जनी॥ ११

भद्रोवाच—

यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः।
भ्रातॄंश्च मेऽपकुरुतस्स्वपुरं श्रियौकास्तस्यास्तु मेऽनुभवमङ्घ्र्यवनेजनीत्वम्॥ १२

सत्योवाच—

सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान्पित्रा कृतान्क्षितिपवीर्यपरीक्षणाय।
तान्वीरदुर्मदहनस्तरसा निगृह्य क्रीडन्बबन्ध च यथा शिशवोऽजतोकान्॥ १३

---

परीक्षा यस्य तं साक्षात् सीतापतिरेवासाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह माम् अर्हणम् उपाहरत् अर्हणतया समर्पितवान्, अहो तर्हि त्वम् अतः श्रेष्ठासि,नेत्यत्राह— अमुष्याहं दासीति॥ १०॥

वी॥ अथ कालिन्दी जगौ—तपश्चरन्तीमिति॥ स्वस्य भगवतः पादस्पर्शकाम्यया पादसंवाहनादिपरिचर्याचिकीर्षया तपः कुर्वतीं मां ज्ञात्वा सख्या अर्जुनेन सहागत्य मम पाणिमग्रहीत्, इत्थं गृहीताऽहं तस्य भगवतो गृहमार्जनी गृहान् मार्जयतीति तथाभूता भवेयम्॥ ११॥

मु॥ सख्या अर्जुनेन या अहं तद्गृहमार्जनकर्त्री, तस्या मे पाणिमिति संबन्धः॥११॥

वी॥ अथ भद्रागीतिमाह—योमामिति॥ शुनां यूथगतं स्वबलिं द्विपारिः सिंह इव नृपानपकुर्वतो मे भ्रातॄंश्च विजित्य यः श्रियौकाः श्रीनिवासः मां पुरं द्वारकां निन्ये आनीतवान्, तस्य श्रियौकसः अङ्घ्र्यवनेजनीत्वं चरणक्षालनकर्तृत्वं ममानुभवं प्रतिजन्म अस्तु स्यात्॥ १२॥

मु॥ शुनां यूथगम् आत्मबलिं द्विपारिः सिंह इव, अपकुरुतः अपकारं कुर्वतः मे भ्रातॄंश्च विजित्य श्रियौकः लक्ष्मीनिवासः स्वपुरं निन्ये. मे तस्य अङ्घ्र्योः अवनेजनीत्वं प्रक्षालनकर्तृत्वत् अनुभवं प्रतिजन्म अस्तु॥ १२॥

वी॥ अथ नाग्नजिती गायति—सप्तेति॥ क्षितिपानां वीर्यस्य परीक्षणाय मम पित्रा नग्नजिता कृतान् सम्पादितान् बलं वीर्यं प्रभावश्च सुतीक्ष्णशृङ्गाणि च तान्यतिशयितानि येषां तान्वीराणां दुष्टं मदं घ्नन्तीति तथा तान् प्रसिद्धान् सप्त उक्षणः वृषभान् यथा शिशवो बालाः अजतोकान् अजापत्यानि तथा तरसा आशु निगृह्य दमयित्वा क्रीडन् अनायासेनैव बबन्ध॥ १३॥

मु॥ सप्त उक्षणः वृषभान् बलं च वीर्यं प्रभावश्च तीक्ष्णशृङ्गाणि च अतिशयितानि येषां तान् मे पित्रा कृतान् संपादितान् बलाधिके मां दातुं क्षितिपानां वीर्यस्य बलस्य परीक्षणाय वीराणां दुर्मदं घ्नन्ति ये तान् तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडन् अनायासेनैव बबन्ध, अजतोकान् अजापत्यानि॥ १३॥

---

१. याहं. मु-भा-प्र. पा॥

य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ।
[1]युधि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४

मित्रविन्दोवाच—

पितामेमातुलेयायस्वयमाहूयदत्तवान्।कृष्णेकृष्णायतच्चित्तामक्षौहिण्यासखीजनैः॥
अस्यमेपादसंस्पर्शोभवेज्जन्मनिजन्मनि।कर्मभिर्भ्राम्यमाणायायेनतच्छ्रेयआत्मनः॥

लक्ष्मणोवाच—

ममापि राज्ञ्यच्युतजन्मकर्म श्रुत्वा मुहुर्नारदगीतमास ह ।
चित्तं मुकुन्दे किल पद्महस्तया वृतस्सुसंमृश्य विहाय लोकपान् ॥ १७
ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ।

---

वी ॥ यो भगवान् युद्धे राजन्यान्निर्जित्य वीर्यमेव शुल्कं देयं द्रव्यं यस्यास्तां दासीभिस्सह चतुरङ्गिणीं गजाश्वादिसेनायुक्तां मां निन्ये, तस्य भगवतो दास्यं ममास्तु॥

मु ॥ वीर्यमेव शुल्कं देयं धनं यस्यास्तां चतुरङ्गिणीं चतुरङ्गसेनायुक्ताम् इत्थम् एवं पथि राजन्यांश्च निर्जित्य यः पुरं निन्ये, तस्य दास्यं मे अस्तु ॥ १४ ॥

वी ॥ अथ मित्रविन्दागानमाह—पीतेति॥ हे कृष्णे द्रौपदि मे इति पूर्वोत्तरान्वयि, मम पिता स्वयमाहूय मम मातुलसुताय श्रीकृष्णाय तस्मिन्न श्रीकृष्ण एव चित्तं यस्यास्तां मामक्षौहिण्या सखीजनैस्सह दत्तवान् ॥ १५ ॥

वी ॥ अस्य श्रीकृष्णस्य पादसंस्पर्शः पादसंवाहनादिपरिचर्या मम प्रतिजन्म भवेदस्तु, इत्थं प्रार्थनायां हेतुत्वेन पादसंस्पर्शं विशिनष्टि — येन तत्पादस्पर्शेन आत्मनो मम कर्मभिः पुण्यपापात्मकैः भ्राम्यमाणायाः संसरन्त्याः श्रेयो निश्श्रेयसं भवेत् ॥१६॥

मु ॥ कृष्णे हे द्रौपदि तस्मिन्नेव चित्तं यस्यास्ताम् अक्षौहिण्या सेनया सखीजनैश्च सह दत्तवान् यस्मै दत्तवान्, अस्य पादसंस्पर्शो जन्मनिजन्मनि मे भवेत्, कर्मभिः भ्राम्यमाणाया इतस्ततो नीयमानायाः, येन पादसंस्पर्शेन आत्मनो मे तत् श्रुतिप्रसिद्धं श्रेयः परमपुरुषार्थः भवेदिति शेषः, यद्वा आत्मनः चेतनस्येत्यर्थः ॥ १५ ॥ १६ ॥

वी ॥ अथ लक्ष्मणागीतिं प्रपञ्चयति—ममापीत्यादिना॥ हे राज्ञि नारदेन गीतमच्युतस्य जन्मादिकं श्रुत्वा ममापि यथा मित्रविन्दायाः तथा ममापि चित्तं मुकुन्दविषयमासीदित्यर्थः, पद्महस्तया श्रिया तदवताररूपया रुक्मिण्येत्यर्थः, वृतः किल, अतोऽपि सुष्ठु विचार्य मम चित्तं मुकुन्दे आसेति संबन्धः ॥ १७॥

मु ॥ लक्ष्मणाऽऽह—ममेति त्रयोविंशत्या॥ हे राज्ञि यथा मित्रविन्दायाः तथा ममापि चित्तं मुकुन्दे आस बभूव, कुतः? नारदगीतम् अच्युतजन्मकर्म मुहुः श्रुत्वा, न जन्मकर्मश्रवणमात्रेण, किन्तु लक्ष्म्या वृतत्वश्रवणेन चेत्याह—किलेति । पद्महस्तया लक्ष्म्या लोकपान् लोकपालान् विहाय सुसंमृश्य सम्यग्विचार्य असौ वृतः किल॥ १७॥

वी ॥ ज्ञात्वेति ॥ हे साध्वि मम मतमभिप्रायं ज्ञात्वा मम पिता बृहत्सेनो नाम दु-

---

१. पथि. मु-भा-प्र. पा ॥

बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८

यथास्वयंवरेराज्ञिमत्स्यःपार्थेप्सयाकृतः।अयंतुबहिराच्छन्नोदृश्यतेसजलेपरम् ॥

श्रुत्वैतत्सर्वतोभूपाआययुर्मत्पितुःपुरम्।सर्वास्त्रशस्त्रतत्त्वज्ञास्सोपाध्यायास्सहस्रशः॥

पित्रासंपूजितास्सर्वेयथावीर्यंयथावयः।आददुस्सशरंचापंवेद्धुं[1]पर्षदिमद्धियः॥२१

---

हितृवत्सलः अतस्तत्र श्रीकृष्णप्राप्तौ उपायमचीकरत् कारयामास ॥ १८ ॥

मु ॥ पिता दुहितरि मयि वत्सलः तत्र ममापि अच्युतप्राप्तौ उपायम् अचीकरत् अकारयत् ॥ १८ ॥

वी ॥ कोऽसावित्यतस्तं प्रपञ्चयति—यथेति॥ हे राज्ञि यथा तव स्वयंवरे पार्थेप्सया अर्जुनप्राप्तीच्छया त्वत्पित्रा मत्स्यः कृतः, तथा अस्मत्पित्राऽपि कृत इत्यर्थः, तर्ह्यर्जुन एव किं नाविध्यत्तत्राह—अयंत्विति। स मत्स्यो बहिरेवाच्छन्नो नान्तः, स्तम्भसंलग्न-योर्ध्वदृष्ट्या दृश्यते, अयं तु न तथा, किन्तु स्तम्भमूलनिहितकलशजले केवलं दृश्यते, अतो दृष्टिरधस्तात् उपरि च लक्ष्यमिति कृष्णमन्तरेण नकस्यापि भेद्य इति भावः, बहिराच्छन्नः प्रतिबिम्बस्य बिम्बभूतो मत्स्यस्तिरोहितः स मत्स्यप्रतिबिम्ब एव जले दृश्यते, प्रतिबिम्बेन बिम्बभूतमत्स्यावस्थानं निरूप्य तत्र वेधो दुष्कर इति व्याख्यान्त-रम् ॥ १९ ॥

मु ॥ उपायमेवाह—यथेति ॥ हे राज्ञि यथा तव स्वयंवरे पार्थेप्सया पार्थमाप्तु-मिच्छया मत्स्यः मत्स्ययन्त्रं तद्धि मम स्वयंवरेऽपि, तत्र विशेषमाह—अयमिति। सः त्वत्स्वयंवरगतो मत्स्यः जलादन्यत्रापि दृश्यते, अयं मत्स्वयंवरगतस्तु बहिः जलादन्यत्र च्छन्नः अदृश्यः परं केवलं जल एव स्तम्भमूलस्थे दृश्यते, यद्वा—तमप्यर्जुन एव किं नाविध्यदित्यत्राह—अयान्त्वति। त्वन्मत्स्यः उपर्येव आच्छन्नः,नान्तः.अतः स्तम्भलग्नया दृष्ट्या संलक्ष्यते,अयं तु न तथा, स्तम्भमूलनिहितकलशजले केवलं दृश्यते. अतो दृष्टि रधस्तात्, उपरि च लक्ष्यमिति कृष्णस्य अतिरेकेण न कस्यापि भेद्य इति भावः, यद्वा—बहिराच्छन्नः बहिः उपरिभागे प्रतिबिम्बस्य बिम्बभूतो मत्स्यः तिरोहितः, मत्स्य-प्रतिबिम्बवत्त्वेन जलं दृश्यते, प्रतिबिम्बेन बिम्बभूतमत्स्यावस्थानं निरूप्य तत्र वेधो दुष्करः ॥ १९ ॥

वी॥ एतन्मत्स्ययन्त्रनिर्मापणं श्रुत्वा सर्वतो दिग्भ्यः मत्पितुः पुरमाजग्मुः, कथं-भूताः?सर्वेषां शस्त्राणाम् अस्त्राणां च तत्त्वं याथात्म्यं प्रयोगोपसंहारौ जानत इति तथा उपाध्यायैस्सहिताश्च ॥ २० ॥

मु॥ एतत् मदीहितं श्रुत्वा सर्वेषामस्त्राणां तत्त्वं ये जानन्ति ते ॥ २० ॥

वी ॥ पित्रेति ॥ मम पित्रा वीर्यवयस्स्थानाद्यनुरूपं सर्वे संपूजिताः मय्येव श्रीर्येषां ते मत्स्यं वेद्धुं पर्षदि सभायां सशरं चापमाददुः, मद्धिय इत्यस्यान्यचित्तत्वाच्च वेद्धुं नाशक्नुवन्निति भावः ॥ २१ ॥

मु ॥ वीर्याद्यनुरोधेन पित्रा संपूजिताः वेद्धुं मत्स्यभेदनाय हे पार्षदि द्रौपदि॥२१॥

---

१. पार्षदि. मु-भा प्र. पा ॥

आदाय व्यसृजन्केचित्सज्यीकर्तुमनीश्वराः ।
आकोटि ज्यां समाकृष्य पेतुरेकेऽमुना हताः ॥ २२
सज्यं कृत्वाऽपरे वीरा मागधाम्बष्ठचेदिपाः ।
भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३
मत्स्याभासं जले दृष्ट्वा ज्ञात्वाच तदवास्थितिम् ।
पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ॥ २४
राजन्येषुनिवृत्तेषुभग्नमानेषुमानिषु।भगवान्धनुरादायसज्यंकृत्वाऽथलीलया॥ २५
तस्मिन्सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ।
छित्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६

---

वी॥ तदेवाह—आदायेति॥ केचिद्व्यसृजन् लक्ष्यादन्यत्र प्रयुक्तवन्त इत्यर्थः,केचित्तु आकोटि धनुषः कोटिपर्यन्तं ज्यां समाकृष्य सज्यीकर्तुं ज्यासहितम् आरोपितज्याकं कर्तुमित्यर्थः, अनीश्वरा असमर्थाः अमुना चापेन हताः ताडिताः निपेतुः ॥ २२ ॥

मु ॥ तत्र केचित् धनुरादाय व्यसृजन्, तत्र हेतुः—सज्यीकर्तुमनीश्वरा इति । आकोटि अग्रपर्यन्तम्, अमुना धनुषा ॥ २२ ॥

वी ॥ सज्यमिति ॥ अपरे जरासन्धादयः वीराः सज्यं कृत्वापि लक्ष्यावस्थितिं नाविन्दन्, मागधादीनां क्रियाशक्तिरेव, न तु लक्षाभिज्ञतेत्यर्थः ॥ २३ ॥

मु ॥ तदवस्थितं मत्स्यावस्थितम्, मागधादीनां क्रियाशक्तिः, न तु लक्ष्याभिज्ञानमित्यर्थः ॥ २३ ॥

वी॥ मत्स्याभासमिति॥पार्थोऽर्जुनस्तु जले मत्स्याभासं मत्स्यप्रतिबिम्बं वीक्ष्य तदवस्थितिं मत्स्ययन्त्रावस्थानदेशं ज्ञात्वा यत्तो यत्नवान् बाणं व्यसृजत् मुमोच, स बाणो मत्स्यं नाच्छिनत्, परं केवलं पस्पर्श, ज्ञानवानप्यर्जुनो न वेद्धुं प्रबभूवेत्यर्थः ॥ २४ ॥

वी ॥ भगवांस्तु विव्याधेत्याह—राजन्येष्विति ॥ मानिषु साहङ्कारेषु राजन्येषु भग्नमानेषु अत एव निवृत्तेषु च सत्सु सूर्ये अभिजिति स्थिते सर्वार्थसाधके मध्याह्न इत्यर्थः, लीलया अनायासेनैव तस्मिन्धनुषि विशिखं बाणं सन्धाय सकृदेव जले वीक्ष्य इषुणा मत्स्यं छित्वा न्यपातयत् ॥ २५ ॥ २६ ॥

मु॥जले मत्स्याभासं मत्स्यस्य प्रतिबिम्बं वीक्ष्य तदवस्थितम् उपरि तदवस्थानं ज्ञात्वा यत्तः यत्नवान् बाणम् असृजत् मुमोच, स तु बाणो मत्स्यं नाच्छिनत्, परं केवलं पस्पृशे पस्पर्श, ज्ञानवानप्यर्जुनो बलेनापूर्ण इत्यर्थः ॥ २४ ॥ २५ ॥

मु ॥ सकृत् एकवारं संधाय तं मत्स्यम् अपातयत्, तदा च सुमुहूर्तम् अभूदित्याह—सूर्य इति । अभितो जयत्यस्मिन्निति अभिजित्, तस्मिन् मुहूर्ते चकारात् सूर्ये च अन्तरे स्थिते सति ॥ २६ ॥

दिविदुन्दुभयोनेदुर्जयशब्दयुताभुवि।देवाश्चकुसुमासारान्मुमुचुर्हर्षविह्वलाः ॥ २७

तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्वलरत्नमालाम् ।
नुत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक्॥
उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विङ्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ।
राज्ञो निरीक्ष्य परितश्शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्म मालाम् ॥

तावन्मृदङ्गपटहाश्शङ्खभेर्यानकादयः।विनेदुर्नटनर्तक्योननृतुर्गायकाजगुः ॥ ३०

एवंवृतेभगवतिमयेशेनृपयूथपाः । नसेहिरेयाज्ञसेनिस्पर्धन्तोहृच्छयातुराः ॥ ३१

---

वी ॥ भुवि जयशब्देन युताः देवदुन्दुभयो नेदुः, तदैव भुवि जयशब्दा बभूवुरित्यर्थः ॥ २७ ॥

मु ॥ दिवि भुवि च दुन्दुभयो नेदुः, कथंभूताः ? जयशब्दयुताः ॥ २७ ॥

वी ॥ भगवत्प्राप्तिजहर्षनिर्भरेणात्मानमेवानुवर्णयन्त्याह द्वाभ्यां—तद्रङ्गमिति ॥ तत्तदा नूत्ने नवीने कौशिकाग्र्ये उत्तमकौशेये वस्त्रे परिधाय सव्रीडो हासो यस्मिन् तद्वदनं यस्याः कबर्या धृतास्स्रजो यया सा अहं कनकेनोज्ज्वलां रत्नमालां निवीय प्रगृह्य कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गं प्राविशं प्रविष्टवत्यस्मि ॥ २८ ॥

मु ॥ भगवत्प्राप्तिहर्षनिर्भरेण आत्मानमेवानुवर्णयन्त्याह द्वाभ्यां — तद्रङ्गमिति ॥ तत् तदा कलौ आकुलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गम् आविशम्, कनकेन उज्ज्वलां रत्नमालां नूत्ने नूतने कौशिकाग्र्ये निवीय नीवीबन्धेन बन्धयित्वा नीवीं परिधाय सव्रीलो हासो यस्मिन् तत् वदनं यस्यास्सा कबर्या धृताः स्रजो यया सा ॥ २८ ॥

वी॥उन्नीयेति॥उरवः कुन्तला यस्मिन् कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिन् तच्च वक्त्रमुन्नीय परितः शनैः राज्ञो राजन्यान् निरीक्ष्य मुरारेश्शिशिरस्सन्तापहरः हासो येषु तैः कटाक्षमोक्षैः अपाङ्गवीक्षणविलासैः अनुरक्तं हृदयं चित्तं यस्यास्साहं तस्य अंसे स्कन्धे मालां निदधेस्म निहितवत्यस्मि ॥ २९ ॥

मु ॥ उरु कुन्तलं यस्मिन् कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिन् तत् वदनम् उन्नीय शिशिरः संतापहरो हासो येषु तैः कटाक्षमोक्षैः अपाङ्गविलासेक्षणैः परितः स्थितान् राज्ञः शनकैः निरीक्ष्य मुरारेः अंस एव मालां निदधे, अनुरक्तं हृदयं यस्यास्सा ॥ २९ ॥

वी ॥ तावदिति ॥ तदैव नटा नर्तक्यश्च ननृतुः ॥ ३० ॥

मु ॥ ३० ॥

वी॥ एवमिति ॥ इत्थमीश्वरे भगवति मया वृते सति याज्ञसेनि द्रौपदि नृपयूथपाः हृच्छयेन कामेनातुराः स्पर्धमाना न सेहिरे ॥ ३१ ॥

मु ॥ हे याज्ञसेनि द्रौपदि ईशे मया वृते सति स्पर्धमानाः, नन्वेवं जानतां कथं स्पर्धावसरः ? तत्राह —हृच्छयेन कामेन आतुराः विवशाः, कामविजृम्भिता स्पर्धेति भावः ॥ ३१ ॥

मान्तावद्रथमारोप्यहयरत्नचतुष्टयम्। शार्ङ्गमुद्यम्यसन्नद्धस्तस्थावाजौचतुर्भुजः॥३२
दारुकश्चोदयामासकाञ्चनोपस्कृतंरथम्।मिषतांभूभुजांराज्ञिमृगाणांमृगराडिव॥ ३३
तेऽन्वसज्जन्तराजन्यानिषेद्धुंपथिकेचन।संयत्ता[1]उद्यतेष्वासाग्रामसिंहायथाहरिम्॥
तेशार्ङ्गच्युतबाणौघैःकृत्तबाह्वङ्घ्रिकन्धराः। निपेतुःप्रधनेकेचिदन्येसन्त्यज्यदुद्रुवुः॥
ततः पुरीं यदुपतिरत्यलङ्कृतां रविच्छदध्वजपटचित्रतोरणाम्।
कुशस्थलीं दिविभुविचाभिसंस्तुतांसमाविशत्तरणिरिवस्वकेतनम्॥ ३६

---

वी॥ मामिति॥ हयरत्नानाम् अश्वश्रेष्ठानां चतुष्टयं यस्मिन् तं रथम् आरोप्य तस्मिन्निधाप्येत्यर्थः, द्वाभ्यां भुजाभ्याम् आलिङ्ग्य द्वाभ्यां धनुर्बाणान्गृहीत्वा चतुर्भुजो युद्धे तस्थावित्यर्थः॥ ३२॥

मु॥ तावत् तस्मिन् क्षणे ईशो मां रथम् आरोप्येति संबन्धः॥ ३२॥

वी॥ दारुकइति॥ काञ्चनेनोपस्कृतं रथं गमयामास, हे राज्ञि मृगाणां क्षुद्राणां पश्यतां मृगाधिपस्सिंह इव भूभुजां मिषतां सतां हरिर्जगामेति शेषोऽवगन्तव्यः॥ ३३॥

मु॥ दारुकः काञ्चनोपस्कृतं सुवर्णपरिष्कृतं रथं चोदयामास, हे राज्ञि मृगाणां क्षुद्रमृगाणां मिषतां पश्यतां सतामेव, तान् अनादृत्येत्यर्थः, अनादरे षष्ठी, मृगराट् मृगाधिपः सिंह इव भूभुजां मिषतां सतामेव तान् अनादृत्य हरिर्जगामेति शेषः, दारुकस्यैव मृगराजोपमा वा॥ ३३॥

वी॥ तइति॥ केचन ते राजन्यास्सन्नद्धा आयत्ता उद्यता इष्वासाश्चापा यैस्ते पथि निषेद्धुं वारयितुम् अन्वसज्जन्त पृष्ठतोऽन्वधावन्, यथा ग्रामसिंहाः श्वानो हरिं सिंहं, तद्वत्॥ ३४॥

मु॥ अन्वसज्जन्त पृष्ठतोऽन्वगच्छन्, निषेद्धुं प्रतिषेधं कर्तुं केचन पुरतो गत्वा पथि संयुक्ता बभूवुः, उद्धृतेष्वासाः ऊर्ध्वकृतचापाः, ग्रामसिंहाः श्वानः हरिं सिंहं यथेति॥ ३४॥

वी॥ ते नृपाः कृत्ताः छिन्नाः बाह्वादयो येषां ते केचित्प्रधने युद्धदेशे निपेतुः, केचित्तु सन्त्यज्य दुद्रुवुः॥ ३५॥

मु॥ कृत्ताः खण्डिता बाहवो अङ्घ्रयः कन्धराश्च येषां ते॥ ३५॥

वी॥ ततइति॥ यदुपतिः पुरीं तत्रापि स्वगृहं समाविशदिति संबन्धः यथा सूर्यः स्वकेतनं मण्डलम् अस्ताचलं वा, तद्वत्, कथम्भूतां? परितोऽलंकृतां रविं छादयन्तीति तथा तेषु ध्वजेषु पटाः यस्यां चित्राणि तोरणानि यस्यां सा चासौ साच ताम्॥ ३६॥

मु॥ रविं छादयन्तीति रविच्छदाः ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सा च तथा तां कुशस्थलीं पुरीं यदुपतिः समाविशत्, तरणिः सूर्यः स्वकेतनं मण्मलमिव॥ ३६॥

---

१. उद्धृतेष्वासा. मु-भा-प्र-पा॥

पितामेपूजयामाससुहृत्संबन्धिबान्धवान्।महार्हवासोलङ्कारैश्शय्यासनपरिच्छदैः ॥
दासीभिस्सर्वसम्पद्भिर्भटेभरथवाजिभिः।आयुधानिमहार्हाणिददौपूर्णायभक्तितः॥
आत्मारामस्यतस्येमावयंवैगृहदासिकाः।सर्वसङ्गनिवृत्त्याऽद्धातपसाचबभूविम॥३९

महिष्य ऊचुः—

भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः ।
निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः॥ ४०

न वयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत ।
वैराज्यं पारमेष्ठ्यं वा आनन्त्यं वा हरेः पदम् ॥ ४१

---

वी॥ पितेति॥ अनर्घवस्त्रादिभिः सुहृत्प्रभृतीन् पूजयामास ॥ ३७ ॥

मु ॥ अनन्तरं स्वविवाहमाह—पितेति ॥ पुरीं प्रविष्टोऽसौ यदा माम् उपयेमे, तदा मे पिता महत् धनम् अर्हन्तीति महार्हाः तैः वासोलङ्कारैः शय्यासनपरिच्छदैश्च सुहृत्संबन्धिबान्धवान् पूजयामास ॥ ३७ ॥

वी॥ दासीभिरिति॥ सर्वसंपद्भिस्सर्वाभरणभूषिताभिरित्यर्थः, हे राज्ञि दास्यादिभिस्सह पारिबर्हमुपायनं पूर्णस्यावाप्तसमस्तकामस्यापि भगवतो भक्तितो ददौ, पूर्णायेति पाठान्तरम् ॥ ३८ ॥

मु ॥ दासीभिः सर्वसंपद्भिः भटादिभिश्च सह महार्हाण्यायुधानि पूर्णस्य पूर्णायापि भक्तितो ददौ ॥ ३८॥

वी॥ आत्मारामस्येति॥ इमा अष्टौ वयं सर्वसङ्गनिवृत्त्या वैराग्येण तपसा च हेतुना तस्य भगवत आत्मारामस्य निरवधिकस्वानन्दानुभवशीलस्य अद्धा साक्षाद्गृहदासिका बभूविम ॥ ३९ ॥

मु ॥ कुतो भवतीनां भगवत्परिग्रहता जातेत्यत आह—आत्मारामस्येति ॥ वैशब्दोऽवधारणे, इमा अष्टौ वयं सर्वसङ्गनिवृत्त्या तपसा आत्मारामस्यैव तस्य अद्धा साक्षात् गृहस्य दासिकाः परिचारिका बभूविम ॥ ३९ ॥

वी॥ अथ षोडशसहस्रपत्नीनां गीतिमाह—भौममिति ॥ सगणं ससैन्यं भौमं नरकं निहत्य क्षितिजये दिग्विजये जितानां राज्ञां कन्याः अस्मान् तेन नरकेण रुद्धाः ज्ञात्वा ततो मोचयित्वा संसृतेर्विमोक्षो यस्मात्तत्पदाम्बुजम् अनुस्मरन्तीरस्मानाप्तकामोऽपि परिणिनाय उपयेमे ॥ ४० ॥

मु ॥ हे साध्वि सगणं भौमं युधि निहत्य अथ अनन्तरं तेन रुद्धाः क्षितिजये दिग्विजये जितानां राज्ञां कन्या नः अस्मान् ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत् पदाम्बुजम् अनुस्मरन्तीः नः यः आप्तकामोऽपि परिणिनाय उदवहत् ॥ ४० ॥

वी॥ नवयमिति॥ हे साध्वि वयं साम्राज्यादीनि न कामयामहे, किन्त्वेतस्य गदाभृतो भगवतः श्रियो लक्ष्म्याः कुचयोः कुङ्कुमस्य गन्धेनाढ्यं श्रीमत्पादरजो मूर्ध्ना वोढुं

कामयामहएतस्यश्रीमत्पादरजःश्रियः।कुचकुङ्कुमगन्धाढ्यंमूर्ध्नावोढुंगदाभृतः ॥४२
व्रजस्त्रियोयद्वाञ्छन्तिपुलिन्द्यस्तृणवीरुधः।गावश्चारयतोगोपाःपादस्पर्शंमहात्मनः॥
इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

श्रीशुक उवाच—
श्रुत्वा पृथा सुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ।

---

कामयामह इति सम्बन्धः, श्रियः कुचकुङ्कुमगन्धाढ्यमित्यनेन ब्रह्मादिसेवितया श्रियापि सेव्यमानत्वात्पादरज एव कामयामह इति सूचितम्, तत्र साम्राज्यं सार्वभौमपदं, स्वाराज्यमैन्द्रपदं. कैवल्यं वा, भोज्यं तदुभयभोगभाक्त्वं, विविधं राजते विराट् तस्य भावो वैराज्यम् अणिमादिसिद्धिभाक्त्वमित्यर्थः, पारमेष्ठ्यं ब्रह्मपदम् आनन्त्यमिति स्वार्थे ष्यञ्, अनन्तं हरेः पदमित्यर्थः ॥ ४१ ॥ ४२ ॥

मु ॥ एतस्य गदाभृतः श्रीमत् पादरजो मूर्ध्ना वोढुमेव वयं कामयामहे, किं पुनर्न कामयध्व इत्यत आह — साम्राज्यमिति । साम्राज्यं सार्वभौमपदं, स्वाराज्यम् ऐन्द्रं पदम् आनन्त्यं मोक्षं हरेः पदं तत्सालोक्यादि न तु कामयामह इति, यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यादीनि, किं तत्पादरज एव काम्यते ? अत आहुः—श्रियः कुचकुङ्कुमगन्धाढ्यमिति, ब्रह्मादिसेव्यया श्रियापि सेवितत्वादिति भावः ॥ ४१ ॥ ४२ ॥

वी ॥ नन्वतिदुर्लभत्वात्किं तद्वाञ्छयेत्यत आह —व्रजस्त्रियइति ॥ महात्मनः निरवधिकसौशील्ययुक्तात्मनः अत एव गावः गाः चारयतो भगवतो यद्यथा व्रजस्त्रियः पुलिन्द्यः आरण्यकस्त्रियः तृणानि वीरुधश्च पादस्पर्शं वाञ्छन्ति, तद्वद्वयमपि कामयामह इत्यर्थः, सौशील्यसौलभ्याद्यनन्तकल्याणगुणाकरस्य भगवतः पादरजः तद्दासानां सुलभमेवेति भावः, तृणानि वीरुधो वाञ्छन्तीत्यनेन तृणादीनामपि भगवत्सान्निध्यातिशयाहितचैतन्यानां तदिच्छावत्त्वं सूचितम् ॥ ४३ ॥

मु ॥ ननु तस्यातिदुर्लभत्वात् किं तद्वाञ्छया ? अत आहुः—व्रजस्त्रिय इति ॥ यत् यथा गावः गाः महात्मनोऽपि गाश्चारयतः पादस्पर्शं व्रजस्त्रियः पुलिन्द्यः तृणवीरुधो गोपाश्च वाञ्छन्ति, तथा कामयामह इति योजना ॥ ४३ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशस्कन्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

वी ॥ श्रुत्वेति॥ सुबलपुत्री गान्धारी याज्ञसेनी द्रौपदी माधवी सुभद्रा अथ तथा

कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्मुरलमश्रुकलाकुलाक्ष्यः ॥ १
इतिसंभाषमाणासुस्त्रीभिःस्त्रीषुनृभिर्नृषु।आययुर्मुनयस्तत्रकृष्णरामदिदृक्षया॥ २
द्वैपायनोनारदश्चच्यवनोदेवलोऽसितः।विश्वामित्रश्शतानन्दोभरद्वाजोऽथगौतमः ॥
रामस्सशिष्यो भगवान्वसिष्ठोगालवो भृगुः ।
पुलस्त्यःकश्यपोऽत्रिश्चमार्कण्डेयोबृहस्पतिः ॥ ४
द्वितस्त्रितस्त्वेकतश्चब्रह्मपुत्रस्तथाऽङ्गिराः।अगस्त्योयाज्ञवल्क्यश्चवामदेवादयोऽपरे ॥
तान्दृष्ट्वासहसोत्थायप्रागासीनानृपादयः।पाण्डवाःकृष्णरामौचप्रणेमुर्लोकवन्दितान्
तानानर्चुस्तथासर्वे सहरामोऽच्युतोऽर्चयत् ।
स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७
उवाचसुखमासीनान्भगवान्धर्मगुप्तनुः।सदसस्तस्यमहतोयतवाचोऽनुशृण्वतः॥ ८

---

क्षितिपानां राज्ञां पत्न्यश्च उत अपिच स्वगोप्यः कृष्णभक्ता गोप्यश्च रुक्मिण्यादीनामखिलान्तरात्मनि भगवति कृष्णे हरौ अमलं निष्कपटं प्रणयानुबन्धं प्रेमपारतन्त्र्ययुक्तं वच इति यावत्, श्रुत्वा सर्वाः पृथादयः अश्रुकलाभिरानन्दाश्रुबिन्दुभिराकुले व्याप्ते अक्षिणी यासां ता विसिस्मयुः विस्मयं चक्रुः ॥ १ ॥

मु ॥ सुबलपुत्री गान्धारी याज्ञसेनी द्रौपदी माधवी सुभद्रा क्षितिपानां राज्ञां पत्नयः स्व गोप्यः कृष्णभक्ता गोप्यः विसिस्मयुः विस्मयं चक्रुः ॥ १ ॥

वी ॥ इतीति ॥ इत्थं स्त्रीषु स्त्रीभिस्सह सम्भाषमाणासु सतीषु तथा नृषु पुरुषेषु तैस्सह सम्भाषमाणेषु सत्सु ॥ २ ॥

मु ॥ २ ॥

वी ॥ आगतान्मुनीन्निर्दिशति—द्वैपायनइति त्रिभिः ॥ तत्र रामः परशुरामः, ब्रह्मपुत्र इत्यङ्गिरसो विशेषणम्, अपरे निर्दिष्टेभ्योऽन्ये च, विश्ववन्दितान् कृत्स्नजगद्वन्द्यानित्यर्थः, तानिति । यदा सर्वे आनर्चुः अर्चितवन्तः, तदा सरामः अच्युतः कृष्णोऽपि तान् स्वागतप्रश्नादिभिः अर्चितवान् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

मु ॥ ३ ॥

मु ॥ सशिष्यः अकृतव्रणसहितः ॥ ४ ॥

मु ॥ ब्रह्मपुत्र इत्यङ्गिरसो विशेषणम् ॥ ५ ॥

मु ॥ ६ ॥

मु ॥ यथा यथावत् सर्वे तान् आनर्चुः, अर्चितवन्तः, सहरामोऽच्युतश्च स्वागताद्यैः आर्चयत् ॥ ७ ॥

वी ॥ उवाचेति॥ धर्मगोप्त्री तनुर्यस्य स भगवान् यतवाचो मौनीभूतस्य महतो विपुलस्य तस्य सदसः सभायाः, अनुशृण्वतस्सतः सुखमासीनान् द्वैपायनादीन् उवाच ॥ ८ ॥

मु ॥ महतस्तस्य सदसः यतवाचः धृतमौनस्य अनुशृण्वतस्सतः धर्मगुप्तनुः धर्मगोप्त्री तनुः यस्य स भगवान् सुखासीनान् तानुवाच ॥ ८ ॥

श्रीभगवानुवाच—

अहोवयंजन्मभृतोलब्धंकात्स्न्येंनतत्फलम्।देवानामपिदुष्प्रापंयद्योगेश्वरदर्शनम्॥ ९

[१]किन्वल्पतपसांनृणामर्चायांदेवचक्षुषाम्।दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम्॥

नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः।तेपुनन्त्युरुकालेनदर्शनादेवसाधवः॥११

नाग्निर्न सूर्यो न तु चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः।

---

वी॥ तदेवाह---अहोइति॥ अहो मुनयः वयं जन्मभृतः सफलजन्मानो बभूविम, तत्फलं जन्मफलं कात्स्न्येंनास्माभिः लब्धं च, किंतत्, यद्देवानामपि दुर्लभं योगिनां वो दर्शनमिति॥ ९॥

मु॥ तद्दर्शयति—अहो इति पञ्चभिः॥ अहो हे मुनयः! वयं जन्मभृतः सफलजन्मानः, यतः कात्स्न्येंन तत्तत्फलं लब्धमस्माभिः, किन्तत इत्यत आह—देवानामिति, यत् योगेश्वराणां भवतां दर्शनमस्माभिः तत् देवानामपि दुष्प्रापं भवति॥ ९॥

वी॥ कथंन्वेतद्घटितमिति विस्मयेनाह—किंन्विति॥ अल्पं तपः पुण्यं येषामर्चायां प्रतिमायामेव देवचक्षुः देवताबुद्धिर्येषां तेषामस्माकं वो दर्शनादिकं किन्नु कथं बभूवेत्यर्थः, प्रह्वशब्दः प्रणामपरः, प्रश्नः स्वागतप्रश्नः॥ १०॥

मु॥ तथापि कात्स्न्येंन जन्मफलं लब्धमिति कुतः? तत्राह—किमिति॥ यद्वा किञ्च युष्माकं दर्शनमेव तावद्दुष्प्रापम्, अस्माकन्तु स्पर्शनादिकमपि किन्नु घटितमिति विस्मयेनाह—स्वल्पतपसां तीर्थस्नानादिमात्रे तप इति बुद्धिर्येषां तथा अर्चायां प्रतिमायां देव इति चक्षुः येषां तेषां योगेश्वराणां वो दर्शनादिकं किं घटते दुर्लभमित्यर्थः, यद्वा अर्चायां देवचक्षुषां प्रतिमामेव देवतां मन्यमानानां किं न किञ्चित् प्रतिमादर्शनादिकं नोद्देश्यमित्यर्थः, प्रह्वशब्दः प्रणामपरः, प्रश्नशब्देन प्रार्थना लक्ष्यते॥ १०॥

वी॥ नन्वर्चायां देवचक्षुः पवित्रावहमपि किमिति तत्तुच्छीकरोषीत्यत्राह—नहीति॥ अम्मयानि तीर्थानि मृण्मयाश्शिलामयाश्च देवाश्च दर्शनादेव नपुनन्ति, किन्तु उरुकालेन, साधवस्तु दर्शनादेव पुनन्तीत्यर्थः, तीर्थानीति दृष्टान्तार्थम्॥ ११॥

मु॥ तद्दर्शनादिनाकिमित्यत्राह—नहीति॥ अम्मयानि अम्बुमयानि यद्यपि तीर्थानि, तथापि न मुख्यानि, मृच्छिलामया यद्यपि देवाः, तथापि न मुख्याः, साधवस्तु मुख्यानि तीर्थानि, मुख्यदेवाश्च, हि यस्मात् ते तानि च उरुकालेन पुनन्ति, साधवो दर्शनादेव संदर्शनसमकालमेव पुनन्तीत्यर्थः, यद्वा—अम्बुमयानि तीर्थानि, तानि दर्शनादेव न पुनन्ति, किन्तु उरुकालेन पुनन्ति, साधवस्तु भवादृशाः दर्शनादेव पुनन्तीत्यर्थः॥ ११॥

वी॥ देवा उरुकालेनैव पुनन्तीत्येतत्प्रपञ्चयति—नाग्निरिति॥ भूजलादिशब्दैस्तदभिमानिदेवता लक्ष्यन्ते, ताः अग्न्यादयश्चोपासिताः भेदकृतः आत्मनि देहगतभेदं कुर्वाणस्याघं हरन्ति, उरुकालसेवया हरन्तीत्यर्थः, विपश्चितस्साधवस्तु मुहूर्तसेवयैव हरन्ति अघशब्देन तन्मूलमज्ञानं च विवक्षितम्॥ १२॥

---

[१] किं स्वल्पतपसां, मु-भा-प्र-पा॥

उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्तसेवया ॥ १२

यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिस्तु जले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३

श्रीशुक उवाच—

निशम्येत्थंभगवतः कृष्णस्याकुण्ठमेधसः॥वचोदुरन्वयंविप्रास्तूष्णीमासन्भ्रमद्धियः॥
चिरंविमृश्यमुनयईश्वरस्येशितव्यताम्।जनसङ्ग्रहमित्यूचुःस्मयन्तस्तंजगद्गुरुम्॥ १५

---

मु ॥ नाग्निरिति ॥ उपासिताः चिरकालसेविताः, भूजलादिशब्दाश्च देवतापराः, भेदकृतः आत्मनि देहगतदेवादिभेदं कुर्वाणस्य मन्यमानस्य अघं हरन्ति, विपश्चितस्तु मुहूर्तसेवया हरन्तीत्यर्थः ॥ १२ ॥

वी ॥ यत एवम्, अतोऽर्चादेवचक्षुषं क्षिपन्नर्थान्तरमप्याह—यस्येति ॥ यस्य पुंसस्त्रिधातुके वातपित्तश्लेष्ममये कुणपे शवप्राये शरीरे आत्मबुद्धिरात्माभिमानः कलत्रेषु दारेषु स्वधीः स्वकीयत्वबुद्धिः, एवमहंममाभिमानावुक्तौ, पार्थिवप्रतिमादौ इज्यधीः देवताबुद्धिः जले गङ्गादिजले तीर्थबुद्धिः कर्हिचिदपि अभिज्ञेषु स्वात्मपरमात्मयाथात्म्याभिज्ञेषु भवादृशेषु नेज्यधीर्नतीर्थबुद्धिश्च, स पुमान्गोखर एव गोप्रायः खरप्रायश्च, यद्वा गवां सम्बन्धी खरस्तदर्थतृणभारार्थखरसदृशः अतीवाज्ञ इत्यर्थः नहिनिन्दान्यायेनेयं साधुजनप्रशंसा ॥ १३ ॥

मु ॥ साधून्विहाय शरीरादिषु आत्मबुद्धिं कुर्वतोऽज्ञत्वमाह—यस्येति ॥ कुणपे शरीरे त्रिधातुके वातपित्तश्लेष्ममये आत्मबुद्धिः अहमितिबुद्धिः स्वधीः मदीयत्वबुद्धिः, भौमे पार्थिवप्रतिमादौ इज्यधीः देवताबुद्धिः, यत् यस्य जले तीर्थबुद्धिश्च, अभिज्ञेषु जनेषु कर्हिचित् कदाचिदपि आत्मादिबुद्धिर्नास्ति, स गोखरः गोखरप्रायः अज्ञः, अभिज्ञेषु जनेषु सत्स्वपि तान् अनादृत्य देवतादिषु पूज्यबुद्धिं कुर्वन् अज्ञ इत्यर्थः, एते श्लोकाः साधुजनप्रशंसापराः ॥ १३ ॥

वी ॥ निशम्येति॥ अकुण्ठा प्रतिहतिरहिता मेधा यस्य तस्य भगवतः कृष्णस्य दुरन्वयमननुरूपं वचो निशम्य भ्रमन्ती अनवस्थिता धीःयेषां तथाभूतास्तूष्णीमासन्, अहो स्वभजनाहितमाहात्म्यानस्मानयं स्वस्मादुत्कृष्टतमान्वदति, अतो विपरीतमेतद्वच इत्येवं तावद्भ्रमद्धिय इत्यर्थः ॥ १४ ॥

मु ॥ दुरन्वयम् अननुरूपं, भ्रमन्ती चञ्चला धीः येषां ते ॥ १४ ॥

वी ॥ चिरमिति ॥ जनसङ्ग्रहम् अकृत्स्नविदो जना इत्थं साधून्भजेयुरित्येवंविधजनानुग्रहरूपाम् ईश्वरस्य भगवत ईशितव्यतां चिरमालोच्य स्मयन्त ईषद्धसन्तः जगद्गुरुं कृष्णं प्रति इत्थं वक्ष्यमाणप्रकारेण ऊचुरित्यन्वयः ॥ १५ ॥

मु ॥ ईशितव्यतां नियन्तव्यतां निश्चित्य स्मयन्तो हसन्तः जगद्गुरुमूचुः ॥ १५ ॥

मुनयऊचुः—

यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वर ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६
अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न सज्ज्यते यथा ।

वी॥ तमेवाह—यदिति॥ हे विश्वसृजां ब्रह्मादीनामधीश्वर तत्त्वविच्छ्रेष्ठा अपि वयं त्वन्मायया विमोहितास्तावत् त्वदभिप्रायं जनसङ्ग्रहात्मकमवगन्तुम् असमर्था बभूविमेत्यर्थः, कोऽसावभिप्राय इत्यतस्तं निर्दिशन्ति—यदीशितव्यायतीति । गूढ ईहयेति सर्वेश्वरोऽपि भगवान् ईहया गूढः मनुष्यचेष्टया च्छन्नः ईशितव्यायति—ईशितव्यवत्कर्मवश्यवदाचरतीत्यर्थः, यत एवं तस्मादहो भगवतः तव चेष्टितं विचित्रम् अतिचित्रमित्यर्थः, यद्वा तत्त्वविदुत्तमा अपि तावत्त्वन्मायया मोहिता इति चित्रम्, ईश्वरोऽपीहया गूढस्सन् ईशितव्यायतीति यत् तद्भगवतस्तव चेष्टितम् अहोविचित्रम् अतिविचित्रमित्यर्थः, 'यदीशितव्यास्सतु गूढ ईहया' इति पाठान्तरम्, तत्र यस्येशितव्या वयं, स ईश्वरो मनुष्यचेष्टया च्छन्न इत्यर्थः ॥ १६ ॥

मु॥विश्वसृजामधीश्वर हे ब्रह्मादीनामपि नियन्तः यत् यथा गूढः भगवान् ईहया चेष्टया ईशितव्यायति ईशितव्यवदाचरति परैरनुग्राह्य इव वर्तते, तया मायया तत्त्ववित्सु उत्तमा वयमपि विमोहिता इति यत्, अतो भगवद्विचेष्टितम् विचित्रम् अत्याश्चर्य भवति, यद्वा—यस्य ईशितव्या वयं, स ईश्वरः ईहया गूढः मनुष्यचेष्टया च्छन्नश्चेति हेत्वभिप्रायो निर्देशः, तस्मात् भगवद्विचेष्टितं चित्रमित्यर्थः ॥ १६ ॥

वी ॥ विश्वसृजामधीश्वरेति संबोधनाभिप्रेतं कृत्स्नजगत्स्रष्टृत्वं व्यञ्जयन्तो विस्मयन्ते—अनीहइति॥ अनीहः कर्मायत्तचेष्टारहित इत्यर्थः, भवानेकः कारणावस्थायाम् एक एव सन् आत्मना एतज्जगद्बहुधा सृजति, बहुधेत्यनेन नामरूपविभागनिबन्धनं बहुत्वं विवक्षितम्, एक इत्यनेन तु तत्प्रतिसंबन्ध्येकत्वम्, तदयमर्थः —व्याकरिष्यमाणकार्यावस्थचिदचिद्गतनामरूपविभागनिबन्धनबहुत्वप्रतिसंबन्धितदविभागनिबन्धनैकत्वापन्नचिदचिच्छरीरकतयैकत्वव्यपदेशार्होपादानकारणतया तावदवस्थितो बहुधैतज्जगत्सृजतीति, एवं चैक इत्यनेनोपादानत्वं फलितं, सृजतीति कर्तृत्वनिर्देशान्निमित्तत्वम्, आत्मनेत्यनेन स्वस्यैवोपकरणत्वं वदतोपकरणान्तरनिरपेक्षत्वम्, अवति रक्षति, अत्ति संहरते च,अथापि न सज्ज्यते सृज्यचिदचिद्गतैर्दोषैर्न स्पृश्यत इत्यर्थः, अनेनोपादानत्वप्रयुक्तविकाराश्रयत्वप्रसङ्गः परिहृतः, विकाराणां चिदचिद्द्वारकत्वेन स्वतो न सज्यत इति भावः,एकस्यैव सतोऽनेकधापत्तौ दृष्टान्तः—यथा भौमैः भूमिः बहुनामरूपिणीति, यथैकैव मृत् भौमैस्तद्विकारैः घटशरावमणिकादिभिः बहूनि रूपाणि आस्यास्सन्तीति तथाभूता, तथैकोऽपि भवान् बहुरूपो बभूवेत्यर्थः, विभूम्नो भगवतस्तव इदं चरितं विडम्बनमनुकरणम्, अहो अतिचित्रमित्यर्थः ॥ १७ ॥

मु ॥ तदेवाह—अनीह इति ॥ अनीहोऽपि चेष्टारहितोऽपि भवान् एतद्विश्वम्

भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७
अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलु निग्रहाय च ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८
ब्रह्मतेहृदयंशुद्धंतपःस्वाध्यायसंयमैः।यत्रोपलब्धं[1]सद्व्यक्तमव्यक्तंचततः परम्॥ १९

---

आत्मना सहायान्तरमनपेक्ष्य एक एव बहुधा सृजतीति निमित्तत्वमुक्तम्, दृष्टान्तमाह—यथा भौमैरिति, भौमैः विकारैः घटादिभिः यथा भूमिः बहूनि नामानि रूपाणि च बिभर्ति, तथा भगवानपीत्युपादानत्वमुक्तम्, "यथा सोम्यैकेन" इत्यादिश्रुतेः, विभूम्नो भगवतः चरितं विडम्बनं मनुष्यचेष्टानुकारः ॥ १७ ॥

वी ॥ ननु नाहं विश्वसृजामधीश्वरः, अपितु वसुदेवसुतः, अन्यथा सर्वेश्वरस्यैवं मनुष्यतापत्तिर्न घटत इत्यत आहुः—अथापीति॥ यद्यपि सर्वेश्वरः, तथाऽपि स्वजनानां स्वभक्तानां साधूनामभिगुप्तये परित्राणाय खलानां दुष्कृतां निग्रहाय च सत्त्वं शुद्धसत्त्वमयं रूपं बिभर्षि,स्वलीलारूपेणाचारेण सनातनं वेदपथं च बिभर्षि पुष्णासि, कथंभूतः? परः प्रकृतिपुरुषविलक्षणः पुरुषोऽपि वर्णाश्रमात्मा वर्णाश्रमोपलक्षितजीवात्मेव सन्नित्यर्थः, यद्वा-एवं वर्णाश्रमात्मा वर्णाश्रमयुक्तजीवात्मेव प्रतीयमानोऽपि भवान्परः पुरुषः परमपुरुष एवेत्यर्थः ॥ १८ ॥

मु ॥ जनसंग्रहमाहुः—अथापीति त्रिभिः ॥ यद्यपि परमपुरुषो भवान्, अथापि स्वजनाभिगुप्तये खलनिग्रहाय च तद्विरोधिसंहरणाय च काले स्वजनानर्थोदयसमये सत्त्वं शुद्धसत्त्वमयं विग्रहं बिभर्षि, स्वलीलया आचारेण वेदपथं च बिभर्षि, अतो वर्णैराश्रमैश्च युक्त आत्मा देहो यस्य स भवसि ॥ १८ ॥

वी ॥ यतो वेदपथं बिभर्षि, अत एव ब्राह्मणान्बहुमन्यस इत्याहुः—ब्रह्मतइतिद्वाभ्याम् ॥ शुद्धं भ्रमविप्रलिप्सादिपुरुषदोषासंस्पृष्टं ब्रह्म वेदः ते तव हृदयम् अन्तरङ्गं, तद्ब्रह्म विशिंषन्ति—तपइत्यादिना । यत्र यतो वेदात् तपआदिभिस्सह सत् परमार्थं व्यक्तं कार्यम् अव्यक्तं कारणं यद्वा व्यक्तं शरीरम् अव्यक्तमात्मस्वरूपं ततः ताभ्यां परं विलक्षणं परमात्मस्वरूपं च उपलब्धं यथावदवगतं, यत्तत्त्वत्रयतपआदियाथात्म्यावेदकं ब्रह्म तत्तव हृदयमित्यर्थः, तत्र तपोऽनशनादिरूपं, स्वाध्यायोऽध्ययनं, संयमः वर्णाश्रमानुरूपो धर्मः ॥ १९ ॥

मु ॥ अत एव ब्राह्मणेषु बहुमानमपि करोषीति सकौतुकमाहुः—ब्रह्म वेदाख्यं शुद्धं परिशुद्धं ते हृदयं संस्काररूपेण हृदये तिष्ठतीत्यर्थः, "संस्कारास्तेऽभवन्वेदाः" इति ह्युक्तम्, यद्वा—तपःप्रभृतिभिः शुद्धं परिशुद्धः ब्रह्म ब्राह्मणः ते हृदयं "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति ह्युक्तम्, पूज्यत्वेन हृदि स्थितमित्यर्थः, यत्र त्वयि सव्यक्तं स्वकार्यसहितम् अव्यक्तं कारणमुपलब्धं, यद्वा—व्यक्तं शरीरं ततश्शरीरात्परमव्यक्तम् आत्मस्वरूपं यत्रोपलब्धमिति तदाधारत्वमुच्यते ॥ १९ ॥

---

१. सव्यक्तं- मु-भा-प्र-पा ॥

तस्माद्ब्रह्मकुलंस्थानंशास्त्रयोनेर्महात्मनः।सभाजयसि[1]तद्धामतद्ब्रह्मण्याग्रणीर्भवान्॥
अद्यनोजन्मसाफल्यंविद्यायास्तपसोदृशोः।त्वयासङ्गम्यसद्गत्यायदेतच्छ्रेयसां[2]परम्
तस्मैनमोभगवतेकृष्णायाकुण्ठमेधसे।स्वयोगमाययाच्छन्नमहिम्नेपरमात्मने ॥ २२
नयंविदन्त्यमीभूपाएकारामाश्चवृष्णयः।मायायवनिकाच्छन्नमात्मानंकालमीश्वरम्

वी ॥ तस्मादिति ॥ यस्मादुक्तविधं ब्रह्म तव हृदयं तस्मादित्यर्थः, शास्त्रं वेदः योनिः स्वप्रमितिकारणं यस्य तस्य सर्वान्तरात्मनः तव ब्रह्मकुलं स्थानम् उपलब्धिस्थानं, त्वद्याथात्म्यावबोधकवेदाधारभूतमित्यर्थः, एवं हेतुनिर्देशः, तस्मात्तद्धाम ब्राह्मणकुलरूपं धाम सभाजयसि बहुमन्यसे, किंच ब्रह्मण्यानां ब्राह्मणान् बहुमन्यमानानामग्रणीः श्रेष्ठश्च भवान्, अतोऽपि सभाजयसीति भावः ॥ २० ॥

मु ॥ तस्मात् वेदाधारत्वात् ब्राह्मणधारकत्वाच्च ब्रह्मकुलं ब्राह्मणकुलं शास्त्रयोनेः शास्त्रप्रमाणकस्य तव शेषभूतम्, आत्मनस्तव सद्धाम उत्तमस्थानम्, तेषां हृत्पदे वसतीत्यर्थः, ब्राह्मणकुलं सभाजयसि, तस्मात् ब्रह्मण्यानामग्रणीरसीत्यर्थः, तस्मात्तवेदं जनसंग्रहणमात्रम् ॥ २० ॥

वी ॥ आत्मनां कृतार्थतामाविष्कुर्वन्ति—अद्येति॥ सतां साधूनां गत्या प्राप्यप्रापकभूतेन त्वया सङ्गम्यनोऽस्माकम् अद्य जन्मसाफल्यं जातं, तथा विद्यायाः तपसोः दृशोर्नेत्रयोश्च साफल्यमित्यन्वयः, कुतः? यद्यतः एतत्त्वत्सङ्गमनं श्रेयसामपि परमुत्कृष्टं श्रेयः ॥ २१ ॥

मु ॥ वयं तु तव संगत्या कृतार्था इत्याहुः—अद्येति षड्भिः ॥ न केवलं जन्मनस्साफल्यम्, विद्यादीनामपि साफल्यमित्यर्थः, यत् यस्मात्कारणात् त्वं श्रेयसां पुरुषार्थानां परः उत्कृष्टः,तेन सतां गत्या त्वया संगम्य संगतिमात्रेण कृतार्था इति शेषः, यद्वा त्वया संगम्य नो जन्मसाफल्यमित्यर्थः ॥ २१ ॥

वी ॥ किंच त्वां यथावद्विज्ञातुं न शक्नुम इत्यभिप्रायेण प्रणेमुः—तस्मादिति ॥ स्वयोगमायया स्वासाधारणाश्चर्यशक्त्या च्छन्नो गूढो महिमा ऐश्वर्यं यस्य तस्मै परमात्मने अन्तःप्रविश्य प्रशासनेन भर्त्रे ॥ २२ ॥

मु ॥ संसारोत्तारको नमस्कार एवेति मत्वा नमस्कुर्वन्ति—नमइति ॥ तस्मै अस्मदनुग्रहार्थमवतीर्णाय स्वयोगमायया च्छन्नमहिम्ने परमात्मने भगवते कृष्णाय, भगवत्त्वे हेतुः—अकुण्ठमेधसे सर्वज्ञायेति ॥ २२ ॥

वी ॥ केवलं वयमेव न शक्नुमोऽपि तु शश्वत्सहचरा वृष्णयोऽपीत्यभिप्रेत्याहुः—नेति ॥ एकस्मिन् स्वात्मन्येव आरमन्त इति तथा, ते केवलप्रत्यगात्मानुभवपराश्च यं त्वां न विदन्ति यथावन्न विदन्ति, कथंभूतं? सर्वजीवमोहिनी मायैव यवनिका तिरस्करिणी तया च्छन्नं भूपादिज्ञानाविषयम् आत्मानमीश्वरम् अन्तरात्मतया सन्तमपि कालं बहिः कालरूपेण परिच्छिन्दन्तम् ॥ २३ ॥

मु ॥ छन्नमहिमत्वे लिङ्गमाहुः—नयमिति ॥ एकारामाः एकावासा अपि मायैव प्रकृतिरेव यवनिका तया च्छन्नं न विन्दन्ति न जानन्तीत्यर्थः ॥ २३ ॥

१. सद्धाम. मु-मा-प्र-पा ॥ २. परः. मु-भा-प्र-पा ॥

यथाशयानःपुरुषआत्मानंगुणतत्त्वदृक्।[१]नाममात्रेन्द्रियाभातंनवेदरहितंपरम्॥ २४
एवंत्वामाश्रितंब्रह्मन्नाममात्रेन्द्रियेहया।माययाविभ्रमच्चित्तोनवेदस्मृत्युपप्लवात्॥२५
तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदि कृतं सुविपक्वयोगैः।
उत्सिक्तभक्त्युपहृताशयजीवकोशाआपुर्भवद्गतिमतोऽनुगृहाणभक्तान्॥

वी॥ एतत्सदृष्टान्तमाहुः—यथेति॥ गुणतत्त्वदृक् गुणेषु सत्त्वादिगुणकार्येषु शब्दादिविषयेषु तत्त्वदृक् पुरुषार्थदर्शी यद्वा गुणतत्त्वं गुणपरिणामरूपं तत्त्वं देहमात्मतया पश्यतीति तथा. सः शयानः पुरुषो यथा नाममात्रेन्द्रियाभातं, मात्रशब्देन रूपं विवक्षितम्, स्वाप्ननामरूपेन्द्रियैरवभातमुपलक्षितं युक्तमित्यर्थः, तमात्मानं वेद, नतु स्वतो नामादिरहितं परं देहाद्विलक्षणमात्मानं वेद ॥ २४ ॥

मु॥ तत्र दृष्टान्तमाह—यथेति॥ शयानः पुरुषः स्वप्ने गुणानां विषयाणां तत्त्वदृक् स्वरूपं पश्यन् नाममात्रेन्द्रियाभासं देवदत्तादिनाम्ना इन्द्रियैश्च आभासः प्रकाशो यस्य तम् आत्मानं नामादियुक्तम् आत्मानमित्यर्थः, वेद, रहितं नामादिरहितं देहात् परम् आत्मानं न वेद, यद्वा स्वप्ने व्याघ्रादिनाम्ना इन्द्रियेणच आभासो यस्य तम् आत्मानं वेद व्याघ्रादिरूपं वेद, तद्रहितं देवदत्तादिरूपम् आत्मानं न वेदेत्यर्थः ॥ २४ ॥

वी॥ एवं जाग्रत्पुरुषोऽपि हे ब्रह्मन् मायया त्वन्मायामूलया नाममात्रेन्द्रियेहया नाममात्रेन्द्रियानुगुणया चेष्टया यः स्मृत्युपप्लवः स्वात्मपरमात्मयाथात्म्यविषयस्मृतेः प्रमोषः तस्माद्विभ्रमत् अनात्मानं देहमात्मतया परतन्त्रं स्वतन्त्रतया च गृह्णत् चित्तं यस्य सः त्वामाश्रितं कर्तरि क्तः, तं प्रत्यगात्मानमेव न वेद, प्रत्यगात्मनः परमात्मानं त्वां न वेदैवेति कैमुत्यसिद्धमित्यर्थः ॥ २५ ॥

मु॥ एवमयं जनो जाग्रत्पुरुषोऽपि देहाद्यतिरिक्तमात्मानमेव न वेद, किं पुनः परमात्मानमित्याह—एवं सुप्तप्रायोऽयं जनः नाममात्रे इन्द्रियस्य मनस ईहा व्यापारो यस्यां तया मायया विभ्रमच्चित्तं यस्य सः त्वां परमात्मानं न वेद न जानाति, स्मृत्या उपप्लवात् "ध्रुवा स्मृतिः" इति श्रुतिसिद्धोपासनान्वयाभावादित्यर्थः, हे ब्रह्मन् स्वरूपतो गुणैश्चानवधिकातिशय ॥ २५ ॥

वी॥ तर्हि कैरप्यविज्ञेयोऽहमनुपास्योऽमोक्षदश्चेत्यत आहुः—तस्येति॥ अघौघस्य मर्षं शुद्धिं करोति यद्गङ्गादितीर्थं तस्यास्पदमाश्रयं ते तव अङ्घ्रिं सुविपक्को योगो भक्तियोगो येषां तैः हृदि कृतं साक्षात्कृतं वयमधुना ददृशिम,सुविपक्वयोगैर्हृदि कृतमित्यनेन योगपरिशुद्धमनोदृश्यत्वमुक्तम्, अतः कैश्चिदप्यविज्ञेयत्वमनुपास्यत्वं च निरस्तम्, उत्सिक्तयोद्रिक्तया भक्त्या अपहृत आशयो वासना जीवकोशः अज्ञानरूपः कोशश्च येषां ते कोशवदावारकत्वात्कोशत्वरूपणं भवद्गतिं प्रापुः,अनेन मुक्तप्राप्यत्वमुक्तं, यत एवम् अतो भक्तानस्माननुगृहाण ॥ २६ ॥

मु॥ एवं भगवज्ज्ञानं दुर्लभमित्युक्तम्, इदानीं त्वत्कृपया त्वत्पादपङ्कजं दृष्टमित्याहुः—तस्य ज्ञातुमपि दुर्लभस्य अघौघमर्षतीर्थास्पदम् अघौघस्य मर्षणं नाशकं यत्

---

१. नाममात्रेन्द्रियाभासं. मु-भा-प्र. पा ॥

श्रीशुक उवाच—

[1]इतीदमुक्त्वादाशार्हंधृतराष्ट्रंयुधिष्ठिरम्। राजर्षेस्वाश्रमान्गन्तुंमुनयोदधिरेमनः॥२७
तद्वीक्ष्यतानुपव्रज्यवसुदेवोमहायशाः। प्रणम्यचोपसङ्गृह्यबभाषेदंसुयन्त्रितः॥ २८

वसुदेव उवाच—

नमोवस्सर्वदेवेभ्यऋषयश्श्रोतुमर्हथ।कर्मणाकर्मनिर्हारोयथास्यान्नस्तदुच्यताम्॥२९

श्रीनारद उवाच—

नातिचित्रमिदंविप्रावसुदेवोबुभुत्सया।कृष्णंमत्वाऽर्भकंयन्नःपृच्छतिश्रेयआत्मनः॥

---

तीर्थं गङ्गाख्यं तस्यास्पदं सुविपक्वो योगो भक्तिलक्षणो येषां तैः हृदि कृतं ननु दृष्टं ते अङ्घ्रिं ददृशिम दृष्टवन्तो वयम्, अतोऽस्मान् भक्तान् अनुगृहाण भक्तान् कृत्वा अनुग्रहं कुर्वित्यर्थः, ननु किं भक्त्या ? यथापूर्वं तप एव तप्यतामिति,नेत्याह—उत्सिक्ता उद्रिक्ता या भक्तिः तया अपहृतः निरस्तः आशयः कर्मवासना जीवकोशः कर्मनिबन्धनो देहश्च येषां ते भवतः गतिं परमपदाख्यम् आपुः, अतः अस्मान् भक्तान् अनुगृहाणेति ॥ २६ ॥

वी ॥ इतीति ॥ दाशार्हं श्रीकृष्णम् इदमुक्त्वा अनुज्ञां पृष्ट्वेत्यर्थः, हेराजर्षे मनो दधिरे मनश्चक्रुः ॥ २७ ॥

मु ॥ दाशार्हं कृष्णम् अनुज्ञाप्य मुनयः स्वाश्रमात् गन्तुं मनो दधिरे ॥ २७ ॥

वी॥ तदिति॥ तन्मनोधानं वीक्ष्य तान्मुनीन् उपव्रज्य समीपमेत्य प्रणम्योपसङ्गम्य चरणौ पाणिभ्यां धृत्वा सुयन्त्रितोऽवहितचित्त इदं वक्ष्यमाणं बभाषे ॥ २८ ॥

मु॥ उपसंगृह्य चरणौ पाणिभ्यां धृत्वा, बभाषेदमिति सन्धिरार्षः, सुयन्त्रितः सुतरां भक्तिवशस्सन् ॥ २८ ॥

वी ॥ सर्वे देवा येषु तेभ्यो युष्मभ्यं नमः हेऋषयः श्रोतुं मद्वच इति शेषः,"यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति" इतिश्रुतिप्रसिद्ध्यभिप्रायेण सर्वदेवेभ्य इत्युक्तम्, किं तद्वच इत्यत आह—कर्मणेति।यथा यथानुष्ठितेन कर्मणा वर्णाश्रमानुगुणेन कर्मणा भगवद्भक्तियोगोत्पत्तिप्रतिबन्धकानां प्राचीनपुण्यापुण्यात्मकानां निर्हारस्स्यादिति, तदुच्यतां तत्रोत्तरमुच्यतामित्यर्थः ॥ २९ ॥

मु॥ सर्वे देवा येषु ते तेभ्यः, "यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः, यथा येन कर्मणा यथा कृतेन वा कर्मनिर्हारः कर्मबन्धक्षपणम् ॥ २९ ॥

वी ॥ इत्थं पृष्टेषु मुनिषु किं सर्वज्ञं कृष्णं हित्वाऽस्मान् पृच्छतीत्येवं संशयितवत्सु तान्प्रति प्रश्नकारणमुत्थापयन्नाह नारदः—नातिचित्रमिति चतुर्भिः॥हेविप्राः वसुदेव आत्मनः स्वस्य श्रेयः श्रेयस्साधनं बोद्धुमिच्छया नोऽस्मान्पृच्छतीत्येतन्नातिचित्रं, तत्र हेतुः—कृष्णमर्भकं मत्वेति । मत्वा नः पृच्छतीति संबन्धः ॥ ३० ॥

मु ॥ कृष्णं हित्वा अस्मान् पृच्छतीति विस्मितान् प्रत्याह—हे विप्राः इदं न चित्रम्,यद्वसुदेवः कृष्णम् अर्भकं स्वापत्यम् अज्ञमिति वा मत्वा आत्मनः श्रेयस्साधनं कर्म नः अस्मान् बुभुत्सया बोद्धुमिच्छया पृच्छतीति ॥ ३० ॥

---

१. इत्यनुज्ञाप्य. मु-भा-प्र. पा ॥

संनिकर्षोहिमर्त्यानामनादरणकारणम्।गाङ्गंहित्वायथान्याम्भस्तत्रत्योयातिशुद्धये॥

यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै ।
स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२

तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम् ।
प्राणादिभिस्स्वविभवैरुपगूढमज्ञो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३

---

वी ॥ तत्कुतइत्यत आह—संनिकर्ष इति॥ हि यस्मात्सन्निकर्षः निरन्तरसान्निध्य-मनादरणकारणं, ततः कृष्णमर्भकं मत्वेत्यर्थः, सन्निकर्षस्यानादरणकारणत्वे दृष्टान्तः—गाङ्गमिति। यथा तत्रत्यो गङ्गातीरस्थो गाङ्गमम्भो हित्वा अनादृत्य आत्मनो विशुद्धये विशुद्ध्यर्थम् अन्याम्भः प्रतियाति पुण्यजलान्तरं याति, तद्वत् ॥ ३१ ॥

मु ॥ हि यस्मात् मर्त्यानां सन्निकर्षः प्रत्यासक्तिः अनादरणकारणं भवति, तत्र दृष्टान्तो—गाङ्गमिति। तत्रत्यो गङ्गातीरस्थः ॥ ३१ ॥

वी ॥ एवं सन्निकर्षस्यानादरकारणत्वमुक्त्वा सर्वज्ञत्वानभिज्ञानमपि तत्कारण-मिति वक्तुं तावत्कृष्णस्य नित्यसर्वज्ञतामाह—यस्येति॥ यस्य कृष्णस्यानुभूतिः ज्ञानं कालादिभिर्न रिष्यति न नश्यति, तं कृष्णमित्युत्तरेण संबन्धः, यथाऽस्मदादीनामनु-भूतेः कालादिभिः प्रमोषः, तथा नेश्वरस्येति भावः, अस्य जगतः उत्पत्त्यादिना इत्या-दिशब्देन प्रलयः गुणास्सत्त्वादयस्त्रयः कुतश्चन उक्तातिरिक्तादन्यस्मादपि कालादयो ह्यन्येषां ज्ञानलोपहेतवः, तैरसंकुचितज्ञान इत्यर्थः ॥ ३२ ॥

मु ॥ कृष्णे अर्भकत्वधीरज्ञानकृतेत्याह—यस्यानुभूतिः कुतश्चन न रिष्यति न न-श्यति, तदाह—कालेन कर्कटिकाफलवत् अस्य जगतः लयोत्पत्त्यादिनापि स्वतः बिल्वादिवत् अन्यस्मात् मुद्गरादिवत् रजस्तमोगुणाभ्यां क्षेत्रज्ञानामिव कालो जन्म प्रल-योगुणत्रयं वयश्चेत्यन्येषां ज्ञानलोपहेतवः, तैर्नास्य ज्ञानसंकोच इत्यर्थः ॥ ३२ ॥

वी ॥ तदेव सदृष्टान्तमुपपादयति—तमिति ॥ क्लेशाः कर्माणि च पुण्यापुण्यात्म-कानि तेषां परिपाकः सुखदुःखे च गुणानां सत्त्वादीनां पुनःपुनः प्रवाहश्च तैरव्याहतो-ऽनुभवो महिमा यस्य तमद्वितीयं स्वतुल्यरहितमीश्वरं कृष्णं स्वविभवैः स्वकार्यैः प्राणादिभिः उपगूढमावृतं प्राकृतेन्द्रियतद्व्यापारैस्तिरोहितानुभवं मन्येत मन्यते. अज्ञ इति हेतुगर्भं, स्वयमज्ञत्वादेवंभूतमपीश्वरं स्वतुल्यं मन्यत इत्यर्थः, अत्र दृष्टान्तः—मेघ-हिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥

मु ॥ एवं कुतश्चिदव्याहतानुभवम् असंकुचितज्ञानम् ईश्वरं नियन्तारम् अद्वितीयं समाभ्यधिकरहितं तं कृष्णं क्लेशैः रागादिभिः तद्धेतुना कर्मणा च तस्य परिपाकेन जा-त्यायुर्भोगैश्च गुणानां सत्त्वादीनां प्रवाहैश्च प्राणादिभिः स्वविभवैः स्वकार्यैश्च उपगूढं छन्नम् अज्ञो मन्येत,अन्यैरलक्ष्यत्वे दृष्टान्तमाह—सूर्यमिवेति। मेघहिमोपरागैः जलदतु-षारराहुभिः ॥ ३३ ॥

अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम् ।
सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४

कर्मणा कर्मनिर्हार एष साधु निरूपितः।यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरंमखैः॥
चित्तस्योपशमोऽयंवैकविभिश्शास्त्रचक्षुषा।दर्शितस्सुगमोयोगो[1]धर्मश्चात्रसुखावहः॥
अयंस्वस्त्ययनःपन्थाद्विजातेर्गृहमेथिनः।यच्छ्रद्धयाप्तवित्तेनशुक्लेनेज्येतपूरुषः॥ ३७
वित्तेषणांयज्ञदानैर्गृहैर्दारसुतेषणाम्।आत्मलोकेषणांदेवकालेनविसृजेद्बुधः॥
ग्रामे त्यक्तेषणास्सर्वे ययुर्धीरास्तपोवनम् ॥ ३८

---

वी॥ एवमुक्त्वा सर्वे मुनयस्संभूयोचुरित्याह—अथेति॥ आभाष्य संबोध्य सर्वेषां राज्ञां शृण्वतां सताम् अच्युतरामयोरपि शृण्वतोस्सतोः ॥ ३४ ॥

मु ॥ अच्युतरामयोश्च शृण्वतोः ॥ ३४ ॥

वी॥ उक्तिमेवाह—कर्मणेति॥ साधु यथा तथा एष एवेति निरूपितः,कोऽसौ? यत्सर्वेषां यज्ञानामीश्वरं निर्वाहकं विष्णुं श्रद्धया मखैर्यज्ञैराराधयेदित्येषः ॥ ३५ ॥

मु ॥ सर्वयज्ञेश्वरं विष्णुं श्रद्धया मखैः यजेदितियत्,एष कर्मणां कर्मनिर्हारः साधुभिर्निरूपितः ॥ ३५ ॥

वी ॥ चित्तस्येति॥ अयं विष्ण्वाराधनरूपो धर्मः अत्र लोके चित्तस्योपशमः शान्त्यावहः सुखावहः निरतिशयमोक्षसुखावहश्च, अतोऽयमेव सुगमोपाय इति मुनिभिश्शास्त्रमेव चक्षुस्तेन दर्शितः, ण्यन्ताद्दृशेर्निवृत्तप्रेरणात्कर्मणि क्तः, दृष्ट इत्यर्थः ॥ ३६ ॥

मु ॥ चित्तस्योपशमः शान्तिहेतुः योगः मुक्त्युपायः सुगमः सुखेन ज्ञातुं शक्यम् आत्ममुदम् आवहतीति तथा ॥ ३६ ॥

वी ॥ अयमिति॥ द्विजातेस्त्रैवर्णिकस्य गृहाश्रमिणः श्रेयःप्रापकोऽयमेव पन्थाः, कोऽसौ? शुक्लेन शुद्धेन आप्तवित्तेन परपीडादिकमन्तरेण लब्धेन धनेन पूरुषः परम पुरुषः श्रद्धया इज्येतेत्ययं भक्तियोगोत्पत्तिप्रतिबन्धनिरसनद्वारा मोक्षसुखावहः पन्थाः केवलमीश्वराराधनात्मकयज्ञ एवेत्यर्थः ॥ ३७ ॥

मु ॥ स्वस्त्ययनः क्षेमप्रापकः शुक्लेन पापराहित्याच्छुद्धेन पूरुषः परमपुरुषः इज्येतेति यत् अयमित्यन्वयः, अनेन 'नकर्मणा न प्रजया धनेन' इति कर्मणोऽमृतत्वप्राप्त्यनुपायत्वकथनं केवलकर्मविषयमित्यभिप्रायः ॥ ३७ ॥

वी॥ आप्तवित्तेनेत्युक्तम्, सम्यग्व्ययएव वित्तस्य प्रयोजनमिति वदन्तः प्रसङ्गादन्यदप्याहुः— वित्तेषणामिति॥ यज्ञैर्दानैश्च वित्तेषणां वित्तेच्छां विसृजेत्, अर्थस्य सम्यग्व्ययेन तद्रक्षणदुःखं परिहरेदित्यर्थः,गृहैर्गृहोचितैर्भोगैर्दारसुतेषणां विसृजेत् तदनुभवे सत्येवैतावताऽलमिति तदौत्सुक्यनिवृत्तेः, मृते देहे आत्मनस्स्वर्गादिलोकेषणां कालेन स्वर्गादीनामपि कालवशात् क्षयिष्णुत्वनिरूपणेन त्यजेदित्यर्थः, तथा हि धीराः तावत् ग्रामे त्यक्ताः ईषणाः पूर्वोक्ताः तिस्रः यैस्ते ततस्तपोवनं ययुः ॥ ३८ ॥

मु ॥ ईषणात्रयत्यागप्रकारमेवाह—वित्तेषणामिति ॥ वित्तफलभूतैर्यज्ञैः दानैश्च वि-

---

१. धर्मश्चात्ममुदावहः. मु-भा-प्र. पा ॥

ऋणैस्त्रिभिर्द्विजोजातोदेवर्षिपितॄणांप्रभो।यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्यचरन्पतेत्॥
त्वंत्वद्यमुक्तोद्वाभ्यांवैऋषिपित्रोर्महामते।यज्ञैर्देवर्णमुन्मुच्यनिर्ऋणोऽशरणोभव॥ ४०
वसुदेवभवान्नूनंभक्त्यापरमयाहरिम्।जगतामीश्वरंप्रार्चस्सयद्वांपुत्रतांगतः ॥ ४१

---

त्तेषणां वित्तेच्छां विसृजेदिति अर्थसंरक्षणव्यसनं परिहरेदित्यर्थः,ग्रहैः गार्हस्थ्यानुभवेन दारसुतेषणां विसृजेत्,दारपुत्रलाभे सति तदनुभवेनैव तदौत्सुक्यनिवृत्तेः एतावतालमिति बुद्धिस्स्यादित्यर्थः, हेदेव वसुदेव देहे नष्टे आत्मनः स्वर्गादिलोकेषणां कालेन कालपरिच्छिन्नत्वादनित्यबुद्ध्या बुधो विसृजेत,यद्वा देवकालेन देवानामपिमृत्युना मृत्युहेतुभूतेनेत्यर्थः, अत्र सदाचारं प्रमाणयन्ति—ग्रामइति। ग्रामे गृहे स्थित्वा त्यक्ता ईषणा यैस्ते धीराः तस्मात् ग्रामात् तपोवनं ययुः ॥ ३८ ॥

वी ॥ इतोऽपि विष्णुर्यष्टव्य इत्याहुः—ऋणैरिति॥ हेविभो देवानम् ऋषीणां पितॄणां च ऋणैः त्रिभिः द्विजः त्रैवर्णिको जातः जायते, अतस्तानि देवर्षिपितृऋणानि क्रमेण यज्ञाध्ययनपुत्रैरनिस्तीर्य अनपाकृत्य चरन्पतेत्, नरकइति शेषः, अत्र "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति श्रुतिः, "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" इति स्मृतिश्चानुसन्धेया, श्रुतौ ब्रह्मचर्यशब्दः तत्पूर्वकाध्ययनपरः ॥ ३९ ॥

मु ॥ किञ्च ऋणैरपि देवर्षिपितॄणां संबन्धिभिः त्रिभिःऋणैस्सह द्विजः त्रैवर्णिको जातः, अतो यज्ञाध्ययनपुत्रैः तान् अनिस्तीर्य तेषाम् ऋणानि अनपाकृत्य गेहं त्यजन् पतेत्, तथा च श्रुतिस्मृती—"जायमानो वै ब्रह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इत्यादि, "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" इति ॥ ३९ ॥

वी ॥ अतस्त्वयाऽधुना देवऋणमेवापाकर्तव्यम्, ऋषिपितृऋणाभ्यां तु मुक्त एव त्याहुः—त्वं त्विति॥ हे महामते उन्मुच्य अपाकृत्य निर्ऋणः ऋणत्रयरहितः अशरणः गृहसङ्गरहितः भव ॥ ४० ॥

मु ॥ ऋषिपित्रोः संबन्धिभ्यां द्वाभ्याम् ऋणाभ्यां मुक्तः, अनृणः ऋणनिर्मुक्तः अशरणो भव गृहसंगरहितो भव ॥ ४० ॥

वी ॥ हे वसुदेव भवान् नूनं हरिमाराधितवान्, कुतः ? यद्यस्मात्स भगवान् स्वयं वां युवयोः पुत्रतां गतः ॥ ४१ ॥

मु ॥ किं तर्हि यज्ञम् समाप्य मया गृहात्प्रव्रजनं कार्यमिति ? नेत्याह—हे वसुदेव भवान् परमया भक्त्या जगतामीश्वरं हरिं प्रार्चः अर्चितवानसि, यत् यस्मात् वां युवयोः, अयं भावः—हरिभजनार्थं हि साधवो गृहाद्वनं गच्छन्ति, स च पुत्ररूपी भवतो गृह एव वर्तते, ऋणान्यपाकृत्य गृहादिषु त्यक्तसङ्गोऽत्रैव स्थित्वा पुत्रबुद्धिमपहाय भगवद्बुद्ध्या तमेव भज—इति ॥ ४१ ॥

श्री शुक उवाच—

इतितद्वचनंश्रुत्वावसुदेवोमहामनाः।तानृषीनृत्विजोवव्रे[1]मूर्ध्नाऽऽनम्यप्रसाद्यच ॥

तएनमृषयोराजन्वृताधर्मेणधार्मिकम्।तस्मिन्नयाजयन्क्षेत्रेमखैरुत्तमकल्पकैः॥ ४३

तद्दीक्षायांप्रवृत्तायांवृष्णयःपुष्करस्रजः।स्नातास्सुवाससोराजन्राजानस्सुष्ठ्वलङ्कृताः॥

तन्महिष्यश्च मुदिता निष्ककण्ठ्यस्सुवाससः ।
दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५

नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः । ननृतुर्नटनर्तक्यस्तुष्टुवुस्सूतमागधाः ॥
जगुस्सुकण्ठ्यो गन्धर्व्यः सङ्गीतं सहभर्तृकाः॥ ४६

तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः।पत्नीभिरष्टादशभिस्सोमराजमिवोडुभिः॥

---

वी॥ इतीति ॥ तद्वचनं तेषां वचः श्रुत्वा आनम्य प्रणम्य प्रसाद्य प्रसन्नान् कृत्वा ऋत्विजो वव्रे वृतवान् ॥ ४२ ॥

मु ॥ तद्वचनं तेषां वचनं श्रुत्वा उपसुत्य उपसंगम्य मूर्ध्ना आनम्य च तान् ऋषीनेव ऋत्विजो वव्रे ॥ ४२ ॥

वी॥ तइति ॥ एवं धर्मेण यथाविधि वृतास्ते ऋषयः तस्मिन् स्यमन्तकक्षेत्रे उत्तमकल्पकैर्मन्त्रतन्त्रद्रव्यादिलोपरहितैः मखैर्यज्ञैः तं वसुदेवमयाजयन् ॥ ४३ ॥

मु ॥ धर्मेण विधिना वृता उत्तमं भगवत्प्रीतिरूपफलं कल्पयन्तीत्युत्तमकल्पकाः, तैः ॥ ४३ ॥

वी ॥ एतदेव प्रपञ्चयति—तद्दीक्षायामित्यादिना॥ तद्दीक्षायां यज्ञदीक्षायां पुष्कराणां स्रजो येषां ते ॥ ४४ ॥

वी॥ तस्य वसुदेवस्य महिष्यः पत्न्यः आलिप्ताः कुङ्कुमादिभिः वस्तून्यर्हणानि पाण्योः यासां ताः ॥ ४५ ॥

मु ॥ तद्दीक्षायां प्रवृत्तायां वृष्णयोऽन्ये च राजानः तन्महिष्यश्च दीक्षाशालामुपाजग्मुः, महिषीणामेव विशेषणं—निष्ककण्ठ्य इति, पुष्करस्रज इति राज्ञाम्, अन्यत्समानम्, कस्य दीक्षाशालामित्यत आह—सुवाससइति। शोभने वाससी यस्य तस्य वसुदेवस्य, यजमानोऽपि सुवासा अभूदित्येतत्, सुवासस इत्यस्य स्त्रीणां विशेषणत्वे पौनरुक्त्यापत्तेरेवं व्याख्यातम्,सुगन्धेन अनुलेपनेन अनुलिप्ताः वस्तूनि उपायनद्रव्याणि पाणिषु येषां ते ॥ ॥ ४४ ॥ ४५ ॥

वी ॥ सूताः पुराणपाठकाः मागधा वंशावलिपाठकाः सहभर्तृकाः ॥ ४६ ॥

मु ॥ ॥ ४६ ॥

वी ॥ तमिति ॥ अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेनाक्तं तं वसुदेवम् उडुभिर्नक्षत्रैस्सहितं सोमराजं चन्द्रमिव अष्टादशभिः पत्नीभिः सहितमभ्यषिञ्चन्॥४७॥

मु ॥ अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेन ॥ ४७ ॥

---

१. मूर्ध्नानम्योपसुत्यच. मु-भा-प्र. पा ॥

ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः।स्वलङ्कृताभि[1]र्विबभौदीक्षितोऽजिनसंवृतः ॥४८
तस्यर्त्विजोमहाराजनूत्नकौशेयवाससः।ससदस्याविरेजुस्तेयथावृत्रहणोऽध्वरे॥ ४९
तदारामश्चकृष्णश्चस्वैस्वैर्बन्धुभिरन्वितौ।विरेजतुस्सुतैर्दारैर्देवेशौस्वविभूतिभिः ॥
ईजेऽनुयज्ञंविधिना अग्निहोत्रादिलक्षणैः।प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम्॥ ५१

अथर्त्विग्भ्योऽददात्काले यथाम्नातं सदक्षिणाः ।
स्वलङ्कृतेभ्योऽलंकृत्य गोभूकन्या महाधनाः ॥ ५२

पत्नीसंयाजावभृथ्यैश्चरित्वातेमहर्षयः।सस्नूरामह्रदेविप्रायजमानपुरस्सराः ॥ ५३

वी ॥ ताभिरिति ॥ दुकूलादिभिः अन्यैश्च विविधैर्विपुलालङ्कारैस्सुष्ठुलङ्कृताभिस्ताभिः पत्नीभिस्सह दीक्षितः अजिनेन संवृतः विरेजे ॥ ४८ ॥

मु ॥ स ताभिस्सह दीक्षितो बभाविति शेषः, कथंभूताभिः ? दुकूलादिभिः स्वलंकृताभिः विभवैरुपलक्षितः ॥ ४८ ॥

वी ॥ तस्य वसुदेवस्य संबन्धिनः ऋत्विजः नूत्नानि नवानि कौशेयानि वासांसि येषां ते सदस्यैः सभ्यैः सहिता विरेजुः. यथा वृत्रहण इन्द्रस्याध्वरे, तद्वत् ॥ ४९ ॥

मु ॥ वृत्रहणः इन्द्रस्य ॥ ४९ ॥

वी ॥ तदेति ॥ देवानां ब्रह्मादीनामपीशौ इति रामकृष्णयोर्विशेषणम्, जीवेशाविति पाठान्तरं, तदा जीवानाम् ईशावित्यर्थः, देवेशैस्स्वविभूतिभिरिति च पाठः, तदा स्वा विभूतयो येषां तैर्देवेशैः देवश्रेष्ठांशसंभूतैरिति स्वसुतविशेषणम् ॥ ५० ॥

मु ॥ जीवेशौ सर्वजीवानामीश्वरौ स्वविभूतिभिः इन्द्रादिभिः ॥ ५० ॥

वी ॥ ईजइति ॥ अनुयज्ञं प्रतियज्ञम् ईजे इष्टवान्, तदेवाह—विधिनेति। आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः, तेभ्यश्चोदनालिङ्गादिभिरतिदेशप्राप्ताङ्गा वैकृताः सौर्यसत्रादयः,तैस्सर्वैः अग्निहोत्रादिनामकैः होमैश्च द्रव्यज्ञानक्रियेश्वरं भूतपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकनिर्वाहकं भगवन्तमीजे, यद्वा पुरोडाशादिद्रव्यसाङ्ककर्मविषयज्ञानतदनुष्ठानानां प्रभुम् ॥ ५१ ॥

मु ॥ सच अनुयज्ञं प्रतियज्ञं स्वविभूतिभिः सह द्रव्यज्ञानक्रियेश्वरं पञ्चभूतज्ञानेन्द्रियकर्मेन्द्रियनिर्वाहकं, यद्वा पुरोडाशादिद्रव्यकर्मविषयज्ञानतदनुष्ठानानां प्रभुं प्राकृतैः वैकृतैः प्रकृतिभिर्विकृतिभिश्च, आम्नातसर्वाङ्गाः प्राकृता ज्योतिष्टोमादयः दर्शपूर्णमासादयश्च,तेभ्यः चोदनालिङ्गादिभिरतिदेशप्राप्ताङ्गा वैकृताः सौर्यसत्रादयो महायज्ञाः॥

वी ॥ अथेति॥ स वसुदेवः काले विहितकाले यथाम्नातं यथोक्तं दक्षिणाः ऋत्विग्भ्यः स्वयमप्यलङ्कृत्य तावत्ततो महाधनाः अनर्घाः गोभूकन्याश्च ददौ ॥ ५२ ॥

मु ॥ गोभूकन्याः काले दानयोग्ये स्वलंकृतेभ्यः ऋत्विग्भ्यः अलंकृत्य दक्षिणा अददात् ॥ ५२ ॥

वी॥ पत्नीसंयाजा अवभृथ्याश्च यागविशेषाः, तैश्चरित्वा इष्ट्वा रामह्रदे परशुरामनिर्मिते ह्रदे सस्नुः स्नानं चक्रुः ॥ ५३ ॥

मु ॥ सस्नुः अवभृथस्नानं चक्रुः ॥ ५३ ॥

---

१. विभवैः. मु-भा-प्र. पा ॥

स्नानालङ्कारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः ।
ततस्स्वलङ्कृता वर्णानाश्वभ्योऽन्नेन पूजयत् ॥ ५४

बन्धून्सदारान्ससुतान्पारिबर्हेणभूयसा।विदर्भकोसलकुरून्काशिकेकयसृञ्जयान् ॥
सदस्यर्त्विक्सुरगणान्नृभूतपितृचारणाः।श्रीनिकेतमनुज्ञाप्यशंसन्तःप्रययुःक्रतुम् ॥

धृतराष्ट्रोऽनुजः पार्थो भीष्मो द्रोणः पृथा यमौ ।
नारदो भगवान्व्यासस्सुहृत्संबन्धिबान्धवाः ॥ ५७

बन्धून्परिष्वज्य यदून्सौहृदक्लिन्नचेतसः ।
ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८

नन्दस्तुसहगोपालैर्बृहत्यापूजयाऽर्चितः।कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥
वसुदेवोऽञ्जसोत्तीर्यमनोरथमहार्णवम्।सुहृद्वृतःप्रीतमनानन्दमाहकरेस्पृशन् ॥ ६०

---

वी ॥ स्नानेति॥ स्नानादीनि ददौ स्नपयामास, तेभ्योऽलङ्कारवासांसि ददौ चेत्यर्थः, तत्र स्त्रियश्च सस्नुः सुष्ठ्वलङ्कृताश्चेति संबन्धः, आश्वभ्यः शुनोऽभिव्याप्य सर्वान् वर्णान् अन्नेन पूजयत् अपूजयत्, अडभाव आर्षः, आगमशास्त्रस्यानित्यत्वाद्वा ॥ ५४ ॥

मु ॥ स्नातो[१] वसुदेवः अलंकारवासांसि वन्दिभ्यः अदात्, तथा स्नातास्तस्य स्त्रियश्च अददुः, आश्वभ्यः शुनोऽभिव्याप्य अन्नेन पूजयत्, अडभाव आर्षः ॥ ५४ ॥

वी ॥ बन्धूनिति ॥ बन्ध्वादीन् पारिबर्हेण बहुमानार्थं देयद्रव्येण पूजयदिति संबन्धः ॥ ५५ ॥

मु॥ विदर्भादीन् बन्धून् भूयसा पारिबर्हेण प्रीतिदानेन पूजयत् ॥ ५५ ॥

वी ॥ सदस्येति ॥ सदस्यादयः श्रीनिकेतं कृष्णमनुज्ञाप्य अनुज्ञां पृष्ट्वा क्रतुं प्रशंसन्तो ययुः ॥ ५६ ॥

मु॥ ततः सदस्यादयः श्रीनिकेतनं कृष्णमनुज्ञाप्य क्रतुं शंसन्तः प्रययुः ॥ ५६ ॥

वी ॥ धृतराष्ट्र इति ॥ अनुजः विदुरः पृथा कुन्ती यमौ नकुलसहदेवौ सुहृदश्च संबन्धिनश्च बान्धवाश्च ते सौहृदेन सौहार्देन क्लिन्नम् आर्द्रं चेतो येषां ते विरहकृच्छ्रेण विश्लेषप्रयुक्तक्लेशेनोपलक्षिताः ययुः तथाऽपरे जनाश्च ययुः ॥ ५७ ॥ ५८ ॥

मु ॥ अथ संबन्धिनां स्वदेशगमनमाह—धृतराष्ट्र इति द्वाभ्याम् ॥ ५७ ॥

मु ॥ अनुजो विदुरः, पार्था युधिष्ठिरादयः, यमौ नकुलसहदेवौ, सौहृदेन क्लिन्नानि चेतांसि येषां ते ॥ ५८ ॥

वी ॥ नन्दस्त्विति ॥ बृहत्या महत्या पूजया समर्चितः गोपैस्सह न्यवात्सीदुषितवान्, तत्र हेतुत्वेन विशिनष्टि—बन्धुवत्सल इति ॥ ५९ ॥

मु ॥ ॥ ५९ ॥

वी॥वसुदेव इति॥मनोरथः यज्ञविषयः स एव महार्णवः तम् अञ्जसा सुखेनोत्तीर्य॥

मु ॥ मनोरथो यज्ञविषयः, तमेव महार्णवम् ॥ ६० ॥

---

१. स्नातो. मु-भा-प्र. पा ॥

वसुदेव उवाच—

भ्रातरीशकृतःपाशोनृणांयःस्नेहसंज्ञितः।तंदुस्त्यजमहंमन्येशूराणामपियोगिनाम् ॥
अस्मास्वप्रतिकल्पेयंयत्कृताज्ञेषुसत्तमैः।मैत्र्यर्पिताऽफला[१]चापिननिवर्तेतकर्हिचित्
प्रागकल्याश्वकुशलंभ्रातर्वोनाचरामहि।अधुनाश्रीमदान्धाक्षानपश्यामः[२]पुराकृतम्
माराज्यश्रीरभूत्पुंसःश्रेयस्कामस्यमानद।सुजनानुतबन्धून्वानपश्यति[३]मदान्धदृक् ॥

श्रीशुक उवाच—

एवंसौहृदशैथिल्यचित्तआनकदुन्दुभिः।रुरोदतत्कृतांमैत्रींस्मरन्नश्रुविलोचनः॥ ६५
नन्दस्तु सख्युः प्रियकृत्प्रेम्णा गोविन्दरामयोः ।

वी ॥ उक्तिमेवाह—भ्रातरिति ॥ हेभ्रातः य ईशेन भगवता कृष्णेन कृतः निर्मितः स्नेहलक्षणः पाशः तं शूराणां बलेन योगिनां ज्ञानेनापि दुस्त्यजं मन्य इत्यर्थः॥ ६१ ॥

मु ॥ शूराणां बलेन येगिनां ज्ञानेनापीत्यर्थः ॥ ६१ ॥

वी ॥ कुत इत्यत आह—अस्मास्विति ॥ यत् यस्मात् कृतमुपकारं न जानन्तीति तथा, तेष्वस्मासु सत्तमैर्भवद्भिः इयम् अप्रतिकल्पा अनुपमा मैत्री अर्पिता निहिता अफला प्रत्युपकारशून्यापि अधुनापि न निवर्तते ॥ ६२ ॥

मु ॥ तत्कुतः ? तत्राह—अस्मास्विति ॥ कृताज्ञेषु कृतम् उपकारम् अजानत्सु अस्मासु सत्तमैः भवद्भिः अप्रतिकल्पा अप्रतिकार्या अनुपमा वा मैत्रीयम् अर्पिता, अफलापि प्रत्युपकारशून्यापि कर्हिचित् यत् यस्मात् न निवर्तेत, तस्मात् ईशकृतः पाशोऽयं भवता दुस्त्यज इति गम्यत इत्यर्थः ॥ ६२ ॥

वी ॥ अफलत्वमेवाह—प्रागिति॥ हेभ्रातः प्राक् कंसकृतनिर्बन्धदशायाम् अकल्या असमर्थाः, हेतुगर्भमिदम्, अतो वोयुष्माकं कुशलं प्रियं नाचरामहि न कृतवन्तः, अधुनातु श्रीमदेनैश्वर्यमदेन अन्धे अक्षिणी येषां ते वयं पुरा कृतम् उपकारं न पश्यामः ॥

मु ॥ अफलत्वमेवाह—प्रागिति ॥ अकल्या असमर्थत्वात् पूर्वं वः कुशलं नाचरामहि वयं न कृतवन्तः, तर्हीदानीं क्रियतामिति तत्राह—श्रीमदेन अन्धानि अक्षाणि येषां ते पुरोवर्तिनोऽपि युष्मान् न पश्यामः ॥ ६३॥

वी ॥ अतो हे मानद श्रेयस्कामस्य पुंसो राज्यश्रीः माभूदिति प्रार्थना.कुतः? यतो मदान्धदृक्पुमान् सुजनान् साधून् उत अपि च बन्धून् न पश्यति ॥ ६४ ॥

मु ॥ अतो राज्यश्रीः मा अभूत्. अडागमश्छान्दसः ॥ ६४॥

वी॥ एवमिति॥ शुकोक्तिः, सौहृदेन शैथिल्यं स्वार्थे ष्यञ् ,शिथिलं चित्तं यस्य सः तत्कृतां नन्दकृतां मैत्रीं स्मरन्नश्रूणि विलोचनयोर्यस्य सः रुरोद ॥ ६५ ॥

मु ॥ ॥ ६५ ॥

वी ॥ नन्दस्त्विति ॥ सख्युर्वसुदेवस्य रामकृष्णयोश्च प्रियकृत् "लक्षणहेत्वोः" इति शता, प्रियं कर्तुमित्यर्थः, अतएव अद्य श्व इति प्रातर्निर्गमे अपराह्णे गम्यतामिति अपराह्णे निर्गमे श्वो गम्यतामित्येवं यदुभिर्वारितश्च, मानित इति पाठान्तरं, त्रीन्मासान्

१. वापि. पा ॥ २. पुरस्सतः. मु-भा-प्र-पा ॥ ३. ययान्धदृक्. पा ॥

अद्य श्व इति मासांस्त्रीन्यदुभि[1]र्वारितोऽवसत् ॥ ६६

ततःकामैःपूर्यमाणस्सव्रजस्सहबान्धवः।परार्ध्याभरणक्षौमनानानर्घपरिच्छदैः॥

वसुदेवोग्रसेनाभ्यांकृष्णोद्धवबलादिभिः।दत्तमादायपारिबर्हं[2]यापितोयदुभिर्ययौ॥

नन्दोगोप्यश्चगोपाश्चगोविन्दचरणाम्बुजे।मनःक्षिप्तंपुनर्हर्तुमनीशामधुरांययुः ॥ ६९२

बन्धुषुप्रतियातेषुवृष्णयःकृष्णदेवताः।वीक्ष्यप्रावृषमासन्नांपुनर्द्वारवतींययुः॥ ७०

जनभ्येःकथयांचक्रुर्यदुदेवमहोत्सवम्।यदासीत्तीर्थयात्रायांसुहृत्सन्दर्शनादिकम् ॥

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे चतुरशीतितमोऽध्यायः॥ ८४॥

---

अवसत्, मासानित्यत्यन्तसंयोगे द्वितीया ॥ ६६ ॥

मु ॥ सख्युर्वसुदेवस्य प्रियकृत् गोविन्दरामयोः स्वस्य प्रेम्णाच, अद्यश्वइति— प्रातर्गमनोद्योगे नाद्यैवापराह्णे तदानीमुद्योगे श्वो गमिष्यसीति पुनःपुनः मानितः याचितः त्रीन् मासान् तत्रैव अवसत् ॥ ६६ ॥

वी॥ तत इति॥ सव्रजः गोपैस्सहितः सबान्धवश्च परार्ध्यैश्श्रेष्ठैः आभरणैः क्षौमैः दुकूलैः नानाविधैः अनर्घैः परिच्छदैर्भोगोपकरणैरित्येवंविधैः कामैः पूर्यमाणः दत्तान्पारिबर्हानादाय यदुभिर्यापितो महता सैन्येन प्रस्थापितो ययौ ॥ ६७ ॥ ६८ ॥

मु ॥ ततः मासत्रयानन्तरं कामैः भोगद्रव्यैः परार्ध्यधनार्हाणि परार्ध्यानि आभरणक्षौमाणि नानाविधा अनर्घाश्च परिच्छदाः तैश्च आपूर्यमाणः सप्रजः प्रजाभिस्सहितः सहबान्धवश्च वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिश्च दत्तं पारिबर्हं प्रीतिधनं यदुभिर्याचितस्सन् आदाय ययौ, यापित इति पाठे प्रस्थापितः ॥ ६७ ॥ ६८ ॥

वी॥ नन्दो गोप्यश्चेति॥ गोविन्दस्य चरणाम्बुजे क्षिप्तं निहितं पुनर्हर्तुमसमर्थास्सन्तो ययुः ॥ ६९ ॥

मु ॥ गोविन्दचरणाम्बुजे क्षिप्तं मनः पुनर्हर्तुमनीशा अपि कथञ्चित् मधुरां ययुः॥

वी ॥ बन्धुष्विति ॥ बन्धुषु नन्दादिषु प्रतियातेषु प्रस्थितवत्सु कृष्णएव देवता येषां ते वृष्णयः प्रावृषं वर्षर्तुम् आसन्नां सन्निहितां वीक्ष्य ज्ञात्वा ॥ ७० ॥

मु ॥ ॥ ७० ॥

वी ॥ जनेभ्यइति ॥ यदुदेवस्य महोत्सवं यज्ञादिलक्षणं यच्च सुहृत्सन्दर्शनादिकं तत्सर्वं जनेभ्यो द्वारकास्थेभ्यः कथयामासुः ॥ ७१ ॥

मु ॥ तीर्थयात्रायां यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञोत्सवं सुहृद्दर्शनादिकं यच्च, तज्जनेभ्यः कथयांचक्रुः ॥ ७१ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां षडशीतितमोऽध्यायः ॥ ८६ ॥

---

१. मानितो. मु-भा-प्र-पा ॥ २. याचितो. मु-भा-प्र-पा ॥

श्रीशुक उवाच—

अथैकदाऽऽत्मजौप्राप्तौकृतपादाभिवन्दनौ।वसुदेवोऽभिनन्द्याहप्रीत्यासङ्कर्षणाच्युतौ
मुनीनांसवचश्श्रुत्वापुत्रयोर्धामसूचकम्। तद्वीर्यैर्जातविस्रम्भःपरिभाष्याभ्यभाषत।।
कृष्णकृष्णमहायोगिन्सङ्कर्षणसनातन।जानेवामस्ययत्साक्षात्प्रधानपुरुषौपरौ।। ३
यत्रयेनयतोयस्ययस्मैयद्यद्यथायदा।स्यादिदंभगवन्साक्षात्प्रधानपुरुषेश्वरः।। ४

---

वी ॥ अथ कदाचिद्वसुदेवदेवक्यावेदितयाथात्म्यस्य भगवतः प्रेताग्रजादानात्मकं चेष्टितमनुवर्णयति—अथेत्यादिना पञ्चाशीतितमेन ॥ कृतं पादाभिवन्दनं याभ्यां तौ रामकृष्णावभिनन्द्य प्राह ॥ १ ॥

मु ॥ एकदा स्वसन्निधिं प्राप्तौ ॥ १ ॥

वी ॥ किंच—मुनीनामिति ॥ सः वसुदेवः पुत्रयोः प्रभावसूचकं मुनीनां वचः 'वसुदेव भवान्नूनं भक्त्या परमया' इत्याद्युक्तं वचः स्मृत्वा तथा तयोः वीर्यैर्जातो विस्रम्भो जगदीश्वरत्वविषयविश्वासो यस्य सः परिभाष्य संबोध्य अभाषत ॥ २ ॥

मु ॥ धाम प्रभावः, तत्सूचकं जातविस्रम्भः उत्पन्नविश्वासः परिभाष्य संबोध्य ॥

वी ॥ तदेवाह—कृष्णेति ॥ प्राकृतावावां किमित्येवं संबोधयसीत्यत आह—जान इति ॥ वामिति "युष्मदस्मदोष्षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ" इति वामादेशे सति रूपं,यद्यस्मात् अ जगतः साक्षात्प्रधानपुरुषौ कारणभूतौ प्रकृतिपुरुषौ परौ ताभ्यां विलक्षणौ च वां युवां जाने, कार्यावस्थचिदचिदात्मकस्यास्य जगतः कारणावस्थौ प्रधानपुरुषौ प्रकृतिपुरुषशरीरकौ अतए तदात्मभूतौ तद्विलक्षणौ पुरुषौ जान इत्यर्थः ॥ ३ ॥

मु॥अस्य जगतः यत् यौ प्रधानपुरुषौ अध्यक्षपुरुषौ परौच ताविति वां युवां जाने, यद्वा—"अस्य यतो वा इम ि" इत्यादिश्रुतिप्रसिद्धं साक्षात्कारणं ब्रह्म तदेव युवां जाने, परौ अहंकारादितत्त्वेभ्यः शरीराच्च परौ अन्यौ उत्कृष्टौ वां प्रधानपुरुषौ प्रकृतिजीवौ च जाने, तच्छरीरकाविति जान इत्यर्थः ॥ ३ ॥

वी ॥ एवं जगतः तत्कार्यत्वं प्रतिज्ञातं, ननु जगत्कार्यं चेत्तत्कारकषट्कसाध्यं कस्यचित्संबन्धि केनचित्प्रकारेण युक्तं कालसहचरितं चेति कथं मदेककार्यमित्यत आह—यत्रेति ॥ कारकषट्कसंबन्धिप्रकारकालानां त्वच्छरीरत्वेन त्वदात्मकत्वात् कृत्स्नं जगत्त्वत्कार्यमेवेत्यभिप्रायः, यत्राधिकरणे येन कर्त्रा यत उपादानात् यस्य संबन्धिनः यस्मै संप्रदानाय यत्प्रयोजकं कर्तृ, यदा यस्मिन्काले यथा यः प्रकारः, एवं कारकषट्कादीनां निर्देशः, यथा स्यादित्येतदिदं विश्वमधिकरणादिकं सर्वं साक्षात्प्रधानपुरुषयोः प्रकृतिपुरुषयोः ईश्वरो भगवान् त्वमेवेति संबन्धः, स्यादित्यस्य यत्र स्याद्येन स्यादित्येवं प्रत्येकं संबन्धः ॥ ४ ॥

मु ॥ नन्विदं विश्वम् अन्यैः कारकैर्जायमानं कुतः प्रधानपुरुषात्मकं ? कुतस्तरामावयोस्तत्कारणत्वम् ? तत्राह, यद्वा—न कारणत्वमात्रम्, सर्वकारकभूतस्त्वमेवेत्याह—यत्रेति ॥ इदं विश्वं यत्र अधिकरणे येन कर्त्रा करणेनच यतः उपादानात् यस्य संबन्धि, यदपि षष्ठ्यर्थो न कारकः, तथापि निमित्तत्वमुक्तम्, यस्मै संप्रदानाय, यद्यदिति प्रयोज्यकर्तृकर्मकारके दर्शिते, यथा यत्प्रकारः यदा यादृशः कालश्च स्यात् ,तत्सर्वं

एतं नानाविधं विश्वमात्मसृष्टमधोक्षज ।
आत्मनाऽनुप्रविश्यात्मन्प्राणो जीवो बिभर्ष्यजः ॥ ५
प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः ।
पारतन्त्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम् ॥ ६

---

प्रधानपुरुषेश्वरो भवानेव, सर्वं च त्वदात्मकमित्यर्थः, यद्यपि प्रयोज्यकर्तृकर्मकारकयोर्न भेदः, यथोक्तं—"करोति क्रियमाणेन न कश्चित्कर्मणा... । विभक्त्यर्थस्य कर्ता च करोतेः कर्म जायते । करोत्यर्थस्य यः कर्ता भवितुस्स प्रयोजकः । भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते" इति, अस्त्वेवं, तथापि अवस्थाभेदेन विवक्षितस्स्यादिति, क्रियापदार्थोपलक्षणं वा ॥ ४ ॥

वी ॥ वक्ष्यमाणकान्त्यादिसामानाधिकरण्योपयुक्तत्वेनैतत्प्रपञ्चयति—हे अधोक्षज आत्मन्नात्मनि आत्मना सृष्टम्, अनेनाधिकरणान्तरकर्त्रन्तरव्युदासः, नानाविधं देवनरपशुपादपभिन्नमेतज्जगत् आत्मना स्वशरीरभूतेन जीवेनानुप्रविश्य रक्षणोपयुक्तमनुप्रवेशं कृत्वा प्राणः प्राणशरीरकः जीवः तच्छरीरकश्च एवमप्यजः प्राणजीवगतदोषास्पृष्टो बिभर्षि, प्राणशरीरकत्वं जीवशरीरकत्वं च श्रूयते "मनोमयः प्राणशरीरनेता" "यस्यात्मा शरीरम्" इति ॥ ५ ॥

मु॥ एवं सर्वकारकरूपेण भवता सृष्टं जगदनुप्रविश्य धारयसीत्याह—एवमात्मना सृष्टं नानाविधं देवमनुष्यादिरूपेण बहु विश्वम् आत्मना अनुप्रविश्य "अनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुत्यर्थो दर्शितः, हे अधोक्षज इन्द्रियज्ञानागोचर हे आत्मन् ॥ ५ ॥

वी ॥ एवं भगवतश्चिदचित्सामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति शिक्षा कृता, अथ चिदचिदसाधारणधर्मसामानाधिकरण्यं तन्निर्वाहकत्वनिबन्धनमिति शिक्षयति—प्राणादीनामिति॥विश्वसृजां विश्वशरीरसृष्टिहेतुभूतानां प्राणादीनाम्,आदिशब्देन भूतपञ्चकैकादशेन्द्रियमहदहङ्कारसङ्ग्रहः,एतैर्हि विश्वसृष्टिः,तेषां याः शक्तयः कार्योपयोग्यपृथक्सिद्धधर्माः ताः परस्य परमात्मनः तवैव शक्तयः त्वन्निर्वाह्या एवेत्यर्थः,कुतः? पारतन्त्र्यात् शक्त्याश्रयाणां प्राणादीनां पारतन्त्र्यस्वाभाव्यात्,एवं च तच्छक्तीनां पारतन्त्र्यं किं पुनर्न्यायसिद्धमिति भावः, ननु प्राणादीनां शक्तयः मिथःप्राणादिनिर्वाह्याः कुतो न स्युरित्यत आह—वैसादृश्यादिति । अन्योन्यप्रतिनियतशक्तित्वेन वैधर्म्यान्न मिथोनिर्वाह्यतेत्य[illegible]ः,किमुताचेतनानां पारतन्त्र्यस्वभावतेति,कुतः? चेतनस्यैव तत्स्वभावत्वादित्यभिप्रेत्याह—द्वयोश्चेष्टैव चेष्टतामिति।चेष्टतां चेष्टमानानां देहानां चेष्टा द्वयोश्चेष्टैव जीवपरयोश्चेष्टैव,न केवलं जीव एव स्वतन्त्रः प्रवर्तते, अपितु परमात्मानुमान्यः प्रवर्तत इत्यर्थः ॥ ६ ॥

मु॥ विश्वसृजां शक्तयोऽपि त्वद्दत्ता इत्याह—प्राणादीनां पञ्चप्राणानां तथा विश्वसृजां विश्वशरीरसृष्टिहेतुभूतानां चतुर्मुखप्रभृतीनां च याः शक्तयः, ताः परस्य तव

---

... अत्र ग्रन्थपातः ॥

कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम् ।
यत्स्थैर्यं भूभृतां [१]भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७.
तर्पणं[२]जीवनंचापांक्लेदनंताश्चतद्रसः। ओजस्सहोबलंचेष्टागतिर्वायोस्त्वमीश्वरः॥८
दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः ।

त्वद्दत्ता इत्यर्थः, तथा चेष्टतां चेष्टमानानां देहिनां चेष्टा द्वयोः जीवपरयोः चेन्नैव केवल जीवस्यैव चेष्टास्त्वित्यत्राह—पारतन्त्र्यादिति । तेषां देवानां परमात्मपारतन्त्र्यात् वैसादृश्याच्च शरीरशरीरिभावात् न जीवः स्वातन्त्र्येण चेष्टाहेतुः, अपितु भगवदनुमत्यैव प्रवर्तत इत्यर्थः ॥ ६ ॥

वी ॥ सर्ववस्तुशक्तीनां तन्निर्वाह्यत्वनिबन्धनं सामानाधिकरण्यमाह—कान्तिरित्यादिना ॥ चन्द्रस्य कान्तिः अग्नेस्तेजोऽर्कस्य प्रभा ऋक्षाणां नक्षत्राणां विद्युताञ्च सत्ता प्रकाशसत्ता भूभृतां पर्वतानां यत् स्थैर्यं भूमिवृत्तिर्गन्धः, यद्वा वृत्तिः प्राणिनामाधारत्वेन वर्तनं गन्धश्चेत्येतत्सर्वम् अर्थतः वस्तुतः भवान् त्वन्निर्वाह्यमित्यर्थः ॥ ७ ॥

मु ॥ सर्वस्यापि तदधीनत्वमेव दर्शयति—चन्द्रस्य कान्तिः अग्नेः तेजः अर्कस्य प्रभा, सत्ताशब्दः ऋक्षाणां विद्युतां च प्रकाशसत्तामाह, यथा सूर्यादीनां तदधीनप्रकाशत्वमाह श्रुतिः-"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"इति,स्मृतिश्च—"यदादित्यगतं तेजः" इत्यादि, धृतिः धारणसामर्थ्यं भूमेर्गन्धश्च भवान् एतत्सर्वं भवान् त्वदन्य न्नेत्यर्थः, वृत्तिरिति पाठे प्राणिनामाधारत्वेन वर्तनं वृत्तिर्गन्ध इति सामानाधिकरण्यं वा, वृत्तिः तत्र वर्तनशील इत्यर्थः ॥ ७ ॥

वी ॥ तर्पणमिति ॥ अपां तर्पणं लोकतृप्तिहेतुत्वं जीवनं जीवनहेतुत्वं प्राणनमिति पाठे स एवार्थः, क्लेदनम् आर्द्रीकरणम् , देवत्वमिति पाठे देवताधिष्ठितत्वं, ता आपः तासां रसो माधुर्यं च सर्वं भवान् त्वदधीनमित्यर्थः, याः वायोः शक्तयः ओजःप्रभृतयः ता ईश्वरस्त्वमेवेति पूर्ववत्, तत्र ओजः प्रवृत्तिसामर्थ्यं, सहो वेगः, बलं धारणसामर्थ्यं, चेष्टा व्यापारः, गतिर्गमनम् ॥ ८ ॥

मु॥ अपां तर्पणं लोकतृप्तिहेतुत्वं प्राणनं जीवनहेतुत्वं देवत्वं देवताधिष्ठितत्वं ता आपः तासां रसः माधुर्यं सर्वं भवान् त्वदधीनमित्यर्थः, वायोरोजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यं गतिः गमनम् , ईश्वरस्त्वमेव तत्सर्वमित्यर्थः ॥ ८ ॥

वी ॥ दिशामिति ॥ दिशां संबन्धी अवकाशः दिशश्च त्वमेव,स्फोटः शब्दः आश्रयस्तदाश्रयभूतं खं त्वमेवेत्यन्वयः, नादः शब्दाभिव्यञ्जकः वर्णः अकारादिः ओङ्कारः आकृतीनां शब्दवाच्यानामाकृतीनां पृथक्कृतिः द्वैविध्यंच त्वमेव, स्फोटनादोङ्कारशब्दैः परापश्यन्तीमध्यमाख्या वाग्भेदा उच्यन्ते, आकृतीनां पदार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदं वर्णपदाद्यात्मिका वैखरी त्वमित्यर्थ इति केचित् ॥ ९ ॥

मु ॥ स्फोटः शब्दाश्रयः, आश्रयः तदाश्रयभूतं खमित्यन्वयः, नादश्शब्दाभिव्य-

१.भूमेर्धृतिगन्धो मु-भा-प्र-पा ॥　　२. प्राणनमपा. मु-भा-प्र-पा ॥

नादो वर्णस्त्वमोंकार आकृतीनां पृथक्कृतिः ॥ ९

[1]इन्द्रियत्वानीन्द्रियाणांदेवाश्चतदनुग्रहाः।अवबोधोभवान्बुद्धेर्जीवस्यानुस्मृतिस्सती
भूतानामपिभूतादिरिन्द्रियाणांचतैजसम्। वैकारिकोविकल्पानांप्रदानमनुशायिनाम्
नश्वरेष्विहभावेषुतदसित्वमनश्वरम्।यथाद्रव्यविकारेषुद्रव्यमात्रमनश्वरम् ॥ १२

अकः वर्णः अकारादिः ॐकारः प्रणवः आकृतीनां शब्दवाच्यानां पृथक्कृतिः वैविध्यं विविधाकृतय इत्यर्थः ॥ ९ ॥

वी ॥ इन्द्रियत्वानीति ॥ इन्द्रियाणामिन्द्रियत्वानि विषयप्रकाशनसामर्थ्यानि तदनुग्रहास्तेषामिन्द्रियाणामनुग्राहकाः विषयप्रकाशनरूपसामर्थ्यापादका इति यावत्, ते देवाः दिग्वातार्कादयः इन्द्रियाभिमानिदेवाश्च त्वम्, "इन्द्रियाणामिन्द्रियत्वं देवाश्च त्वदनुग्रहाः" इति पाठे अनुग्रहाः अनुग्रहशब्दवाच्याः इन्द्रियाद्यभिमानिदेवाश्चेत्येतत्सर्वं त्वत् त्वत्तः जातं त्वदनुग्रहप्रभवा देवा इत्यर्थः, अनुग्रह इत्येकवचनान्तपाठे तदनुग्रहस्तेषाम् अधिष्ठानशक्तिश्च त्वमेवेत्यर्थः, बुद्धेरवबोधोऽध्यवसायः, सती अबाधिता जीवस्यानुस्मृतिः संस्कारजन्यं ज्ञानं च भवान् ॥ १० ॥

मु ॥ इन्द्रियाणामिन्द्रियत्वं प्रकाशकत्वशक्तिः अनुग्रहा इन्द्रियानुग्राहका देवाः इन्द्रियाद्यभिमानिदेवताः तेषां देवानामनुग्रहाः अधिष्ठानशक्तय इति वा, तत्सर्वं त्वत्तो जातमित्यर्थः, त्वदनुग्रहप्रभवा देवा इतिवार्थः, "यस्य प्रसादजो ब्रह्मा" इतिवत्, बुद्धिः अध्यवसायः अनुस्मृतिः संस्कारजन्यं ज्ञानम् ॥ १० ॥

वी ॥ भूतानामिति॥ भूतानामाकाशादीनां कारणं भूतादिस्तामसाहङ्कारः इन्द्रियाणामनुग्राहकस्तैजसः राजसाहङ्कारः विकल्पानामनुग्राहको वैकारिकस्सात्विकाहङ्कारः विविधं कल्पनं ज्ञानमनेनेति विकल्पः, इन्द्रियं तत्कारणमिति वाऽर्थः, अनुशायिनामनुशयवतां, कर्मिणां भुक्तावशिष्टं कर्मानुशयशब्दार्थः, प्रदानं फलदं कर्म च त्वमेवेत्यर्थः ॥ ११ ॥

मु ॥ भूतानां पञ्चमहाभूतानां कारणं भूतादिः तामसाहङ्कारः, इन्द्रियाणाम् अनुग्रहं तैजसं राजसाहङ्कारः, विविधं कल्पनमेभिरिति विकल्पा इन्द्रियाणि तेषां कारणं वैकारिकः सात्विकाहङ्कारः, अनुशायिनाम् अनुशयवतां कर्मिणां प्रदानं फलप्रदं कर्म ॥

वी ॥ एवं सर्वकारणत्वनिर्वाहकत्वप्रयुक्तसार्वात्म्यमभिधायाथ सार्वात्म्यप्रयुक्तानित्यत्वादिदोषपरिजिहीर्षयाऽऽह—नश्वरेष्विति ॥ भावेष्ववस्थासु नश्वरेष्वागमापायिषु सत्सु बद्धावाश्रयमनश्वरं स्थिरमवस्थारहितमाधारभूतश्च तत् त्वमसि,एतदेव दृष्टान्तमुखेन विवृणोति—यथेति।द्रव्यस्य मृत्सुवर्णादेर्विकारेषु पिण्डत्वघटत्वकुण्डलत्वकटकत्वादिविकारेषु नश्वरेष्वपि द्रव्यमात्रं मृत्सुवर्णादिरूपमनश्वरं सर्वावस्थानुवृत्तं तद्वत्, वस्तुतो यद्यपि मृत्सुवर्णादिद्रव्यमपि नश्वरमेव, तथापि यावत्स्वविकारमनश्वरत्वमात्राभिप्रायेण दृष्टान्तः ॥ १२ ॥

मु ॥ नश्वरा भावाः अवस्थाः, तासु आगमापायिनीषु अनश्वरं स्थिरम् अवस्थानामाधारभूतं द्रव्यं यत् तदसि, तदेव विवृणोति—यथेति । द्रव्यविकारेषु घटादिषु द्रव्यमात्रं यथा निरूपितं, तथा ॥ १२ ॥

[1]. इन्द्रियाणामिन्द्रियत्वं. मु-भा-प्र-पा॥

सत्त्वंरजस्तमइतिगुणास्तद्वृत्तयश्चयाः।त्वय्यद्धाब्रह्मणिपरेकल्पितायोगमायया॥ १३

तस्मान्न सन्त्यमी भावा यर्हि त्वय्येव कल्पिताः ।

त्वं चामीषु विकारेषु सन्सदा व्यावहारिकः ॥ १४

गुणप्रवाहएतस्मिन्नबुधास्त्वखिलात्मनः।गतिंसूक्ष्मामबोधेनसंसरन्तीहकर्मभिः ॥

यदृच्छया नृतां प्राप्य सुकल्यामिह दुर्लभाम् ।

---

वी ॥ एवमप्यविकारिणो मम विकारित्वं दुर्वारमित्यत आह—सत्त्वमिति द्वाभ्यां॥ सत्त्वादयः प्रकृतिगुणास्तेषां वृत्तयः परिणामरूपा महदादयश्च परे ब्रह्मणि त्वय्यद्धा त्वय्येव, योगमायया सङ्कल्परूपज्ञानेन योगेन कल्पिताः त्वयि कृता इत्यर्थः, ब्रह्मणि परे इत्यस्य प्रधानपुरुषेश्वर इत्यादिः, 'प्रधानपुरुषौ परौ' 'प्रधानपुरुषेश्वरः' इत्युपक्रमात्, एवंच सूक्ष्मचिदचिद्विशिष्टे त्वयि कल्पिता इत्यर्थः ॥ १३ ॥

मु ॥ सत्त्वादयः परे ब्रह्मणि त्वयि योगमायया सृष्ट्यादिषु युज्यत इति योगः सङ्कल्पः. माया ज्ञानं "माया वयुनं ज्ञानम्" इति पर्यायपाठात्, सङ्कल्परूपज्ञाने अद्धा साक्षात् कल्पिताः धृता इत्यर्थः ॥ १३ ॥

वी ॥ यत एवं तस्मात्कल्पिताः सृष्टाः अमी भावा महदादयः त्वयि चिदचिद्भ्यां निष्कृष्टे त्वयि न सन्त्येव साक्षान्न सन्त्येव, महदादिभावानां प्रकृत्यादिष्वेव साक्षात्संभवः, त्वयि तु प्रकृत्यादिद्वारेति न विकारित्वमिति भावः, यर्हि यदा त्वयि न सन्त्येव, तदा विकारेष्वन्तः प्रविश्य सदा सन्निति व्यावहारिकः शास्त्रैः व्यवह्रियस इत्यर्थः, अस्मदुक्तेष्वर्थेषु शास्त्रमेव प्रमाणमिति तात्पर्यम् ॥ १४ ॥

मु॥ यस्मात् त्वय्येव कल्पिताः सृष्टाः तस्मात् अमी भावाः सर्वदा न सन्ति, किन्तु संस्मार्यत्वादनित्या इत्यर्थः. अथवा यर्हि यदा त्वय्येव प्रलये कल्पितः, तस्मात् तदा अमी भावाः न सन्ति एतदाकारेण न तिष्ठन्तीत्यर्थः. अमीषु विकारेषु अन्तः प्रविश्य स्थितस्त्वं सदसदिति व्यावहारिकश्शास्त्रैर्व्यवह्रियस इत्यर्थः. यद्वा—विकारेषु इदं यत् इदमसदिति व्यवहारविषयो यः पदार्थः, स त्वमसि. तच्छरीरकोऽसीत्यर्थः ॥ १४ ॥

वी ॥ सर्वेऽपीत्थं किं न विदुरित्यत आह—गुणप्रवाह इति ॥ सत्त्वादिगुणप्रवाहरूपे एतस्मिन्संसारे पतिता इति शेषः, सर्वान्तरात्मनः तव सूक्ष्मां दुर्ज्ञेयां गतिं याथात्म्यम् अबुधा अजानन्तः अबोधेन तेनैवाज्ञानेन तन्मूलैः कर्मभिः पुण्यापुण्यात्मभिः हेतुभिस्संसरन्ति ॥ १५ ॥

मु ॥ त्वमेवंभूत इति अज्ञानेन संसरतीत्याह—गुणेति॥ अबुधाः अविद्वांसः, अबुद्ध्वेति वा पाठः, अखिलस्य आत्मनः सूक्ष्मां गतिम् बुद्ध्वा अबोधेन देहात्माविवेकेन स्वकर्मभिः संसरति ॥ १५ ॥

वी ॥ इत्थं भगवद्याथात्म्यमजानन्तमनुशोचति—यदृच्छयेति ॥ इह लोके दुर्लभां सुकल्यां पटुतरेन्द्रियां नृतां नरत्वं प्राप्यापि हे ईश्वर त्वन्मायया स्वार्थे स्वश्रेयस्साधने तद्याथात्म्यज्ञाने प्रमत्तस्यानवहितस्य पुंसो वय आयुः गतम् अहो वृथा गतमित्यर्थः ॥

स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६

असावहंममैवैतेदेहेचास्यान्वयादिषु।स्नेहपाशैर्निबध्नातिभवान्सर्वमिदंजगत्॥ १७

युवांनन्स्सुतौसाक्षात्प्रधानपुरुषेश्वरौ। भूभारक्षत्रक्षपणायावतीर्णौतथात्थहि ॥ १८

तत्ते[१]गतोऽस्म्यशरणोऽद्य पदारविन्दमापन्नसंसृतिभयापहमार्तबन्धो ।

एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः॥१९

सूतीगृहे ननु जगाद भवानजो नौ सञ्जज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।

मु॥एवं भगवत्स्वरूपयाथात्म्यज्ञानालाभाच्छोचति—यदृच्छया दैवात् नृतां मनुष्यतां सुकल्पां पटुतरकरणां, पाठान्तरे मृतं शरीरं सुष्ठु कल्यं वर्णाश्रमाद्युत्कर्षवत् त्वन्मायया त्वदीयमायया गुणमयप्रकृत्या ॥ १६ ॥

वी ॥ किंच—असाविति ॥ देहे अस्य देहस्यान्वयादिष्वनुबन्ध्यादिषु पुत्रदारादिषु असौ देहोऽहम् इमे पुत्राद्या ममेत्येवंरूपैः स्नेहपाशैः सर्वमिदमाब्रह्म पश्वादिपर्यन्तं जगद्भवान् बध्नाति बद्धं करोति ॥ १७ ॥

मु ॥ किमिति प्रमत्तोऽसीति चेत्—त्वया बहुपाशबद्धत्वादित्याह—असावहमिति ॥ अस्य देहस्य अन्वयादिषु पुत्रादिषु देहान्वय आदिर्येषां ते देहानुबन्धन इत्यर्थः, एते ममैवेति ॥ १७ ॥

वी ॥ यदुपक्रान्तं "जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ" इति तदुपसंस्मारयति—युवामिति ॥ भूमेर्भारभूतक्षत्रियनिरसनार्थम् अवतीर्णोऽहमित्येतदात्थ, सूतिकागृहे कथितवानसिहीत्यर्थः ॥ १८ ॥

मु ॥ एतद्धि ईश्वरकृत्यं, नह्यावयोस्त्वत्पुत्रयोः कृत्यमित्यत्राह—युवामिति॥ प्रधानपुरुषावीश्वरौच, तयोरीश्वराविति वा, भूभारक्षत्रक्षपणार्थम् अवतीर्णौ, तथात्थ निश्चितमेव ब्रूषे ॥ १८ ॥

वी ॥ तत्तस्मादशरणः उपायान्तरशून्योऽहं हे आर्तबन्धो आपन्नानां संसृतिभयमपहन्तीति तथा तत्तव पदारविन्दं शरणं गतोऽस्मि, ननु त्वमतिसुखी वृथा किमिति निर्विद्यस इत्यत आह—एतावतेति । यत् यस्मात् मर्त्ये शरीरे आत्मदृक् आत्मबुद्धिरहं त्वयि च प्रधानपुरुषेश्वरे अपत्यबुद्धिरस्मि, अत इन्द्रियार्थतृष्णया अलमलं पर्याप्तम् ॥

मु ॥ तत् तस्मात् आपन्नानां संसृतिभयमपहरतीति तत् ते पादारविन्दम् अरणं शरण्यं शरणं गतोऽस्मि, ननु विषयवैराग्यवतामेव बन्धमोक्षवितरणे प्रगल्भोऽस्मीत्यत्राह—एतावतेति । यत् यतः मर्त्यात्मदृक् मर्त्यदेहे आत्मबुद्धिः परे त्वयि अपत्यबुद्धिश्च एतावता एतेनैव इन्द्रियलालसेन विषयाभिलाषेण अलमलं विषयवैराग्यं च मे देहीत्यर्थः ॥ १९ ॥

वी ॥ ननु कुत एतदहं परमेश्वर इति तत्राह—सूतीगृहइति ॥ ननु हे भगवन् भवान् सूतीगृहे जगाद, किं तत्? यदजः कर्मायत्तोत्पत्तिरहितोऽप्यहं निजधर्माणां स्वकृतधर्ममर्यादानां गुप्त्यै रक्षणाय अनुयुगं प्रतियुगं जज्ञे अवतरामीत्येतत्. नन्वन्योऽसौ चतुर्भुजो देव इत्यत आह—नानेति। नानातनूर्बिभ्रत् तावद्बिभ्राणः जहासि गगनवत्—

१. गतोऽस्म्यरणमद्य. मु-भा-प्र-पा ॥

नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम्॥२०

श्रीशुक उवाच—

[1]निशम्येत्थं पितुर्वाक्यं भगवान्सात्वतर्षभः।

प्रत्याह प्रश्रयानम्रः प्रहसञ्श्लक्ष्णया गिरा॥ २१

श्रीभगवानुवाच—

वचोवस्समवेतार्थंतातैतदुपमन्महे।यन्नःपुत्रान्समुद्दिश्यतत्त्वग्रामउदाहृतः॥ २२

अहंयूयमसावार्यो[2]यइमेद्वारकौकसः।सर्वेऽप्येवंयदुश्रेष्ठ[3]विमृश्यास्सचराचरम्॥२३

---

यथा गगनं सर्वत्र व्याप्नुवदप्यजहत्स्वभावं तथा भवानपि नानातनूश्सर्वास्थितोऽप्यजहत्स्वभाव इति दृष्टान्तार्थः, इत्थमहं संभावयामि. तत्त्वतस्तव माहात्म्यं को वेदेत्याह—हे उरुगाय भूम्नस्सर्वगतस्य तव विभूतीः मायाः आश्चर्यशक्तीश्च को वेद? न कोऽपि वेदेत्यर्थः॥ २०॥

मु॥ 'भूभारक्षत्रक्षपणाय अवतीर्णौ तथात्थ हि' इति यदुक्तं, तत्प्रपञ्चयति—सूतीगृहे सूतिकागृहे नौ आवयोः अनुयुगं प्रतियुग्मं सुतपा अग्निश्चेति युग्मं काश्यपोऽदितिश्चेति युग्मम् अधुना वसुदेवो देवकी चेति युग्मं,संजज्ञे अवतीर्ण इति भवाननुजगाद, ननु प्रतियुगं मम जन्मभाक्त्वे संसारित्वापत्तिरित्यत्राह—नानेति। नानातनूः मत्स्यकूर्मादिरूपाः, गगनवदिति दोषास्पर्श उक्तः, वैषम्यदोषरहित इत्यर्थः,हे उरुगाय विभूतिमायाम् आश्चर्यशक्तिभूतां विभूतिं को वेद, यद्वा विभूतीनां मूर्तिभेदानां हेतुभूतां मायां को वेद न कोऽपीति॥ २०॥

वी॥ निशम्येति॥ प्रश्रयेण विनयेनानम्रः श्लक्ष्णया मृद्व्या गिरा प्रत्याह॥ २१॥

मु॥ प्रश्रयेण विनयेन आनम्रः प्रह्वीभूतः॥ २१॥

वी॥ तदेवाह—वच इति चतुर्भिः॥ आत्मनः परमात्मत्वं गोपयन्नाह—हे तात वो युष्माकम् एतद्वचो वाक्यं समवेतार्थमुपपन्नार्थम् उपमन्महे उपमन्यामहे अभ्युपगच्छाम इति यावत्, यद्वा—समवेतार्थं समवेतः अस्मच्छिक्षागर्भितः अर्थो यस्य तथाभूतम् उपलभामह इत्यर्थः, कुतः? किञ्च तद्वचः? इत्यत आह—यदिति। यद्यतः पुत्रानस्मान् समुद्दिश्य विषयीकृत्य लक्षीकृत्येति यावत्, तत्त्वग्रामस्तत्त्वसमुदायः उदाहृतः सम्यङ्निरूपितो येनेत्येतद्वचः सर्वं ब्रह्मात्मकमित्येवमस्मान् ग्राहयितुमस्मानेव विषयीकृत्योक्तमिति भावः॥ २२॥

मु॥ समवेतार्थं युक्तार्थम् उपमन्महे उपमन्यामहे अभ्युपगच्छामहे इत्यर्थः, समुद्दिश्य विषयीकृत्य तत्त्वग्रामः तत्त्वसमूहः उदाहृतः सम्यङ्निरूपितः॥ २२॥

वी॥ तदेवाह—अहमिति॥ असावार्योऽग्रजः सर्वे द्वारकौकसः किं बहुना हे यदुश्रेष्ठ सचराचरं विश्वं कृत्स्नं जगच्च एवं परमात्मात्मकं तत्कारणकं तन्निर्वाह्यं चेत्यर्थः॥ २३॥

मु॥ इमामेवं ब्रह्मात्मकत्वबुद्धिं सर्वत्र विश्वस्वेत्याह—अहमिति॥ एवं ब्रह्मात्मकं, न केवलमेतावत्,चराचरमपि ब्रह्मात्मकमिति सर्वेऽपि एवं त्वदुक्तप्रकारेणेवेत्यर्थः॥२३॥

---

१. आकर्ण्येत्थं. पा॥ २. इमेच. पा॥ ३. विश्वमेव॥

आत्मा ह्येकः स्वयंज्योति[१]र्नित्योऽन्यः प्राकृतैर्गुणैः ।
आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४
खं वायुर्ज्योतिरापो भूस्तत्कृतेषु [२]यथाशयम् ।
[३]आविष्कृताल्पभूर्येकनानात्वं यात्यसावपि ॥ २५

—स्मरोद्गीथादिनामकदेवकीषड्गर्भानयनकथारम्भघट्टः—

श्रीशुक उवाच—

एवं भगवता राजन्वसुदेव उदाहृतः।श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना ह्यभूत्॥
अथतत्रकुरुश्रेष्ठदेवकीसर्वदेवता।श्रुत्वाऽऽनीतंगुरोःपुत्रमात्मजाभ्यांसुविस्मिता॥

---

वी ॥ कुत इत्यत आह—आत्मेति ॥ हि यस्मात् आत्मा परमात्मा तावत् आत्मना स्वेनैव सृष्टैः प्राकृतैर्गुणैः गुणपरिणामात्मकैः महदादिभिः तत्कृतेषु महदादिभिः सृष्टेषु भूतेषु देवमनुष्यादिषु बहुधा ईयते व्याप्त इति प्रमाणतो ज्ञायते, कथंभूतः? स्वयंज्योतिः स्वयंप्रकाशस्वरूपः अन्यः देवादिशरीरतदभिमानिजीवेभ्योऽन्यः ॥ २४ ॥

मु॥ एवं ब्रह्मस्वरूपं निरूप्य जीवस्वरूपं निरूपयति—आत्मा चेतनः एकः ज्ञानस्वरूपतया एकाकारः स्वयंज्योतिः स्वयंप्रकाशः नित्यः कालापरिच्छिन्नः अन्यः देहादिविलक्षणः निर्गुणः वस्तुतः सत्त्वादिगुणरहितः आत्मना भगवता स्वकर्मानुगुणं सृष्टैः गुणैः सत्त्वादिभिः हेतुभिः तत्कृतेषु गुणकार्येषु देहेषु बहुधा देवमनुष्यादिरूपेण नानेव प्रतीयते ॥ २४ ॥

वी ॥ तत्र दृष्टान्तमाह—खमिति ॥ यथा खादयः तत्कृतेष्वाकाशादिभिः कृतेषु यथाशयं व्याप्यानुरूपम् आविष्कृताल्पभूर्येकनानात्वं यान्ति, तद्वदसौ परमात्माऽपि क्वचिदाविष्कृतत्वं क्वचिदल्पत्वं क्वचिद्भूरित्वं विपुलत्वं स्वतस्त्वेकत्वं व्याप्यबहुत्वप्रयुक्तं नानात्वंच यातीत्यर्थः, एकस्यानेकेषु व्याप्तौ तत्प्रयुक्तनानात्ववस्तुत्वैकत्वेचायं दृष्टान्तः, न वस्तुतो व्याप्यव्यापकयोः एकद्रव्यत्वेऽपीति ज्ञेयम् ॥ २५ ॥

मु॥ किञ्च—असौ क्षेत्रज्ञः यथोपधि उपधिः उपाधिः कर्मेति यावत्,कर्मानुगुणम् आकाशादिपञ्चभूतकृतेषु देहेषु आविस्तिरोल्पभूर्येकनानात्वम् आविर्भूतत्वं तिरोभूतत्वम् अल्पत्वं भूरित्वम् एकत्वं नानात्वं च याति,अनयोः श्लोकयोः परमात्मपरत्वे तत्तदन्तरात्मत्वात् तथातथा स्थित इत्यर्थः, ईयते भूतेषु व्याप्त इति प्रमाणतो ज्ञायते, 'आविस्तृत' इति पाठे आविस्तृतः आ समन्तात् विस्तृतः व्याप्तः अल्पत्वं विपुलत्वम् एकत्वं कार्यतया नानात्वं च तत्तदन्तरात्मत्वादित्यर्थः ॥ २५ ॥

वी ॥ एवमिति ॥ उदाहृतः उक्तः उदाहृतमिति पाठे तूक्तं वचः श्रुत्वेत्यर्थः, विनष्टनानाधीः अब्रह्मात्मकभेदबुद्धिरहितः अत एव प्रीतमनाः तूष्णीं बभूव ॥ २६ ॥

मु ॥ विनष्टनानाधीः अब्रह्मात्मकभेदबुद्धिरहितः ॥ २६ ॥

वी ॥ अथेति ॥ हे कुरुश्रेष्ठ सर्वदेवतात्मकभगवदवतारस्थानत्वात्तथाभूता देवकी

---

१. नित्योऽन्यो निर्गुणो गुणैः. मु-भा-प्र-पा ॥ २. यथोपधि. मु-भा-प्र-पा ॥
३. आविस्तिरोल्पभूर्येकनानात्वं यात्यसावपि. मु-भा प्र-पा

कृष्णरामौ समाश्राव्य पुत्रान्कंसविहिंसितान् ।
स्मरन्ती कृपणं प्राह वैक्लब्यादश्रुलोचना ॥ २८

देवक्युवाच—

रामरामाप्रमेयात्मन्कृष्णयोगीश्वरेश्वर।वेदाहंवांविश्वसृजामीश्वरावादिपूरुषौ॥ २९

कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ।
भूमेर्भारायमाणानामवतीर्णौ क्षयाय मे ॥ ३०

यस्यांशांशांशभागेन विश्वोत्पत्ति[1]लयोदयाः ।
भवन्ति किल विश्वात्मंस्तंत्वाऽद्याहं गता गतिम् ॥ ३१

चिरान्मृतसुतादानेगुरुणाकिलचोदितौ।[2]आनिन्यतुःपितृस्थानाद्गुरवेगुरुदक्षिणाः

---

आत्मजाभ्यां रामकृष्णाभ्यां गुरोः सान्दीपनेः पुत्रमानीतं श्रुत्वा अतीव विस्मितासती समाश्राव्य सम्बोध्य वैक्लब्यात् दैन्यात् अश्रूणि लोचनयोर्यस्यास्सा प्राह ॥ २७ ॥ २८ ॥

मु ॥ अथ अनन्तरं तत्र स्थिता देवकी कृष्णरामौ समाश्राव्य कंसविहिंसितान् पुत्रान् स्मरन्ती अतएव वैक्लब्यात् अश्रुलोचना आत्मजाभ्यां गुरोः पुत्रमानीतं श्रुत्वा अथ विस्मिता कृपणं प्राहेति संबन्धः ॥ २७ ॥ २८ ॥

वी ॥ तदेवाह—रामेति पञ्चभिः ॥ अप्रमेयात्मन्नपरिच्छेद्यस्वरूप योगीश्वराणामाश्चर्यशक्तिमतामपीश्वरौ वां युवां विश्वसृजां ब्रह्मादीनाम् ईश्वरौ आदिपुरुषौ जगत्कारणपुरुषावहं वेद वेद्मि ॥ २९ ॥

मु ॥ वां युवां विश्वसृजाम् ईश्वरौ नियन्तारौ आदिपुरुषो अहं वेद ॥ २९ ॥

वी ॥ तर्ह्येवंभूतयोरावयोः किमर्थं यदुषु जन्मेत्यत आह— कालेति ॥ कालवशेन विध्वस्तं सत्त्वं सत्त्वगुणो येषाम् उच्छास्त्रवर्तिनां शास्त्रीयमर्यादातिलङ्घिनाम् अत एव भूमेर्भारायमाणानां राज्ञां क्षयाय मे मयि अस्मत्तो वा अवतीर्णौ ॥ ३० ॥

मु ॥ तर्हि कथं जन्मेत्यत्राह—कालेन विध्वस्तं सत्त्वं गुणो येषां तेषाम् अत एव उच्छास्त्रवर्तिनाम् अत एव भूमेर्भारायमाणानांच राज्ञां क्षयाय मे अस्मत्तः अवतीर्णौ॥

वी ॥ यस्य तव अंशांशांशभागेन अयुतायुतशतैककलांशकांशेन विश्वस्योत्पत्त्यादयो भवन्ति किलेति शास्त्रप्रसिद्धिः, तं पूर्णब्रह्मरूपं त्वामधुना अहं गतिं शरणं गताऽस्मि ॥ ३१ ॥

मु ॥ तयोरादिपुरुषात्मनोरेकत्वमाश्रुत्याह—यस्येति ॥ हे आद्य अयुतायुतांशांशभागेन विश्वोत्पत्त्यादयो भवन्ति, तं त्वा त्वाम् अहं गतिं शरणं गता ॥ ३१ ॥

वी ॥ स्वाभिप्रायमावेदयति—चिरादिति द्वाभ्याम् ॥ मृतसुतादाने निमित्ते गुरुणा सान्दीपनिना चोदितौ भवन्तौ पितृस्थानाद्यमसदनात् आनिन्यतुरानीतवन्तौ किल, गुरुदक्षिणाः विपुलदक्षिणारूपान्पुत्रान् आनिन्यतुरिति संबन्धः, दक्षिणामिति पाठे अर्पयितुमिति शेषः ॥ ३२ ॥

---

१. लयादयः. पा ॥ २. आनिन्यथुः. मु-भा-प्र-पा ॥

तथामेकुरुतंकामंयुवांयोगेश्वरेश्वरौ।भोजराजहतान्पुत्रान्कामयेद्रष्टुमागतान् ॥ ३३

ऋषिरुवाच—

एवंसंचोदितौमात्रा[1]रामकृष्णौकुरूद्वह।[2]रसातलंविविशतुर्योगमायामुपाश्रितौ ॥

तस्मिन्प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथाऽऽत्मनः ।
तद्दर्शनाह्लादपरिप्लुताशयस्सद्यस्समुत्थाय ननाम सान्वयः ॥ ३५

तयोस्समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः ।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म[3]पुनात्यदोऽम्बुहि ॥ ३६

समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः ।
[4]स्रग्धूपदीपामृतभक्षणादिभिस्स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७

वी ॥ तथेति ॥ यथा गुरोः कामं कृतवन्तौ तथा ममापि काममिष्टं कुरुतं, नावां शक्ताविति मा बोचतमित्यभिप्रायेण विशिनष्टि—योगीश्वरेश्वरौ निरतिशयाश्चर्यशक्तिमन्तौ, कोऽसौ काम इत्यत आह—भोजेति । भोजराजः कंसः, तेन हतान् ॥ ३३ ॥

मु ॥ किमर्थमित्यत्राह—चिरादिति॥ चिरात् मृतसुतादाने गुरुणा चोदितौ किल युवां गुरवे दक्षिणां कर्तुं पितृस्थानात् यमसदनात् गुरुसुतम् आनिन्यथुः, आनीतवन्तौ यथा, तथा मे ममापि कामं कुरुतम्, तमेवाह—भोजेति ॥ ३२ ॥ ३३ ॥

वी ॥ एवमिति॥ योगमायाम् आश्चर्यशक्तिम् उपाश्रितौ रसातलं सुतलं बलिचक्रवर्तिनो लोकं विविशतुः ॥ ३४ ॥

मु ॥ ॥ ३४ ॥

वी॥ तस्मिन्निति ॥ दैत्यराट् बलिः विश्वेषामात्मनां दैवं दैवतभूतं तथा नितरामात्मनो दैवतभूतौ तस्मिन्सुतले प्रविष्टावुपलभ्य दृष्ट्वा तयोर्दर्शनेन य आह्लादस्तेन परिप्लुतः व्याप्तः आशयो मनो यस्य सः सान्वयः सपरिवारः सद्यस्तदैवोत्थाय ननाम ॥

मु ॥ तस्मिन् सुतले प्रविष्टौ तौ उपलभ्य दैत्यराट् महाबलिः विश्वात्मनां दैवं तथा सुतरामात्मनो दैवं सद्यस्समुत्थाय ननाम, तस्य दर्शनात् य आह्लादः तेन परिप्लुतो द्रवीभूतः आशयो यस्य तथाभूतः अन्वयेन सन्तानेन सहितः सान्वयः॥ ३५ ॥

वी ॥ तयोरिति ॥ तयोः रामकृष्णयोः श्रेष्ठमासनमानीयादाय समर्प्य तत्र वरासने अवनिज्य प्रक्षाल्य तज्जलं सपरिवारः शिरसा दधार, कुतः हि यस्मात् अदः अम्बु जलम् आब्रह्म ब्रह्माणमभिव्याप्य कृत्स्नं जगत्पुनाति, 'पुनद्यत्' इति पाठे यदम्बु पवित्रयद्वर्तत इत्यर्थः ॥ ३६ ॥

मु ॥ अथ वरासनम् आनीय महात्मनोः तत्र निविष्टयोस्सतोः मुदा तयोः पादौ अवनिज्य तज्जलं पादावनेजनोदकं सवृन्दः सपरिवारो दधार, यदम्बु ययोरवनेजनाम्बु आब्रह्म ब्रह्मावधि जगत् पुनात् अपुनात्, हीति शास्त्रप्रसिद्धौ ॥ ३६ ॥

वी ॥ समर्हयामासेति ॥ सः बलिः तौ समर्हयामास, विभूतिभिः पुष्कलैः अमृतभक्षणम् अमृततुल्यभक्ष्यद्रव्यं स्वगोत्रं स्वकुलं वित्तमात्मा च तेषां समर्पणेन च समर्हयामासेति सम्बन्धः ॥ ३७ ॥

मु॥ ततो महद्धनमर्हन्तीति महार्हाणि तैः वस्त्रादिभिः स्रजश्च धूपाश्च दीपाश्च अ-

---

१. रामः कृष्णश्च भारत.पा॥ २. सुतलं संवि.पा॥ ३ पुनाद्यदम्बुहि मु.भा.प्र.पा॥ ४.ताम्बूलदी पा॥

स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया ।
उवाच चानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरः ॥ ३८

बलिरुवाच—

नमोऽनन्तायबृहतेनमःकृष्णायवेधसे।साङ्ख्ययोगविधानायब्रह्मणेपरमात्मने॥ ३९
दर्शनंवांहिभूतानांदुष्प्रापंचाप्यदुर्लभम्। रजस्तमस्स्वभावानांयन्नः[१]प्राप्तंयदृच्छया
[२]दैत्यदानवगन्धर्वसिद्धविद्याधराअपि। यक्षरक्षःपिशाचाश्चभूतप्रमथनायकाः ॥

मृतश्च भक्षणानि च आदिः यासां ताभिः विभूतिभिः उपहारद्रव्यैः तौ समर्हयामास, स्वस्य गोत्रं सन्ततिः वित्तं च ताभ्यां सह आत्मनः समर्पणेन च ॥ ३७ ॥

वी ॥ सइति ॥ इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया भगवत्पादाम्बुजं धारयन् आनन्दजलैः आकुले व्याप्ते अक्षिणी यस्य प्रहृष्टान्युदञ्चितानि रोमाणि यस्य गद्गदानि कुण्ठितानि अक्षराणि यस्य सः हेनृप उवाच ॥ ३८ ॥

मु॥इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेम्णा विवशीभूतः धिया सह भगवत्पादाम्बुजं मुहुः बिभ्रत् आनन्दोत्थेन जलेन आकुले व्याप्ते ईक्षणे यस्य सः प्रहृष्टानि रोमाणि यस्य सः गद्गदाक्षरम् उवाच ॥ ३८ ॥

वी ॥ तदेवाह—नमइत्यादिना विमुच्यत इत्यन्तेन ग्रन्थेन ॥ अनन्ताय शेषाय बृहते फणैकदेशेन विश्वधारकाय वेधसे जगद्विधात्रे साङ्ख्ययोगविधानाय साङ्ख्ययोगप्रवर्तकाय 'वितानाय' इति पाठे मत्वर्थीयोऽच् द्रष्टव्यः, वितानो यज्ञः, सच कर्मयोगोपलक्षकः, योगो भक्तियोगः, साङ्ख्यं ज्ञानयोगः. ते अस्याराधनरूपतया सन्तीति तथा तस्मै कर्मज्ञानयोगानुगृहीतभक्तियोगाराध्यायेत्यर्थः. ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते परमात्मने अन्तःप्रवेशनियमनाभ्यां लोकत्रयस्य भर्त्रे व्याप्यगतदोषास्पृष्टाय च ॥ ३९ ॥

मु ॥ एतद्दर्शयति नमइति नवभिः ॥ तत्र सप्तभिः नवनम्, द्वाभ्यां भक्त्यनुशासनप्रार्थनम्. अनन्ताय शेषाय बृहते फणैकदेशे विश्वधारणात् बृहत्. तस्मै कृष्णाय च वेधसे जगद्विधात्रे, परमात्मत्वेनैक्यविवक्षया पदत्रयम्. सांख्ययोगविधानाय सांख्ययोगप्रवर्तकाय वितानायेति पाठे स एवार्थः ॥ ३९ ॥

वी ॥ युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्यभिप्रेत्याह—दर्शनमिति॥ वां युवयोः दर्शनं केषांचिद्भूतानां दुष्प्रापं दुर्लभमपि केषांचिद्युष्मत्कृपया सुलभमेव, तदुपपादयति—रजस्तमस्स्वभावानामिति । यत् यस्मात् रजस्तमःप्रचुरस्वभावानामपि नोऽस्माकं युष्मद्दर्शनं प्राप्तम्, अतो भवत्कृपैव तत्र निदानमिति भावः ॥ ४० ॥

मु ॥ दुष्प्रापत्वेऽपि सुलभत्वमुपपादयति — रजस्तमस्स्वभावानामिति । यत् यस्मात्, नः अस्माभिः ॥ ४० ॥

वी ॥ अहो विद्विषोऽपि वयं सात्त्विकभक्तेभ्योऽपि सभाग्या इत्याह—दैत्येत्यादिभिस्त्रिभिः ॥ दैत्यादयः त्वयि नित्यं निबद्धं वैरं येषां तथाभूताः, कथंभूते ? विशुद्धस्य रजस्तमोभ्यामननुविद्धस्य सत्त्वस्य धाम्नि आश्रये. अनेन कामक्रोधादिप्राकृतदोषप्रति-

१. प्राप्तौ. पा ॥ २. दैत्यदानवगन्धर्वास्सिद्धविद्याध्रचारणाः. पा ॥

विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ।
नित्यं निबद्धवैरास्ते वयं चान्येच तादृशाः ॥ ४२
प्राप्तस्सालोक्यसामीप्यं सारूप्यमथ सात्मताम् ।
ते सर्वे पुण्डरीकाक्ष भावो हि भवकारणम् ॥ ४३
केचनोद्बद्धवैरेणभक्त्याकेचनकामतः।नतथासत्त्वसंरब्धास्सन्निकृष्टास्सुरादयः ॥
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ।

---

भटत्वमभिप्रेतम्, अद्धा साक्षात् शास्त्रशरीरिणि शास्त्रवेद्यं शरीरं स्वरूपमस्यास्तीति तथा तस्मिन् ते वयम् इत्थंभूता वयमित्यर्थः, तथा अन्ये कंसादयश्च तादृशाः नित्यं निबद्धवैरा इत्यर्थः ॥ ४१ ॥ ४२ ॥

वी॥प्राप्तइति॥त एते सर्वे सालोक्यादिरूपां मुक्तिं प्राप्ताः,तत्र सालोक्यं नाम भगवता सह समानलोकावस्थायित्वं,सामीप्यं सान्निध्यं,सारूप्यं समानवेषता,सात्मता समानात्मगुणत्वं, सायुज्यमिति यावत्, गुणाष्टकाविर्भावसाम्यं हि सायुज्यं, 'सार्ष्टित्वमथ सात्मताम्' इति पाठे सार्ष्टित्वं समानसमृद्धित्वं, सालोक्यादीनि त्रीणि सायुज्यप्रयुक्तानीति न मुक्तितारतम्यशङ्कावकाशः, निबद्धवैराणामपि सालोक्यादिप्राप्तिः कुत इत्यत आह—भावइति । हि यस्मात् भावः चित्तवृत्तिविशेषः भवकारणं फलोदयकारणं, त्वयि कोऽपि वा निरन्तरचित्तवृत्तिविशेषो मुक्तिकारणमित्यर्थः ॥ ४३ ॥

मु ॥ अहो विद्विषो वयं भक्तेभ्योऽपि सभाग्या इत्याह त्रिभिः ॥ पुण्डरीकाक्ष दैत्यादयोऽन्येच तादृशाः रजस्तमस्स्वभावाः, विशुद्धस्य रजस्तमोरहितस्य सत्त्वस्य धाम्नि आश्रये शास्त्रसिद्धचिदचिद्वस्तुशरीरिणि त्वयि अद्धा साक्षात् नित्यं निबद्धवैराः, तथापि वयं ते तव सालोक्यादिकं प्राप्ताः, सार्ष्टिः समानर्द्धिता, सात्मता समानात्मगुणत्वं, सायुज्यं गुणाष्टकाविर्भावः, साम्यं हि सायुज्यं, हि यस्मात् भावः चित्तवृत्तिः भवकारणं फलोदयकारणम् ॥ ४१ ॥ ४२ ॥ ४३ ॥

वी ॥ निदर्शयति—केचनेति ॥ केचन कंसादयः उद्बद्धवैरेण त्वयि निबद्धवैरेण, प्राप्ता इत्यनुषज्यते, केचन भक्त्या केचन गोपीजनाः कामतः कामात्प्राप्ताः, किंच यथा सन्निकृष्टाः त्वत्सात्मतां प्राप्ताः तथा सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न प्राप्ताः, यद्वा यथोद्बद्धवैरादिना प्राप्ताः तथा सन्निकृष्टा अपि सत्त्वप्रधाना अपि नानुप्राप्ता इत्यर्थः ॥ ४४ ॥

मु ॥ तत्प्रपञ्चयति—केचन चैद्यादयः उद्बद्धवैरेण जातया भक्त्या, केचन गोप्यादयः कामतो भक्त्या यथा सन्निकृष्टाः संप्राप्ताः, तथा सत्त्वेन संरब्धा आविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४४ ॥

वी ॥ त्वत्कृपासनाथो भाव एव भवकारणम्, अन्यथा त्वन्मायायाथात्म्यावेदिनां कुतस्ततो निस्तार इत्यभिप्रयन्नात्मनः कैमुत्यनयेन तस्या दुर्ज्ञेयतामाह—इदमिति ॥ हे योगीश्वरेश्वर योगीशा अपि प्रायशः तव योगमायया इदमित्थमिति स्वरूपतस्स्वभावतश्च न विदन्ति, कुतो वयं विद्मः ॥ ४५ ॥

न विदन्त्यपि योगीशा योगमायां कुतो वयम् ॥ ४५

तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणोऽघगृहान्धकूपात् ।
निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिश्शान्तो यथैक उत सर्वसखश्चरामि॥

शाध्यस्मानीशितव्येश निष्पापान्कुरु नः प्रभो ।
[1]पुमान्यश्श्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४७

श्रीभगवानुवाच—

आसन्मरीचेष्षट्पुत्रा ऊर्णायां प्रथमेऽन्तरे ।

---

मु ॥ चित्रमिदमित्याह—इदमिति प्रकारितया इत्थमिति प्रकारतश्च योगमायाम् आश्चर्यशक्तियोगं योगेशाः ब्रह्मादयोऽपि न विदन्ति, तदा वयं कुतो विद्मः? न कुतश्चित् ॥ ४५ ॥

वी॥ तन्नइति ॥ तत्तस्मात् त्वन्मायास्वरूपस्वभाववेदनतरणयोः दुष्करत्वात् केवलं प्रसीद प्रसन्नो भव, अस्माननुगृहाणेत्यर्थः, कथं? यथा निरपेक्षैः निष्कामैः विमृग्ये युष्मत्पादारविन्दे धिषणा बुद्धिर्यस्य अघयुक्तं गृहमेवान्धकूपस्तस्मान्निष्क्रम्य विश्वस्य शरणं रक्षितारो वृक्षाः तेषामङ्घ्रिषु मूलेषूपलब्धैः स्वतएव गलितैः फलादिभिर्वृत्तिः जीवनं यस्य सोऽहं शान्तस्सन् एक एव उत अथवा सर्वेषां सखायो ये महान्तः तैस्सहितश्चरामि तथानुगृहाणेत्यर्थः, 'सर्वसहः' इति पाठे शीतोष्णादिद्वन्द्वसहः ॥ ४६ ॥

मु॥एवं स्तुत्वा भक्तिं प्रार्थयते,यद्वा—यद्यपि वैरभावेनापि त्वत्प्राप्तिर्भवेत्,तथापि मां सात्त्विकं कुर्विति प्रार्थयते—तन्न इति ॥ तत् तथा नः प्रसीद, यथा निरपेक्षैः विमृग्ये युष्मत्पादारविन्दे धिषणा बुद्धिः यस्य सः अघयुक्तं गृहमेव अन्धः कूपः तस्मात्, धिषणान्येति पाठे पदारविन्दमेव धिषणम् आश्रयः तस्मादन्यत् गृहमेव अन्धकूपः तस्मात् निष्क्रम्य निर्गत्य विश्वस्य शरणानि रक्षितारो वृक्षाः तेषाम् अङ्घ्रिषु मूलेषु स्वतएव गलितैः फलादिभिः उपलब्धा प्राप्ता वृत्तिः जीविका येन सोऽहं शान्तस्सन्नेक एव चरामि, उत अथवा सर्वेषां सखायो महान्तः तैस्सह चरामीति ॥ ४६ ॥

वी ॥ प्रकृतागमनप्रयोजनबुभुत्सया स्वविषयकं शासनं प्रार्थयते—शाधीति ॥ हे ईशितव्येश ईशितव्याः नियम्यास्तेषाम् ईश नोऽस्मान् शाधि कैङ्कर्याज्ञापनेन शिक्षयेत्यर्थः, किं तत इत्यत आह—निष्पापानिति । हे प्रभो ततोऽपि किमत आह—पुमानिति । तिष्ठन् त्वच्छासनमाश्रयन् चोदनायाः कर्मबन्धाद्विमुच्यते ॥ ४७ ॥

मु ॥ अथानुशासनं प्रार्थयते—शाधीति॥ ईशितव्याः जीवाः तेषामीश नियन्तः अस्मान् शाधि आज्ञापय, अत एव नः अस्मान् निष्पापान् कुरु, तिष्ठन् शासने तिष्ठन् चोदनायाः विधिनिषेधलक्षणायाः सकाशात् कर्मबन्धात् विमुच्यते ॥ ४७ ॥

वी ॥ इत्थं प्रार्थितः प्राह भगवान्—आसन्निति ॥ प्रथमान्तरे स्वायंभुवमन्वन्तरे मरीचेः प्रजापतेः ऊर्णायां भार्यायां षट्पुत्रा आसन्, ते देवास्सुतां सरस्वतीं यभितुं मैथुनं कर्तुमुद्युक्तं कं ब्रह्माणं वीक्ष्य जहसुः ॥ ४८ ॥

---

१. शासनं. मु-भा-प्र-पा ॥

देवाः कञ्जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४८
तेनासुरीमगन्योनिमधुनावद्यकर्मणा। हिरण्यकशिपोर्जातानीतास्ते योगमायया ॥४९
देवक्या उदरे जाता राजन्कंसविहिंसिताः ।
सा तान्शोचत्यात्मजान्स्वांस्त इमेऽध्यासतेऽ[1]न्तिकम् ॥ ५०
इतएतान्प्रणेष्यामोमातृशोकापनुत्तये। ततःशापाद्विनिर्मुक्तालोकंयास्यन्तिविज्वराः ॥
स्मरोद्गीथःपरिष्वङ्गःपतङ्गःक्षुद्रभृग्घृणी। षडिमेमत्प्रसादेनपुनर्यास्यन्तिसद्गतिम् ॥
इत्युक्त्वातान्समादाय इन्द्रसेनेन पूजितौ ।

---

मु ॥ तदुक्तमङ्गीकृत्य स्वागमनकारणं सप्रपञ्चं कथयति—आसन्निति पञ्चभिः ॥ ऊर्णायां भार्यायां प्रथमे अन्तरे स्वायंभुवमन्वन्तरे देवाः एत एव षट्पुत्राः सुतां सरस्वतीं वाचं यभितुं मैथुनेन रमयितुम् उद्यतम् उद्युक्तं प्रजापतिं जहसुः उपहसितवन्तः ॥ ४८ ॥

वी ॥ तेन परिहासात्मकेन दुष्टेन कर्मणा आसुरीं योनिं प्रापुः, तदैव हिरण्यकशिपोर्जाताः, ते च योगमायया शक्त्या ततो नीतास्सन्तो देवक्या उदरे जाताः हेराजन् तेन कंसेन विहिंसिताः, सा देवकी तु तानात्मजान् मत्वा शोचति. ते चेमे तवान्तिकमन्तिके अध्यासते, "अधिशीङ्स्थासां कर्म" इत्याधारस्य कर्मत्वम् ॥ ४९ ॥ ५० ॥

मु ॥ तेन अवद्यकर्मणा पापेन अगन् अगमन् अधुना तत्क्षणमेव हिरण्यकशिपोः जाता इत्यर्थः, ते च योगमायया ततो नीताः सन्तः देवक्या उदरे जाताः हेराजन् बले कंसेन विहिंताः, सा देवकी तान् आत्मजान् मत्वा शोचति, ते चेमे तवान्तिके अध्यासते ॥ ४९ ॥ ५० ॥

वी ॥ इतइति ॥ मातुर्देवक्याः शोकापहरणाय इत एतान्प्रणेष्यामः, ततः शोकापनोदनानन्तरं पापात्प्रजापत्युपहासात्मकाद्विनिर्मुक्ताः अतएव विज्वराः निर्दुःखाः लोकं तावत्पुण्यलोकं यास्यन्ति, ततो मत्प्रसादेन मदनुग्रहेण हेतुना इमे स्मराद्यष्षट् सद्गतिं सतां गतिं मुक्तिं यास्यन्ति, स्मरोद्गीथइति सन्धिरार्षः, स्मरसहितोद्गीथइति मध्यमपदलोपसमासो वा ॥ ५१ ॥ ५२ ॥

मु ॥ इतः सुतलात् एतान् भुवं प्रणेष्यामः प्रणेतुमिच्छामः, किमर्थं? मातुश्शोकस्यापनुत्तये परिहाराय. तेषां देवत्वञ्च दास्यामीत्याह—ततो मातृशोकापनोदनानन्तरं लोकं स्वर्लोकं यास्यन्ति, ततो विज्वराः विगतसंसारज्वराश्च भविष्यन्ति ॥ ५१ ॥

मु॥ तत्र हेतुं वदन् गर्भानेव गणयति—स्मरश्चोद्गीथश्च तथा पुनः स्वर्लोकप्राप्त्यनन्तरं सद्गतिं मम गतिं पदं यास्यन्ति. स्मरस्यैव कीर्तिमानिति नाम. अतः 'कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः । अर्पयामास' इत्युक्तम् ॥ ५२ ॥

वी ॥ इतीति ॥ अयच्छताम् अर्पयामासतुः ॥ ५३ ॥

---

१. अन्तिके. मु-भा-प्र-पा ॥

पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५३
तान्दृष्ट्वा बालकान्देवी पुत्रस्नेहस्नुतस्तनी ।
परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५४
[1]अपाययत्स्तनंप्रीत्यासुतस्पर्शपरिस्नुतम्।मोहितामाययाविष्णोर्यंयासृष्टिःप्रवर्तते॥
पीत्वाऽमृतंपयस्तस्याःपीतशेषंगदाभृतः।नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः॥
तेनमस्कृत्यगोविन्दंदेवकींपितरंबलम्।मिषतांसर्वभूतानांययुर्धाम[2]विहायसा॥ ५७
तंदृष्ट्वादेवकीदेवीमृतागमननिर्गमम्।मेनेसुविस्मितामायांकृष्णस्यरचितांनृप॥ ५८
एवंविधान्यद्भुतानिकृष्णस्यपरमात्मनः।वीर्याण्यनन्तवीर्यस्यसन्त्यनन्तानिभारत॥

---

मु ॥ इन्द्रसेनेन पूजितौ तौ इति एवम् उक्त्वा तेन दत्तांस्तान् समादाय द्वारवतीं पुनरेत्य मातुः मात्रे पुत्रान् अयच्छताम् अर्पयामासतुः ॥ ५३ ॥

वी ॥ तानिति ॥ पुत्रस्नेहेन स्नुतौ स्रवन्तौ स्तनौ यस्यास्सा अभीक्ष्णशः पुनःपुनः मूर्ध्नि अजिघ्रत् ॥ ५४ ॥

मु ॥ ५४ ॥

वी ॥ सुतानां संस्पर्शेन स्नुतं क्षरन्तं स्तनमपाययत्, तत्र हेतुः—विष्णोः मायया मोहिता, मायां विशिनष्टि—यया सृष्टिः प्रवर्तते, सृष्टिरित्यस्य विश्वेत्यादिः ॥ ५५॥

मु ॥ सुतानां स्पर्शेन परिस्नुतौ प्रसृतक्षीरौ ॥ ५५ ॥

वी॥ पीत्वेति॥ तस्या देवक्याः अमृततुल्यं पयः स्तन्यं,तत्र हेतुः—गदाभृतः श्रीकृष्णस्य पीतशेषं पीत्वा नारायणस्य श्रीकृष्णस्याङ्गसंस्पर्शात् प्रतिलब्धम् आत्मदर्शनं स्वात्मपरमात्मयाथात्म्यज्ञानं यैस्ते बलं बलभद्रंच नमस्कृत्य सर्वभूतानां मिषतां पश्यतां सतां विहायसा धाम देवलोकं ययुः ॥ ५६ ॥ ५७ ॥

मु ॥ तत्रे हेतुः—गदाभृतः पीतशेषमिति। नारायणाङ्गसंस्पर्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैः ॥ ५६ ॥

मु ॥ धाम देवलोकं विहायसा गगनमार्गेण ॥ ५७ ॥

वी ॥ तमिति ॥ तं मृतानाम् आगमनपूर्वकं निर्गममवलोक्य सुतरां विस्मिता सती श्रीकृष्णस्य मायां मेने सर्वं तन्मायाकृतममन्यत, माया आश्चर्यशक्तिः ॥ ५८ ॥

मु ॥ सुतानाम् आगमनं निर्गमनं च, कृष्णेन रचिताम् ॥ ५८ ॥

वी ॥ हे भारत अनन्तवीर्यस्यानन्तकल्याणवीर्यसूचकगुणाकरस्य भगवतः इत्थंभूतानि वीर्याणि प्रभावसूचकचेष्टितान्यनन्तानि सन्ति न साकल्येन वक्तुं श्रोतुं वा शक्यानीति भावः ॥ ५९ ॥

मु ॥ ॥ ५९ ॥

---

१. अपाययत्स्तनौ...परिस्नुतौ. मु-भा-प्र-पा ॥

२. दिवौकसां. पा ॥

श्रीसूत उवाच—

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरित[1]ममलकीर्तेर्वर्णितं व्यासपुत्रैः।
जगदघभिद्लं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम॥ ६०

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे मृताग्रजानयनं नाम पञ्चाशीतितमोऽध्यायः॥ ८५॥

---

—(सुभद्राहरणकथारम्भः)—

श्रीविष्णुरात उवाच—

ब्रह्मन्वेदितुमिच्छामिस्वसारंरामकृष्णयोः।यथोपयेमेविजयोयाममासीत्पितामही॥

---

वी॥ उपवर्णिताख्यानश्रवणादिफलमाह सूतः—यइति॥ व्यासपुत्रैरिति बहुवचनं गुरुत्वाभिप्रायम्, अमला कीर्तिर्यस्य तस्य मुरारेश्चरितम् अलं निश्शेषं यथा तथा जगतोऽघं भिनत्तीति तथा न कृच्छ्रादिवद्यत्किञ्चिदघभिदिति भावः, तदेवं पापक्षयहेतुत्वमतएव मोक्षहेतुत्वं चोक्तं, किंच तद्भक्तानां सत्कर्णपूरं परमसुखावहकर्णाभरणरूपमित्थंभूतमिदं चरितं यः पुमाननुशृणोति श्रावयेद्वा, स भगवति कृतं निहितं चित्तं येन तथाभूतः तद्भगवतस्संबन्धि क्षेमं कालादिभयरहितं धाम स्थानं याति प्राप्नोति॥ ६०॥

मु॥ अमृता अविनष्टा कीर्तिः यस्य सः अमृतत्वप्रदा कीर्तिरिति वा, मुरारेः व्यासपुत्रैः शुकेन परीक्षिते वर्णितमिदं चरितं योऽनुशृणोति श्रावयेद्वा, सः भगवति कृतचित्तः तत्क्षेमधाम तस्य क्षेमात्मकं धाम परमपदं याति, पुत्रैरिति बहुवचनं गुरुत्वाभिप्रायम्, कथंभूतं चरितं? जगतः अघं भिनत्तीति तथा तत् अलं निश्शेषं यथा भवति तथा नकृच्छ्रादिवत् तस्य भक्तानां सतां कर्णं पूरयतीति तत्॥ ६०॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे पञ्चाशीतितमोऽध्यायः॥ ८५॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां सप्ताशीतितमोऽध्यायः॥ ८७॥

---

वी॥ "वीर्याण्यनन्तवीर्यस्य सन्ति" इत्युक्तं, तत्रार्जुनाय सुभद्राप्रदापनात्मकं भगवच्चेष्टितं श्रोतुकामः पृच्छति राजा—ब्रह्मन्निति॥ विजयोऽर्जुनो रामकृष्णयोः स्वसारं भगिनीं यथा येन प्रकारेणोपयेमे, तं प्रकारं वेदितुमिच्छामि, तां विशिनष्टि—या तयोः स्वसा मम पितामही बभूव॥ १॥

मु॥ देवक्याः पुत्रलाभवत् अर्जुनस्य सुभद्रोद्वाहोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसङ्गात्पृच्छति—ब्रह्मन्निति॥ स्वसारं सुभद्रां यथा विजयः उपयेमे, तत् वेदितुमिच्छामि, तत्र, हेतुः—येति॥ १॥

---

१. ममृतकीर्तेः, मु-भा-प्र-पा॥

श्रीब्रह्मरात उवाच —

अर्जुनस्तीर्थयात्रायांपर्यटन्नवनींप्रभुः।गतःप्रभासमशृणोन्मातुलेयींस आत्मनः॥ २
दुर्योधनायरामस्तांदास्यतीतिनचापरे।तल्लिप्सुस्सयतिर्भूत्वात्रिदण्डीद्वारकामगात्॥

सतत्र वार्षिकान्मासानवात्सीत्स्वार्थसाधनः।
पौरैस्सभाजितोऽभीक्ष्णं [1]रामेणच महात्मना॥ ४
एकदा[2]गृहमानीय आतिथ्येन निमन्त्र्य तम्।
श्रद्धयोपहृतं भैक्षं बलेन बुभुजे किल॥ ५

सोऽपश्यत्तत्र[3]महतींकन्यांवीरमनोरमाम्।प्रीत्युत्फुल्लेक्षणस्तस्यांभावक्षुब्धंमनोदधे

---

वी॥ तं प्रस्तौति मुनिः—अर्जुनइत्यादिना 'अथान्यदपि कृष्णस्य'इत्यतः प्राक्तनेन॥ अवनीं पृथ्वीं पर्यटन् प्रभासं नाम तीर्थं प्रति गतः, तत्र सोऽर्जुन आत्मनस्स्वस्य मातुलेयीं मातुलस्य सुतां तां सुभद्रां रामो दुर्योधनाय दास्यति, अपरे वसुदेवादयस्तु नच दास्यन्तीत्यशृणोत्, वसुदेवाद्यनुमतिमन्तरेणापि रामो दातुमुद्युक्तवानित्यशृणोदित्यर्थः, तल्लिप्सुरिति—तां मातुलेयीं लिप्सुः तां जिहीर्षुरित्यर्थः, सोऽर्जुनस्त्रिदण्डी यतिर्भूत्वा रामं वञ्चयितुं त्रिदण्डियतिवेषं धृत्वा॥ २॥ ३॥

मु॥ अवनीं पर्यटन् प्रदक्षिणीकुर्वन् प्रभासं गतः स प्रभुः आत्मनो मातुलेयीम् अशृणोत्॥ २॥

मु॥ कथमशृणोत्?—दुर्योधनायेति॥ अपरे वसुदेवादयो न दास्यन्तीति, तल्लिप्सुः तां लब्धुमिच्छन् रामवञ्चनार्थं त्रिदण्डी यतिर्भूत्वा द्वारकामगात्॥ ३॥

वी॥ सतत्रेति॥ वार्षिकानाषाढाद्याश्विनान्तांश्चतुरो मासानुषितवान्, तत्र हेतुः—स्वार्थसाधनः स्वार्थं स्वप्रयोजनं साधयतीति तथा, नन्द्यादित्वात्कर्तरि ल्युः, पौरैर्महात्मना रामेणच अभीक्ष्णं पुनःपुनस्संमानितोऽवात्सीदिति संबन्धः॥ ४॥

मु॥ स्वार्थसाधनः कन्याप्रेप्सुः सच अर्जुनोऽयमित्यजानता रामेण पौरैश्च अजानद्भिः अभीक्ष्णं सभाजितः पूजितः अभूत्॥ ४॥

वी॥ एकदेति॥ बलेन रामेणैकदा आतिथ्येन, हेत्वर्थे तृतीया, आतिथ्यार्थं निमन्त्रितः श्रद्धयोपहृतं परिविष्टं भैक्षमन्नं बुभुजे॥ ५॥

मु॥ तम् आतिथ्येन निमन्त्र्य गृहमानीय बलेन यच्छ्रद्धयोपहृतं परिवेषितं भैक्षं किल अर्जुनो बुभुजे इत्यन्वयः॥ ५॥

वी॥ सइति॥ सोऽर्जुनः महतीमद्भुतां वीराणां मनो हरतीति तथा तां प्रीत्योत्फुल्ले विकसिते ईक्षणे यस्य सः तस्यां कन्यायां भावेन रत्यभिप्रायेण क्षुभितं मनो दधे निहितवान् 'स्मरक्षुब्धम्' इति पाठान्तरम्॥ ६॥

मु॥ भावेन अभिप्रायेण क्षुभितं मनो दधे॥ ६॥

---

१. रामेणाजानता च सः मु भा प्र पा॥ २. गृहमानिन्ये आ. पा॥
३. तां तन्वीं. पा॥

साऽपितंचकमेवीक्ष्यनारीणांहृदयंगमम्।हसन्तीव्रीडितापाङ्गातन्न्यस्तहृदयेक्षणा॥
तांपरंसमनुध्यायन्नन्तरंप्रेप्सुरर्जुनः।नलेभेशंभ्रमच्चित्तःकामेनातिबलीयसा ॥ ८
महत्यांदेवयात्रायांरथस्थांदुर्गनिर्गताम्।जहारानुमतःपित्रोःकृष्णस्यचमहारथः॥ ९
रथस्थोधनुरादायशूरानारुन्धतोभटान्।विद्राव्यक्रोशतांस्वानांस्वभागंमृगराडिव॥
तच्छ्रुत्वाक्षुभितोरामःपर्वणीवमहार्णवः।गृहीतपादःकृष्णेनसुहृद्भिश्चाप्यशाम्यत ॥
प्राहिणोत्पारिबर्हाणिवरवध्वोर्मुदाबलः।महाधनोपस्करेभरथाश्वनरयोषितः॥ १२

अभवन्प्रीतिसंहृष्टा बान्धवा यदुपाण्डवाः ।
अथान्यदपि कृष्णस्य वात्सल्यं भक्तयोश्शृणु ॥ १३

---

वी ॥ सापीति ॥ सापि कन्यापि तमर्जुनं वीक्ष्य व्रीडितौ व्रीडायुक्तौ अपाङ्गौ नेत्रान्तौ यस्यास्सा तस्मिन्नेव न्यस्तं हृदयमीक्षणेच यया सा चकमे अकामयत ॥ ७ ॥

मु ॥ व्रीडितापाङ्गा सव्रीडकटाक्षा तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यया सा॥७॥

वी ॥ तामिति ॥ परं केवलं तां कन्यामेव ध्यायन्नन्तरं हर्तुमवसरं प्राप्तुमिच्छुः अतिबलीयसा कामेन भ्रमत् चित्तं यस्य सः शं रामादिसम्मानजं सुखं न लेभे ॥ ८॥

मु ॥ परं केवलं तां समनुध्यायन् अतिबलीयसा कामेन भ्रमच्चित्तश्चार्जुनः शं सुखं न लेभे , तथापि अन्तरप्रेप्सुः अवकाशं प्राप्तुमिच्छुः अभूत् ॥ ८ ॥

वी॥ एवं स्थिते कदाचिन्महारथोऽर्जुनः पित्रोः कृष्णस्येति च कर्तरि षष्ठी,देवकीवसुदेवाभ्यां कृष्णेनचानुमतः दुर्गात्प्राकाराद्बहिः निर्गतां रथस्थां कन्यां जहार ॥ ९ ॥

मु ॥ महत्यां देवयात्रायाम् अवकाश इति पित्रोर्वसुदेवदेवक्योः कृष्णस्य च अनुमतः अनुमतिं प्राप्तः सः दुर्गनिर्गतां दुर्गान्निर्गतां रथस्थस्सन् जहार ॥ ९ ॥

वी॥ततो रथस्थः धनुः गाण्डीवमादाय आ समन्तात् रुन्धतः शूरान्भटान् विद्राव्य पलायितान्कृत्वा स्वानां यदूनां क्रोशतामाक्रोशतां जहारेति पूर्वेण संबन्धः, यथा मृगराट् सिंहः स्वबलिं स्वभागं हरति, तद्वत् ॥ १० ॥

मु ॥ ततः आ समन्तात् रुन्धतः शूरान् भटान् रथस्थान् धनुरादाय विद्राव्य स्वानां बन्धूनां विक्रोशतां तान् अनादृत्य जहार, मृगराट् सिंहः स्वभागमिव ॥ १० ॥

वी ॥ तदिति ॥ तद्धरणं श्रुत्वा तावत्पर्वणि महार्णव इव क्षुभितः क्रुद्ध इत्यर्थः, ततः कृष्णेन सुहृद्भिश्च गृहीतौ पादौ यस्य सः अशाम्यत शान्तो बभूव ॥ ११ ॥

मु ॥ ११ ॥

वी ॥ किंच—प्राहिणोदिति ॥ बलो रामः पारिबर्हाणि प्रीत्या देयानि श्रेष्ठवस्तूनि प्राहिणोत् प्रददौ,महाधना अनर्घाः उपस्करा अलङ्कारा येषां तान् इभान् गजान् रथान् अश्वान् वराः श्रेष्ठाः योषितो दासीश्च प्राहिणोदिति संबन्धः ॥ १२ ॥

मु ॥ पारिबर्हाणि वरवध्वोः पितृदेयानि योषितश्च मुदा बलः प्राहिणोत्॥ १२ ॥

वी ॥ तदा यदवः पाण्डवाश्च बान्धवाः प्रीतिसंहृष्टाः प्रीतिरानन्दः तेन हृष्टाः विकसितमुखा बभूवुः,अथ भक्तवात्सल्यप्रयुक्तं भगवतश्चेष्टितं प्रस्तोतुं प्रतिजानीते—अथेति । भक्तयोः विषयभूतयोः यद्वात्सल्यं तत् शृणु ॥ १३ ॥

---

१. स्वभागं. मु-भा-प्र-पा ॥

श्रीशुक उवाच—

कृष्णस्यासी[1]द्द्विजश्रेष्ठःश्रुतदेवइतिश्रुतः।कृष्णैकभक्त्यापूर्णार्थःशान्तःकविरलम्पटः॥

सउवासविदेहेषुमिथिलायांगृहाश्रमी।अनीहयागताहार्यनिर्वर्तितनिजक्रियः॥ १५

यात्रामात्रंत्वहरहर्[2]दैवादुपनयत्युत।नाधिकंतावतातुष्टःक्रियाश्चक्रेयथोचिताः॥ १६

तथातद्राष्ट्रपालोऽङ्गबहुलाश्वइतिश्रुतः।मैथिलोनिरहंमानउभावप्यच्युतप्रियौ॥ १७

तयोः प्रसन्नो भगवान्दारुकेणाहृतं रथम्।

---

मु ॥ १३ ॥

वी ॥ क्वावमू भक्तौ ? कीदृशं वा तयोर्वात्सल्यमित्यतः प्रस्तौति—कृष्णस्येत्यादिना यावदध्यायसमाप्ति ॥ श्रुतदेवइति श्रुतो विश्रुतः कृष्णस्य भक्त आसीत्, सच कृष्णे भगवति एकया एकान्तया अनन्यप्रयोजनयेति यावत्, तया भक्त्या पूर्णार्थः पूर्णमनोरथः अतएव शान्तः कविर्विद्वानलम्पटः चित्तविक्षेपरहितः ॥ १४ ॥

मु ॥ कृष्णस्य भक्त इति शेषः, कृष्णे एका अनन्यगामिनी या भक्तिः तया पूर्णः परिसमाप्तोऽर्थो यस्य तथा, तत्र हेतुः—शान्त इत्यादि ॥ १४ ॥

वी ॥ स श्रुतदेवः विदेहेषु देशेषु तत्रापि मिथिलायां पुरि गृहाश्रमी सन् उषितवान् , अनीहया अनुद्यमेनैव आगतं यदाहार्यं भोज्यं तेन निर्वर्तिताः निजाः क्रिया अतिथिपूजनादिका येन सः ॥ १५ ॥

मु ॥ किं तर्हि कृष्णान्तिक एवास्ते ? इत्यत्राह—स इति ॥ गृहस्थत्वे कथमलम्पटत्वमित्यत्राह—अनीहया अनुद्यमेन आगतो योऽर्थः तेन निर्वर्तिता निजा गृहस्थक्रियाः येन सः तथा ' अनीहयागताहारः ' इति पाठे अनीहया स्वयम् उत्पन्नाहारः॥ १५॥

वी॥ एतदेव प्रपञ्चयति—यात्रामात्रमिति॥ अयं श्रुतदेवः यात्रामात्रं शरीरनिर्वाहमात्रोपयुक्तमाहार्यमहरहर्दैवादुपनयति उपनयन्तं प्रतीक्षत इत्यर्थः, अधिकं यात्रामात्रादधिकं नोपनयति, तावता यात्रामात्रेणैव तुष्टः उचिताः वर्णाश्रमोचिताः क्रियाः पञ्चमहायज्ञादिरूपक्रियाः यथावच्चक्रे ॥ १६ ॥

मु ॥ अनीहस्यापि भूधनादिलाभे मदोदय इत्यत आह—यात्रामात्रं शरीरादि निर्वाहमात्रं सकृज्जीवनमात्रसाधनं दैवादुत्पन्नम् अस्ति, नाधिकम्, तावता तावन्मात्रेण तुष्टोऽसौ यथा यथावत् उचिताः क्रियाः चक्रे ॥ १६ ॥

वी ॥ तथेति ॥ अङ्ग हे राज यथाऽयं श्रुतदेवः तथा तद्राष्ट्रपा : विदेहदेशाधिपः बहुलाश्व इति श्रुतः विश्रुतः, स मैथिलो जनकवंश्यः निरहंमानः देहात्माभिमानरहितः, उभौ श्रुतदेवबहुलाश्वौ अच्युतस्य प्रियौ भक्तौ ॥ १७॥

मु ॥ अङ्ग हे राजन् बहुलाश्व इति श्रुतो मैथिलः तद्राष्ट्रपालश्च तथा श्रुतदेववत् कृष्णैकभक्त्या पूर्णार्थः निरहम्मानः निर्गतोऽहम्मानो नरेश्वरोऽहमित्यभिमानो यस्मात् स तथा, एवमुभावपि अच्युतप्रियौ अभूताम् ॥ १७ ॥

वी ॥ तयोरिति ॥ प्रसन्नः प्रसन्नो भवितुमित्यर्थः, आहृतमानीतं मुनिभिस्साकं मुनिभिस्सह ॥ १८ ॥

---

१. तस्वा कश्चिच्छु· पा ॥ २. दैवादुत्पन्नमस्युत· मु· भा-प्र-पा ॥ दैवादुपनमत्युत· पा ॥

आरुह्य सार्कं मुनिभिर्विदेहान्प्रययौ प्रभुः ॥ १८
नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणः ।
अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १९
तत्रतत्रसमायान्तंपौराजानपदानृपाउपतस्थुस्साघर्यहस्ताग्रहैस्सूर्यमिवोदितम् ॥
आनर्तधन्वकुरुजाङ्गलवङ्गमत्स्याः पश्चालकुन्तिमधुकेकयकोसलार्णाः ।
अन्येचतन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥ २१
तेभ्यस्स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरु[१]रर्थदृशं प्रयच्छन् ।
शृण्वन्दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान्॥

मु ॥ ततः किमित्यत आह—तवोरिति ॥ १८ ॥

वी ॥ केऽमी मुनय इत्यत आह—नारदइति ॥ कृष्णो द्वैपायनः रामो भार्गवः अहं शुकः ॥ १९ ॥

मु ॥ मुनीनेवाह—नारदइति ॥ कृष्णो व्यासः, रामो भार्गवः, अहं शुकः ॥ १९ ॥

वी ॥ तत्रतत्रेति ॥ पुरेषु भवाः पौराः जनपदेषु देशेषु भवाः जानपदाः साघ्याः हस्ताः येषां ते ग्रहैर्गुरुशुक्रादिभिः सहोदितं सूर्यमिव समायान्तं तं भगवन्तमुपतस्थुः, अभूतोपमेयम्॥ २० ॥

मु ॥ प्रस्थानक्रममाह—तत्रेति ॥ पौराः पुरवासिनः जानपदा जनपदवासिनश्च पौरजानपदाः ॥ २० ॥

वी॥ आनर्तेति॥हे नृप आनर्तादिदेशवर्तिनो जनाः तथा अन्येच नराः नार्यश्च उदारो हासः स्निग्धे ईक्षणे यस्मिंस्तत्तस्य भगवतो मुखसरोजं पपुः मुखसरोजलावण्यरूपं मकरन्दं नेत्रचषकैः पपुरित्यर्थः ॥ २१ ॥

मु ॥ जनपदानेवाह—आनर्तेति॥ कुरुजाङ्गलं कुरुक्षेत्रम्, हे नृप आनर्ताद्यर्णान्तदेशस्थाश्च नृनार्यः तन्मुखसरोजं दृशिभिः पपुः, कथंभूतम् ? उदारो हासः स्निग्धमीक्षणं च यस्मिन् ॥ २१ ॥

वी ॥ तेभ्यइति ॥ त्रिलोकगुरुर्भगवान् स्वदर्शनेन विनष्टा तमिस्रा दृग्येषां तेभ्यः स्ववीक्षणमात्रनिरस्ताज्ञानेभ्य इत्यर्थः क्षेमं श्रेयो यथा भवति तथा अर्थदृशं प्रयच्छन् अपाङ्गदृष्ट्या तानवलोकयन्नित्यर्थः, अतिशुभ्रं निर्मलं दिगन्तधवलं दिगन्तव्याप्तं स्वयशस्सुरैर्नृभिश्च गीतं शृण्वन् शनैर्विदेहान् देशानगाद्ययौ ॥ २२ ॥

मु ॥ स तत्र लोकगुरुश्च तेभ्यः क्षेमम् अभयम् अर्थदृशं तत्त्वार्थं ज्ञानञ्च यच्छन् शनकैः विदेहान् अगात्, कथंभूतेभ्यः ? स्ववीक्षणेन विनष्टतमिस्राः विनष्टदोषाः दृशो येषां तेभ्यः, सुरैः नृभिश्च गीतं स्वयशः शृण्वन्, कथंभूतम् ? व्याप्तेन दिगन्तेन सह धवलं दिशामन्ते धवलं वा, अशुभं हन्तीति अशुभघ्नम् ॥ २२ ॥

१. रर्थदृशं च यच्छन्. मु भा-प्र पा ॥

तेऽच्युतंप्राप्तमाकर्ण्यपौराजानपदानृप।अभीयुर्मुदितास्तस्मैगृहीतार्हणपाणयः॥ २३
दृष्ट्वातमुत्तमश्लोकंप्रीत्युत्फुल्लाननाशयाः।निबद्धाञ्जलिभिर्नेमुश्श्रुतपूर्वांस्तथामुनीन्
स्वानुग्रहायसंप्राप्तंमन्वानौतंजगद्गुरुम्।मैथिलश्श्रुतदेवश्चपादयोःपेततुःप्रभोः ॥ २५
न्यमन्त्रयेतांदाशार्हमातिथ्येनसहद्विजैः।मैथिलश्श्रुतदेवश्चयुगपत्सन्नताञ्जली ॥ २६
भगवांस्तदभिप्रेत्यद्वयोःप्रियचिकीर्षया।उभयोराविशद्गेहमुभाभ्यांतदलक्षितः॥ २७

श्रोतुमप्यसतां दूराज्जनकस्स्वगृहागतान् ।
आनीतेष्वासनाग्र्येषु सुखासीनान्महायशाः ॥ २८

---

वी ॥ तइति ॥ ते वैदेहाः पौरा जानपदाश्च गृहीतमर्हणं यैस्ते पाणयो येषां ते तस्मै भगवते अभिययुः प्रत्युज्जग्मुः तमभियुरित्यर्थः, यद्वा तस्मै इत्यनेन सापेक्षस्यापि गृहीतार्हणेत्यस्यार्षत्वात्समासः, तं वा इति पाठान्तरम् ॥ २३ ॥

मु ॥ मिथिलाप्रवेशक्रममाह—त इति ॥ पौरा जानपदाश्च ते जनाः अच्युतं प्राप्तम् आकर्ण्य मुदिताः तमभीयुः प्रत्युज्जग्मुः, तस्मै तत्पूजार्थं गृहीतानि अर्हणानि पूजाद्रव्याणि पाणिषु यैस्ते तथा ॥ २३ ॥

वी ॥ दृष्ट्वेति ॥ प्रीत्योत्फुल्लमाननम् आशयश्च येषां ते विदेहदेशवासिनो जनास्तं कृष्णं तथा श्रुतपूर्वान् न तु दृष्टपूर्वान मुनींश्च निबद्धाञ्जलिभिः नेमुः, कैर्धृताञ्जलिभिरिति पाठे न्यस्ताञ्जलिभिश्शिरोभिरित्यर्थः ॥ २४ ॥

मु ॥ श्रुतपूर्वं तम् उत्तमश्लोकं दृष्ट्वा प्रीत्या उत्फुल्लम् आननम् आशयश्च येषां ते धृताञ्जलिभिः कैः शिरोभिः नेमुः ॥ २४ ॥

वी ॥ स्वानुग्रहायेति ॥ मैथिलः श्रुतदेवश्च जगद्गुरुं भगवन्तं स्वानुग्रहार्थमागतं मन्वानौ प्रभोः श्रीकृष्णस्य पादयोः निपेततुः ॥ २५ ॥

मु ॥ २५ ॥

वी ॥ न्यमन्त्रयेतामिति ॥ सन्नतौ नमस्कुर्वन्तौ अञ्जली ययोस्तौ द्विजैर्मुनिभिः सह सहितमित्यर्थः, दाशार्हं भगवन्तमातिथ्येन आतिथ्यार्थं युगपदेव न्यमन्त्रयेतां निमन्त्रितवन्तौ ॥ २६ ॥

मु ॥ द्विजैस्सह आतिथ्येन युगपत् न्यमन्त्रयेताम् ॥ २६ ॥

वी ॥ भगवांस्त्विति ॥ तन्निमन्त्रणमभिप्रेत्याङ्गीकृत्य द्वयोरपि प्रियं कर्तुमिच्छया तत्तदा उभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं समायातीत्यलक्षितः अविदितः उभयोरपि गृहानविशत् ॥ २७ ॥

मु ॥ तत् उभयोरपि निमन्त्रणम् अभिप्रेत्य अभ्युपगम्य द्वयोः प्रियचिकीर्षया रूपाभ्यां विग्रहाभ्याम् उभयोर्गेहं द्विजैस्सह अविशत्, तदलक्षितः ताभ्यामलक्षितः अज्ञातचरित्रः ॥ २७ ॥

वी ॥ श्रोतुमिति ॥ असतां श्रोतुमपि दूरान् स्वगृहागतान् आनीय समर्पितेषु श्रेष्ठेष्वासनेषु सुखासीनान् नत्वेत्युपरिष्टात्संबन्धः, कथंभूतः? प्रवृद्धभक्त्या उद्धर्षमुन्नतहर्षं हृदयं यस्य अस्रैरानन्दाश्रुभिः आविले व्याप्ते ईक्षणे यस्य स चासौ स च तेषाम्

प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः। नत्वा तदङ्घ्रीप्रक्षाल्य तदपो लोकपावनीः॥ २९
सकुटुम्बो वहन्मूर्ध्ना पूजयांचक्र ईश्वरान्। गन्धमाल्याम्बराकल्पधूपदीपार्घ्यगोवृषैः॥
वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान्। पादावङ्कगतौ विष्णोः संस्पृशञ्छनकैर्मुदा॥

बहुलाश्व उवाच—

भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो।
अद्य नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः॥ ३२

स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान्। यदात्थैकान्तभक्तान्मे नानन्तः श्रीरजः प्रियः

[१]किं नु त्वच्चरणाम्भोजमेवं विद्विसृजेत्पुमान्।

---

अङ्घ्री पादौ प्रक्षाल्य ताः लोकपावनीरपः मूर्ध्ना वहन् गन्धादिभिरीश्वरान् पूजयामास. आकल्पोऽलङ्कारः तत्रेश्वरशब्दः ईश्वरात्मकपरः॥ २८॥ २९॥ ३०॥

मु॥ बहुलाश्वस्य तत्संभावनामाह—श्रोतुमित्येकादशभिः॥ असतां श्रोतुमपि दूरान् अशक्यान् किमुत द्रष्टुमिति भावः, ईश्वरान् अनुग्रहसमर्थान् स्वेनैव भक्त्या आनीतेषु आसनाग्र्येषु सुखासीनान् प्रवृद्धया भक्त्या उद्धतहर्षं हृदयं यस्य अस्रैः आविले ईक्षणे यस्य सच सच, पूजासाधनोक्तिः—गन्धेति॥ २८॥ ३०॥

वी॥वाचेति॥ततः अन्नेन तर्पितान् मधुरया वाचा प्रीणयन् अङ्कगतौ विष्णोः कृष्णस्य पादौ संस्पृशन् पादावङ्के निधाप्य संस्पृशन्नित्यर्थः, मुदा हर्षेणेदं वक्ष्यमाणमाह॥

मु॥ ततः अन्नेन तर्पितान् अन्नतर्पितान् अङ्कगतौ विष्णोः पादौ मुदा शनकैः करेण संस्पृशन् मर्दयन् मधुरया वाचा प्रीणन् इदमाह॥ ३१॥

वी॥ तदेवाह—भवानिति षड्भिः॥ हे विभो हि यस्माद्भवानात्मा अन्तरात्मा साक्षाद्द्रष्टा स्वदृक् अनन्याधीनप्रकाशश्च, अथातो मदभिप्रायं जानन् त्वत्पदाम्भोजं स्मरतां नोऽस्माकं दर्शनं प्राप्तः॥ ३२॥

मु॥ तद्दर्शयति—भवानिति षड्भिः॥ आत्मा अन्तर्यामी साक्षी द्रष्टा स्वदृक् स्वयंप्रकाशः, अथ अतः कारणात् त्वत्पदाम्भोजं स्मरतां नः अस्माकं दर्शनं गतः प्राप्तः॥ ३२॥

वी॥ किं च—स्ववच इति॥ यस्मात् एकान्तभक्तादनन्यप्रयोजनभक्तियुक्तात् ममानन्तश्शेषः सखाऽपि श्रीर्लक्ष्मीर्भार्याऽपि अजो ब्रह्मा पुत्रोऽपि न प्रिय इति यत् आत्थ उक्तवानसि तत्स्ववचो दृढीकर्तुं भवानस्माकं दृग्गोचरो दृग्विषयो बभूव॥ ३३॥

मु॥ एकान्तभक्तात् मे अनन्तोऽग्रजोऽपि न प्रियः, श्रीर्भार्यापि अजः पुत्रोऽपि न प्रियः इति यत् आत्थ, तत् स्ववचः ऋतं सत्यं कर्तुम् अस्माकं दृशोर्गोचरो भवति भवानित्यर्थः॥ ३३॥

वी॥ तस्मादेवंविधं त्वच्चरणाम्भोजं पुमान्विसृजेत् किन्नु न त्यजत्येवेत्यर्थः, किंच यत् यस्मात् निष्किंचनानां नास्ति किंचन प्रार्थनीयं येषां तेषां शान्तानां जितान्तःकर-

---

१. को नु. पा॥

निष्किञ्चनानां शान्तानां मुनीनां यत्त्वमात्मदः ॥ ३४
योऽवतीर्य यदोर्वंशे नृणां संसरतामिह । यशो[1]ऽचिनोत्स्वं तच्छान्त्यै त्रैलोक्यवृजिनापहम् ॥
[2]नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे । नारायणाय ऋषये संशान्तं तप ईयुषे ॥ ३६
दिनानि कतिचिद्भूमन्[3] गृहे नो निवसन्द्विजैः । समेतः पादरजसा पुनीहीदं निमेः कुलम् ॥
इत्युपामन्त्रितो राज्ञा भगवाल्लोकपावनः ।

---

णानां मुनीनां त्वमात्मदः निरतिशयपुरुषार्थभूतमात्मानं ददाति स्ववशीकरोतीति तथा तस्माच्च विसृजेत्किन्न्विति संबन्धः ॥ ३४ ॥

मु ॥ एवंवित् भवतो भक्ता एवातिप्रिया इति जानन् को नु पुमान् त्वच्चरणाम्भोजं विसृजेत् न कोऽपि त्यजतीत्यर्थः, तत्र हेतुः—यत् यस्मात् त्वं निष्किञ्चनानाम् उपायरहितानां शान्तानाम् ऊर्मिषट्करहितानां मुनीनाम् आत्मदः आत्मप्रदः ॥ ३४ ॥

वी ॥ सत्यमित्थम्भूतस्त्वीश्वरो नत्वहमित्यत आह—य इति ॥ इह प्रकृतिमण्डले संसरतां जीवानां तच्छान्त्यै सांसारिकतापत्रयोपशमनाय यदोर्वंशे अवतीर्य यस्त्रिलोकवृजिनापहं त्रैलोक्यपापहरं स्वं स्वासाधारणं यशः अचिनोत् सम्पादितवान्, तस्मै भगवते तुभ्यं नम इत्यन्वयः, सर्वेश्वर एव त्वं लोकोज्जिजीवयिषयाऽवतीर्ण इति भावः ॥ ३५ ॥

मु ॥ यो भवान् तच्छान्त्यै तेषां नराणां शान्त्यै त्रैलोक्यस्य वृजिनमपहन्तीति तत् तथा ॥ ३५ ॥

वी ॥ एवंविधाय तुभ्यं न प्रतिकर्तुं शक्नुमः, किन्तु केवलं नमस्कुर्मइत्यभिप्रेत्य नमस्करोति—नमइति ॥ कृष्णाय लोकसुखकराय अकुण्ठमेधसे कृतज्ञतमाय संशान्तं शान्तिकरं लोकक्षेमावहं तप ईयुषे प्राप्ताय अधिकुर्वतइति यावत्, नारायणाय ऋषये तद्रूपेणावस्थिताय तस्मै पूर्वोक्तविधाय भगवते तुभ्यं नमः ॥ ३६ ॥

मु ॥ भक्त्यतिशयेन नमस्करोति—नम इति ॥ भगवते कृष्णाय तुभ्यं नमः, कथंभूताय? ऋषये नारायणाय, तद्रूपत्वे हेतुः—अकुण्ठमेधसे अप्रतिहतज्ञानाय, नारायणाख्यस्य ऋषेः को नाम अन्येभ्यो मुनिभ्योऽतिशयः? येन कृष्णस्य तद्रूपत्वमस्तु, तथैव भवतीत्यत आह—संशान्तं तपः ऊर्मिषट्करहितं ज्ञानम् ईयुषे प्राप्तवते ॥ ३६ ॥

वी ॥ अभिप्रेतं निवेदयति—दिनानीति ॥ हे भूमन् द्विजैर्मुनिभिः समेतस्सहितः त्वं नोऽस्माकं गृहे कतिचिद्दिनानि निवसन् पादरजसा इदं निमेः कुलं पुनीहि पवित्रीकुरु ॥ ३७ ॥

मु ॥ अथ कञ्चित्कालं तत्रैव वासं प्रार्थयते—दिनानीति ॥ हे भूमन् द्विजैस्समेतः कतिचिद्दिनानि नो गृहान् गृहेषु निवसन् इदं निमेः कुलं पादरजसा पुनीहि ॥ ३७ ॥

वी ॥ इतीति ॥ उपामन्त्रितः प्रार्थितः, लोकपावन इतिहेतुगर्भम्, अतो मिथिलायां पुरि नराणां योषितां च कल्याणं कुर्वन् कर्तुमित्यर्थः, उवास उषितवान् ॥ ३८ ॥

---

१. यशो वितेन. पा ॥ २. नमस्तुभ्यं. मु-भा-प्र-पा ॥ ३. गृहान्नो. मु-भा-प्र-पा ॥

उवास कुर्वन्कल्याणं मिथिलानरयोषिताम् ॥ ३८

श्रुतदेवोऽच्युतंप्राप्तंस्वगृहंजनकोयथा॥नत्वामुनींश्वसंहृष्टोधून्वन्वासोननर्तह ॥ ३९

तृणपीठबृसीष्वेतानानीतेषूपवेश्यसः॥स्वागतेनाभिवन्द्याङ्घ्रीन्सभार्योऽवनिजेमुदा॥

तदम्भसा महाभाग आत्मानं स्वगृहान् स्वयम् ।
स्नपयांचक्र उद्धर्षो लब्धसर्वमनोरथः ॥ ४१

फलार्हणोशीरशिवामृताम्बुभिर्मृदा सुरभ्या तुलसीकुशाम्बुजैः ।
आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्धनान्धसा ॥ ४२

---

मु ॥ मिथिलायां वसतां नराणां योषितांच कल्याणं कुर्वन् उवास ॥ ३८ ॥

वी ॥ श्रुतदेव इति ॥ जनको जनकवंश्यत्वात् बहुलाश्वः यथा तथा श्रुतदेवोऽपि स्वगृहं प्राप्तमच्युतं मुनींश्च नत्वा नितरां हृष्टोऽतएव वास उत्तरीयं धून्वन्नुत्क्षिपन् ननर्त, हेतिहर्षे ॥ ३९ ॥

मु ॥ श्रुतदेवस्य सत्कारमाह—श्रुतदेव इति द्वादशभिः ॥ यथा जनकः तथा स्वगृहं प्राप्तम् अच्युतं मुनींश्च नत्वा संहृष्टो वासो धून्वन् परिभ्रामयन् ननर्त ह ॥ ३९ ॥

वी ॥ तृणेति ॥ स श्रुतदेवः आनीतेषु तृणमयेषु पीठेषुचासनेषुच तानुपवेश्य स्वागतप्रश्नपूर्वकमभिवन्द्य सभार्यो मुदा हर्षेणाङ्घ्रीनवनिजे अवनिनिजे प्रक्षालितवान् अभ्यासलोप आर्षः ॥ ४० ॥

मु ॥ स एतान् तृणैर्वीरुद्भिश्च कृतासु बृसीषु उपवेश्य स्वागतेन स्वागतवचनेन सह अभिवन्द्य मुदा सभार्यः तेषाम् अङ्घ्रीन् अवनिजे प्रक्षालितवान् ॥ ४० ॥

वी ॥ तदम्भसेति ॥ हे महाभाग तदम्भसा अङ्घ्रिजलेन स्वयमेवात्मानं देहं स्वगृहांश्च स्नपयामास, कथम्भूतः ? उद्धर्षः उत्कटो हर्षो यस्य सः लब्धः सर्वमनोरथो येन सः ॥

मु ॥ उद्गतो हर्षो यस्य सः उद्धर्षः लब्धास्सर्वे मनोरथाः यस्य सः ॥ ४१ ॥

वी॥ फलेति॥फलानि चार्हणानि गन्धपुष्पधूपदीपादीनि उशीराणि सुगन्धितृणविशेषमूलानि च शिवानि निर्मलानि अमृततुल्यान्यम्बूनि च तैस्सुरभ्या मृदा कस्तूर्या तुलस्या कुशैरम्बुजैश्च सत्त्वविवर्धनान्धसा सत्त्ववर्धकान्नेन जात्याश्रयनिमित्तादुष्टान्नेन चेत्यर्थः एभिः यथोपपन्नया अनायासेन संपन्नया सपर्यया पूजया आराधयामास॥४२॥

मु ॥ यथोपपन्नया यथावत्संभूतया सपर्यया तान् मुदा सह आराधयामास. तत्साधनोक्तिः—फलैः आमलकादिभिः अर्हणेन अर्घ्यादिना उशीरैः तृणविशेषमूलैः सुशिवैः वासितैः अमृतवत् स्वादुभिः अम्बुभिः सुरभ्या मृदा कस्तूरीप्रमुखया तुलस्यादिभिः यथोपपन्नया अनायासेन लब्धया भूतानुपद्रवलब्धत्वात् सत्त्वविवर्धनं यदन्धः अन्नं तेन च ॥ ४२ ॥

स तर्कयामास कुतो ममान्वभूद्गृहान्धकूपे पतितस्य सङ्गमः।
यस्सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४३

सूपविष्टान्कृतातिथ्यान् श्रुतदेव उपस्थितः।
[1]सभार्यस्स्वगृहापन्नमुवाचाङ्घ्र्यभिमर्शनः ॥ ४४

श्रीश्रुतदेव उवाच—

[2]सोऽद्यनोदर्शनंप्राप्तःपरःपरमपूरुषः।यइदंशक्तिभिस्सृष्ट्वाप्रविष्टोऽन्वात्मसत्तया ॥

यथा शयानः पुरुषो मनसैवात्ममायया।

---

वी ॥ स इति ॥ स श्रुतदेवः तर्कयामास, तर्कमेव दर्शयति—कुत इति। गृहमेवान्धकूपस्तस्मिन् पतितस्य मम कृष्णेन तथा अस्य कृष्णस्यात्मनो मूर्तेर्निकेतैः स्थानभूतैः भूसुरैश्च, कथम्भूतैः सर्वतीर्थानामास्पदानि आश्रयाः पादरेणवो येषां तथा भूतैस्सह यः सङ्गमः स कुतोऽन्वभूत्, अन्विति विस्मये ॥ ४३॥

मु ॥ स एवं तर्कयामास, कथम्? गृहमेव अन्धकूपः तस्मिन् पतितस्य मम कृष्णेन अस्यात्मनिकेतभूसुरैः कृष्णस्य आत्मा स्वरूपं विग्रहो वा तस्य निकेतैः आवासभूतैः भूसुरैश्च सर्वेषां तीर्थानामास्पदं पादरेणवो येषां तैः सङ्गम इति यत् तत् कुतोऽभूदिति, पाठान्तरे—गृहान्धकूपे पतितस्य मे कुतो हेतोः सङ्गमोऽभूत्? यः सङ्गमः भूसुरैः कृष्णेनच आसीत्, कुत इति वितर्के, अन्विति विस्मये ॥ ४३ ॥

वी॥सूपविष्टानिति॥कृतमातिथ्यं येभ्यस्तानुपस्थितः समीप उपविष्टः स्वगृहानापन्नं प्राप्तं भगवन्तम् अङ्घ्र्यभिमर्शनः अङ्घ्री अभिमृशन्नाह उवाच ॥ ४४ ॥

मु ॥ उपस्थितः समीप उपविष्टः भार्या भर्तव्याः स्वजना अपत्यानि च तैः सहितः कृष्णस्य अङ्घ्रिमभिमृशति संमर्दयतीत्यङ्घ्र्यभिमर्शनः कृतातिथ्यान् सूपविष्टांस्तान् उवाच ॥ ४४ ॥

वी॥उक्तिमेवाह—सोऽद्येत्यादिना॥ तावत्तद्दर्शनेनात्मनः कृतार्थतामभिप्रयन्नाह—सोऽद्येति॥ स तादृशः परः प्रकृतिपुरुषविलक्षणः अतएव परमः पर उत्कृष्टा मा यस्मात्स चासौ पुरुषस्त्वं नोऽस्माकं दर्शनं प्राप्तः, कीदृशः? यो मायया आत्मसङ्कल्पेन इदं जगत्सृष्ट्वा आत्मसत्तया आत्मनस्सत्ता सदैकरूपता सदैकरूपेणात्मस्वरूपेण अनुप्रविष्टः॥

मु.॥ तद्दर्शयति—अद्येति षड्भिः ॥ पञ्चभिः स्तवनम्, अन्येन कैङ्कर्यभजनम्, अहो भाग्यं, यद्दुर्लभदर्शनो दर्शनं प्राप्त इत्याह—अद्येति ॥ यर्हि यदा परः पुरुषः इदं सर्वं जगत् सृष्टिकाले शक्तिभिः उपेतं सृष्ट्वा प्रविष्टोऽनुप्रविष्टः आत्मसत्तया सदैकरूपेण अनुप्रविष्टः, तदा नः अदर्शनं प्राप्तः, अद्यतु दर्शनं प्राप्त इत्यर्थः ॥ ४५ ॥

वी ॥ तत्र दृष्टान्तो—यथेति॥ अत्र पुरुषशब्दो जीवशरीरकपरमात्मपरः, जीवस्य स्वाप्नार्थस्रष्टृत्वायोगात् तदयमर्थः—यथा शयानः पुरुषः पुरुषशरीरकः परमात्मा मनसा स्वशरीरभूतजीवमनोरथानुसारिण्या आत्मनः स्वस्य मायया सङ्कल्पेन परं शयानदेहा-

---

१. सभार्यस्वजनापत्यः. मु.भा.प्र.पा ॥ २. अद्य नो. मु.भा.प्र.पा ॥

सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४६

शृण्वतां गदतां शश्वत्पश्यतामभिवन्दताम् । नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥

हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ।
आत्मशक्तिभिरग्राह्यो[2]ऽप्यन्त्युपेतगुणात्मनाम् ॥ ४८

नमोऽस्तु तेऽध्यात्मविदां परात्मनेऽयुक्तात्मनां स्वात्मविभक्तमृत्यवे ।

दन्यं स्वाप्नं सुषुप्तजीवकर्मानुगुणं तदेकानुभाव्यं तत्कालमात्रावस्थायिनं च लोकं देहमनुविश्य तज्जीवमनोरथानुगुणेन सङ्कल्पेनानुप्रविश्यावभासते जीवानुभाव्यदेशान्तरगमनराज्याभिषेकाशिरश्छेदनादिभिस्साक्षादस्पृष्टएव प्रकाशते, जगत्सर्गतदनुप्रवेशयोः स्वाप्नसर्गतदनुप्रवेशौ दृष्टान्तौ, उभयत्र जीवद्वारकोऽनुप्रवेशो व्याप्यगतदोषास्पर्शश्च तुल्यः ॥ ४६ ॥

मु ॥ किञ्च—यथा शयानः पुरुषः कृतकृत्यो निर्भरः शेते, तदानीं मायारहितश्च भवति, अतः शयानः पुरुषो दृष्टान्तीकृतः,न तु स्वप्नस्रष्टृत्वात्, तस्य तदयोगात्, एवं भवानपि मनसैव सङ्कल्पेनैव आत्मनो मायया प्रकृत्याख्यया स्वप्नं स्वप्नवदनित्य लोकं सृष्ट्वा अनुप्रविश्य अवभासते ॥ ४६ ॥

वी ॥ ननु मद्दर्शनं दुर्लभं किमिति मन्यस इत्यत आह—शृण्वतामिति॥ शश्वत्सदा श्रवणादिकं कुर्वताम् अतएव अमलात्मनां परिशुद्धान्तःकरणानां नृणाम् अन्तः हृद्येव भासि न तु चक्षुर्विषयो भवसि ॥ ४७ ॥

मु ॥ तव श्रवणादिकं कुर्वतां हृदयकमले प्रकाशस इत्याह—शृण्वतामिति ॥ गदतां कीर्तयतां त्वां संवदतां मिथः संभाषमाणानाम् अमलात्मनां निर्मलचित्तानाम् ॥

वी ॥ हृदिस्थ इति ॥ कर्मणा विक्षिप्तं चेतो येषां तेषां तु हृदिस्थोऽप्यतीव दूरस्थः एवं कस्याप्यचक्षुर्विषयस्त्वं मदृग्विषयोऽसि, अतो दुर्लभं त्वद्दर्शनं मया लब्धमिति भावः, ननु हृदिस्थत्वम् अतिदूरस्थत्वं च परस्परविरुद्धं कथमिव घटत इत्यत आह—आत्मशक्तिभिरिति । उपेताः गुणा रजस्तमस्तत्कार्यकामक्रोधमोहादयो येन स आत्मा मनो येषां तेषाम् अन्ति समीपस्थोऽप्यात्मशक्तिभिः देहात्माभिमानस्वतन्त्रात्माभिमानाद्यापादनद्वारा त्वद्याथात्म्यानापादकमायादिशक्तिभिर्हेतुभिः अग्राह्यः, एतदेवातिदूरस्थत्वमिति न विरोध इति भावः ॥ ४८ ॥

मु ॥ अन्तर्हितः तिरोहितः गुणः सत्त्वगुणः येषामात्मनां तेषाम् अतएव कर्मभिः विक्षिप्तं चेतो येषां तेषां हृदिस्थोऽप्यतिदूरस्थः आत्मशक्तिभिः बुद्धिभिः अग्राह्यः, पाठान्तरे उपेताः प्राप्ताः भगवद्गुणा येषामात्मनां तेषाम् अन्ति समीपे अव्यवहितस्त्वमित्यर्थः,भगवतः पररूपस्य अबुद्धिगोचरत्वात् भक्तवात्सल्येन गृहीतः स्वेच्छाविग्रहः॥

वी ॥ न केवलममलात्मनामन्तर्हृदि भासमान एव कर्मविक्षिप्तचेतसामग्राह्य एव अपितु मोचको बन्धकश्चेति वदन्प्रणमति—नमोऽस्तु त इति॥अध्यात्मविदां त्वद्याथा-

१. स्वप्नम्. मु-भा-प्र-पा ॥ २. अन्त्यन्तर्हितगुणात्मनाम्. मु-भा-प्र-पा ॥

सकारणाकारणलिङ्गमीयुषे स्वमायया [1]संवृतरुद्धदृष्टये ॥ ४९
सत्वंशाधिस्वभृत्यान्नःकिंदेवकरवामते। एतदन्तोनृणांक्लेशोयद्भवानक्षिगोचरः॥
श्रीशुक उवाच—
तदुक्तमित्युपाकर्ण्यभगवान्प्रणतार्तिहा।गृहीत्वापाणिनापाणिंप्रहसंस्तमुवाचह ॥
ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान्विद्ध्यमून्मुनीन् ।

त्म्यवेदिनां परात्मने प्राप्यायात्मने न विद्यते युक्तस्त्वयि निवेशित आत्मा येषां तेषां स्वात्मविभक्तमृत्यवे स्वात्मना स्वसङ्कल्पेन विभक्तस्समर्पितो मृत्युः येन तस्मै 'अनात्मने' इति पाठे व्यापकान्तरशून्यायेत्यर्थः, ननु बन्धमोक्षहेतुत्वं वदन्मयि किं वैषम्यमापादयसीत्यतो विशिनष्टि—सकारणेति । सकारणम् अनुग्रहहेतुकम् अकारणम् अकर्महेतुकं लिङ्गं शरीरम् ईयुषे प्राप्तवते सर्वलोकोज्जिजीवयिषया स्वेच्छोपात्ताकर्ममूलदिव्यमङ्गलविग्रहाय, अतो न वैषम्यमस्तीति भावः, तर्हि सर्वान्कि न मोचयसीत्यतो विशिनष्टि—स्वमायया संवृताः मोहिताः एषां रुद्धा दृष्टिः ज्ञानं यस्मिन् विषयभूते तस्मै त्वन्मायामोहितानां त्वद्याथात्म्यावेदिनां मुक्तिमप्रयच्छन्न त्वं विषमः, नह्यभजतां कामानप्रयच्छन् सुरद्रुमो विषम इति भावः ॥ ४९ ॥

मु ॥ भगवन्तं नमस्यति—ते तुभ्यं नमः, कीदृशाय ? अध्यात्मविदां परात्मने अनात्मने व्यापकान्तरशून्याय अस्वात्मविभक्तमृत्यवे स्वस्मिन् अनिवेशितमतिषु प्राणिषु मृत्युं संसारं स्थापितवते सकारणम् अनुग्रहरूपकारणसहितम् अकारणम् अहेतुकञ्च लिङ्गं विग्रहम् ईयुषे स्वमायया स्वकीयप्रकृत्या सम्यक् प्रतिरुद्धा संसारिणां दृष्टिः ज्ञानं येन तस्मै संसारिभिः दुरवगमायेत्यर्थः ॥ ४९ ॥

वी ॥ इत्थं प्रणम्य तत्कैङ्कर्यं प्रार्थयतते—सत्वमिति ॥ सः उक्तविधः त्वं स्वभृत्यान् नोऽस्मान् शाधि, हे देव ते तव किं करवाम किञ्चिदिदं करवामेति प्रार्थनायां लोट्, ननु मुक्तिमयाचित्वा कैङ्कर्यमेव किमिति प्रार्थयस इत्यत आह—एतदन्तइति । नृणां क्लेशः तापत्रयरूपः एतदन्तः एतत् अन्तोऽवधिः यस्य तथाभूतः, किं ? यत् भवान् अक्षिगोचर इत्येतत् ॥ ५० ॥

मु ॥ सत्वमिति पदद्वयम् , एवंभूतस्त्वं स्वभृत्यान् नः अस्मान् शाधि अनुशिक्षय, ते तुभ्यं किं करवाम, अस्माकं तावत्सर्वक्लेशशान्तिर्जायत इत्याह—एतदन्त इति । एतदन्तः एतदवधिको नृणां क्लेशः, ततः परन्तु नास्त्येवेत्यर्थः ॥ ५० ॥

वी ॥ तदुक्तमिति ॥ इतीत्थं तदुक्तं श्रुतदेवोक्तम् उपाकर्ण्य प्रणतार्तिहा आश्रितार्तिहरः ॥ ५१ ॥

मु ॥ ५१ ॥

वी ॥ उक्तिमेवाह — ब्रह्मन्नित्यादिभिस्सप्तभिः ॥ इत्थं स्वाम्यभीष्टकरणरूपकैङ्कर्यं प्रार्थयमानं श्रुतदेवं प्रति मद्भक्ताराधनमेव निरतिशयं मत्कैङ्कर्यमिति वक्तुं तावद्भक्तान्प्रशंसति—ब्रह्मन्निति षड्भिः॥ मया हृदिस्थेन मया पादरेणुभिः लोकान् पुनन्तः पवित्रीकुर्वन्तः संचरन्ति ॥ ५२ ॥

१. संप्रतिरुद्ध. मु-भा-प्र-पा ॥

सञ्चरन्ति मया लोकान्पुनन्तः पादरेणुभिः ॥ ५२
देवाःक्षेत्राणितीर्थानिदर्शनस्पर्शनार्चनैः।[१]पुनन्तिचिरकालेनतदप्यर्हत्तमेक्षया ॥
ब्राह्मणोजन्मतःश्रेयान्सर्वेषांप्राणिनांसह।तपसाविद्ययातुष्ट्याकिमुमत्कलयायुतः
नब्राह्मणान्मेदयितंरूपमेतच्चतुर्भुजम्।सर्ववेदमयोविप्रस्सर्वदेवमयोह्यहम् ॥ ५५
दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ।

मु ॥ स्वस्मिन्नादरमधिकं ब्राह्मणे मदामिवालक्ष्य लोकसङ्ग्रहपरो भगवान् मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति—ब्रह्मन्निति सप्तभिः ॥ अमून् मया सह ते अनुग्रहार्थाय संप्राप्तान्विद्धि, ये पादरेणुभिः लोकान् पुनन्तः सञ्चरन्ति, मया हृदिस्थेन वा सह सञ्चरन्ति ॥ ५२ ॥

वी ॥ ननु देवादयोऽपि पुनन्त्येवेति किं विशेषेणैत एव पुनन्तीत्यत आह—देवा इति ॥ देवाः भगवत्प्रतिमाः क्षेत्राणि अयोध्यामधुरादीनि तीर्थानि गङ्गादीनि चिरकालेन दीर्घकालेन पुनन्ति, किंच देवादीनि यत्पुनन्तीति, तदपि अर्हत्तमानाम् ईक्षणात् मद्भक्तकर्तृकेक्षाप्रयुक्तमाहात्म्यादित्यर्थः ॥ ५३ ॥

मु ॥ पावनत्वं देवानामित्याह—देवा इति ॥ देवाः मृच्छिलामयाः क्षेत्राणि तीर्थानि च दर्शनादिभिः कालेन पुनन्ति, न सद्यः, तदपि शनैः क्रमेणैव, यस्मात् अर्हत्तमानाम् ईक्षया तद्द्वारेण, महान्तस्तु नैवमित्याधिक्यसिद्धिः ॥ ५३ ॥

वी ॥ मद्भक्ताच्छ्रेष्ठो नास्तीत्याह—ब्राह्मणइति ॥ सर्वेषां प्राणिनां मध्ये इह श्रेष्ठेषु नरेषु ब्राह्मणो जन्मतः श्रेयान्, ब्राह्मणेष्वपि तपसा युतो युक्तः श्रेयान्,ततोऽपि विद्यया वेदान्तविद्यया युतः, ततोऽपि तुष्ट्या नित्यसन्तोषेण युतः,मत्कलया कला विद्या मदुपासनेति यावत्, तया युतस्तु श्रेयानिति किमु वक्तव्यमित्यर्थः ॥ ५४ ॥

मु ॥ तत्र हेतुमाह—ब्राह्मण इति ॥ सर्वेषां प्राणिनां मध्ये जन्मतो ब्राह्मणः श्रेयान्, इह येषु ब्राह्मणेषु मध्ये मत्कलया मद्विषयज्ञानेन युतः श्रेयानिति किमु, जन्मश्रेयस्त्वे हेतुः—तपसेत्यादिकम् ॥ ५४ ॥

वी ॥ किं बहुनेत्याह—एतत् द्विभुजं चतुर्भुजं वा मम रूपं ब्राह्मणात् मत्कलया युतात् न दयितं न प्रियम् , तत्र हेतुः—सर्वेति । ब्राह्मणाधीनत्वात्प्रमेयसिद्धेः प्रमाणभूतवेदप्रचुराद्विप्राद्देवमयं वपुर्न मे दयितमित्यर्थः ॥ ५५ ॥

मु ॥ ममैतच्चतुर्भुजं रूपमपि ब्राह्मणादधिकं न दयितम्, तत्र हेतुः—सर्वेति । प्रमेयस्य प्रमाणाधीनत्वात् सर्ववेदमयो विप्रः सर्वदेवमयादस्माद्रूपाच्छ्रेयानित्यर्थः ॥

वी ॥ एवं केचित्त्वद्भक्तान् कुतोऽवमन्यन्ते ? कुतो वा देवादीन् भजन्त इत्यत आह—दुष्प्रज्ञाइति ॥ एवम् इत्थंभूतान्मद्भक्तान् अविदित्वा, तत्र हेतुः—दुष्प्रज्ञाः दुरहंकाराः देहात्माभिमानिन इति यावत्, अत एव असूयवः सत्स्वपि गुणेषु दोषाविष्करणैकशीलाः अत एव अर्चादावेव इज्यदृष्टयः पूज्यताबुद्धिमन्तः मां मदात्मकं गुरुम् आत्मानं विप्रं "ज्ञानीत्वात्मैव मे मतम्"इत्युक्तविधं ज्ञानिनं विप्रं च अवजानन्ति॥५६॥

१. शनैः पुनन्ति कालेन. मु-भा-प्र-पा ॥

गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५६
चराचरमिदंविश्वंभावायेचास्यहेतवः।मद्रूपाणीतिवैतानिधत्तेविप्रोमदीक्षया॥ ५७
तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन्संश्रद्धयाऽर्चय ।
एवंचेदर्चितोऽस्म्यद्धा नान्यथा [१]सुविभूतिभिः ॥ ५८

श्रीशुक उवाच—
इत्थं स प्रभुणाऽऽदिष्टस्सहकृष्णान्द्विजोत्तमान् ।
[२]आराध्यैकात्म्यभावेन मैथिलश्चाप सद्गतिम् ॥ ५९
एवं स्वभक्तयोराजन्भगवान्भक्तभक्तिमान् ।

---

मु ॥ ये ब्राह्मणानवजानन्तोऽर्चादावेव अर्चयन्ति. ते अल्पबुद्धय इत्याह—दुष्प्रज्ञा इति॥ असूयवः सर्वत्र दोषदर्शनशीलाः अर्चादाविज्यदृष्टयश्च दुष्प्रज्ञाः आत्मानं गुरुश्च मामेवं विदित्वा विप्रमवजानन्ति ॥ ५६ ॥

वी ॥ ज्ञानिनो दृष्टिस्त्वन्यादृशीत्याह—चराचरमिति ॥ चराचरात्मकमिदं विश्वं तथा अस्य विश्वस्य हेतवो ये भावाः पदार्थाः महदादयः तान्येतानि सर्वाणि विप्रो मदीक्षया मद्विषयकज्ञानेन मदात्मकत्वबुद्ध्येत्यर्थः, धत्ते विषयीकरोति ॥ ५७ ॥

मु ॥ यच्चराचरमिदं विश्वम् , येच अस्य विश्वस्य हेतवो भावाः महदादयः, तानि एभिर्भावैः सह एतस्य विश्वस्य मदीक्षया मयीक्षया मद्रूपाणीति विप्रो धत्ते अनुसन्धत्ते ॥ ५७॥

वी ॥ अस्त्वेवं, ततः किमत आह—तस्मादिति ॥ तस्मात् मद्भक्तानामित्थंभूतत्वात् हे ब्रह्मन् एतान् ब्रह्मर्षीन् श्रद्धया अत्यादरेण अर्चय,एवं चेत् इत्थमर्चयसि चेत्—अद्धा साक्षात् अहमेव अर्चितोऽस्मि, अन्यथा मद्भक्तार्चनं विना सुविभूतिभिः पुष्कलोपचारैः अर्चितोऽप्यहं नार्चितः, ऋषीनेतानिति स्वभक्तमात्रोपलक्षणम् ॥ ५८ ॥

मु ॥ यस्मादेवं, तस्मात् एतान् ब्रह्मर्षीन् श्रद्धया अर्चय, एवं चेत् क्रियेत तर्हि अद्धा यथावत् अर्चितोऽस्मि, स्वविभूतिः पार्षदैः सह नान्यथा ॥ ५८ ॥

वी ॥ इत्थमिति ॥ प्रभुणा भगवता आदिष्टः स श्रुतदेवः ऐकात्म्यभावेन परमात्मबुद्ध्या आराध्य सतां गतिं मुक्तिम् अवाप ॥ ५९ ॥

मु ॥ इत्थं प्रभुणा आदिष्टः स विप्रः मैथिलो जनकश्च सहकृष्णान् द्विजोत्तमान् एकान्तभक्त्या आराध्य तद्गतिं तस्य विभोः गतिं पदम् आप ॥ ५९ ॥

वी ॥ एवमिति ॥ भक्तेषु भक्तिः प्रीतिः सास्यास्तीति तथा स भगवान् हे राजन् स्वभक्तयोः श्रुतदेवबहुलाश्वयोः सन्मार्गं सतां साधूनां मार्गम् अनुष्ठेयधर्मप्रकारम् आदिश्य उपदिश्य कतिपयदिनान्युषित्वाच पुनः द्वारवतीं ययौ ॥ ६० ॥

---

१. स्व. मु-भा-प्र-पा ॥ २. एकान्त. मु-भा-प्र-पा ॥

उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ६०

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रुतदेवानुग्रहो नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

---

राजोवाच—

ब्रह्मन्ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।

---

मु ॥ अध्यायार्थमुपसंहरति—एवमिति ॥ कञ्चित्कालमुषित्वा स्वभक्तयोस्तयोः सन्मार्गं सतां मार्गं बन्धमोक्षोपायमात्मतत्त्वज्ञानम् आदिश्य द्वारवतीं पुनरगात् ॥ ६० ॥

इति श्रीभागवतचन्द्रचन्द्रिकायां श्रीभागवतव्याख्यायां दशमस्कन्धे षडशीतितमोऽध्यायः ॥ ८६ ॥

---

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम् अष्टादशोऽध्यायः ॥ ८८ ॥

---

वी ॥ 'सर्ववेदमयो विप्रस्सर्वदेवमयोऽस्म्यहम्' इति वेदानां ब्रह्मप्रमापकत्वं भगवदुक्त्यैवावगतम्, तत्पूर्वाध्यायेऽपि 'विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि' इति बलिवचनेनाप्यवगतम्, तत्पूर्वाध्यायेऽपि 'ब्रह्म ते हृदयं शुद्धम्' इत्यादिना 'शास्त्रयोनेस्तवात्मनः' इत्यन्तेन मुनिवचसाऽप्यवगतम्. श्रूयते चैवं "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति"इति, स्मर्यतेच "वेदैश्च सर्वैरहमेववेद्यः" इति, ब्रह्मणश्चिदचिद्वैलक्षण्यं बहुशः प्रतिपादितं, तत्र चिदचिद्विलक्षणब्रह्मस्वरूपस्वभावपराणां "सत्यं ज्ञानमनन्तम्" "यस्सर्वज्ञस्सर्ववित्" इत्यादिश्रुतिवचसां तत्प्रमापकत्वेऽपि "अयमात्मा ब्रह्म" "तत्त्वमसि" "सर्वं खल्विदं ब्रह्म" इत्यादिना परमात्मशब्दसमानाधिकरणतया श्रुतानां चिदचिद्वाचिशब्दानां कथं परमात्मप्रमापकत्वमिति पृच्छति राजा—ब्रह्मन्निति ॥ हे ब्रह्मन् गुणवृत्तय इत्यत्र गुणशब्दो विशेषणपरः, गुणेन जातिगुणक्रियान्यतमेन द्वारभूतेन वृत्तिर्बोधनं यासां ताः जात्यादिकं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टाभिधायिन्यश्श्रुतयः चिदचित्पराः कथं ब्रह्मणि साक्षाच्चरन्ति प्रवर्तन्ते, नहि प्रवृत्तिनिमित्तप्रहाणेन शब्दः प्रतिपादयितुमलमिति प्रश्नार्थः, नच लक्षणया चरन्तीति वक्तुं युक्तम्, उदाहृतश्रुतिस्मृत्यादिभ्योऽभिधावृत्तेरेवावगमात्, न च कतिपयश्रुतीनां तत्र मुख्यवृत्तिः,चिदचिदादिपराणां तु लक्षणावृत्तिरिति युक्तं,"सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहम्" इति सर्वशब्दस्वारस्यात्सर्वासामपि तस्मिन्नभिधावृत्तेरेवावगमात्, अत एव साक्षादित्युक्तं, तावज्जातिशब्दानां वृत्त्यसम्भवं व्यञ्जयन् विशिनष्टि—अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये,तत्र हेतुः-सदसतः परे सच्चासच्च तयोस्समाहारस्तस्मात्परे चिदचिद्भ्यां परे विलक्षणे अन्यस्मिन्निति यावत्, न हि चिदचिद्गतजातिप्रवृत्तिनिमित्तकशब्दानां चिदचिद्भ्यामन्यस्मिन्मुख्यवृत्तिस्संभवतीति

कथं चरन्ति श्रुतयस्साक्षात्सदसतः परे ॥ १

श्रीशुक उवाच—

बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः ।

---

भावः, अथ गुणशब्दानां वृत्त्यसम्भवं द्योतयितुं विशिनष्टि—निर्गुण इति । निर्गतत्रैगुण्ये त्रैगुण्यप्रत्यनीके यद्वा गुणशब्दानां येये प्रवृत्तिनिमित्तभूताः गुणाः तेभ्यस्सर्वेभ्यो निर्गते निर्गुणइति निष्क्रियत्वस्याप्युपलक्षणम् ॥ १ ॥

मु ॥ हे ब्रह्मन् अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये निर्गुणे निर्गतत्रिगुणे हेयगुणप्रत्यनीके वा साक्षात् सदसतोः चिदचितोः विलक्षणे परे ब्रह्मणि स्वरूपतो गुणैश्च अनवधिकातिशये गुणवृत्तयः तत्तद्गुणप्रवृत्तिनिमित्ताश्च श्रुतयः कथं प्रवर्तन्ते, नहि प्रवृत्तिनिमित्तप्रहाणेन शब्दाः प्रतिपादयितुमलमिति प्रश्नार्थः ॥ १ ॥

वी॥ अत्र "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" "नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन् यदास्ते" "तत्सृष्ट्वा तदेवानुप्राविशत्। तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यादिश्रुतयः स्वपर्यन्तनामरूपव्याकरणेन तत्तच्चिदचिद्वस्तुशरीरकतया तत्तच्छब्दवाच्योऽभूदिति प्रतिपादयन्त्यः परिहारमाहुरित्यभिप्रेत्य तत्रतत्र बहुशो जगत्सर्गप्रकारवर्णनयैव प्रकृतप्रश्नस्योत्तरमुक्तप्रायमिति चाभिप्रेत्य केवलं सृष्टिमात्रं स्मारयति—बुद्धीन्द्रियेति॥ जनानां जीवानां बुद्ध्यादीनसृजत्, प्रभुरध्यक्षः निर्वाहक इति यावत्, अयमभिप्रायः—स्वयमन्तरात्मतया नामरूपनिर्वाहको भवितुं बुद्ध्यादिशब्दोपलक्षितसमष्टिपरंपरया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनस्सदसच्छब्दवाच्यचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपतत्तच्छब्दवाच्यश्चाभवदिति, एवं चिदचित्पदार्थानां सर्वेषां परमात्मशरीरतैकस्वाभाव्यात्तत्त्वेनैव तेषां वस्तुत्वादपृथक्सिद्धविशेषणत्वाच्च अपृथक्सिद्धविशेषणवाचिशब्दानामाकृत्यधिकरणन्यायेन विशेष्यपर्यन्ताभिधानस्वाभाव्यात् गवादिशब्दानां गोत्वादिकं प्रवृत्तिनिमित्तीकृत्य व्यक्तिपर्यन्ताभिधानस्य मुख्यत्ववत्सर्वेषां लोकव्युत्पत्तिसिद्धस्वस्वार्थाभिधायिनां स्वस्वार्थान् परमात्मापृथक्सिद्धविशेषणभूतान् प्रवृत्तिनिमित्तीकृत्य परमात्माभिधानं मुख्यमेवेति, विस्तरस्तु भाष्यादिष्वनुसन्धेयः,परमकारुणिकस्यावाप्तसमस्तकामस्य स्वपरप्रयोजननिरपेक्षस्य तो जगत्सर्गेण प्रयोजनं किमित्यत आह—मात्रार्थमिति। आत्मने कल्पनाय चेति तादर्थ्यचतुर्थ्यन्तम्, मात्रार्थं देहार्थं तदुत्पादनार्थमित्यर्थः, असत्प्रायाणां जीवानां स्वाराधनोपयुक्तकरणकलेबरादिप्रदानेनोज्जीवनार्थं जगत्सर्गे प्रवृत्तिरिति परिपूर्णस्यापि परानुजिघृक्षा सङ्गतैवेति भावः, अत एव गर्भजन्मजरामरणाद्यनेकदुःखावहजगत्सर्गप्रयुक्तनैर्घृण्यशङ्काऽपि निरस्ता, दुःखस्य तत्तज्जीवानादिकर्मप्रयुक्तत्वात्, मीयन्त इति मात्राः देहाः, भवार्थम-

मात्रार्थं च भवार्थं च आत्मनेकल्पनाय च ॥ २
सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छत्यकिञ्चनः ॥ ३

---

भ्युदयार्थम्, आराधयितृभ्यो निश्श्रेयसरूपाभ्युदयप्रदानार्थमित्यर्थः, अनेन देहोत्पादनस्यापि प्रयोजनमुक्तं, यद्वा भवार्थं त्रैवर्गिकरूपश्रेयःप्रदानार्थम्, आत्मने अध्यात्मज्ञानार्थं मुक्तिसाधनोपासननिष्पत्त्य इत्यर्थः,यद्वा आत्मार्थं जीवात्मस्वरूपसत्तालाभार्थं प्रलयावस्थायामसत्प्रायाणां जीवानां परमात्मन आत्मत्वं,शेषशेषिभावज्ञानेनैव ह्यात्मसत्तालाभः अकल्पनाय कल्पनं ज्ञानैकाकारेष्वात्मसु देवमनुष्यादिकल्पनं भेद इति यावत्, तदभावाय मुक्तये उपायानुष्ठानेन देवादिभेदनिवृत्तिपूर्वकमुक्त्यर्थं चेत्यर्थः, यद्वा सर्वमिदं सङ्कल्पमात्रेणैवोपपद्यतामित्यत आह—कल्पनायचेति।कल्पनं क्रीडनं तस्मै, परिपूर्णस्यापि क्रीडार्थं जगद्व्यापार इति भावः ॥ २ ॥

मु ॥ सर्वे शब्दास्तत्प्रकारभूतचिदचिद्द्वारा तस्मिन् वर्तन्ते, यथा बालो युवेत्यादिशब्दाः शरीरद्वारा आत्मवाचकाः, त इवेति परिहार उच्यते—बुद्धीति ॥ प्रभुः परमात्मा बुद्ध्यादीनां मात्रार्थं सन्देहोत्पादनार्थं भवार्थम् अभ्युदयार्थम् आत्मने अध्यात्मज्ञानार्थं कल्पनार्थं सृष्ट्यर्थं जगद्व्यापाररूपक्रियार्थमित्यर्थः, असृजत् ॥ २ ॥

वी॥ नन्वित्थं सर्वशब्दानां ब्रह्मणि मुख्यवृत्तिर्नलौकिकैर्गृहीता, अपि तु तत्तदर्थेष्वेव, तत्कथं सार्वजनीनव्युत्पत्तिभञ्जनेन ब्रह्मणि व्युत्पत्तिस्साध्यतइत्यत आह—सैषेति॥ सैषा उपपादिता ब्राह्मी ब्रह्मसम्बन्धिनी सर्वशब्दानां ब्रह्मण्यभिधावृत्तिरित्यर्थः, उपनिषत रहस्यतमा उपनिषदर्थविचारेणावगन्तव्येतिवाऽर्थः, अनधीतवेदान्तशास्त्राणां तत्तदर्थमात्रपर्यवसितव्युत्पत्तावप्यधिगतवेदान्तार्थतदनुष्ठाननिष्ठैर्ब्रह्मण्येवं व्युत्पत्तिर्गृहीता, न हि घटशब्दव्युत्पत्तिमगृहीतवतः कस्याचित्पुंसो घटशब्दात्तदर्थानवगतावपि तस्य तद्बोधकशक्तिर्विहतेति भावः, तथाहि पूर्वेषामपि पूर्वजैर्वामदेवादिभिः एषा व्युत्पत्तिः धृता अवधृता निश्चितेति यावत्, वामदेवप्रह्लादादयो हि परस्य ब्रह्मणस्सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानञ्च पश्यन्तः सोऽहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् "अहं मनुरभवं सूर्यश्च कक्षीवानृषिरस्मि विप्रः" इति "सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने" इति निर्दिशन्तस्सर्वबुद्धिशब्दान् परमात्मपर्यन्तान् प्रदर्शयन्तस्सर्वशब्दानां परमात्मन्येव व्युत्पत्तिमध्यवसितवन्त इति भावः, इत्थं गृह्यमाणाया व्युत्पत्तेः फलमाह—श्रद्धयेति । तामुक्तविधां व्युत्पत्तिं यः पुमान् श्रद्धया धारयेत्, सोऽकिंचनः नास्ति किं चन प्रार्थनीयं यस्य सः क्षेमं मुक्तिं गच्छति प्राप्नोति॥

मु ॥ पश्चाज्जनानां क्षेमाय वेदानुपदिदेश, तान् धारयन् क्षेमं प्राप्नोतीत्याह—सैषेति ॥ ब्राह्मी वेदसम्बन्धिनी सैषा उपनिषत् रहस्यमित्यर्थः, पूर्वेषां पूर्वजैः ब्रह्मादिभिः धृता, ताम् उपनिषदम् , क्षेमं श्रेयः, अकिञ्चनः ज्ञानादिशून्यः ॥ ३ ॥

अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४
एकदानारदोलोकान्पर्यटन्भगवत्प्रियः।सनातनमृषिंद्रष्टुंययौनारायणाश्रमम् ॥ ५
योवैभारतवर्षेऽस्मिन्क्षेमायस्वस्तयेनृणाम्।धर्मज्ञान[1]शमोपेतआकल्पादास्थितस्तपः
तत्रोपविष्टमृषिभिःकलापग्रामवासिभिः।परीतंप्रणतोऽपृच्छदिदमेवकुरूद्वह ॥ ७

वी ॥ इत्थं परस्य ब्रह्मणस्स्वपर्यन्तसर्वशुद्धिशब्दत्वं सर्वान्तरात्मत्वं जगत्कारणत्वं परमकारुणिकत्वं मोक्षप्रदत्वं चोक्तम्, अथोक्तार्थस्य स्वमनीषोत्प्रेक्षितत्वशङ्कानिरासाय मूर्तिधारा वेदा एवोक्तानुक्तगुणविशिष्टं भगवन्तं तुष्टुपुरिति वक्तुं तावत्स्वप्रश्नपरिहारानितिहासान्तरेण संवादयति— अत्रेति ॥ अत्र त्वत्प्रश्ने मदुत्तरे च संवादरूपां नारायणेन प्रवर्तकेनान्वितां गाथां ते तुभ्यं वर्णयिष्यामि, शृण्विति शेषः, कोऽसौ नारायणः? किं परमव्योमनिलयः? किं वाऽवतारविशेषः? कश्च तस्याश्श्रोतेत्यत आह—नारदस्येति । ऋषेः ऋषिवेषधरस्य बदर्याश्रमवासिनो नारायणस्य नारदस्य च संवादं प्रश्नोत्तररूपमितिहासं कथयिष्यामीति सम्बन्धः ॥ ४ ॥

मु ॥ कथं पुनरुपनिषद्ब्रह्म प्रतिपादयतीत्यपेक्षायां पूर्वेषां पूर्वैर्धृतेति यदुक्तं, तत्रेतिहासमुत्थापयति—अत्रेति ॥ गाथाम् आख्यायिकां नारायणान्वितां नारायणः प्रवक्तृत्वेन अन्वितो यस्यां ताम्, कस्तस्याः श्रोतेत्यत्राह—नारदस्येति ॥ ४ ॥

वी ॥ संवादमेव प्रस्तोतुं तावन्नारदस्य नारायणोपसत्तिमाह—एकदेति॥ सनातनं पुराणम् ऋषिं नारायणं द्रष्टुं तस्याश्रमं बदर्याख्यं ययौ ॥ ५ ॥

मु ॥ कुत्रेयं प्रवृत्तेत्यत्राह—एकदेति ॥ भगवानेव प्रियो यस्य सः भगवतः प्रियो वा, पर्यटन् सञ्चरन् सनातनं नित्यम् ऋषिं नारायणमित्यर्थः, नारायणाश्रमं बदरिकाश्रमम् ॥ ५ ॥

वी ॥ ऋषिं विशिनष्टि—य इति ॥ नृणां क्षेमाय अभयरूपाय स्वस्तये मोक्षाय च आकल्पात् कल्पावधि तपः स्वात्मोपासनात्मकम् आस्थितः अधिकृतवानित्यर्थः, कथंभूतः? धर्मः वर्णोचितः ज्ञानम् आत्मनः प्रकृतिपुरुषाभ्यां विलक्षणत्वेनावलोकनम्,शमो रागद्वेषादिराहित्यम् एभिरुपेतः ॥ ६ ॥

मु ॥ सनातनत्वमेवाह—य इति ॥ वैशब्दः प्रसिद्धौ, हे भारत योऽस्मिन् भारते वर्षे नृणां क्षेमाय मोक्षाय स्वस्तये कुशलाय, धर्मो निवृत्तिलक्षणः, ज्ञानं परमात्मविषयं, शमः कामक्रोधशान्तिः, तैरुपेतं तपः अष्टाङ्गयोगम् आकल्पं यावत्कल्पम् आस्थितः अनुतिष्ठतीति ॥ ६॥

वी ॥ तत्रेति॥ तत्र नारायणाश्रमे कलापग्रामवासिभिः परमात्मस्वरूपध्याननिष्ठैः ऋषिभिः परीतं परिवृतं नारायणम् इदमेव त्वत्पृष्टमेवापृच्छत् ॥ ७ ॥

मु ॥ तत्रोपविष्टम् इदं त्वया पृष्टमेव नारदोऽपृच्छत् ॥ ७ ॥

१. शमोपेतम्. मु. भा प्र-पा ॥

तस्मा अवोचद्भगवानृषीणांशृण्वतामिमम्।योब्रह्मवादःपूर्वेषांजनलोकनिवासिनाम्
श्रीभगवानुवाच—

स्वायंभुवब्रह्मसत्रं जनलोकेऽभवत्पुरा।
तत्रत्यानां मानसानां मुनीनामूर्ध्वरेतसाम्॥ ९

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्।
ब्रह्मवादस्सम्प्रवृत्तश्श्रुतयो यत्र शेरते॥ १०

तत्रहायमभूत्प्रश्नस्त्वंमांयमनुपृच्छसि। परिहारांश्चतान्सर्वान्वक्ष्येऽहं शृणुतेऽनघ॥

---

वी॥ तस्माइति॥ तस्मै पृष्टवते नारदाय ऋषीणां शृण्वतां सतामिमं मदुक्तपरिहारगर्भं परिहारमवोचत्, तदुक्तपरिहारस्यापि सांप्रदायिकत्वं वदन् तं विशिनष्टि— य इति। जनलोकनिवासिनां पूर्वेषामग्रजानां सनन्दनादीनां यस्संवादः प्रश्नोत्तररूपस्तमिममवोचदिति संबन्धः॥ ८॥

मु॥ ऋषीणां कलापग्रामवासिनां शृण्वताम्, ब्रह्मवादः वेदवादः॥ ८॥

वी॥ उक्तिमेवाह—स्वायंभुवेति॥ स्वायंभुवः नारदः तस्य स्वयंभुवः पुत्रत्वादेवं संबोधनम्, पुरा जनलोके तत्रत्यानां जनलोकस्थानां मानसानां ब्रह्ममानसपुत्राणाम् ऊर्ध्वरेतसां जन्मप्रभृति जितेन्द्रियाणां मुनीनां सनकादीनां संबन्धि ब्रह्मसत्रं परब्रह्मगुणानुभवात्मकं सत्रमभूत्॥ ९॥

मु॥ स्वायंभुवं स्वयंभुवानुष्ठितं ब्रह्मसत्रं सत्रं वेदसिद्धभगवदाराधनरूपसत्रं,यद्वा— यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म त्वया पृष्टमेव कुर्वन्ति तत्कर्मसत्रं प्रसिद्धम्, तथा यत्र मानसा एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते, तद्ब्रह्मसत्रं ब्रह्मविचारः समानानेककर्तृत्वात् ब्रह्मसत्रम्, तत्रस्थानां तल्लोकस्थितानां मानसानां ब्रह्मणो मानसपुत्राणाम् ऊर्ध्वं रेतो येषां तेषाम् अनुपहतब्रह्मचर्यागामित्यर्थः॥ ९॥

वी॥ तदाऽहं क गतः? कथं मया न श्रुतम्? इत्यत आह—श्वेतद्वीपमिति॥ तं श्वेतद्वीपवासिनमीश्वरं तत्रस्थं मामेव अनिरुद्धमूर्तिमित्यर्थः, द्रष्टुं त्वयि गतवति सति तदा ब्रह्मवादः ब्रह्मणां वादः, संवृत्तः, तं विशिनष्टि—यत्र ब्रह्मवादे श्रुतयश्शेरते प्रतारणभयरहिता ऐककण्ठ्यं प्राप्तास्सुखमासत इत्यर्थः॥ १०॥

मु॥ कस्मान्मया न ज्ञातमित्यत्राह—श्वेतद्वीपमिति॥ यत्र भगवति श्रुतयः शेरते तात्पर्यतो वर्तन्ते, तमीश्वरं प्रति ब्रह्मवादः ब्राह्मणानां वादः संप्रवृत्त इत्यर्थः॥१०॥

वी॥ तत्रेति॥ हेति हर्षे आश्चर्येवा. ऋषिभिः कृत प्रश्नस्त्वया कृतः, अहो तव बुद्धिकौशलमिति मां प्रति यं प्रष्टव्यमर्थमनुपृच्छसि, स तदर्थविषयकः प्रश्नः अभूत् प्रवृत्तः, तथा परिहारश्च, तान् तत्र प्रवृत्तान् प्रश्नपरिहारान् सर्वानहं हे अनघ ते तुभ्यं वक्ष्ये, शृणु॥ ११॥

मु॥ सच प्रश्नोत्तररूप इत्याह—तत्रेति॥ यं मां त्वं पृच्छसि, अयं प्रश्नः तत्राभूत् किल, तदुचितः परिहारश्च अभूत्. हे अनघ तत् तेषां वृत्तं सर्वम् अहं ते तुभ्यं वक्ष्ये प्रवक्ष्यामि, शृणु अवहितो भवेत्यर्थः॥ ११॥

तुल्यश्रुततपश्शीलास्तुल्यस्वीयारिमध्यमाः। अपिचक्रुःप्रवचनएकंशुश्रूषवोऽपरे ॥

सनन्दन उवाच—

स्वसृष्टमिदमापीयशयानंसहशक्तिभिः।तदन्तेबोधयांचक्रुस्तल्लिङ्गैश्श्रुतयःपरम्॥ १३

यथाशयानंसम्राजंवन्दिनस्तत्पराक्रमैः।प्रत्यूषेऽभ्येत्यसुश्लोकैर्बोधयस्त्यनुजीविनः॥

---

वी॥ननु कस्तत्र वक्ता बभूव? के वा श्रोतारः? किं वा ब्रह्मसत्रस्य लक्षणम्? इत्यत आह—तुल्येति॥ यद्यपि सर्वे श्रुतं शास्त्रजन्यं ज्ञानं तपः अनशनादि,यद्वा "तप आलोचने" इति धातोरूपं, तप इति ब्रह्मोपासनात्मकं ज्ञानमित्यर्थः, शीलं तदुपयुक्ता सद्वृत्तिः आराधनाद्यात्मकस्वभावश्च,तुल्यान्येतानि येषां ते,तुल्याः स्वीयाः अरयो मध्यमाः उपेक्ष्याश्च येषां ते, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्युक्तविधसर्वात्मब्रह्मोपासननिष्ठत्वात् मायादिरहिता इत्यर्थः, अनेन सर्वेषामपि प्रवचनसामर्थ्यं सूच्यते, अपि तथापि प्रवचने एकं चक्रुः सनन्दनं प्रतिवक्तारं चक्रुरित्यर्थः, अपरे सनकादयस्सर्वे शुश्रूषवो बभूवुरिति शेषः, एतदेव ब्रह्मसत्रं नाम, यत्सर्वेऽप्यधिगतपरमात्मयाथात्म्या अपि एकं प्रवक्तारं कृत्वा अन्ये तु तूष्णीं शृणुयुरिति भावः ॥१२॥

मु ॥ परस्परतुल्यानां प्रष्टृप्रतिवक्तृभावः कथमासीदित्यत आह—तुल्येति ॥ शीलम् आचारः, प्रवचने एकं चक्रुः सनन्दनं प्रतिवक्तारं चक्रुः ॥ १२ ॥

वी ॥ प्रश्नस्तु त्वत्कृत एवेत्यभिप्रेत्य तमनुक्त्वैव सनन्दनोक्तमुत्तरमाह—स्वसृष्टमित्यादिभिः ॥ तत्र स्वविवक्षितमुत्तरं श्रुतिरीत्या संवादयितुं प्रस्तौति सनन्दनः—स्वसृष्टमिति द्वाभ्यां॥स्वेनात्मना सृष्टमिदं चिदचिदात्मकं जगदापीय संहृत्य शक्तिभिः सूक्ष्मावस्थामापन्नाभिः प्रकृतिपुरुषकालात्मिकाभिस्सह शयानं निद्राणमिव वर्तमानं प्रकृतिपुरुषादीन् स्वस्मिन्विभागानर्हान् कृत्वा निरवधिकस्वानन्दानुभवपरं परमपुरुषं तदन्ते प्रलयान्ते सृष्ट्यादावित्यर्थः, श्रुतयः तन्निःश्वासरूपाः मूर्तिधराः वेदाः, यद्वा वेदाभिमानिनो देवाः,तल्लिङ्गैः परमपुरुषासाधारणधर्मप्रकाशकैः बोधयांचक्रुः प्रबोधयन्त्य इव तुष्टुवुरित्यर्थः ॥ १३ ॥

मु ॥ तत्र प्रश्नो दर्शितरूप इति कृत्वा उत्तरं दर्शयति—स्वसृष्टमिति ॥ स्वसृष्टं स्वेन सृष्टम् इदं विश्वम् आपीय अप्ययं लयं नीत्वा शक्तिभिः क्षेत्रज्ञादिशक्तिभिः सह शयानं योगेन निद्राणमिव वर्तमानं परमात्मानं तदन्ते प्रलयान्ते तस्य भगवतः लिङ्गैः असाधारणकर्मभिः प्रथमनिःश्वासप्रसूताः श्रुतयः बोधयाञ्चक्रुः प्रतिपादयामासुः ॥

वी ॥ तत्र दृष्टान्तमाह—यथेति ॥ अनुजीविनो भृत्याः वन्दिनः स्तुतिपाठकाः प्रत्यूषे प्रभाते अभ्येत्य आगत्य शोभनाः श्लोकाः येषु तैस्तस्य सम्राजः पराक्रमैः पराक्रमप्रकाशकैः स्तोत्रैर्बोधयन्ति, तद्वत् ॥ १४ ॥

मु ॥ तत्र दृष्टान्तमाह—यथेति ॥ सम्राजं सार्वभौमं प्रत्यूषे अहर्मुखे अभ्येत्य शोभनः श्लोको यशो येभ्यस्तैः पराक्रमैः बोधयन्ति, तथा बोधयाञ्चक्रुः ॥ १४ ॥

श्रुतय ऊचुः—

जयजयजह्यजामजितदोषगृभीतगुण त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मनाचचरतोऽनुचरेन्निगमः

वी ॥ वेदपुरुषमुखनिर्गलितानष्टाविंशतिसङ्ख्यकान् श्लोकानाह—जयजयेत्यादि ॥ जयजयेत्यादरे द्विर्भावः, जय उत्कर्षं प्राप्नुहीत्यर्थः, ननु स्वभावत एव निस्समाभ्यधिकस्यानवाप्तः को वा प्राप्य उत्कर्ष इत्यत आहुः—अजामिति। अजां प्रकृतिं जहि नाशय त्याजयेत्यर्थः, त्वयि प्रलीनानां सर्वेषां जीवानां संसृतिनिदानभूतप्रकृतिसंबन्धं त्याजयता त्वया कारुण्यातिशयावहः कश्चिदुत्कर्षः अभूतपूर्व एव प्राप्यत इति भावः, नन्वहमपि प्रकृतिवश्यः, तत्कथमजां त्याजयामीत्यतस्संबोधयन्ति—अजितेति। सर्वान् जितवत्या प्रकृत्याप्यजित वशीकृतप्रकृते इत्यर्थः, नन्वनादितया सा अपराधिनां जीवानां कथं त्याजयितव्येत्यतस्संबोधयन्ति-दोषगृभीतगुणेति। सत्स्वपि दोषेषु गृभीतो गृहीतो गुणो यादृच्छिकप्रासङ्गिकानुषङ्गिकाद्यन्यतमो येन तथाभूत, सापराधजनेष्वपि कश्चिद्गुणलेशोऽस्ति चेत्तमपेक्ष्यानुग्रहशीलस्त्वमित्यर्थः, गृभीतेत्यत्र ''गृहेर्भश्छन्दसि'' इति भकारादेशः, दोषगृभीतगुणामिति पाठान्तरं, तदा ननु कुतः प्रकृतेर्भोग्यभोगोपकरणादिरूपायाः महागुणवत्यास्त्याजनं प्रार्थ्यत इत्यतस्तां विशिंषन्ति—दोषाः जीवानां दोषावहाः गृभीताः गुणाः सत्त्वरजस्तमोरूपाः यया तां, निष्ठान्तस्य पूर्वनिपाताभाव आर्षः,जीवानां संसृतिनिदानभूतगुणाश्रयत्वात्तां जहीत्यर्थः, ननु त्याजनोपयुक्तज्ञानशक्त्यादिरहितोऽहं कथं हापयेयमित्यत आहुः—यद्यस्मात्त्वमात्मना स्वत एव समवरुद्धः स्वीकृतः अशेषः भगो येन सः तस्माज्जहीत्यर्थः,''ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः।ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा''इति विष्णुपुराणवचनाद्भगशब्दोऽवगन्तव्यः, असङ्कुचितज्ञानैश्वर्यशक्तिमत्त्वाद्वात्सल्यसागरत्वाच्च मोचयितुं क्षमः, अतो जहीति भावः, ननु य एव प्रकृतिसंबन्धापादकः स एव त्याजयितुं प्रभुः, नत्वहमित्याशङ्कायां त्वमेव प्रकृतिपुरुषकालशरीरकत्ववेषेण सर्वकारणतया तत्संबन्धापादक इति द्योतयितुमनुद्बुद्धसामर्थ्यानां प्रकृत्यादीनां परमात्मविशेषणतावेषेणापि कार्याक्षमत्वादन्यथा प्रलयानापत्तेश्च तेषां स्वस्वकार्योन्मुख्यसामर्थ्योद्बोधकस्त्वमेवेत्यभिप्रेत्य संबोधयन्ति—अगजगदोकसामखिलशक्त्यवबोधकेति। अगानां स्थावराणां जगतां जङ्गमानां शरीराणां चराचरात्मकशरीररूपेण करिष्यमाणानां प्रकृतिगुणानामित्यर्थः, ओकसां तादृशशरीराश्रयीभविष्णूनां जीवानांच अखिलाश्शक्तयः स्वस्वकार्योन्मुख्यरूपास्तासामवबोधक उद्बोधक, तत्र जीवशक्त्युद्बोधकत्वं नाम चिच्छक्त्युद्बोधकत्वं, तेषां प्रलयदशायामनुद्बुद्धचिच्छक्तिकत्वात्, अतएव सर्वकारणतया सर्वकार्यानन्यं त्वामेव वेदोऽभिदधातीत्याहुः—क्वचिदिति। अजया आत्मना चेति सहार्थे तृतीया,साहित्यं च विशेष्यविशेषणभावेन, तदयमर्थः—

अजया आत्मनाच प्रकृतिपुरुषाभ्यां विशिष्टस्य, त इति कर्मणश्शेषत्वविवक्षया षष्ठी, चरतः जगदाकारेण परिणममानस्य तावधिनिष्ठितश्चेत्यपि विवक्षितं, निगमः चिदचिद्वाचिशब्दसमुदायात्मको वेदभागः अनुचरेत् अनुवर्तेत, त्वामेवाभिदध्यादित्यर्थः, अनेन 'कथं चरन्ति श्रुतयः' इति प्रश्नस्योत्तरमुक्तं भवति, कारणत्वं चिदचिद्विशिष्टताकारेणेति च, तथा मोक्षप्रदत्वं तदौपयिकगुणपूर्णत्वं शास्त्रप्रमाणकत्वंच, अगजगदोकसां स्थावरजङ्गमशरीराश्रयाणां सर्वेषां जीवानाम् अजां जहीति वा संबन्धः, जीवानामित्यनुक्त्वा अगजगदोकसामित्युक्तिरासन्नसृष्ट्यभिप्रायिका, एतत्स्तुतिप्रवृत्तिकाले स्थावरजङ्गमात्मकशरीराणामभावात्, निगमोऽनुचरेदिति पारोक्ष्यनिर्देशः स्तुतेस्संसारिजीवगतत्वाभिप्रायकः, 'क्वचिदजयाऽऽत्मनाच चरतोऽनुचरेन्निगमः' इत्यनेन प्रकृतिसंबन्धमोचकत्वनियततत्संबन्धापादकत्वज्ञापनाय सर्वकारणत्वं तस्य निर्विकारेऽनुपपन्नत्वात्तस्मिन् चिदचिद्वैशिष्ट्यं विशिष्टकारणत्वादेव विशिष्टकार्याणां विशिष्टकारणानन्यत्वाच्छरीरात्मभावाच्च कार्यशरीरभूतचिदचिद्वाचिशब्दानां विशेष्यात्मपर्यन्ताभिधायकत्वं चोक्तम् ॥ १५ ॥

मु ॥ तदेव दर्शयति—जयजयेत्यष्टाविंशत्या श्लोकैः ॥ अजां प्रकृतिं जहि ध्वंसय, आश्रितानामिति शेषः, संसरतां चेतनानां प्रकृतिसंबन्धं निराकुर्या इत्यर्थः, दोषगृभीतगुणः सत्स्वपि दोषेषु गुणग्राहीत्यर्थः, यद्वा—अजितदोषेषु सापराधेष्वपि जनेषु गुणलवोऽस्ति चेत्, तद्ग्राहीत्यर्थः, आत्मना समवरुद्धसमस्तभगः स्वत एव स्वीकृतासंकुचितज्ञानैश्वर्यगुणकस्त्वमसि यत् यस्मात्, तस्मात् अजां जहि आश्रितवत्सलत्वात् निरङ्कुशैश्वर्यकत्वाच्च त्वमेव मोक्षं दातुं क्षमः, तस्मादजां विध्वंसयेत्यर्थः, अगजगदोकसां स्थावरजङ्गमशरीराश्रयाणां जीवानाम् अखिलचिच्छक्तिप्रवृत्त्युद्बोधकाजया आत्मना च प्रकृतिपुरुषाभ्यां विशिष्टस्य चरतः जगत्सर्गादिलीलां कुर्वतः ते निगमोऽनुचरेत्, चिदचिच्छरीरकस्य जगत्कारणत्वं वेदः प्रतिपादयतीत्यर्थः, एवं जगत्कारणत्वं मोक्षप्रदत्वं तदौपयिकगुणपूर्णत्वं शास्त्रप्रमाणकत्वं चोक्तम्, उपरितनश्लोकैः अयमेवार्थः प्रपञ्चयते—बृहदित्यादिभिः ॥ यद्वा—हे अजित जयजय उत्कर्षमाविष्कुरु, आदरे वीप्सा, केन व्यापारेण? अगजगदोकसाम् अगानि स्थावराणि जगन्ति जङ्गमानि ओकांसि शरीराणि एषां जीवानाम् अजाम् अविद्यां जहि नाशय, किमिति गुणवती हन्तव्येत्यत आह—दोषाय ज्ञानाद्यावरणाय गृभीताः गुणाः यया तां, "गृहेर्भश्छन्दसि" इति भकारः, इयं हि वैरिणीव परप्रतारणायैव गुणान् गृह्णाति, अतो हन्तव्येति, तर्हि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यात्? अत आह—त्वमिति । यत् यस्मात् त्वम् आत्मना स्वरूपेण समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्योऽसि, वशीकृतमायत्वादिति भावः, स्वयमेव ते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह—अखिलशक्त्यवबोधकेति । तेषां जीवानां त्वमेवान्तर्यामी सर्वशक्त्युद्बोधकः, अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः, अहमकुण्ठैश्वर्यादिगुणो जीवानां ज्ञानादिशक्त्यवबोधादविद्या हन्तेत्यत्र किं प्रमाणमिति चेदहमेव प्रमाणमित्याह—क्वचिदिति । कदाचित् सृष्ट्यादिसमये अजया आत्मनाच चरतो वर्तमानस्य ते

बृहदुपलब्धमेतदवयन्त्यवशेषतयायतउदयास्तमयौविकृतेर्मृदिवाविकृतात् ।
अतऋषयोऽदधुस्त्वयिमनोवचनाचरितंकथमयथाभवन्तिभुविदत्तपदानिनृणाम्॥

---

चरन्तं त्वां निगमोऽनुचरेत् प्रतिपादयेत्, कर्मणि षष्ठी, यद्वा—अजां जहि संसारिणां प्रकृतिसम्बन्धं जहि, संसरन्तु दुःखमनुभवन्तु चेत्यत आह—अजितदोषगृभीतगुणः दोषैः कामक्रोधादिभिः अजिताः "वाहिताग्न्यादिषु" इति अजितशब्दस्य पूर्वनिपातः, तैरजितदोषैर्गृभीताः ज्ञाताः गुणाः क्षान्त्यादयो यस्य सः, मम दयास्ति, न शक्तिरस्तीत्यत्राह—त्वमिति । आत्मना स्वेन समवरुद्धः प्रलये उपसंहृतः समस्तानां ब्रह्मादीनां भग ऐश्वर्यं येन सः त्वमसीति यत्, तस्मात् शक्तिमत्त्वात् तां जहीति, भगवतः कैमुत्यन्यायेन शक्तिं साधयति—अगजगदोकसां चराचरशरीराणां चेतनानाम् अखिलशक्तीः सृष्ट्यादिशक्तीः अवबोधयति उद्बोधयतीति तथा, तस्य संबुद्धिः, अन्येषां सृष्ट्यादिशक्तीस्सम्पादयतः प्रकृतिनिरसनशक्तिः किमु वक्तव्येत्यर्थः, उक्तार्थे किं प्रमाणम्? अत आह—क्वचित् कदाचित्, यदा कालः, तदेत्यर्थः, अजया आत्मना च प्रकृतिपुरुषाभ्यां विशिष्टं जगत् चरतो भक्षयतः ते निगमः वेदः अनुचरेत् अनुवृत्तिं कुर्यात्, तव सर्वशक्तिमत्त्वादिकं प्रतिपादयति, अनेन जगत्कारणत्वं च फलितम्, "एषएव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति" "यस्सर्वज्ञस्सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" "एको हवै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इत्यादिस्सर्वो वेदस्तत्र प्रमाणमित्यर्थः ॥

वी ॥ अथ कार्यकारणयोरनन्यत्वं दृष्टान्तमुखेनोपपाद्य कारणत्वनियतमुमुक्षूपास्यत्वमाहुः—बृहदिति ॥ अवशेषतया ब्रह्मणस्सर्वोपसंहारेण व्यवस्थिततया जगत्कारणत्वादुपलब्धं सृष्टिकाले आविर्भूतमुत्पन्नमेतज्जगत् बृहत् ब्रह्मेत्यवयन्ति आमनन्ति, "सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" "एतदात्म्यमिदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यादयो वेदान्ता अवगमयन्तीत्यर्थः, अवत्यत्त्यवशेषतयेति पाठान्तरं, तदा उपलब्धमुत्पन्नमेतज्जगत्स्थितिकाले अवति रक्षति, अन्तकाले अत्ति संहरति, ततोऽवशेषतया करणत्वाद्बृहदेवेदं जगदिति "सर्वं खल्विदं ब्रह्म तज्जलान्" इतिवत्सहेतुको निर्देशः, एतदुपपादयन्ति—यस्य विकृतेः कार्यस्य, यत इति पञ्चमीसप्तम्यर्थयोस्सार्वविभक्तिकस्तसिः, यत उदय उत्पत्तिः यस्मिंश्च लयः सा विकृतिस्तत्कारणात्मिका ततोऽनन्या मृदिवाविकृता, यथा तावदविकृता पिण्डाकारा मृत् घटशरावादिरूपविकृता तदनन्या तद्वत्, अविकृतादिति पाठान्तरं, तदा अविकृतायतो यस्माद्विकृतेः कार्यस्योदयास्तमयौ सा विकृतिस्तदनन्या मृदिव यथा तावदविकृतान्मृत्पिण्डादुदिता घटशरावादिरूपा मृत्तदनन्या तद्वदित्यर्थः, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इत्यादिका श्रुतिरिहानुसन्धेया, तत्र हि घटेन जलमाहरेत्यादिवाग्व्यवहारपूर्वकजलाहरणादिकार्यार्थं मृत्पिण्डस्य घटादिनामकम्बुग्रीवादिरूपविकारसंस्पर्शमभिधाय मृत्पिण्डस्य तद्विकारघटादेश्चानन्यत्वमुक्तम्, अतस्सर्वकारणत्वात्त्वयि ऋषयो मनोवच-

नाचरितानि ध्यानस्तुतिचेष्टितानि अद्धुः, त्वामेव निदध्युस्तुष्टुवुः, त्वदर्थम् अचेष्टन्त चेत्यर्थः, तत्र सदृष्टान्तं हेतुमाहुः—कथमिति ॥ आकाशे निहितानि पदानि यथा मोघानि भवन्ति,पतनस्यावर्जनीयत्वात् भुवि निहितानि नृणां पदानि तु कथमयथा भवन्ति, कथं मोघानि भवन्ति? मोघानि न भवन्त्येव पश्चात्पतनाभावात्, एवं मनोवाक्कायचेष्टितानि त्वदाराधनरूपाणि अमोघानि सांसारिकतापनिवारकाणि, अन्यविषयाणि, ध्यानादीनि तु न तन्निवारकाणि, प्रत्युत पतनावहानि, अतस्त्वय्येव दधुरित्यर्थः. यद्वा—एवं जगत्कारणत्वेन त्वदनन्यत्वाज्जगद्विषयास्सर्वे वैदिकाश्शब्दास्तात्पर्यतश्शक्त्याच त्वय्येव वर्तन्त इत्याहुः—अतइति । ऋषयो वेदाः "तदुक्तमृषिणा" इत्यादौ ऋषिशब्दस्य वेदे प्रयोगात्, मनोवचनाचरितं मनस आचरितं तात्पर्यं वचनाचरितमभिधानंच त्वय्येव दधुः धृतन्तः,ननु तत्तदर्थविषयाणां कथमभिधायकत्वमित्याशङ्कायां दृष्टान्तमुखेन तदुपपादयन्ति—कथमिति । प्रासादपर्यङ्कादिषु दत्तानि निहितानि नृणां पदानि कथं भुवि अयथा अदत्तानि भवन्ति, प्रासादपर्यङ्कादिधारकत्वात्तस्यामेव यथा दत्तानि भवन्ति. एवं प्रतिपुरुषान्तरात्मतया तद्गतनामरूपनिर्वाहकत्वात्त्वय्येव तत्तदर्थशरीरके निर्वाहकेच वेदा वर्तन्त इत्यर्थः, अपृथक्सिद्धविशेषणवाचिशब्दानामाकृत्यधिकरणन्यायेन विशेष्यपर्यन्ताभिधानं मुख्यमेवेत्यभिप्रायः ॥ १६ ॥

मु ॥ अवशेषतया सर्वोपसंहारेऽवस्थिततया जगत्कारणत्वात् उपलब्धं सृष्ट्यादिकाले आविर्भूतम् उत्पन्नं बृहत् एतत् जगत् स्थितिकाले अवति, अन्तकाले अत्ति संहरति भवानिति शेषः,विकृतेः कार्यभूतस्य जगतः उदयास्तमयौ सृष्टिसंहारौ यतः, तत् कारणं सृष्टेः पूर्वकाले घटाद्यवस्थारहिता मृदिव भवति, प्रलयकाले कार्यावस्थाविधुरमित्यर्थः, एवमर्धेन कारणावस्थाप्रपञ्चेनेन सह सर्गरक्षणसंहारहेतुत्वमुक्तम्, जगत्कारणत्वान्मुमुक्षुभिस्सेव्यत्वमाह—अतः जगत्कारणत्वात् ऋषयः ज्ञातारः मनोवचनाचरितं ध्यानस्तुतिचेष्टितानि त्वयि दधुः, कथमिति—आकाशे निहितानि पदानि अयथा मोघानि कथं भवन्ति? न भवन्त्येव, किन्तु अमोघानि संसारगर्तपतननिवारणानीत्यर्थः; यद्वा—ननु भगवतः कारणत्वमनुपपन्नम्, कारणत्वे न तावन्निमित्तत्वम्, उपादानत्वप्रतिपादकश्रुतिविरोधात्, नाप्युपादानत्वम्, मृद्रूपस्वरूपविकारप्रसङ्गात्, अतः प्रधानमेव कारणमित्याशङ्क्याह—बृहत् स्वरूपतो गुणैश्चानवधिकातिशयं ब्रह्म उपलब्धं निमित्ततया उपादानतया चोपलब्धं प्रमाणैः प्रतिपन्नमित्यर्थः, उपादानत्वं प्रतिपादयति—अवशेषतया प्रलये स्वस्मिन् संहृतत्ववचनात् उपादानत्वं सिद्धमिति, अथ निमित्तत्वमाह—यतः यस्मात् विकृते जगतः उदयास्तमयौ सृष्टिसंहारौ, तस्मात् निमित्तमपीति, स्वरूपविकारप्रसङ्गं परिहरति—घटादेः प्रागविकृता कार्यावस्थारहहिता मृद्यथा स्वरूपविकाररहिता, एवं कारणावस्थायां ब्रह्म विकाररहितं विशेषणांश एव विकारात्, निर्विकारस्य कथमुपादानत्वमिति मा वोचः—अवस्थान्तरापत्तेर्विद्यमानत्वात्, सा च न प्रागिति सर्वमुपपन्नम्, अतो न प्रधानं कारणमिति भावः, तर्हि "जनित्री भूतभाविनी" "ज

इतितवसूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथामृताब्धिमवगाह्यतपांसिजहुः ।
किमुतपुनस्स्वधामविधुताशयकालगुणाःपरमभजन्तियेपदमजस्रसुखानुभवम्॥१७

नयन्तीं सरूपाम्" इत्यादिश्रुतिसामञ्जस्यं कथमित्यत आह—अत इति । यतः स्वयमेवोपादानम् , अतः ऋषयः त्रिकालज्ञा वेदाः त्वयि जगदुपादानभूते मनः तात्पर्यं दधुः, प्रकृत्युपादानत्वप्रतिपादकवचसां तद्विशिष्टे त्वयि तात्पर्यमित्यर्थः, किञ्च—वचनाचरितं वाग्व्यापारः, तथा "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इत्यादिकमत्र द्रष्टव्यम्, तात्पर्यार्थमाह—कथमिति । नृणां भुवि दत्तानि पदानि कथम् अयथा भवन्ति ? यथा भवन्त्येव, आकाशे निहितानि तु मोघानि भवन्ति, एवं त्वय्येव तात्पर्यं दृढं, नतु प्रधान इति भावः ॥ १६ ॥

वी॥'अत ऋषय' इत्यादेः पूर्वयोजना कैमुत्यन्यायेन भगवद्ध्यानस्य सांसारिकतापनिवर्तकत्वमाहुः—इति तव सूरयइति ॥ द्वितीययोजनायां तु कारणत्वसमनियतमुमुक्षूपास्यत्वं कैमुत्यन्यायेनाहुः—इतीति ॥ त्र्यधिपते इति संबोधनं, जगज्जन्मस्थितिविनाशनिर्वाहक, इतिर्हेतौ, अतस्सूरयो विवेकिनः तवाखिललोकमलक्षपणकथामृताब्धिम् अखिलानां लोकानां जननां शृण्वतां वदतांच मलं पापं क्षपयति नाशयतीति तथा सा कथैवामृतं तस्याब्धिमवगाह्यैव तपांसि आध्यात्मिकादितापान् जहुस्तत्यजुः; किंपुनर्ध्यानपरा इत्याहुः—किमुतेति । हेपरम ये स्वधाम स्वतेजः स्वविषयकंज्ञानं, स्वशब्दः परमात्मपरः, तेन विधुताः आशयगुणाः रागादिमनोवृत्तयः कालगुणाः जरामरणादयश्च यैस्ते अजस्रसुखानुभवं नित्यज्ञानानन्दात्मकं पद्यत इति पदं स्वरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति, ते तपांसि जहतीति किं पुनर्वक्तव्यमित्यर्थः ॥ १७ ॥

मुं ॥ भगवत्कथाश्रवणादीनां तापापहत्वमाह—इति तवेति ॥ त्र्यधिपते जन्मस्थितिविनाशनिर्वाहक तव अखिललोकस्य मलं पापं तत्क्षपणं कथामृतम् अवगाह्य सूरयः तपांसि आध्यात्मिकादितापान् जहुः, किं पुनर्ध्यानपरा इत्याह—किमुतेति । स्वस्य धाम तेजः स्वज्ञानं तेन विधुताः आशयगुणाः रागादिमनोवृत्तयः कालगुणाः जननमरणादयश्च यैस्ते पद्यत इति पदं स्वरूपम् अजस्रसुखानुभवं नित्यज्ञानानन्दस्वरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति, यद्वा—एवं जगत्कारणत्वं प्रतिपाद्य भगवदुपासकानां तत्पदप्राप्तिं कैमुत्येनाह—इति हेतोः हे त्र्यधिपते त्रिविधचेतननियन्तः तव अखिललोकमलक्षपणकथामृताब्धिम् अवगाह्य निषेव्य श्रुत्वा कीर्तयित्वा वा तपांसि पापानि जहुः त्यक्तवन्तः, ये उपासकाः, स्वशब्देन भगवानुच्यते, स्वस्य धाम्ना हृदयपद्माविर्भूतविग्रहेण विधुताः त्यक्ताः आशयः आ समन्ताच्छेरते चेतना अनेनेति आशयः कर्मवासना कालयते पच्यते यस्मिश्चेतन इति कालः संसारः तस्य गुणाः सत्वादयश्च यैस्ते भवन्ति, ते अजस्रसुखानुभवम् अजस्रं सुखस्यानुभवो यस्मिंस्तत् पदं भजन्ति प्राप्नुवन्तीति किमुतेति॥ १७॥

दृतय इव श्वसन्त्यसुतृपो यदि तेऽनुविधा
महदहमादयोऽण्डमसृजन्यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु य-
स्सदसदतः परं त्वमथ यदेष्ववशेषमृतम् ॥ १८

---

वी॥ अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमाहुः—दृतयइति॥ ते तव अनुविधाः अनुविधायिनः त्वदाश्रयणयोग्यजन्मभाजोऽपीत्यर्थः, असुतृपस्त्वां विहाय केवलं यदि प्राणेन्द्रियतर्पणपराः शब्दादिविषयचपलाश्चेत् तर्हि दृतय इव उच्छ्वसन्ति, दृतयश्च-र्मभस्त्रिकाः, ता यथा वायुपूरिता उच्छ्वसन्ति, तद्वच्छ्वासा इत्यर्थः, अनेन 'अत ऋषयो दधुः' इत्याद्ययोजनायां 'कथमयथा भवन्ति' इत्यादिसूचितमन्यविषयध्यानादि-मोघत्वं स्पष्टीकृतं, ननु सति मम कारणत्वे तत्समनियतमुमुक्षूपास्यत्वसिद्धिः, कारण-त्वमेव त्वनुपपन्नम्, अचेतनस्य प्रधानस्यैव महदहङ्कारादिरूपेण परिणामस्वभावस्य कारणत्वात्, तथाहि चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य वियदादिनामरूपविकारा-वस्थितस्य जगद्रूपस्य वस्तुनः कारणभूतं वस्तु तत्स्वभावमेवेति युक्तं गुणसाम्यावस्थं प्रधानमेव कारणमिति, अत एव कार्यकारणयोरनन्यत्वोपपादकमृदादिदृष्टान्तोपपत्ति-रितीक्षत्यधिकरणपूर्वपक्षानुसारिणीमाशङ्कामभिप्रेत्य परिहारमाहुः—महदित्यादिना यदनुग्रहत इत्यन्तेन । यस्य तवानुग्रहतः "तदैक्षत बहु स्याम्" इतीक्षात्मकसङ्कल्पा-लब्धसत्ताकाः येनानुप्रविष्टाश्च महदहङ्कारादयः अण्डमसृजन्, अचेतनस्येक्षात्मकानु-ग्रहासंभवान्न तस्य कारणत्वमिति भावः, नच वृष्टिप्रतीक्षाश्शालय इतिवद्गौणानुग्रह-संभवः,"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति कारणस्यात्मत्वश्रवणात्, स्यादे-तत्, मा भूत्प्रधानं कारणं, जीवस्तु भवितुमर्हति, तस्येक्षासङ्कल्पापरपर्यायानुग्रहसंभ-वात्, तथाहि—"आत्मन आकाशस्संभूतः" इत्यात्मशब्देन कारणत्वं प्रक्रम्य तस्यात्म-शब्दवाच्यस्य जीवातिरिक्तत्वशङ्काव्युदासाय प्रतिपर्यायं "तस्यैष एव शारीर आत्मा" इति शरीरसंबन्धमभिधाय आनन्दमयशब्देन स्वार्थकमयडन्तेन तस्यानन्दरूपतां चा-भिधाय "सोऽकामयत" इति तस्येक्षापूर्वकसृष्टिराम्नायत इत्यानन्दमयाधिकरणपूर्वप-क्षानुसारिणीमाशङ्कामभिप्रेत्य परिजह्रुः—पुरुषविधइत्यादिना । आनन्दवल्ल्यामन्नमय-प्राणमयमनोमयविज्ञानमयानन्दमयेषु यश्चरम आनन्दमयः पुरुषविधः "स वा एष पुरु-षविध एव" इत्यादिना पुरुषाकारत्वेन निरूपितः, अन्वयः 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः।आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा"इत्युक्ताशिरःप-क्षपुच्छादिरूपपुरुषप्रकारान्वयवान् स त्वमेव न तु प्रत्यगात्मेत्यर्थः, कुत इत्यतो वि-शिषन्ति—यत्सदसदिति। सदसच्चिदचिदात्मकप्रपञ्चाकारं यदित्यर्थः, "तत्सृष्ट्वा। तदे-वानुप्राविशत्। तदनुप्रविश्य।सच्च त्यच्चाभवत्" इति स्वसृष्टचिदचिदनुप्रवेशेन तदुभ-यात्मकजगद्रूपेण भवनस्य चिदचिद्वाचिशब्दाभिधेयत्वस्य च श्रूयमाणस्य बद्धमुक्तोभया-वस्थजीवासंभावितस्य त्वय्येव संभवादिति भावः, किंच यदतः चिदचिदात्मकप्रपञ्चा-

त्परं विलक्षणं निरुक्तानिरुक्तनिलयनानिलयनविज्ञानाविज्ञानसत्यानृतशब्दैः प्रकृतिपुरुषौ निर्दिश्य तदन्तरात्मतया तदनुप्रवेष्टृतया श्रूयमाणं यत्तज्जीवातिरिक्तस्त्वमेव, अथ यच्चैष्वन्नमयादिषु चतुर्षु संहृतेष्वप्यवशेषमवस्थितमानन्दमयरूपम्—ऋतं निर्विकारं तत्त्वमेव, एवमुक्तधर्मसमानाधिकरणतया श्रूयमाणमीक्षितृत्वात्मकानुग्रहीतृत्वं जीवासंभावितं त्वय्येवोपपन्नमिति समुदायाभिप्रायः, शारीरात्मत्वं च सर्वशरीरके त्वय्येवोपपन्नमिति च भावः, अत्र केचित्—अन्नमयादिषूपदिश्यमानेषु यश्चरमो "ब्रह्म पुच्छं प्रतिष्ठा"इति पुच्छत्वेनोक्तः,स त्वमिति संबन्धमाहुः, तथाहि—तस्येदं ब्रह्म पुच्छं स्यात्प्रतिष्ठा हेतुरित्यतः । व्यतिरेकश्रुतेर्ब्रह्मविषयत्वप्रतीतितः ॥ श्लोकस्य वक्ष्यमाणस्य ब्रह्मप्राधान्यनिश्चयात् । प्रियमोदादिरूपेण विदितस्य जनैस्समैः ॥ इहानन्दमयस्यास्य शङ्कायाश्चात्र सङ्गतेः । सदसद्भावयोर्ज्ञानाज्ञानयोश्च निरंशिनः ॥ अंशित्वासङ्गतेर्निर्विकारस्य मयटाऽत्र वै । विकारित्वाबोधनाच्च मयटो ह्यत्र सङ्गतेः ॥ तस्यैष एव शारीर आत्मेति च तदन्तरम् । आत्मान्तरं कीर्त्यमानमानन्दमयवस्तुनः ॥ ब्रह्मत्वं नावगमयेदित्यतः पुनरस्य हि। परे तस्मिन्नित्यशुद्धे शोध्यत्वानुपपत्तितः॥नानन्दमयशब्देन वाच्यं ब्रह्मेति निश्चितम् । पुच्छत्वेनैव यत्तत्र रूपितं तु तदिष्यते—इति, तत्तुच्छम्—कृत्स्ने प्रकरणे ह्यत्र पूर्वमन्नमयादिषु । स्वस्मादनतिरिक्तैस्स्वावयवैस्सुनिरूपणात् ॥ शिरःपक्षादिरूपेण पुरुषत्वस्य निश्चितम् । प्रियमोदादिभिस्स्वस्मादभिन्नैरेव रूपितः॥ न भिद्यते ब्रह्मणोऽत्र ह्यानन्दमयशब्दितः । तत्तदन्तरभूतस्य वस्तुनो बोधकस्य वै ॥ तस्यैष एव शारीर आत्मेत्यात्मपदस्य हि । व्याख्यानन्दमये पर्यवसन्ना कीर्तनात्पुनः ॥ अन्यस्य ब्रह्मपर्यायस्यानन्दमयतस्ततः । अन्नादिमयपर्यायेषूक्तानां श्लोकरूपिणाम् ॥ वाक्यानां पक्षपुच्छादिमदर्थपरतः पुनः । पुच्छमात्रपरस्यास्य श्लोकस्यास्याप्यसङ्गतेः ॥ अनन्तरे सोऽकामयतेति वाक्यश्रुतेन सः । इतिशब्देन पुंवस्तुबोधकेन तथा पुनः ॥ प्रधानप्रकृतार्थस्य परामर्शनसाधुना । अनन्तरस्यानन्दमयस्यात्राबोधसङ्गतेः ॥ ब्रह्मणो व्यवधानेन तदुपस्थापनक्षतेः । ब्रह्मण्यानन्दशब्दस्य ह्यानन्दो ब्रह्म इत्यतः ॥ श्रुतेस्संप्रतिपन्नत्वादानन्दस्थापने क्षमात् । आनन्दमयमात्मानमुपसङ्क्रम्यवाक्यतः ॥ आनन्दानन्दमययोरैकार्थ्यस्य प्रतीतितः । आनन्दमयशब्देन परब्रह्मावबोधनात् ॥ आनन्दोब्रह्मेतिव्यजानादिति पर्यायतुल्यतः । आनन्दमयतुल्यार्थाच्छब्दादानन्दतः परम् ॥ प्रतीतार्थश्रुतेः पश्चादुपपत्तेरभावतः । न पुच्छमेव ब्रह्मेति किंतु पुच्छवदिष्यते ॥ स्वाभिन्नपक्षपुच्छादिपरप्रकरणस्य वै । आनुगुण्येन षष्ठ्याच निर्देशस्य तथा पुनः ॥ अंशांशित्वेनोपपत्तेर्व्यतिरेकस्य निश्चयात् । आत्माब्रह्मानन्दमयशब्दैरेकार्थबोधनात् । तेषामन्यतमेनापि श्लोकस्य ह्युपपत्तितः ॥ आनन्दस्यापरिच्छित्तेः पुच्छब्रह्मपदस्य हि ॥ आनन्दमयवाच्यस्य प्रसिद्धेरप्यभावतः । सदसद्भावयोर्ज्ञानाज्ञानयोश्च तथा पुनः ॥ शङ्कायास्संभवादस्य रूपणस्योपपत्तितः । अंशांशिभ्यां तथानन्दमयशब्दगतस्य वै॥ मयटस्स्वार्थिकत्वेन प्राचुर्यार्थेऽपि वा पुनः । उपपत्तेर्विकारार्थकत्वाभावाच्च ब्रह्मणः ॥ निर्विकारत्वनिर्वाहादनन्यात्मत्ववादिनः ॥ तस्यैषएवशारीरआत्मेत्यस्याविरोधतः । तद्वस्त्वनुगुणत्वेन शोधनस्य विधेः पुनः । प्रत्यगर्थस्य शोध्यत्वं संसृतेर्निर्हतेस्तथा ॥ आनन्दमयशब्देन वाच्यस्य ब्रह्मण

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः
परिसरपद्धतिं हृदयमारुणयो दहरम् ।

स्तथा । शोध्यत्वस्य प्रपत्त्याच साध्यस्य ह्युपपत्तितः ॥ कालुष्यशान्तिरूपस्य न पुच्छं ब्रह्म वै मतम् ॥ अन्यथाऽऽनन्दमयतस्स एव ब्रह्म तु स्थितम् ॥ इति पुच्छब्रह्मवादिदूषणोद्धार इष्यते ॥ १८ ॥

मु ॥ अथ भगवद्विमुखानां जन्मवैयर्थ्यमाह— दृतयइति॥ तेऽनुविधाः तवानुविधायिनः त्वदाश्रयणयोग्यजन्मभाजोऽपि असुतृपो यदि कथाश्रवणादिष्वन्यतममनादृत्य प्राणेन्द्रियतर्पणपराः शब्दादिविषयचपलाश्चेत् दृतय इव भस्त्रा इव श्वसन्ति,पाठान्तरे असुभृतः नराः यदि तेऽनुविधाः अनुवर्तिनः भक्ता इति यावत् , तर्हि ते श्वसन्ति जीवन्ति सफलजीवना भवन्ति. अन्यथा दृतय इव भस्त्रा इव वृथाश्वासा इत्यर्थः, त्वच्छब्दनिर्दिष्टं भगवन्तं कारणत्वेन विशिनष्टि—महदहमादयः महदहङ्कारादयः पदार्थाः यदनुग्रहतः यत्सङ्कल्पानुगृहीता अण्डमसृजन्नित्यर्थः, एवं देहोत्पत्तिजीवनयोर्हेतुत्वेन उपकारके त्वयि भक्तिविहीनाः कृतघ्ना इति भावः. तस्य ते अनुविधा इत्यर्थः, अथ सर्वान्तरात्मत्वेन विशिनष्टि—पुरुषेति । अन्नमयादिषु चरमः अन्नमयप्राणमयमनोमयविज्ञानमयानां चरमः, "तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः" इति हि श्रूयते. पुरुषविधान्वयः "स वा एष पुरुषविध एव" इत्यादिप्रकारेण शिरःपक्षपुच्छादिरूपपुरुषप्रकारान्वयवान् , "तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा" इति हि पुरुषविधत्वं रूप्यते, येष्वन्नमयादिषु अवशेषं पश्चान्निर्दिष्टम् एषु संहतेष्वप्यवस्थितं वा, अतः परं चिदचिदात्मप्रपञ्चविलक्षणं सदसत् चिदचिदनुप्रवेशात् चिदचिच्छब्दवाच्यसदसच्छब्दवाच्यः, ऋतं निर्विकारं, "तदनुप्रविश्य । सच्च त्यच्चाभवत्" इति हि श्रूयते, एवंभूतं यत् तस्य ते अनुविधा इत्यन्वयः ॥ १८ ॥

वी ॥ अस्तु कारणत्वेनोपास्यत्वं,केके कुत्रकुत्र कथंकथमुपासते, कीदृशं च फलमित्यपेक्षायाम् उपासनभेदानभिधाय सर्वेषामप्युपासनानां मोक्षैकफलत्वमाहुः—उदरमिति ॥ ऋषिवर्त्मसु वेदान्तविहितेषूपासनमार्गेषु ये कूर्पदृशः सूक्ष्ममतयः तत्र केचिदारुणयः अरुणवंश्याः तदनुयायिनः दहरविद्यानिष्ठा इति यावत् , हृदयं हृद्गतं दहरं दहरशब्दवाच्यं हृदयपुण्डरीकान्तर्गताकाशरूपं त्वामुपासते, केचित्तु वैश्वानरविद्यानिष्ठाः उदरम् उदरस्थजाठराग्निशरीरकं त्वामुपासते, केचित्तु परिसरपद्धतिं परितस्सरति व्याप्नोतीति तथा, सुषुम्नाख्या नाडी सैव पद्धतिर्मार्गः तं सुषुम्नामार्गस्थं त्वामुपासत इत्यर्थः, सुषुम्नायाः हृदयादारभ्य शिरःपर्यन्तव्याप्तेः तदभिप्रायेण परिसरपद्धतिमित्युक्तं, तदेव स्पष्टयितुं परिसरवर्त्म विशिषन्ति—ततः हृदयादारभ्येत्यर्थः, हे अनन्त यत्तव परमं धाम उपासनस्थानं शिरो भ्रूमध्यं तत्पर्यन्तं यदुदगादूर्ध्वमाक्रामत् "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका"इति श्रुत्यर्थोऽत्राभिसंहितः, तव धाम शिरः परमित्यनेन शिरोऽपि तदुपासनस्थानमित्युक्तं भवति, "एष देवपथो ब्रह्मपथः" "तयोर्ध्वमायन्नमृतत्वमेति" "एतेन

तत उदगादनन्त तव धाम शिरः परमं
पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १९

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं
[१]विरजधियोऽन्वयन्त्य भिविपन्यव एकरसम् ॥ २०

प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यादिश्रुत्यर्थमभिप्रेत्य विशिंषन्ति—यत् मध्यनाडीवर्त्म शिरो वा सर्वेऽप्युपासकाः समेत्य प्राप्य पुनरिह प्रकृतिमण्डले कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति, यदिति वर्त्माभिप्रायको नपुंसकनिर्देशः ॥ १९ ॥

मु ॥ अतः स्थानभेदेन उपासनभेदान् विवक्षन् भगवदुपासकानां मोक्षफलमाह—उदरमिति ॥ ऋषिवर्त्मसु ज्ञानमार्गनिष्ठाः आरुणयः अरुणवंश्या ऋषयः कूर्पदृशः सूक्ष्मदृष्टयः उपासते उदरस्थं तं वैश्वानरं त्वाम् उपासते, अनन्त तव धाम शिर उदगात् भ्रूमध्यगतं त्वाम् उपासत इत्यर्थः, उपासकाः इह संसारे समेत्य यत्सङ्गं कृत्वा कृतान्तमुखे न पतन्तीत्यर्थः॥ १९ ॥

वी ॥ एवमुपासनस्थानप्रसङ्गात्परमात्मनोऽशुचिदेहसंबन्ध उक्तः, अथ कार्यान्तःप्रविष्टस्यापि तस्य निर्दोषतया परमप्राप्यत्वमाहुः—स्वकृतेति ॥ हेतुतया सर्वोपादानत्वेन स्वेन त्वया कृताः निर्मिताः विचित्राः योनयो देहाः येषां तेषु देवमनुष्यादिविचित्रभवत्कृतशरीरकेषु जीवेष्वित्यर्थः, विशन् अन्तरात्मतया प्रविशन् यद्वा देवादिशरीरेष्वेवोपासकानुग्रहेणोपासनार्थं विशन् तिष्ठन्, इवशब्दोऽनतिरिक्तार्थकः, विशन्नेवेत्यर्थः, तरतमतः ज्ञानाल्पत्वमहत्त्वादिभावेन स्वकृतानुकृतिः स्वकृताः योनीरनुकरोतीति तथा हृदयादिकार्यपरिमाणोत्पत्तिविनाशाद्यनुकारी चकास्सीत्यर्थः, अनलवत् यथा अग्निः स्वतस्तारतम्यहीनोऽपि तृणकाष्ठाद्यनुसारेण तथा प्रकाशते, तद्वत्, अथ यद्यप्येवमथापीत्यर्थः, अमूषु योनिषु वितथासु अविद्यमानासूपसंहृतास्वित्यर्थः, अवितथमनुपसंहृतं,कुतः? सममेकरूपं कार्यानुप्रवेशकृतकार्यगतदोषस्पर्शरहितं, तत्कुतः? एकरसमविच्छिन्नानन्दं तव धाम स्वरूपं विरजधियो निर्मलमतयः अनुनयन्त्युपासते, अभियन्ति प्राप्नुवन्ति चेत्यर्थः, 'अन्वयन्त्यभिविपन्यवएकरसम्' इति पाठान्तरम्, तदा अभिविपन्यवः विविधत्वद्गुणवादात्मकश्रुतियुक्ताः अन्वयन्ति अन्विता गच्छन्ति प्राप्नुवन्तीति यावत्, अत्र "सर्वज्ञस्सर्वदृक्सर्वज्ञानशक्तिबलर्द्धिमान्। अन्यूनश्चाप्यवृद्धिश्च स्वाधीनोऽनादिमान् वशी । क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ॥ निरवद्यः परः प्राप्तिर्निरधिष्ठोऽक्षरक्रमः" इत्यादिस्मृत्यर्थोऽनुसन्धेयः ॥ २० ॥

मु ॥ कार्यान्तःप्रविष्टस्यापि निर्दोषतया परमप्राप्यत्वमाह—स्वकृतेति ॥ स्वकृताः स्वेन कृताः विचित्रा योनयः उत्पत्तयो येषां तेषु देवादिशरीरेषु हेतुतया स्थित्यादिकारणतया विशन् जीवान्तरात्मतया तिष्ठन् तरतमतः अल्पत्वमहत्त्वादितारतम्येन युक्तः स्वकृतानुकृतिः कार्यपरिणामानुकारीव चकास्सि अवभासि,यथाग्निर्वस्तुतस्तारत-

१. अत्र व्याख्यानुसारी पाठो विभाव्यः ॥

स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं
तव पुरुषं वदन्त्यखिलशक्तिधृतोंशकृतम् ।
इति नृगतिं [१]विविच्य कवयो निगमावपनं
भवत उपासतेऽङ्घ्रिमभवं भुवि निश्वसिताः ॥ २१

---

म्याभावेऽपि स्वदाह्यानुसारेण तारतम्यं भजति, तद्वदिति, अथ अतः वितथासु संहतासु अमूषु योनिषु अवितथम् असंहृतं समं कार्यानुप्रवेशतारतम्यरहितम् एकरसम् अविच्छिन्नानन्दं तव धाम स्वरूपं विरजधियः निर्मलधियः अनुनयन्ति उपासते, अभियन्ति प्राप्नुवन्ति चेत्यर्थः, पाठान्तरे अभिविपन्यवः आभिमुख्येन स्तुवन्तः "पन स्तुतौ" इति धातुः, अन्वयन्ति प्राप्नुवन्तीत्यर्थः ॥ २० ॥

वी ॥ 'परम भजन्ति ये पदमजस्रसुखानुभवम्' 'उदरमुपासते' 'अवितथं तव धाम समम्' 'एकरसम्' इत्युदरादिस्थानविशेषाधिष्ठानकदिव्यात्मस्वरूपोपासकनां तत्प्राप्तिरुक्ता, अथ दिव्यविग्रहोपासकानामपि तत्सारूप्यापत्तिरूपं फलमित्यभिप्रेत्य तदुपासकाश्च केचित्सन्तीत्याहुः—स्वकृतपुरेष्विति ॥ अमूषु देवमनुष्यादिषु स्वेन त्वया कृतेषु पुरेषु त्वन्निवासभूतेषु देहेषु सन्तमिति शेषः, अखिलशक्तिधृतः अखिलाश्शक्तीः आश्चर्यशक्तीः धरतीति तथा तस्य तवांशकृतम् अंशेन सङ्कल्पात्मकज्ञानेन कृतं कल्पितम् उपात्तम् अबहिरन्तः अन्तर्बहिर्देशरहितम् अन्तर्बहिश्च व्याप्तिक्षममित्यर्थः, अनेन विग्रहस्यापि पुरान्तरवस्थानप्रयुक्तपरिच्छिन्नत्वशङ्काव्यावृत्तिः, असंवरणं संकोचहेतुरहितं पुरुषं पुरुषाकारं विग्रहं वदन्ति, वेदान्ता इति शेषः, 'अङ्गुष्ठमात्रो रवितुल्यरूपः" "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" इत्याद्याः वेदान्ताः प्रतिपादयन्तीत्यर्थः, इतीत्थंभूतं तव पुरुषं तथा नृगतिं नरजन्म त्वदाराधनोपयुक्तमिदं नृजन्मेतिच विचिन्त्य विचारपूर्वकं निश्चित्य भुवि भूमौ केचित्कवयो विवेकिनः निश्वसिताः प्राणायामपराः जितप्राणेन्द्रिया इत्यर्थः, तवाङ्घ्रिमुपासते, कथंभूतं? निगमावपनं निगमानां वेदानामावपनं क्षेत्रं प्रतिपादनविषयमिति यावत्, यद्वा निगमस्य ज्ञानस्यापवनम् आ समन्तादुप्यतेऽनेनेत्यापवनम् उत्पादकं "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगम्" इति भगवदुक्तेः, अभवं न भवस्संसारो यस्मात्सेव्यमानात् तं "भुवि विश्वसिताः" इति पाठान्तरं, तदा मोक्षयिष्यतीति दृढविश्वासयुक्ताः उपासत इत्यर्थः ॥ २१ ॥

मु ॥ तावदुपासकस्य जीवस्य परेण सम्बन्धमाह—स्वकृतेति॥ स्वशब्दो भगवद्वाची, अमीषु स्वेन भगवता कृतेषु पुरेषु शरीरेषु बहिरन्तरसंवरणं स्वरूपतो धर्मज्ञानस्वरूपं, यद्वा—शरीरस्यान्तर्बहिश्च प्रसृतज्ञानं पुरुषं जीवम् अखिलशक्तिभृतस्तव अंशकृतं विशेषणतया अंशभूतम्, अपुरुषभूतं समये विभक्तं वदन्ति, इति नृगतिं पुरुषस्य गतिं तत्वं विचिन्त्य अन्विष्य, विविच्येति पाठे विशोध्य निश्वसिताः प्राणायामपराः,

दुरधिगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥ २२

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।

---

विश्वसिता इति पाठे विश्वासयुक्ताः, निगमा इति वपनं ज्ञानोत्पादकम् अभवं भवनिवर्तकं भवतोऽङ्घ्रिम् उपासते, भुवीति—भूलोकवर्तिनामिदमेवोचितमिति भावः ॥

वी ॥ केचिदुभयविधमप्युपासनं विहाय केवलं त्वद्गुणामृतपानसुखिता मोक्षमपि नेच्छन्तीत्याहुः—दुरधिगमेति ॥ दुरधिगमं दुःखेनाप्यवगन्तुमशक्यं यत् आत्मनस्तव तत्त्वं याथात्म्यं तस्य निगमाय प्रकाशनायात्ता उपात्ता तनुः रामकृष्णादिरूपा येन तस्य तव चरितमेव महान् अमृताब्धिस्तस्मिन् परिवर्तेन अवगाहनेन परिश्रमणाः,परिरत्रवर्जने, परिविधूताः श्रमाः आध्यात्मिकादितापाः येषां ते हे ईश्वर ते तव चरणसरोजसम्बन्धिनो हंसा भागवतास्तत्कुलसङ्गेन विसृष्टास्त्यक्ताः गृहाः गेहदेहाद्यनुरागा यैस्ते अपवर्गं मोक्षसुखमपि न परिलषन्ति न काङ्क्षन्ति ॥ २२ ॥

मु ॥ अवताराणां भक्तिवर्धकत्वमाह—दुरवगमात्मत्वतत्त्वनिगमाय आत्मतत्त्वज्ञानाय ज्ञानप्रवर्तनायेत्यर्थः, आत्ततनोः स्वीकृतविग्रहस्य तव चरितमेव महान् अमृताब्धिः तस्मिन् परिवर्तेन परिश्रमो येषां ते, यद्वा—चरितमहामृताब्धौ परिवर्तोऽवगाहः, तेन परित्यक्तः संसारश्रमो यैस्ते, परिर्वर्जनार्थः, एवंभूताः केचित् महात्मानः, केचिदिति भक्ता विरला इति दर्शयति, अपवर्गमपि मुक्तिमपि न परिलषन्ति नेच्छन्ति, अपवर्गेऽपि नैतादृशसुखानुभवोऽस्तीति भावः, अतएव गृहस्थसुखापेक्षापि नास्तीत्याह—चरणेति । ते चरणसरोजसम्बन्धिनो हंसा यतयः, तत्कुलसङ्गेन विसृष्टगृहाः त्यक्तगार्हस्थ्यास्सन्तो मुक्तिमपि तृणीकुर्वन्तीत्यर्थः ॥ २२ ॥

वी ॥ नृगतिं विचिन्त्येत्यनेन देहस्य भगवत्सेवोपयुक्तत्वमभिप्रेतं, तदेव स्पष्टयन्त्यस्तथैव सति तस्य साफल्यमन्यथा तु न साफल्यं, प्रत्युतानर्थहेतुत्वं चेत्याहुः—त्वदनुपथमिति ॥ कुलायं नीडतुल्यमिदं नृशरीरं त्वदनुपथं त्वदनुवर्ति त्वदाराधनप्रवणं चेदित्यर्थः, तर्ह्यात्मादिवच्चरति, आत्मादिभिस्तुल्यं स्यादित्यर्थः,तथाप्यसदप्युपासनया शब्दादिविषयसेवया हेतुभूतया आत्महनः आत्मघातिनः विषयसेवायाः अन्ततः स्थावरत्वापादकतया आत्मनोऽसत्प्रायतापादकत्वात्तत्सेवापरा आत्मघातिन एवेति भावः, त्वय्यहो न रमन्ते, अहो निरतिशयगुणवदिदं शरीरं प्राप्यापि त्वां न भजन्त इति खेदः, कथंभूते? यथोत्सुके यथावस्थितात्कूलानन्दे अत एव प्रिये अत एवच हिते उन्मुख इति पाठे ईषदानुकूल्येनाप्यभिमुखीभवितुमुद्युक्त इत्यर्थः, कुतस्तान्प्रति खिद्यध्वे

न बत रमन्त्यहो असदुपासनयाऽऽत्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २३
निभृतमरुन्मनोक्षदृढयोगयुजो हृदि य-
न्मुनय उपासते तदरयोऽपि ययुस्स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयमपि ते समास्समदृशोऽङ्घ्रिसरोजसुधाः ॥ २४

---

इत्यत आहुः—यद्यस्मादनुशयाः प्रतिजन्मभुक्तावशिष्टोत्तरोत्तरदेहनिमित्तकर्मयुक्ताः उरु बहु भयं यस्मिन् तस्मिन्संसारे भ्रमन्ति, अतः ते कुशरीरभृतः कुत्सितदेहभाजः केवलं शोच्या एवेति भावः, भुक्तावशिष्टं कर्मानुशयः,स एषामस्तीत्यर्शआद्यच्॥ २३॥

मु ॥ भगवदाश्रयणं शरीरफलम् ,अन्यथा कुत्सितदेहयोगात् संसरन्तीत्यत आह —त्वदनुपथमिति ॥ कुलायं नीडतुल्यम् इदं शरीरं त्वदनुपथं त्वदाराधनादिप्रवणं चेत्—आत्मसुहृत्प्रियवत् चरति आत्मादिना तुल्यं स्यादित्यर्थः, तथापि असदुपासनया शब्दादिविषयसेवया आत्महनः आत्मघातिनः पुरुषाः यदनुशयाः यस्मिन् शब्दादौ अनुशयवन्तः सन्तापवन्तः कुशरीरभृतः कुत्सितदेहधारिणः उरुभये संसारे भ्रमन्ति, तस्य शब्दादेः उपासनया त्वयि न रमन्तीत्यन्वयः ॥ २३ ॥

वी॥ आस्तां त्वयि न रमन्त इति,अहो बत त्वयि द्वेषादिकमपि न कुर्युः यतस्त्वयि विलक्षणविषये तस्यापि त्वत्प्राप्तिसाधनत्वमिति सदृष्टान्तं सोदाहरणं सोपपादनं चाहुः —निभृतेति ॥ मरुतः प्राणाः मनश्चाक्षाणीन्द्रियाणि च निभृतानि संयमितानि मरुदादीनि यैस्तेच दृढम् अविचाल्यं योगमुपासनात्मकं युञ्जत इति तथा ते मुनयः हृदि यत्त्वत्स्वरूपमुपासते तदेवारयः शत्रवोऽपि स्मरणात् अप्रीतिपूर्वकस्मरणात् ययुः प्रापुः, तथा स्त्रियः गोप्योऽपि उरगेन्द्रस्याहीन्द्रस्य देहसदृशयोर्भुजदण्डयोर्विशेषेण सक्ता धीर्यासां ताः तदेव ययुरित्यन्वयः, विषयस्य विलक्षणत्वादिति भावः, किं बहुना वयं वेदाभिमानिनो देवा अपि अङ्घ्रिसरोजमेव सुधा तद्वद्भोग्यं येषां ते त्वच्चरणसरोजप्रकाशका वयमपीत्यर्थः, यद्वा अङ्घ्रिसरोजं सुष्ठु धयन्ति पिबन्ति अनुभवन्तीति यावत्, 'धेट्पाने'इति धातो रूपमिदं, त्वयि प्रमाणतया त्वदन्तरङ्गभूतास्त्वत्स्वरूपादिप्रकाशका वयमपीत्यर्थः,ते तव समास्तुल्याः मुनिप्रभृतय इव त्वामेव विषयभूतं तात्पर्यतोऽर्थतश्च प्राप्तुम इत्यर्थः, तत्र हेतुत्वेन विशिंषन्ति—समदृशइति । समा दृग्यस्यानादृतनिम्नोन्नतभावस्य वैषम्यनैर्घृण्यादिपरिहाराय व्याजमात्रावलम्बिनस्सर्वानुजिघृक्षोस्तव सर्वेऽपि तुल्यकक्ष्या इति भावः ॥ २४ ॥

मु ॥ प्रतिकूलानामपि भगवत्स्मरणमुत्तारकमित्याह—निभृतेति ॥ हृदि यत् हृद्गतं त्वां मुनय उपासते, तान्विशिनष्टि—निभृतेति। विधेयप्राणमनइन्द्रियत्वात् दृढयोगयुजः स्मरणात् अरयोऽपि त्वां ययुरिति यस्मात् तस्मात् त्वां मुनय उपासत इत्यन्वयः, स्त्रियः गोप्यः उरगेन्द्रभोगतुल्ये तव भुजदण्डे विशेषेण सक्तधियः ययुरित्यन्वयः, वयं वेदाः समाः पक्षपातरहिततया प्रमाणभूताः समदृशः समाना दृष्टिर्येषां ते तव अङ्घ्रिसरोजमेव सुधा येषां ते तवाङ्घ्रिसरोजमेव भोग्यतया प्रकाशयाम इत्यर्थः॥

क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्नचासदुभयं न च कालजवः
किमपि न तत्र [१]शास्त्रमपकृष्य शयीत यदा ॥ २५

वी॥ अङ्घ्रिसरोजसुधा इत्यनेन भगवत्स्वरूपस्वभावादिप्रकाशकं वेदाख्यं शास्त्रमेवेत्यभिप्रेतम्, अतस्तेन विना भगवतो दुरवगमत्वं सहेतुकमाहुः—कइहेति ॥ अवरजन्मलयः अर्वाचीनोत्पत्तिनाशवान् इह लोके को नु पुमान् अग्रसरं सृष्टेः पूर्वभाविनं सूक्ष्मचिदचिद्विशिष्टत्वेन कारणतयाऽवस्थितं त्वां वेद! शास्त्रेण विना न कोऽपि वेदेत्यर्थः, बतेति विस्मये,"यतो वाचो निवर्तन्ते" इत्युक्तरीत्या वाङ्मनसापरिच्छेद्यस्वरूपस्वभावं तं वेत्तुमुद्युक्तो विस्मीयते,सर्वेषामवरजन्मलयत्वमुपपादयन्ति—यतस्त्वत्तः ऋषिर्ब्रह्मा उदगादुद्बभूव, यमनु पश्चाच्चतुर्मुखोत्पत्त्यनन्तरमित्यर्थः, उभये निवृत्तिनिष्ठास्सनकादयः प्रवृत्तिनिष्ठाः मरीच्यादयश्च देवा उदगुः, मनुजादयस्तेभ्योऽप्यर्वाचीना इति किमु वक्तव्यमिति भावः,अग्रसरत्वमुपपादयन्ति—तर्हीति। यदा भवान् शास्त्रमपकृष्य स्वहृदये निधाय शयीत शयितवान्, तर्हि तदा सृष्टेः पूर्वकाले सत्कार्यावस्थं चिद्वस्तु असत्कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं च कालजवः कालप्रवृत्तिः सर्गादिविषया नासीत्, किं बहुना तत्र तदा न किमप्यासीदित्यर्थः, अत्र "नासदासीन्नो सदासीत्" "एको हवै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इत्यादिश्रुत्यर्थोऽनुसंहितः, अवरजन्मलयोऽग्रसरमितिच हेतुगर्भं, यद्यप्यवरजन्मा पुत्रादिरग्रसरं पित्रादिकम् अयमित्थंभूत इति जानात्येव, तथाप्यत्र भगवतो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावत्वे अवरजन्मलयानां तन्मायामोहितत्वेन तदनुग्राह्यज्ञानत्वेन च तद्वेदनाक्षमत्वेच तात्पर्यं, तर्हि 'न सन्नचासत्' इति सृष्टेः पूर्वं सच्छब्दवाच्यकार्यावस्थचिदचिन्निषेधेन नामरूपविभागानर्हकारणावस्थचिदचिद्विशिष्टस्य ब्रह्मणोऽग्रसरत्वोक्त्या सूक्ष्मचिदचिद्विशिष्टब्रह्मात्मकस्य सत एव द्रव्यस्य स्थूलचिदचिद्विशिष्टतारूपकार्यावस्थायोगित्वलाभात्सत्कार्यवादः फलितः ॥ २५ ॥

मु ॥ शास्त्रेण विना भगवतो दुरवमत्वमाह—क इहेति ॥ इह जगति अवरजन्मलयः सृष्टेः पश्चात् जन्ममरणभागी कः अग्रसरं सृष्टेः पूर्वभाविनं त्वां वेद, यतस्त्वत्तः ऋषिः ब्रह्मा उदगात् उत्पन्नः, यं ब्रह्माणमनु उभये देवगणाः प्रवृत्तिनिष्ठाः सनकादयो निवृत्तिनिष्ठा मरीच्यादयश्च तर्हि तदा सृष्टेः पूर्वकाले सत् कार्यावस्थं चिद्वस्तु असत् कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यन्नेत्यर्थः, कालजवः कालप्रवृत्तिः सर्गादिविषयाच नास्ति, एतद्व्यतिरिक्तं किमपि नास्ति यदा शास्त्रमनुकृष्य स्वहृदये निधाय भगवान् शयीत कार्यव्यापाररहितो भवेदित्यर्थः, तदा न सदित्यन्वयः, यदा अनुकृष्य विश्वं संहृत्य भवान् शयीतेत्यर्थवर्णनेऽपि तत्र काले शास्त्रं तव हृदये संस्काररूपेण तिष्ठतीत्यर्थः ॥ २५ ॥

१. शास्त्रमनुकृष्य. मु-भा-प्र-पा ॥ अवकृष्य. पा ॥

जनिमसतस्सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।
त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २६

---

वी ॥ अथ तद्विरुद्धमसत्कार्यवादं विरुद्धवादप्रसङ्गान्मतान्तराणि चानूद्य दूषयन्ति—जनिमिति॥ असतो द्रव्यस्य जनिमुत्पत्तिं सत्तायोगमिति यावत्, सतश्च द्रव्यस्य पश्चान्मृतिं नाशं च ये तार्किकाः स्मरन्तीत्यसत्कार्यवादोऽनूदितः, उतेति पक्षान्तरे, आत्मनि भिदां स्थूलत्वकृशत्वमनुष्यत्वमृगत्वादिरूपां भिदां ये केचित् स्मरन्तीति चार्वाकमतानुवादः. ते हि देहमेवात्मानं मन्यन्ते,विपणं देवमनुष्ययोरन्योन्योपकारभावजनितं वाणिज्यफलतुल्यं स्वर्गादिफलम् ऋतं सत्यं ये मीमांसकाः स्मरन्तीति कर्मफलनित्यत्ववादानुवादः, न केवलं स्मरन्ति, किंतु ते तार्किकादयः आरुपितैरारोपितैर्युक्त्याभासैरुपदिशन्ति च. तमारुपितैरिति पाठे तं स्वमतसिद्धं युक्त्याभासैरुपदिशन्ति चेत्यर्थः, तथा पुमान् त्रिगुणमयः सत्त्वादिगुणत्रयप्रचुरो जीव एव न तु तदतिरिक्त ईश्वराख्य इति निरीश्वरसाङ्ख्यमतानुवादः,तत्र साधारणं दूषणमाहुः-इतीत्यादिना । इति भिदा इत्थंभूतो मतभेद इत्यर्थः, यदबोधकृता यस्य तवाबोधकृता याथात्म्याज्ञानप्रयुक्ता चिदचिद्विशिष्टत्वद्रूपस्य सत एव द्रव्यस्य जगदात्मकस्थूलावस्थारूपकार्यतायोगित्वं पूर्वपूर्वसंस्थानत्यागात्मिकां मृतिमावृत्तिविधादिभिः कर्मफलस्य तारतम्यम् अतएव अनित्यत्वं ब्रह्मज्ञानफलस्य नित्यत्वं जीवासंभावितसार्वज्ञ्यसत्यसङ्कल्पत्वकरणाधिपत्वादिस्वभावं परमात्मानं देवमनुष्यादिदेहविलक्षणं प्रत्यगात्मानं चाजानतामित्थं मतभेदः प्रवृत्त इत्यर्थः,ननु बुद्धिशब्दान्तरादिभेदात् कार्यकारणयोर्भेदः,अतएवासदेव कार्यमपूर्वमुत्पद्यत इति युक्तं, किंच कारणमेव चेत्कार्यं, कारकव्यापारवैयर्थ्यं, सर्वस्य सर्वदा सत्त्वेन कार्यस्य नित्यानित्यविभागश्च न स्यात्. अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेणाभिव्यज्यते, अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोच्येत, तदसत्—अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वेऽनवस्थानात्, अनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात्. तदुत्पत्त्यभ्युपगमेऽसत्कार्यवादप्रसङ्गात्, अतोऽसतः कार्यस्योत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वम्, अतश्च सत्कार्यवादासिद्धिः, नन्वसत्कार्यवादिनोऽपि कारकव्यापारो नोपपद्यते, प्रागुत्पत्तेः कार्यस्यासत्त्वात्, कार्यादन्यत्र कारकव्यापारेण भवितव्यं, तत्रान्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत, नैवं—यत्कार्योत्पादनशक्तं यत्कारणं तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः, अत्रोच्यते-सत एव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तराद्युपपत्तेर्न तावन्मात्रेणासत्कार्यवादप्रसङ्गः,तत्तदवस्थस्य तस्यैव द्रव्यस्य तेते शब्दास्तानितानि च कार्याणीति द्रव्यस्य तत्तदवस्थतायाः कारकव्यापारायत्तत्वेन तस्यार्थवत्त्वोपपत्तिः, अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्याअनभ्युपगमादेव परिहृतानि,उत्पत्त्यभ्युपगमेऽपि सत्कार्यवादो न विरुध्यते, सतएवोत्पत्तेः, ननु विप्रतिषिद्धमिदमभिधीयते—पूर्वमेव सत्

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजा-
त्सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः।

---

तदुत्पद्यतेचेतीतिचेत्—न, द्रव्यस्योत्तरोत्तरसंस्थानयोगो हि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थितस्य तूत्पत्तिः, अतस्सर्वावस्थस्य द्रव्यस्य सत्त्वात्सत्कार्यवादो न विरुध्यते, संस्थानस्यासत उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेत्—असत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः, उत्पत्तिमत्त्वेच अनवस्था, अस्माकं त्ववस्थानामुत्पत्तिस्थानीयानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एवोत्पत्त्यादिकं सर्वं निरवद्यमिति,एवं ममायं देहः,शिरसि मे दुःखं पादे मे वेदनेत्यपरोक्षमेव देहात्मनोर्व्यतिरेकप्रतीतेः, ''नित्यो नित्यानां चेतनश्चेतनानाम्'' इत्यादिशास्त्राच्च तदवगतेः, ''पुमान्न देवो न नरः'' इत्यादिना देवत्वादिप्रतिषेधाच्चात्मनां भिदावादोऽज्ञानमूलः, ''तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते। नास्त्यकृतः कृतेन'' इत्यादिश्रुतेः, ''दाक्षायणयज्ञेन सुवर्गकामो यजेत'' इत्यावृत्तिविधानाच्च कर्मफलानित्यत्वावगतेस्तन्नित्यत्ववादोऽप्यज्ञानमूलः. ''यस्सर्वज्ञस्सर्ववित्'' ''सत्यकामस्सत्यसंकल्पः'' ''परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' ''करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः'' इत्यादीनि बहुप्रमाणानि ईश्वरेऽवगन्तव्यानि, इत्थमेषां वादानामज्ञानमूलत्वमुक्तम्, अथ भगवज्ज्ञानवतां तादृशभ्रमाभावमाहुः—त्वयीति। ततः पूर्वप्रस्तुतसदसच्छब्दवाच्यप्रकृतिपुरुषाभ्यां परत्र परस्मिन् विलक्षण इति यावत्, अवबोधरसे ज्ञानस्वरूपे त्वयि यथावद्विज्ञाते सतीति शेषः, सः अबोधः तन्मूलो वादभेदश्च नास्तीत्यर्थः॥ २६॥

मु॥ उक्तार्थविरुद्धतार्किकसिद्धान्तानामज्ञानमूलत्वं भगज्ज्ञानवतां तादृशप्रभावं चाह—जनिमिति॥ असतो द्रव्यस्य जनिं सत्तायोगं सतो द्रव्यस्यच पश्चात् मृतिं नाशं स्मरन्तीत्यसत्कार्यवाद उक्तः, इतः किञ्च आत्मनि ये च भिदां स्थूलत्वकृशत्वमनुष्यत्वमृगत्वादिरूपां स्मरन्ति,देहमेवात्मानं पश्यन्तीत्यर्थः,कर्मफलस्यैव नित्यत्वादिदमुक्तम्,विवरणं व्यवहारकर्म, व्यवहारफलम् ऋतं यथार्थमिति आरुपितैः आरोपितैः युक्त्याभासैः उपदिशन्तीति मतान्तरेष्वप्यनुषङ्गः, त्रिगुणमयः त्रिगुणैः सत्त्वादिभिः कार्यमयतीति त्रिगुणमयः प्रकृतिः पुमान् जीवइति भिदा अब्रह्मात्मकतया स्वनिष्ठभेद इति साङ्ख्यमतमुक्तम्, यस्य तव अबोधेन अज्ञानेन कृता ततः परत्र प्रकृतिपुरुषाभ्यां परस्मिन् अवबोधरसे ज्ञानस्वरूपे त्वयि साक्षात्कृते सः अबोधः तर्काभासमूलो भवतीत्यर्थः॥

वी॥ किमबोधनिदानमित्यपेक्षायां मनोदोष एवेति, किं तन्निवृत्तिनिदानमित्यपेक्षायां भगवदुपासनात्मकयोग एवेति. विशुद्धान्तःकरणास्तु सर्वमिदं जगत् भगवदात्मकतया सूक्ष्मचिदचिद्विशिष्टभगवत्कार्यतया च तदनन्यदेव पश्यन्तीति वदन्त्यसत्कारणवादरूपदूषणपरिहारपूर्वकमसत्कारणवादासाधारणानुपपत्तिमाहुः—सदिवेति॥ आमनुजान्मनुजपर्यन्तात् मनुष्यपर्यन्तानां देहिनामित्यर्थः, त्रिवृत् त्रिगुणात्मकं मनस्सदिव सत्त्वमर्थक्रियाकारित्वं कार्यकरमिव प्रतीयमानमपि त्वय्यसद्भाति कार्यकरं न.

नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥ २७

भवति, चिदचिदात्मकजगद्विशिष्टं तदात्मानं त्वां न प्रकाशयतीत्यर्थः, आत्मानं त्वां विदन्त्युपासत इत्यात्मविदः त्वदुपासनात्मकयोगपरिशुद्धान्तःकरणास्तु अशेषं कृत्स्नमिदं जगत् आत्मतया आत्मशब्दः परमात्मपरः, "अजयाऽऽत्मना च चरतः" इत्युक्तप्रकारेण सदभिमृशन्ति, सच्छब्दवाच्यसूक्ष्मचिदचिद्विशिष्टं कारणं ब्रह्मैव कार्यजगद्रूपेणावस्थितम्, अतस्ततोऽनन्यदित्येवमुपास्य परब्रह्मविशेषणतया उपास्यकोट्यन्तर्गतत्वाज्जगदुपादेयमेव पश्यन्तीत्यर्थः, ब्रह्मात्मकत्वेन जगतो हेयत्वाभावे दृष्टान्तमाहुः —नहीति । कनकस्य विकृतिं विकारं कटकमकुटादिकं नहि त्यजन्ति, किंतु तदात्मतया प्रकृतिभूतकनकानन्यतया उपाददत एवेति शेषः, कार्यावस्थायामपि कनकाव्यतिरेकादिति भावः, यदि कार्यं कारणादन्यत्, तदा कनकस्य विकृतिं त्यजेयुरित्यसत्कार्यवादेऽनुपपत्तिरभिसंहिता, एवं जगदुपादेयमेवेत्याहुः—स्वकृतमिति । स्वरूपपरिणामशङ्काव्यावृत्त्यर्थमनुप्रवेशोक्तिः, अनेन स्वपक्षे दूषणोद्धारः, स्वशब्दः परमात्मपरः, स्वकृतं जगत्तेन परमात्मना अनुप्रविष्टं व्याप्तम्, "तत्सृष्ट्वा तदेवानुप्राविशत्" इति हि श्रुतिः, अत इदं जगदात्मतया अवसितम् उपास्यपरमात्मशब्दवाच्यवस्त्वन्तर्गततया सुखरूपं निश्चितमित्यर्थः, "तदात्मानं स्वयमकुरुत । यद्वै तत्सुकृतं । रसो वै सः" इति हि श्रुतिः, यद्वा आत्मतया अन्तः प्रविश्यधारकतया अन्तःप्रविश्यधारकत्वं ह्यात्मशब्दार्थः, तेन अवसितं व्याप्तम् अनेनाकाशादिवन्न तूष्णीं व्याप्तिः, किंतु धारकतयेत्युक्तम्, अनेनेदं सदभिमृशन्तीत्युक्तं सामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति फलितम्॥

मु ॥ विश्वस्य भगवदात्मकत्वाग्रहणं मनोदोषात्, मनसि शुद्धे भगवदात्मकतया प्रतीयमानं विश्वमुपादेयं स्यादित्याह—सच्चेति ॥ आमनुजात् मनुष्यपर्यन्तानां देहिनां त्रिवृत् गुणत्रयात्मकं मनः सदिव सत्त्वम् अर्थक्रियाकारित्वम्, कार्यकरमिव प्रतीयमानमपि त्वयि असत् भाति कार्यकरं न भाति, त्वां न प्रकाशयति, अथशब्दः पक्षान्तरे, विशुद्धे त्वत्प्रकाशनक्षमे मनसीत्यर्थः, आत्मविदः अशेषमिदं जगत् आत्मतया विमृशन्ति, आत्मशब्दः परमात्मपरः, 'अजयात्मना च चरतः' इत्युक्तप्रकारेण चिदचिद्विशिष्टं कारणं परं ब्रह्मैव कार्यं जगद्रूपेण स्थितमिति विमृशन्ति, ब्रह्मात्मकत्वेन जगतो हेयत्वाभावे दृष्टान्तमाह—नहि विकृतमिति । कनकस्य विकृतिं कटकमकुटादिकार्यं तदात्मकतया कनकात्मकतया न त्यजन्ति कार्यावस्थायामपि कनकाव्यतिरेकात् केवलमुपाददत इत्यर्थः, एवं जगत उपादेयत्वमाह—स्वकृतमिति । स्वेन कृतं स्वरूपपरिणामव्यावृत्त्यर्थमनुप्रवेशोक्तिः, स्वशब्दः परमात्मपरः, इदं जगत् तेन परमात्मना अनुप्रविष्टं व्याप्तं 'तत्सृष्ट्वा, तदेवानुप्राविशत्' इति हि श्रुतिः, अत इदं जगदात्मकतया रहितं परमात्मशब्दवाच्यवस्त्वन्तर्गततया सुखरूपमित्यर्थः, 'तदात्मानं स्वयमकुरुत । यद्वैतत्सुकृतं । रसो वै सः' इति हि श्रुतिः, 'सदभिमृशन्ति' इति पाठे सदिदमित्यन्वयः, यद्वा—आत्मतया भगवदात्मकत्वेन सदिति जानन्तीत्यर्थः, अन्यथा—सत्त्वमेव न संभवतीति भावः ॥ २७ ॥

तवपरियेचरन्त्यखिलसत्त्वनिकेततयातउतपदाक्रमन्त्यविगणय्यशिरोनिर्ऋतेः ।
परिवयसेपशूनिवगिराऽविबुधानपितांस्त्वयिकृतसौहृदाःखलुपुनन्तिनयेविमुखाः
त्वमकरस्स्वराडखिलकारकशक्तिधरस्तवबलिमुद्वहन्ति[१]समदन्त्यजयानिमिषाः॥

वी ॥ नन्विदमात्मविदस्सदभिमृशन्तु, ततः किमत आहुः—तवेति ॥ इत्थमिदं सदभिमृशन्त एव मृत्युं तरन्तीति भावः, तथाहि—अखिलसत्त्वानां सर्वेषां जन्तूनां निकेततया धारकतया ये तव परिचरन्ति अखिलान्तरात्मत्वेन त्वां सेवन्ते उपासत इति यावत्, त उत त एव निर्ऋतेः मृत्योः शिरो मूर्धानमविगणय्य अनादृत्य पदा पादेनाक्रामन्ति मृत्योर्मूर्ध्नि पदं दधति ततो मुच्यन्त इत्यर्थः, तर्हीत्थमनभिमृशतां का गतिरित्यत आहुः—परिवयसइति । अविबुधानिति च्छेदः, अविदुषः सार्वात्म्यब्रह्मोपासनरहितान् गिरा शास्त्रात्मकसम्यगुपदेशेन परिवयसे "अय पय" इत्यादिदण्डकपठितस्य वयतेः "वी गतिव्याप्ति" इत्यस्य ण्यन्तस्य वा इदं रूपम्, अस्य गत्यर्थकस्य ज्ञानार्थकत्वात् बोधयसीत्यर्थः, यद्वा—परिवयसे गमयसि, सन्मार्गं नयसीत्यर्थः, पशूनिव यथा दुर्दमान् पशून् नासिकासूत्रादिभिः सम्यक् शिक्षयन्ति, तद्वत्, शास्त्रात् त्वामित्थंभूतं ज्ञात्वा क्रमेणोपासीना मुच्यन्त इति भावः, परिवयस इति लण्मध्यमपुरुषेण निरतिशयकृपावत्त्वं सर्वानुजिघृक्षुत्वं च सूचितम्, तर्हि शास्त्रानधिकारिणां का गतिरित्यत आहुः—तानिति । ये त्वयि न विमुखाः वैमुख्यरहिताः अत एव कृतं सौहृदं यैस्ते त्वद्भक्ताः तानज्ञान् शास्त्राधिकाररहितानपि पुनन्ति खलु, भागवतसेवया तेऽपि मुच्यन्त इति भावः, येषां सत्सेवाऽपि न रोचते, तेषामधोगतिरेवेति तात्पर्यम् ॥ २८ ॥

मु ॥ एवं भगवत्पराणां प्रभावं भगवद्विमुखानामपकर्षं चाह—तवेति ॥ अखिलानां सत्त्वानां जन्तूनां निकेततया तथाविधसंबन्धानुसन्धानेन ये तव त्वां परिचरन्ति, त इतएव निर्ऋतेः मृत्योः शिरः अविगणय्य अनादरेण पदा पादेन आक्रमन्ति आक्रामन्ति, अविबुधान् अज्ञानपि पशूनिव परिवयसे कृपया रक्षसि गिरा उपदेशेनानादिना रक्षसीत्यर्थः पुनन्ति लोकामिति शेषः, ये विमुखाः ते न पुनन्तीत्यर्थः, यद्वा—ये पुनः विमुखाः अभक्ताः तान् गिरा वाचा पशूनिव विबुधान् विदुषोऽपि परिवयसे बध्नासि, कुतः ? त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति पवित्रयन्ति, आत्मानमन्यानपीति शेषः, नेतरे, तथाच श्रुतिः—"तस्य वाक्तन्त्रीर्नामानि दामानि तस्येदं वाचा तन्त्या नामभिर्दामभिस्सर्वं सितम्" इति, "तपन्तु तापैः प्रपतन्तु पर्वतानटन्तु तीर्थानि पठन्तु चागमान्। यजन्तु यागैर्विविशन्तु योगैर्हरिं विना नैव मृतिं तरन्ति" ॥

वी ॥ ननु सर्वकारणत्वान्मदनन्यत्वेनाभिमृशन्त एव मृत्योश्शिरः पादेनाक्रामन्तीति सत्यं, यदि कारणत्वोपास्यत्वनियतसार्वज्ञ्यसर्वशक्तित्वपरत्वादिगुणपौष्कल्यं स्यादित्यपेक्षायां तत्पौष्कल्यमाहुः—त्वमिति ॥ अरं शीघ्रं सङ्कल्पमात्रेण करोतीत्यरकरस्सङ्कल्पमात्रपरिकॢप्तविश्वः जगत्सर्गोपादकसङ्कल्पात्मकज्ञानाश्रय इति यावत् । अनेन सार्वज्ञ्यं फलितं, त्वमकरण इति पाठान्तरं, तदा करणायत्तज्ञानरहितः, "पश्यत्यच-

१. शमदामजया. मु.भा-प्र-पा ॥

**वर्षभुजोऽखिलक्षितिपतेरिवविश्वसृजोविदधतियत्रयेत्वधिकृताभवतश्चकिताः॥ २९**
**स्थिरचरजातयस्स्युरजयोत्थनिमित्तयुजोविहरउदीक्षयायदिपरस्यविमुक्ततत: ।**

क्षुस्स शृणोत्यकर्णः'' ''न तस्य कार्यं करणं च विद्यते'' इतिहि श्रुतिः, कार्यं शरीरं करणमिन्द्रियं च न विद्यते, प्राकृतशरीरेन्द्रियतदायत्तज्ञानरहितः नित्यनिरुपाधिकसार्वज्ञ्याश्रय इति तदर्थः,सार्वज्ञ्यस्य निरुपाधिकत्वस्फोरणाय स्वराडित्युक्तम्,स्वराट् स्वतन्त्रः अकर्मवश्यः, कर्मवश्यानां प्रेरकश्च स्वातन्त्र्यस्य सप्रतियोगिकत्वात्, अखिलकारकशक्तिधरः निमित्तोपादानकारणसम्प्रदानापादानाधिकरणाद्यात्मकानि कारकाणि तच्छक्तीश्च धरतीति तथा सकलकारकतच्छक्तिनिर्वाहक इत्यर्थः, अथ परत्वमाहुः— तवेत्यादिना । अजया अजाशब्दाभिधया प्रकृत्या सहिता इति शेषः, प्रकृतिपरतन्त्राः अनिमिषा देवाः वायुसूर्याग्नीन्द्रादयः विश्वसृजः प्रजापतयश्च येये यत्रयत्र व्यापारे अधिकृतास्ते सर्वे भवतश्चकिताः भीतास्सन्तः तव बलिं स्वस्वाधिकारानुवर्तनात्मिकां पूजाम् उद्वहन्ति विदधति, समदन्ति त्वया दत्तान् भोगाननुभवन्तिच, यथा वर्षभुजो, भारतादिवर्षभोक्तारः अखिलक्षितिपतेस्सार्वभौमस्य बलिं विदधति, तद्वत्. अत्र ''भीषाऽस्माद्वातः पवते।भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च।मृत्युर्धावति पञ्चमः'' इति, ''भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः'' ''यदिदं किंच जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति'' इति श्रुत्यर्थोऽनुसन्धेयः, प्राणशब्दनिर्दिष्टे परमात्मनि स्थितानां सर्वेषां ततो निस्सृतानां तस्मात्संजातमहाभयनिमित्तमेजनं कम्पनमस्ति, तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात् कृत्स्नं जगत्कम्पत इति तदर्थः, महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा ॥ २९ ॥

मु ॥ भगवतः सर्वप्रशास्तृत्वमुच्यते—त्वमरकर इति ॥ अरं शीघ्रं सङ्कल्पमात्रेण करोतीत्यरकरः स्वराट् स्वतन्त्रः अखिलकारकशक्तिधरः निमित्तोपादानादिसर्वकारकशक्तिधरः अजया अजाशब्दाभिहितया प्रकृत्या परतन्त्राः अनिमिषाः देवाः तव शमदां दुःखशमप्रदां बलिं पूजाम् उद्वहन्ति कुर्वन्तीत्यर्थः, वर्षभुजः वर्षभोक्तारः अखिलक्षितिपतेरिव चक्रवर्तिन इवेत्यर्थः, विश्वसृजः प्रजापत्यादयो देवाः यत्र पदे ये अधिकृताः ते भगवदाज्ञाभीताः बलिमुद्वहन्तीत्यन्वयः, पाठान्तरे — त्वम् अकरणः करणायत्तप्रवृत्तिरहित एव अखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारणानि इन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा, कुतः? स्वराट्, अतस्तव बलिम् उद्वहन्ति पूजां कुर्वन्ति, अजया अविद्यया सहिताः तयावृता इत्यर्थः, अनिमिषा देवा इन्द्रादयः तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि मनुष्यैर्दत्तं हव्यकव्यादिकं बलिम् उद्वहन्ति, तद्वदिति, कथं बलिं हरन्ति ? तदाह - विदधति यत्र ये त्वयि कृता भवतश्चकिताइति । त्वत्तो भीतास्सन्तो यस्मिन् कर्मणि ये नियुक्ताः ते तत् कुर्वन्ति, तदाज्ञापालनमेव बलिहरणमित्यर्थः,तथाच श्रुतिः— ''भीषास्माद्वातः पवते'' इत्यादिः॥

बी॥इत्थं कल्याणगुणपौष्कल्यमुक्तं, तर्हि किं हेया अपि गुणास्सन्तीत्यपेक्षायां ते न सन्तीति वदन्त्यः कथमवर्जनीयप्रकृतिसंबन्धनिवृत्तिरित्यपेक्षायां हेयप्रत्यनीकभगवं-

नहिपरमस्यकश्चिदपरोनपरश्चभवेद्वियतइवापदस्यतवशून्यतुलांदधतः॥ ३०

त्कटाक्षादेवेत्याहुः-स्थिरेति॥स्थावरजङ्गमसंस्थानास्सर्वे प्राणिनः अजयोत्थनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तशरीरयुक्तास्स्युः, सर्वेषामजासंबन्धोऽवर्जनीय इति भावः, ततस्तत्र केषांचिदेवंभूतानां विरहो यदि कदाचित्प्रकृतिमोक्षस्संभवति चेत्परस्य तव उदीक्षया कटाक्षादेव मोक्षस्स्यादित्यर्थः,उपायनिष्पत्तिस्त्वत्कटाक्षमूलैवेति भावः,नन्ववर्जनीयप्रकृतिसंबन्धेषु कांश्चित्ततस्त्याजयन्नहं किं वैषम्यनैर्घृण्यादिहेयगुण इत्यतस्संबोधयन्ति—विमुक्तेति। हेयाद्विशेषेण मुक्त हेयप्रतिभटेत्यर्थः, एतदेव विशदीकुर्वन्ति—नहीति। परमस्य परः उत्कृष्टः कारुणिकः मा न विद्यते यस्मात्तस्य परमकारुणिकस्य तव कश्चिदपरः करुणाविषयः परस्तदविषयश्च नास्ति सर्वात्मनां शरीरभूतत्वादरक्षणीयो नास्ति. अतस्सर्वरक्षकस्त्वम्, अतो न वैषम्यादिहेयसंभावनाऽपि, तथाऽपि व्याजमात्रावलम्बित्वान्न सर्वान्मोचयसीति भावः, न केवलं वैषम्यनैर्घृण्यरूपहेयाभाव एव, अपितु सर्वे हेयगुणा न सन्तीत्यभिप्रायेण सदृष्टान्तं विशिंषन्ति—वियतइत्यादिना। वियत इव आकाशस्येव अपदस्यास्थानस्य हेयानाश्रयस्य यथा सर्वत्र व्याप्य स्थितस्याप्याकाशस्य व्याप्यगतदोषानाश्रयत्वं, तद्वद्धेयानाश्रयस्येत्यर्थः, अत एव शून्यतुलां शून्योपमां दधतः सर्वव्यापिनोऽपि व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुलस्येत्यर्थः, विहर उदीक्षयेति पाठान्तरम्, तदाऽयमर्थः,—ननु यद्यहमकरणस्तर्हि जगत्स्रष्टृत्वाद्यनुपपत्तिः, स्वराजो जगद्व्यापारानुपपत्तिश्च, सकरणानां कर्मवश्यानां चैव कर्तृत्वव्यापारवत्त्वादिदर्शनादित्यत आहुः—स्थिरेति। यदि यदा विहरः विहारः, चिक्रीडिषोदेतीत्यर्थः. तदा परस्य प्रकृतिपुरुषाभ्यां विलक्षणस्य तव उदीक्षया "बहु स्याम्" इत्युक्तसंङ्कल्पमात्रेणैव अजायाः प्रकृतेस्सकाशादुत्थान्युदितानि निमित्तानि देहनिमित्तानि बुद्धीन्द्रियादीनि तैर्युज्यन्त इति तथा. स्थिरचरजातयः स्थावरजङ्गमसंस्थानास्सर्वे प्राणिनस्स्युः. उदीक्षयेत्यनेन करणायत्तकर्तृत्वव्युदासः, विहर इत्यनेन कर्मायत्तव्यापारवत्त्वव्युदासः, अतएव जगत्सर्गरूपव्यापारस्य जीवव्यापारवत्सुखदुःखनिमित्तार्थत्वव्युदासश्च फलितः, तत्र हेतुत्वेन संबोधयन्ति—विमुक्तेति। अस्य यथोक्त एवार्थः, जीवानां त्वसर्वज्ञत्वासर्वशक्तित्वासत्यसङ्कल्पत्वादिहेयास्पदत्वान्न सङ्कल्पमात्रेण घटादिकर्तृत्वमिति भावः. कस्तर्हि ममोदीक्षितेत्यत आहुः—ततः यत एवं ततः परमस्य पर्वोत्कृष्टस्य परः पूर्वभावी उदीक्षिता नास्ति, परमकारणत्वादिति भावः, अतएवापरः अकार्यभूतः कश्चिदपि नास्ति, सर्वस्य त्वत्कार्यत्वादिति भावः,यद्वा अपरः अन्यः अशरीरभूतः कश्चिदपि नास्ति, सर्वस्य त्वदात्मकत्वादिति भावः, तर्हि व्याप्यगतदोषप्रसक्तिरित्यतस्सदृष्टान्तं विशिंषन्ति—वियतइवेत्यादि। यथोक्त एवार्थः॥ ३० ॥

मु ॥ सर्वचेतनैरवर्जनीयसंबन्धविशेषवत्तया हेयप्रत्यनीकतया च तव कटाक्षादेव मोक्ष इत्याह—स्थिरचरेति ॥ स्थावरजङ्गमसंस्थानास्सर्वे प्राणिनः अजयोत्थनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तशरीरयुक्ताः स्युः, ततः प्रकृतेः विरहो यदि कदाचित् प्रकृतिमोक्षः संभवति चेत् परस्य तवोदीक्षया त्वत्कटाक्षेणेत्यर्थः, ततो विमुक्त प्रकृतिहेयात् विशेषण मुक्त, मोक्षप्रदानहेतुत्वमाह—नहि तवापरोऽस्तीति । सर्वात्मनां

अपरिमिताध्रुवास्तनुभृतोयदिसर्वगतास्तर्हिनशास्यतेतिनियमोध्रुवनेतरथा ।

त्वच्छरीरभूतत्वात् त्वदन्यो नास्ति, अतः सर्वरक्षकस्त्वमित्यर्थः, क्वेदृशस्य तवेत्यत्राह—परस्येति । परत्वं कालपूर्वत्वम्. अपरत्वं पश्चाद्भावित्वम्, परो मा अस्येति परमः, अतः स्वयं कश्चिदपरः पश्चाद्भावी नभवतीत्यर्थः, अत्र—यस्य एवमकालकाल्यत्वात् जन्माद्यवस्थात्रयरहितस्य सर्वव्यापिनो व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुल्यस्येत्यर्थः, यद्वा—तदेवं करणप्रवर्तकमीश्वरं करणपरतन्त्रा नरा भजन्त इत्युक्तम्, न केवलमिदमेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वं वदन्ति "यदाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानोऽप्युच्चरन्ति" इत्याद्याः श्रुतय इत्याह—स्थिरेति । हे विमुक्त नित्यमुक्त यदि यदा ते तव अजया विहारः क्रीडा भवति तदा स्थिरतरजातयः स्थिराश्चराश्च जात्यालिङ्गितदेहा येषां ते जीवाः स्युः भवेयुः,कथंभूतस्य! ततः अजातः परस्य. कथं विहारः!उदीक्षया, ननु मयि लीनानां कथं जन्म स्यात्! तत्राह—उत्थनिमित्तयुजइति । ईक्षयैवोत्थानि उत्थितानि आविर्भूतानि निमित्तानि कर्माणि तैर्युज्यन्त इति ते तथा,ननु किं निमित्तोत्थानेन? मदिच्छयैव भवतु, नः त्वयि वैषम्याभावात् विषमसृष्टेरयोगादित्यादि—परमस्येति । तव परमस्य उत्तमस्य परमकारुणिकस्य वियत इव आकाशसदृशस्य समस्येत्यर्थः, कश्चित् अपरः स्वीयः परः अस्वीयश्च न भवेत् न संभवतीत्यर्थः. "असद्वा इदमग्र आसीत् । ततो वै सदजायत" इत्यादिना शून्यपूर्वकत्वमेव प्रतीयते, तदर्थं विशिनष्टि—शून्यतुलां दधतः शून्यं साम्यं भजतः, तदेव दर्शयितुं पुनर्विशिनष्टि—अपदस्य वाङ्मनसयोरगोचरस्येत्यर्थः, अयं भावः—अङ्कुरोत्पत्तौ बीजमाकाशश्च कारणम्, बीजाभावे अङ्कुरानुदयात्, अवकाशाभावे मूर्तद्रव्यानुदयाच्च, तत्र बीजमसाधारणं कारणम्, प्रतिकार्यं नियतत्वात्, आकाशस्तु साधारणम्, एवं विचित्रजगदुत्पत्तौ साधारणं कारणं, ब्रह्मतु असाधारणम्, अतो न तस्य वैषम्यं नैर्घृण्यं वा, तदुक्तं "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति, विहर इत्यनेनाप्तकामस्यापि परस्य राजादिवद्विश्वसर्गादौ क्रीडात्मिका प्रवृत्तिरुपपद्यत इति दर्शितम्, तदप्युक्तं"लोकवत्तु लीला कैवल्यम्" इति ॥ ३० ॥

वी॥ 'स्थिरचरजातयस्स्युः'इत्यनेन चराचरात्मकस्थूलसूक्ष्मशरीरान्तःप्रवेशयोग्यं जीवानां स्वाभाविकमणुस्वरूपत्वं सूचितं, तद्विरुद्धं जीवस्वरूपविभुत्ववादं दूषयन्ति—अपरिमिताइति ॥ हे ध्रुव तनुभृतो जीवाः अपरिमिता असङ्ख्येयाः ध्रुवाः नित्याश्च ते यदि सर्वगताः, तर्हि न शास्यता. सर्वेषां तुल्यत्वात्परमात्मना जीवान्तरेण वा शास्यता नियाम्यता नोपपद्यते, इतीत्थं नियमः उत्क्रान्तिगत्यागत्यादिविषयः नित्यं श्रूयमाणो नोपपद्यते, उत्क्रान्तिस्तावच्छ्रूयते—"तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः" इति, गतिरपि "येवैकेचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति, आगतिरपि "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति, इतरथा अणुत्वेतु शास्यतानियमादय उपपद्यन्त इत्यर्थः, यद्यपि शरीर-

अजनिचयन्मयंतदविमुच्यनियन्तृभवेत्सममनुजानतांयदमतंमतदुष्टतया ॥ ३१
नघटतउद्भवःप्रकृतिपूरुषयोरजयोरुभययुजाभवन्त्यसुभृतोजलबुद्बुदवत् ।

वियोगरूपत्वेनोत्क्रान्तिश्शरीरस्थितस्याप्यात्मनः कथंचिदुपपद्यते, गत्यागती तु न कथंचिदुपपद्येते, अतस्ते स्वात्मनैव संपाद्ये इत्यभिप्रायेण नियमशब्दः प्रयुक्तः, तथाच शारीरकं सूत्रं "स्वात्मनाचोत्तरयोः" इति, चशब्दोऽवधारणे, तनुभृत इत्यनेन सर्वेषां सर्वशरीरसंबन्धाविशेषात्सर्वशरीरानुचरपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलदानायोगाच्छासनं नोपपद्यत इत्यात्मविभुत्ववादेऽनुपपत्तिरुद्घाटिता, अपरिमिता इत्यनेन जीवैक्यवादव्युदासः, तत्र बन्धमोक्षशिष्याचार्यज्ञत्वाज्ञत्वादिव्यवस्थानुपपत्तिदूषणमभिप्रेतं, नन्वणुत्वपक्षेऽपि जीवानां परमात्मशास्यता किं भृत्यानां राजशास्यतेवेत्यपेक्षायामन्तःप्रविश्यैवेत्याह—अजनिचेति।यन्मयमजनि व्यापकेन येन प्रचुरं जगदजनि जातं तद्ब्रह्म अविमुच्य अन्तस्स्थित्वैव नियन्तृ इति सम्यगजानतां यन्मतं तस्य मतस्य दुष्टत्वात् अमतम् अनभिमतं प्रामाणिकानामिति शेषः, 'सममनुजाताम्' इति पाठान्तरं, तदा समशब्दः सर्वपर्यायः, समं सर्वं तत् जगत् अविमुच्य अन्तः स्थित्वैव नियन्तृ इत्यत्यनुजानतां प्रामाणिकानां यदमतमनभिमतं तदनादरणीयमित्यध्याहारः, कुतः? तस्य मतस्य दुष्टतया प्रमाणविरुद्धतयेत्यर्थः, जगदजनीति प्रकृतिपुरुषात्मकजगत उत्पत्तिरुक्ता ॥ ३१ ॥

मु ॥ अथ जीवानामणुत्वं परस्य तदन्तः प्रविश्य नियन्तृत्वं चाह—अपरिमिता असंख्येयाः तनुभृतः जीवाः सर्वगताश्चेत् ध्रुवं स्युः अस्पन्दाः स्युः, उत्क्रान्तिगत्यादिश्रुतिविरोधः स्यात्, तनुभृत इति सर्वेषां शरीरसंबन्धेन सर्वशरीरानुचरितपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलदानायोगात् शासनं नोपपद्यते, नियमः नियन्तृत्वं च, इतरथा असर्वगतत्वे अध्रुवता स्पन्दनवत्त्वमुत्क्रान्तिगत्यादिश्रुतिश्चोपपद्यत इत्यर्थः, शासनोपपत्तिः स्फुटत्वात् अनभिहिता, यद्वा—इतरथा शासनीयत्वे अध्रुवता स्पन्दवत्त्वमणुत्वं च स्वीकार्यमित्यर्थः, प्रशासनंचान्तःप्रविश्येत्याह—अजनिचेति । जगत् यन्मयमजनि व्यापकेन येन प्रचुरं जगदजनि, तत् ब्रह्म अविमुच्य नियाम्यमविमुच्य अन्तःस्थितत्वेन नियन्तृ भवेदिति समजानतां सम्यगजानतां यन्मतं तस्य दुष्टतया दुष्टत्वात् अमतम् अनभिमतमित्यर्थः ॥ ३१ ॥

वी॥ ननु प्रकृतिपुरुषयोर्नित्ययोरुत्पत्त्यनुपपत्तिः !अत आहुः—नघटतइति॥ यद्यप्यजत्वात्प्रकृतेः पुरुषस्य च नोत्पत्तिः तथाऽपि विद्यमानानामेवाप्यावयवानां वायुप्रेरितानां परस्परसंयोगाज्जले बुद्बुदोत्पत्तिवत् उभययुजा प्रकृतिपुरुषयोस्संयोगेन असुहृदः प्राणिनः विविधैर्नामभिः रूपैश्चोपलक्षितास्त्वय्याधारभूते भवन्ति,देवमनुष्यादिशरीरविशिष्टरूपेणोत्पत्तिर्युज्यत इत्यर्थः,ततस्त इमे असुभृतः परमे त्वयि निलिल्युः प्रलयदशायां नामरूपे विहाय त्वय्यविभक्ततामापुरित्यर्थः,यथा सरितोऽर्णवे यथाच मधुनि माक्षिके अशेषाः रसाः मकरन्दास्तद्वत्. द्रव्यस्योत्तरोत्तरसंस्थानयोगोहि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थावस्थिततूत्पत्तिः, अतः अवस्थानामनित्यत्वेऽप्यवस्थाश्रयस्य द्रव्यस्य नित्यत्वात्तस्य पूर्वोत्तरावस्थात्यागोपादानात्मकविनाशोत्पत्त्योरविरोध इति भावः, अत्रार्णवादिस्थानीयं चिदचिद्विशिष्टं ब्रह्म ॥ ३२ ॥

त्वयितइमेततोविविधनामगुणैःपरमेसरितइवार्णवेमधुनिलिल्युरशेषरसाः ॥ ३२
नृषुतवमायया भ्रममभीष्ववगत्यभृशंत्वयिसुधियोभिवेदधतिभावमनुप्रभवम् ।
कथमनुवर्ततांभवभयंतवयद्भ्रुकुटिःसृजतिमुहुस्त्रिणेमि[1]रभवच्छरणेषुभयम् ॥ ३३
विजितहृषीकवायुभिरदान्तमनस्तुरगंयइहयतन्तियन्तुमतिलोलमुपायखिदः ।

---

मु ॥ एवं नियमनानुपपत्तिः परिहृता, अथ नित्यस्योत्पत्त्यनुपपत्तिं परिहरति— न घटत इति ॥ यद्यजत्वात् असुभृतो भवन्ति देवमनुष्यादिशरीरविशिष्टरूपेण उत्पत्तिर्युज्यत इत्यर्थः,तर्हि कथं ब्रह्मणः करणत्वमित्यत्राह—त्वयीति।विविधनामगुणाः विविधनामरूपभाजस्सर्वे पदार्थाः ततः परमे सर्वान्तरात्मनि त्वयि वर्तन्ते,अर्णवं सरित इव मधुनि सरघासंपादितमधुनि अशेषरसाइव तत्तत्पुष्पगतमकरन्दलेशा इव त्वयि प्रलयकाले विलिल्युरित्यर्थः, चिदचिच्छरीरकब्रह्मस्थाने अर्णवो मधु च ॥ ३२ ॥

वी ॥ तर्हि उत्पत्तिविनाशाद्यात्मकसंसारनिवृत्त्यनुवृत्त्योः किं निदानमित्यपेक्षायां त्वद्भक्तितदभावावेवेत्याहुः—नृष्विति ॥ अनु पृष्ठतः प्रभवः संसारो यस्मात्तम् अमीषु नृषु तव मायया त्वदीयया प्रकृत्या भ्रमं देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपम् अवमृश्य अयमेव संसृतिहेतुरिति निश्चित्य सुधियः त्वयि भृशं भावं भक्तिं दधति, अनुवर्ततां त्वां भजतां भवभयं संसृतिभयं कथं भवेत्?न भवेदेवेत्यर्थः,कुतः? यद्यस्माद्भवच्छरणेषु न भवान् शरणं येषां तेष्वेव तव भ्रुकुटिः भ्रूभङ्गरूपः त्रिणेमिः तिस्रो नेमयः शीतोष्णवर्षकालात्मिकाः यस्य सः, संवत्सरात्मकः कालः इत्यर्थः, भयं संसृतिभयं सृजति,अभवच्चरणेष्विति पाठे न भवतः चरणं येषां तेषु उपायोपेयभावेन भवतश्चरणमनाश्रितेष्वित्यर्थः ॥ ३३ ॥

मु ॥ एवं जगत्कारणे त्वयि भक्तिमतां न भयमित्याह—अमीषु नृषु तव मायया त्वदीयया प्रकृत्या भ्रमम् अहङ्कारममकाररूपम् अवगत्य ज्ञात्वा सुधियः सम्यग्ज्ञानिनः अभवे संसारनिवर्तके त्वयि भावं भक्तिम् अनुप्रभवम् अनुक्षणं प्रभवो यथा तथा दधति विदधति कुर्वन्तीति यावत् , एवं तव त्वाम् अनुवर्तताम् अनुवर्तमानानां भवात् संसारात् भयं कथं भवेत् ? त्रिणेमिः कालः त्रीणि चातुर्मास्यानि न्यूनाधिकसमानि दिनानि वा नेमयो यस्य सः संवत्सरात्मककाल इत्यर्थः, स एव भ्रुकुटिः भ्रुकुटिस्थानीयः परस्य कोपजनितभ्रूभङ्गरूपः यत् यस्मात् अभवच्चरणेषु त्वच्चरणानाश्रितेषु मुहुर्भयं सृजति, न त्वदाश्रितेष्वित्यर्थः ॥ ३३ ॥

वी ॥ कुतस्तर्हि मयि भाव इत्यपेक्षायां मनोनिग्रहादेव वैराग्यात्मकात्, सच गुरूपासनादेव, नतूपायान्तरेभ्य इत्यभिप्रेत्याहुः—विजितेति ॥ अतिचञ्चलम् अतएव विजितानि हृषीकाणीन्द्रियाणि वायवः प्राणाश्च यैस्तैरप्यदान्तं दुर्निग्रहं मन एव तुरगमश्वं ये यन्तुं नियन्तुं गुरोश्चरणं विहाय उपायान्तरेषु क्लिश्यन्तो यतन्ते ते व्यसनशतान्विताः बहुव्यसनाकुलाः इह संसारसागरे आसजन्ति सङ्गच्छन्ते सन्निविशन्ते दुःखमेव

---

१. अभवच्चरणेषु. मु-भा-प्र-पा ॥

व्यसनशतान्विताःसमपहायगुरोश्चरणंवणिजइवाविशन्त्यकृतकर्णधराजलधौ॥
स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयिसतिकिंनृणांश्रयतआत्मनिसर्वरसे।
इतिसदजानतांमिथुनतोरतयेचरतांसुखयतिकोन्विहस्वपिहितेस्वनिरस्तभगे॥ ३५

प्राप्नुवन्तीत्यर्थः, हे अज अकृतकर्णधराः अलब्धकर्णधराः वणिजः यथा जलधौ मज्जन्ति, तद्वत् ॥ ३४ ॥

मु ॥ आचार्यसेवाविरहिणामुक्तभगवद्भजनालाभमाह—अजितेति ॥ ये जनाः अजितानि अनिगृहीतानि हृषीकाणि इन्द्रियाणि वायवः प्राणादयश्च यैस्तैः अतिलोलम् अदान्तमनस्तुरगम् अदान्तम् अदमितं मन एव तुरगं दुर्मदत्वसाम्यात् यन्तुं नियन्तुं यतन्ति यतन्ते, गुरोश्चरणं समपहाय अनाश्रित्य उपायेषु खिद्यन्ते क्लिश्यन्तीत्युपायखिदः सन्तः व्यसनशतान्विताः बहुव्यसनाकुलाः इह संसारसमुद्रे सन्ति तिष्ठन्ति दुःखमेव प्राप्नुवन्तीत्यर्थः, हे अज अकृतकर्णधराः अस्वीकृतनाविका वणिज इवेति ॥ ३४ ॥

वी ॥ ननु मयि भृशं भावं विदधतु, ततः किमित्यपेक्षायां निरतिशयानन्दजलधिमग्नानां वैषयिकसुखान्तरनैरपेक्ष्यम्, इतरेषां तु सुखं विषमिश्रपयःपानतुल्यमित्यभिप्रेत्याहुः—स्वजनेति ॥ सर्वरसे सर्वविधसुखमये आत्मनि च त्वयि "रसो वै सः। रसं ह्येवायं लब्ध्वाऽनन्दीभवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्" इत्युक्तरीत्या निरतिशयसुखस्वरूपे तदावहेच प्रियतमे त्वयि सति विद्यमाने नृणां श्रयतः नृणां मध्ये कस्यचिदुक्तविधं त्वां भजतः पुंसः स्वजनादिभिः किं न किंचिदपि सुखमित्यर्थः, आत्मा देहः धाम गृहं धरा भूमिः असुः प्राणः, रथशब्दो वाहनोपलक्षकः, इतीत्थं सत् निरतिशयपुरुषार्थभूतत्वत्स्वरूपमजानताम् अत एव रतये सुखार्थं मिथुनतश्चरतां मिथुनीभूय वर्तमानानां स्वपिहिते स्वप्रकृतिसंबन्धतिरोहिते अत एव स्वनिरस्तभगे स्वः स्वासाधारणः निरस्तो भगो ज्ञानैश्वर्यादिर्यस्य तस्मिन् स्वरूपे सति इह लोके को नु अर्थकामेषु सुखयति अर्थकामान्यतरो न कोऽपि सुखयतीत्यर्थः, 'स्वविहतिस्वनिरस्तभगे' इति पाठान्तरम्, तदा स्वविहतिः स्वयाथात्म्यानुभवविघातः तेन स्वनिरस्तस्वाभाविकज्ञानैश्वर्ये स्वस्वरूपे सतीत्यर्थः ॥ ३५ ॥

मु ॥ भगवत्प्रवणानां सुखान्तरनैरपेक्ष्यं भगवद्विमुखानां सुखस्य दुर्लभत्वं चाह—स्वजनेति—स्वजना ज्ञातयः, आत्मा देहः, दाराः पत्नी, धाम गृहम्, धरा वृत्तिकरभूमिः, असवः प्राणाः, रथशब्दोऽश्वाद्युपलक्षणम्, आत्मनि धारके त्वयि श्रयतः भवत्पदाम्बुजं सेवमानस्य पुरुषस्य सर्वरसे सर्वसुखमये सति नृणां स्वजनादिभिः किं न कोऽपीत्यर्थः, इति सदजानताम् अर्थतत्त्वमजानतां मिथुनतो भार्यया सह रतये सुखाय चरतां स्वरूपे स्वपिहिते प्रकृतिसंबन्धतिरोहिते अतएव निरस्तभगे ज्ञानैश्वर्यादिहीने स्वरूपे सति इह संसारे स्वजनादिषु को नु सुखयतीत्यन्वयः, 'स्वविहत' इति पाठे स्वत एव नश्वरे स्वत एव निरस्तैश्वर्ये च सदजानतां चरतामिति द्वयं कर्मणि षष्ठी, अजानतश्च जनान् को नु सुखयतीत्यर्थः, 'स्वपिहितस्वनिरस्त' इति प्रथमान्तपाठे कोन्वित्यस्य विशेषणम् ॥ ३५ ॥

भुविपुरुपुण्यतीर्थसदनान्यृषयोविमदास्तउतभवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः।
दधतिसकृन्मनस्त्वयिय आत्मनिनित्यसुखेनपुनरुपासतेपुरुषसारहरावसथान् ॥
सतइदमुत्थितंसदितिचेन्नतुतर्कहतंव्यभिचरतिक्वचक्वचमृषानतथोभययुक् ।
व्यवहृतयेविकल्पइषितोऽन्धपरंपरयाभ्रमयतिभारतीतउरुवृत्तिभिरुक्थजडान् ॥

---

वी ॥ नन्वित्थमात्मानं सर्वरसं ये मामाश्रयन्ते ते किं मिथुनतो न चरन्तीत्याहुः—भुवीति॥ ये त्वयि नित्यसुखस्वरूपे आत्मनि च सकृदपि मनो दधति, ते पुनः पुरुषाणां सारं ज्ञानवैराग्यादिरूपं हरन्तीति तथा तानावसथान् गृहान्नोपासते न सेवन्ते न गृहेषु मिथुनतश्चरन्तीत्यर्थः,अपितु भुवि पृथ्व्यां पुण्यानि तीर्थानि गङ्गादीनि सदनानि क्षेत्राणिच उपासते, तीर्थान्यपि तीर्थीकर्तुं पुण्यक्षेत्राण्यपि निरतिशयपुण्यावहानि कर्तुं तान्युपासत इति भावः, तत्र हेतुत्वेन तान् विशिंषन्ति—ऋषयः द्रष्टारः स्वात्मपरमात्मयाथात्म्यविद इत्यर्थः, अत एव विमदाः देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपमदरहिताः, उत अपिच भवतः पदाम्बुजं हृदि येषां ते भवतः पदाम्बुजे हृत् येषां त इति वा अतएवाघं भिन्दन्तीति तथा तान्यङ्घ्रिजलानि येषां ते, अनेन भगवद्भक्तानां पादस्पर्शोऽपि पावन इत्यभिप्रेतम्, आत्मनीत्यनेन कृत्स्नस्य चिदचिदात्मकप्रपञ्चरूपकार्यस्य तच्छरीरत्वम् अत एव परमार्थत्वं चाभिप्रेतं, नहि मिथ्याभूतं किंचित्कस्यचिच्छरीरभूतं दृष्टमित्यर्थः ॥ ३६ ॥

मु ॥ भगवद्भक्तानां प्रभावमाह—भुवीति ॥ पुरुपुण्यतीर्थसदनानि उपासत इत्याकृष्यान्वयः, विमदाः अपगतमदकामाद्याः ऋषयः भवत्पदाम्बुजहृदः भवत्पदाम्बुजन्यस्तहृदयाः उत अपि अघभिदङ्घ्रिजलाः अवहितस्वाङ्घ्रिजलाः, भगवद्भक्तानां पादोदकमपि पावनमित्यर्थः, ये आत्मनि धारके नित्यसुखे नित्यानन्दनिधौ त्वयि सकृत् मनो दधति, ते पुरुषसारहरावसथान् पुरुषाणां सारो ज्ञानवैराग्यादि तदपहारकान् गृहानित्यर्थः, पुनर्नोपासते ॥ ३६ ॥

वी ॥ इत्थं कार्यस्य सत्यत्वाभ्युपगममभिप्रेत्य अथ यः कार्यसत्ताप्रतिक्षेपेण कार्यमिथ्यात्ववादः तं चोद्यमुखेन प्रस्तुत्य प्रतिक्षिपन्ति—सतइति ॥ सत इत्यादिना तर्कहतमित्यन्तेन कार्यमिथ्यात्ववादिमतानुवादः, व्यभिचरतीत्यादिना तत्प्रतिक्षेप इति विभागः,तथाहि—सतः परमार्थभूतात्परस्माद्ब्रह्मणस्सकाशादुत्पन्नमिदं जगत् सत् परमार्थभूतं सत्यमिति यावत्, नतु नैतद्युक्तमित्यर्थः, कुतः? यतस्तर्कहतमिति चेत् यद्यपि यद्यस्मादुत्पन्नं तत्तदात्मकमेव, यथा मृद्धिरण्यादेरुत्पन्नं घटमकुटादि कार्यं, तथाऽपि चेतनात्पुरुषाज्जातानां केशदन्तनखलोम्नामचेतनत्वदर्शनादचेतनाद्गोमयाज्जातानां वृश्चिकानां चेतनत्वदर्शनाच्च कार्यकारणयोस्सालक्षण्यव्याप्त्यभावात् परमार्थस्वप्नादपरमार्थगजतुरगादीनां तथापरमार्थशुक्तिशकलादपरमार्थरजतस्यचोत्पत्तिदर्शनात्, एतदुत्पत्तिवैयर्थ्याच्च कार्यं सदित्येतत्तर्कहतम्, अतः कार्यं मिथ्यैवेति चेदित्यर्थः तर्कश्चात्र युक्तिः, का पुनरत्र युक्तिरिति चेदुच्यते, मृद्द्रव्यमात्रस्यानुवर्तमानत्वं तदतिरिक्तस्यच व्यावर्तमानत्वं, रज्जुसर्पादिषु ह्यनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेस्सत्यता, व्यां-

वर्तमानस्य सर्पभूदलनाम्बुधारादेरसत्यता दृष्टा, तथा अनुवर्तमानमधिष्ठानभूतं मृद्-द्रव्यमेव सत्यं, व्यावर्तमानास्तु घटशरावादयः असत्यत्वभूताः, तथा निर्विशेषसन्मात्रात्सर्वाधिष्ठानभूताद्ब्रह्मणोऽन्यः अहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चः मिथ्या,कारणभूतं सन्मात्रं ब्रह्मैव सत्यं, किंच सत आत्मनो विनाशायोगादसतश्शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगो कार्यं सदसद्भ्यामनिर्वचनीयमिति गम्यते, अनिर्वचनीयंच शुक्तिकारजतादिवन्मृषैव, तस्यचानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धं,प्रतीयते हि प्रपञ्चः प्रत्यक्षेण "ऐतदात्म्यमिदं सर्वं तत्सत्यं" "नेह नानास्ति किंचन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति। यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिभिर्वेदान्तैर्बाध्यते चेति, 'ननु तर्कहतम्' इति पाठान्तरं, तदा ननु सत उत्पन्नमिदं सदिति चेत् तर्कहतमित्यन्वयः,इत्थमनूदितं कार्यमिथ्यात्वपक्षं प्रतिक्षिपन्ति-व्यभिचरतीत्यादिना। कार्यं सदित्ययमर्थः क्व व्यभिचरति? क्वेति काकुः, नक्वचिद्व्यभिचार इत्यर्थः, केशपुरुषादिष्वपि अचेतनांश एव कार्यकारणभावादिति भावः, तथाऽपि स्वप्नार्थे शुक्तिकारजतादौ मिथ्यात्वेन व्यभिचार इत्यत्राहुः--क्वमृषेति। क्व मृषा? नक्वचिदपि कार्यं मृषेत्यर्थः, स्वप्नार्थानामपीश्वरसृष्टत्वान्न मृषात्वं, शुक्तौ रजतसद्भावादन्यथाख्यानाद्वा न मृषात्वमित्यभिप्रायः,सत उत्पत्तिवैयर्थ्यं परिहरन्ति—नतथोभययुगिति। व्यभिचरतीत्यनुषङ्गः,क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थानदर्शनान्न व्यभिचरति,कार्यत्वकारणत्वरूपावस्थावदेव मृत्सुवर्णादिकं दृश्यते,अतस्सतोऽवस्थान्तरप्राप्तिस्सफलेत्यर्थः,विकल्पः घटशरावाद्यवस्थाभेदः,सच व्यवहृतये घटेन जलमाहरेत्यादिवाक्पूर्वकव्यवहारार्थम् इषितः इष्टः,यद्वा नन्वसच्चेन्न प्रतीयेत,सच्चेन्न बाध्येत,प्रतीयते बाध्यते च शुक्तिकारजतवत्प्रपञ्चरूपं कार्यम्,अतस्सदसद्भ्यामनिर्वचनीयं कार्यं मृषैवेत्यत आहुः—नतथोभययुगिति। तथा तथाभूतमनिर्वचनीयम्, उभययुक् सत्त्वविलक्षणत्वरूपधर्मद्वययोगि द्रव्यं स नास्त्येवेत्यर्थः, ननु शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयत इति कल्पनीयमिति चेन्न,तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वादन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारकवस्तुकल्पनायोगात्कल्प्यमानं हीदमनिर्वचनीयं न तदानीमनिर्वचनीयमिति प्रतीयते, अपितु परमार्थरजतमित्येव, अनिर्वचनीयमित्येव प्रतीतं चेद्भ्रान्तिबाधयोः प्रवृत्तेरप्यनुपपत्तिः,अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेस्तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेण भासत इति भवताभ्युपगन्तव्यं, किंच अनिर्वचनीयमपूर्वं रजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यं, न तावत्तत्प्रतीतिः, तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्, निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम्,अथेन्द्रियादिगतो दोषः? तन्न, तस्य पुरुषाश्रयत्वेनार्थगतकार्यस्योत्पादकत्वायोगात्, नापीन्द्रियाणि, तेषां ज्ञानकारणत्वात्, नापि दुष्टानीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव विशेषकरत्वात्,

अनादिमिथ्याज्ञानोपादानत्वमनवस्थादिदोषनिरस्तं, किञ्चापूर्वमनिर्वचनीयमिदं वस्तु: जातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते? नघटादिबुद्धिशब्दाभ्यां, रजतादिसादृश्यादितिचेत्तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्यातां. रजतत्वादिजातीयायोगादितिचेत्सापि किं परमार्थभूता उतापरमार्थभूता? नतावत्परमार्थभूता, तस्या अपरमार्थान्वयायोगात्, नाप्यपरमार्थभूता, परमार्थान्वयायोगात्, अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्च, यत्तुनरुक्तं—रज्ज्वादिवन्मृन्मात्रस्य कारणस्यानुवर्तमानत्वात्पारमार्थ्यं सर्पादीनामिव घटशरावादिकार्याणां मिथो व्यावर्तमानत्वादपारमार्थ्यम्, एवं सन्मात्रस्य ब्रह्मणोऽनुवर्तमानत्वात्पारमार्थ्यम्, अहंकारादिव्यवहारालम्बनास्सर्वे पदार्थाः मिथोव्यावर्तमानत्वादतएव बाधितत्वादपरमार्था इति. तत्तुच्छं—द्वयोः ज्ञानयोर्विरोधेहि बाध्यबाधकभावः, बाधितस्यैव व्यावृत्तिः, अत्र घटादिषु देशकालभेदेन विरोधएव नास्ति. यस्मिन्देशे यस्मिन्काले यस्य सद्भावः प्रतिपन्नः तस्मिन्देशे तस्मिन्काले तस्याभावः प्रतिपन्नश्चेद्विरोधाद्बलवतो बाधकत्वं, बाधितस्यच व्यावृत्तिः,देशान्तरकालान्तरसम्बन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः, अन्यत्र निवृत्तस्यान्यत्रवृत्तिर्वा कथमुच्यते? रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीतेर्विरोधे बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रं पारमार्थ्ये हेतुः, यस्त्वनुवर्तमानत्वात्परमार्थ इति तत्सिद्धमेवेति न साधनमर्हति, अतो न सन्मात्रमेव वस्तु, सत उत्पत्तिवैयर्थ्यं परिहरन्ति—व्यवहृतये विकल्प इषित इति। अस्य यथोक्त एवार्थः, अतस्सतोऽवस्थान्तरप्राप्तिस्सफलेत्यर्थः, ननु तर्कहतत्वाभावेऽपि 'नेह नाना''इत्यादिश्रुतिरेव कार्यमिथ्यात्वं प्रमापयतीत्यत आहुः-भ्रमयतीत्यादिना।ते तव भारती वाग्रूपा''नेह नाना''इत्यादिश्रुतिः उरुवृत्तिभिः उक्थजडान् अन्धपरंपरया भ्रमयतीति संबन्धः, उक्थजडाः कर्मजडाः, अनादिपापवासनादूषिताशेषशेमुषीकाः, तान्, अयं भावः—न केवलं कार्यमिथ्यात्वबोधनात्मिकैव ''नेह नाना'' इत्यादित्वद्भारत्या वृत्तिः, अपितु अब्रह्मात्मकस्वतन्त्रवस्तुनिषेधबोधनात्मिका, ब्रह्मस्वरूपे देवमनुष्यादिभेदनिषेधादिबोधनाद्यात्मिकाश्च बह्वयो वृत्तयस्सन्ति, एवं तदर्थबुभुत्सवोऽप्युक्थजडास्तद्विपरीताश्च, तत्र ये कर्मजडाः तान् प्रथमबुभुत्सुकुबुद्धिपरिकल्पितकार्यमिथ्यात्वकारणसत्यत्वपरत्वादिरूपबहुवृत्तिभिः प्रथमप्रतिपत्तृकुबुद्ध्यनुवर्तिनां कर्मजडानाम् अन्धपरंपरया कार्यमिथ्यात्वभ्रमं जनयति,औपनिषदपरपुरुषवरणीयताहेतुगुणविशेषविशिष्टानां तु ब्रह्मात्मकस्वतन्त्रवस्तुनिषेधादिविषयां प्रमितिं जनयतीति किमस्माभिर्विधेयमिति ॥ ३७ ॥

मु ॥ उक्तकार्यसत्ताप्रतिक्षेपेण कार्यमिथ्यात्ववादं चोद्यमुखेन प्रस्तुत्य प्रतिक्षिपति —सत इदमिति॥ सत उत्थितं सदिति तर्कहतं, सत इत्युत्पत्तिवैयर्थ्यादिति चोद्यम्. इदं ननुशब्देन सूच्यते, परिहरति— व्यभिचरतीति। यत्कार्यं तत्सदित्ययमर्थः व्यभिचरति न क्वचिदपि व्यभिचार इत्यर्थः, स्वाप्नार्थशुक्तिकारजतादौ व्यभिचार इत्यत्राह— क्वचिन्मृषेति। मृषा न क्वचित्कार्यं मृषा स्वाप्नार्थानामपि ईश्वरसृष्टत्वान्न मृषात्वं शुक्तौ रजतसद्भावान्न मृषात्वमित्यभिप्रायः, सत उत्पत्तिवैयर्थ्यं परिहरति—स

नयदिदमग्रआसनभविष्यदतोनिधनादनुमितमन्तरात्वयिविभातिमृषैकरसे।
अतउपमीयतेद्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः॥ ३८

तथोभययुगिति । व्यभिचरतीत्यनुषङ्गः, क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थानदर्शनं न व्यभिचरति, कार्यत्वकारणत्वरूपावस्थासु तदेव मृत्सुवर्णादिकं सर्वं दृश्यते, अतः सतोऽवस्थान्तरप्राप्तिः सफलेत्यर्थः. अवस्थाविकल्पश्च व्यवहृतये उदाहरणार्थम् इषितः इष्टः, कार्यमिथ्यात्वविषया तार्किकभारती अन्धपरम्परया गता उक्थजडान् कर्मपरान् उरुवृत्तिभिः न तत्त्वविदो भ्रमन्तीत्यर्थः, यद्वा—ते भारती उपनिषद्रूपा वाक् उरुवृत्तिभिः लक्षणादिबहुवृत्तिभिः उक्थजडान् अन्धपरंपरया भ्रमयति, नतु वेदान्तपारगतानित्यर्थः, उभययुगित्यन्तमयमर्थः—यदि सतः कारणात् पूर्वं सदेव कार्यमुत्पद्यते तर्हि कारकव्यापारवैयर्थ्यं, परिहरति—व्यवहितय इति । विकल्पः कार्यद्रव्यव्यवस्थाभेदः व्यवहृतये उदकाहरणादिव्यवहाराय इषितः इष्टः, कारकव्यापारस्य अवस्थान्तरापत्तिहेतुत्वान्न वैयर्थ्यमित्यर्थः, यदि कारणमेव कारकव्यापारेण अवस्थान्तरापन्नमित्युच्येत तर्हि ब्रह्मणोऽपि स्वरूपविकारप्रसङ्ग इत्याशङ्क्याह-अन्धेति। ते भारती "बहु स्याम्" इति सङ्कल्पपूर्वा वाक् बहुवृत्तिभिः देवमनुष्यादिरूपनानाविधव्यापारैः अन्धपरम्परया वेदान्तज्ञानविधुरान् भ्रमयति नतु वेदान्तपारगानित्यर्थः, अयं भावः —ब्रह्मणोऽपि विकारप्रसङ्गो नास्ति विशेषणांशगतत्वाद्विकाराणाम्. अतो विकारप्रसङ्गवचनं मूढभ्रामकमिति ॥ ३७ ॥

वी ॥ ननु "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्"इत्यादिमृदादिदृष्टान्तेषु मृदादिकारणानामेव"मृत्तिकेत्येव सत्यम्"इत्यादिभिस्सत्यत्वप्रतीतेर्विकाराणां नामधेयानांच वाचारम्भणमित्यनेन वागालम्बनं व्यवहारमात्रं न तु पारमार्थ्यमिति मिथ्यात्वप्रतिपादनाच्च दार्ष्टान्तिकेऽपि सन्मात्रस्य ब्रह्मणः पारमार्थ्यं कार्यस्यतु मिथ्यात्वमकामेनापि स्वीकार्यमित्याशङ्कायां मृत्पिण्डकार्यादिदृष्टान्तानां कार्यमिथ्यात्वपरत्ववर्णनमविदुषामेव रोचते, न विदुषामित्याहुः—नयदिति ॥ अत्र विकल्पपथैरित्यन्तेन कार्यमिथ्यात्वपरत्ववर्णनानुवादः. वितथेत्यादिना तत्प्रतिक्षेप इति विभागः, तथाहि—यत् यस्मात् इदं विश्वम् अग्रे सृष्टेः पूर्वं नास नासीत्, "सदेव सोम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतेरिति भावः, निधनात् प्रलयात् अनु अनन्तरं न भविष्यत् न भविष्यति, "नासदासान्नो सदासीत्तदानीम्" इत्यादिश्रुतेरिति भावः,अतः कारणादन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेवेदं विभातीति मितं निश्चितं यत एवम् अतः श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदाः घटकुण्डलादयः तेषां पन्थानः मार्गाः प्रकाराः तैरुपमीयते सदृशतया निरूप्यते यथा तत्र कार्यकारणानां नामधेयमात्रता कारणं मृदाद्येव सत्यं तथा अत्राप्याकाशादीनां नामधेयमात्रता, ब्रह्मैव सत्यमिति निरूप्यत इत्यर्थः, तथाच श्रुतिः—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं बिकारो नामधेयं मृत्तिकेत्येव सत्यं यथा सोम्यैकेन लोहमणिना विज्ञातेन सर्वं लोहमयं विज्ञातं

स्यात्। यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम्” इत्यादि, अथैतद्दूषयन्ति—वितथेति। कुदृष्टीनां वितथमनोविलसितमेतत्कार्यमिथ्यात्वपरत्ववर्णनमित्यर्थः, प्रतिपन्नोपाधौ बाधादर्शनादिति भावः,तस्मात्कुदृष्ट्यभिमतं कार्यमिथ्यात्वम् ऋतं प्रामाणिकमिति अबुधाः “यथा सोम्यैकेन मृत्पिण्डेन” इत्यादिदृष्टान्तवाक्यार्थानभिज्ञाः अवयन्ति जानन्ति, नतदर्थाभिज्ञा इत्यर्थः, अयं भावः —अत्र हि न कार्यमिथ्यात्वं कारणसत्यत्वं च प्रतिपाद्यते, किंतु कार्यकारणयोरनन्यद्रव्यत्वं, तथाहि—“स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्” इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मैककारणतामजानता शिष्येण “कथन्नु भगवस्स आदेशः” इत्यन्यज्ञानेनान्यस्य ज्ञातत्वासंभवं चोदितो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावत् “यथा सोम्यैकेन” इत्यादिना दर्शयति, यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः. अत्र काणादवादे कारणात्कार्यस्य बुद्धिशब्दान्तरादिभिः द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतोपपाद्यते—वाचेत्यादिना। आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणं, “कृत्यल्युटः” इति कर्मणि ल्युट्, वाचा वक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः, हेतुत्वं चात्राध्ययनेन वसतीतिवत्, घटेनोदकमाहरेत्यादिवाक्पूर्वको ह्युदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषस्तत्प्रयुक्तं च घट इत्यादिनामधेयं स्पृश्यते, उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयभाग्भवति. अतो घटाद्यपि मृत्तिकेत्येव सत्यं. मृत्तिकाद्रव्यमित्येव सत्यं, प्रमाणेनोपलभ्यत इत्यर्थः,नतु द्रव्यान्तरत्वेन,अतस्तस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तरादय उपपद्यन्ते, यथैकस्य देवदत्तस्यावस्थाभेदात् बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते. तद्वदिति, एवं चैकमेव चिदचिद्विशिष्टं ब्रह्म सृष्टेः प्राङ् निधनानन्तरं च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वेनावतिष्ठते, अन्तरातु तद्विभागार्हस्थूलचिदचिदात्मकप्रपञ्चाकारेणावतिष्ठत इत्यवस्थानामनित्यत्वेऽपि तदाश्रयस्य द्रव्यस्य उभयावस्थायोगिनः पारमार्थ्यमेवेति बुधा अवयन्तीति; “नासदासीन्नो सदासीत्” इत्यस्य स्थूलावस्थमचिद्द्रव्यं चिद्द्रव्यंच प्रलयदशायां नासीत्. किंतु तमः निरतिशयसूक्ष्मदशापन्नमचिद्द्रव्यं तमसा तमस्सदृशेनाचिद्द्रव्येण गूढं तिरोहितं प्रकेतं सूक्ष्मावस्थं चिद्द्रव्यं चासीदित्यर्थः, ‘उक्थजडानबुधाः’ इत्यनेन जीवानामज्ञत्वसंभावना सूचिता ॥ ३८ ॥

मु ॥ मृत्पिण्डतत्कार्यादिदृष्टान्तानां कार्यमिथ्यात्ववर्णनम् अविदुषामेव रोचते, न विदुषामित्याह—यदिति ॥ यत् न यस्मात् इदं जगत् अग्रे सृष्टेः पूर्वं नास अनिमित्तत्वात्, प्रलयात् अनु अनन्तरं न भविष्यति,अतः कारणात् अन्तरा पूर्वापरकालयोरिव मध्यकालेऽपि नास्ति दुर्निरूपकारणत्वात्, अन्तरा ब्रह्मणा कल्पितं मृषा

सयदजयात्वजामनुशयीतगुणांश्चजुषन्भजतिसरूपतांतदनुमृत्युमपेतभगः ।
त्वमुतजहासितामहिरिवत्वचमात्तभगोमहसिमहीयसेऽष्टगुणितेऽपरिमेयभगः॥३९

भातीति मृत्पिण्डलोहमण्यादिभिरुपमीयत इति अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मतं निश्चितं, यतः भवान् श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदाः घटमकुटादयः तेषां पन्थानो मार्गाः कार्याकारभेदाः तैः उपमीयते सदृशतया निरूप्यते यथा कार्याकारता नामधेयमात्रं कारणं मृदाद्येव सत्यं तथैव आकाशादीनां नाममात्रता ब्रह्मैव सत्यं,"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं...यथा सोम्यैकेन लोहमणिना...यथा सोम्यैकेन नखनिकृन्तनेन"इत्यादि,तस्मात् असत्कार्यारम्भसत्यत्वे प्रमाणाभावः,सत्यत्वे विवादाध्यासितमसत् आद्यन्तयोरविद्यमानत्वात् विकारित्वात् दृश्यत्वाद्वा, शुक्तिरजतादिवदिति, वितथमनोविलासं वितथमनसां कुदृष्टीनां विलासं स्वमनोरथकल्पितं प्रतिपन्नोपायबाधादर्शनात्, तस्मात् कुदृष्ट्यभिमतकार्यमिथ्यात्वम् ऋतं प्रामाणिकमिति अबुधा अवयन्ति जानन्ति, नतु विद्वांस इत्यर्थः ॥ ३८ ॥

वी ॥ ननु भगवत इव तेषामपि नित्यत्वैकरसत्वप्रकृतिस्थत्वाद्यविशेषेऽपि कथं तेषां तत्संभावना तव तत्संभावनाया अप्यभाव इत्याशङ्कायां प्रकृतिवश्यत्वतदभावाभ्यामेवेत्याहुः—सयदजयेति ॥ स जीवो यत् यस्मात् अजया त्वन्मायया मोहित इति शेषः,अजां प्रकृतिपरिणामात्मिकां देवमनुष्यादिमूर्तिम् अनुशयीत आलिङ्गति बिभर्तीति यावत्,ततो गुणान् शब्दादिविषयान् जुषन् सेवमानः सरूपतां स्थूलत्वकृशत्वादिदेहधर्मतां भजति देहात्माभिमानी भवतीत्यर्थः, तदनु तदनन्तरं मृत्युं मरणं भजति प्राप्नोति, इत्थं जन्ममरणादिरूपसंसृतिभाक्त्वात् अपेतः भगः ज्ञानैश्वर्यादिर्यस्य तथाभूतो भवति, त्वमुत त्वं तु अहिस्सर्पस्त्वचं कञ्चुकमिव तामजां जहासि, नियमेन तत्परतन्त्रतया संबन्धरहितोऽसि, अहिदृष्टान्तस्त्यागमात्राभिप्रायकः, अतएवात्तः नित्यं परिगृहीतः भगः येन तथाभूतः "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति भगशब्दार्थोऽवगन्तव्यः,तथापि किं जीव इवाहमपि परिच्छिन्नभगः,नेत्याहुः—अपरिमेयभगः अपरिच्छिन्नैश्वर्यादिमान् ,अष्टगुणिते अपहतपाप्मत्वादयोऽष्टौ गुणाः ते अस्य नित्यं संजाता इत्यष्टगुणितं,तारकादित्वादितच् , तस्मिन् नित्याविर्भूतापहतपाप्मत्वादिगुणाष्टकयुक्ते महसि अपरिच्छिन्ने स्वयंप्रकाशस्वरूपे महीयसे महसि स्थित्वा पूज्यस इत्यर्थः ॥ ३९ ॥

मु ॥ उभयोः प्रकृत्यन्तरवस्थाने तुल्येऽपि जीवस्य तत्परवशत्वं परस्य तदभावश्चाह—सयदज इति॥यत् यस्मात् अजः क्षेत्रज्ञः इमाम् अजां प्रकृतिम् अनुशयीत अनुवर्तेत, गुणान् सत्त्वादीन् जुषन् सेवमानः सरूपतां भजति स्थूलत्वादिधर्मतां प्राप्नोति, अतः तदनु तदनन्तरम् अपेतभगः अपगतज्ञानाद्यैश्वर्यः मृत्युं संसारं भजति, त्वंतु अहिस्त्वचमिव तां प्रकृतिं जहासि नियमनतत्परः परतन्त्रतया संबन्धरहितोऽसि, आत्तभगः नित्यप्राप्तज्ञानाद्यैश्वर्यः अपरिमेयभगः अपरिच्छिन्नैश्वर्यः अष्टगुणिते अपह-

यदिनसमुद्धरन्तियतयोहृदिकामजटादुरधिगमोऽसतांहृदिगतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखंभगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ४० ॥
त्वदवगमीनवेत्तिभवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हिंनदेहभृतांचगिरः ।

---

तपाप्मत्वाद्यष्टगुणवति महसि महैश्वर्ये महीयसे पूज्यसे, अत्र "द्वा सुपर्णा" इत्यादि श्रुतिः ॥ ३९ ॥

वी ॥ इत्थमपेतभगस्य पुनस्तत्प्राप्तौ किं निदानमित्यपेक्षायाम् अनन्यप्रयोजनं त्वदुपासनमेवेत्यभिप्रेत्य तावद्भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाहुः—यदीति॥ यतयः मुनयः मनःप्रणिधानशीला अपि यदि हृदि स्थिताः कामजटाः कामानां मूलानि वासना इति यावत्,न समुद्धरन्ति नोत्पाटयन्ति,तर्हि तेषामसतां हृदि गतः स्थितोऽपि त्वं दुरधिगमः दुर्ज्ञेयः अस्मृतकण्ठमणिः कण्ठे स्थितोऽप्यस्मर्यमाणो मणिरिव स यथा कण्ठे वर्तमानोऽप्यस्मृतश्चेदज्ञातप्राय एव हि भवति,किंच हेभगवन् तेषामसुतृपयोगिनां प्राणेन्द्रियतर्पणपराणां योगिनामुभयतः इह परलोकेच असुखं दुःखमेव, तदेवाहुः—अनपगतान्तकात् अनिवृत्तान्मृत्योः इह परलोकेच असुखं दुःखमेव, भोगपौष्कल्येऽपि मरणभयं दुःखमस्त्येवेति भावः, परलोकेतु अनधिरूढपदाद्भवतस्सकाशात् दुःखम् अनधिरूढम् अप्राप्तम् पदं त्वत्स्थानं येन तस्मात् भावप्रधानो निर्देशः, अप्राप्तत्वत्पदत्वात् त्वत्पदाप्राप्तेरिति यावत्, भवतः निजधर्मातिलङ्घिनां शास्तुर्यमरूपात्त्वत्तो दुःखमित्यर्थः ॥ ४० ॥

मु ॥ भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाह—यदीति ॥ यतयः उपासकाः हृदि कामेन जडा यदि तर्हि न समुद्धरन्ति संसारमिति शेषः, जटा इति पाठे कामस्य जटा मूलानि वासना इत्यर्थः, यदि न समुद्धरन्तीत्यन्वयः, भवान् हृदि गतोऽपि अस्मृतकण्ठमणिः कण्ठस्थोऽप्यस्मर्यमाणो मणिरिव असतां दुरधिगमः, त्वं हृद्गतो न ज्ञायस इत्यर्थः, असुतृपयोगिनां प्राणेन्द्रियतर्पणपराणां योगिनाम् उभयत इहलोके परलोकेचेत्यर्थः, अनपगतान्तकात् अनिवृत्तान्मृत्योः अनधिरूढम् अप्राप्तं पदं यस्य तस्मात् भवतः त्वत्तश्च लोकाराधनधनार्जनादिक्लेशात भोगवैकल्यप्राकट्यभयाच्च इह तावद्दुःखम्, निजधर्मातिक्रमनिबन्धनदण्डरूपनरकप्राप्तेः अमुत्राप्यसुखमित्यर्थः॥ ४० ॥

वी ॥ अथानन्यप्रयोजनानां भगवद्भक्तानां तूभयतस्सुखमेवेत्याहुः—त्वदवगमीति॥ त्वामवगच्छतीति त्वदवगमी त्वद्याथात्म्यज्ञानवान् "आर्तो जिज्ञासुरर्थार्थी ज्ञानीच" इत्युक्तेषु तुरीय इत्यर्थः, भवतीति भवस्संसारः तस्मिन्नुत्थयोरुपस्थितयोः फलजननाय समुत्थितयोरित्यर्थः, तयोः शुभाशुभयोः पुण्यपापात्मकयोः कर्मणोः गुणविगुणान्वयान् फलभूतसुखदुःखसंबन्धान् तर्हि तदानींच देहभृतां गिरः स्तुतिनिन्दात्मकयान्यपि न वेत्ति नानुसंधत्ते, कुतः? यतस्त्वमपवर्गगतिः तस्य देहान्ते अपवर्गसाधनभूतः, अनेन परलोके सुखमुक्तम्, इहतु मनुजैस्तावकैस्सह अनुयुगं प्रतियुगम्, अनुवर्तिन्या सगुणगीतपरंपरया सगुणस्य अनन्तकल्याणगुणयुक्तस्य तव गीतपरंपरया कथामृतपरंपरया अन्वहं श्रवणभृतः श्रवणेन चेतसि धृतः यतस्त्वत्कथामृतपानमत्तः ततो न वेत्तीत्यर्थः ॥ ४१ ॥

अनुयुगमन्वहंसगुणगीतपरंपरयाश्रवणभृतोयतस्त्वमपवर्गगतिर्मनुजैः ॥ ४१

द्युपतयएवतेनययुरन्तमनन्ततयात्वमपियदन्तराऽण्डनिचयाननुसावरणाः ।
खइवरजांसिवान्तिवयसासहयच्छ्रुतयस्त्वयिहिफलन्त्यतन्निरसनेनभवन्निधनाः ॥

---

मु॥ भगवज्ज्ञानवतां संपदमाह—त्वदवगमीति ॥ त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोः भवतः सर्वकर्मफलप्रदातुस्त्वत्तः उत्थयोः, यद्वा—नित्यं भवतीति भवन् संसारः तस्मात् उत्थयोः प्रादुर्भूतयोः शुभाशुभयोः पुण्यापुण्यकर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसंबन्धान् न वेत्ति न गणयतीत्यर्थः, तर्हि तदा देहभृतां गिरः स्तुतिनिन्दावाक्यानि च न वेत्ति, यतः यस्मात् त्वं मनुजैः अनुयुगं प्रतियुगम् अन्वहं प्रतिदिनं च सगुणा गीतपरंपरा उपदेशसंततिः तया सत्संप्रदायानुसारिण्येत्यर्थः, अन्वहं श्रवणेन चेतसि भृतो यैः तेषाम् अपवर्गस्य मुक्तेः गतिः उपायः असीत्यर्थः ॥ ४१ ॥

वी॥ इत्थं यथामति संस्तुत्य अथ त्वन्माहात्म्यस्यापरिच्छिन्नत्वात्साकल्येन स्तोतुं न शक्नुम इति निगमयन्ति—द्युपतयइति ॥ द्युपतयः स्वर्गादिलोकपतयः महेन्द्रब्रह्मादयएव ते तवान्तं स्वरूपस्वभावपारं नययुः नजानीयुरित्यर्थः, किंपुनर्मनुजादय इति भावः,किं बहुना त्वमपि नयासि,कुतः?अनन्ततया स्वरूपस्वभावयोरपरिच्छिन्नतया,नचैतावता तव सर्वज्ञत्वभङ्गः, यथावस्थितवस्तुविषयकज्ञानस्यैव सर्वज्ञत्वावहत्वात् अपरिच्छिन्नस्य परिच्छिन्नत्वज्ञानस्याज्ञत्वावहत्वाच्चेति भावः,महिम्नोऽपरिच्छिन्नत्वमेव प्रतिपादयन्ति—यदन्तरेत्यादिना।यस्य तव अन्तरा मध्ये एकैकस्मिन् रोमकूपे सावरणास्सप्तभिरावरणैस्सहिताः अण्डानां ब्रह्माण्डानां निचयास्समूहाः वान्ति संचरन्ति, यथा खे आकाशे रजांसि, वयसेति जात्यभिप्रायमेकवचनं, पक्षिभिस्सह वान्ति तद्वत् , यत् यस्मादेवं हि ततः श्रुतयः, पारोक्ष्यनिर्देशः स्तुतेरन्यगतत्वाभिप्रायकः, त्वयि अतन्निरसनेन तस्मादपारमहिम्नस्त्वत्तः अन्यत् प्रकृतिपुरुषादिवस्तु तन्निरसनेन तत्साजात्यप्रतिषेधेन तत्पूर्वकमित्यर्थः,भवन्निधनाः भवति निधनं निष्ठा पर्यवसानमिति यावत्, तद्यासां ताः शब्दवृत्त्या तात्पर्यवृत्त्याच प्रकृतिपुरुषसाजात्यनिरसनेन तद्विलक्षणं त्वां बोधयन्तीत्यर्थः, फलन्ति सफला भवन्ति कृतार्थानि भवन्तीत्यर्थः, समस्तचेतनाचेतनसाजात्यनिरसनेन तद्वैलक्षण्यमात्रं बोधयन्ति न तु साकल्येन त्वत्स्वरूपस्वभावादिकं बोधयितुं शक्नुवन्तीति भावः ॥ ४२ ॥

मु ॥ भगवतो माहात्म्यस्यापरिच्छेद्यत्वमाह—द्युपतय इति ॥ द्युपतयः इन्द्रादयः ब्रह्मादयश्च ते तव अन्तम् अवधिं न ययुः न प्रापुः, त्वमपि न यासि, कुतः? अनन्ततया अपरिच्छिन्नतया,तर्हि सर्वज्ञताहानिः स्यात्,न अपरिच्छेद्यस्य अपरिच्छेद्यत्वावगमात्, अन्यथा व्योमाम्भोजभिदंतया किल विदन् भ्रान्तः स्यादित्यभिप्रायः, यदन्तरा यस्य तव अन्तः सावरणाः सप्तावरणसहिताः अण्डानां निचयाः वयसा पक्षिभिस्सह कालचक्रेण वा रजांसीव सह एकदैव नतु पर्यायेण वान्ति सञ्चरन्ति, यत् यस्मात् भवन्निधनाः त्वत्पर्यपर्यवसायिन्यः श्रुतयः अतन्निरसनेन फलन्ति समस्तचेतनसाजात्यनिरसनेन त्वद्वैलक्षण्यं बोधयन्तीत्यर्थः ॥ ४२ ॥

श्रीभगवानुवाच—

इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम्।
सनन्दनमथानर्चुस्सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४३

इत्यशेषसमाम्नायपुराणोपनिषद्रसः।समुद्धृतः[१]पूर्वजातैर्व्योमयानैर्महात्मभिः॥ ४४
त्वंचैतद्ब्रह्मदायादश्रद्धयाऽऽत्मानुशासनम्।धारयंश्चरगांकामंकामानांभर्जनंनृणाम्॥

श्रीशुक उवाच—

एवं स गुरुणाऽऽदिष्टं गृहीत्वा श्रद्धयाऽऽत्मवान् ।
पूर्णश्श्रुतधरो राजन्नाह वीरव्रतो गुरुम् ॥ ४६

---

वी॥ इत्थं श्रुतिगीतिसंवादेन सनन्दनोक्तमुत्तरमवधार्य तं बहुमेनिरे इत्याह भगवान्नारायणः—इत्येवमिति ॥ इति श्रुत्युक्तप्रकारेण एवं सनन्दनोक्तमात्मानुशासनम् , आत्मा अनुशिष्यते येन तदात्मानुशासनम् उत्तरमाश्रुत्य ब्रह्मणश्चतुर्मुखस्य पुत्राः मरीच्यादयः सिद्धाः, आत्मनः परमात्मनो गतिं प्रकारं याथात्म्यं ज्ञात्वा निश्चित्य अथ सनन्दनमानर्चुः ॥ ४३ ॥

मु ॥ इति इत्थं श्रुतिस्तुतिरूपेण आत्मानुशासनम् आश्रुत्य एवं यथोदिताकारेण आत्मनो गतिं स्वरूपं ज्ञात्वा सिद्धाः चरितार्थाः ब्रह्मणः पुत्राः अथ साकल्येन सनन्दनम् आनर्चुः ॥ ४३ ॥

वी॥इतीति॥सर्वश्रुतिपुराणोपनिषत्तात्पर्यमेवं समुद्धृतमिति प्रकृतवेदस्तुतिप्रशंसा॥

मु ॥ इतिहासमुपसंहरति—इत्यशेषेति॥ सर्वपुराणरहस्यतात्पर्यमित्यर्थः, पूर्वजातैः ब्रह्मणः प्रथमं संभूतैः व्योमयानैः सिद्धैः समुद्धृत इति ॥ ४४ ॥

वी ॥ त्वमिति ॥ हे ब्रह्मदायाद ब्रह्मपुत्र दायभोक्तृत्वात्पुत्रस्य तस्मिन्दायादशब्द उपचर्यते, एतदात्मानुशासनं नृणां ये कामास्तेषां भर्जनं दाहकं श्रुतिस्तवनं धारयन् कामं यथेष्टं गां भूमिं तदुपलक्षितान् लोकान् चर पर्यट ॥ ४५ ॥

मु ॥ एतच्च त्वया भुवि प्रवर्तनीयमित्याह — त्वमिति ॥ हे ब्रह्मदायाद ब्रह्मपुत्र त्वं च एतदात्मानुशासनं आत्मविषयमनुशासनम् शास्त्रं श्रद्धया धारयन् गां भुवं च नृणां कामानां निधनं यथा तथा तेषामशेषदोषनिवर्तकमात्मतत्त्वज्ञानं प्रवर्तयंश्चरेत्यर्थः ॥ ४५ ॥

वी॥कथमेतत्त्वया विदितमित्यपेक्षायां तद्वक्तुं प्रस्तौति मुनिश्चतुर्भिः—एवमिति॥ गुरुणा बदर्याश्रमवासिना श्रीनारायणेन आदिष्टमुपदिष्टं श्रद्धया गृहीत्वा तस्मिन्नेवाहितमनाः पूर्णः निवृत्तसंशयत्वात्पूर्णमनाः श्रुतं यथाश्रुतं धरतीति तथाभूतः वीराणां जितेन्द्रियाणां व्रतं यस्य सः नैष्ठिको नारदः हेराजन् गुरुं श्रीनारायणं प्राह ॥ ४६ ॥

मु ॥ तस्य तदाज्ञापालनमाह—एवमिति चतुर्भिः ॥ हे राजन् श्रुतधरः श्रुतमर्थं धारयतीति तथा आत्मवान् एकाग्रचित्तः श्रद्धया एवम् इतिहासरूपेण गुरुणा आदिष्टम् उपदिष्टं तत्त्वं गृहीत्वा पूर्णः चरितार्थः अतएव वीराणामिव व्रतं यस्य स वीर-

---

१. पूर्वजैस्तैः. पा ॥

श्रीनारद उवाच—

नमस्तस्मै भगवते कृष्णायामलकीर्तये ।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ।। ४७

श्रीशुक उवाच—

इत्याद्यमृषिमामन्त्र्यतच्छिष्यांश्चामलात्मनः।ततोऽगादाश्रमंसाक्षात्पितुर्द्वैपायनस्यमे
सभाजितोभगवताकृतासनपरिग्रहः।तस्मैतद्वर्णयामासनारायणमुखाच्च्युतम्।। ४९
तदेतद्वर्णितंराजन्यन्नःप्रश्नःकृतस्त्वया।यथाब्रह्मण्यनिर्देश्येनिर्गुणेऽपिमनश्चरेत्।। ५०

---

व्रतः नैष्ठिक इत्यर्थः, भगवद्भजनैकपरायण इति वा, गुरुं नारायणम् आह ॥ ४६ ॥

वी ॥ उक्तिमेवाह—नमइति ॥ कृष्णाय सर्वलोकसुखकराय तदुपयुक्ता अमला अकर्मवश्या मूर्तिर्यस्य तस्मै तुभ्यं नमः, केन कारणेन कृष्ण इत्यतस्तं विशिनष्टि—य- इति। यो भगवान् सर्वभूतानामभवायापवर्गाय उशतीः कमनीयाः निर्मला इति यावत्, कलाः विद्याः धत्ते अपेक्षितविद्योपदेशेन सुखकर इति भावः ॥ ४७ ॥

मु ॥ तद्दर्शयति—नमइति ॥ अभवाय अपवर्गाय उशतीः शुद्धसत्त्वमयीः कलाः मूर्तीः ॥ ४७ ॥

वी ॥ इतीत्थमाद्यमृषिं नारायणम् अमलमन्तःकरणं येषां तान् तस्य शिष्यांश्चा- मन्त्र्य प्रणामपूर्वकमापृच्छ्य साक्षात्स्वयं द्वैपायनस्याश्रमम् अगाज्जगाम ॥ ४८ ॥

मु ॥ ततो नारायणाश्रमात् साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य, अग्निमथनावसरे कथञ्चिदरणेः रेतः पतितं ममन्थ व्यासः,तदैव तत उत्पन्नः शुक इति हि वदन्ति, द्वैपायनस्याश्रममगात् ॥ ४८ ॥

वी ॥ सभाजितइति॥ ततो भगवता द्वैपायनेन सभाजितः पूजितः कृतः आसनस्य परिग्रहो येन सः तस्मै द्वैपायनाय नारायणस्य मुखाच्च्युतं निर्गतं श्रुतिस्मृत्यात्मकं वचो वर्णयामास उपदिदेशेत्यर्थः, सतु मह्यमुपदिष्टवानिति तु प्रसिद्धत्वान्नोक्तम् ॥ ४९ ॥

मु ॥ भगवता व्यासेन सभाजितः कृतासनपरिग्रहः तद्दत्तएवासने सुखमुपवि- ष्टस्सन् नारायणमुखाच्छ्रुतं तदात्मानुशासनं तस्मै वर्णयामास, मे पितुरित्यनेन विद्या- देहसंबन्धोक्तेः तस्मान्मया श्रुतमिति चोक्तं भवति ॥ ४९ ॥

वी ॥ एवं त्वत्प्रश्नस्योत्तरमागतमित्याह—तदेतदिति ॥ हेराजन् नः अस्मान् प्रति यः प्रश्नस्त्वया कृतः तत् तत्र प्रश्ने एतच्छ्रुतिवचः वर्णितम् उत्तरत्वेन कथितमित्य- र्थः, येनोपवर्णितेन अनिर्देश्ये निर्गुणेऽपि ब्रह्मणि श्रुतयश्चरेयुरिति मनश्चरेत् प्रसरेत् निस्संशयं मनो भवेदित्यर्थः ॥ ५० ॥

मु ॥ ‘ ब्रह्मन् ब्रह्मण्यनिर्देश्ये ’ इति प्रश्नोत्तरं श्रुतिस्तुतिसिद्धमुपसंहरति—तदेत- दिति॥ हे राजन् नः अस्मान् प्रति त्वया यः प्रश्नः कृतः, तत्र एतत् वर्णयितव्यं यावत् तावत् वर्णितम्, कथम् ? अतएव अनिर्देश्येऽपि ब्रह्मणि यथा श्रुतिः चरेत्—इति॥५०॥

योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो
यस्सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरश्शास्ति ताः ।
यं संपद्य जहात्यजामनुशयी सुप्तः कुलायं यथा
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५१

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरार्धे श्रीनारदनारायणसंवादे श्रुतिस्तुतिर्नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

वी॥'अशेषसमाम्नायपुराणोपनिषद्रसः'इत्युक्तं,कोऽसौ समाम्नायादीनां रसः,यःश्रुतिगीत्या समुद्धृत इत्यपेक्षायामाह—"आलोड्य सर्वशास्त्राणि विचार्यच्च पुनःपुनः।इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा" इत्युक्तरीत्या जगदुदयविभवलयलीलस्सर्वान्तरात्मा बन्धमोक्षदो भगवानुपास्यइत्येष एवेति वक्तुं स्रष्टृत्वाद्युपयुक्तैर्गुणैर्भगवन्तं विशिंषन् तद्ध्यानं विधत्ते—योऽस्येति ॥ अस्य जगतः आदिमध्यनिधने सृष्टिस्थितिलये निमित्ते उत्प्रेक्षकः "तदैक्षत बहु स्याम्" इत्युक्तविधेक्षिता, यच्छब्दानां कैवल्यनिरस्तयोनिमित्यनेन संबन्धः, यश्च अव्यक्तजीवयोः प्रकृतिपुरुषयोः कारणावस्थयोरीश्वरः अन्तःप्रविश्य नियन्ता, अनेन कारणावस्थायां सूक्ष्मचिदचिद्विशिष्टत्वं तस्योपादानत्वं तदुपयुक्तं सर्वशक्तित्वंच फलितम्, उत्प्रेक्षक इत्यनेन निमित्तत्वं तदुपयुक्तं सार्वज्ञ्यंच, यश्च इदं महदादिपृथिव्यन्तसमष्टितत्त्वजातं सृष्ट्वा ऋषिणा चतुर्मुखाख्यजीवेनानुप्रविश्य जीवद्वाराऽनुप्रविश्येत्यर्थः, पुरः शरीराणि चक्रे निर्ममे. ततः ताः पुरः शास्ति नियमयति, पुरशब्दोऽत्र सजीवदेवादिशरीरपरः, ऋषिणा चक्रे पुरस्संहिता इति पाठान्तरं, तदा पुरः प्रथमम् ऋषिणा चतुर्मुखेन संहिताः वेदसंहिताः,चक्रे प्रावर्तयदित्यर्थः,अनेन हितकृत्त्वमुक्तं. शास्त्रप्रवर्तनं हि हितार्थम्, अनुशयो भुक्तावशिष्टं कर्म,सोऽस्यास्तीत्यनुशयी कर्मवश्यो जीवः यं संपद्य अजां जहाति प्रकृतिसंबन्धं त्यजति आविर्भूतगुणाष्टको भवति मुक्तो भवतीति यावत् तथाच श्रूयते "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति, तत्र दृष्टान्तः—सुप्तः कुलायं यथेति। यथा शकुनिर्नीडं कंचित्कालं सुप्तः तद्विहायोड्डीयते तद्वदजायां स्थितः अनुशयी जीवः यं सम्पद्य तां जहातीत्यर्थः, कैवल्यनिरस्तयोनिं संसारिणां मोक्षप्रदानेन निरस्ता योनिः प्रभवदुःखं येन तं न विद्यते भयं यस्मात्तं हरिम् आश्रितार्तिहरम् अजस्रंनित्यं ध्यायेत् ॥ ५१ ॥

मु ॥ श्रुतिगीतमर्थमुपसंगृह्य दर्शयति—योऽस्येति॥ अव्यक्तजीवेश्वरः चेतनाचेतननियन्तृतया तच्छरीरत्वात्तयोरीश्वर इत्यर्थः. अनेन शरीरभूतविशेषणांश एव विकार इति ब्रह्मणो न स्वरूपविकारप्रसङ्ग इत्युक्तं भवति, तच्छरीरत्वे तन्नियन्तृत्वे च हेतुमाह—यस्सृष्ट्वेति । इदं जगत् सृष्ट्वा ऋषिणा जीवेन सह अनुप्रविश्य पुरः शरीराणि च क्रेतव्यभोगायतनानि च क्रेता पुरश्शासिता शास्ति अन्तस्स्थित्वा नियमयति, अनुशयी कर्मवश्यः जीवः यं हरिं संपद्य उपायतया प्राप्य अजां प्रकृतिं जहाति त्यजति, तत्र दृष्टान्तमाह—सुप्तः पुरुषः सति संपद्य कुलायं देहं यथा त्यजति तत्परः श्रोता न भवति तद्वदित्यर्थः, कैवल्यनिरस्तयोनिं संसारिणां मोक्षप्रदानेन निरस्तयो-

राजोवाच—

देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम्। प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम्
एतद्वेदितुमिच्छामः सन्देहोऽत्र महान्हि नः ।

---

निप्रभवदुःखं येन तम् अभयं भयनिवर्तकं तम् अजस्रम् अनवरतं ध्यायेत्, पाठान्तरे – आत्मेक्षकः स्वयमेव आत्मनः साक्षात्कर्ता, यद्वा—आत्मनां शुभाशुभसाक्षी ऋषिणा चतुर्मुखेन सह संहिता वेदसंहिताः चक्रे प्रावर्तयत् ॥ ५१ ॥

इति श्रीभागवतचन्द्रचन्द्रिकायां श्रीभागवतव्याख्यायां दशमस्कन्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

* इति श्रीभारद्वाजकुलकमलभानुना नृसिंहगुरुसूनुना श्रीरामदेशिकदयालब्ध-पाण्डित्येन कृष्णगुरुणा विरचितायां दशमव्याख्यायां मुनिभावप्रकाशिका-समाख्यायाम् एकनवतितमोऽध्यायः ॥ ९१ ॥

हरिः ओम् ॥
श्रीवेंकटगुरवे नमः ॥
श्रीमते रामानुजाय नमः ॥

---

वी ॥ 'यंसपद्य जहात्यजां...तं कैवल्यनिरस्तयोनिम्' इति जगत्कारणत्वादिवत् मोक्षदत्वमपि हरेरेवासाधारणो धर्म इत्युक्तम् , अनेन रुद्रादीनां न मोक्षदत्वं किंत्वर्थकामादिप्रदत्वमिति सूचितम् , तत्र सन्दिहानः पृच्छति राजा—सुरमनुष्येष्विति ॥ देवादीनां मध्ये ये जनाः अशिवम् अमङ्गलरूपमपि शिवं भजन्ति ते प्रायशः प्रायेण धनिनः आढ्या भवन्ति, भोजा इति पाठे भोगिनो भवन्तीत्यर्थः, हे ब्रह्मन् लक्ष्म्याः पतिं तु ये भजन्ति ते न तु नाढ्याः, लक्ष्म्याः पतिमित्यनेन विपरीतमिदमित्यभिप्रेतं लक्ष्मीतिभक्तैरेवाढ्यैर्भवितव्यमित्यभिप्रायः ॥ १ ॥

मु ॥ श्रियः पत्यौ भक्त्यादिमतः श्रुतदेवस्य निर्धनत्वं श्रुत्वा विस्मितो राजा पृच्छति—देवाश्च असुराश्च मनुष्याश्च तेषु मध्ये ये अशिवम् अस्थिमालाशिरःकपालादिमत्तया अमङ्गलस्वरूपं शिवं भजन्ति सेवन्ते ते प्रायो बाहुल्येन धनिनः, भोजा इति पाठे भोगिनः, लक्ष्म्याः पतिं हरिं तु ये भजन्ति न ते धनिनः ॥ १ ॥

वी ॥ एतदिति ॥ एतद्वैपरीत्यनिदानं वेदितुमिच्छामः, अत्र वैपरीत्ये नोऽस्माकं महान् सन्देहो वर्तते, विरुद्धं शीलं स्वभावः ययोस्तयोः प्रभ्वोः हरिहरयोः, कर्मणि षष्ठी, तौ भजतां गतिः फलं विरुद्धा विसदृशीत्यर्थ , एकस्वभावौ भजतां कथं विसदृशं फलमिति शङ्कार्थः ॥ २ ॥

---

* अनेनैवाध्यायेन मु भा-प्र काराणां दशमस्कन्धसमाप्तिरभिप्रेता । 'देवासुरमनुष्येषु' इत्यादिरुत्तराध्यायशेषस्तु पूर्वमेव व्याख्यातः।वीरराघवीयानुरोधेनतु इमावेवं विपर्यासेन संयोजितौ। 'सरस्वत्यास्तटे' इत्यादिरूपान्त्याध्यायस्तु 'इत्येतन्मुनितनयस्य' इत्यत्रैव समापितः तदुपरिभागस्तदुत्तराध्यायश्च नोपलभ्येते । व्याख्यानशैलीपरामशर्तु तौ न व्याख्याताविव्येव प्रतीयते ॥

विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः॥ २

श्रीशुक उवाच—

शिवश्शक्तियुतश्शश्वत्त्रिलिङ्गोगुणसंवृतः।वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा॥ ३

ततोविकाराअभवन्षोडशामीषुकंचन।उपधावन्विभूतीनांसर्वासामश्नुतेगतिम्॥ ४

---

मु॥ अस्मादेतद्वेदितुमिच्छामः, अत्र अस्मिन्विषये नः अस्माकं महान् संदेहो वर्तते, कस्मिन्नित्यत्राह—विरुद्धशीलयोः श्मशानवासास्थिमालाधारणगजकृत्तिवासः-कौस्तुभधारणप्रभृतिविरुद्धाचारयोः, प्रभ्वोरिति कर्मणि षष्ठी, एतौ भजतां गतिः फलं विरुद्धेति यत् अत्रेति संबन्धः॥ २॥

वी॥ एकस्वभावतैव नास्ति तत्कुतः फलमेकरूपं स्यादिति परिहरति—शिव इत्यादिभिस्त्रिभिः॥ शिवः शक्त्या उमया युक्तः शश्वत् सदा त्रिलिङ्गः वक्ष्यमाणाधिष्ठेयत्रैविध्यात्त्रिलिङ्गः त्रिविधाहङ्कारप्रचुरमूर्तिः गुणेन तमोगुणेन संवृतः तमस्स्वभाव इत्यर्थः, अधिष्ठेयस्य त्रैविध्यमेवाह—वैकारिक इति। अहमहङ्कारः वैकारिकादिभेदेन त्रिधा॥ ३॥

मु॥ शक्त्या युक्तः त्रीणि वैकारिकादीनि लिङ्गानि रूपाणि यस्य सः गुणैः सत्त्वादिभिः संवृतः अहंकारस्याभिमानिदेवतात्वाद्रुद्रस्य तद्रूपत्वम्, "रुद्रस्तत्राधिदैवतम्" इति श्रुतिः, तत्र त्रैविध्यमाह—वैकारिक इति। अहम् अहंकारः॥ ३॥

वी॥ ततस्त्रिविधाहङ्कारात् षोडश विकाराः एकादशेन्द्रियाणि पञ्च भूतानि सतन्मात्राणीति षोडश विकारा जाता इत्यर्थः, तत्र तामसादहङ्कारात् सतन्मात्राणि पञ्चमहाभूतानि, वैकारिकात्तु एकदशेन्द्रियाणि, राजसाहङ्कारस्तूभयोरनुग्राहक इति विवेकः, त्रिविधोऽप्यहङ्कारो रुद्राधिष्ठेय इत्यर्थः, "अहङ्कारोऽध्यात्मम् अहंकर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्" इति हि श्रुतिः, अस्त्वेवं ततः किमत आह—अमीष्विति। अमीषु अहङ्कारतद्विकाराधिदैवेषु रुद्रदिगमभिमानिवातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रप्रजापत्यादिषु मध्ये कंचनान्यतममधिदैवतम् उपधावन् भजन् पुरुषः सर्वासां विभूतीनामैश्वर्याणां गतिं प्रकारमश्नुते नानाविधानि तत्तदधिदैवतेन दातुं शक्यान्यैश्वर्याणि प्राप्नोतीत्यर्थः॥ ४॥

मु॥ ततः त्रिरूपाहंकारात् षोडश विकाराः एकादशेन्द्रियाणि पञ्चभूतानि च अभवन्नित्यर्थः, अमीषु षोडशविकारेषु कञ्चन उपधावन् विकाराभिमानिदेवेषु कञ्चन रुद्रादिकं भजन्नित्यर्थः, सर्वासां विभूतीनाम् ऐश्वर्याणां गतिं फलम् अश्नुते प्राप्नुते. यादृश उपास्यः तत्समृद्धिम् उपासकः प्राप्नोति, अतः रुद्रोपासकोऽपि महतीमेव संपदं गच्छतीति भावः, एतदभिप्रायेण 'शिवश्शक्तियुतश्शश्वत्' इति प्रोक्तम्, यद्वा—त्रिलिङ्गः वक्ष्यमाणाधिष्ठेयत्रैविध्यात् त्रिलिङ्गः, वैकारिक इति त्रिविधाहंकाररूप इत्यर्थः, "अहंकारोऽध्यात्ममहंकर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्" इति हि श्रुतिः, अहमित्यहंकारतत्त्वमात्रं विवक्षितम्, अमीषु षोडशसु कञ्चन उपधावन् विकाराभिमानिदेवेषु कञ्चन इन्द्रादिकं भजन्नित्यर्थः॥ ४॥

हरिर्हिनिर्गुणस्साक्षाद्भगवान्प्रकृतेःपरः।ससर्वदृगुपद्रष्टातंभजन्निर्गुणोभवेत् ॥ ५
[1]निर्वृत्तेष्वश्वमेधेषुराजायुष्मत्पितामहः।शृण्वन्भगवतोधर्मानपृच्छदिदमच्युतम्॥ ६
सआहभगवांस्तस्मैप्रीतश्शुश्रूषवेप्रभुः।नृणांनिश्श्रेयसार्थाययोऽवतीर्णोयदोःकुले॥७
श्रीभगवानुवाच—

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।

---

वी ॥ हरिर्हीति॥ निर्गुणः सत्त्वादिप्राकृतगुणवश्यतारहितः साक्षाद्भगवान् समग्रज्ञानैश्वर्यादिषाड्गुण्यपूर्णः प्रकृतेः "भूमिरापोऽनलो वायुः" "अपरेयमितस्त्वन्याम्"इति श्लोकद्वयोक्तोभयविधायाः प्रकृतेः विलक्षणः सर्वदृक् सर्वज्ञः अतएवोपद्रष्टा गुणदोषानुमन्ता, रुद्रादयस्तूक्तविपरीतस्वभावा इति भावः,हि यस्मादेवं तस्मात्तं भजन्निर्गुणो भवेत् प्राकृतगुणसम्बन्धरहितो मुक्तो भवेदित्यर्थः, अयं भावः—ब्रह्मरुद्रादीनां रजस्तमःप्रचुरस्वभावत्वाद्गुणवश्यत्वादषाड्गुण्यपूर्णत्वाज्जीवत्वादसर्वज्ञत्वाच्च न मोक्षप्रदाने सामर्थ्यं, किन्तु स्वशक्त्यनुसारेणार्थकामादिप्रदानएव, भगवतस्तु यद्यपि चतुर्विधपुरुषार्थप्रदत्वशक्तिरस्त्येव तथापि स भगवान् सर्वज्ञः परमकारुणिको 'यद्यहं स्वभक्ताय त्रैवर्गिकफलं प्रयच्छेयं तर्ह्ययं तदन्ते पुनःपुनर्याचमानो मां नित्यदरिद्रएवावतिष्ठते अतस्तमनुगृह्णामि' इत्यालोच्य प्रायशः स्वभक्तेभ्यो मुक्तिमेव प्रयच्छतीति, कस्मैचिन्निर्बन्धात्त्रैवर्गिकमपि प्रयच्छतीति ॥ ५ ॥

मु॥ हरिपक्षेऽपि "यादृश उपास्यः" इति न्यायं दर्शयति—हरिरिति ॥ हीति श्रुतिप्रसिद्धौ, निर्गुणः सत्त्वादिरहितः साक्षात् पुरुषः, अन्ये स्त्रीप्राया इति भावः, उपद्रष्टा सर्वज्ञत्वात् दोषानुसंधाता निर्गुणः भवेत् गुणातीतो भवेदित्यर्थः, भक्तस्य धनादीनां हेयत्वात् न तत्रादरः, अतएव भगवान् न प्रयच्छति धनादिकमिति भावः ॥

वी ॥ न केवलमयं त्वत्प्रश्नस्य परिहारोऽस्मद्बुद्धिपरिकल्पितः, किन्तु भगवतैवोक्त इति वक्तुं प्रस्तौति ॥ निर्वृत्तेषु परिसमाप्तेषु सत्सु, राजा युधिष्ठिरः भगवतः श्रीकृष्णसकाशात् धर्मान् शृण्वन् तमच्युतं प्रतीदन्त्वत्पृष्टमपृच्छत् ॥ ६ ॥

मु ॥ उक्तेऽर्थे भगवद्वाक्यं प्रमाणयन्नाह—निवृत्तेषु समाप्तेष्वित्यर्थः, भगवतः सकाशात् धर्मान् शृण्वन् अच्युतमिदमपृच्छत्, यत् त्वया पृष्टम् ॥ ६ ॥

वी ॥ स इति ॥ स पृष्टो भगवान् श्रोतुमिच्छवे तस्मै युधिष्ठिराय प्रीतः प्राह, तत्र हेतुत्वेन तं विशिनष्टि—नृणामिति । निश्श्रेयसार्थाय निरतिशयपुरुषार्थप्रदानतत्साधनज्ञापनायेत्यर्थः ॥ ७ ॥

मु॥ यो नृणां निश्श्रेयसार्थाय यदोः कुले अवतीर्णः, स प्रभुः तस्मै शुश्रूषवे प्रीतः सन् आह ॥ ७ ॥

वी ॥ यस्येति ॥ यस्य यमित्यर्थः कर्मणश्शेषत्वविवक्षया षष्ठी, ननु धनापहारो नानुग्रहः प्रत्युत निग्रह एव स्यात्,अत आह —ततइति। अधनःइति च्छेदः ततो धनापहारादधनं निर्धनम् अतएव दुःखपरंपराग्रस्तमस्य ये स्वजनास्ते त्यजन्ति ॥ ८ ॥

---

१. निवृत्तेषु. मु-भा-प्र-पा ॥

ततोऽधनन्त्यजन्त्यस्य [1]स्वजना दुःखदुःखितम् ॥ ८

सतदावितथोद्योगोनिर्विण्णस्स्याद्धनेहया।मत्परैःकृतमैत्रस्यकरिष्येमदनुग्रहम् ॥ ९

[2]तस्मै ब्रह्म परं सूक्ष्मं चिन्मात्रं सदनन्तकम् ।
[3]अतो मां सुदुराराध्यं हित्वाऽन्यान्भजते जनः ॥ १०

---

मु ॥ तद्दर्शयति—यस्येति चतुर्भिः ॥ यस्येति कर्मणि षष्ठी, यम् अनुगृह्णामीत्यर्थः, तद्धनं तस्य धनम्, अधनमिति पदम्,दुःखानुदुःखितमिति—दुःखादनु पुनः दुःखितमिव प्रतीयमानमित्यर्थः ॥ ८ ॥

वी ॥ ततोऽप्ययं महान्निग्रह इत्यत आह—स इति ॥ वितथोद्योगः व्यर्थोद्यमः निर्धनस्य सर्वोऽप्युद्योगो व्यर्थ एवेति भावः, अतएव निर्विण्णो भवेत् , तदा अनीहया निराशया वैषयिकं सुखं सर्वथा मम दुर्लभमित्येवं तत्राशामपोह्येति भावः,मत्परैर्भक्तैस्सह कृतं मैत्रं यस्य तस्य मदनुग्रहं करिष्ये, मदसाधारणोऽनुग्रहः मदनुग्रहस्तम् ,अतो न पौनरुक्त्यम् ॥ ९ ॥

मु ॥ स पुनः बन्धूनामाग्रहेण धनेहया प्रवृत्तोऽपि मदनुग्रहेण यदा निष्फलोद्यमो निर्विण्णः स्यात्, तदा मत्परैः मद्भक्तैः कृतमैत्रस्य मदनुग्रहं करिष्ये, 'यस्याहमनुगृह्णामि' इत्यस्यायमर्थः — यो विषयान् परिजिहीर्षुरपि कथञ्चिद्ध्रियमाणेषु सज्जते-क्लिश्यति च, तस्य स्वविषयापहार एवानुग्रह इति यथाश्रुतत्वे ध्रुवादीनामैश्वर्यविरोधात्,अथवा प्रथमम् ऐश्वर्यं दत्वा शनैर्विषयभोगावसाने तस्य निर्वेदमुत्पाद्य हरिष्यामि परमानुग्रहं कर्तुमिति, तदुक्तं—"न मय्यावेशितधियां कामः कामाय कल्पते"इति, यद्वा—ततो धनार्थेहया कृषिवाणिज्यसेवादिलक्षणया दुःखदुःखितम् अतिशयेन दुःखितम् अधनम् अलब्धधनं तं स्वजनास्त्यजन्ति,सः वितथोद्योगः व्यर्थचेष्टितस्सन् बन्धुभिस्त्यक्तश्च सन् यदा निर्विण्णः अतएव मत्परैः कृतमैत्रश्च स्यात्, तदा तस्यानुग्रहणं करिष्ये ॥ ९ ॥

वी ॥ तमेवानुग्रहं दर्शयति—तस्मा इति ॥ तस्मै मत्परैः कृतमैत्राय यद्ब्रह्म तद्दर्शयामीति शेषः, असावेव मदनुग्रह इति भावः, कथंभूतं ब्रह्म? परं प्रकृतिपुरुषाभ्यां विलक्षणं सूक्ष्मं सर्वान्तःप्रवेशयोग्यं चिन्मात्रं ज्ञानस्वरूपमात्रं,मात्रशब्देन क्वचिदपि जडत्वव्यावृत्तिः, अनन्तकं त्रिविधपरिच्छेदशून्यम्, अत्र सत्यज्ञानादिवाक्यार्थ उपक्षिप्तः, अतस्तावद्दुःखावहत्वात्सुदुराराध्यं मां हित्वा, हि गतौ, गत्यर्था बुद्ध्यर्थाः, ज्ञात्वेत्यर्थः, अन्यान् रुद्रादीन् तावत्सुखदानन्ततस्तु दुःखदान् स्वयमपि दुःखितान् ज्ञात्वा केवलं सुखदा इत्येवं बुद्ध्वा भजत इत्यर्थः ॥ १० ॥

मु ॥ परम् अधिकरहितं सूक्ष्मं व्यापनशक्तं चिन्मात्रं क्वचिदपि जाड्यरहितं सत् सततैकरूपम् अनन्तं देशादिपरिच्छेदरहितम् एवंभूतं मां सुदुराराध्यम् आराधयितुमशक्यम् ॥ १० ॥

---

१. जना दुःखानुदुःखितम् • मु-भा-प्र. पा ॥ २. तद्ब्रह्म• पा ॥

३. "विज्ञायात्मतया धीरः संसारात्परिमुच्यते" इत्यर्धमधिकं क्वचित् ॥

ततस्त आशुतोषेभ्यो १लब्धराज्याश्श्रियोद्धताः ।
मत्ताः प्रमत्ता वरदान्विस्मरन्त्यवजानते ॥ ११

श्रीशुक उवाच—

२कोपप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ।
सद्यश्शापप्रसादोऽङ्ग शिवो ब्रह्मा नचाच्युतः ॥ १२

३अत्रैवोदाहरन्तीममितिहासंपुरातनम्।वृकासुरायगिरिशोवरन्दत्वाऽऽपसङ्कटम् ॥
वृकोनामासुरःपुत्रश्शकुनेःपथिनारदम् । दृष्ट्वाऽऽशुतोषंपप्रच्छत्रिषुदेवेषुदुर्मतिः ॥

४स आदिदेश गिरिशमुपधावाशु तुष्यति ।

---

वी ॥ ततइति ॥ ततो भजनानन्तरं ते भक्ताः आशु तुष्यन्तीत्याशुतोषास्तेभ्यो रुद्रादिभ्यस्सकाशात् अनेनात्मनि, चिरात्तोषत्वं सूचितं, लब्धं राज्यं यैस्ते श्रिया संपदा उद्धताः उत्पथाः मत्ताः गर्विताः प्रमत्ताः अनवहिताश्च वरदान् देवानेव विस्मरन्ति, अवजानते अवज्ञां कुर्वन्तिच, इत्थं स्वोक्तपरिहारो भगवदुक्त्या संवादितः॥ ११ ॥

मु ॥ आशु तोषः सन्तोषो येषां तेभ्यः लब्धया राज्यसहितया श्रिया समृद्ध्या हेतुना उद्धताः उन्नद्धाः मत्ताः गर्विताः, यद्वा—उद्धताः गर्विताः मत्ताः स्वात्मानमजानन्तः प्रमत्ताः अनवहिताः ॥ ११ ॥

वी॥ अथ "अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः। क्षणे रुष्टः क्षणे तुष्टः" इति न्यायेन देवतान्तराणामव्यवस्थितचित्तानां भजनमात्मघातायैव पर्यवस्यतीतीतिहासेन स्पष्टयितुमाह—कोपप्रसादयोरिति ॥ यद्यपि ब्रह्मादयः सर्वे देवाः कोपप्रसादयोर्निग्रहानुग्रहयोर्दक्षास्तथाऽपि अङ्ग हेराजन् शिवो ब्रह्माच सद्य एव शापः प्रसादश्च यस्य तथाभूतः, अच्युतस्तु नैवंविधः किन्त्वनुग्रहैकस्वभावः, क्वचिन्निग्रहोऽप्यन्ततो वरेणैव तुल्य इति भावः ॥ १२ ॥

मु ॥ सद्य एव शापः प्रसादश्च यस्य सः ॥ १२ ॥

वी ॥ अत्रैवेति ॥ सद्यश्शापप्रसादत्वे निदर्शनतया इतिहासमुदाहरन्तीत्यर्थः, कोऽसावित्यतस्तं वर्णयति—वृकासुरायेति । सङ्कटं दुःखमवापेत्यर्थः ॥ १३ ॥

मु ॥ अत्रैव सद्यश्शापादौ, सङ्कटम् उपमर्दं बाधामित्यर्थः ॥ १३ ॥

वी॥ कथं तदित्यतो विस्तरतो वर्णयति—वृको नामेति ॥ शकुनेः पुत्रः त्रिषु देवेषु मध्ये आशुतोषं पप्रच्छ, यतः स दुर्मतिः ॥ १४॥

मु ॥ त्रिषु देवेषु ब्रह्मादिषु आशु तोषं पप्रच्छेति, कुतः परमपुरुषार्थं न पप्रच्छेत्यत आह—दुर्मतिरिति ॥ १४ ॥

वी॥ स नारदः आदिदेश शशंस, किमिति? गिरिशमुपधाव भज, स आशु तुष्यति, किंच—स इति । स गिरशः ॥ १५ ॥

---

१. लब्धराज्यश्रिया. मु-भा-प्र-पा ॥ २. शापप्रसाद. पा ॥ ३. अत्र चो. पा ॥
४. "स आह देवं गिरिशमुपधावाशु सिद्ध्यसि । योऽल्पा. पा ॥

सोऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५
दशास्यबाणयोस्तुष्टस्स्तुवतोर्वन्दिनोरिव ।
ऐश्वर्यमतुलं दत्वा तत आप सुसङ्कटम् ॥ १६
इत्यादिष्टस्तमसुरउपाधावत्स्वगात्रतः।केदारआत्मक्रव्येणजुह्वानोऽग्निमुखंहरम् ॥
देवोपलब्धिमप्राप्यनिर्वेदात्सप्तमेऽहनि।शिरोवृश्चत्स्वधितिनातत्तीर्थक्लिन्नमूर्धजम् ॥
तदा महाकारुणिकस्सधूर्जटिर्यथाऽरणावग्निरिवोत्थितोऽनलात् ।
निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९
तमाहचाङ्गालमलं वृणीष्व मे यथानिकामं वितरामि ते वरम् ।

---

मु ॥ सः नारदः तमादिदेश, कथम्? आशुसिद्धये गिरिशम् उपधाव भज, यतः सोऽल्पाभ्यां गुणदोषाभ्याम् आशु तुष्यति कुप्यति च ॥ १५ ॥

वी ॥ तथाहि दशास्यबाणयोः रावणबाणासुरयोर्वन्दिनोरिव स्तुतिपाठकयोरिव स्तुवतोरतुलमैश्वर्यं दत्वा ताभ्यां सकाशादेव सङ्कटं कैलासोत्पाटनपुरपालनदुःखमवापेत्यर्थः ॥ १६ ॥

मु ॥ कुत एतदवगतमित्यत्राह—दशास्येति ॥ वन्दिनोरिव स्तुवतोः दशास्यबाणयोः तुष्टः सः अतुलम् ऐश्वर्यं दत्वा ततः पश्चात् सुसङ्कटं महान्तमनर्थं कैलासोत्पाटनपुरपालनपदत्वप्राप्तिरूपम् आप ॥ १६ ॥

वी ॥ इतीति ॥ इत्थमादिष्टोऽसुरः सुष्ठु मन्त्रितः प्रचोदितश्च तं गिरिशमेवोपाधावत् आराधितवान्, स्वगात्रत इति पाठे स्वदेहेन स्वदेहमांसहोमेन आराधितवानिति यावत्, आत्मनः स्वस्य क्रव्यं मांसं तेन हविषा अग्निमुखस्थं हरं जुह्वानोऽपि देवस्य हरस्योपलब्धिं दर्शनमप्राप्य सप्तमेऽहनि क्लिन्ना आर्द्रा मूर्धजाः केशा यस्मिन् तदात्मनः शिरः स्वधितिना अवृश्चत् छेत्तुमारब्धवानित्यर्थः, स्वधितिः पशुपुरोडाशादिच्छेदनार्थः खड्गविशेषः ॥ १७ ॥ १८ ॥

मु ॥ सुयन्त्रितः सुतरां यन्त्रितः तद्दास्यं प्राप्तः केदारे तम् उपाधावत् आराधितवान्, अग्निमुखं हरम् आत्मक्रव्येण स्वमांसेन जुह्वत् ॥ १७ ॥

मु ॥ अवृश्चत् छेत्तुमुद्यतः स्वधितिना कुठारेण तत्रस्थेन तीर्थेन क्लिन्नाः आर्द्राः मूर्धजाः केशा यस्मिंस्तत् ॥ १८ ॥

वी॥ तदेति॥ स धूर्जटिः रुद्रः मूर्तिमानग्निरिव देदीप्यमानः अग्नेरुत्थितः स्वदोर्भ्यां तद्भुजयोः प्रगृह्य न्यवारयत्, तस्य धूर्जटेः स्पर्शनात्प्रभावात् पुनः उपस्कृता निर्व्रणा आकृतिः शरीरं यस्य तथाभूतो बभूवेत्यर्थः ॥ १९ ॥

मु ॥ धूर्जटिः रुद्रः यथाग्निः स्वयं तथा देदीप्यमानः अनलादुत्थितः दोर्भ्यां भुजयोर्निगृह्य गृहीत्वा न्यवारयच्च, स तस्य स्पर्शात् भूयः उपस्कृताकृतिः सम्पूर्णावयवः अभवत् ॥ १९ ॥

वी॥ तमिति॥ तं च वृकासुरमाह, किमिति? अङ्ग हेवृक अलमलं होमेनेति शेषः, यथानिकामं यथेच्छं वरं वृणीष्व, तुभ्यं वितरामि प्रयच्छामि तोयेनापि प्रपद्यतां भजतां

प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥ २०

देवात्सवव्रेपापीयान्वरंभूतभयावहम्। यस्ययस्यकरंशीर्ष्णिधास्येसम्रियतामिति ॥

तच्छ्रुत्वाभगवान्रुद्रोदुर्मनाइवभारत। ओमितिप्रहसंस्तस्मै[१]ददेहेरमृतंयथा ॥ २२

[२]स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ।

स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥ २३

तेनोपसृष्टस्संत्रस्तःपराधावत्सवेपथुः।यावदन्तंदिवोभूमेः[३]काष्ठानामुदगादुदक् ॥

अजानन्तःप्रतिविधिंतूष्णीमासन्सुरेश्वराः।ततोवैकुण्ठमगमद्भास्वरंतमसःपरम् ॥

यत्र नारायणस्साक्षान्न्यासिनां परमा गतिः ।

---

नृणां प्रीतः स्यां, त्वयातु वृथा आत्मा देहो भृशमर्दितः पीडितः ॥ २० ॥

मु ॥ निवार्य तदिममाह च—अङ्ग प्रियतम अलमलं साहसेन, मे मत्तः वरं वृणीष्व, यथानिकामं यथेष्टम् ॥ २० ॥

वी ॥ देवादिति ॥ स पापीयान् वृकः देवात् रुद्रात् भूतभयावहं वरं वृतवान् वरमेव दर्शयति—यस्येति । यस्ययस्य शीर्ष्णि अहं करं धास्ये स म्रियतामित्येवंविधं भूतभयावहमिति संबन्धः ॥ २१ ॥

मु ॥ स वरं वव्रे ॥ २१ ॥

वी ॥ तदिति ॥ हे भारत स्थाणुः शिवः, तद्वरणं श्रुत्वा तावद्दुर्मनाइव दुःखितमना भूत्वा, इवशब्दोऽनतिरिक्तार्थकः, प्रसभं बलात्तस्मै ओमित्यङ्गीकृत्य ददे दत्तवान् , यथा अहेः सर्पस्यामृतं क्षीरं तद्वत् ॥ २२ ॥

मु ॥ हेरमृतं यथेत्यकारलोप आर्षः, अहेरमृतमिव ददावित्यर्थः ॥ २२ ॥

वी ॥ स इति॥ असुरः वरस्य परीक्षार्थं किमयं वरः सत्य उत मिथ्यावेति परीक्षार्थमित्यर्थः, स शिवः स्वकृतादपराधात् स्वयमबिभ्यत् ॥ २३ ॥

मु ॥ एवं शीघ्रप्रसादत्वं प्रकाश्य सङ्कटप्राप्तिं दर्शयति—स इति ॥ तस्य वरस्य परीक्षार्थम् ॥ २३ ॥

वी ॥ तेनासुरेणोपसृष्टोऽनुगतः स शंभुर्जातवेपथुः कम्पितगात्रस्त्रस्तः पराधावत्, सोऽपि पृष्ठतोऽन्वधावदित्यनुक्तमपि योज्यम्, काष्ठानां दिशाम् उदगात् उत्तरतः अगात् ऊर्ध्वमगच्छद्वा, उदक् ऊर्ध्वमञ्चन् ॥ २४ ॥ २५ ॥

मु ॥ उपसृष्टः अनुगतः संत्रस्तः अतएव सवेपथुः सकम्पः दिवो भुवः काष्ठानां दिशां यावदन्तोऽस्ति, तावत्पर्यन्तमित्यर्थः, अधरात् उदक् पातालेषूर्ध्वलोकेषु चेत्यर्थः, पराधावत् धावनं चकार ॥ २४ ॥

मु ॥ प्रतिविधिं प्रतीकारं सुरेश्वराः ब्रह्मेन्द्रादयः, वैकुण्ठं विष्णुलोकं नतु परमस्थानं मुक्तप्राप्यम् , भास्वरं ज्योतिर्मयम् ॥ २५ ॥

वी ॥ अजानन्तइति ॥ सुरेश्वराश्चतुर्मुखेन्द्रादयः प्रतिविधिं प्रतिक्रियामजानन्तः

---

१. ददौ हेर. मु-भा प्र. पा ॥ २. "इत्युक्तस्सोऽसुरो नूनं गौरीहरणलालसः" इत्यधिकं क्वचित् ॥ ३. काष्ठानामधरादुदक्. मु-भा-प्र-पा ॥

शान्तानां न्यस्तदण्डानां यतो नावर्तते गतः ॥ २६
तंतथाव्यसनंदृष्ट्वाभगवान्वृजिनार्दनः।दूरात्प्रत्युदियाद्भूत्वाबटुकोयोगमायया॥ २७
मेखलाजिनदण्डाक्षैस्तेजसाऽग्निरिवज्वलन्।तमाशीर्वादयामासकुशपाणिर्विनीतवत्
श्रीभगवानुवाच—
शाकुनेयभवान्व्यक्तंश्रान्तःकिंदूरमागतः।क्षणंविश्रम्यतांपुंसआत्माऽयंसर्वकामधुक्
यदिनश्श्रवणायालंयुष्मद्व्यवसितंविभो।भण्यतांप्रायशःपुम्भिर्धृतैस्स्वार्थंसमीहते ॥

---

ततः वैकुण्ठमण्डान्तर्वर्तिनं कंचिद्विष्णुलोकं नतु परमस्थानं मुक्तप्राप्यं भास्वरं प्रकाशबहुलं तमसः परं प्रकृतिकार्यरहितं यत्र वैकुण्ठे गतिः प्राप्यः न्यस्तदण्डानां भूतद्रोहरहितानां सर्वभूतसुहृदामित्यर्थः. गतो यतो नावर्तते श्रीविष्णुलोकगतानां श्वेतद्वीपवासिनां च पुनर्जन्माभावात्, तं वैकुण्ठमगमदिति संबन्धः ॥ २६ ॥

मु ॥ यत्र यस्मिन् वैकुण्ठे न्यासिनां प्रपन्नानां परमा गतिः परमप्राप्यः अस्ति इति शेषः, यतः नारायणात् , यतइति पदस्य देशपरत्वेऽपि विष्णुलोकगतानां श्वेतद्वीपवासिनां च पुनर्जन्माभाव इत्यविरोधः, गतः वैकुण्ठं प्राप्तः ॥ २६ ॥

वी ॥ तमिति ॥ तं वृकासुरं तथा तादृशं व्यसनं दुःखं यस्य तं रुद्रंच दृष्ट्वा वृजिनार्दनो दुःखापहारी भगवान् योगमायया आत्मीयाश्चर्यशक्त्या बटुको भूत्वा मेखलादिभिरुपलक्षितस्तेजसा विग्रहकान्त्या अग्निरिव ज्वलन् दूरादेव प्रत्युदियात् तदभिमुखमाजगाम,कुशपाणिः पवित्रपाणिः अभिवादयामास, आहचेति शेषः ॥ २७ ॥ २८ ॥

मु ॥ योगमायया बटुको बटुर्भूत्वा, स्वार्थे कप्रत्ययः, दूरात् प्रत्युदियात् प्रत्यागच्छत् ॥ २७ ॥

मु ॥ विनीतवत् तं वृकम् अभिवादयामास च. कथंभूतः ? मेखला मौञ्जी अजिनं कृष्णाजिनं दण्डः पालाशः अक्षं पद्माक्षमाला, कुशपाणिः पवित्रपाणिश्च आह चेदमिति शेषः ॥ २८ ॥

वी ॥ तदेवाह—शाकुनेयेति ॥ हे शाकुनेय शकुनेस्सुत व्यक्तं नूनमयमात्मा देहः पुंसः सर्वान्कामान् दोग्धीति तथाभूतः, किं किमर्थं दूरमागतः, अहो श्रान्तस्त्वम्, अतो मायासयेति भावः ॥ २९ ॥

मु ॥ हे शाकुनेय व्यक्तं निश्चितमेतत् , भवान् श्रान्तः, दूरमागतः किं तथा शङ्के, अतः क्षणं विश्रम्यताम् , यस्मात् अयमात्मा देहः पुंसः सर्वकामधुक् सर्व पुरुषार्थसाधनम् , तस्मान्न पीडय इत्यर्थः ॥ २९ ॥

वी॥ यदीति ॥ युष्मद्व्यवसितं यदि नोऽस्माकं श्रवणायालं श्रोतुं योग्यं तर्हि हे प्रभो भण्यतामुच्यतां, पुमान् स्वार्थं चिकीर्षितं स्वप्रयोजनं पुम्भिः आप्तैस्सह समीहते आलोच्य करोति, अतो भण्यतामित्यर्थः ॥ ३० ॥

मु ॥ किञ्च यदि युष्मद्व्यवसितं चिकीर्षितं न अस्माकं श्रवणाय अलं समर्थं योग्यं तर्हि भण्यताम् , ततः किमित्यत आह—हे साधो सच्चरित्र प्रायशो जनः पुम्भिः सहायैः स्वार्थान् समीहते साधयितुमिच्छति, वयं तत्र साहाय्यं करिष्याम इत्यर्थः, यद्वा—स्वार्थं स्वप्रयोजनं पुम्भिः पुरुषैः साधयितुम् ईहते भवानित्यर्थः ॥ ३० ॥

श्रीशुक उवाच—

एवंभगवतापृष्टोवचसाऽमृतवर्षिणा। गतश्रमोऽब्रवीत्तस्मैयथापूर्वमनुष्ठितम्॥ ३१

श्रीभगवानुवाच—

एवंचेत्तर्हितद्वाक्यंनवयंश्रद्दधीमहि।योदक्षशापात्पैशाच्यंप्राप्तःप्रेतपिशाचराट्॥ ३२

यदिवस्तत्रविस्रम्भोदानवेन्द्रजगद्गुरौ।तर्ह्यङ्गाशुस्वशिरसिहस्तंन्यस्यप्रतीयताम्॥ ३३

यद्यसत्यंवचश्शम्भोःकथंचिद्दानवर्षभ।अतस्तंजह्यसद्वाचंनतद्वक्ताऽनृतंपुनः॥ ३४

श्रीशुक उवाच—

इत्थंभगवतश्चित्रैर्वचोभिस्स्मयपेशलैः।भिन्नधीर्विस्मृतश्शीर्ष्णिस्वहस्तंकुमतिर्न्यधात्

अथापतद्भिन्नशिरावज्राहतइवक्षणात्।जयशब्दोनमश्शब्दस्साधुशब्दोऽभवद्दिवि॥

---

वी॥ एवमिति॥ तस्मै भगवते अब्रवीत् कथयामास॥ ३१॥

मु॥ यथापूर्वं पूर्ववृत्तमनुलङ्घ्य स्वेनानुष्ठितं कर्म तस्मै अब्रवीत्॥ ३१॥

वी॥ इत्युक्तः प्राह भगवान्—एवंचेत्तर्हीति॥ अङ्ग हे वृक तद्वाक्यं रुद्रवाक्यं वरदानात्मकं न श्रद्दधीमहि न विश्वसिमः, तत्र हेतुत्वेन रुद्रं विशिनष्टि—यइति। यो रुद्रः दक्षशापात् पिशाचतां प्राप्तः प्रेतानां पिशाचानां च राडधिपतिः बभूव, नहि पिशाचवचो विश्वसनीयमिति भावः॥ ३२॥

मु॥ तद्वाक्यं तस्य वाक्यं वाचं वयं न श्रद्दधीमहि न विश्वसिमः, तत्र हेतुः—यइति। पैशाच्यं पिशाचत्वं प्रेतानां पिशाचानां च राट् राजा॥ ३२॥

वी॥ यदीति॥ हे दानवेन्द्र जगद्गुरौ जगद्गुरुतया त्वदभिमानविषये तत्र रुद्रे यदि वो युष्माकं विस्रम्भो विश्वासस्तर्ह्यङ्ग हे वृक स्वस्य शिरसि न्यस्य निधाय प्रतीयतां परीक्ष्यताम्॥ ३३॥

मु॥ तत्र तस्मिन् जगद्गुरौ यदि विस्रम्भः विश्वासः, तर्हि अङ्ग स्वशिरसि हस्तं न्यस्य परीक्ष्यतां परीक्षा क्रियताम्॥ ३३॥

वी॥ दानवर्षभ यदि शंभोर्वचः कथंचिदसत्यं स्यात्तर्हि तदन्ते तदनन्तरम् असद्वाचमनृतवाचं रुद्रं जहि नाशय, अन्यथा रुद्रः पुनस्तथा अनृतं वक्ता वक्ष्यति त्वामिवान्यानप्यनृतं वदन् वञ्चयिष्यति, अतस्तं जहीत्यर्थः॥ ३४॥

मु॥ हे दानवर्षभ शम्भोः वचः असत्यं यदि तत् तर्हि असौ पुनः अनृतम् असत्य न वक्ता न वदिष्यति, तदा असद्वादिनमेनं जहि॥ ३४॥

वी॥ इत्थमिति॥ चित्रैर्भ्रामकैः स्मयेन पेशलैः अतिरम्यैर्वचोभिर्भिन्नधीर्भ्रंशितमतिः कुमतिरसुरः विस्मृतः स्वशिरसि स्वहस्तं न्यधात् निहितवान्॥ ३५॥

मु॥ स कुमतिः चित्रैः भ्रामकैः पेशलैः मनोहरैश्च वचोभिः भिन्नधीः मोहितधीः विस्मृतः स्वहस्तं स्वस्य शीर्ष्णि अधात्॥ ३५॥

वी॥ अथ निधानानन्तरमेव वज्रेणाहत इव भिन्नं शिरो यस्य सः क्षणादपतत्. जयशब्द इति। स्पष्टोऽर्थः॥ ३६॥

मु॥ ३६॥

मुमुचुःपुष्पवर्षाणिहतेपापेवृकासुरे।देवर्षिपितृगन्धर्वामोचितस्सङ्कटाच्छिवः ॥ ३७
मुक्तंगिरिशमभ्याहभगवान्पुरुषोत्तमः।अहोदेवमहादेवपापोऽयंस्वेनपाप्मना ॥ ३८
हतःकोनुमहत्स्वीशजन्तुर्वैकृतकिल्बिषः।क्षेमीस्यात्किमुविश्वेशेकृतागस्कोजगद्गुरौ ॥

यएवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ।
गिरित्रमोक्षं कथयेच्छृणोतिवा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४०

इति श्रीभागवते महापुराणे दशमस्कन्धे उत्तरभार्धे रुद्रमोक्षणं नाम
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

वी ॥ देवादयः पुष्पवर्षाणि मुमुचुः, इत्थं शिवः संकटात् युक्त्या उपायेन मोचितः ॥ ३७ ॥

मु ॥ ३७ ॥

वी ॥ ततो भगवान् गिरिशमभ्येत्य प्राह—महादेवेति । पापात्मा अयं वृकासुरः स्वेनैव पाप्मना हतः किल,हे ईश महत्सु कृतकिल्बिषः कृतापराधः कोवा जन्तुः क्षेमी स्यात्, किमुत जगद्गुरौ जगद्धितकारिणि विश्वेशे त्वयि कृतापराधः क्षेमी स्यादिति, महादेवत्वेशत्वविश्वेश्वरत्वजगद्गुरुत्वव्यपदेशास्तदन्तरात्मभूतस्वात्माभिप्रायापन्नाः ॥

मु ॥ हे ईश महत्सु कृतकिल्बिषः कोनु जन्तुः क्षेमी निर्भयः स्यात् ॥ ३८ ॥

मु ॥ जगद्गुरौ त्वयि कृतापराधः कोनु क्षेमी स्यात्—इति किमु ॥ ३९ ॥

वी ॥ प्रकृतेतिहासप्रवचनश्रवणादिफलमाह—यइति ॥ एवमित्थं वाङ्मनसावेद्यविविधविचित्रानन्तशक्तिसागरस्य प्रकृतिपुरुषविलक्षणस्यान्तःप्रवेशनियमनव्याप्यगत दोषास्पर्शैर्लोकत्रयधारकस्य आश्रितार्तिहरस्य भगवतो गिरित्रकर्ममोक्षणप्रतिपादकमितिहासं यः पुमान् कथयेत् यो वा शृणोति स संसृतिभिः सांसारिकदुःखैः शत्रुभिश्च विमुच्यते ॥ ४० ॥

मु ॥ एतच्चरित्रश्रवणादिफलमाह—य इति ॥ अव्याकृताः व्याकर्तुमशक्याः अपरिच्छिन्नाः शक्तयः तासामुदन्वान् समुद्रः तस्य, तदुक्तम्—"शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता" इति. हरेः साक्षात् सुरसिद्धमुनीन्द्राणां प्रत्यक्षत एव मायावटुवेषेण गिरित्रमोक्षं गिरिशमोक्षं यः कथयेत् शृणोति वा स संसृतिभिः अरिभिश्च गिरीशवद्विमुच्यते ॥ ४० ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां
दशमस्कन्धेऽष्टाशीतितमोऽध्यायः ॥ ८८ ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायाम्
एकोननवतितमोऽध्यायः ॥ ८९ ॥

श्रीशुक उवाच—

सरस्वत्यास्तटेराजन्नृषयःसत्रमासत।वितर्कस्समभूत्तेषांत्रिष्वधीशेषुकोमहान्॥ १
तस्यजिज्ञासयातेवैभृगुंब्रह्मसुतंनृप।तज्ज्ञप्त्यैप्रेषयामासुस्सोऽभ्यगाद्ब्रह्मणस्सभाम्॥
नतस्मैब्रह्मणेस्तोत्रंचक्रेसत्त्वपरीक्षया।तस्मैचुक्रोधभगवान्प्रज्वलन्स्वेनतेजसा॥ ३

स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः।
अशीशमद्यथा वह्निं स्वयोन्या वारिणा प्रभुः॥ ४

ततःकैलासमगमत्सतंदेवोमहेश्वरः।परिरब्धुंसमारेभेउत्थायभ्रातरंमुदा॥ ५

---

वी ॥ इत्थं मोक्षप्रदत्वसर्वज्ञत्वसर्वशक्तित्वादिभिर्भगवतस्सर्वोत्कृष्टत्वं प्रदर्शितं, किं बहुना ब्रह्मर्षिभिरेव भगवतः परत्वं निर्णीतमित्यभिप्रेत्य तद्विषयकमितिहासान्तरं प्रस्तौति—सरस्वत्याइत्यादिना एकोननवतितमेन ॥ हे राजन् सरस्वत्या नद्यास्तटे सत्रम् आसत सत्रानुष्ठानार्थमुपविविशुरित्यर्थः, अधीशेषु इन्द्रादिभ्योऽधिकेषु ब्रह्मविष्णुरुद्रेष्वपि को महानभ्यधिक इति तेषामृषीणां वितर्को विवादः समभूत्, यद्यपि परावरतत्त्वविदां न वितर्कस्तथाऽपि लोकान्ग्राहयितुमभूदित्यर्थः, यद्वा—इदानीमिवतदापि रुद्रादिपरत्वाभिमानिनां दुर्वासःप्रभृतीनां सत्त्वाद्वितर्को बभूवेत्यर्थः ॥ १ ॥

मु ॥ इतिहासान्तरमाह—सरस्वत्या इति ॥ को महानिति वितर्कस्समभूत् ॥ १ ॥

वी ॥ तस्येति ॥ तस्य महत्त्वस्य जिज्ञासया ते ऋषयः हे नृप ब्रह्मणश्चतुर्मुखस्य सुतं भृगुं तज्ज्ञप्त्यै महत्त्वं वेत्तुमित्यर्थः, प्रेषयामासुः, स भृगुः तावद्ब्रह्मणश्चतुर्मुखस्य सभामभ्यगात् ॥ २ ॥

मु ॥ तस्य महतो जिज्ञासया युक्ताः ते तस्य ज्ञप्त्यै ब्रह्मसुतं भृगुं प्रेषयामासुः ॥

वी ॥ सत्त्वपरीक्षार्थं तस्मै ब्रह्मणे स्तोत्रं न कृतवान्, तस्मै भृगवे भगवान् ब्रह्मा चुक्रोध ॥ ३ ॥

मु ॥ तस्मै ब्रह्मणे प्रह्वणं प्रणामं सत्त्वस्य गुणस्य परीक्षया ॥ ३ ॥

वी ॥ सइति ॥ स ब्रह्मा आत्मजाय भृगवे आत्मनि मनसि उत्थितं मन्युं क्रोधमात्मना विवेकात्मिकया बुद्ध्या अशमयत्, यथा स्वयोन्या स्वस्यैव स्वरूपान्तरेणाभिव्यक्तिस्थानेन स्वकार्येणेति यावत्, तेन वारिणा यथा कश्चिद्वह्निं शमयति, तथा स्वकार्येण पुत्रनिमित्तेन क्रोधं शमयामासेत्यर्थः, यद्वा—स्वस्याग्नेः योनिररणिस्तस्या उत्थितं वह्निं जलेन कश्चित् शमयति तथा भृगोरुत्पत्तिस्थानभूतात् स्वस्मात्तदुत्थितं क्रोधं बुद्ध्या अशमयदित्यर्थः ॥ ४ ॥

मु ॥ स प्रभुः आत्मजाय आत्मन्युत्थितं मन्युम् आत्मना बुद्ध्यैव अशीशमत् शमयामास, स्वयोन्या स्वकारणकेन वारिणा स्वोत्थितमग्निं यथा जलधरः शमयति, तद्वत्, यद्वा—स्वयोन्या स्वस्यैव स्वरूपेण अग्न्यभिव्यक्तिस्थानेन स्वकार्येणेत्यर्थः, तेन यथा कश्चित् वह्निं शमयति, तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः ॥ ४ ॥

वी ॥ ततइति ॥ स भृगुः कैलासं जगाम, तं भृगुं परिरब्धुमालिङ्गितुम् ॥ ५ ॥

मु ॥ ५ ॥

नैच्छत्त्वमस्युत्पथगइतिदेवश्चुकोपह । शूलमुद्यम्यतंहन्तुमारेभेतिग्मलोचनः ॥
पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ॥ ६
अथोजगामवैकुण्ठंयत्रदेवोजनार्दनः।शयानंश्रियउत्सङ्गेपदावक्षस्यताडयत् ॥ ७
ततउत्थायभगवान्सहलक्ष्म्यासतांगतिः।स्वतल्पादवरुह्याशुननामशिरसामुनिम् ॥
आहतेस्वागतंब्रह्मन्निषीदात्रासनेक्षणम्।अजानतामागतान्वःक्षन्तुमर्हथ नःप्रभो। ९
[1]पुनीहिसहलोकंमांलोकपालांश्चमद्गतान्।पादोदकेन[2]भगवंस्तीर्थानांतीर्थकारिणा
अद्याहंभगवल्लँक्ष्म्याआसमेकान्तभाजनम्।वत्स्यत्युरसिमेभूतिर्भवत्पादहतांहसः॥

---

वी॥नैच्छदिति॥ त्वमुत्पथग इति वदन् परिरम्भणं नैच्छदित्यर्थः,देवो रुद्रः तस्मै चुकोप, किंच तीक्ष्णदृष्टिस्सन् शूलमुद्यम्य तं भृगुं हन्तुमारब्धवान्, पतित्वेति । देवी गिरा सान्त्वोक्त्या तं रुद्रम् ॥ ६ ॥

मु ॥ त्वमुत्पथग इत्युक्त्वा नैच्छत् , तदा देवः चुकोप ह, तं भृगुं देवी उमा॥ ६॥

वी॥ अथोइति॥ वैकुण्ठशब्दः पूर्ववद्विष्णुलोकपरः, श्रियो लक्ष्म्या उत्सङ्गे शयानं वक्षसि पादेनाताडयत् ॥ ७ ॥

मु ॥ वैकुण्ठशब्दः पूर्ववत् , यत्र वैकुण्ठे ॥ ७ ॥

वी ॥ ततइति ॥ सतां गतिरिति हेतुगर्भम्, अतः स्वतल्पादाशु अवरुह्य मुनिं भृगुं शिरसा ननाम ॥ ८ ॥

मु ॥ आगतान् वः युष्मान् अजानतां नः क्षन्तुमर्हथ, बहुवचनं पूजार्थम् ॥ ८ ॥

वी ॥ आहच—किमिति—हे ब्रह्मन् ते त्वया स्वागतं कुशलमागतं खलु, अत्रास्मिन्नासने क्षणं निषीद उपविश, हे प्रभो युष्मानागतानजानतां नोऽस्माकम् अपराधमिति शेषः, क्षन्तुमर्हथ ॥ ९ ॥

मु ॥ ९ ॥

वी ॥ पुनीहीति ॥ सहलोकं सवैकुण्ठं मां मद्गतान् मदावेशितचित्तान् मद्धार्यानिति वा, लोकपालांश्च हेभगवन् पादोदकेन पुनीहि, कथंभूतेन ? तीर्थानां गङ्गादीनामपि तीर्थकारिणा पवित्रत्वकारिणा ॥ १० ॥

मु ॥ लोकैः सह वर्तत इति सहलोकः तं मां पुनीहि परिशुद्धं कुरु, मद्गतान् मयि स्थितानित्यर्थः, तीर्थकारिणा परिशुद्धिकृतेत्यर्थः ॥ १० ॥

वी ॥ अद्येति॥ हे भगवन् अद्याधुना अहं लक्ष्म्या एकान्तभाजनं नियताश्रय आसं, तत्र हेतुत्वेनात्मानं विशिंषन्नाह—भवतः पादेन पादताडनेन हतम् अंहः पापं यस्य तस्य मम उरसि भूतिर्लक्ष्मीः वत्स्यति अनपायितया वर्तिष्यत इति ॥ ११ ॥

मु ॥ एकान्तभाजनं सर्वदा आश्रयः आसं, भवतः पादेन हतम् अंहो यस्य तस्य मे उरसि भूतिः वत्स्यति वासं करिष्यति ॥ ११ ॥

---

१. “ अतीव कोमलौ तात चरणौ ते महामुने । इत्युक्त्वा विप्रचरणौ मर्दयन्स्वेन पाणिना ” इत्यधिकं क्वचित् ॥ २. भवतः. पा ॥

[1]श्रीशुक उवाच—

एवंब्रुवाणेवैकुण्ठेभृगुस्तन्मन्द्रयागिरा।निर्वृतस्तर्पितस्तूष्णींभक्त्युत्कण्ठाश्रुलोचनः ॥

पुनस्सत्रंसमाव्रज्यमुनीनांब्रह्मवादिनाम्।स्वानुभूतमशेषेणराजन्भृगुरवर्णयत् ॥ १३

तन्निशम्याथमुनयोविस्मितामुक्तसंशयाः।भूयांसंश्रद्दधुर्विष्णुंयतश्शान्तिर्यतोऽभयम्

धर्मस्साक्षाद्यतोज्ञानंवैराग्यंचतदन्वितम्।ऐश्वर्यंचाष्टधायस्माद्यशश्चात्ममलापहम् ॥

मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।
अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १६

---

वी ॥ एवमिति ॥ तस्य भगवतो मन्द्रया गम्भीरया आशयगर्भया गिरा निर्वृतः तर्पितश्च भक्त्युत्कण्ठया भक्त्युद्रेकेणाश्रूणि लोचनयोर्यस्य सः तूष्णीमास ॥ १२ ॥

मु ॥ वैकुण्ठे भगवति एवं ब्रुवाणे ब्रुवति मन्द्रया गम्भीरया गिरा तर्पितः तृप्तिं नीतः निर्वृतः सुखितः तूष्णीं बभूव,भक्त्या उत्कण्ठया च जातान्यश्रूणि ययोस्ते लोचने यस्य स तथा, ‘ उत्कण्ठः’ इति पाठे भक्त्या उत्कण्ठः ॥ १२ ॥

वी ॥ पुनरिति ॥ आव्रज्य आगत्य हे राजन् स्वेनात्मना अनुभूतमशेषेणावर्णयत् ॥

मु ॥ आव्रज्य आगत्य ब्रह्मवादिनां वेदवादिनाम् ॥ १३ ॥

वी॥ तदिति तद्भृगुणोपवर्णितं निशम्य मुक्तसंशयाः गतसंशयाः अतएव निर्वृताः सुखिताः विष्णुमेव भूयांसं सर्वोत्कृष्टं श्रद्दधुः निश्चितवन्तः, परत्वोपयुक्तगुणाविष्कारपूर्वकनिश्चयप्रकारमेवाह—यतश्शान्तिरित्यादिना । यच्छब्दानां ‘त्रिविधाकृतयस्तस्य’ इत्युपरिष्टात्संबन्धः, यतः यस्मिन् शान्तिः, यतस्सेव्यमानादभयं मुक्तिः, यद्वा यतो यदुपासनादेव शान्तिः, एवमुत्तरत्रापि ॥ १४ ॥

मु॥ अथ मुनयः तन्निशम्य विस्मिताः मुक्तसंशयाः सन्तः विष्णुं भूयांसं श्रद्दधुः, कोपहेतौ विकृतत्वात् ब्रह्मादयः प्रकृतिवश्याः, परमपुरुषस्तु अविकृतत्वात् न प्रकृतिवश्यः, अपितु परः स्वतन्त्रः सर्वहेयप्रत्यनीकश्च, अतः प्रकृतिवश्यस्वेतरेभ्यः परइति निश्चितवन्त इत्यर्थः, अत एवोच्यते—‘सत्त्वं तस्यार्थसाधनम्’ इति, ‘ यतः शान्तिः ’ इति यच्छब्दानां ‘ त्रिविधाकृतयस्तस्य’ इति तच्छब्देन संबन्धः, यतः साक्षात् अभयं मोक्षः ॥ १४ ॥

वी ॥ धर्मोऽत्र ब्रह्मण्यताज्ञानं, सर्वविषयकं वैराग्यं विषयानभिलाषः, तदन्वितं शान्त्यादिभिस्सहितम् अष्टधा अणिमादिभेदेनाष्टविधमैश्वर्यं च आत्मनः भजतः पुंसः मलम् अपहन्तीति तथा तद्यशो यस्मिन्नित्यर्थः ॥ १५ ॥

मु ॥ तदन्वितं तेन अभयेन अन्वितं संबद्धं तत्साधनं ज्ञानम् ॥ १५ ॥

वी ॥ मुनीनामिति ॥ न्यस्तदण्डानां भूतद्रोहरहितानां समचेतसां सर्वात्मब्रह्मबुद्धीनाम् अकिंचननां प्रयोजनान्तररहितानां परोपकारशीलानां यं परमां गतिं प्राप्यमाहुः ॥ १६ ॥

मु ॥ वैराग्यादयश्च यस्मात् अष्टधा भिन्नम् ऐश्वर्यम् आत्ममलापहं शुद्धं यशः ॥

---

१. श्रीवत्ससमितिनामा हि जायतां पादलक्षणः. इत्यर्धमधिकं क्वचित् ॥

सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ।
भजन्त्यनाशिषश्शान्ता यं वा निपुणबुद्धयः ॥ १७

त्रिविधाकृतयस्तस्य राक्षसा असुरास्सुराः ।
गुणिन्या मायया सृष्टास्सत्त्वन्तत्तीर्थसाधनम् ॥ १८

---

वी ॥ सत्त्वमिति ॥ सत्त्वं रजस्तमोभ्यामननुविद्धं शुद्धसत्त्वं यस्य प्रिया मूर्तिः शरीरं यस्य च इष्टदेवताः ब्राह्मणाः अनाशिषः निष्कामाः शान्ताः जितेन्द्रियाः निपुणा बुद्धिर्येषां ते यं भजन्ति ॥ १७ ॥

मु ॥ यश्च मुनीनां परमां गतिम् आहुः, यस्य च सत्त्वं प्रिया मूर्तिः, ब्राह्मणा एव इष्टदेवताश्च भवन्ति. यं च निपुणबुद्धयः शिक्षितबुद्धयः अत एव अनाशिषः अकामा भजन्ति ॥ १७ ॥

वी ॥ त्रिविधेति॥ तस्येत्थंभूतस्य निस्समाभ्यधिकस्य गुणिन्या सत्त्वादित्रिगुणमय्या मायया सृष्टा राक्षसा असुराः सुराश्चेति त्रिविधा अपि आकृतयः तस्यैव शरीरभूता इत्यर्थः, तत्र देवास्सत्त्वप्रचुराः, असुरास्तु रजःप्रचुराः, राक्षसास्तमःप्रचुराः, देवादिषु त्रिष्वप्यासुरमानुषदैवसंपत्तिभिरभिजातास्सन्त्येवेति भगवद्गीतासूक्तम्, एवंच सर्वेऽप्येते नोपास्या इति भावः,तथाचोक्तं शौनकेन—"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गतास्सर्वे ते हि संसारगोचराः॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत्" इति, एतदेवाह—सत्त्वं तत्तीर्थसाधनमिति । यत्सत्त्वं शुद्धसत्त्वमयं भगवच्छरीरं तदेव तीर्थसाधनम् उपास्यमानं सन्निश्शेषप्रकृतिसंबन्धक्षपणद्वारा आत्मशुद्धिसाधनमित्यर्थः ॥ १८ ॥

मु ॥ हरेः त्रिविधा आकृतयः राक्षसा असुराः सुराश्च तामस्यो राजस्यः सात्विकयश्च गुणिन्या सत्त्वादिगुणवत्या मायया प्रकृत्या सृष्टाः विषमाः यस्मिंस्ता इत्यर्थः, तस्य भगवतः सत्त्वं गुणः यः अर्थस्य परमपुरुषार्थस्य मोक्षस्य साधनम्,न्यस्तदण्डानामिति कोपशान्तिरुक्ता, शान्तानामिति कामशान्तिः, समचेतसामिति भ्रमशान्तिः, निष्किञ्चनानामिति भोगशान्तिः, साधूनामिति कौटिल्यशान्तिः, शान्ताः प्रत्यक्प्रवणबुद्धयः, वैराग्यं चतुर्विधमिति पाठे तच्च तच्चातुर्विध्यमेवं द्रष्टव्यम्, विषयांस्त्यक्तवतोऽपि स्वसंमानेच्छात्यागो नाम आद्यं वैराग्यं, ततो विषयाणां मध्ये लवणादिव्यतिरेकेण वृत्तिः द्वितीयं, तथावृत्तावपि मनसि रागशैथिल्येन बाह्येन्द्रियैरेव विषयसेवनं तृतीयं, तत्राप्यौदासीन्यं चतुर्थम्, यथाहुः—"वैराग्यमूह्यं यतमानमानसं क्वचिद्विरागो व्यतिरेकसंज्ञः । एकेन्द्रियाख्यो हृदि रागमोक्षः तस्याप्यभावस्तु वशीकृताख्यः" इति॥

श्रीशुक उवाच—

[1]इत्थं सारस्वता विप्रा नृणां संशयनुत्तये।पुरुषस्यपदाम्भोजसेवयातद्गतिंगताः॥

सूत उवाच—

इत्येतन्मुनितनयस्य पद्मगन्धि पीयूषं भवभयभित्परस्य पुंसः ।
[2]सुश्लोक्यं श्रवणपुटैः पिबन्नभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति ॥

श्रीशुक उवाच—

एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः ।
जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत ॥ २१

विप्रोगृहीत्वामृतकंराजद्वार्युपधायसः।इदंप्रोवाचविलपन्नातुरोदीनमानसः॥ २२

ब्रह्मद्विषश्शठधिया[3]लुब्धस्याविजितात्मनः ।

---

वी ॥ इत्थमिति ॥ सारस्वताः सरस्वतीतीरवासिनो विप्राः नृणां संशयनिवृत्तये इत्थं निश्चित्य परमपुरुषस्य पदाम्भोजसेवया तद्गतिं मुक्तिं प्राप्ताः ॥ १९ ॥

मु ॥ इतिहासमुपसंहरति—इत्थमिति ॥ सारस्वताः सरस्वतीतीरवासिनः नृणां संशयनुत्तये त्रिष्वधीशेषु प्रधानविषयसंशयापनोदनार्थम् इत्थं विचार्य निश्चित्य पुरुषस्य हरेः पदाम्भोजसेवया तस्य गतिं पदं गताः ॥ १९ ॥

वी ॥ प्रकृतेतिहासश्रवणफलमाह सूतः—इत्येतदिति॥ मुनेः द्वैपायनस्य यस्तनयः शुकः तस्य आस्यपद्मं मुखपद्मं तस्य गन्धो यस्मिन् तत्पीयूषममृतमेतद्भगवतः परत्वप्रकाशकेतिहासात्मकं भयं संसृतिभयं भिनत्तीति तथा सुश्लोक्यं बहुमन्तव्यं प्रसिद्धामृतं तु नैवंविधमिति भावः, अभीक्ष्णं पुनःपुनः कर्णपुटैः श्रोत्रचषकैः पिबन् पान्थः संसाराध्वगः अध्वभ्रमणपरिश्रमं प्रकृतिमण्डलपरिभ्रमणजं जहाति मुक्तो भवतीत्यर्थः॥२०॥

मु ॥ एतच्छ्रवणादिफलमाह—इतीति ॥ परस्य पुंसः सुश्लोकं शोभनं यशः मुनेः व्यासस्य तनयस्य आस्यमेव पद्मं तस्मात् उद्गतं गन्धयुक्तं पीयूषतुल्यं श्रवणपुटैः अभीक्ष्णं पिबन् पान्थः संसाराध्वश्रान्तः अध्वनि संसारमार्गे भ्रमणेन यः परिश्रमः तं जहाति मुक्तिं प्राप्नोतीत्यर्थः, भवात् भयं भिनत्तीति तत् ॥ २० ॥

इति दशमव्याख्यायां मुनिभावप्रकाशिकासमाख्यायां नवतितमोऽध्यायः ॥ ९० ॥

---

वी ॥ अत्र केचिदध्यायं समापयन्ति ॥ अथ योऽसावुक्तविधः परमपुरुषः सएव श्रीकृष्ण इति दर्शयितुमितिहासान्तरं प्रस्तौति—एकदेत्यादिना ॥ विप्रस्य कस्यचित्पत्न्याः कुमारो हे भारत जातमात्रस्तदैव भुवं स्पृष्ट्वा ममार ॥ २१ ॥

वी ॥ विप्रइति ॥स विप्रः राजद्वारे उपधाय निधाय इदं वक्ष्यमाणं प्रोवाच॥ २२॥

वी॥ इदमिति ॥ विवक्षितमेवाह—ब्रह्मद्विषइति द्वाभ्यां ॥ ब्रह्म ब्राह्मणान् द्वेष्टीति

---

१. एवं. पा ॥ २. सुश्लोकं. मु-भा-प्र-पा ॥ ३ लुब्धस्याविषयात्मनः. पा ॥

क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः ॥ २३

हिंसाविहारं नृपतिं दुश्शीलमजितेन्द्रियम् ।
प्रजा भजन्त्यस्सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २४

एवं द्वितीयं [१]ब्रह्मर्षिस्तृतीयं त्वेवमेवच ।
विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २५

तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके ।
परेते नवमे बाले ब्राह्मणं समभाषत ॥ २६

किंस्विद्ब्रह्मंस्त्वन्निवास इह नास्ति धनुर्धरः ।
राजन्यबन्धुरेतेवै ब्राह्मणास्सत्रमासते ॥ २७

धनदारात्मजायुक्ता यत्र शोचन्ति ब्राह्मणाः ।
तेवै राजन्यवेषेण नटा जीवन्त्यसुंभराः ॥ २८

अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ।
अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्येहतकल्मषः ॥ २९

तथा तस्य शठस्य मूर्खस्यैव धीर्यस्य लुब्धस्य निषादतुल्यस्याजितेन्द्रियस्य क्षत्रबन्धोः क्षत्रियाभासस्य राज्ञः कर्मदोषात् दुर्व्यापारदोषात् ममार्भकः पञ्चत्वं मरणं प्राप्तः, मयि तु न कश्चिद्दोष इति भावः ॥ २३ ॥

वी ॥ तदेव दृढीकरोति—हिंसैव विहारो यस्य तं दुष्टं शीलं वृत्तिर्यस्य तम् अजितेन्द्रियं नृपं भजन्त्यः प्रजाः सीदन्ति दुःख्यन्ति नित्यं दुःखिताः दरिद्राश्च भवन्ति ॥

वी ॥ एवमिति ॥ एवमेवचाष्टकृत्वः स विप्रो नृपद्वारि मृतकं विसृज्य तां गाथां 'ब्रह्मद्विषः' इत्यादिवाक्यमगायत प्रोवाच ॥ २५ ॥

वी ॥ तामिति ॥ परेते मृते सति नवमे बाले पूर्ववद्विप्रेण गीतां तां गाथां श्रुत्वा॥

वी ॥ भाषणमेवाह—किंस्विदिति त्रिभिः॥ हे ब्रह्मन् इह त्वन्निवासभूते पुरे धनुर्धरः कोऽपि नास्ति किंस्वित् धनुर्धरमात्रो राजन्यबन्धुरपि नास्ति किमित्यर्थः, ब्रह्मण्यो नास्त्येवेति भावः, एते तु सत्रमासते, ये ब्राह्मणाः सत्रयागे ब्राह्मणा इव मिलिताः धनादिभिर्युक्ताः सुखमासत इत्यर्थः ॥ २७ ॥

वी ॥ यत्र येषु जीवत्सु ब्राह्मणा धनदारात्मजैः अयुक्ताः वियुक्ताः एवं शोचन्ति, ते वै राजन्यरूपेण क्षत्रियवेषेण नटा इव असुंभराः स्वप्राणपोषणपराः जीवन्ति, ते जीवच्छवप्राया इति भावः ॥ २८ ॥

वी ॥ अहमिति ॥ दीनयोर्वां युवयोः प्रजां जनिष्यमाणं पुत्रमहमिहैव स्थित्वा रक्षिष्ये,यद्यहमनिस्तीर्णप्रतिज्ञः अनिष्पादितप्रतिज्ञः स्यां तर्हि अग्निं प्रवेक्ष्ये,ततो हतकल्मषः ब्राह्मणविलापश्रवणपातकात् अनृतभाषणाच्च पातकान्मुक्तो भवेयम्,अहतकल्मष इति वा च्छेदः, यद्यनिस्तीर्णप्रतिज्ञस्तर्हि अनिरस्तपापस्तदपनोदनाय प्रवेक्षामीत्यर्थः॥

१. विप्रर्षिः. पा ॥

ब्राह्मण उवाच—

सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।
अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३०
तत्कथं नु भवान्कर्म दुष्करं जगदीश्वरैः ।
चिकीर्षसि त्वं बालिश्यान्न तच्छ्रद्दध्महे वयम् ॥ ३१

अर्जुन उवाच—

नाहं संकर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेवच ।
अहंवा अर्जुनो नाम गाण्डीवं यस्य मे धनुः ॥ ३२
मावमंस्था मम ब्रह्मन्वीर्यं त्र्यम्बकतोषणम् ।
मृत्युं विजित्य प्रधन आनेष्ये ते प्रजां विभो ॥ ३३
एवं विस्रम्भितो विप्रः फल्गुनेन परंतप ।
जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३४
प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः ।
पाहिपाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३५
स उपस्पृश्य शुच्यम्बु नमस्कृत्य महेश्वरम् ।
दिव्याण्यस्त्राण्यनुस्मृत्य सज्यं गाण्डीवमाददे ॥ ३६

---

वी ॥ एवमुक्तः प्राह ब्राह्मणः—संकर्षणइतिद्वाभ्यां॥ संकर्षणो बलदेवः वासुदेवः श्रीकृष्णः धन्विनां श्रेष्ठः प्रद्युम्नः न विद्यते प्रतिरथस्समबलो यस्य सोऽनिरुद्धश्चेत्येते यन्मदपत्यं त्रातुं न शक्नुवन्ति ॥ ३० ॥

वी ॥ तज्जगदीश्वरैरपि कर्तुमशक्यं मदपत्यत्राणात्मकं कर्म कथं भवान् कर्तुं शक्नोति,यतस्त्वं बालिश्यादज्ञानान्मौर्ख्याद्वा चिकीर्षसि तत्तस्माद्वयं न श्रद्दध्महे न विश्वसिमः ॥ ३१ ॥

वी ॥ इत्थमुक्तः प्राहार्जुनः—नाहमिति द्वाभ्यां॥ कार्ष्णिः कृष्णस्यापत्यं पुमान् प्रद्युम्नः,चकारादनिरुद्धश्च न भवामि,किंतु तेभ्योऽप्यतिशयितशक्तिरर्जुनोऽहं, यस्यार्जुनस्य मम गाण्डीवं धनुरस्ति ॥ ३२ ॥

वी ॥ हे ब्रह्मन् मम वीर्यं मावमंस्थाः अवहेलनं मा कार्षीः, तत्र हेतुत्वेन विशिनष्टि—त्र्यम्बकतोषणं त्र्यम्बको रुद्रः स तुष्यत्यनेनेति तथा तत्: अतो हे प्रभो मृत्युमपि प्रधने युद्धे विजित्य त्वत्प्रजामानेष्ये ॥ ३३ ॥

वी ॥ एवमिति ॥ इत्थं फल्गुनेनार्जुनेन विस्रम्भितः विश्वासं प्रापितः विप्रः प्रीतः स्वगृहं जगाम, ततो हे परंतप पार्थस्य वीर्यं निशामयन् आस्तेति शेषः ॥ ३४ ॥

वी ॥ प्रसूतिकालइति ॥ भार्यायाः प्रसूतिकाले आसन्ने सति तदा द्विजसत्तम आतुरस्सन्नर्जुनं प्रतीत्थमाह—कथं? मम प्रजां मृत्योः पाहिपाहीति ॥ ३५ ॥

वी ॥ सइति ॥ सोऽर्जुनः शुचि शुद्धम् अम्बु जलम् उपस्पृश्याचम्य ॥ ३६ ॥

न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः ।
तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३७
ततः कुमारस्संजातो विप्रपत्न्या रुदन्मृतः ।
सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३८
तदाऽऽह विप्रो विजयं विनिन्दन्कृष्णसन्निधौ ।
मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ३९
न प्रद्युम्नो नानिरुद्धो न रामो नच केशवः ।
यन्न शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ ४०
धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ।
दैवोपसादितं मौढ्यादानिनीषति दुर्मतिः ॥ ४१
एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ।
ययौ संयमनीमाशु यत्रास्ते भगवान्यमः ॥ ४२
विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात्पुरीम् ।
आग्नेयीं नैर्ऋतीं याम्यां वायव्यां वारुणीमथ ॥ ४३
रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ।

---

वी ॥ न्यरुणदिति ॥ न्यरुणदावृतवान्, तदेवाह—तिर्यगूर्ध्वमिति ॥ ३७ ॥

वी ॥ ततइति ॥ विप्रपत्न्याः संजातः कुमारो रुदन्नेव मृतः अदर्शनमापेदे, देहोऽपि नावशिष्ट इत्यर्थः ॥ ३८ ॥

वी ॥ तदेति ॥ अहो मम मौढ्यं पश्यत, योऽहं क्लीबस्य षण्डस्यार्जुनस्य कत्थनं प्रगल्भभाषणं श्रद्दधे विश्रब्धवान् अस्मि, अतोऽहं मूढः ॥ ३९ ॥

वी ॥ प्रद्युम्नादय एव यत्परित्रातुं न शेकुर्न प्रबभूवुः, तत् मदपत्यं त्रातुं को वा ईश्वरस्समर्थः, अतोऽर्जुनं धिक् स निन्द्य इत्यर्थः, "उभसर्वतसोः" इति द्वितीया, तत्र हेतुः—मृषा वदतीति तथा तम् आत्मस्तुतिशीलस्यास्य धनुर्गाण्डीवमपि धिक्, तत्र हेतुः योऽर्जुनः दुष्टा मतिर्यस्य तथाभूतस्सन् दैवेनोपसादितं लोकान्तरं प्रापितं मौढ्यादानिनीषति आनेतुमिच्छति ॥ ४० ॥ ४१ ॥

वी ॥ एवं विप्रर्षौ शपति निन्दति सति स फाल्गुनोऽर्जुनो विद्यां सर्वलोकसंचारावहां योगविद्यामाश्रित्य तावत्संयमनीं यमपुरीं प्रति ययौ, यत्र संयमन्यां भगवान् यम आस्ते तामित्यर्थः ॥ ४२ ॥

वी ॥ तत्र विप्रस्यापत्यमचक्षाणोऽपश्यन् एवं क्रमेणैन्द्र्यादिपुरीस्तत्रतत्राचक्षाणो ययौ, याम्या पुरी संयमन्या अन्यैव यमस्यैव संबन्धिनी दक्षिणादिक्स्था ॥ ४३ ॥

वी ॥ रसातलं पातालं नाकपृष्ठं नाकस्य स्वर्गस्य पृष्ठमुपरितनं लोकं, किंबहुना सर्वांश्च लोकान् वायुवच्चचार, ततस्तत्र सर्वत्राप्यलब्धो द्विजसुतो येन सः अतएवा-

ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ॥
अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४४
दर्शये द्विजसूनूंस्ते मावज्ञामात्मनः कृथाः ।
एतेन कीर्तिं विमलां मनुष्याः स्थापयन्ति ते ॥ ४५
इति संभाष्य भगवानर्जुनेन महेश्वरः ।
[1]दिव्यं स्वरथमारुह्य प्रतीचीं दिशमाविशत् ॥ ४६
सप्तद्वीपान्सप्तसिन्धून्सप्तसप्तगिरीनथ ।
लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४७
[2]तत्राश्वाश्शैब्यसुग्रीवमेघपुष्पवलाहकाः ।
तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४८
तान् दृष्ट्वा भगवान्कृष्णो महायोगेश्वरेश्वरः ।
सहस्रादित्यसंकाशं स्वचक्रं प्राहिणोत्पुरः ॥ ४९
तमस्सुघोरं गहनं कृतं महद्विदारयद्भूरितरेण रोचिषा ।
मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूम् ॥ ५०
द्वारेण चक्रानुपथेन तत्तमःपरं पदं ज्योतिरनन्तपारम् ।

---

निस्तीर्णप्रतिज्ञः अतएवाग्निं प्रवेष्टुमिच्छुः प्रतिषेधता सामोक्तिभिः प्रतिषेधं कुर्वता श्रीकृष्णेन प्रत्युक्तो निवारितः ॥ ४४ ॥

वी ॥ प्रतिषेधपूर्वकनिवारणप्रकारमेवाह—दर्शयइति ॥ द्विजस्य सूनून् ते तुभ्यं दर्शये दर्शयिष्यामि, आत्मनः स्वस्यावज्ञां मा कृथाः, एवं चेत्—तवामलां कीर्तिमेते मनुष्याः स्थापयन्ति निश्चलां करिष्यन्ति, दूषयन्तीति पाठान्तरं, तदा आत्मनोऽवज्ञानं करोषि चेत्कीर्तिं दूषयिष्यन्तीत्यर्थः ॥ ४५ ॥

वी॥इतीति॥संभाष्य संभाषणेन प्रतिबोध्य भगवान्महेश्वरः श्रीकृष्णोऽर्जुनेन सह स्वकीयं रथमारुह्य पश्चिमां दिशमाविशत् ॥ ४६ ॥

वी ॥ सप्तद्वीपानिति ॥ सप्तसप्त गिरयो येषु तान् द्वीपान् ततो लोकालोकं पर्वतमतीत्य सुमहन्निबिडं तमोऽन्धकारं विवेश ॥ ४७ ॥

वी ॥ तत्र तमसि शैब्यादयोऽश्वाः प्रतिहतगतयो बभूवुः ॥ ४८ ॥

वी ॥ तानिति ॥ तान् भ्रष्टगतीन् अश्वान् दृष्ट्वा श्रीकृष्णः स्वचक्रं सुदर्शनं पुरः अश्वानां पुरतः प्राहिणोत् प्रायुङ्क्त ॥ ४९ ॥

वी ॥ तमइति ॥ गहनं दुष्प्रवेशं सुघोरं भयंकरं महदपारं कृतं भगवतैव सृष्टं तमो भूरितरेण बहुतरेण स्वतेजसा विदारयन्मनोजवं सुदर्शनं विवेश, यथा रामस्य दाशरथेः शरो गुणात् मौर्व्याश्च्युतश्चमूं रावणसेनां विवेश, तद्वत् ॥ ५० ॥

वी ॥ द्वारेणेति ॥ चक्रानुपथेन चक्रमनुगतेन द्वारेण तस्मात्तमसः परं दूरे वर्त-

---

[1]. दिव्याश्व पा ॥ [2]. अत्र सैन्येति क्वचिन्मूले व्याख्याने च दृश्यते, तथापि शैब्येत्येव पाठो भूयसा दृश्यत इति स एवाङ्गीकृतः ॥

समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥ ५१
ततः प्रविष्टस्सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभीषणम् ।
तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम् ॥ ५२
तस्मिन्महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः ।
विभ्राजमानं द्विगुणोल्बणेक्षणं सिताचलाभं शितिकण्ठजिह्वम् ॥ ५३
ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५४
महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ।
प्रलम्बचार्वष्टभुजं सुकौस्तुभं श्रीवत्सलक्ष्मं वनमालयावृतम् ॥ ५५
सुनन्दनन्दप्रमुखैश्च पार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्यजयाखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५६

---

मानं भगवतमनन्तपारं ज्योतिः समश्नुवानं प्राप्नुवच्चक्रं प्रसमीक्ष्य फाल्गुनोऽर्जुनः प्रताडिते प्रतिहते अक्षिणी दृष्टी यस्य सः उभे अप्यक्षिणी अपिदधे न्यमीलयत् ॥५१॥

वी ॥ ततइति ॥ ततस्तमसः परतो जलं प्रविष्टः, कथंभूतः? बलीयसा प्रचण्डेन नभस्वता वायुना एजन्तः उच्चलन्तः बृहन्तः ऊर्मयस्तरङ्गास्तैर्भीषणं, भूषणमिति पाठे ऊर्मय एव भूषणं यस्य तथाभूतं तत्र जलस्याधस्तादद्भुतं भवनं प्रविष्ट इत्यनुषङ्गः; कथंभूतं? द्युमत्तमं द्युतिमच्छ्रेष्ठं भ्राजतां मणिमयस्तम्भानां सहस्रेणोपशोभितम् ॥

वी ॥ तस्मिन्निति ॥ तस्मिन्भवने तं प्रसिद्धम् अनन्ताख्यं महान्तमहिं ददर्शेत्युत्तरेण सम्बन्धः, कथंभूतम्? अद्भुतं विस्मयनीयं सहस्रं मूर्धानः फणास्तेषु भवास्तेषां महतां मणीनां द्युभिर्दीप्तिभिर्विशेषेण भ्राजमानं द्विगुणैः द्विसहस्रसङ्ख्यैरीक्षणैरुल्बणमुग्रं सिताचलः स्फटिकपर्वतः तस्याभा इवाभा यस्य तं शितिः नीलः कण्ठो जिह्वाश्च यस्य तम् ॥ ५३ ॥

वी ॥ ददर्शेति ॥ तस्यानन्तस्य भोगः शरीरमेव सुखासनं यस्य तं विभुं भगवन्तं ददर्श, कथंभूतं? महाननुभावः प्रभावो यस्य तं पुरुषोत्तमानां ब्रह्मादीनामप्युत्तमं सान्द्रस्याम्बुदस्येवाभा यस्य शोभने पिशङ्गे वाससी यस्य प्रसन्नं वक्त्रं च यस्य रुचिरे सुन्दरे आयते च अक्षिणी यस्य तम् ॥ ५४ ॥

वी ॥ महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां प्रभया परिक्षिप्ताः सर्वतः स्फुरन्तः अनन्ताः कुन्तलाः यस्य तं प्रलम्बा दीर्घाश्चारवो वर्तुलाश्चाष्टौ भुजा यस्य शोभनः कौस्तुभो यस्य श्रीवत्सं लक्ष्म चिह्नं यस्य तं वनमालया अलंकृतं च ॥ ५५ ॥

वी ॥ सुनन्दनादिभिः पार्षदैर्विग्रहधरैश्चक्रादिभिस्स्वासाधारणैरायुधैश्च पुष्टादिभिश्शक्तिभिर्मूर्तिमतीभिस्तथा अखिलर्द्धिभिरणिमादिभिस्सेव्यमानं परमेष्ठिनां ब्रह्मादीनां पतिम् ॥ ५६ ॥

ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः ।
तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥ ५७
द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्ति मे ॥ ५८
पूर्णकामावपियुवांनरनारायणावृषी।धर्ममाचरतांस्थित्याऋषभौलोकसङ्ग्रहम्॥ ५९
इत्यादिष्टौभगवतातौकृष्णौपरमेष्ठिना।ओमित्यानम्यभूमानमादायद्विजदारकान् ॥
न्यवर्तेतांस्वकंधामसंप्रहृष्टौयथागतम्।विप्रायददतुःपुत्रान्यथारूपांस्तदाप्रभू ॥ ६१
निशाम्यवैष्णवंधामपार्थःपरमविस्मितः।यत्किञ्चित्पौरुषंपुंसांमेनेकृष्णानुकम्पितम्
इतीदृशान्यनेकानिवीर्याणीहप्रदर्शयन्।बुभुजेविषयान्ग्राम्यानीजेचात्यूर्जितैर्मखैः ॥

---

वी॥ ववन्दइति ॥ अजं हेयप्रतिभटं स्वस्मादनन्यं तमच्युतो ववन्दे ननाम, तथा जिष्णुः अर्जुनश्च तस्य भगवतो दर्शनेन जातं साध्वसं भक्तिपूर्वकभयं यस्य सः ववन्दे, ततो बद्धाञ्जली तौ कृष्णार्जुनौ प्रति परमेष्ठिनां पतिः प्रभुर्भगवान् ऊर्जितया गम्भीरया गिरा प्राह ॥ ५७ ॥

वी ॥ उक्तिमेवाह—द्विजात्मजाइति ॥ युवयोर्युवां दिदृक्षुणा द्रष्टुमिच्छता मया द्विजात्मजाः मे उपनीताः मदन्तिकं प्रापिताः, किमावयोर्दर्शनेनेत्यत्राह — धर्मगुप्तये भुवि कलयाऽवतीर्णौ कलावतीर्णाविति च्छत्रिन्यायेनोक्तं, 'कृष्णस्तु भगवान् स्वयम्' इत्युपक्रमे पूर्णावतारत्वोक्तेः, अतो मदवतारत्वान्मम दिदृक्षा जातेति भावः, अर्जुनस्य नरांशत्वप्रसिद्धिमुपजीव्येत्थमुक्तं, नरस्य नारायणांशावतारत्वात् अवनेः भूमेः भारायितान् असुरान् हत्वा भूयस्त्वरया ममान्ति समीपम् इतम् आगच्छतम्,"इण् गतौ" इत्यस्य रूपम् ॥ ५८ ॥

वी॥ किंच युवां पूर्वं नरनारायणावृषी भूत्वेति शेषः, ऋषभौ श्रेष्ठौ, हेतुगर्भमिदम्, अतः पूर्णकामावपि स्थित्यै जगद्रक्षणार्थं लोकसंग्रहं धर्ममाचेरतुः आचरितवन्तौ, लोकोऽर्वाचीनो जनः संगृह्यते प्रवर्त्यतेऽनेनेति तथा तम्, अत्र " यद्यदाचरति श्रेष्ठः " इत्यादिगीतावचनार्थ उपक्षिप्तः ॥ ५९ ॥

वी ॥ इतीति ॥ भगवता परमेष्ठिना इत्थमादिष्टौ तौ कृष्णौ कृष्णार्जुनौ ओमिति तदाज्ञामङ्गीकृत्य भूमानं भगवन्तं प्रणम्य द्विजपुत्रानादाय संप्रहृष्टौ धाम स्वगृहं प्रति यथागतं न्यवर्तेतामाजग्मतुः, यथारूपाननतिक्रान्तस्वस्वपूर्वरूपान् प्रभू कृष्णार्जुनौ ददतुः ॥ ६० ॥ ६१ ॥

वी॥ निशाम्येति॥ विष्णोस्संबन्धि धाम स्थानं निशाम्य दृष्ट्वा पुंसां यत्किंचित्पौरुषमस्ति तत्सर्वं कृष्णानुकम्पितं श्रीकृष्णकृपालब्धमेवेति मेने, " शब्दः खे पौरुषं नृषु " इति गीतं दृष्टान्तमुखेन निश्चितवानित्यर्थः ॥ ६२ ॥

वी ॥ इतीति॥ ईदृशानि अतिदैवमानुषाणि चरित्राणि दर्शयन्नखिलेश्वरो भगवान् ग्राम्यान् विषयान् भोगान् बुभुजे, अखिलेश्वर इत्यनेन भोगप्रयुक्तकर्मवश्यत्वं व्युदस्यते, ऊर्जितैः पुष्कलदक्षिणैः मखैः यज्ञैः ईजे इष्टवान् ॥ ६३ ॥

प्रववर्षाखिलान्कामान्प्रजासु ब्राह्मणादिषु ।
यथाकालं यथैवेन्द्रो भगवाञ्छ्रैष्ठ्यमास्थितः ॥
हत्वानृपानधर्मिष्ठान्घातयित्वार्जुनादिभिः।अञ्जसावर्तयामासधर्मंधर्मसुतादिभिः॥
इति श्रीभागवते महापुराणे उत्तरार्धे दशमस्कन्धे द्विजकुमारानयनं नाम एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

श्रीशुक उवाच—
[१]सुखंस्वपुर्यांनिवसन्द्वारकायांश्रियःपतिः।सर्वसंपत्समृद्धायांजुष्टायांवृष्णिपुङ्गवैः॥
स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।
कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तटिद्द्युभिः ॥ २
नित्यंसङ्कुलमार्गायांमदच्युद्भिर्मतङ्गजैः।स्वलङ्कृतैर्भटैरश्वैरथैश्चकनकोज्ज्वलैः ॥ ३
उद्यानोपवनाढ्यायांपुष्पितद्रुमराजिषु।निर्विशद्भृङ्गनिवहैर्नादितायांसमन्ततः ॥ ४

वी ॥ ब्राह्मण आदिर्यासां तासु प्रजासु अखिलानभिलषितान् कामान् प्रववर्ष, यथेन्द्रो यथाकालं वर्षितुमनतिक्रम्य वर्षति तथा भगवानपि श्रैष्ठ्यं परत्वमास्थितः कामान् ववर्ष ॥ ६४ ॥

वी ॥ हत्वेति ॥ कांश्चिदधर्मिष्ठान् स्वयं हत्वा कांश्चिदर्जुनादिभिर्घातयित्वा धर्मसुतादिभिर्युधिष्ठिरादिभिरञ्जसा ऋजुमार्गेण सुखेन वा धर्मं वर्णाश्रमाद्यनुगुणं प्रवर्तयामास ॥ ६५ ॥

इति श्रीभागवतचन्द्रचन्द्रिकाख्यायां श्रीभागवतव्याख्यायां दशमस्कन्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

वी ॥ अथ भगवतश्श्रीकृष्णस्य स्वपत्नीभिस्सह क्रीडाप्रकारं तासां तस्मिन्ननुरागातिशयं पुत्रपौत्रादिसन्ततीः प्रकृतस्कन्धार्थश्रवणादिफलं च वर्णयति नवतितमेन—सुखं स्वपुर्यामित्यादिना ॥ श्रियःपतिरित्यस्य 'रेमे षोडशसाहस्रपत्नीनामेकवल्लभः' इत्युपरिष्टात्संबन्धः, वृष्णिपुङ्गवैः स्त्रीभिश्च जुष्टायां सेवितायामिति संबन्धः ॥ १ ॥

वी ॥ कथंभूताभिः ? नवयौवनेन कान्तिर्यासां ताभिः तटितामिव द्यौः द्युतिर्यासां ताभिः ॥ २ ॥

वी ॥ नित्यमिति ॥ सङ्कुलाः सङ्कीर्णाः मार्गाः यस्यां तस्यां द्वारकायामिति पूर्वेण संबन्धः, मदच्युद्भिः मदजलस्राविभिः मतङ्गजैर्गजैः सुष्ठ्वलङ्कृतैः भटैः कनकेनोज्ज्वलैः रथैश्च ॥ ३ ॥

वी ॥ किंच—उद्यानैरुपवनैश्चाढ्यायां, कथंभूतैः ? पुष्पिता ये द्रुमास्तेषां राजिषु पङ्क्तिषु निर्विशन्तो भृङ्गाणां निवहास्समूहा येषु तैः नादितायामित्यस्य मतङ्गजादिभिरिति शेषः, यद्वा निर्विशतां भृङ्गाणां निवहैः नादितायाम् ॥ ४ ॥

---

१. स्वयं स्व. पा ॥

रेमेषोडशसाहस्रपत्नीनामेकवल्लभः । तावद्विचित्ररूपोऽसौतद्गृहेषुमहर्द्धिषु ॥ ५
प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः। वासितामलतोयेषुकूजद्द्विजकुलेषुच ॥ ६
विजहारविगाह्याम्भोह्रदिनीषुमहोदयः।[१]कुचकुङ्कुमलिप्ताङ्गःपरिरब्धश्चयोषिताम् ॥
उपगीयमानोगन्धर्वैर्मृदङ्गपणवानकान्।वादयद्भिस्तथावीणास्सूतमागधवन्दिभिः

[२]सेव्यमानोऽच्युतस्ताभिर्हसन्तीभिश्च सेचनैः ।
प्रतिषिश्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९
ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशास्सिश्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तं स्वसेचनजिहीर्षुतयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १०
कृष्णस्तुतत्स्तनविषज्जितकुङ्कुमस्रक्क्रीडाभिषङ्गधुतकुन्तलबृन्दबन्धः ।
सिश्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेजे करेणुभिरिवेभपतिः परीतः ॥
नटानां नर्तकानांच गीतवाद्योपजीविनाम् ।

---

वी ॥ रेमइति ॥ षोडशसहस्रपत्नीनामेकएव वल्लभः पतिस्सन् तावन्ति षोडशसहस्राणि रूपाणि मूर्तीर्बिभ्राणः तासां गृहेषु रेम इति संबन्धः. कथंभूतेषु ? महत्यः ऋद्धयः भोग्यभोगोपकरणादिसमृद्धयो येषु ॥ ५ ॥

वी ॥ प्रोत्फुल्लानाम् उत्पलानां रेणुभिर्वासितान्यमलानि तोयानि येषु तेषु कूजन्ति द्विजानां पक्षिणां कुलानि समूहाः येषु तेषु ॥ ६ ॥

वी ॥ विजहारेति ॥ ह्रदिनीषु अम्भो विगाह्य विजहार, कथंभूतः ? महानुदयो वैभवं यस्य सः योषितां योषिद्भिः परिरब्धः, कुचो हेतौ अतएव कुङ्कुमेन लिप्तमङ्गं वक्षो यस्य सः ॥ ७ ॥

वी ॥ किंच—उपगीयमानइति ॥ सूताः पौराणिकाः, मागधा वंशावलीपाठकाः, कथंभूतैः ? वीणादीन् वादयद्भिः ॥ ८ ॥

वी ॥ सेव्यमानइति ॥ ताभिर्योषिद्भिः सेचनैः जलसेचनैः हसन्तीभिः सेव्यमानः स्वयमपि ताः प्रतिषिश्चन् यक्षीभिर्यक्षराट् कुबेर इव विचिक्रीडे विक्रीडितवान् ॥ ९ ॥

वी ॥ ताइति ॥ क्लिन्नानि सिक्तानि वस्त्राणि यासां ता अतएव विवृतोरुकुचप्रदेशास्ताश्च उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः योषितः कान्तं भगवन्तं सिश्चन्त्यः स्वसेचनजिहीर्षुतया, स्वशब्दः कान्तपरः,तस्य सेचनपरिहारेच्छया तमेवोपगुह्यालिङ्ग्य तेन जातेन स्मरेण उत्स्मयः उत्कृष्टहासस्तेन लसन्ति वदनानि यासां ताः विरेजुः ॥ १० ॥

वी ॥ कृष्णस्त्विति ॥ तासां स्तनेभ्यो विषज्जिता कुङ्कुमस्रग्यस्य सः क्रीडायामभिषङ्गेणाभिनिवेशेन धुतः कम्पितः कुन्तलबृन्दबन्धो यस्य सः स्वयं मुहुः सिश्चन् युवतिभिः प्रतिषिच्यमानश्च करेणुभिः परिवृतो गजराडिव रेजे ॥ ११ ॥

वी ॥ नटानामिति ॥ गीतैर्वाद्यैश्चोपजीवन्तीति तथा तेषां नटादीनां नटादिभ्यः क्रीडार्थे येऽलंकारा भूषणानि वासांसिच तानि प्रादात् प्रायच्छत्, तथा स्त्रियोऽपि

---

१. अत्र ' कुचो हेतौ ' इति व्याख्यया कुचैरिति पाठः प्रतिभाति॥ २. सिच्यमानः-पा ॥

क्रीडालङ्कारवासांसि कृष्णोऽदात्तस्य च स्त्रियः ॥ १२

कृष्णस्यैवंविहरतोगत्यालापेक्षितस्मितैः।नर्मक्ष्वेलीपरिष्वङ्गैःस्त्रीणांकिलहृताधियः

ऊचुर्मुकुन्दैकधियोगिरउन्मत्तवज्जडम्।चिन्तयन्त्योऽरविन्दाक्षंतानिमेगदतश्शृणु ॥

महिष्य ऊचुः—

कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो ग्रस्तबोधः।

वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५

नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ।

दास्यं गता वयमिवाच्युतपादजुष्टां किंवा स्रजं स्पृहयसे कबरेण वोढुम् ॥ १६

भोभो सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ।

किंवा मुकुन्दापहृतात्मलाञ्छनः प्राप्तो दशां त्वं च यतो दुरत्ययाम् ॥ १७

त्वं यक्ष्मणा बलवता निगृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।

---

नर्तकीभ्यः प्रायच्छत ॥ १२ ॥

वी॥ कृष्णस्येति कर्तरि षष्ठी, गत्यादिभिरेवं विहरता कृष्णेन स्त्रीणां धियः हृताः॥

वी ॥ अतएव मुकुन्दएवैकस्मिन् धीर्यासां तास्तमरविन्दाक्षं चिन्तयन्त्यस्तत्सान्निध्याभावदशायामिति शेषः, अगिर इति च्छेदः, क्षणमगिरः धृतमौना इत्यर्थः, तत उन्मत्त इव जडं यथातथा यानि वाक्यानि ऊचुः तानि सम्यगादरतः कथयतो मत्तः शृणु ॥ १४ ॥

वी॥ कानि पुनस्तानीत्यत्राह—कुररीत्यादिना॥ तत्रैकस्या वाक्यमाह—कुररीति॥ हे कुररि अस्मिञ्जगति रात्र्यामीश्वरः कृष्णः ग्रस्तबोधः विलुप्तबाह्यविषयज्ञानस्सन् स्वपिति शेते, त्वं तु विगतनिद्रा सती विलपसि, न तु शेषे न स्वपिषि, अनुचितं तन्निद्राभङ्गं करोषीति भावः, अथवा नापराधस्तवापीत्याशयेनाह — नलिननयनस्य हासेन सहितम् उदारं यल्लीलयेक्षितं तेन हे सखि वयमिव त्वमपि गाढं यथा तथा निर्भिन्नं चेतो यस्यास्सा कच्चित्किमिति प्रश्नः ॥ १५ ॥

वी ॥ अन्यस्या आह—नेत्रइति ॥ एवमग्रेऽपि, हेचक्रवाकि नक्तं रात्रौ अदृष्टबन्धुः अदृष्टपतिस्सती नेत्रे निमीलयसि किं किंवा करुणं यथा तथा रोरवीषि, बतेति खेदे, नैतावत्, अपितु वयमिव दास्यं प्राप्ता सती अच्युतपादेन जुष्टां सेवितां स्रजं कबरेण वोढुं स्पृहयसे किम् ॥ १६ ॥

वी ॥ कंचिदुदन्वन्तं प्रत्याह—भोभोइति ॥ हे उदन्वन् समुद्र अलब्धनिद्रः अधिगतप्रजागरश्च सदा निष्टनसे नितरां ध्वनसि, "ष्टन शब्दे" इति धातुः, किं वा अस्माभिः प्राप्तां दुरत्ययां दशाम् अवस्थां त्वमपि गतोऽसि, अहो कष्टं, यथा वयं संभोगेन मुकुन्दापहृतकुचकुङ्कुमाद्यात्मलाञ्छनास्तथा त्वमपि यतोऽपहृतश्रीकौस्तुभादिलाञ्छनो लक्ष्यसे, अतस्त्वां पृच्छामीत्यर्थः ॥ १७ ॥

वी ॥ त्वमिति ॥ हे इन्दो त्वं बलवता यक्ष्मणा क्षयरोगेण नितरां गृहीतः अतएव क्षीणस्सन् स्वकान्तिभिः तमोऽन्धकारं न क्षिणोषि न विनाशयसि किं, यथा वयं तथा

कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भोस्थगितगीरुपलक्ष्यसे नः॥ १८

किंवाचरितमस्माभिर्मलयानिल तेऽप्रियम् ।
गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९

मुग्धे ध्यायसि किं गृहाण पुरतः कुन्दं विकासोन्मुखं
किं कुन्देन ममामुना सुमनसः कीदृग्विधास्त्वत्प्रियाः ।
पुन्नागं मृगये सखि श्रुतिशिरोभूषाविशेषायितं
गावोऽप्युज्झितसूनमासत तदामोदप्रकर्षोन्मुखाः ॥ २०

मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं
श्रीवत्साङ्कं वयमिव भवान्ध्यायति प्रेमबद्धः ।
अत्युत्कण्ठं [१]सजलहृदयोऽस्मद्विधो बाष्पधाराः
स्मृत्वास्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः ॥ २१

---

त्वमपि मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचित्ततया स्थगितगीः स्तब्धवाक् सन् नोऽस्माभिरुपलक्ष्यसे ॥ १८ ॥

वी ॥ किंवेति ॥ हे मलयानिल ते तुभ्यम् अस्माभिः किं वा अप्रियमाचरितं कृतं, यतस्त्वं गोविन्दस्यापाङ्गैः नितरां भिन्ने नोऽस्माकं हृदि हृदये स्मरं काममीरयसि,अप्रियाचरणं विना स्मरोदीरणेन व्यथाजननं तवानुचितमित्यर्थः ॥ १९ ॥

वी ॥ कांचित्प्रियमन्वेषयन्तीं पुष्पाण्यन्वेषयन्तीमिवालक्ष्य कस्याश्चिदुत्तरप्रत्युत्तररूपं वाक्यमाह — मुग्धइति ॥ हे मुग्धे किं ध्यायसि, पुरः स्थितं विकासोन्मुखं कुन्दं गृहाण, एवमुक्ता प्राह—किं कुन्देन ममामुनेति। अमुना मुवर्णरहितेन कुन्देन किं न किंचिदपि प्रयोजनं, किंतु मुकुन्दमेवान्वेषयामीत्यभिसंधिः, सा पुनः प्राह—त्वत्प्रियाः सुमनसः पुष्पाणि कीदृग्विधाइति। सा पुनः प्राह—पुन्नागं मृगये सखि श्रुतिशिरोभूषाविशेषायितमिति। हे सखि श्रुतिशिरोभूषाविशेषायितं श्रोत्रयोः शिरसिच भूषणविशेषवदाचरत् पुन्नागं मृगये, श्रुतिशिरस्सु वेदान्तेषु भूषाविशेषायितं पुन्नागं पुरुषश्रेष्ठं मृगये इत्यभिसन्धिः, ननु किं बह्वीषु सुमनस्सु सतीषु विशेषेण पुन्नागमेव मृगयसे इत्यत्राह—गावोऽपीति । उज्झितं गलितं सूनं पुन्नागकुसुमं तदामोदप्रकर्षेण उन्मुखा आसते मृगयन्त्योऽवतिष्ठन्ते, पशवोऽप्येवं, किं पुनरहमिति भावः, पक्षान्तरे गावो वेदान्तवाचोऽपि उज्झितसूनं त्यक्तजन्मानम्, अजमित्यर्थः, पुरुषश्रेष्ठं तदामोदप्रकर्षे तत्कल्याणगुणगणप्रकर्षे उन्मुखाः प्रतिपादनोन्मुखाः औन्मुख्यमात्रमेव तासां, न तु कात्स्न्र्येन तत्प्रतिपादनमानन्त्यादिति भावः,आसते केवलं मृगयन्त्यः समासत इत्यर्थः॥

वी॥ मेघेति॥ हे मेघ त्वं माधवेन्द्रस्य यदूत्तमस्य दयितः प्रियोऽसि, नूनम् आतपार्तिहरणादिसाम्यात्त्वां तत्सखमालक्ष्य इति भावः, अतो भवान् वयमिव श्रीवत्साङ्कं तद्विषयप्रेम्णा बद्धो निश्चलो ध्यायति किं, ध्यानलिङ्गान्याह—अत्युत्कण्ठमित्यादि । अस्मद्विधः वयमिवेत्यर्थः, अत्युत्कण्ठं यथा तथा सजलहृदयः बाष्पधाराः

---

[१]. शबल. पा ॥

प्रियरावपदानि भाषसे मृतसञ्जीविकयाऽनया गिरा ।
करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ २२
शुकराज गाय यदुदेवसत्कथां कुर्मस्तवाङ्ग पयसोपसेचनम् ।
विरहाग्नितप्तहृदयेष्वलं रमारमणाभिधानसुधया च सिञ्च नः ॥ २३
न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २४
शुष्यद्ध्रदाः कृशतरा बत सिन्धुपत्न्यस्सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः ।
यद्वद्वयं यदुपतेः प्रणयावलोकमप्राप्य मुष्टहृदया उरु कर्शितास्स्म ॥ २५
हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां
दूतं त्वां नु विदाम कच्चिदजितस्स्वस्त्यास्त उक्तं पुरा ।
किं वानश्चलसौहृदस्स्मरति तं कस्माद्भजामो वयं
क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ २६

---

सृजसि मुञ्चसि, युक्तं चैतदित्याह—दुःखदस्तत्प्रसङ्गइति ॥ २१ ॥

वी ॥ प्रियेति ॥ हे कोकिल प्रियरावस्य प्रियंवदस्य श्रीकृष्णस्य पदानीव पदानि शब्दान् भाषसे, मृतान्संजीवयतीति तथा कोमलया गिरा हेवल्गितकण्ठ रमणीयकण्ठ मे कथय, किं तेऽद्य प्रियं करवाणि ॥ २२ ॥

वी ॥ शुकराजेति ॥ हे शुकराज यदुदेवस्य सत्कथां गाय "गै शब्दे" लोण्मध्यमैकवचनम्, अङ्ग हे शुक तव पयसा क्षीरेण उपसेचनम् अभिषेकं कुर्मः, त्वं नोऽस्माकं विरहाग्निना तप्तेषु हृदयेषु रमारमणस्य लक्ष्मीकान्तस्याभिधानसुधया कथासुधया अलं नितरां सिञ्च ॥ २३ ॥

वी ॥ नचलसीति ॥ हे क्षितिधर त्वं न चलसि, न वदसि च, किंतु महान्तमर्थं चिन्तयसे, तर्हि किं वयं यथा स्तनैर्वसुदेवनन्दनस्याङ्घ्रिं विधर्तुं कामयामहे, तथा त्वमपि स्तनतुल्यैः शृङ्गैः धर्तुं कामयसे किम् ॥ २४ ॥

वी ॥ शुष्यद्ध्रदाइति ॥ हे सिन्धुपत्न्यः नद्यः यद्वत् यथा वयं यदुपतेः प्रणयावलोकमप्राप्य तेन मुष्टान्यपहृतानि हृदयानि यासां ताश्च उरु नितरां कर्शिताः स्म तथा यूयमपि संप्रति ग्रीष्मे शुष्यन्तो ह्रदाः यासां ताः अपगतकमलशोभाश्च इष्टस्य भर्तुः सिन्धोः प्रणयावलोकमप्राप्य कर्शिताः स्थ, बतेति खेदे ॥ २५ ॥

वी॥हंसेति—हे हंस आस्यतामुपविश्यतां,पयः क्षीरं पिब,अङ्ग हे हंस शौरेः कथां वार्तां ब्रूहि,न्विति वितर्के,त्वां शौरेर्दूतं विदाम,अजितः कृष्णः स्वस्त्यास्ते कच्चित्?पुरा रहस्युक्तं चलसौहृदः, हेतुगर्भमिदम्, स्मरति किं?स्मृत्वैव मां प्रस्थापितवानित्यत्राह—हे क्षौद्र क्षुद्रदूत कस्मात्तं वयं भजामः, कामार्थमाह्वयतीत्यत्राह—अहो तर्हि तमिहालापयाकारय,ओमिति गच्छन्तं तं पुनराह-या अस्मान् वञ्चयित्वा एकाकिनी रमते तां श्रियम् ऋते विना तमेवालापय, सा तदेकनिष्ठा कथं परिहर्तुं शक्येत्यत्राह—स्त्रियामिति

श्रीशुक उवाच—

इतीदृशेनभावेनकृष्णेयोगेश्वरेश्वरे।क्रियमाणेनमाधव्योलेभिरेवैष्णवींगतिम्॥ २७

श्रुतमात्रोऽपियस्स्त्रीणांप्रसह्याकर्षतेमनः।उरुगायोऽनुगीतोवापश्यन्तीनांकुतःपुनः॥

यास्संपर्यचरन्प्रेम्णापाद[१]संघट्टनादिभिः।जगद्गुरुंभर्तृबुद्ध्यातासांकिंवर्ण्यतेतपः॥ २९

एवंवेदोदितंकर्मस्वनुतिष्ठन्सतां गतिः।गृहानधर्मार्थकामानांमुहुश्चादर्शयत्पदम्॥ ३०

आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम् ।
आसन् षोडशसाहस्रा [२]महिष्योऽष्टशताधिकाः ॥ ३१

तासां स्त्रीरत्न[३]रूपाणामष्टौ याः प्रागुदाहृताः ।
रुक्मिणीप्रमुखा राजन् सहपुत्राश्च सर्वशः ॥ ३२

एकैकस्यां दशदश कृष्णोऽजीजनदात्मजान् ।
यावत्य आत्मनो भार्या अमोघगतिरीश्वरः ॥ ३३

तेषामुद्दामवीर्याणामष्टादश महारथाः ।

---

जातावेकवचनम्, अस्मासु स्त्रीषु मध्ये किं सैवैकनिष्ठा न तु वयमित्यर्थः ॥ २६॥

वी ॥ इतीति ॥ माधव्यो माधवस्य स्त्रियः योगेश्वरेश्वरे कृष्णे क्रियमाणेनेत्थंभूतेन भावेन वैष्णवीं गतिं मुक्तिं लेभिरे ॥ २७ ॥

वी ॥ कृष्णे तासामित्थंभूतो भावो नातिचित्रमित्याह—श्रुतमात्रोऽपीति ॥ उरुभिर्बहुभिर्गायैर्गानैः उरु बहुधा गीतो वा उरुगाय इति पृथक्पदं वा, संधिस्त्वार्षः, किं बहुना—यथाकथंचिच्छ्रुतमात्रोऽपि वा स्त्रीणां मनः प्रसह्य बलात् आकर्षते,किंपुनः साक्षात्पश्यन्तीनां स्त्रीणां मन आकर्षतीति ॥ २८ ॥

वी ॥ यतस्तासामित्थंभूतो भावस्ततस्ता अनुमोदते—याइति ॥ तं कृष्णं जगद्गुरुं सर्वोत्तमं परमपुरुषमपि भर्तृबुद्ध्या याः पादसंघट्टनादिभिः प्रेम्णा पर्यचरन् असेवन्त तासां तपः किं वर्ण्यते कथं वर्ण्येत इत्यर्थः ॥ २९ ॥

वी ॥ एवमिति ॥ सतां गतिः स्वप्राप्त्युपायभूतोऽप्यनुतिष्ठन् गृहान् धर्मादीनां पदं स्थानमित्यदर्शयत् पदमिति दर्शयितुमन्वतिष्ठदित्यर्थः ॥ ३० ॥

वी ॥ अथ भगवतस्स्वपत्नीषु संतानमनुवर्णयितुं प्रस्तौति — आस्थितस्येति॥ परं गृहमेधिनां धर्ममास्थितस्यानुतिष्ठतः कृष्णस्य महिष्यः पत्न्यः आसन् ॥ ३१ ॥

वी॥ तासां स्त्रीरत्नरूपाणां मध्ये अष्टौ रुक्मिणीप्रमुखाः याः पूर्वं कथिताः सर्वशः सर्वाश्च सहपुत्राः पुत्रवत्य एवेत्यथः, तासां पुत्रास्तु लक्षमेकमशीत्युत्तरैकषष्टिसहस्राणि भवन्ति ॥ ३२ ॥

वी ॥ तदेवाह—एकैकस्यामिति ॥ अजीजनज्जनयामास, आत्मनः स्वस्य यावत्य। भार्यास्तासामेकैकस्यामिति संबन्धः, तत्र हेतुत्वेन विशिनष्टि—अमोघगतिरप्रतिहतसंकल्पः ॥ ३३ ॥

---

१. संवाहना. पा ॥ २. महिष्यश्च शताधिकम्. पा ॥ ३. भूतानां. पा ॥

आसन्नुदारयशसस्तेषां नामानि मे शृणु ॥ ३४
प्रद्युम्नश्चानिरुद्धश्च दीप्तिमान्भानुरेवच ।
साम्बो मधुर्बृहद्भानुश्चित्रभानुर्वृको ऽरुणः ॥ ३५
पुष्करो देवबाहुश्च श्रुतदेवस्सुनन्दनः ।
चित्रबाहुर्विरूपश्च कविर्न्यग्रोधएवच ॥ ३६
त्रिवक्राया उपक्रोशः पुत्रः कृष्णमनुव्रतः ।
शिष्यस्साक्षान्नारदस्य दधौ [1]चित्तमखण्डितम् ॥ ३७
तेनोक्तं सात्त्वतं तन्त्रं यज्ज्ञात्वा मुक्तिमान्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥ ३८
एतेषामपि राजेन्द्र तनुजानां मधुद्विषः ।
प्रद्युम्न आसीत्प्रथमः पितृवद्रुक्मिणीसुतः ॥ ३९
स रुक्मिणो दुहितरमुपयेमे महारथः ।
तस्मात्सुतोऽनिरुद्धोऽभून्नागायुतबलान्वितः ॥ ४०
सचापि रुक्मिणः पौत्रीं दौहित्रो जगृहे ततः ।
वज्रस्तस्यामभूद्यस्तु मौसलादवशेषितः ॥ ४१
प्रतिबाहुरभूत्तस्मात्सुबाहुस्तस्यचात्मजः ।

---

वी ॥ तेषामुक्तसङ्ख्यानां पुत्राणां मध्ये उदारयशसः विपुलयशस्विनः ॥ ३४ ॥
वी ॥ प्रद्युम्नश्चेति ॥ अनिरुद्धनामापि कश्चित्पौत्रादन्यः पुत्रः ॥ ३५ ॥ ३६ ॥
वी ॥ त्रिवक्रायाइति ॥ उपक्रोशो नाम त्रिवक्रायाः पुत्रः, स तु कृष्णम् अनुव्रतः
अनुवर्तमानः साक्षान्नारदस्य शिष्यो भूत्वा अखण्डितमविच्छिन्नं यथा तथा चित्तं दधौ
भगवत्समाधिनिष्ठो बभूवेत्यर्थः ॥ ३७ ॥
वी ॥ तमेव विशिनष्टि —तेनेति॥ सात्त्वतं पञ्चरात्रम् उक्तं सात्त्वतमन्त्रार्थविषयः
कश्चिद्ग्रन्थविशेषः प्रतिपत्तिसौकर्याय नातिसंग्रहविस्तररूपेण कृत इत्यर्थः, तस्याना-
दिशास्त्रस्यावार्चीनत्वायोगात्, तन्त्रं विशिनष्टि— यत्रेति । स्त्रीशूद्रादीनामपि वैष्णवः
विष्णुप्रापकः संस्कारस्तापपुण्ड्रादिसंस्कारः स्मृतः ॥ ३८ ॥
वी॥एतेषामपीति॥मधुद्विषः कृष्णस्य तनुजानां पुत्राणामेतेषामष्टादशानां मध्ये यः
प्रद्युम्नः स तु रुक्मिणीसुतः पितृवद्रूपेण गुणैश्च पितृतुल्यः सर्वेषां प्रथम आसीत् ॥
वी॥ स प्रद्युम्नः रुक्मिणो मातुलस्य दुहितरमुपयेमे,परिणीतवान्, तस्यां भार्यायां
ततः प्रद्युम्नादनिरुद्धो नाम नागायुतबलः पुत्रोऽभूत् ॥ ४० ॥
वी॥ सचापि अनिरुद्धोऽपि रुक्मिणो दौहित्रस्तस्य पौत्रीं जगृहे उपयेमे, ततोऽ-
निरुद्धात्तस्यां वज्रो नाम पुत्रो बभूव, तं विशिनष्टि—यस्त्विति । मौसलशापप्रयुक्तय-
दुकुलक्षयकरान्मुसलादवशेषितः स एकोऽवशेषित इत्यर्थः, कृष्णेनेति शेषः ॥ ४१ ॥

---

१. व्रत. पा ॥

¹सुबाहोर्धर्मसेनोऽभूच्छ्रुतसेनस्तु तत्सुतः ॥ ४२
नह्येतस्मिन्कुले जाता अधना अबहुप्रजाः ।
अल्पायुषोऽल्पवीर्याश्च अब्रह्मण्याश्च जज्ञिरे ॥ ४३
यदुवंशप्रसूतानां पुंसां विख्यातकर्मणाम् ।
सङ्ख्यानं शक्यते कर्तुमपि वर्षायुतैरपि ॥ ४४
तिस्रः कोट्यस्सहस्राणामष्टाशीतिश्शतानिच ।
आसन्यदुकुलाचार्याः कुमाराणामिति श्रुतम् ॥ ४५
संख्यानं यादवानां कः करिष्यति महात्मनाम् ।
यत्रायुतानामयुतलक्षपुत्रस्स आहुकः ॥ ४६
देवासुराहवहता ये दैतेयास्सुदारुणाः ।
तेचोत्पन्ना मनुष्येषु प्रजा दृप्ता बबाधिरे ॥ ४७
तन्निग्रहाय हरिणा प्रोक्ता देवा यदोः कुले ।
अवतीर्णाः कुलशतमेषामेकाधिकं नृप ॥ ४८
तेषां प्रमाणं भगवान्प्रभुत्वेनाभवद्धरिः ।
येचानुवर्तिनस्तस्य ववृधुस्सर्वयादवाः ॥ ४९
शय्यासनाटनालापक्रीडास्नानाशनादिषु ।

---

वी ॥ तस्माद्वज्रात्प्रतिबाहुः, तस्य प्रतिबाहोरात्मजः सुबाहुः, तत्सुतः धर्मसेनसुतः श्रुतसेनः ॥ ४२ ॥

वी ॥ सर्वान् वंश्यान् विशिनष्टि—नहीति ॥ अधुना निर्धनाः ॥ ४३ ॥

वी ॥ तेषामानन्त्यमाह—यदुवंशप्रसूतानामिति ॥ ४४ ॥

वी ॥ तदेव कैमुत्यनयाभिप्रायेणाह—तिस्रःकोट्यइति ॥ यदुकुलस्याचार्यास्तत्कुमाराणाम् अनुशिक्षका अध्यापकाः तिस्रः कोट्यः सहस्राणाम् अष्टाशीतिः शतानि च, अध्यापका एवैतावन्तः, किं पुनस्त इत्यर्थः ॥ ४५ ॥

वी॥ एकस्य वसुदेवस्यैव वंशजानां संख्यैवंभूता, किंपुनस्सर्वेषां संभूतानामित्याह-सङ्ख्यानमिति॥यत्र यदूनां वंशे य आहुको वसुदेवस्सएवायुतानाम् अयुतलक्षपुत्रः ॥

वी ॥ तेषां वीर्यशौर्यादिगुणनिरूपणायाह—देवेति ॥ देवासुराहवे देवासुरयुद्धे हताः ये अतिदारुणा दैतेयास्ते मनुष्येषु चैद्यमागधादिरूपेण जाताः दृप्तास्सन्तः प्रजा इति द्वितीयान्तं, बबाधिरे ॥ ४७ ॥

वी ॥ तन्निग्रहायेति ॥ प्रोक्ता आदिष्टा देवाः यदोः कुले अवतीर्णाः, येषामवतीर्णानां कुलमेकाधिकशतं वृष्ण्यन्धकदाशार्हादिरूपेणैकाधिकशतभेदभिन्नम् ॥ ४८ ॥

वी ॥ तेषामिति ॥ तेषां कुलानां प्रभुत्वे निमित्ते भगवान् श्रीकृष्णरूपेणाभवदवततार, ये सर्वे यादवास्ते तस्य श्रीकृष्णस्यानुवर्तिनः, हेतुगर्भमिदं, ववृधुरेधांचक्रिरे॥

---

१. सुबाहोश्शान्त. पा ॥

नविदुस्स्वान्तरात्मानं वृष्णयः [1]कृष्णचेतसः ॥ ५०

तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वस्सरित्पादशौचं
विद्विट्स्निग्धास्स्वरूपं ययुरजितपदा श्रीर्यदर्थेऽन्ययत्नः ।
यन्नामामङ्गलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः
कृष्णस्यैतन्न चित्रं क्षितिभरहरणं कालचक्रायुधस्य ॥ ५१

जयति जननिवासो देवकीजन्मवादो यदुवरपरिषद्भिर्दोर्भिरस्यन्नधर्मम् ।
स्थिरचरवृजिनघ्नस्सुस्मितश्रीमुखेन व्रजपुरवनितानां वर्धयन्कामदेवम् ॥ ५२

वी ॥ किं ते तं परमात्मबुद्ध्याऽन्ववर्तन्त?—नेत्याह —शय्येति॥ वृष्णयो यदवः शय्यासनादिषु कृष्ण एव चेतो येषां तथाभूता अपि तं कृष्णं स्वमात्मानं स्वान्तरात्मानं परमात्मानमित्यर्थः, न विदुः, किंतु यादवविशेषं विदुरिति भावः ॥ ५० ॥

वी ॥ स्वमात्मानं न विदुरित्यनेन तन्माहात्म्यं न विदुरिति सूचितं, तदेवानितर साधारणं वदन् अत्याश्चर्यमेतद्भूभारापहरणमिति विस्मयमपनुदन्नाह—तीर्थमिति ॥ हे नृप इतः पूर्वं स्वस्सरित् स्वर्नदी गङ्गेव सर्वतोऽधिकं तीर्थमासीत्, इदानीं तु यदुषु यदजनि जातं तेषु जातं श्रीकृष्णकीर्तिरूपं तत्कर्तृ स्वस्सरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे यद्यशोरूपं तीर्थमेव सर्वतीर्थोपरि विराजत इति भावः, तथा द्विषन्तः शत्रवः स्निग्धा अनुरक्ताश्च तत्स्वरूपं ययुः प्रापुः, स्वं स्वास धारणं रूपमाकृतिः तत्साधर्म्यमिति यावत्, तत्प्रापुः, प्रीत्यप्रीत्यात्मकस्य स्वविषयस्य ज्ञानस्य साधर्म्यप्रापणस्वाभाव्यादिति भावः, तथा अजितपदा कैश्चिदप्यप्राप्तपदा श्रीश्च यस्यैवेति शेषः, यस्यैवानन्याईशेषभूतेत्यर्थः, तां विशिनष्टि—यदर्थेऽन्ययत्नः यच्छ्रीव प्राक्षलेशप्रसरणार्थम् अन्येषां ब्रह्मादीनां यत्नः, किंच यस्य भगवतो नाम श्रुतमथ गदितम् उच्चरितं वा अर्थज्ञानरहितमप्यमङ्गलघ्नं, किंच—गोत्रेषु तत्तद्वृष्णिवंशेषु धर्मो यत्कृतः येन प्रवर्तितः तस्यैतस्य श्रीकृष्णस्यैतन्न चित्रं, किं तत् यत् क्षितिभरहरणं, तत्र हेतुत्वेन पुनस्तं विशिनष्टि—कालचक्रायुधस्य कालचक्रं कालाभिमानिसुदर्शनाख्यं चक्रमायुधं यस्य तस्य कालायत्तं हि सर्वमिति भावः ॥ ५१ ॥

वी॥ उक्तविधासाधारणप्रभावनिर्वाहकं परत्वमाह-जयतीति॥ सर्वोत्कर्षेण वर्तते,को जयतीत्यत आह-जननिवास इति। जनानां निवासो धारकः,जनेषु निवसति धारकतयेति वा,तर्हि परमात्मन कथं प्राकृतेषु जन्मेत्यत्राह-देवकीति। देवक्यां जन्मेति वादमात्रं यस्य सः न तस्य प्राकृतस्येव कर्मायत्तं जन्म,अपितु स्वेच्छामूलकं तदिति भावः,तदपि किमर्थमित्यत्राह-यदुवरा यदुश्रेष्ठास्तेषां परिषदस्सङ्घास्ताभिरेव दोर्भिर्भुजैरधर्ममस्यन् "लक्षणहेत्वोः"इत्ययं शता प्रतिक्षेप्तुमित्यर्थः, न केवलं तदेव तस्य संकल्पमात्रेणापि सुशकत्वात्, किंत्वेतदेवावतारकृत्यं मुख्यमित्यभिप्रेत्य विशिनष्टि—स्थिरचरवृजिनघ्नः अधिकारमनपेक्ष्य स्थिराणां बृन्दावनादिगतानां तरुगुल्मादिरूपाणां स्थिराणां चराणां पशुशकुनिप्रभृतीनां केनचित्स्वसंबन्धेन वृजिनं प्राप्तिप्रतिबन्धकं पापं हन्तीति तथा, तदेवो-

१. कृष्णदेवताः. पा ॥

इत्थं परस्य निजधर्मरिरक्षयाऽऽत्तलीलातनोस्तदनुरूपविडम्बनानि ।
कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन् ॥ ५३
मर्त्यस्तयानुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तयैति ।
तद्धाम दुस्त्यजकृतान्तजनापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः ॥ ५४

इति श्रीभागवते महापुराणे पारमहंस्यामष्टादशसहस्रिकायां
संहितायां वैयासिक्यां दशमस्कन्धे महिषीगीतं नाम
नवतितमोऽध्यायः ॥ ९० ॥
दशमस्कन्धस्समाप्तः ॥

---

दाहर्तुं विशिनष्टि—शोभनं स्मितं यस्मिन् तेन श्रीमुखेन व्रजवनितानां पुरवनितानां च कामदेवं वर्धयन् ताः कामस्वभावा वनितास्स्वेनैव स्वभावेन स्वविषयकेण मुच्येरन्निति तं तासां वर्धयन्निति भावः, वर्धयन् जयतीति संबन्धः, यद्वा—अयमपि "लक्षणहेत्वोः' इति शता, वर्धयितुं देवकीजन्मवादो जयतीति संबन्धः ॥ ५२ ॥

वी ॥ प्रकृतस्कन्धार्थश्रवणफलं तदधिकारिणं चाह—इत्थमिति ॥ निजधर्मरिरक्षया स्वनिगमोक्तधर्मरक्षणेच्छया आत्ता परिगृहीता लीलार्था तनुर्येन, लीलापदेन तन्वाः कर्मफलभोगार्थत्वव्युदासः, तस्य यदूत्तमस्य परमपुरुषस्य इत्थंभूतानि तदनुरूपाणि अवतारानुरूपाणि धर्मरिरक्षानुरूपाणि वा विडम्बनानि मर्त्यचेष्टानुकारीणि कर्मणां कषणानि शृण्वतां कीर्तयतां च भक्तियोगोत्पत्तिप्रतिबन्धकानि पापकर्माणि कषन्ते निरस्यन्तीति तथा कर्माणि चेष्टितानि श्रूयात् शृणुयात्, कः? यः अमुष्य भगवतः पदयोः अनुवृत्तिं भक्तिमिच्छन् काङ्क्षमाणः ॥ ५३ ॥

वी ॥ किमनुवृत्तेरित्यत आह—मर्त्य इति॥ अनुसवमनुसन्ध्यं मुकुन्दस्य श्रीमत्याः कथायाः श्रवणकीर्तनचिन्तया श्रवणकीर्तनयुक्ता या चिन्ता तया समेधितया अनुवृत्त्या दुस्तरकृतान्तजनापवर्गं दुस्तरः कृतान्तो यैस्तेषां जनानामपवर्गं दुःखावसानहेतुभूतं तस्य भगवतो धाम स्थानमेति प्राप्नोति, दुस्तरेत्यादिविशेषणेन दुर्लभत्वं सूचितं, तत्स्पष्टमेवाह—ग्रामादिति। यदर्थाः यद्धाम अर्थः प्रयोजनं येषां ते यद्धामप्राप्तिकामा इत्यर्थः, ग्रामाद्वनं यान्ति तपस इति शेषः, यद्वा—यदनुवृत्तिकामाः दुस्त्यजकृतान्तभवापवर्गमिति पाठान्तरं, दुस्तरः कृतान्तो मृत्युस्तत्तुल्यो भवः संसारस्तस्यापवर्गोऽवसानं यस्मात् तद्धामैतीति संबन्धः ॥ ५४ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेश्श्रीशैलगुरोस्तनयेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा विलिखितायां श्रीभागवतचन्द्रचन्द्रिकायां श्रीभागवतव्याख्यायां दशमस्कन्धे नवतितमोऽध्यायः ॥ ९० ॥

श्रीकृष्णार्पणमस्तु.

श्रीरुक्मिणीसत्यभामासमेत श्रीगोपालकृष्णपरब्रह्मणे नमः

---

PRINTED BY R. VENKATESHWAR & CO. AT THE ANANDA PRESS, MADRAS.

